आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३९

भट्टगोपीनाथदीक्षितविरचिता

# संस्काररत्नमाला ।

पूर्वार्धम् ।

( गृह्यसूत्रस्य प्रथमः प्रश्नः )

---

पुस्तकमेतत्

वे० शा० रा० ' काशीनाथ शास्त्री आगाशे '
इत्येतैः, वे० शा० रा० ' बाबाशास्त्री
फडके ' इत्येतैश्च संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८२०

खिस्ताब्दाः १८९९

---



मूल्यं रूपकाष्टकमाणकचतुष्कं च ( रु० ८ आ० ४ )

# आदर्शपुस्तकोल्लेखपत्रिका ।

अस्याः संस्काररत्नमालायाः पुस्तकानि यैः परहितैकपरायणमनीषया संस्करणार्थं प्रदत्तानि तेषां नामग्रामादिकं पुस्तकानां संज्ञाश्च कृतज्ञतया प्रदर्श्यन्ते ।

१ क. इति संज्ञितम्—पूर्णम्, वाईक्षेत्रनिवासिनां वे० शा० रा० "कृष्णाजी विनायक बापट" इत्येतेषाम् । पत्राणि ६४१ । लेखनकालः—१७०३ ।

२ ख. इति संज्ञितम्—अपूर्णम्, पुण्यपत्तननिवासिनां रा० रा० 'भाऊसाहेब नगरकर' इत्येतेषाम् । पत्राणि ८७४ ।

३ ग. इति संज्ञितम्—अपूर्णम्, श्री० रा० रा० "जमखिण्डीकर" इत्येतेषाम् । पत्राणि ५३० ।

४ घ. इति संज्ञितम्—अपूर्णम्, पुण्यपत्तनस्थानां वे० मू० "रामभट्टजी खरे" इत्येतेषाम् । पत्राणि ३०० ।

५ ङ. इति संज्ञितम्—पूर्णम्, संगमनेरग्रामनिवासिनां वे० शा० सं० रा० रा० "वैजनाथ श्रीहरि शास्त्री रानडे श्रीक्षेत्र नासिकपञ्चवटीकर" इत्येतेषाम् । पत्राणि ८२४ । लेखनकालः—शके १७२३ ।

६ च. इति संज्ञितम्—पूर्णम्, पुण्यपत्तननिवासिनां वे० रा० "रामचन्द्र नारायण आखवे" इत्येतेषाम् । पत्राणि ७९६ । लेखनकालः—शके १७५३ ।

समाप्तिमगमदियमादर्शपुस्तकोल्लेखपत्रिका ।

ॐ तत्सद्ब्रह्मणे नमः ।

भट्टगोपीनाथदीक्षितविरचिता

# संस्काररत्नमाला ।

तत्र प्रथमं प्रकरणम् ।

## मङ्गलाचरणम् ।

वात्सल्यात्पितरौ कपोलयुगुलं स्वस्याऽऽगतौ चुम्बितुं
दृष्ट्वाऽऽकुञ्चितमास्यपद्ममलं सेषत्स्मितं सत्वरम् ।
अन्योन्यं शिवयोस्ततः सुवदने युक्ते अभूतां तयो-
रित्थं येन विनोदितौ स भगवान्बालो गजास्योऽवतु ॥ १ ॥
तं गजास्यं स्तुतं देवैः प्रशान्तं विद्यया युतम् ।
तन्त्रयन्त्रावृतं नौमि तन्वन्तं जगतां हितम् ॥ २ ॥

षट्पत्रपद्मबन्धोऽयम् ।

विनायकं सुकण्ठकं विधीशविष्णुविष्टुतं
विनाशितामितासुरं विषाणपाशपाणिकम्[1][2] ।
विपांस्विभास्यभालकं विभाकरं परं सुरं
विशालदण्डदन्तिनं विभुं भजे यजे सदा ॥ ३ ॥

अष्टपत्रपद्मबन्धोऽयम् ।

नमस्तस्मै गणेशाय ज्ञानविज्ञानदायिने ।
यस्यानलायते[3] नाम विघ्नारण्यविदाहने ॥ ४ ॥
विद्यामहागणपतिं देवं व्याडीश्वरं तथा ।
योगेश्वरीं च वाग्देवीं लक्ष्मीनारायणौ गुरून् ॥ ५ ॥
सत्याषाढं मुनिश्रेष्ठं जातरूपशिरोरुहम् ।
पितरौ च नमस्कृत्य मातृदत्तं तथैव च ॥ ६ ॥
सूत्रभाष्यं च विविधाः पद्धतीः प्रेक्ष्य च स्मृतीः ।
ओकोपाह्वेन विदुषा गोपीनाथेन कौतुकात् ॥ ७ ॥
विश्वेशतुष्ट्यै विदुषां सतां संतोषकारिणी ।
संस्काररत्नमालाख्या पद्धतिः प्रवितन्यते ॥ ८ ॥

---

१ क. °पाणिपाशिनम् । २ ख. °शपद्मिनम् । ३ ख. ग. °नलति वै ना° ।

महादेवमहेशाभ्यां पद्धत्योः कृतयोर्यतः ।
न वै मूलं संगृहीतं कर्तुं तस्यापि संग्रहम् ॥ ९ ॥
क्वचित्क्वचित्कृतां ताभ्यां सूत्रस्वारस्यवर्जिताम् ।
संत्यज्य पद्धतिं तत्रान्यां वै रचयितुं तथा ॥ १० ॥
क्वचित्सूत्रे भाष्यकृता व्याख्या नैव कृता यतः ।
व्याख्यातुमपि तत्सूत्रमपि व्याख्यान्तरं क्वचित् ॥ ११ ॥
सूत्रस्वरसतः कर्तुं क्रियतेऽतो मयोद्यमः ।
मान्यान्मात्सर्यरहितान्सदाचारयुतान्बुधान् ॥ १२ ॥
मुहुर्मुहुः प्रणम्याहं प्रार्थयामि कृताञ्जलिः ।
अत्रानुक्तं दुरुक्तं वा मतेर्मान्द्याच्छ्रुतस्य वा ॥
यद्भवेत्पूरणीयं तद्विशोध्यं च विचक्षणैः ॥ १३ ॥

## संस्काराः ।

अथ संस्काराः । तानाह गौतमः—

"गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि, चत्वारि वेदव्रतानि, स्नानं, सहधर्मचारिणीसंयोगः, पञ्च महायज्ञाः, अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्थाः, इत्येते चत्वारिंशत्संस्कारा अष्टावात्मगुणा दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेति यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यमाप्नोति" इति ।

स्नानं समावर्तनम् । सहधर्मचारिणीसंयोगो विवाहः । पार्वणः पार्वणस्थालीपाकः । श्राद्धं मासिकश्राद्धं तस्यैव संस्थात्वात् । तच्च श्राद्धप्रकरणे साधयिष्यामः । श्रावणी पौर्णमासी तत्र कर्तव्यं श्रवणाकर्म । आग्रहायणी मार्गशीर्षी तत्र कर्तव्यं प्रत्यवरोहणम् । चैत्री तत्र कर्तव्यः शूलगवः । आश्वयुज्याश्विनी पौर्णमासी तत्र कर्तव्यमाश्वयुजीकर्मेति । आपन्नस्य द्वेष्टुरपि रक्षणं दया । बाह्य आभ्यन्तरे वा परेण दुःख उत्पादितेऽपि तस्मिन्कोपाभावः क्षमा । सैव क्षान्तिः । गुणिनां गुणानाविष्करणमसूया । एतद्भिन्नाऽनसूयः । निन्दितसंसर्गाभक्ष्यादिपरिहारपूर्वकं स्वधर्मव्यवस्थानं शौचम् । शरीरपीडावहक्षुद्रकर्माचरणमायासस्तद्भिन्नोऽनायासः । अप्रशस्तकर्मविवर्जनपूर्वकं प्रश-

स्तकर्माचरणं मङ्गलं तस्य भावो माङ्गल्यम् । अदैन्यपूर्वकं सत्पात्रे भक्त्या शक्त्या च प्रत्यहं दानमकार्पण्यम् । परकीयवस्तुन्यभिलाषः स्पृहा तद्भिन्नाऽस्पृहा । सूत्रकृताऽऽश्वयुज्या अविधानात्तत्रौपासनहोमः संस्थात्वेन ग्राह्यः ।

उक्तं च वैखानसेन—

"स्थालीपाकोऽष्टका अमाश्राद्धमौपासनहोमः श्रावण्याग्रहायणी चैत्रीति सप्त पाकयज्ञसंस्था वैश्वदेवमेके चैत्रीस्थाने समामनन्ति" इति ।

पाकयज्ञसंस्थाः सप्तेत्यन्वयः । पाकयज्ञसंस्था उद्दिश्य सप्तत्वं विधीयते । तच्च सप्तत्वं चरमपदलक्षणया सप्तान्यतमत्वम् । उद्देश्यविधेयभावस्थले विधेयतावच्छेदकरूपेण विधेयस्योद्देश्यतावच्छेदकव्यापकत्वबोधो व्युत्पत्तिसिद्धः । उद्देश्यतावच्छेदकं पाकयज्ञसंस्थात्वम् । विधेयतावच्छेदकं सप्तान्यतमत्वम् । तच्चाष्टकादिभेदसप्तकाभाववत्त्वम् । तथा च पाकयज्ञसंस्थाः सप्तान्यतमा इत्यर्थे सिद्ध आधिक्यव्यवच्छेदसिद्धिः । एतेन सिद्ध्यसिद्धिव्याघातो निरस्तः । न्यूनत्वव्यवच्छेदस्तु सप्तत्वान्वयादेव लभ्यते । बौधायनेन तु पाकयज्ञसंस्थानामपरिमितत्वमपि पक्ष उक्तं कर्मान्तसूत्रे—

" अपरिमिता उ हैके ब्रुवते यच्च किंचान्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसंस्थाः " इति ।

अत्रैतद्भवस्वामिभाष्यम्—

" अविशेषेण यत्किंचित्रेताग्नेरन्यत्र हूयते सर्वास्ताः पाकयज्ञसंस्थाः " इति ।

एतेनापरिमितत्वं दर्शितमिति । एतन्मते सप्तान्यतमत्वं सप्तपदेन न लक्षणीयम् ।

अङ्गिराः—

" गर्भाधानं पुंसवनं सीमन्तो बलिरेव च ।

बलिर्विष्णुबलिः ।

जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं तथा ।
चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् ।
स्नानोद्वाहौ चाऽऽग्रयणमष्टकाश्च यथायथम् ।
श्रावण्यमाश्वयुज्यं[3] च मार्गशीर्ष्यं च पार्वणम् ।
उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यकाः ।

नित्या एव नित्यकाः । स्वार्थे कप्रत्ययः ।

---

१ क. ख. ॰वण्यामा॰ । २ क. ख. ॰युज्यां च । ३ क. ख. ॰शीर्ष्या च ।

संस्कारा नियता एते ब्राह्मणस्य विशेषतः ।
पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ।
ते पवित्राश्च योग्याः स्युः श्राद्धादिषु सुयन्त्रिताः " इति ।

तद्व्रतानामित्यत्र प्रसिद्धिवाचिना तच्छब्देन वेदो ग्राह्यः । सत्याषाढेन भगवताऽऽचार्येण काण्डव्रतानामुक्तत्वाद्वेदव्रतस्थाने काण्डव्रतानि ग्राह्याणि । तानि नव षट्पञ्च चत्वारि वेत्यग्रे वक्ष्यते । (* श्रावण्यां भवं कर्म श्रावण्यम् । आश्वयुज्यां भवमाश्वयुज्यम् । मार्गशीर्षे भवं मार्गशीर्ष्यम् । दिगादित्वाद्यत्प्रत्ययः । ) श्रावण्यामाश्वयुज्यां मार्गशीर्ष्यां क्रमेण कर्तव्यं श्रवणाकर्माऽऽश्वयुजी प्रत्यवरोहणमिति तदर्थः । पार्वणमित्यत्र पार्वणश्च पार्वणं चेत्येकशेष एकवद्भावश्च नपुंसकमनपुंसकेनेति सूत्रात् । तेन पार्वणस्थालीपाकस्यापि संग्रहः । उत्सर्गो वेदोत्सर्जनम् । श्राद्धादिष्वित्यादिशब्दाद्यजनादीनां ग्रहणम् । अत्र ब्राह्मणग्रहणं क्षत्रियवैश्ययोरुपलक्षणम् ।

" अतः परं द्विजातीनां संस्कृतिर्नियतोच्यते ।
संस्काररहिता ये तु तेषां जन्म निरर्थकम् "

इत्याश्वलायनेन द्विजातिपदोपादानात् । नियता नित्या । उदाहृताङ्गिरोवचने पञ्चविंशतिरित्युक्तिस्तत्तद्गृह्योक्तसंस्कारोपलक्षिका ।

अस्ति चात्र स्मृतिः—

" स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।
कर्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति " इति ।

अतोऽस्मद्गृह्ये केषांचित्संस्काराणामनुक्तावपि न दोषः ।

संज्ञाविशेषमप्याहाऽऽश्वलायनः—

" नैमित्तिकाः षोडशोक्ताः समुद्वाहावसानकाः ।
सप्तैवाऽऽग्रयणाद्याश्च संस्कारा वार्षिका मताः ॥
मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकम् ।
महायज्ञाश्च नित्याः स्युः संध्यावच्चाग्निहोत्रवत् " इति ।

अङ्गिरोवचनोपात्ता गर्भाधानप्रभृतयः समुद्वाहावसानकाः षोडश नैमित्तिका इत्यर्थः । आग्रयणाद्याः पार्वणश्राद्धव्यतिरिक्ताः सप्त संस्कारा

* धनुश्चिह्नान्तर्गतं ख. पुस्तके नास्ति ।

१ क. ख. °र्तव्यानि श्र° । २ क. ख. °हणानि । पा° ।

वार्षिका मताः। पार्वणं श्राद्धं मासि कर्तव्यम्। अशक्तानां वार्षिकम्। अशक्तैर्वर्षे यस्यां कस्यांचिदमायां कर्तव्यमित्यर्थः। एतस्मादेव वचनान्मासिकं पार्वणं प्रोक्तमित्यत्र प्रतिदर्शं कर्तव्यताऽवगता भवति।

स्पष्टमेतदुक्तं स्मृत्यन्तरे—

" प्रतिदर्शं पार्वणं स्यादशक्तौ वार्षिकं भवेत् " इति[1]।

पार्वणस्थालीपाकस्तु पर्वणि पर्वण्येव।

याज्ञवल्क्यः—

" ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।
निषेकादिश्मशानान्तास्तेषां वै मन्त्रतः क्रियाः " इति।

निषेको गर्भाधानम्। श्मशानशब्देनान्त्यकर्म लक्ष्यते। तेषां द्विजानाम्। तेषां मन्त्रत इत्युक्तेः शूद्रस्यामन्त्रका इति गम्यते।

संस्कारानुक्त्वाऽऽह यमः—

" शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः " इति।

तत्र शूद्रस्य वेदाध्ययनाद्यभावात्तदर्थोपनयनकाण्डव्रतादीनां निवृत्तिः। जातकर्माद्याः क्रियाः स्त्रीणाममन्त्रकाः।

" तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः " इति स्मृतेः।

एता जातकर्मादिचूडान्ताः। होमोऽपि द्विजानामेव।

" गार्भैर्होमैर्जातकर्मचूडामौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते" ॥

इति मनुवाक्ये द्विजग्रहणात्। बीजं शुक्रशोणिते तत्संबन्धि निषिद्धकालमैथुनादिप्रयुक्तं बैजिकम्। अशुचिगर्भकोशस्थितिजं गार्भिकम्। तदपगच्छतीति कुल्लूकभट्टः। बीजगर्भयोः पापनिमित्तत्वाभावादुभयसंसर्गादशुचित्वमात्रमेनःशब्दार्थो न तु पापमिति तु मेधातिथिः।

विज्ञानेश्वरस्तु—

" एवमेनः शमं याति बीजगर्भसमुद्भवम् "

इत्येतद्व्याख्याने व्याधिसंक्रान्त्यादिनिमित्तमेनो न तु पतितोत्पन्नत्वादीत्याह।

---

१ क. ख. ंति। या।

## संस्काराणां फलानि ।

अथ संस्काराणां फलानि । स्मृतिसंग्रहे—

" निषेकाद्वैजिकं चैनो गार्भिकं चापमृज्यते ।
क्षेत्रसंस्कारसिद्धिश्च गर्भाधानफलं स्मृतम् ॥
गर्भे भवेच्च पुंसूतेः पुंस्त्वस्य प्रतिपादनम् ।

पुंसूतिः पुंसवनम् ।

निषेकफलवज्ज्ञेयं फलं सीमन्तकर्मणः ।

निषेको गर्भाधानम् ।

गर्भाम्बुपानजो दोषो जातात्सर्वोऽपि नश्यति ।

जाताज्जातकर्मानुष्ठानात् । अपिशब्दस्य दोषशब्देनान्वयः ।

आयुर्वर्चोभिवृद्धिश्च सिद्धिर्व्यवहृतेस्तथा ।

व्यवहृतिर्व्यवहारस्तस्य सिद्धिरित्यर्थः ।

नामकर्मफलं त्वेतत्समुद्दिष्टं मनीषिभिः ।
सूर्यावलोकनादायुरभिवृद्धिर्भवेद्ध्रुवा ॥
निष्क्रमादायुःश्रीवृद्धिरप्युद्दिष्टा मनीषिभिः ।
अन्नाशनान्मातृगर्भमलाशादपि शुध्यति ॥
बलायुर्वर्चोवृद्धिश्च चूडाकर्मफलं स्मृतम् ।
उपनीतेः फलं त्वेतद्द्विजतासिद्धिपूर्विका ॥
वेदाधीत्यधिकारस्य सिद्धिर्ऋषिभिरीरिता ।
देवपित्रर्णापगमो विवाहस्य फलं स्मृतम् " इति ।

यत्र यत्र चापी श्रूयेते तत्र बैजिकगार्भिकैनोविनाशोऽपि फलं ज्ञेयम् । अन्येऽपि कर्णवेधादयः संस्काराः शास्त्रान्तरोक्तास्तत्र तत्र वक्ष्यन्ते ।

इति संस्काराः ।

## परिभाषाकारिकाः ।

अथ वक्ष्यमाणकर्मणां परिभाषाधीनत्वादादौ संक्षेपतः परिभाषार्थः कारिकाभिर्निबध्यते ।

स्नातः कुर्वीतोपवीती सर्वं कर्म पवित्रवान् ।
*आचान्तः पुनराचामेत्तिलकी बद्धचूडकः ॥ १ ॥
श्रद्धया कर्म कुर्वीत धौतवस्त्रधरो भवेत् ।
अव्यग्रोऽलंकृतो मौनी दम्भासूयादिवर्जितः ॥ २ ॥
आपद्युक्तोऽपि शुद्धः सन्नेव कर्म समाचरेत् ।
जपहोमादिषु नरमन्यं नाकारणात्स्पृशेत् ॥ ३ ॥
अबुद्धिपूर्वसंस्पर्शश्चेत्तदा वार्युपस्पृशेत् ।
बुद्धिपूर्वकसंस्पर्शे प्राणायामत्रयं चरेत् ॥ ४ ॥
+वर्णत्रयस्य संस्पर्शादाचम्य प्रयतो भवेत् ।
संस्पर्शे प्रतिलोमानां स्नानमेव विधीयते ॥ ५ ॥
खल्वाटत्वादिदोषेण विशिखश्चेन्नरो भवेत् ।
कौशीं तदा धारयीत ब्रह्मग्रन्थियुतां शिखाम् ॥ ६ ॥
कार्येयं सप्तभिर्दर्भैर्धार्या श्रोत्रे तु दक्षिणे[२] ।
नैकवासा न च द्वीपे नान्तराले कदाचन ॥ ७ ॥
श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित् ।
परितो वेष्टितो देशोऽद्भिर्यः स द्वीपमुच्यते ॥ ८ ॥
अनावृतस्तु यो देशः सोऽन्तरालं प्रकीर्तितम् ।
दानं प्रतिग्रहो होमो भोजनं बलिरेव च ॥ ९ ॥
साङ्गुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत् ।
अप्रौढपादः कुर्वीत कृतास्वायाम एव च ॥ १० ॥
त्रिमात्रः प्रणवो वाच्यः कर्मारम्भे च सर्वदा ।
उपोषितः कर्म कुर्याद्विध्यनुज्ञे विना सदा ॥ ११ ॥
पेषणादिकयन्त्रेषु शब्दो यावत्प्रवर्तते ।
पतितान्त्यजचण्डालादीनां यावच्च शब्दकः ॥ १२ ॥
तावत्कर्म न कर्तव्यं तथा संध्याद्वयेऽपि च ।
संकीर्त्य मासपक्षादीन्निमित्तानि तथैव च ॥ १३ ॥
इदं कर्म करिष्येऽहमिति संकल्पमाचरेत् ।
यावन्ति कर्मसंबद्धान्यृक्षाणि स्युस्तु तावताम् ॥ १४ ॥

---

* इदमर्धं ग. पुस्तके नास्ति । + इदमर्धं ग. पुस्तके नास्ति ।

---

१ क. कर्मत्यागो । २ ग. `णे । कुर्यात्तिलकवान्कर्म वस्त्रद्वययुतस्तथा । नैव नमो न ।

वारादीनामपि तथा युक्तं सर्वत्र कीर्तनम् ।
केनचित्तु नवीनेन प्रोक्तमेतत्तु युक्तितः ॥ १५ ॥
कर्मण्यनियतैर्धर्मैः साध्ये साधारणोक्तितः ।
वारादीनां समुल्लेखो निर्वाह्योऽस्मिंस्तु कल्पके ॥ १६ ॥
प्रायौगिकास्त्वेकभादेरेव कुर्वन्ति कीर्तनम् ।
अनुल्लङ्घ्य स्वशास्त्रोक्तविधिं कर्म समाचरेत् ॥ १७ ॥
कर्मान्यथा कृतं ज्ञात्वा तावदेव पुनश्चरेत् ।
प्रधानस्याक्रियायां तु साङ्गं तत्पुनराचरेत् ॥ १८ ॥
तदङ्गाकरणे प्रायश्चित्तमेव न कर्म तत् ।
प्राची दिशामनुक्तौ स्यादथ वैशान्युदक्स्मृता ॥ १९ ॥
अनुक्तौ प्रह्वतादीनां कर्तुरासीनता भवेत् ।
कर्त्रङ्गाणामनुक्तौ तु दक्षिणाङ्गं प्रकीर्तितम् ॥ २० ॥
चक्षुरादिषु नैतत्स्यादिति नारायणः सुधीः ।
कदङ्गस्पर्शने वामो हस्तोऽन्यस्पर्शनेऽन्यकः ॥ २१ ॥
नाभ्यधोऽङ्गान्यसन्ति स्युर्नाभ्यूर्ध्वं स्युस्तु सन्ति वै ।
नाभौ त्वन्यतरो हस्त इति ज्ञेयं विचक्षणैः ॥ २२ ॥
करे रोगो यदि तदोभयत्रोभावपि स्मृतौ ।
अवैधं नाभ्यधःस्पर्शं कर्मकाले न चाऽऽचरेत् ॥ २३ ॥
रक्तपूयो(य)रेतआदिस्पर्शे स्नानं प्रकीर्तितम् ।
प्राक्संस्थं कर्म देवानामुदग्दिगपवर्गकम् ॥ २४ ॥
उदग्दिक्संस्थमथवा प्राचीदिगपवर्गकम् ।
दक्षिणाशापवर्गं तु प्रत्यग्दिक्संस्थमेव हि ॥ २५ ॥
पित्र्यं कर्म प्रकर्तव्यं स्पष्टं यदि वचो भवेत् ।
अङ्गोपस्पर्शने वस्त्रदशासंस्पर्शने तथा ॥ २६ ॥
छेदने भेदने चैव निरासे खनने तथा ।
पैतृके राक्षसे रौद्रे नैर्ऋते चाऽऽभिचारिके ॥ २७ ॥
एतेषु वै निमित्तेषु जलोपस्पर्शनं भवेत् ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ २८ ॥
मार्जारमूषकस्पर्शे आक्रन्दे क्रोधसंभवे ।
निमित्तेष्वेषु सर्वेषु कर्म कुर्वन्नपः स्पृशेत् ॥ २९ ॥
यत्त्वोत्वाख्वोः स्नानमुक्तं तद्धन्यविषयं भवेत् ।
इति केचिद्बुधाः प्राहुरन्ये त्वित्थं समूचिरे ॥ ३० ॥

पुच्छान्यदेशसंस्पर्शे उदकस्पर्शनं भवेत् ।
स्नानं तु पुच्छस्पर्शे स्यात्कर्मकाले च भोजने ॥ ३१ ॥
अबुद्धिस्पर्शविषये वार्युपस्पर्शनं भवेत् ।
बुद्धिपूर्वे तु स्नानं स्यादिति प्राहुः परे बुधाः ॥ ३२ ॥
सौम्याख्यदिशि कर्तव्यो निरासो देवकर्मसु ।
पितृकर्मसु याम्याख्यदिश्येष परिकीर्तितः ॥ ३३ ॥
दैवे कर्मणि सामन्ते प्रादक्षिण्यं प्रकीर्तितम् ।
पित्र्येऽप्येवं बुधैर्ज्ञेयं नेदं स्यात्परिषेचने ॥ ३४ ॥
अप्रादक्षिण्यमेव स्यात्तत्र सूत्रकृदुक्तितः ।
निवीतिता मानुषे स्याद्दैवे यज्ञोपवीतिता ॥ ३५ ॥
प्राचीनावीतिता तु स्यात्पित्र्ये स्पष्टं वचो यदि ।
स्मृत्युक्ताङ्गेषु विज्ञेये उभे स्मृत्युक्तरीतितः ॥ ३६ ॥
अप्रादक्षिण्यापसव्ये सूत्रोक्तनियमोऽत्र वा ।
हवनं भोजनं दानं श्राद्धं देवार्चनादि च ॥ ३७ ॥
वहिर्जानु न कार्यं स्यात्तद्वदाचमनं स्मृतम् ।
विहारः पृष्ठतो नैव प्रकर्तव्यः कदाचन ॥ ३८ ॥
पात्राण्याज्यं हविर्वह्निरेतेष्वन्तः क्रमात्परम् ।
कर्तारस्तु बहिर्भूता एवैष्वन्तस्तु होमकृत् ॥ ३९ ॥
वहिर्भूतस्ततो ब्रह्माऽन्येभ्योऽन्तर्भूत ईरितः ।
सर्वेष्वेतेषु पत्न्यन्तस्ततोऽप्यन्तः पतिर्भवेत् ॥ ४० ॥
एतत्सर्वत्र विज्ञेयं विशेषविधिना विना ।
अविज्ञातस्वरा मन्त्राः प्रयोक्तव्याः प्रयोक्तृभिः ॥ ४१ ॥
एकश्रुत्यैव सर्वत्र जयन्तस्वामिभाषणात् ।
ऋषिं च देवतां छन्दो विनियोगं मनोस्तथा ॥ ४२ ॥
विज्ञायैव क्रियाः कार्या याज्ञवल्क्यमुनिस्मृतेः ।
ऋषिश्छन्दो देवते च च्छन्दश्चर्षिश्च देवता ॥ ४३ ॥
ऋषिश्च देवता छन्द इत्येवं स्यात्त्रिधा क्रमः ।
सौत्रमन्त्रा वेदविद्भिर्वामदेवर्षयः स्मृताः ॥ ४४ ॥
लिङ्गोदितो भवेद्देवोऽस्पष्टे देवेऽनलः स्मृतः ।
सौत्रे ह्यृष्यादिविज्ञानं नेत्युक्तं पारिजातके ॥ ४५ ॥
वैतानिके मखे श्राद्धे ब्रह्मयज्ञे तथैव च ।
ऋष्याद्यवगतेर्नैवापेक्षाऽस्तीति पुरातनाः ॥ ४६ ॥

श्रौते श्राद्धे च मन्त्रादौ प्रणवोऽपि न हीष्यते ।
अन्ये त्वेतस्य वचसो निर्मूलत्वादिहापि च ॥ ४७ ॥
स्याद्दृष्यादिस्मृतिस्तारोच्चारणं चेति वै जगुः ।
मन्त्रान्त्यस्य त्वक्षरस्य पाठकाले हि कर्मणः ॥ ४८ ॥
सर्वत्रोपक्रमः कार्यः सूत्रकारस्य वाक्यतः[1] ।
स्वाहाकारो हि मन्त्रान्ते नित्यो गार्ह्ये प्रकीर्तितः ॥ ४९ ॥
पित्र्यमन्त्रेऽपि नो यत्र स्वधाकारनिदर्शनम् ।
स्वाहान्त एव तत्र स्यादिति भाष्यकृतेरितम् ॥ ५० ॥
मन्त्रादौ मन्त्रमध्ये वा स्वाहाशब्दोऽस्ति चेत्तदा ।
नान्ते प्रयोक्तव्य इति प्रोक्तवानाश्वलायनः ॥ ५१ ॥
भवेदव्यवधानेन देवतापदतः पुरा ।
स्वाहाकारस्य पाठश्चेत्तदा नान्ते भवेदयम् ॥ ५२ ॥
न चेद्भवेत्पाठ इत्थं तदाऽन्तेऽपि भवेत्स तु ।
स्वाहाधिमिति मन्त्रेऽस्मिन्नर्थे ह्यस्ति निदर्शनम् ॥ ५३ ॥
इदमेवानुसर्तव्यमत एव मनीषिभिः ।
मन्त्रान्ते या वह्निजाया सा तु मन्त्रस्वरूपिणी ॥ ५४ ॥
तदन्तेऽन्यां प्रयुञ्जीत सा होमाङ्गतया मता ।
शक्तिसंगमतन्त्रोक्तादेतस्माद्वाक्यतः पुनः ॥ ५५ ॥
स्वाहाशब्दं प्रयुञ्जीत तन्त्रस्य प्रबलत्वतः ।
विशेषोऽयं तन्त्रयुक्ते वैदिके होमकर्मणि ॥ ५६ ॥
जुहोतिविधिसंबद्धमन्त्रेष्वेष विधिः स्मृतः ।
स्वाहान्तो नाममन्त्रः स्यादमन्त्रास्वाहुतिष्वथो ॥ ५७ ॥
कर्मशिष्टोदकं कर्मसमाप्तौ तु परित्यजेत् ।
न त्वन्यत्रोपयुञ्जीताऽऽचमनक्षालनादिषु ॥ ५८ ॥
मन्त्रमुच्चारयेन्मन्त्रप्रतिपाद्यं तु शेषिणम् ।
संस्तुवंस्तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥ ५९ ॥
आभिमुख्येक्षणाधिक्यादेतदेवाभिमन्त्रणम् ।
*शेषिणश्चिन्तनं कुर्वन्सम्यक्स्थित्वा समीपतः ॥ ६० ॥

* एतदर्धस्थाने ग. पुस्तके—"संनिधौ तिष्ठन्नासीनो वा कुर्वञ्छेषिचिन्तनम्" ।इत्यर्धं वर्तते ।

१ क. नियतः सूत्रवाक्यतः ।

नतिमुद्रायुतो मन्त्रं पठेदित्यमुपस्थितिः ।
*तिष्ठता श्रवणं चेत्स्यादत्र सा नियता तदा ॥ ६१ ॥
अभिमर्शो मन्त्रपाठः संस्पर्शसमकालिकः ।
चतुःस्वरोच्चारणात्मा जपतीति विधौ जपः ॥ ६२ ॥
अभिमर्शानुमन्त्राभिमन्त्रोपस्थितिकर्मणाम् ।
प्रसाधितं जपत्वं हि व्याख्याकृद्भिरतस्त्वयम् ॥ ६३ ॥
चतुःस्वरत्वधर्मस्तु मन्त्रेष्वेतेष्वपि स्मृतः ।
ततोऽन्यत्र तु मन्त्राणां नियतैकश्रुतिर्भवेत् ॥ ६४ ॥
कात्यायनमतादत्रापि स्युर्वा स्वरसंयुताः ।
सर्वत्रैव न्यूङ्खसाम्नोश्चत्वारो नियताः स्वराः ॥ ६५ ॥
संवादप्रैषभिन्नानां मन्त्राणां स्यादुपांशुता ।
आश्रावणं प्रवरणं प्रत्याश्रावणमेव च ॥ ६६ ॥
श्रौत एतान्यपि ज्ञेयान्युच्चैरेव विचक्षणैः ।
कुर्यादुपनयादीनि विवाहान्तानि लौकिके ॥ ६७ ॥
प्रायश्चित्ताख्यकर्माणि काम्यकर्माणि वै तथा ।
औपासने लौकिके वा कर्तव्यानि सदा बुधैः ॥ ६८ ॥
उपाकर्मोत्सर्जने तु कुर्याच्छिष्ययुतो यदि ।
लौकिकाग्नौ तदा कुर्यादशिष्यश्चेत्स्ववह्निके ॥ ६९ ॥
गृह्यानले प्रकर्तव्यो होमः पारायणीयकः ।
पारायणस्य कर्ता चेदृत्विग्लोकानले तदा ॥ ७० ॥
अवशिष्टं गृह्यकर्म कार्यमौपासनेऽनले ।
औपासनाग्निसाध्येषु प्रजासंस्कारकर्मसु ॥ ७१ ॥
मुख्यकर्तुरभावेन यदि कर्त्रन्तरं भवेत् ।
लौकिकाग्नौ तदा कार्यं न तु गृह्ये कदाचन ॥ ७२ ॥
सर्वाधानी भवेद्विप्रश्चेत्तदा तत्र लुप्यते ।
स्थालीपाकः पार्वणाख्य औपासनहुतिस्तथा ॥ ७३ ॥
मासिश्राद्धादि लोकाग्नाविति केचिद्बुधा जगुः ।
मासिश्राद्धं दक्षिणाग्नावष्टकादीनि लौकिके ॥ ७४ ॥

---

* इदमर्धं ख. पुस्तके नास्ति । अस्यार्थो नावबुद्धः ।

१ ग. 'ष्टता श्र॰' । २ ग. '॰त्स्यायत्र' ।

वैजयन्तीकृदाहेति प्राहुरन्येऽपि केचन ।
प्रजासंस्कारकर्माणि स्युर्लौकानल एव तु ॥ ७५ ॥
शास्त्रान्तरप्रोक्तचित्तहोमाः संधानहेतवः ।
नष्टस्य कर्मणो यस्मात्तस्मात्स्युर्गृह्य एव ते ॥ ७६ ॥
स्वतन्त्रत्वाल्लौकिकाग्नावेव शास्त्रान्तरेरितम् ।
ग्रहयज्ञादिकं कार्यं न तु गृह्यानले चरेत् ॥ ७७ ॥
गृह्यान्तरोक्तं लोकाग्नौ गृह्याग्नावथ वाऽऽचरेत् ।
पुनरग्न्याहितौ सर्वाधानिनो मथितानले ॥ ७८ ॥
आनीते श्रोत्रियागाराद्वाऽग्नौ ब्रह्मौदनक्रिया ।
विवाहे यदि निर्मन्थ्यस्तदाऽत्र स्यात्तु मन्थनम् ॥ ७९ ॥
यदि द्वितीयः पक्षः स्यात्स्वीकार्योऽत्र स एव तु ।
एवंरूपा व्यवस्था तु व्याख्याकृद्भिः प्रदर्शिता ॥ ८० ॥
वहुशुष्केन्धने चाग्नौ सुसमिद्धे विधूमके ।
साङ्गारे लेलिहाने च होतव्यं नान्यथा क्वचित् ॥ ८१ ॥
आज्यहोमे सूत्रकृता दर्व्येव विहिता यतः ।
अतस्तत्र भवेत्सैव न स्रुवेणाऽऽहुतिर्भवेत् ॥ ८२ ॥
साधनं क्षीरदध्यादिहोमे दर्वी स्रुवोऽथवा ।
सूत्रकृद्विहिते होमे द्रव्यस्य कठिनस्य तु ॥ ८३ ॥
दर्वी हस्तोऽथवा ज्ञेयः शान्त्यादौ हस्त एव तु ।
होमे शिष्टैरादृतोऽस्ति यतोऽतोऽत्र स एव हि ॥ ८४ ॥
हस्त एवाऽऽचार्यवाक्यादौपासनहुतौ भवेत् ।
होमद्रव्ये त्वनादिष्टे सर्वत्राऽऽज्यं प्रकीर्तितम् ॥ ८५ ॥
कण्ठोक्त्या समिधां स्याच्चेद्यत्र प्रादेशमात्रता ।
तत्रैव सा स्यादन्यत्र त्वैच्छिकीयं समीरिता ॥ ८६ ॥
ओषध्यः सक्तवः पुष्पं काष्ठं मूलं फलं तृणम् ।
एतद्धस्तेन होतव्यं नान्यत्किंचिदचोदनात् ॥ ८७ ॥
अनादेशे दक्षिणा गौर्हेम वा पूर्णपात्रकम् ।
देवकार्ये नैव देयं रजतं त्वश्रुजं हि तत् ॥ ८८ ॥
पात्रं पादोपसंस्पृष्टं प्रक्षाल्यं सर्वथा बुधैः ।
हुतं यन्मांसधौतेन तन्न भुङ्क्ते हि देवता ॥ ८९ ॥
पात्राणां शोधनं नातः कार्यं केवलहस्ततः ।
किंतु दर्भैस्तृणैर्वाऽपि पर्णैर्वा वाससाऽपि वा ॥ ९० ॥

सर्वेषु धर्मकार्येषु पत्नी दक्षिणतो भवेत् ।
अभिषेके विप्रपादक्षालने वामतः स्मृता ॥ ९१ ॥
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
स नाऽऽप्नोति फलं तस्य परत्रेति श्रुतिः स्मृतिः ॥ ९२ ॥
बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥ ९३ ॥
यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
आकाङ्क्षितं शेषभूतमनुष्ठेयं विचक्षणैः ॥ ९४ ॥
तत्कृतौ फलवैशिष्ट्यं न दोषस्त्वकृतौ भवेत् ।
सामयाचारिका धर्मा देश[1]जातिकुलोद्भवाः ॥ ९५ ॥
ग्रामाचाराः परिग्राह्या ये च शास्त्राविरोधिनः ।
युगधर्माः परिग्राह्याः सर्वत्रैव यथोचितम् ॥ ९६ ॥

इति संक्षेपेण परिभाषाः ।

## दक्षिणार्थद्रव्येयत्ताव्यवस्था धनिकादिलक्षणं च ।

अथ धनिकादिप्रदेयदक्षिणार्थद्रव्येयत्ताव्यवस्था ।

तत्राऽऽदौ धनिकादिलक्षणं वाराहे—

" वर्धयित्वा धनं यस्तु तस्माद्ग्रासमपीह यः ।
न खादेत्संग्रहपरो धनिकः स उदाहृतः ॥
पोषणीयकुटुम्बस्य निर्वाहो यावता भवेत् ।
तावदेव सुखं येन लभते प्रतिवार्षिकम् ॥
ऋणं यस्य तु नास्त्येव स मध्यम उदाहृतः ।
धनं पूर्वापरं यस्य वर्तते बहुसंख्यया ।
अधिकस्यार्जको यः स्यात्स महाधन उच्यते ।
सदाचाररतो विप्रो धनार्जनपराङ्मुखः ॥
कुटुम्बव्ययत्नमतिकः स दरिद्र इति स्मृतः ।
यस्य स्यादशनाभावः सदाचाररतस्य हि ।
महादरिद्रः स भवेद्ग्रासोधान्यविवर्जितः ॥

---

[1] ग. 'शज्ञाति' ।

वर्धयित्वा धनं यस्तु ग्रासं वार्षिकमर्जयेत् ।
स वै धन्य इति प्रोक्तश्चैकवर्षेण यः पुमान् ॥
वर्षद्वयमितं ग्रासं स हि धन्यतरः स्मृतः ॥
अधिकस्यार्जको यः स्यात्स धन्यतम ईरितः ।
धनेनैव विना यस्तु ग्रासं वार्षिकमर्जयेत् ॥
स वै धीर इति प्रोक्तस्तारतम्यं च पूर्ववत् " इति ।

अथैतेषु मध्ये केन कियद्देयमित्याकाङ्क्षायां वाराहे लक्षनमस्कारहोमं प्रकृत्य—

" व्याहृतीनां सहस्रस्य होमे शुल्कं द्विजेऽर्पयेत् ।
माषमात्रं सुवर्णं तु लक्षहोमे शतं यवाः" इत्युक्तम् ।
" धनिको द्विगुणं दद्यात्त्रिगुणं तु महाधनः ।
यवार्धं तु दरिद्रेण दातव्यं पुण्यलब्धये ॥
दद्यान्महादरिद्रस्तु तदर्धं शुल्कमेव च " इति ।

मध्यमादिभिस्तु धनिकाद्यपेक्षया किंचिन्न्यूनं दरिद्राद्यपेक्षया किंचिदधिकं देयमित्यर्थात्तारतम्येन कल्पनीयम् । धीरेण तु दरिद्रतोऽपि न्यूनं समं वा लाभानुसारेण कल्पनीयम् । एतच्च सुवर्णादिद्रव्यविषयमेव, न तु गवादिविषयम् । सुवर्णे प्रकृत्यैव द्वैगुण्यादेरुक्तत्वात् । एतत्सर्वं नित्यकर्मविषयमनुक्तपरिमाणविषयकं च ज्ञेयम् । काम्य उक्तपरिमाणे च कर्मणि तु यथावदेव देयम् । धनिकादिस्तु दरिद्र्यहमिति प्रख्यापयन्यथावन्न ददाति स कर्मफलं नैवाऽऽप्नोति ।

तथाच मनुः—

" प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
स नाऽऽप्नोति फलं तस्य परत्रेति श्रुतिः स्मृतिः" इति ।

पुराणान्तरेऽपि—

" वित्तशाठ्यं नरो यस्तु धने सति करोति हि ।
स नाऽऽप्नोति फलं तत्र चोर एव प्रकीर्तितः" इति ।

एवं स्वल्पकालसाध्यबहुकालसाध्यकर्मसु श्रमाद्यनुरोधेन द्रव्येयत्ता कल्पनीया ।

## कुशाहरणादिविधिः।

अथ संक्षेपेण कुशाहरणादिविधिः। तत्र शातातपः—

" समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः" इति।

आदिशब्देन दूर्वादि। उत्तरार्धादिदमपि ज्ञायते स्वस्याऽऽहरणाशक्तौ ब्राह्मणक्षत्रियवैश्याहृतैः कर्मकरणे दोषो नास्तीति। लक्षपुष्पार्चनादौ तु क्रयक्रीतनिषेधो न

" लक्षपुष्पार्चनादौ तु क्रयक्रीतमपीष्यते " इति मन्त्रकोशकारोक्तेः।

आदिशब्देन दूर्वादिलक्षपूजनं गृह्यते। कुशग्रहणकालमाहाङ्गिराः—

" अहन्यहनि कर्मार्थं कुशच्छेदः प्रशस्यते।
कुशा धृता ये पूर्वत्र योग्याः स्युर्नोत्तरत्र ते" इति।

पूर्वकर्मणि धृता ये कुशास्ते नोत्तरत्रानन्तरं क्रियमाणेषु कर्मसु योग्या इत्यर्थः।

जाबालिः—

" कुशान्काशांश्च पुष्पाणि गवार्थं च तृणादिकम्।
निषिद्धे चापि गृह्णीयादमावास्याहनि द्विजः " इति।

अहन्यहनि दर्भच्छेदनासंभवे कालान्तरमुक्तं स्मृत्यन्तरे—

" मासि मास्याहृता दर्भास्तत्तन्मास्येव चोदिताः" इति।

अस्याप्यसंभवे विष्णुः—

" दर्शे श्रावणमासस्य समन्त्रोत्पाटिताः कुशाः।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः" इति।

अयातयामा अपर्युषिताः। नियोज्या उपयुक्ता अप्यनिषेधेऽन्यत्र प्रयोज्या इत्यर्थः। यस्तु—

" अमायां नैव हिंस्यात्तु कुशांश्च समिधस्तथा।
सर्वत्रावस्थिते सोमे हिंसायां ब्रह्महा भवेत्॥
वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतिम्।
घोरायां ब्रह्महत्यायां युज्यते नात्र संशयः" ॥

इति निषेधः स यस्मिन्मुहूर्तत्रये वनस्पतिषु सोमो वसति तत्परो न तु कृत्स्नामापर इति। योऽयं वनस्पतिगतसोमविशिष्टे काले छेदननिषेधः स

लौकिकच्छेदनपरो न त्विध्मादिच्छेदनपरस्तस्य विहितत्वादिति द्रष्टव्यम्। सोमवासकालस्तु गरुडपुराणेऽभिहितः—

" त्रिमुहूर्तं वसत्यर्के त्रिमुहूर्तं जले तथा ।
त्रिमुहूर्तं तथा गोषु त्रिमुहूर्तं वनस्पतौ" इति ।

एतच्चामामारभ्य ज्ञेयम् । कुशच्छेदनविधिमाह कौशिकः—

" शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ।
ओंकारेण तु मन्त्रेण कुशान्स्पृष्ट्वा द्विजोत्तमः ॥
विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।
नुद सर्वाणि पापानि कुश स्वस्तिकरो भव ॥
इमं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः ।
हुंफट्कारेण दर्भांस्तु सकृच्छित्त्वा समुद्धरेत्" इति ।

क्त्वाप्रत्ययादेव च्छेदनेऽपि पूर्वोत्तरामुखत्वे सिद्धे पुनर्वचनं विशेषविधिप्रतिपादितधर्मान्तरपरिसंख्यार्थम् । तेन स्थित्वेत्यस्यैव विशेषविधिप्रतिपादितत्वाच्छेदने निवृत्तिः । शुचौ देशे शुचिर्भूत्वेत्यस्य तु न निवृत्तिः । विशेषविधिप्रतिपादितत्वाभावादिति द्रष्टव्यम्। क्वचिच्छेदने विशेष उक्तो भरद्वाजेन—

" प्रेतक्रियार्थं पित्र्यर्थमभिचारार्थमेव च ।
दक्षिणाभिमुखश्छिन्द्यात्प्राचीनावीतिको द्विजः" इति ।

छेदनीयकुशान्विशिनष्ट्यङ्गिराः—

" अच्छिन्नाग्रान्पवित्रांश्च अच्छिद्रान्कोमलाञ्शुभान् ।
पितृदेवक्रियार्थं च समादद्यात्कुशान्द्विजः" इति ।

त्याज्यान्कुशानाह हारीतः—

" पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु तेषां त्यागो विधीयते" इति ।

आपस्तम्बः—

" ब्रह्मयज्ञे च ये दर्भा ये चैव पितृतर्पणे ।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते" इति ।

देवलः—

" अपूता गर्भिता दर्भा ये चाग्रच्छेदिता नखैः ।
क्वथिता अग्निदग्धाश्च कुशा वर्ज्याः प्रयत्नतः" इति ।

गर्भिता गर्भदलसंयुताः । वस्तुतस्तु सूत्रकृता यत्रानन्तर्गर्भत्वमुक्तं तत्रैव नियतम्, अन्यत्रानियतमिति द्रष्टव्यम् ।

जाबालिः—

“ नीविमध्यस्थिता दर्भा ब्रह्मसूत्रे च ये धृताः ।
पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः” इति ।

स्मृत्यन्तरे—

“ अमूला देवकार्येषु पितृकार्ये समूलकाः” इति ।

कौशिकः—

“ सप्रसूनाः स्मृता दर्भा अप्रसूनाः कुशाः स्मृताः ।
समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः” इति ।

प्रसूनं पुष्पम् ।

अत्रिः—“ उभाभ्यामपि हस्ताभ्यां द्विजैर्दर्भपवित्रके ।
धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते” इति ।

प्रयत्नेन ब्रह्मग्रन्थिसमन्विते धारणीये इति योजना ।

स एव—

“ ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ।
भोजने वर्तुलः प्रोक्त एवं धर्मो न हीयते” इति ।

ब्रह्मग्रन्थिलक्षणं हेमाद्रिणोक्तम्—

“ द्विगुणीकृतानां दर्भशिखानां पाशः प्रदक्षिणमर्धावेष्टनं विधाय पश्चाद्भागेन यदा प्रवेश्यते तदा वर्तुलो ग्रन्थिः । स एव यदा प्रादक्षिण्येन सर्ववेष्टनं विधाय पुरोभागेण प्रवेश्यते तदा ब्रह्मग्रन्थिः” इति ।

हारीतः—

“ वामहस्ते कुशान्कृत्वा समाचामति यो द्विजः ।
उपस्पृष्टं भवेत्तेन रुधिरेण मलेन वा” इति ।

केवलं वामहस्त इत्यर्थः । न चैतदाचमने वामहस्ते कुशधारणनिषेधकमिति वक्तुं शक्यम् ।

“ उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः ।
सोमपानफलं सोऽपि भुक्त्वा यज्ञफलं लभेत्” ॥

इति देवलवचनविरोधापत्तेः ।

मार्कण्डेयः—

" न ब्रह्मग्रन्थिनाऽऽचामेन्न दूर्वाभिः कदाचन ।
काशहस्तस्तु नाऽऽचामेत्कदाचिद्विधिशङ्कया" इति ।

पवित्रलक्षणमाह कात्यायनः—

" अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित्" इति ।

विशेषतः पवित्रलक्षणं स्मृत्यन्तरे—

" द्व्यङ्गुलं मूलतः कुर्याद्ग्रन्थिरेकाङ्गुलस्तथा ।
चतुरङ्गुलमग्रं स्यात्पवित्रस्य च लक्षणम्" इति ।

प्रणवेन पवित्रग्रन्थिकरणमुक्तं तत्रैव—

" तारेण कुर्याद्ग्रन्थिं तु पवित्रस्य विचक्षणः" इति ।

तारः प्रणवः ।

पवित्रदर्भसंख्यामाह मार्कण्डेयः—

" चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम्" इति ।

गरुडपुराणे तु—

" सप्तभिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
पञ्चभिः क्षत्रियस्यैव चतुर्भिस्तु तथा विशः ॥
द्वाभ्यां शूद्रस्य विहितमातुराणां तथैव च ।
सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं न वा" इति ।

स्मृत्यन्तरे—

" चतुर्भिर्दर्भपिञ्जूलैर्द्वाभ्यां वाऽथ पवित्रकम् ।
दैवे कर्मणि कर्तव्यं पित्र्ये तत्रिभिरीरितम्" इति ।

रत्नावल्याम्—

" द्वयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद्बुधः" इति ।

पवित्रपातप्रायश्चित्तमुक्तं स्मृत्यन्तरे—

" पवित्रे पतिते ज्ञाते तथा जपमणावपि ।
प्राणायामत्रयं कुर्यात्स्नात्वा विप्रोऽघमर्षणम्" इति ।

१ ग. जाते ।

जपेदिति शेषः ।

पवित्रत्यागे विशेष उक्तः स्मृत्यन्तरे—

" नित्ये नैमित्तिके वाऽपि कर्मोपकरणे द्विजः ।
धृतं पवित्रं कर्मान्ते ग्रन्थिं मुक्त्वैव तत्त्यजेत्" इति ।

कुशाभावे स्मृत्यन्तरे—

" कुशाभावे तु काशाः स्युः कुशाः काशाः समाः स्मृताः ।
काशाभावे ग्रहीतव्या अन्ये दर्भा यथोचितम्" इति ।

हारीतः—

" कुशाभावे तथा काशा दूर्वा व्रीहियवा अपि ।
गोधूमाश्चैव नीवाराः श्यामाकोशीरबल्वजाः ॥
मुञ्जा वाऽथ परिग्राह्याः सर्वकर्मसु निश्चितम्" इति ।

अत्र व्रीहियवगोधूमनीवारश्यामाकशब्दास्तत्तत्तृणपराः । विस्तरस्त्वाचार-रत्नमालायां वक्ष्यते ।

## यज्ञियपात्रवृक्षाः, यज्ञियपात्रलक्षणानि च ।

पात्रवृक्षाः संग्रहे—

" पात्राणि दारवाणि स्युर्यथाशक्त्यनुरूपतः ।
पूर्णपात्रादयो ग्राह्याः शस्ता यज्ञद्रुमोद्भवाः ॥
प्रशस्ते पूर्णपात्रार्थे दारुकांस्यमये मखे" इति ।

पात्र इति शेषः ।

" खादिरेण स्रुवः कार्यः पालाशी तु जुहूर्भवेत् ।
त्वक्प्रदेशे बिल स्यातामन्यैर्वा यज्ञियैर्द्रुमैः ॥
तदलाभे पलाशस्य पर्णाभ्यां हूयते हविः ।
पलाशपर्णाभावे तु पर्णैर्वा पिप्पलोद्भवैः" इति ।

गृह्यकर्मणि सर्वत्राऽऽज्यहोमे दर्व्यैवाऽऽचार्योक्तेः । शास्त्रान्तरे दृष्टत्वात्खादिर्यपि दर्वी ग्राह्येति मातृदत्तः । अपिशब्दात्पालाशी ।

बौधायनगृह्ये—

"खादिरी दर्वी तेजस्कामस्यौदुम्बर्यन्नाद्यकामस्य पालाशी ब्रह्मवर्चसकामस्य" इति ।

स्रुवे विशेषमाह स एव—

" पालाशेन स्रुवेणेत्यात्रेयः खादिरेणेत्याङ्गिरसस्ताम्रायसेनेत्याथर्वणः
काष्र्णायसेनाभिचरन्निति सार्वत्रिकम्" इति ।

दर्व्या आकृतिर्लोकप्रसिद्धा भाषया 'पळी' इत्युच्यते । तदलाभे स्रुगलाभे दर्व्यलाभे च स्रुवस्थानीयं पर्णमत्र मध्यमं ग्राह्यम् ।

" मध्यमेन पर्णेन जुहोति स्रुग्व्येषा" इति श्रुतेः ।
" खादिरो मुसलः कार्यः पालाशः(शं) स्यादुलूखलः(लम्) ।
यद्वोभौ वारणौ कार्यौ तदलाभेऽन्यवृक्षजौ ॥
चमसः स्यात्प्रणीतानां कांस्यपात्रमथापि वा" इति ।

आज्यस्थालीलक्षणं छन्दोगपरिशिष्टे—

" आज्यस्थाली प्रकर्तव्या तैजसद्रव्यसंभवा ।
महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च ॥
आज्यस्थाल्याः प्रमाणं तु यथाकामं तु कारयेत् ।
सुदृढामव्रणां भद्रामाज्यस्थालीं प्रचक्षते" इति ।

आज्यस्थाली मृन्मयीति मातृदत्तवैजयन्तीकारौ । कांस्यमयीति केचित् । सा चार्थसिद्धपरिमाणा विशेषानुक्तेः । यथाकामं तु कारयेदित्यनन्तरोदाहृतच्छन्दोगपरिशिष्टवचनाच्च । मृन्मयीतिपक्षे हस्तघटितैव न कुलालचक्रनिर्मिता । अचक्रावर्तामित्यग्निहोत्रहोमप्रकरणे सूत्रकारेणोक्तत्वात् ।

" कुलालचक्रनिष्पन्नमासुरं मृन्मयं स्मृतम् ।
तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत्" ।

इति कर्मप्रदीपवचनाच्च । चक्रेणाऽऽवर्तो भ्रमो यस्याः सा चक्रावर्ता न चक्रावर्ताऽचक्रावर्ता ताम् । इदमग्निहोत्रस्थालीविशेषणम् । आज्याहुतीनामतिबाहुल्येनैकाज्यस्थाल्यसंभवेऽनेका महत्य आज्यस्थाल्य उपयोक्तव्याः ।

प्रदर्शितं चास्त्याचार्येण—

" असंभवाद्वा यथाऽश्वमेधे पशुकर्मसु" इत्यनेन सूत्रेण ।

अन्यो निर्वापो वा कार्यः । आज्यस्थालीगताज्यस्य स्कन्दनेऽप्येषः । प्रायोगिकास्तु संस्कृते स्थालीगत आज्य एव लौकिकमाज्यमानीय[1] तेन

१ ख. ग. 'दभावेऽन्य' ।

कर्म कुर्वन्ति। प्रणीताप्रणयनपात्रं चमसः। स च न्यग्रोधजो रौहीतकजो वा चतुरङ्गुलदण्डश्चतुरस्रः षडङ्गुलदीर्घस्त्र्यङ्गुलनिम्नश्चतुरस्रबिलोऽदण्डो वा। अस्मिन्पक्षे परितो त्र्यङ्गुलमवशेष्य सर्वं बिलमेव। रौहीतको वटावान्तरजातिरिति पशुप्रकरणे व्याख्यातारः। यद्यप्यमरेण करञ्जभेदे रौहीतकशब्दप्रवृत्तिरुक्ता तथाऽप्यमरव्याख्यायाम्—

"रोही रौहीतकश्चेत्यवटपादपयोः पुमान्"।

इति रामाश्रमोदाहृतकोशान्तराद्वटवाचिताऽपि। यद्यपि न्यग्रोधरोहितकशब्दयोः पर्यायता कोशान्तरात्प्रतीयते तथाऽपि नैयग्रोधान्रौहीतकान्वेति सूत्रे पृथगुपादानाद्वटविशेषपरता रौहीतकशब्दस्य। रोहीतकरोहितकशब्दौ पर्यायौ। वारणजो वा चमसः। "अहोमार्थानि तु वारणस्य" इतिवचनात्। इयं च परिभाषा गार्ह्यकर्मण्यनित्येति ज्ञापयिष्यते च सोमसूत्रव्याख्याने। तथा च विकङ्कताद्यन्यतमयज्ञियवृक्षजान(न्य)पि। मातृदत्तस्तु प्रणीताप्रणयनपात्रं मृन्मयमित्याह। कांस्यपात्रं ब्रह्मवर्चसकामनायामिति केचित्। प्रोक्षणीपात्रं स्रुगाकारं वारणवृक्षजम्। अहोमार्थत्वात्।

तत्र स्रुग्लक्षणमित्थं याज्ञिका उपदिशन्ति—

"आयामं पञ्चधा कृत्वा चतुर्धा वाऽग्रतो द्वयोः।
उपान्त्यः पात्रमित्युक्तो हविराश्रयभावतः॥
उपान्त्यभागे विस्तारः स्वदैर्घ्येण समो भवेत्।
सोऽञ्जल्याकृतिरुद्दिष्टो बिलमत्र च वर्तुलम्।
षडङ्गुलं बाहुमाभ्यां तदर्धेन च निम्नता।
अरत्निमाने हस्तस्य तलमानं बिलं स्मृतम्॥
विस्तारार्धेन निम्नं स्यादन्त्यभागेऽथ निर्णयः।
भागेऽन्तिमे भवेद्ग्रीवा दैर्घ्यार्धेन च विस्तृता॥
तस्या मुखं हंसमुखं हस्त्योष्ठमुखमेव वा।
बिलात्प्रणालिका तावत्पर्यन्तार्थानुरूपतः॥
कर्णौ ससुषिरौ ग्रीवापार्श्वयोश्चोदितौ तथा।
बिलस्य बुध्ने पद्मं स्यादथ दण्डस्य लक्षणम्॥
अवशिष्टास्त्रयो द्वौ वा भागौ दण्ड इतीर्यते।
तस्य मूले भवेत्स्थूलः परिणाहो नवाङ्गुलः॥

परिणाहो विशालता ।

> अन्ते पञ्चाङ्गुलः श्लक्ष्णो यन्त्रतो वर्तुलो भवेत् ॥
> दण्ड एवं स्रुचां काकपुच्छत्वं समुदीरितम् ।
> यथाशोभं स्रुचः कार्या इति बौधायनोऽब्रवीत् ।
> शास्त्रान्तरात्तु विज्ञेयं विशेषान्तरमत्रयत् ।
> प्रादेशमात्रताऽपि स्याद्बौधायनमतादितः ।
> दण्डो भागद्वयेन स्यात्पात्रं भागद्वयेन च ।
> ऊर्ध्वमेकेन भागेन ग्रीवा चेति यथार्थतः ।
> स्रुचः सह स्रुवेण स्युरुक्तवृक्षा अथापि वा " इति ।

एतत्कारिकाभ्यः पूर्वत्र खादिरस्योपक्रान्तत्वात्तेन साकमयं विकल्पः। गृह्यकर्मणि—'वितस्तिर्गृह्यकर्मणि' इति वचनाद्वितस्तिप्रमाणेन प्रोक्षण्यर्थां स्रुक्कार्या । एवं दर्व्यादीन्यपि । वितस्तिर्द्वादशाङ्गुला । त्रयोदशाङ्गुलेति केचित् । शूर्पं लोकप्रसिद्धम् । तच्च वैणवं नलमयं वेति भरद्वाजः । उलूखलं पालाशं वारणं वा । मुशलं खादिरं वारणं वा । एतयोः परिमाणे अर्थसिद्धे । दृषदुपले पेषणार्थे पाषाणमये अर्थसिद्धपरिमाणे । पात्री धातुमयी मृन्मयी वा । कपालानि तु नवं मृन्मयं घटं भित्त्वा तच्छकलानि पुरोडाशश्रपणयोग्यानि चत्वारि । एतैरश्वशफमात्रो विस्तारो यथा संपद्यते तावन्मानानि ।

यज्ञपार्श्वे तु—

> " समानि चतुरस्राणि द्व्यङ्गुलानि समन्ततः ।
> कुर्यादेककपालानां कपालं पाणिसंमितम् ॥
> द्विकपालत्रिकादीनि कुर्यात्तदनुसारतः ।
> एवमादिसमादेशं कुर्यादौत्सर्गिकं सदा" इति ।

मण्डनोऽपि—

> " रथचक्रवदाकारः सर्वतश्च षडङ्गुलः ।
> यथा कपालयोगः स्यात्तथैकैकं कपालकम् ।
> उत्सेधा द्व्यङ्गुलास्तेषामेवं कुर्यान्मृदा पृथक् ।
> यद्वा भिन्नघटादीनां गृहीतावयवानिह" इति ।

कुलालभावितया मृदा सर्वतः षडङ्गुलं रथचक्राकृति द्व्यङ्गुलोच्चं समभूमिकं वर्तुलपीठं कृत्वाऽधस्तात्किंचित्परिशेष्य प्राञ्चं तिर्यञ्चं च विभजेत् । तेन

चत्वारि कपालानि भवन्ति । ततस्तानि पक्त्वा परिशेषितप्रदेशेषु विभजेत् । अत्रैव कपालशब्दस्य रूढेः । शम्यामानमप्याह स एव—

" त्रिप्रादेशा भवेच्छम्या कुम्बाग्राऽतिमनोहरा ।
एकप्रादेशमात्रा वा शम्या लौगाक्षिदर्शनात्" इति ।

दृषदादीनां पूर्वेद्युःश्राद्ध उपयोगः ।

स्रुवलक्षणमाह मण्डनः—

" अर्धाङ्गुलमितच्छिद्रः स्रुवस्त्वङ्गुलबुध्नवान् ।
अङ्गुष्ठपर्वणो यद्वा वृत्तं तन्मात्रपुष्करम्" इति ।

आश्वलायनस्मृतौ—

" अष्टाङ्गुलमिता स्थाली प्रोक्षणी च षडङ्गुला ।
चमसश्चाऽऽज्यपात्रं च षडङ्गुलमिति स्मृतम्" इति ।

उच्चताऽर्थसिद्धा । स्थाली चरुस्थाली । आज्यपात्रमाज्यस्थाली । वितस्तिर्गृह्यकर्मणीतिवचनसिद्धेन वितस्त्यात्मकेन प्रोक्षणीप्रमाणेन षडङ्गुलप्रमाणं विकल्पत इति केचित् ।

कात्यायनेन चरुस्थालीलक्षणमन्यथोक्तम्—

" दृढा प्रादेशमात्र्यूर्ध्वं तिर्यङ्नातिबृहन्मुखी ।
मृन्मय्यौदुम्बरी वाऽपि चरुस्थाली प्रशस्यते" इति ।

एतच्च प्रादेशमात्रत्वमाश्वलायनस्मृत्युक्तेनाष्टाङ्गुलप्रमाणेन विकल्पते । औदुम्बरी ताम्रमयी । मेक्षणलक्षणमप्युक्तं कात्यायनेन—

" इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत् ।
वृत्तं वार्क्षं च पृथ्वग्रमवदानक्रियाक्षमम्" इति ।

इध्मजातीयमित्यनेनैव वृक्षलाभे वार्क्षमिति वचनमिध्मवृक्षातिरिक्तवृक्षस्यापि पक्षे संग्रहार्थम् ।

संग्रहे—

" आयामं पञ्चधा कृत्वा त्रिभागं दण्डमेव च ।
द्विभागं पुष्करं प्रोक्तं दर्व्या लक्षणमुत्तमम्" इति ।

इयं च दर्वी पूर्णाहुत्यादिहोमे होमानुसारेण कल्पनीया । यत्र द्विस्त्रिर्गृहीताज्यहोमः प्रायश्चित्तादौ तत्राप्येवम् । यत्रैवमाज्यहोमो नास्ति तत्र कर्षप्रमाणमाज्यं यावति बिले संमाति तावत्प्रमाणबिला दर्वी ग्राह्या ।

१ ग. "त्र स्रुववक्त्रप्र" ।

## पात्राणां शुद्धिप्रकारः ।

अथ संक्षेपेण पात्राणां द्रव्याणां च शुद्धिप्रकारः । तत्र लेपरहितानां दारुमयाणामश्ममयानां वैणवानां च लेपं विनोच्छिष्टपुरुषादिस्पृष्टानां जलेन प्रक्षालनाच्छुद्धिः । सलेपानामेतेषां सलेपोच्छिष्टादिपुरुषस्पृष्टानां तक्षणात्प्रक्षालनाच्च शुद्धिः । सलेपानामेतेषां लेपं विनोच्छिष्टपुरुषादिस्पृष्टानामुष्णोदकेन प्रक्षालनाच्छुद्धिः । शूर्पस्य तु तक्षणासंभवात्परित्याग एव । लेपसहितानां दारुमयाणामश्ममयानां च काकादिमुखावमृष्टानां तक्षणाच्छुद्धिः । लेपरहितानां तूष्णोदकेन प्रक्षालनात् । एवं मार्जारव्यतिरिक्तश्वापदमुखावमृष्टानामपि । चण्डालादिस्पर्शविण्मूत्राद्युपहत्योस्तु सर्वत्र परित्याग एव । सलेपानां सौवर्णराजतकांस्यमयताम्रमयाणां यथाक्रममुष्णोदकगोशकृद्भस्माम्लैः शुद्धिः । सलेपानां सौवर्णराजतव्यतिरिक्तानां पात्राणां काकादिमुखावमृष्टानां शूद्रसंस्पृष्टानां च तक्षणात्प्रक्षालनाच्च शुद्धिः । एवं शूद्रोपभुक्तानामलेपानामपि । सौवर्णराजतानां तु दाहादुष्णोदकेन प्रक्षालनाच्च शुद्धिः । एतेषां चण्डालादिस्पर्शे विण्मूत्राद्युपहतौ च पुनः करणम् । अथवा गोमूत्रे सप्तरात्रं संस्थापनाद्दाहादुष्णोदकेन प्रक्षालनाच्च शुद्धिः । नूतनानां मृन्मयानां विना लेपमुच्छिष्टपुरुषादिस्पृष्टानां जलेन प्रक्षालनम् । आज्यलिप्तानामुच्छिष्टपुरुषादिस्पृष्टानां पुनर्दाहः । सलेपानामुच्छिष्टपुरुषादिस्पृष्टानां मूत्रपुरीषाद्युपहतानां च परित्याग एव ।

## द्रव्याणां शुद्धिप्रकारः ।

कृष्णाजिनस्य लेपं विनोच्छिष्टस्पर्शे गोमयोदकेन प्रक्षालनम् । सलेपोच्छिष्टस्पर्शे गौरसर्षपपिष्टैर्गोमयेन मृदोष्णोदकेन च शुद्धिः । विण्मूत्राद्युपहतावप्येवम् । घनाया भूमेर्विण्मूत्राद्युपहतौ गोमयेनोपलेपनम् । ससुषिरायाः कर्षणम् । आर्द्रायां मेध्यमृदा प्रच्छादनम् । अशुद्धायां भूमौ न्यस्तानां प्रक्षालनम् । पुरुषवाह्यानां काष्ठशिलेष्टकानां चण्डालादिस्पृष्टानां प्रक्षाल्यावशोषणम् । यज्ञाद्यर्थं शूद्रादिभिराहृतानां दर्भकाष्ठादीनां पवमानानुवाकेन प्रोक्षणाच्छुद्धिः । एकपुरुषाहारपरिमितानां व्रीहियवगोधूमादीनां विण्मूत्राद्युपहतौ परित्यागः । अधिकानां तु यावत उपहतिर्भवति तावत एवोत्सर्गं कृत्वाऽवशिष्टानां प्रोक्षणकण्डनक्षालनानि कार्याणि । फलीकृतानां तण्डुलानां पाणिभ्यां निर्मलीकरणप्रोक्षणप्रक्षालनानि । होमार्थस्य चर्वादेः केशकीटपतङ्गादिभिरुपघाते परित्याग एव । सर्पिषस्तैलस्य चोच्छिष्टस्पर्शे उदके तत्पात्रं निधायोद्धृत्योपयोजयेत् । मधुपयोदध्यादीनां तस्मात्पात्रादन्यस्मिन्पात्र उद्धृत्योपयोगः कार्यः ।

एतेषां लेपसंबन्धे परित्याग एव । परित्यागव्यतिरिक्ते सर्वत्र पवमानानुवाकप्रोक्षणस्य समुच्चयः । सर्पिरादीनां क्षुद्रकेशकीटकादिभिः संसर्गे तदुद्धृत्य पर्यग्निकरणं वस्त्रादिभिर्गालनं पवित्राभ्यां तूष्णीमुत्पवनं च कार्यम् । एवं काकादिभिरवघ्रातेष्वपि । विण्मूत्राद्युपहतौ तु परित्याग एव । एतन्मूलभूतानि वचनानि तु हेमाद्रिविज्ञानेश्वरमदनपारिजातादिषु द्रष्टव्यानि ।

इति पात्रद्रव्यशुद्धिप्रकारः ।

## द्रव्यप्रतिनिधिनिरूपणम् ।

अथ संक्षेपेण प्रतिनिधिनिरूपणम् । तत्र व्रीहयो यवा वा मुख्यास्तदभावे नीवारगोधूमौ यथायथं तदभावे वेणुयवास्तदभावे माषचणककोद्रवादिनिषिद्धद्रव्यातिरिक्तं द्रव्यम् । गव्यमाज्यं मुख्यं तदभावे माहिषं तदभाव आजं तदभावे तैलं तदभावे जर्तिलातसीकुसुम्भसर्षपमधूकबीजनारिकेलस्नेहादीनि पूर्वपूर्वालाभे ग्राह्याणि । एतेषामप्यलाभे यवव्रीहिश्यामाकान्यतमोद्भवं पिष्टं जलेनाऽऽलोड्याऽऽज्यकार्ये नियोजयेत् । एवमञ्जनेऽपि । बर्हिःकार्ये दर्भा मुख्यास्तदभावे काशास्तदभावे शरसुगन्धितृणाश्ववालमुञ्जदूर्वायवश्यामाकतृणेक्षुपत्रक्षीरद्रुमपत्राणि पूर्वपूर्वालाभे ग्राह्याणि । समित्कार्ये पलाशो मुख्यः । इध्मकार्ये खदिरोऽपि । तदभावेऽश्वत्थोदुम्बरशम्यर्कापामार्गादयः । अपि वा कपित्थराजवृक्षकदम्बनिम्बकरञ्जशाल्मलितिलकश्वनारश्लेष्मातकविभीतकशाकद्रुमादीन्निषिद्धान्वर्जयित्वाऽवशिष्टाञ्शुचीन्वनस्पतीनुपयुञ्ज्यात् । गोपयो मुख्यं, तदभावे माहिषं, तदभाव आजं, तदभावे गवादीनां दधि, तदभावे यवव्रीहिश्यामाकान्यतमोद्भवपिष्टमिश्रितं जलम् । केषांचिदाचार्याणां मते गोपयोभावे दधि, तदभावे माहिषं पयः, तदभाव आजं, तदभावे महिष्यादीनां दधि, तदभावे यवव्रीहिश्यामाकान्यतमोद्भवपिष्टमिश्रितं जलमिति क्रमः । एवं दध्नोऽपि । पात्रेषूक्तवृक्षाभावे पूर्वोक्तान्कपित्थादीन्वर्जयित्वा पात्रयोग्ययज्ञियवृक्षमात्रं ग्राह्यम् ।

## दक्षिणामानम् ।

दक्षिणासु वरेषु चोक्तद्रव्यालाभे विभवानुसारेण मूल्याध्यायोक्तमानेन द्रव्यं देयम् । तत्र मानं पञ्चधा । वराटकताम्ररौप्यकसुवर्णरजतभेदात् । तत्रैकस्या गोर्मूल्यं वराटकमानेन पञ्चाधिकपञ्चविंशतिशती वराटकानां भवति । ताम्रमानेनैकस्या गोर्मूल्यं मधुमुद्राङ्कितढब्बूकस्य चतुश्चत्वारिंशदधिकशतगुञ्जात्मकत्वात्ताम्रपणस्य

चाशीतिगुञ्जात्मकत्वात्किंचिन्न्यूना अष्टादश ढब्बूका भवन्ति । रौप्यकमानेन त्वेकस्या गोर्मूल्यं किंचिन्न्यूनैकयवाधिकगुञ्जाद्वयपरिमितं सुवर्णं भवति। सुवर्णमानेन त्वेकस्या गोर्मूल्यं चत्वारिंशन्माषकपरिमितं सुवर्णं भवति । राजतमानेन त्वेकस्या गोर्मूल्यं राजतचत्वारिंशन्माषपरिमितं रजतं भवति । वराटकमानेन वरमूल्यं विंशतियुक्तशताधिकपञ्चसाहस्री वराटकानां भवति। ताम्रमानेन तु किंचिन्न्यूनषट्त्रिंशड्ढब्बूका भवन्ति। रौप्यकमानेन तु किंचिन्न्यूनयवद्वयाधिकचतुर्गुञ्जामात्रं सुवर्णं भवति[1]। सुवर्णमानेन तु षोडशमाषात्मकाः पञ्च सुवर्णा भवन्ति । राजतमानेन तु राजताशीतिमाषकपरिमितं रजतं भवति। वराटकमानेन वृषमूल्यं षट्पञ्चाशद्युक्तशताधिकसप्तसाहस्री वराटकानां भवति। ताम्रमानेन तु किंचिन्न्यूनचतुष्पञ्चाशड्ढब्बूका भवन्ति। रौप्यकमानेन तु किंचिन्न्यूनसप्तगुञ्जापरिमितं सुवर्णं भवति। सुवर्णमानेन तु सार्धसप्तसुवर्णा भवन्ति। राजतमानेन तु विंशतिरजतमाषाधिकशतमाषा रूप्यं भवति। अनडुहि वरापेक्षया द्विगुणं बोध्यम् । वराटकमानेन धेनुमूल्यमष्टशताधिकद्वादशसाहस्री वराटकानां भवति । ताम्रमानेन किंचिन्न्यूननवतिढब्बूका भवन्ति। रौप्यकमानेन यवद्वयाधिकमाषकद्वयं सुवर्णं भवति । सुवर्णमानेन सार्धद्वादश सुवर्णा भवन्ति। राजतमानेन राजतशतद्वयं माषका भवन्ति। वराटकमानेनाश्वमूल्यं शतद्वयाधिकैकोनविंशतिसाहस्री वराटकानां भवति । ताम्रमानेन पञ्चविंशत्यधिकशतं ढब्बूका भवन्ति। रौप्यकमानेन यवत्रयाधिकमाषकत्रयपरिमितं सुवर्णं भवति । सुवर्णमानेन पादोनैकोनविंशतिसुवर्णा भवन्ति। राजतमानेन राजतशतत्रयं माषका भवन्ति । वराटकमानेन हिरण्यमूल्यं सहस्रद्वयं वराटका भवन्ति । ताम्रमानेनाष्टगुञ्जान्यूनचतुर्दशढब्बूका भवन्ति । रौप्यकमानेन किंचिन्न्यूनसार्धपञ्चकमाषप्रमाणं सुवर्णं भवति। सुवर्णमानेन सपादैकत्रिंशन्माषा भवन्ति । राजतमानेन सपादैकत्रिंशद्राजतमाषा भवन्ति। वराटकमानेन वस्त्रमूल्यमशीत्यधिकद्वादशशती वराटकानां भवति। ताम्रमानेन किंचिन्न्यूननवढब्बूका भवन्ति। रौप्यकमानेन किंचिन्न्यूनसर्षपत्रयाधिकगुञ्जामात्रं सुवर्णं भवति । सुवर्णमानेन विंशतिमाषपरिमितं सुवर्णं भवति। राजनमानेन विंशतिराजतमाषपरिमितं रजतं भवति । गोरपेक्षया पादमात्रं छागमूल्यम्[3]। अत्राजापेक्षया सार्धमधिकं बोध्यम् । धेन्वपेक्षया क्रमेण पञ्चगुणं दासीमूल्यम् । दासीवन्निष्कमूल्यम् । वराटकमानेन गजमूल्यं चत्वारिंशत्सहस्राधिकलक्षषट्कं वराटकानां भवति । ताम्रमानेन

---

१ क. °ध्त्रिंशदधि° । २ क. °न्माषाः सुवर्णं भवति । रा° । ३ क. ख. °म् । धे° ।

स्थूलदृशा पञ्चशताधिकसहस्रचतुष्टयं ढब्बूका भवन्ति। रौप्यकमानेन स्थूलदृशाऽशीत्यधिकपञ्चशतगुञ्जापरिमितं सुवर्णं भवति। सुवर्णमानेन पञ्चशतमाषपरिमितं सुवर्णं भवति। रजतमानेन पञ्चशतराजतमाषपरिमितं रजतम्। धेन्वपेक्षया क्रमेणार्धं नरवाह्ययानस्य मूल्यम्। अनडुद्गृहस्य मूल्यम्। एतन्मूलं गोपालकृतमूल्याध्यायविवरणे द्रष्टव्यम्। नित्येषु कर्मसु मूल्यस्याप्यभावे मन्थौदनकन्दमूलफलादीनि पूर्वपूर्वालाभे देयानि। काम्येषु कर्मसु तु यथोक्तवस्तून्येव न प्रतिनिधिः। आरब्धेष्वेतेषु यथोक्तवस्त्वलाभेऽस्त्येव प्रतिनिधिः।

इति संक्षेपेण प्रतिनिधिनिरूपणम्।

## कर्मादौ गणेशपूजनस्याऽऽवश्यकता।

अथ गणपतिपूजनम्। तच्च सर्वकर्मस्वादौ कर्तव्यं, निर्विघ्नार्थत्वात् 'न ऋते त्वत्क्रियते' इति मन्त्रलिङ्गात्।

"नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तमाः।
तस्माद्विघ्नं समुत्पन्नं तत्क्रोधजमिदं खलु" इति पद्मपुराणाच्च।

अत्र पूजा द्विविधा, षोडशोपचारा पञ्चोपचारा वा। तत्र प्रतिष्ठितप्रतिमायामावाहनविसर्जनयोरभावेन चतुर्दशोपचारैव पूजा। अथवाऽऽवाहनविसर्जनयोः स्थाने मन्त्रपुष्पाञ्जलिदानं तेन षोडशोपचारा भवन्ति। नूतनप्रतिमायां तु षोडशोपचारैव। आवाहनाभावे प्रतिमादौ पूजाया असंभवात्। क्वचित्तु वचनाद्विसर्जनमुत्कृष्यते। आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीतिवत्। यथा ग्रहयज्ञादौ—

"एवं समग्रं निष्पाद्य सर्वदेवान्विसर्जयेत्" ॥

इति मात्स्ये विधानादन्ते विसर्जनम्। ईदृश्येव चेयं पूजा वचनत्याजितकिंचित्पदार्था पिण्डरहितसंक्रान्तिश्राद्धवत्स्वतन्त्राऽपि। पञ्चोपचारपूजा तु यत्र स्थापितदेवानां विसर्जनात्प्राक्पूजोक्ता तद्विषया।

## स्वस्तिवाचनम् ।

अथ स्वस्तिवाचनम् । व्यासः—

"संपूज्य गन्धमाल्याद्यैर्ब्राह्मणान्स्वस्ति वाचयेत् ।
धर्मकर्मणि माङ्गल्ये सङ्ग्रामेऽद्भुतदर्शने" इति ॥

गन्धमाल्याद्यैरिति वचनं गन्धपूर्वभाविनां पादप्रक्षालनादीनामुपचाराणामनावश्यकत्वबोधनार्थम् । आद्यशब्देन ताम्बूलादिग्रहणम् ।

गृह्यपरिशिष्टे—

"अथ स्वस्तिवाचनमृद्धिपूर्तेष्वृद्धिर्विवाहान्ता अपत्यसंस्काराः
प्रतिष्ठोद्यापने पूर्तं" इति ।

अत्र प्रतिष्ठाग्रहणमुत्सर्गोपलक्षणम् । बौधायनः—

"सेतुबन्धनदीखाततडागपुष्करिणीवापीकूपदेवगृहप्रासादवसतीनामोषधिवनस्पतीनां च पूर्तं भवति" इति ।

सेतुबन्धो जलोपरिगमनमार्गः । नदीखातं गोदावर्यादिनदीतीरे स्नानसंध्यादिकर्मार्थमुपवेशनार्थं स्थलं सोपानानि च । नदीत्युपलक्षणं, तेनाश्वत्थादिवृक्षमूलसमन्ताद्भागोऽपि खातशब्देनोच्यते । तडागो द्वाररहितश्चतुर्दिक्षु सोपानवान् । समन्तत आवृता चतुर्दिक्षु द्वारसोपानवती पुष्करिणी क्षुद्रतडागो वा । एकत्रसोपानवत्यनावृता वापी । कूपः प्रसिद्धः । देवगृहं देवालयम्(यः) । प्रासादो नदीतीरादावन्नसत्राद्यर्थोच्चशाला । वसतिः पान्थेभ्यो वासार्थं निर्मितं स्थलम् । ओषधिवनस्पतयः पुष्पवाटिकारामादिकम् । एतेषां पदार्थानामुत्सर्गः पूर्तं पूर्तसंज्ञको भवतीत्यर्थः । एतत्प्रयोगविशेष उत्सर्गरत्नमालायां वक्ष्यते ।

आश्वलायनः—

"वैदिके तान्त्रिके चाऽऽदौ स्वस्तिवाचनमिष्यते" इति ।

प्रयोगपारिजाते स्मृत्यन्तरे—

"गर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि ।
वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम्" इति ।

इष्टान्यग्न्याधानदर्शपूर्णमासादीनि दर्शपूर्णमासस्थालीपाकादीनि च । पूर्तानि प्रतिष्ठादीनि । क्रतवोऽग्निष्टोमादयः । वृद्धिश्राद्धं पुरा कार्यमित्येतस्य वचनस्य यथाश्रुतमर्थमनुसरन्तः पूर्वं वृद्धिश्राद्धं ततः स्वस्तिवाचनमित्येतादृशक्रमेणैव केचिदनुष्ठानमाचरन्ति । अन्ये तु गर्भाधानादीत्यस्मिन्वाक्ये पूर्वं

वृद्धिश्राद्धं ततः स्वस्तिवाचनमित्येतावतैव सिद्धे पुनः कर्मादावित्युक्तिर्वृद्धिश्राद्धसहितकर्मण आदौ स्वस्तिवाचनप्राप्त्यर्था। तेन पूर्वं स्वस्तिवाचनमनन्तरं वृद्धिश्राद्धमित्येवानुष्ठानक्रम इत्याहुः। बौधायनेन सर्वत्र नान्दीश्राद्धस्य संस्कारदिनात्पूर्वेद्युरनुष्ठानमुक्तम्। गृह्यपरिशिष्टे तु—"महत्सु पूर्वेद्युस्तदहरल्पेषु" इत्येवं व्यवस्थोक्ता। महत्स्वनेकदिनसाध्येषु। अल्पेष्वेतद्भिन्नेषु। अन्यान्यपि स्वस्तिवाचननिमित्तानि संग्रह उक्तानि—

"पुण्येऽहनि तु संप्राप्ते विवाहे चौलके तथा।

चौलके चौले। स्वार्थे कप्रत्ययः।

व्रतबन्धे च यज्ञादौ तथा जननकर्मणि।
गृहारम्भे धनप्राप्तौ तीर्थाभिगमने तथा।
गृहप्रवेशने चैव ग्रामस्याभिनिवेशने।
नवग्रहमखे शान्तावद्भुतानां तथैव च।
गजबन्धे तुरंगाणां दासादीनां च संग्रहे।
धर्मकर्मसु सर्वेषु प्रारम्भे स्वस्तिवाचनम्" इति।

वैश्वप्रकाशे—

"उपाकर्मोत्सर्जनयोः श्रौतानां कर्मणां तथा।
प्रथमानुष्ठितावेव स्वस्तिवाचनमिष्यते" इति।

उपाकर्मोत्सर्जनग्रहणं नित्यानां श्रवणाकर्माग्रहायणीस्थालीपाकादीनामुपलक्षणम्। अत्र वर्णानुसारेण विधिविशेषमाह यमः—

"पुण्याहवाचनं सर्वं ब्राह्मणस्य विधीयते।
तदेव च निरोंकारं कुर्यात्क्षत्रियवैश्ययोः" इति॥

सर्वमोंकारसहितम्। निरोंकारमोंकाररहितम्। उच्चैरोंकाररहितमिति केचित्।

संग्रहे—

"शुभे कर्मणि पुण्याहवाचने कलशद्वयम्।
स्थापयेदशुभे त्वेकमिति यज्ञविदो विदुः" इति।

अत्र स्थापयेदितिवचनात्स्थापनविषय एवाशुभसंबन्धिता। तेन शुभकर्मसंबन्धिपुण्याहवाचने बौधायनोक्तरीत्या कलशैकत्वेऽपि न क्षतिः। तत्र स्थापनाभावात्।

पूर्वकर्तव्यतामाह हारीतः—

" गोमयेनोपलिप्योर्वी रङ्गवल्लिकयाऽर्चयेत् ।
प्रस्थधान्यं प्रतिष्ठाप्यं पूर्णं हि कलशद्वयम् ।

प्रतिष्ठाप्यमित्यत्रोपसर्गात्सुनोतीति षत्वम् । पूर्णमुदकपूर्णम् ।

दक्षिणे चोत्तरे चैव उत्तरे तु निधापयेत् ।
ताम्बूलमक्षता द्रव्यं दूर्वाः पुष्पाणि चन्दनम् ।
कुङ्कुमाक्तानि पात्राणि अक्षताः कुङ्कुमान्विताः ।
पुण्यतीर्थोदकं सम्यङ्निधाय कलशं शुभम् ।
सुवर्णफलपुष्पादिद्रव्यं तत्र निधापयेत् ।
पात्रमक्षतपूर्णं च कलशोपरि विन्यसेत् " इति ।

अयमर्थः—यत्र स्वस्तिवाचनं करिष्यन्भवति तत्राऽऽदौ गोमयेन भूमिमुपलिप्य रङ्गवल्लिकया तां भूषयेत् । ततो भूषितभूप्रदेशादुत्तरतः प्रस्थपरिमितं धान्यं स्थापयिष्यमाणकलशद्वयाधःप्रदेशद्वये पुञ्जीकरणार्थं संस्थाप्य तदुत्तरतः शुद्धोदकपूरितं कलशद्वयं स्थापयिष्यमाणकलशद्वयपरिपूरणार्थमुदक्संस्थं निधाय तदुत्तरतः पूजोपयोगिताम्बूलादिद्रव्याणि संस्थापयेत् । ताम्बूलाक्षतादिपात्राणि कुङ्कुमेन रञ्जितानि कार्याणि । एवं कलशद्वयं पूजोपयोग्यक्षताश्च । पुण्यतीर्थजलपूरितं तृतीयं कलशं गणपत्यादिपूजार्थं निधाय सुवर्णफलधूपादिद्रव्याणि तृतीयकलशसमीपे निधाय स्थापयिष्यमाणकलशद्वयाननापिधानार्थं पात्रद्वयं समीपे संस्थाप्य तत्पूरणार्थाक्षतापात्रं कलशोपरि निधाय संकल्पमारभेदिति ।

## प्रस्थपलयोः परिमाणम् ।

प्रस्थपरिमाणं तु स्मृतिसंग्रहे—

" पलं च कुडवः प्रस्थ आढको द्रोण एव च ।
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः " इति ।

पलपरिमाणं भविष्यपुराणे—

" पलद्वयं तु प्रसृतं मुष्टिरेकं पलं स्मृतम् " इति ।

स्कान्दे त्वन्यथोक्तम्—

" पञ्चकृष्णलको माषस्तैश्चतुःषष्टिभिः पलम् " इति ।

कृष्णलो गुञ्जा । तैर्माषैः ।

दक्षिणकलशचालननिषेधः स्मृत्यन्तरे—

" पुण्याहवाचने चैव यः कुर्यात्कलशार्चनम् ।
दक्षिणस्थः स्थिरश्चैव उत्तरस्थश्चरो भवेत् " इति ।

वास्तोष्पत इति धारापातात्प्राक्स्थिरता ।

## कलशधातवः पञ्चरत्नानि च ।

कलशाः पञ्चरत्नानि च विष्णुधर्मोत्तरे—

" हैमराजतताम्रा वा मृन्मया लक्षणान्विताः ।
सुवर्णं रजतं मुक्ता माणिक्यं च प्रवालकम् ।
पञ्चरत्नमिति ख्यातं समस्तसुरवल्लभम् " इति ।

पञ्चरत्नाभावे हेम—

" अभावे सर्वरत्नानां हेम सर्वत्र योजयेत् " इत्यादित्यपुराणात् ।

## पञ्च पल्लवास्त्वचश्च ।

पञ्च पल्लवास्त्वचश्च ब्रह्माण्डपुराणे—

" न्यग्रोधपिप्पलप्लक्षजम्बूचूतनतरूद्भवाः ।
पल्लवाः पञ्च विज्ञेयास्त्वक्चैतेषामपीष्यते " इति ।

न्यग्रोधो वटः । पिप्पलोऽश्वत्थः । प्लक्षः पांयरीति भाषया प्रसिद्धः । जम्बूः प्रसिद्धा । चूत आम्रवृक्षः । एतेषां तरूणाम् । भविष्यपुराणे तु जम्बू-स्थान उदुम्बर उक्तः ।

## सर्वौषधिगणः ।

सर्वौषध्यश्छन्दोगपरिशिष्टे—

" कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् ।
सटीचम्पकमुस्ताश्च सर्वौषधिगणः स्मृतः " इति ।

कुष्ठं कोष्ठमिति भाषया प्रसिद्धम् । मांसी जटामांसी । एका हरिद्रा प्रसिद्धा । द्वितीया दारुहळद इति भाषया प्रसिद्धा । मुरा मोरवेल इति परशुरामक्षेत्रे प्रसिद्धा । शैलेयं शिलारसः । चन्दनं श्वेतचन्दनम् । सटी कचोरः । चम्पकः प्रसिद्धस्तस्य त्वक्¹ । मुस्ता भद्रमोथा ।

---

१ ख. पिपरीति ।

# कर्मदेवतानामानि ।

**कर्मदेवता आह बौधायनः—**

" अथ पुण्याहदेवता व्याख्यास्यामो विवाहस्याग्निरौपासनस्याग्निसूर्यप्रजापतयः स्थालीपाकस्याग्निर्गर्भाधानस्य ब्रह्मा पुंसवनस्य प्रजापतिः सीमन्तस्य धाता विष्णुबलेर्विष्णुर्जातकर्मणो मृत्युर्नामकर्मणः सविता तस्यान्ते प्रजापतिरुपनिष्क्रमणस्य सविता तस्यान्ते चित्रियाण्यन्नप्राशनस्य सविता चौलस्य केशिनस्तस्यान्ते प्रजापतिरुपनयनस्येन्द्रः श्रद्धामेधे अन्ते विसर्गे सुश्रवाः पुनरुपनयनस्याग्निरथ यदि ब्रह्मचार्यव्रत्यमाचरेत्तस्मिन्नपायहोमे सविता समावर्तनस्य श्रीरिन्द्रो वा शूलगवस्येशानः प्रत्यवरोहणस्य सवितोपाकर्मणि व्रतेषु च सविता वास्तुहोमस्य वास्तोष्पतिरन्ते प्रजापतिरहुतहोमस्येन्द्रोऽन्ते प्रजापतिरायुष्यहोमस्याग्निरायुष्मान्नक्षत्रहोमस्य नक्षत्रेष्टिपृक्ताऽष्टमी प्रदोषस्येशान आग्रयणस्याऽऽग्रयणदेवताः सर्पबलेः सर्पा एकोद्दिष्टस्यान्ते प्रजापतिस्तडागादीनां वरुणो यक्षबलेर्यक्षा ग्रहशान्तिहोमस्याऽऽदित्यादिनवग्रहा नागारितन्त्रहोमे ब्रह्मादयः प्रीयन्तामित्येवमेवान्येषां होमानां याज्यानुवाक्ययोर्देवताऽसौ प्रीयतामिति सूतकान्ते प्रथामोदकान्ते प्रजापतिः कूष्माण्डहोमस्याऽऽदित्यादयश्चान्द्रायणस्याग्न्यादयोऽग्न्याधेयस्याग्न्यादयोऽग्निष्टोम इन्द्र एवमनादिष्टकर्मसु प्रजापतिरित्याह भगवान्बौधायनः" इति ।

# पुण्याहवाचनविधिः ।

**पुण्याहवाचनविधिमप्याह स एव—**

" अथातः पुण्याहवाचनं व्याख्यास्यामः शुचौ समे देशे दूर्वादर्भान्धारयमाणाश्चत्वारो ब्राह्मणाः प्रशस्ता अरिक्तहस्ताः प्राङ्मुखास्तिष्ठन्ति तेषां दक्षिणत उदङ्मुखोऽपिहितमुदकुम्भं धारयन्त्वाचयिता तस्य दक्षिणं बाहुमाश्रित्य पत्नयस्तिष्ठन्ति ततः सपवित्रेषु विप्रपाणिषु जलं दद्यादोमाप इति शिवा आपः सन्त्विति ते प्रत्यूचुस्ततो गन्धा इति गन्धं

१ ग. घ. 'स्याग्निः प्रीयतामौपासनस्याग्निसूर्यप्रजापतयः प्रीयन्तां पञ्चमेऽहन्युदुम्बरो दशमेऽहन्यन्ते चित्रियाणि स्था° ।

ददाति सुगन्धाः पान्त्विति प्रतिगृह्णन्ति ततः सुमनस इति पुष्पाणि ददाति सौमनस्यमस्त्विति प्रतिगृह्णन्ति ततोऽक्षता इत्यक्षतान्ददाति ।

अक्षतशब्देन व्रीहिमिश्रास्तण्डुला उच्यन्ते ।

अक्षतं चारिष्टं चास्त्विति प्रतिगृह्णन्ति । ततो दक्षिणा इति दक्षिणां ददाति स्वस्ति दक्षिणाः पान्तु बहुदेयं चास्त्विति प्रतिगृह्णन्ति । ततो वाचयिता दक्षिणं जानु भूमौ निधाय सव्यमुत्थाप्योदङ्मुख इडा देवहूरिति जपित्वोदकुम्भमादायोपोत्तिष्ठति । ततो मनः समाधीयतामिति वदति समाहितमनसः स्म इति विप्राः प्रत्यूचुस्ततो वाचयिता प्रसीदन्तु भवन्त इति वदति प्रसन्नाः स्म इति विप्राः प्रत्यूचुस्ततो वाचयिता शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्त्वविघ्नमस्त्वायुष्यमस्त्वारोग्यमस्तु शिवं कर्मास्त्विति वदति तथाऽस्त्विति विप्राः प्रत्यूचुः कर्म यद्देवत्यं भवति तस्य नाम गृह्णात्यसौ प्रीयतामिति । ततः पुण्याहं भवन्तो ब्रुवन्त्वित्योंपुण्याहमिति विप्राः प्रत्याहुस्ततः स्वस्ति भवन्तो ब्रुवन्त्वित्यों स्वस्तीति विप्राः प्रत्याहुस्तत ऋद्धिं भवन्तो ब्रुवन्त्वित्योमृध्यतामिति विप्राः प्रत्याहुः सर्वाणि त्रिस्त्रिर्वाचयति । ततो विप्रा उपविश्य सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिश्च वाचयितारमभिषिञ्चेयुस्ततो वाचयिता भूर्भुवः सुवरोमिति जपतीत्याह भगवान्बौधायनः " इति ।

प्रशस्ताः श्राद्धभोजनप्रतिग्रहादिरहिताः । सुरभिमती—"दधिक्राव्णो अकारिषम्" इत्यृगेका । अब्लिङ्गाः—आपो हि ष्ठादयः । वारुण्यः—"यच्चिद्धि ते" इत्यादयः । हिरण्यवर्णाः—"हिरण्यवर्णाः शुचयः पावकाः" इत्यादयः । पावमान्यः—"पवमानः सुवर्जनः" इत्यनुवाकोपात्ताः । अन्यत्स्पष्टम् ।

## अथ सकलशिष्टपरिगृहीतः पुण्याहवाचनप्रयोगः ।

सपत्नीकः कर्ता कृतनित्यक्रियः कृतमाङ्गलिकस्नानः स्वलंकृतो बद्धशिखो गोमयेनोपलिप्तायां भूमौ कंचित्प्रदेशं पुण्याहवाचनकलशस्थापनार्थं रङ्गवल्लिकाभूषितं कृत्वा तदुत्तरत उक्तरीत्या सर्वान्संभारान्निधाय रङ्गवल्लिकाभूषितप्रदेशस्य पश्चाद्वस्त्राच्छादिते पीठे प्राङ्मुख उपविश्य पत्नीं स्वस्य दक्षिणतः प्राङ्मुखीमुपवेश्य तद्दक्षिणतो युग्मान्ब्राह्मणानुदङ्मुखान्स्वस्योत्तरतः प्राङ्मुखान्वोपवेशयेत् । पुत्रादिसंस्कारकर्माङ्गपुण्याहवाचनादौ तु पत्नीदक्षिणतः संस्कार्योऽप्युपवेशनीयः । ततः पवित्रपाणिराचम्य प्राणानायम्येष्टदेवतादिनमस्कार-

पूर्वकं सुमुखश्चेत्यादीन्मङ्गलश्लोकान्पठित्वा देशकालौ संकीर्त्यामुकं कर्म करिष्ये। तदङ्गत्वेन पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्य इति संकल्पं कुर्यात्। यदा तु प्रयोगाद्बहिर्भूतं पुण्याहवाचनादि तदाऽमुकं कर्म कर्तुमादौ पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्य इतिसंकल्पपूर्वकं पुण्याहवाचनादि कृत्वा प्रधानसंकल्पं कुर्यात्। वस्तुतस्तु पुण्याहवाचनादीनां संकल्प एतेषां बहिर्भूतत्वकल्प एव नान्तर्भूतत्वकल्प इति युक्तं प्रतिभाति। पुण्याहवाचनादीनां स्वस्वारम्भकाले वा संकल्पः। यथा पुण्याहवाचनारम्भे पुण्याहवाचनं करिष्य इति, मातृकापूजनारम्भे मातृकापूजनं करिष्य इति, नान्दीश्राद्धारम्भे नान्दीश्राद्धं करिष्य इति, मातृकापूजनस्य नान्दीश्राद्धाङ्गत्वं ये स्वी कुर्वन्ति तन्मते तस्य पृथक्संकल्पो न, नान्दीश्राद्धसंकल्पेनैव तत्सिद्धेः। यानि भविष्यदनद्यतनकर्तव्यानि करोति जुहोति यजतीत्येवमादिविहितानि कर्माणि तेषु करिष्ये होष्यामि यक्ष्य इत्यादिशब्दस्थाने कर्ताहे होताहे यष्टाह इत्येवं वा यथायथम्। कर्तृगामिक्रियाफलाभावे तु कर्तास्मि करिष्यामीति प्रयोगः। एवं सर्वत्र। अतीताया रात्रेः पश्चार्धमारभ्याग्रिमरात्रेः पूर्वार्धपर्यन्तं भविष्यदद्यतनं, ततः परं भविष्यदनद्यतनम्। ततस्तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं करिष्य इति संकल्प्य गणानां त्वा विश्वे देवा गणपतिर्जगती, गणपत्यावाहने विनियोगः ॐ गणानां त्वा गण० सीद सादनम्। ऋद्धिसिद्धिसहिताय गणपतये नम ऋद्धिसिद्धिसहितं गणपतिमावाहयामीत्यावाह्य नये प्रजामित्यस्याग्निर्नर्योऽनुष्टुप्, प्रतिष्ठापने विनियोगः। नर्य प्रजां० प्रतिष्ठितामिति प्रतिष्ठाप्याऽऽसनादिदक्षिणादानान्तैरुपचारैः संपूज्य पुष्पाञ्जलिं दत्त्वा

मन्त्रहीनं क्रियाहीनं भक्तिहीनं गजानन।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे।
वक्रतुण्ड महाकाय कोटिसूर्यसमप्रभ।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा।

इति संप्रार्थ्य

विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय विकटाय गजाननाय।
विनायकाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते।

इति नमस्कुर्यात्। विसर्जनं तु कर्मसमाप्त्यन्त इति शिष्टाः। एवं सर्वत्र।

# ततः कलशस्थापनम् ।

मही द्यौरित्यस्य विश्वे देवा भूमिर्गायत्री, भूमिस्पर्शने विनियोगः, ॐ मही द्यौः पृ० भरीमभिः । मन्त्रावृत्त्या दक्षिणत उत्तरतश्च भूमिं स्पृष्ट्वा । ओषधयः समित्यस्याग्निरोषधयोऽनुष्टुप् । स्पृष्टदेशयोरोषधिपुञ्जीकरणे विनियोगः, ॐ ओषधयः सं० पारयामसि । स्पृष्टप्रदेशयोरुपकल्पितप्रस्थधान्यस्य द्वौ पुञ्जौ कृत्वा । आजिघ्रेत्यस्य विश्वे देवा मही शक्करी, कलशस्थापने विनियोगः, ॐ आजिघ्र कलशं० शताद्रयिः । तयोः पुञ्जयोरुपरि द्वावच्छिद्रौ नूतनौ हेमरजतताम्रान्यतमनिर्मितावभावे मृन्मयौ वा सूत्रवेष्टितकण्ठौ कलशौ निधाय । इमं मे गङ्ग इत्यस्य याज्ञिक्यो देवता उपनिषदो गङ्गादिनद्यो जगती, कलशपूरणे विनियोगः, ॐ इमं मे गङ्गे यमुने० सुषोमया । उपकल्पितकलशोदकाभ्यां तौ पूरयित्वा । गन्धद्वारामित्यस्य याज्ञिक्यो देवता उपनिषदः श्रीरनुष्टुप्, गन्धप्रक्षेपणे विनियोगः, ॐ गन्धद्वारां ०श्रियम् । तयोर्गन्धं प्रक्षिप्य । या जाता ओषधय इत्यस्याग्निरोषधयोऽनुष्टुप्, ओषधिप्रक्षेपणे विनियोगः । ॐ या जाता ओष० सप्त च । तयोः सर्वौषधीः प्रक्षिप्य । काण्डात्काण्डादित्यस्याग्निर्याज्ञिक्यो देवता उपनिषदो वौषधयोऽनुष्टुप्, दूर्वाप्रक्षेपणे विनियोगः । ॐ काण्डात्काण्डात्प्ररो० शतेन च । तयोर्दूर्वाः प्रक्षिप्य । अश्वत्थे व इत्यस्याग्निरोषधयोऽनुष्टुप् , पञ्चत्वक्पञ्चपल्लवयोः प्रक्षेपणे विनियोगः । ॐ अश्वत्थे वो० पूरुषम् । तयोः पूर्वोक्ततरूणां त्वचः पल्लवांश्च मन्त्रावृत्त्या प्रक्षिप्य । याः फलिनीरित्यस्याग्निरोषधयोऽनुष्टुप् , फलप्रक्षेपणे विनियोगः । ॐ याः फलिनी० त्वꣳहसः । तयोः फलं प्रक्षिप्य । अग्नेरेतश्चन्द्रमित्यस्याग्निर्हिरण्यं त्रिष्टुप् , हिरण्यप्रक्षेपणे विनियोगः । ॐ अग्नेरेतश्च० तरेयम् । तयोर्हिरण्यं प्रक्षिप्य । बृहस्पते जुषस्व न इत्यस्य विश्वे देवा बृहस्पतिर्गायत्री, पञ्चरत्नप्रक्षेपणे विनियोगः । ॐ बृहस्पते जुष० दाशुषे । तयोः पञ्च रत्नानि प्रक्षिपेत्, अभावे हेम वा । हेमप्रक्षेपेऽप्ययमेव मन्त्रः । युवा सुवासा इत्यस्य विश्वे देवा यूपस्त्रिष्टुप्, कलशवेष्टने विनियोगः । ॐ युवा सुवासाः ० देवयन्तः । वस्त्राभ्यां तौ वेष्टयित्वा । पूर्णा दर्वीत्यस्य विश्वे देवाः शतक्रतुरनुष्टुप्, कलशाननपिधाने विनियोगः । ॐ पूर्णा दर्वि ० शतक्रतो । उपकल्पितकलशोपरि नूतनपात्रस्थतण्डुलैरुपकल्पिते पात्रे पूरयित्वा सतण्डुलाभ्यां पात्राभ्यां कलशयोरानने अपिदध्यात् । सर्वत्र प्रतिकलशं मन्त्रावृत्तिरुत्तरसंस्थता च ज्ञेया । ततस्तत्त्वा यामीत्यस्य विश्वे देवा वरुणस्त्रिष्टुप् , वरुणावाहने विनियोगः । ॐ तत्त्वा यामि ब्रह्मणा० प्रमोषीः । उत्तरकलशे वरुणमावाह्य नयं प्रजामिति प्रतिष्ठाप्य पूजयेत् ।

" कलशद्वयेऽपि वरुणावाहनमिति केचित् " इति प्रयोगदर्पणे । ततस्तत्रैव देवता आवाहयेत् । " कलशस्य मुखे विष्णुः० सर्वे समुद्राः० दुरितक्षयकारकाः । इत्यावाह्य संपूज्याक्षतानुत्तरकलशे प्रक्षिपेत् " मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव " इति ।

कलशद्वयेऽपि वरुणावाहनपक्षे कलशस्य मुखे विष्णुरित्येतस्याऽऽवृत्तिः । ततोऽवानिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं धारयित्वाऽऽशिषः प्रार्थयेत् । एताः सत्या आशिषः सन्तु । दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च । तेनाऽऽयुष्प्रमाणेन पुण्याहं दीर्घमायुरस्तु, इति । विप्राः सन्त्वस्त्विति यथायोग्यं प्रत्युत्तरं दद्युः ।

ततः कर्ता शिवा आपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । गन्धाः पान्तु, सौमङ्गल्यं चास्तु, अक्षताः पान्तु । आयुष्यमस्तु । पुष्पाणि पान्तु, +सौश्रियमस्तु । ताम्बूलानि पान्तु, ऐश्वर्यमस्तु । दक्षिणाः पान्तु, बहुदेयं चास्तु । दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु । श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं चाऽऽयुष्यं चास्तु । इति वाक्यानि पठेत् । तत्राऽऽद्य-वाक्यत्रयान्त उदकं विप्रहस्तेषु दत्त्वा द्वयोर्द्वयोर्वाक्ययोरन्ते तत्तल्लिङ्गानुसारेण तं तमुपचारं दत्त्वा दीर्घमायुरिति वाक्यद्वयेन विप्रान्प्रार्थयेदिति संप्रदायः । विप्राः पान्त्वस्त्विति यथायोग्यं प्रत्युत्तरं दद्युः । अथवा शिवा आपः सन्तु । गन्धाः पान्तु । अक्षताः पान्तु । पुष्पाणि पान्तु । ताम्बूलानि पान्तु । दक्षिणाः पान्त्वित्येतैर्वाक्यैरुदकगन्धव्रीहिमिश्राक्षतपुष्पतांबूलदक्षिणाभिः क्रमेण विप्रान्पूजयेत् । व्रीह्यभावे केवला वाऽक्षताः । ततो विप्रा अवशिष्टानि वाक्यानि तत्त-दनन्तरं क्रमेण प्रतिब्रूयुः ।

ततः कर्ता यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोंकारमादिं कृत्वा, ऋग्यजुःसामाशीर्वचनं बहृषिमतं संविज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्य इति वदेत् । वाच्यतामिति विप्राः ।

ततः कर्ता—"भद्रं कर्णेभिः० यदायुः । द्रविणोदा० दीर्घमायुः । सविता पश्चा० दीर्घमायुः । नवो नवो भवति० दीर्घमायुः । उच्चा दिवि० प्रतिरन्त आयुः ।

+ सौरूप्यमिति क. पुस्तके बहिर्लिखितपाठः ।

१ क. ख. 'गन्धाक्ष' । २ क. ख. 'तु । वि' । ३ ग. अविशि' ।

आप उन्दन्तु० वर्चसे । यस्त्वा हृदा० अमृतत्वमश्याम् । यस्मै त्वᳲ सुकृते० शते स्वस्ति । सन्त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च । इति मन्त्रानुक्त्वा व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां ब्राह्मणानां मनः समाधीयतामिति विप्रान्प्रार्थयेत् । विप्राः समाहितमनसः स्म इति । कर्ता प्रसीदन्तु भवन्त इति वदेत् । विप्राः प्रसन्नाः स्म इति ।

ततः कर्ता—शान्तिरस्तु १ पुष्टिरस्तु २ तुष्टिरस्तु ३ वृद्धिरस्तु ४ अविघ्नमस्तु ५ आयुष्यमस्तु ६ आरोग्यमस्तु ७ शिवं कर्मास्तु ८ कर्मसमृद्धिरस्तु ९ धर्मसमृद्धिरस्तु १० वेदसमृद्धिरस्तु ११ शास्त्रसमृद्धिरस्तु १२ पुत्रसमृद्धिरस्तु १३ धनधान्यसमृद्धिरस्तु १४ इष्टसंपदस्तु १५ अरिष्टनिरसनमस्तु १६ यत्पापं तत्प्रतिहतमस्तु १७ यच्छ्रेयस्तदस्तु १८ उत्तरे कर्मण्यविघ्नमस्तु १९ उत्तरोत्तरमहरहरभिवृद्धिरस्तु २० उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यन्ताम् २ तिथिकरणमुहूर्तनक्षत्रसंपदस्तु २२ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् २३ तिथिकरणे मुहूर्तनक्षत्रे सग्रहे सदैवते प्रीयेताम् २४ दुर्गापाञ्चाल्यौ प्रीयेताम् २५ अग्निपुरोगा विश्वे देवाः प्रीयन्ताम् २६ इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् २७ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् २८ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् २९ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् ३० वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् ३१ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् ३२ ऋषयश्छदांस्याचार्या देवा वेदा यज्ञाश्च प्रीयन्ताम् ३३ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् ६४ श्रीसरस्वत्यौ प्रीयेताम् ३५ श्रद्धामेधे प्रीयेताम् ३६ भगवती कात्यायनी प्रीयताम् ३७ भगवती माहेश्वरी प्रीयताम् ३८ भगवती पुष्टिकरी प्रीयताम् ३९ भगवती तुष्टिकरी प्रीयताम् ४० भगवती ऋद्धिकरी प्रीयताम् ४१ भगवती वृद्धिकरी प्रीयताम् ४२ भगवन्तौ विघ्नविनायकौ प्रीयेताम् ४३ भगवान्स्वामी महादेवो महासेनः सपत्नीकः ससुतः सपार्षदः सर्वस्थानगतः प्रीयताम् ४४ हरिहरहिरण्यगर्भाः प्रीयन्ताम् ४५ सर्वा ग्रामदेवताः प्रीयन्ताम् ४६ सर्वाः कुलदेवताः प्रीयन्ताम् ४७ सर्वा इष्टदेवताः प्रीयन्ताम् ४८ हता ब्रह्मद्विषः ४९ हताः परिपन्थिनः ५० हता अस्य कर्मणो विघ्नकर्तारः ५१ शत्रवः पराभवं यान्तु ५२ शाम्यन्तु घोराणि ५३ शाम्यन्तु पापानि ५४ शाम्यन्त्वीतयः ५५ शुभानि वर्धन्ताम् ५६ शिवा आपः सन्तु ५७ शिवा ऋतवः सन्तु ५८ शिवा अग्नयः सन्तु ५९ शिवा आहुतयः सन्तु ६० शिवा ओषधयः सन्तु ६१ शिवा वनस्पतयः सन्तु ६२ शिवा अतिथयः सन्तु ६३

अहोरात्रे शिवे स्याताम् ६४ निकामे निकामे नः पर्जन्यो वर्षतु ६५ फलिन्यो न ओषधयः पच्यन्ताम् ६६ योगक्षेमो नः कल्पताम् ६७ आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ६८ भगवान्नारायणः प्रीयताम् ६९ भगवान्पर्जन्यः प्रीयताम् ७० भगवान्स्वामी महासेनः प्रीयताम् ७१ इत्येकसप्ततिवाक्यानि पठेत् ।

एतानि वाक्यानि पठन्प्रतिवाक्यं पात्रे जलं पातयेत् । तत्रारिष्टनिरसनमस्तु यत्पापं तत्प्रतिहतमस्त्विति द्वाभ्यां वाक्याभ्यां हता ब्रह्मद्विष इत्यादिभिः सप्तभिर्वाक्यैश्च पात्राद्बहिरुत्तरतो जलं पातनीयमिति संप्रदायः । विप्रा अस्तु संपद्यन्तां प्रीयन्तां प्रीयेतां प्रीयतां हता यान्तु शाम्यन्तु वर्धन्तां सन्तु स्यातां वर्षतु पच्यन्तां कल्पतामिति कर्तृवाक्यानुरोधेन प्रतिवचनानि दद्युः ।

ततः कर्ता—पुण्याहकालान्वाचयिष्य इति वदेत् । वाच्यतामिति विप्राः । ततः कर्ता—उद्गातेव शकुने० पुण्यमावद । याज्यया यजति प्रत्तिर्वै याज्या पुण्यैव लक्ष्मीः पुण्यामेव तल्लक्ष्मीं संभावयति पुण्यां लक्ष्मीं संस्कुरुते । यत्पुण्यं नक्षत्रं० तावति कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते । तानि वा एतानि यमनक्षत्राणि । यान्येव देवनक्ष० कुरुते ।

मह्यं सकुटुम्बाय महाजनान्नमस्कुर्वाणायाऽऽशीर्वचनमपेक्षमाणायामुककर्मणः पुण्याहं भवन्तो ब्रुवन्त्विति त्रिर्वदेत् । ॐ पुण्याहमिति त्रिर्विप्राः । स्वस्तये वायु० भवन्तु नः । आदित्य उदयनीयः पथ्ययैवेतः स्वस्त्या प्रयन्ति पथ्यां स्वस्तिमभ्युद्यन्ति स्वस्त्येवेतः प्रयन्ति स्वस्त्युद्यन्ति स्वस्त्युद्यन्ति । स्वस्ति न इन्द्रो वृद्धश्र० दधातु । अष्टौ देवा वसवः० स्वग्नि ।

मह्यं सकुटुम्बाय महाजनान्नमस्कुर्वाणायाऽऽशीर्वचनमपेक्षमाणायामुककर्मणः स्वस्ति भवन्तो ब्रुवन्तु । इति त्रिः कर्ता वदेत् । ॐ स्वस्तीति त्रिर्विप्राः । ऋध्याम स्तोमं० कामप्राः । सर्वामृद्धिमृध्नुयामिति० य एवं वेद । ऋध्यास्म हव्यै० सवीराः । त्रीणि त्रीणि वै० प्रतितिष्ठति ।

मह्यं सकुटुम्बाय महाजनान्नमस्कुर्वाणायाऽऽशीर्वचनमपेक्षमाणायामुककर्मण ऋद्धिं भवन्तो ब्रुवन्त्विति त्रिः कर्ता वदेत् । ॐ ऋध्यतामिति त्रिर्विप्राः । श्रिये जातः श्रिय आ० मितद्रौ । श्रिय एवैनं ० पशुभिर्य एवं वेद । यस्मिन्ब्रह्माऽभ्यजयत्सर्वमेतत् । अमुं च० ह्वणीयमानम् । अहे बुध्निय मन्त्रं मे गोपाय । यमृष० मृतासताम् ।

मह्यं सकुटुम्बाय महाजनान्नमस्कुर्वाणायाऽऽशीर्वचनमपेक्षमाणायामुककर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्त्विति त्रिः कर्ता वदेत्। ॐ अस्तु श्रीरिति त्रिर्विप्राः।

अत्र सुवासिनीभिर्नीराजनं कारयेयुराचारात्। ततः कर्ता वर्षशतं पूर्णमस्तु। मङ्गलानि भवन्तु। शिवं कर्मास्तु। गोत्राभिवृद्धिरस्त्विति वाक्यान्युक्त्वा विप्रैर्यथायोग्यं प्रतिवचनेपूक्तेषु बौधायनोक्ततत्तत्कर्मदेवतानाम प्रथमया विभक्त्या संकीर्त्य प्रीयतां प्रीयेतां प्रीयन्तामिति देवतैकत्वाद्यनुसारेणोक्त्वा पात्रे जलं क्षिपेत्। अनादेशे देवतासंदेहे च प्रजापतिर्देवता ज्ञेया।

ततः—शुक्रैभिरङ्गैरज आततन्वा० बृहतीरनूनाः। तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे। आविक्षितस्य कामप्रेर्विश्वे देवाः सभासद इति पठित्वोत्तरकलशं दक्षिणहस्ते दक्षिणकलशं वामहस्ते गृहीत्वा ताभ्यां धाराद्वयं संततं पात्रे निषिञ्चेत्। तत्र मन्त्राः— वास्तोष्पते प्रति० चतुष्पदे। वास्तोष्पते प्रतर० जुषस्व। वास्तोष्पते शग्मया० सदा नः। अमीवहा० एधि न इति। ततः शिवमिति त्रिर्वदेत्। आधारे धारायां चाऽऽदिसंयोग इत्यापस्तम्बोक्तेर्मन्त्रारम्भसमकालं कर्मारम्भः।

ततो विप्राः कर्तुर्वामतः पत्नीमुपवेश्य पात्रे पातितेन जलेन पल्लवदूर्वाभिरुदङ्मुखास्तिष्ठन्त उपविष्टा वा सपत्नीकं कर्तारमभिषिञ्चेयुः।

तत्र मन्त्राः—समुद्रज्येष्ठाः सलि० ४। त्रायन्तामिह० शामसि। इमा आपः शिवत० भद्रा जनित्र्यजीजनत्। देवस्य त्वा० स्ताभ्यामग्नेस्तेजसा० सेन्नाद्याय। देवस्य त्वा० भ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामि। देवस्य त्वा० भ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणेन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामि। देवस्य त्वा० भ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेण बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामि। देवस्य त्वा० सवितुः प्रसवे। अश्विनो० हस्ताभ्याम्। अश्विनोर्भैषज्येन तेज० चामि। देवस्य त्वा सवितुः प्रसवे० अश्वि० स्ताभ्यां सरस्वत्यै भैष० चामि। देवस्यत्वा सवितुः प्रसवे। अश्वि० भ्याम्। इन्द्रस्येन्द्रिये० भिषिञ्चामि। सुरास्त्वा० सर्वकामार्थसिद्धये। ॐ भूर्भुवः सुवः। तच्छंयोरा० चतुष्पदे। इत्यभिषिच्यामृताभिषेकोऽस्त्विति वदेयुः। तथाऽस्त्विति कर्ता प्रतिब्रूयात्। ततो द्विवारमाचमनं कुर्यात्। पत्नी दक्षिणतः सकृदाचम्योपविशेत्। ततः सुवासिन्यो नीराजनाशीःप्रयोगनूतनवस्त्रदानादि कुर्युराचारात्। पत्या वस्त्रे स्वीक्रियमाणे पत्नी वामतो भवेत्, इति वृद्धाः।

इति शिष्टपरिगृहीतः पुण्याहवाचनप्रयोगः।

# नान्दीश्राद्धविधिः ।

अथाऽऽभ्युदयिकश्राद्धम् । तच्च गर्भाधानादिगर्भसंस्कारेषु जातकर्माद्यपत्य-संस्कारेषु श्रवणाकर्मादिषु वापीकूपतडागारामाद्युत्सर्गादिषु देवप्रतिष्ठायां व्रतोद्यापने वानप्रस्थाद्याश्रमस्वीकारे तुलापुरुषादिमहादानादौ नूतनगृहप्रवेशे काण्डव्रतेषु राजाभिषेके शान्तिकपौष्टिकेषु अग्न्याधानादिश्रौतकर्मणामुपाकर्मोत्सर्जनयोः पार्वणस्थालीपाकश्रवणाकर्मादीनां च प्रथमे प्रयोग उत्सवादौ च कार्यम् । व्रतोद्यापने दुष्टग्रहपीडादिनिवृत्त्यर्थशान्त्यादौ च नान्दीश्राद्धं न कार्यम् । शाकलकारिकासु निषेधस्योक्तत्वादिति केचित् । बहुस्मृतिप्रामाणिक-ग्रन्थविरुद्धत्वान्नाऽऽदर्तव्यमेतदित्यन्ये । एतच्छ्राद्धं मातृकापूजनं चैकस्यानेक-संस्कारेष्वेककर्तृकेषु युगपदुपस्थितेषु सर्वादौ सकृदेव कार्यं न तु प्रतिसंस्कार-मावृत्तिः । यथा दैवादकृतजातकर्मादिकस्योपनयनकाले जातकर्माद्यनुष्ठाने देशान्तरगतस्य मृतबुद्ध्या कृतौर्ध्वदेहिकस्याऽऽगतस्य पुनर्जातकर्मादिसंस्काराणां विहितानां युगपदनुष्ठाने कर्मनाशाजलस्पृष्टादीनां प्रायश्चित्तार्थत्वेन विहितानां पुनःसंस्काराणां युगपदनुष्ठाने वा ।

तथा च ब्रह्मपुराणम्—

"गणशः क्रियमाणानां मातृणां पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु" इति ॥

( *बह्वपत्यानां युगपत्संस्कारकरणविषयमिदं वचनमिति बोपदेव आह । ) मातृणां पूजनं सकृदितिपृथग्वचनादेवं ज्ञायते मातृपूजनं नान्दीश्राद्धस्यानङ्गमेव भवतीति । अतोऽस्मिन्कल्पे मातृकापूजनस्य पृथगेव संकल्पः ।

"यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः"

इति पुराणान्तरवचनेनाङ्गत्वम् । अस्मिन्कल्पे न पृथक्संकल्पः ।

अथैतत्कालः । कर्मारम्भाव्यवहितपूर्वतनदिने मातृपार्वणं कर्मारम्भ-दिने पितृपार्वणं कर्मसमाप्त्युत्तरदिने मातामहपार्वणम् । एवं कर्तुमशक्तौ कर्मारम्भाव्यवहितपूर्वतनदिनत्रये क्रमेण पार्वणत्रयं कार्यम् । प्रथमदिने मातृ-पार्वणं द्वितीयदिने पितृपार्वणं तृतीयदिने मातामहपार्वणमिति । एवं कर्तुम-शक्तौ कर्मारम्भदिनात्पूर्वस्मिन्नहन्येव पूर्वाह्णे मातृपार्वणं मध्याह्ने पितृपार्वण-

* धनुश्चिह्नान्तर्गतस्थाने ग. घ. पुस्तकयोः "स्मृत्यन्तरे—यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातर इति" एव वर्तते ।

१ ग. घ. यत्रत्यत्र ।

मपराह्णे मातामहपार्वणमिति। अत्राप्यशक्तौ पूर्वस्मिन्नहनि पूर्वाह्ण एव पार्वणत्रयं तन्त्रेण कार्यं, तदारम्भदिन एव वा। पुत्रजन्मनि तु भुक्तवताऽपि पुत्रजन्मानन्तरमेव रात्रावपि कार्यम्। यज्ञादौ क्रियमाणे नान्दीश्राद्धेऽमूला दर्भा हस्तयोर्धारणीयाः। विवाहादिमङ्गलकर्मादौ क्रियमाणे दर्भस्थाने दूर्वा एव। अग्न्याधानसोमयागादौ क्रियमाणे नान्दीश्राद्धे दक्षक्रतू, अन्यत्र सत्यवसू इति केचित्। गर्भाधानपुंसवनसीमन्तेष्वपि दक्षक्रतू इत्यन्ये। गर्भाधानपुंसवनसीमन्तसोमेष्वेव दक्षक्रतू नान्यत्रेत्यपरे।

## नान्दीश्राद्धाधिकारिणः।

अथाधिकारिणः। प्रथमविवाहान्तेषु सुतसंस्कारेषु पिता वृद्धिश्राद्धं कुर्यात्। द्वितीयादिविवाहे तु वर एव कुर्यात्। प्रथमविवाहे यदि पित्रादीनां सर्वेषां वक्ष्यमाणानामधिकारिणामभावस्तदाऽपि स्वयमेव। प्रवासादिना पितुरभावेन ज्येष्ठभ्राता कुर्वन्स्वपितुः पितृभ्यो दद्यात्। यदि तु पिता न जीवति पितामहस्तु प्रवासस्थितस्तदा पितृप्रपितामहवृद्धप्रपितामहानुद्दिश्य पार्वणं कुर्यात्। एवं मातृमातामहपार्वणयोरपि द्रष्टव्यम्। सर्वेषां जीवने नान्दीश्राद्धलोप एव। नित्यवन्नान्दीश्राद्धविधिनैव नैव कुर्यादितिलोपशास्त्रमहकृतेन तत्प्रापणात्। सर्वेषां यथोक्ताधिकारिणामभावेन यदि माता पुत्र्या विवाहं कुर्यात्तदा स्वयं संकल्पमात्रं कृत्वा स्वस्तिवाचननान्दीश्राद्धादिकं सर्वं ब्राह्मणद्वारा कारयेदिति प्रयोगपारिजाते। समावर्तने नान्दीश्राद्धं पितैव कुर्यात्। प्रवासादिना पितुरभावे स्वयमेव कुर्यादिति केचित्। अत्र पितरि विद्यमानेऽपि स्वयमेव कुर्यादित्यन्ये। सुतसंस्कारेषु अजीवन्मातृपितृमातामहः पिता स्वमात्राद्युद्देश्यकं पार्वणत्रयं कुर्यात्। मातरि जीवन्त्यां तत्पार्वणलोपः। मातामहे जीवति तत्पार्वणस्य। तदा पार्वणद्वयेनैव नान्दीश्राद्धसिद्धिः। मातृमातामहजीवने पितृपार्वणेनैव नान्दीश्राद्धसिद्धिः। पितृमातृजीवने मातामहपार्वणेनैव। पितृमातामहजीवने देवरहितेन मातृपार्वणेनैव। जीवत्प्रपितामहः पितृपितामहवृद्धप्रपितामहानुद्दिश्य पितृपार्वणं कुर्यात्। जीवत्पितामहप्रपितामहः पितृवृद्धप्रपितामहातिवृद्धप्रपितामहानुद्दिश्य पितृपार्वणं कुर्यात्। एवं मातृमातामहपार्वणयोरपि द्रष्टव्यम्। सापत्नमातरि मृतायां तया सहैव मातृपार्वणं कार्यम्। सपत्न्योः पितामहीप्रपितामह्योरपि स्वपितामहीप्रपितामहीभ्यां सह स्वमातरि जीवन्त्यामपि सापत्नमात्रा मातृपार्वणनिर्वाह इति केचित्।

तन्न। तस्या एकोद्दिष्टदेवतात्वेन पार्वणेऽनुप्रवेशाभावात्। आपरपक्षिकान्वष्टक्यादिश्राद्धवत्प्रापकवचनाभावाच्च। मातामहपार्वणे मुख्यमातामह्यादिषु जीवन्तीषु तत्सपत्नीभिः सपत्नीकत्वगुणोपपत्तिर्द्रष्टव्येति केचित्। वर्गत्रयाद्यानां जीवने सुतसंस्कारेषु नान्दीश्राद्धलोप एव। एवं स्वस्य द्वितीयादिविवाहाङ्गत्वेन नान्दीश्राद्धं कुर्वञ्जीवत्पितृकस्तु पितुः पित्रादीनुद्दिश्य पार्वणं कुर्यात्। जीवत्पितृपितामहस्तु पितामहस्य पित्रादीनुद्दिश्य पार्वणं कुर्यात्। अत्र पितुरित्यस्य स्थाने पितामहस्य निर्देशः। एवं मातृमातामहपार्वणयोरपि। एवमेव जातकर्मनिमित्तके पुरुषार्थे नान्दीश्राद्धे जातकर्माङ्गभूतद्वितीयनान्दीश्राद्धपुत्रप्रथमविवाहाङ्गभूतनान्दीश्राद्धे तु सुतसंस्काराङ्गकनान्दीश्राद्धवदेव कार्यं इत्येकं मतम्। सुतसंस्कारेष्वित्युद्वाहपुत्रजननव्यतिरिक्तसुतसंस्कारपरम्। एवं च प्रथमविवाहपुत्रजननयोरपि येभ्य एव पिता दद्यादितिशास्त्रानुरोधेनैव नान्दीश्राद्धं भवतीत्यपरं मतम्। जीवत्पितृकः सुतसंस्कारव्यतिरिक्तकर्मसु येभ्य एवेतिशास्त्रात्पितुः पितामहादीनुद्दिश्य स्वमातृमातामहयोरजीवतोस्तदुद्देशेन पार्वणद्वयं च कुर्यादिति केचिद्वदन्ति। तन्न। परस्परविरुद्धस्य येभ्य एवेतिशास्त्रस्य गृह्यपरिशिष्टस्य चैकत्र प्रवृत्त्ययोगात्। यदा तु पितृव्यमातुलादयः कन्याविवाहं कुमारस्योपनयनमुपनीतस्य प्रथमविवाहं वा कुर्युस्तदा संस्कार्यस्याजीवत्पितृमातृमातामहकत्वे तत्पित्रादीनुद्दिश्य पार्वणत्रयं कुर्युः। सोदरज्येष्ठभ्रातुः प्रयोगे विशेषो नास्ति, तदीयपित्रादीनां संस्कार्यपित्रादिभिरभेदात्। सापत्नज्येष्ठस्तु संस्कार्यस्य मात्रादीनुद्दिश्य मातृपार्वणं कुर्यादिति केचित्। मातृपार्वणलोप एवात्रेत्यन्ये। पितृव्यादिस्तु सर्वेषु पार्वणेषु संस्कार्यस्येति सविशेषणप्रयोगं कुर्यात्। संस्कार्यस्य जीवत्पितृमातृमातामहकत्वे तस्य पितुः पित्रादीनुद्दिश्य पार्वणत्रयं कुर्यात्। एवं प्रथमविवाहेऽपि कर्त्रन्तराभाववशेन वर एव नान्दीश्राद्धं कुर्वञ्जीवत्पितृकः पितुः पित्रादीनुद्दिश्य पार्वणं कुर्यात्। एवं मातृमातामहपार्वणयोरपीति केचित्। अन्ये त्वस्मिन्विषये तत्तद्वर्गाद्यजीवने तत्तत्पार्वणलोप एवेति वदन्ति।

"आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम्।
धर्म्येण विधिना दातुमसगोत्रोऽपि युज्यते" इति स्कान्दात्।
"अनाथां कन्यकां दत्त्वा सदृशे नाऽधिके वरे।
द्विगुणं फलमाप्नोति कन्यादाने यदीरितम्"॥

इति विष्णुधर्मोत्तरवचनाद्वा केनापि हेतुना कन्यां दातुमशक्नुवता दानाधिकारिणा त्वं कन्यादानं कुर्विति प्रार्थनाद्वा यः परकन्यां दातुमिच्छति सोऽपि संस्कार्यकन्यायाः पित्रादीनुद्दिश्य तस्या जीवत्पितृकत्वे तदीयमात्राद्युद्देश्यकपार्वणानुष्ठानं यथासंभवं कुर्यात्। दत्तकपुत्रस्तु यदि लब्धबीजिरिक्थस्तदोभौ पितरौ पितामहौ प्रपितामहौ चोद्दिश्य कुर्यात्। एवमितरयोः पार्वणयोर्बोध्यम्। यदि तु बीजिरिक्थग्रहणेऽधिकारान्तरसंभवात्

"गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः"

इति शास्त्रादलब्धतद्रिक्थस्तदा प्रतिग्रहीतृकुलसंबद्धपित्राद्युद्देश्यकमेव कुर्यात्।

## मातृकापूजनप्रयोगः।

अथ प्रयोगः। कर्ता पुण्याहवाचनसंकल्पकाले यदि मातृकापूजनसंकल्पो न कृतस्तदाऽमुककर्माङ्गभूतं मातृकापूजनं करिष्य इति संकल्पं कृत्वा मातृपितामहीप्रपितामहीमातामहीमातुःपितामहीमातुःप्रपितामहीपितृष्वसृमातृष्वसॄणां मध्ये यावत्यो जीवन्ति तावतीः कुङ्कुमादिभिर्यथायोग्यं संपूज्य गोमयेनोपलिप्ते रङ्गवल्ल्याद्यलंकृते देशे कृताग्न्युत्तारणप्राणप्रतिष्ठासु संस्थापितासु प्रतिमासु अभावे पटादौ लिखितास्वक्षतपुञ्जेषु वा गौर्यादिदेवता आवाहयेत्।
तद्यथा—गौर्यै नमो गौरीमावाहयामि। पद्मायै नमः पद्मामावाहयामि। शच्यै नमः शचीमावाहयामि। मेधायै नमो मेधामावाहयामि। सावित्र्यै नमः सावित्रीमावाहयामि। विजयायै नमो विजयामावाहयामि। जयायै नमो जयामावाहयामि। देवसेनायै नमो देवसेनामावाहयामि। स्वधायै नमः स्वधामावाहयामि। स्वाहायै नमः स्वाहामावाहयामि। मातृभ्यो नमो मातॄरावाहयामि। लोकमातृभ्यो नमो लोकमातॄरावाहयामि। धृत्यै नमो धृतिमावाहयामि। पुष्ट्यै नमः पुष्टिमावाहयामि। तुष्ट्यै नमस्तुष्टिमावाहयामि। अमुकनाम्न्यै कुलदेवतायै नमोऽमुकनाम्नीं कुलदेवतामावाहयामि। ब्राह्म्यै नमो ब्राह्मीमावाहयामि। माहेश्वर्यै नमो माहेश्वरीमावाहयामि। कौमार्यै नमः कौमारीमावाहयामि। वैष्णव्यै नमो वैष्णवीमावाहयामि। वाराह्यै नमो वाराहीमावाहयामि। इन्द्राण्यै नम इन्द्राणीमावाहयामि। चामुण्डायै नमश्चामुण्डामावाहयामि। गणाधिपाय नमो गणाधिपमावाहयामि। दुर्गायै नमो दुर्गामावाहयामि। क्षेत्रपालाय नमः क्षेत्रपालमावाहयामि। वास्तोष्पतये नमो वास्तोष्पतिमावाहयामि। इत्यावाहयेत्।

गौर्याः पूर्वं वा गणाधिपावाहनम्। ततस्तत्तन्नाममन्त्रैः काण्डानुसमयेन पदार्थानुसमयेन वा षोडशोपचारैः पूजयेत्। गौर्याद्यावाहितदेवताभ्यो नम इति समुदितरूपेण वा पूजनम्। गौर्याः पूर्वं गणाधिपावाहनपक्षे गणाधिपाद्यावाहितदेवताभ्यो नम इति प्रयोगः। नान्दीश्राद्धस्य पार्थक्येन संकल्पकरणे मातृकापूजनोत्तरं पाकान्तरेण वैश्वदेवं कृत्वा तत्कर्तव्यम्। पुण्याहवाचनसंकल्पेन सहैतत्संकल्पे तु पुण्याहवाचनात्पूर्वं वैश्वदेवः पाकान्तरेणैव कार्यः। वस्तुतस्तु पार्थक्येनैव संकल्पो युक्तः।

## नान्दीश्राद्धप्रयोगः।

कर्ता सदूर्वाङ्कुरं साक्षतं जलमादाय—सत्यवसुसंज्ञका विश्वे देवा नान्दीमुखा भूर्भुवः सुवरिदं वः पाद्यं स्वाहा न ममेयं च वृद्धिरिति पात्रे क्षिपेत्। एवमग्रेऽपि। मातृपितामहीप्रपितामह्यो नान्दीमुखा भूर्भुवः सुवरिदं वः पाद्यं स्वाहा न ममेयं च वृद्धिः। नान्दीमुख्य इति केचित्। पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः सुवरिदं वः पाद्यं स्वाहा न ममेयं च वृद्धिः। मातामहमातुःपितामहमातुःप्रपितामहाः पत्नीसहिता नान्दीमुखा भूर्भुवः सुवरिदं वः पाद्यं स्वाहा न ममेयं च वृद्धिः।

ततः सदूर्वाङ्कुरं साक्षतगन्धपुष्पजलमादाय— सत्यवसुसंज्ञका विश्वे देवा नान्दीमुखा भूर्भुवः सुवरिदं व आसनगन्धाद्युपचारकल्पनं स्वाहा न ममेयं च वृद्धिरिति पात्रे क्षिपेत्। एवमग्रेऽपि। मातृपितामहीप्रपितामह्यो नान्दीमुखा भूर्भुवः सुवरिदं व आसनगन्धाद्युपचारकल्पनं स्वाहा न ममेयं च वृद्धिः। पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः सुवरिदं व आसनगन्धाद्युपचारकल्पनं स्वाहा न ममेयं च वृद्धिः। मातामहमातुःपितामहमातुःप्रपितामहाः पत्नीसहिता नान्दीमुखा भूर्भुवः सुवरिदं व आसनगन्धाद्युपचारकल्पनं स्वाहा न ममेयं च वृद्धिः।

ततो गौर्यादिषोडशमातरो ब्राह्म्यादिसप्तमातरो गणाधिपदुर्गाक्षेत्रपालवास्तोष्पतयश्च भूर्भुवः सुवरिदं वो युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतं चतुर्गुणं द्विगुणं समं वा हिरण्यममृतरूपेण स्वाहा न ममेयं च वृद्धिः। इति विभवानुसारेण दद्यात्। गौर्याः पूर्वं गणाधिपपूजनमिति पक्षे गणाधिपगौर्यादिषोडशमातरो ब्राह्म्यादिसप्तमातरो दुर्गाक्षेत्रपालवास्तोष्पतयश्च भूर्भुवः सुवरित्यादिप्रयोगो ज्ञेयः।

---

१ क. °म्। अस्मिन्कल्पे कुलदेवतान्ता एव देवता पूज्या इति युक्तम्। त°।

ततः— सत्यवसुसंज्ञका विश्वे देवा नान्दीमुखा भूर्भुवः सुवरिदं वो युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयीभूतं चतुर्गु०। मातृपितामहीप्रपितामह्यो नान्दीमुखा भूर्भुवः सुवरिदं वो युग्मब्रा०। पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः सुवरिदं वो युग्मब्राह्म०। मातामहमातुःपितामहमातुःप्रपितामहाः पत्नीसहिता नान्दीमुखा भूर्भुवः सुवरिदं वो युग्म०। इति क्रमेण दद्यात्।

ततः— उपास्मै गायता नरः० वता मधु ९। अक्षन्नमी० हरी, इति श्रावयित्वा कृतस्य नान्दीश्राद्धस्य संपूर्णतासिद्ध्ये प्रतिविप्रं कुडवपरिमितान्प्रस्थपरिमितान्वा यथासंभवं वा द्राक्षामलकमूल्यवांस्तन्निष्क्रयीभूतं द्रव्यं वा दक्षिणां दत्त्वा प्रजापते न त्वदेता० रयीणामिति पठित्वा कुलदेवतां नमस्कृत्य

माता पितामही चैव तथैव प्रपितामही।
पिता पितामहश्चैव तथैव प्रपितामहः॥
मातामहस्तत्पिता च प्रमातामहकादयः।
एते भवन्तु सुप्रीताः प्रयच्छन्तु च मङ्गलम्॥

इति श्लोकद्वयं पठेत्। (*अत्राऽऽदिशब्देन गुणत्वेन प्रविष्टा मातामह्यादयो ग्राह्याः। मातामहीसत्त्वे प्रमातामहकस्तथेत्येवं पठेत्। नतु प्रमातामहकादय इति।) तत्तत्पार्वणाद्यजीवनवशेन यस्य कस्यचित्पार्वणस्य लोपे तु तत्पार्वणविषयकश्लोकैकदेशस्यापि लोपः कार्यः। सूक्तवाकवदिष्टदेवतासंस्कारार्थत्वाच्छ्लोकपाठस्य। केवलमातृपार्वण एता भवन्तु सुप्रीता इत्यूहः। केवलमातृपार्वणे देवलोपः।

ततः—इडामग्ने० भूत्वस्म इति मन्त्रं पठन्पात्रान्तरेण किंचिद्द्रव्यं संघट्टयेत्। ततोऽनेन नान्दीश्राद्धेन नान्दीमुखदेवताः प्रीयन्तां वृद्धिरस्त्विति वदेत्। वरुणादिदेवताः कर्मसमाप्त्यन्ते विसर्जयेत्। विवाहोपनयनव्यतिरिक्तेष्वनेकदिनसाध्येषु कर्मसु तु तद्दिन एव विसर्जनम्। एतच्चानुकल्पानुष्ठानं मुख्यकल्पासंभवे वेदितव्यम्। स च मुख्यकल्पः श्राद्धप्रकरणे वक्ष्यते।

इत्याभ्युदयिकश्राद्धम्।

*धनुश्चिह्नान्तर्गतस्थाने ख. पुस्तके—'प्रमातामहकादय इति पाठो येषा मातामहीपार्वणाचारस्तत्पर.' इति विद्यते।

१ ख. °हकस्तथा। ए°। २ ग. घ. °ह्याः। त°।

## अङ्कुरारोपणप्रयोगः ।

अथाङ्कुरारोपणप्रयोगः । कर्ताऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यामुककर्मसाफल्यनिरन्तरशुभतासिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमङ्कुरारोपणं करिष्य इति संकल्प्य गणपतिं संपूज्य षट्प्रभृतिसमसंख्यान्ब्राह्मणान्संपूज्यान्नेन परिविष्याङ्कुरारोपणकर्मणः पुण्याहं भवन्तो ब्रुवन्तु । अङ्कुरारोपणकर्मणः[1] स्वस्ति भवन्तो ब्रुवन्तु । अङ्कुरारोपणकर्मण ऋद्धिं भवन्तो ब्रुवन्तु । इति त्रिस्त्रिर्विप्रान्वाचयेत् । ॐ पुण्याहम्, ॐ स्वस्ति, ओमृद्धिरोमृध्यतामिति वा, इति विप्रास्त्रिस्त्रिः प्रतिब्रूयुः ।

ततः कर्ता ब्रह्मादयः प्रीयन्तामिति पात्रे जलं क्षिप्त्वा शुचौ देशे गोचर्ममात्रं चतुरश्रं स्थण्डिलं गोमयेन विधाय रङ्गवल्ल्यादिभिरलंकृत्य श्वेताक्षतान्संप्रकीर्याद्भिरभ्युक्ष्य सुवर्णरजतताम्रान्यतमनिर्मिता अभावे मृन्मयीर्वा पञ्च पालिकास्तत्र संस्थापयेत् । अत्र गोचर्मशब्दो यौगिक एव ग्राह्यो न तु—

" वृषभैकशतं यत्र गवां तिष्ठति संवृतम् ।
बालवत्साशतं चैव गोचर्मेति बुधा विदुः " इति पारिभाषिकः ।

एतस्य दानविषयत्वात्प्रकृतेऽसंभवाच्च । एवं च गोर्यावत्प्रमाणं चर्म तदनुसारेणैव चतुरश्रस्थण्डिलकरणमत्र । ततो वल्मीकमृदं ह्रदमृदं शुष्कगोमयचूर्णं चैकीकृत्य मध्यमायां पालिकायां प्रक्षिप्य प्रागादिषु क्रमेण प्रक्षिपति । ततस्तासामधोभागेषु दूर्वाङ्कुराश्वत्थशिरीषबिल्वपत्राणि प्रक्षिप्य श्वेतसूत्रेण पालिका आवेष्ट्य तासु क्रमेण देवता आवाहयेत् । प्रणवस्य परब्रह्मर्षिः परमात्माऽग्निर्वा देवता देवी गायत्री छन्दः । व्यस्तव्याहृतीनामग्निर्ऋषिः । समस्तव्याहृतीनां प्रजापतिर्ऋषिः । अग्निवायुसूर्यप्रजापतयः क्रमेण देवताः । गायत्र्युष्णिगनुष्टुब्बृहत्यः क्रमेण च्छन्दांसि । आवाहने विनियोगः । ॐ भूर्ब्रह्माणमावाहयामि । ॐ भुवश्चतुर्मुखं ब्रह्माणमावाहयामि । ॐ सुवः प्रजापतिं ब्रह्माणमावाहयामि । ॐ भूर्भुवः सुवर्हिरण्यगर्भं ब्रह्माणमावाहयामीति मध्यमायां पालिकायां ब्रह्माणमावाह्य । ॐ भूर्वज्रिणमावाहयामि । ॐ भुवः शचीपतिमावाहयामि । ॐ सुवरिन्द्रमावाहयामि । ॐ भूर्भुवः सुवः शतक्रतुमावाहयामि । इति पूर्वस्यां पालिकायां वज्रिणम् । ॐ भूर्यममावाहयामि । ॐ भुवो वैवस्वतमावाहयामि । ॐ सुवः पितृपतिमावाहयामि । ॐ भूर्भुवः सुवः प्रेतपतिमावाहयामि । इति दक्षि-

[1] घ. 'मणे स्व' ।

णस्यां पालिकायां यमम् । ॐ भूर्वरुणमावाहयामि । ॐ भुवः प्रचेतसमावाहयामि । ॐ सुवः सुरूपिणमावाहयामि । ॐ भूर्भुवः सुवरपांपतिमावाहयामि । इति पश्चिमायां पालिकायां वरुणम् । ॐ भूः शशिनमावाहयामि । ॐ भुव इन्दुमावाहयामि । ॐ सुवर्निशाकरमावाहयामि । ॐ भूर्भुवः सुवः सोममावाहयामि । इत्युत्तरस्यां पालिकायां सोमम् ।

ततस्तत्तन्मन्त्रैर्नाममन्त्रैर्वा काण्डानुसमयेन पदार्थानुसमयेन वा पूजयेत् । आपो हि ष्ठेतिमन्त्रत्रयस्याग्निर्विश्वे देवा वाऽऽपो गायत्री । हिरण्यवर्णा इति मन्त्रचतुष्टयस्याग्निरापस्त्रिष्टुप् । पवमानानुवाकमन्त्राणां प्रजापतिर्ऋषिः । पवमानः सुवर्जनो विचर्षणिः पोता च । देवजना मनवो विश्व आयवश्च । जातवेदा अग्निरग्निर्देवः सविता वैश्वदेवी पुनती च । वैश्वानरो वात इषिरो मयोभूर्द्यावापृथिव्यावृतावर्यौ च । सविता देवोऽग्निश्च ब्रह्मा पावमान्यः ६ । ब्रह्म, इन्द्रः सुनीत्या सहितः सोमः स्वस्त्या सहितो वरुणः समीच्या सहितो यमो राजा प्रमृणाभिः सहितो जातवेदा ऊर्जयन्त्या सहितश्चेति सप्तदशानां क्रमेण देवताः । प्रथमद्वितीयचतुर्थपञ्चमाष्टमानां गायत्री छन्दः । तृतीयनवमदशमैकादशद्वादशत्रयोदशचतुर्दशपञ्चदशषोडशानामनुष्टुप् । षष्ठसप्तमसप्तदशानां त्रिष्टुप् । स्थापने विनियोगः । ॐ आपो हि ष्ठा म० ३ । हिरण्यवर्णाः शुच० ४ । पवमानः सुवर्जनः । पवित्रेण विचर्षणिः० मोर्जयन्त्या पुनातु । इत्येतैः सर्वान्ते ब्रह्मादीन्संस्नापयेत् । प्रतिमन्त्रमिति केचित् ।

पुष्पाञ्जलिसमर्पणान्ते—

दिशां पतीन्नमस्यामि सर्वकामफलप्रदान् ।  
कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् ।

इति पालिकानां पश्चात्तिष्ठन्प्राङ्मुख उपतिष्ठेतेति पूजने विशेषः ।

तत उपविश्य व्रीहियवतिलमुद्गसर्षपान्मिश्रीकृत्य क्षीरेण प्रक्षाल्य मध्यमपालिकादिक्रमेण निवपति । ब्रह्म जज्ञानमिति द्वयोरग्निर्ब्रह्मा त्रिष्टुप्, ओषधिनिवपने विनियोगः । ॐ ब्रह्म जज्ञानं प्रथमं० विवः । हिरण्यगर्भः समवर्त० विधेम, इति द्वाभ्यां मध्यमपालिकायां निवपति । यत इन्द्रेति द्वयोर्विश्वे देवा ऋषयः । इन्द्रो देवता । आद्याया बृहती अन्त्याया अनुष्टुप् । ओषधिनिवपने विनियोगः । ॐ यत इन्द्र० जहि । स्वस्तिदा विशस्प० अभयंकरः । इति द्वाभ्यां पूर्वस्यां पालिकायां निवपति । योऽस्य कौष्ठ्येति द्वयोः प्रजापतिर्यमोऽनुष्टुप्, ओषधिनिवपने विनियोगः । ॐ योऽस्य कौष्ठ्यज० पृथिवी

दृढा, इति द्वाभ्यां दक्षिणस्यां पालिकायां निवपति। इमं म इति द्वयोर्विश्वे देवा ऋषयः। वरुणो देवता। आद्या गायत्री। अन्त्या त्रिष्टुप्। ओषधिनिवपने विनियोगः। ॐ इमं मे व० प्रमोषीः, इति द्वाभ्यां पश्चिमायां पालिकायां निवपति। सोमो धेनुमिति द्वयोर्विश्वे देवाः सोमस्त्रिष्टुप्, ओषधिनिवपने विनियोगः। ॐ सोमो धेनु॰ शदस्मै। अषाढं युत्सु॰ सोम, इति द्वाभ्यामुत्तरस्यां पालिकायां निवपति। व्रीहियवादीनामलाभ एतदन्यतममेकमेव द्रव्यं पालिकासु निवपेत्।

ततो यथाक्रमं शुद्धाभिः सिकताभिः पालिकाः प्रच्छाद्य पञ्चगव्येन संप्रोक्ष्य, प्रणवस्य परब्रह्मर्षिः। परमात्माऽग्निर्वा देवता। दैवी गायत्री छन्दः। पालिकापिधाने विनियोगः। ॐ इति महता पात्रेणापिधाय कर्मसमाप्तिपर्यन्तं सुरक्षितं कुर्यात्। अग्निशब्दवाच्यः परमात्मा देवतेत्येवं वा प्रयोगः। समाप्ते कर्मणि देवताः संपूज्य पूर्वोक्तैरों भूर्ब्रह्माणमित्याद्यैर्मन्त्रैरावाहयामीत्यस्य स्थान उद्वासयामीत्यूहितैर्यथाक्रमं देवता उद्वास्य कर्मेश्वरायार्पयेत्।

एतच्च गर्भाधानादिनामकर्मान्तकर्माणि हित्वाऽन्नप्राशनादिविवाहान्तापत्यसंस्कारेष्वन्येषु च नूतनागारप्रवेशादिशुभकर्मसु कर्मारम्भदिनात्पूर्वं सप्ताहं पञ्चाहं त्र्यहमेकाहं वा कार्यम्। इदं च रात्रौ कल्याणसंज्ञके प्रथममुहूर्ते कर्तव्यम्।

तथा च शौनकः—

"रात्रौ मुहूर्ते कल्याणे प्रथमेऽङ्कुररोपणम्" इति।

कुर्यादिति शेषः।

रात्रावङ्कुररोपणे हेतुमप्याह स एव—

"ओषधीनां हि सर्वासां चन्द्रः प्रोक्तोऽधिदैवतम्।
तस्मात्सर्वप्रयत्नेन रात्रावङ्कुररोपणम्" इति।

हिर्हेतौ। अतित्वरायां सद्यो दिवैव। "आत्यन्तिकेषु कार्येषु सद्योऽह्न्यन्यङ्कुररोपणम्" इति बृहस्पत्युक्तेरिति केचित्।

कर्मविशेषेऽङ्कुरारोपणस्याक्रियोक्ता तेनैव—

"निषेकं गर्भसंस्कारं जातकर्म च नाम च।
हित्वाऽङ्कुरारोपणं स्यादन्यत्र शुभकर्मसु" इति।

निषेको गर्भाधानम्।

इति बौधायनसूत्रानुसारेणाङ्कुरारोपणप्रयोगः।

# अथाग्निमुखविधिः ।

तत्राग्न्यायतनदेशो गृह्ये—

" प्राचीनप्रवण उदीचीनप्रवणे प्रागुदक्प्रवणे समे वा
देश उद्धत्यावोक्ष्य " इति ।

अस्यार्थः—प्राचीनप्रवणाद्यन्यतमे देश आयतनं विधाय तदभ्र्याऽन्येन वा खनित्रेणोद्धत्यावोक्षेत् । प्रवणः क्रमनिम्नः । समे वा देश इति सप्तमीनिर्देशेन देशव्यतिरिक्तस्यैव कस्यचित्पदार्थस्योद्धननादिक्रियाकर्मत्वे प्रदर्शिते तत्र स च कः पदार्थ इत्याकाङ्क्षायामायतनपदार्थस्य ग्रहणम् । ( * एतेन केवले देश एवोद्धननप्रोक्षणे उक्त्वा तत्र स्थण्डिलकरणमुक्तं तत्परास्तम् । )

तत्प्रमाणं शुल्वसूत्रे—

" पिशीलमात्रा भवन्तीति धिष्णियानां विज्ञायते " इति ।

पिशीलं पाड्विधम् । अष्टादशाङ्गुलमेकं, विंशत्यङ्गुलं द्वितीयं, बाह्वोरन्तरालं तृतीयं, बद्धमुष्टी रत्निरिति चतुर्थं, चतुर्विंशत्यङ्गुलं पञ्चमं, षट्त्रिंशदङ्गुलं षष्ठम् । धिष्णियान्यग्न्यायतनानि । विज्ञायत इत्यत्र श्रुतिरिति शेषः ।

अङ्गुलप्रमाणं बौधायनेनोक्तम्—

" अथाङ्गुलप्रमाणं चतुर्दशाणवश्चतुस्त्रिंशत्तिलाः
पृथुसंश्लिष्टा इत्यपरम् " इति ।

सर्वप्रमाणशेषत्वादङ्गुलप्रमाणमुच्यत इति शेषः । अणुर्धान्यविशेषः । परस्परसंश्लिष्टाश्चतुर्दशाणवो यावत्प्रमाणं तावदङ्गुलप्रमाणमित्यर्थः । कोशसंस्थानवत्पृथुप्रदेशेन संश्लिष्टाश्चतुस्त्रिंशत्तिला अङ्गुलप्रमाणमित्यपरं मतमिति व्याख्यातमेतद्द्वारकानाथेन ।

अणुशब्दप्रवृत्तिनिमित्तं कोश आह—

" व्रीहिभेदस्त्वणुः पुमान् " इति ।

केचित्त्वङ्गुलप्रमाणमङ्गुष्ठपर्वमात्रं मध्याङ्गुलिमध्यमपर्वमात्रं वेत्याहुः । एतच्च प्रमाणं यजमानस्याध्वर्योर्वा ग्राह्यम् । " यजमानस्याध्वर्योर्वैष हि चेष्टानां कर्ता भवति " इति शुल्वसूत्रात् । अत्राध्वर्योरभावात्स्वस्यैव प्रमाणम् । साचार्ये कर्मणि पाक्षिकत्वेनाऽऽचार्यस्यापि प्रमाणं ग्रहीतुं शक्यं तस्याध्वर्युतुल्यत्वात् ।

* धनुश्चिह्नान्तर्गतं क. ख. पुस्तकयोर्नास्ति ।

साङ्गमायतनं स्मृतावुक्तम्—

" अरत्निमात्रं विज्ञेयमग्नेरायतनं शुभम् ।
श्रौते चौपासने कण्ठखातयोनिविवर्जितम् ।
मेखलाद्वितयं कार्यं रेखालग्नं तु बाह्यतः ।
बाह्या व्यङ्गुलविस्ताराऽऽभ्यन्तरा चतुरङ्गुला ।
बाह्या षडङ्गुलोत्सेधाऽऽभ्यन्तरा द्वादशाङ्गुला " इति ।

अत्रौपासनग्रहणं गृह्योक्तलौकिकाग्निसाध्यकर्मोपलक्षणम् ।

अथाग्न्यायतननिर्माणप्रकारः कारिकाभिः प्रदर्श्यते—

पिशीलमात्रा रज्जुः स्यात्सा च सूक्ष्मा दृढा तथा ।
यावती मानतो रज्जुस्तावत्यागन्तुकी भवेत् ॥ १ ॥
आगन्तुक्याश्चिह्नमर्धे श्रोण्यंसार्धं तु तद्भवेत् ।
लक्ष्मान्तरार्धे पाशौ द्वावभितः सर्वरज्जुषु ॥ २ ॥
पृष्ठ्यां प्रागायतां कृत्वा शङ्कून्यस्येत्प्रमाणतः ।
दीर्घभागस्थितं पाशं पूर्वशङ्कौ प्रकल्पयेत् ॥ ३ ॥
ह्रस्वभागस्थितं पाशं क्षिपेच्छङ्कौ तु पश्चिमे ।
लक्षणं कर्षणार्थं तु तत आकृष्य दक्षिणे ॥ ४ ॥
कृप्तलक्षणतः श्रोणिं दक्षिणां कल्पयेत्ततः ।
उत्तरेऽप्येवमाकृष्योत्तरां श्रोणिं प्रकल्पयेत् ॥ ५ ॥
ततः पाशौ विपर्यस्य तस्यांसौ कल्पयेत्पुरः, इति ॥

विश्वकर्माऽपि—

" कृत्वा प्राक्सूत्रमृज्वेकं दक्षिणोत्तरमत्स्ययोः ।
न्यस्य सूत्रं ततः कोणैरङ्कितैश्चतुरश्रकम् " इति ।

प्रागपरसूत्रं हस्तादीष्टप्रमाणकं कृत्वा मत्स्येन साधितयोर्दक्षिणोत्तरदिशो-स्तत्प्रमाणं सूत्रमुभयतः समार्धं कृत्वा तावत्प्रमाणेन सूत्रेण कृतमध्यकर्षणेन मत्स्येन वा चतुष्कोणाङ्कैश्चतुरश्रं संपन्नं भवतीत्यर्थः । कुण्डरूपाग्न्यायतनक-रणाशक्तौ स्थण्डिले कार्यम्—

" कुण्डे वा स्थण्डिले वाऽपि होमकर्म समाचरेत् " इति स्मृतिसारोक्तेः ।

एतन्मानं गृह्यकारिकासु—

" हस्तमात्रं चतुष्कोणं बाहुमात्रमथापि वा ।
चतुरङ्गुलमुच्छ्रायं स्थण्डिलं सर्वकर्मसु " इति ।

अत्रोक्तस्य प्रमाणद्वयस्य होमानुसारेण व्यवस्था ज्ञेया।

संग्रहेऽपि—

" चतुरश्रं च[1] सुश्लक्ष्णं तुल्यं सूत्रेण साधयेत्।
समं वेदाङ्गुलोच्छ्रायं प्रागुदक्प्रवणं भवेत्।
अधिकं वेषुमात्रं वा कुर्याद्धोमानुसारतः " इति।

परिधित इषुमात्रं न तु सर्वत इति ज्ञेयम्। अष्टादशाङ्गुलाष्टादशाङ्गुलात्मकचतुर्श्रं कर्तव्यमिति तात्पर्यार्थः।

इषुररत्नित्रयात्मकः—" त्रिररत्निरिषुः स्मृतः " इत्यापस्तम्बोक्तेः।

अरत्निप्रमाणं शुल्बसूत्रे—

" चतुर्विंशत्यङ्गुलयोऽरत्निस्तदर्धं प्रादेश इति क्लृप्तिः " इति।

एतत्सूत्रव्याख्याने सार्वत्रिकी चैषा क्लृप्तिरिति सुन्दरकरविन्दाभ्यां व्याख्यातम्। कूर्परमारभ्य कनिष्ठिकापर्यन्त आयामोऽरत्निरिति स्मृत्यन्तरे।

शतपथ इषुप्रमाणमन्यथोक्तम्—" पञ्चप्रादेश इषुर्भवति " इति।

अस्मिन्कल्पे पञ्चदशाङ्गुलपञ्चदशाङ्गुलात्मकचतुर्श्रं भवति।

सिकताप्रमाणं वर्णविशेषेणाऽऽकारविशेषश्च बौधायनसूत्रे—

" पञ्चप्रस्थसिकताः शुचयः शुक्ला अनार्द्रा अरत्निमात्रं[2] समचतुरश्रं ब्राह्मणस्य रक्तवर्णं त्रिकोणं क्षत्रियस्य पीतवर्णं रथचक्रवद्वैश्यस्य प्राक्प्रवणमुदक्प्रवणं वा स्थण्डिलं करोति " इति।

सिकता मृत्पांसवः। पञ्चप्रस्थसिकता इति प्रमाणं हस्तमात्राभिप्रायम्। करणप्रकारमप्याह स एव—

" सिकताश्चतुरङ्गुलं प्राचीनमुच्छ्रयति पञ्चाङ्गुलं[3] पश्चादूर्ध्वाङ्गुलिवि-[4]शेषं दक्षिणत ऊर्ध्वाङ्गुलि[5]प्रमाणमुत्तरतः " इति।

पश्चादित्यन्तं प्राक्प्रवणत्वपक्षे। ऊर्ध्वाङ्गुलिविशेषमित्याद्युदक्प्रवणत्वपक्षे। ऊर्ध्वाङ्गुलिप्रमाणस्य यावान्विशेषो भवति तावत्परिमितो दक्षिणत उच्छ्रायः। ऊर्ध्वाङ्गुलिप्रमाण उत्तरत उच्छ्राय इत्यर्थः।

१ ग. चतुःश्र°। २ ग. घ. °त्रं चतुरस्रं प्राक्प्रवणं स्थण्डिलं करोतीति। खादिरादिगृह्ये विशेष उक्तः—पञ्चप्रस्थसिकता अनार्द्रा अरत्निमात्रं स°। ३ ग. घ. °ङ्गुलप्रमाणं पश्चिमत ऊर्ध्वा°। ४ ग. घ. 'लिविहीनमु°'। ५ ग. घ. 'लिविहीन उ°'।

विशेषलक्षणं शूल्वसूत्रे—

" प्रमाणं तृतीयेन वर्धयेत्तच्च चतुर्थेनाऽऽत्मचतुस्त्रिंशोनेन " इति ।

प्रदेशिन्या मध्यमाया वोर्ध्वाङ्गुलेः प्रमाणं त्रेधा विभज्य तदेकांशपरिमितमंशं वर्धयित्वा तदंशचतुर्थांशं स्वचतुस्त्रिंशांशोनं तत्र संयोज्य तावत्परिमिता दक्षिणत उच्छ्रितिः कार्या । उत्तरतस्तूर्ध्वाङ्गुलिप्रमाणोच्छ्रितिरिति तात्पर्यार्थः।

शास्त्रान्तरे तु—

" प्राक्प्रवणमुदक्प्रवणं वा स्थण्डिलं करोति पञ्चाङ्गुलोच्छ्रायं पश्चाच्चतुरङ्गुलोच्छ्रायं पुरत एवमेवान्यत्र " इति ।

अन्यत्र, उदक्प्रवणत्वे । यद्यपि प्रागुदक्प्रवणपक्षोऽत्र नोक्तस्तथापि देशे प्रागुदक्प्रवणताया दर्शनादत्र प्राप्तिः ।

बौधायनेनैतेषां पक्षाणां काम्यत्वमप्युक्तम्—

" प्राचीनप्रवणं ब्रह्मवर्चसकामस्योदीचीनप्रवणमन्नाद्यकामस्य प्रागुदक्प्रवणं प्रजाकामस्य समं प्रतिष्ठाकामस्य " इति ।

सिकतादोषानप्याह स एव—

" अथातः सिकतादोषान्व्याख्यास्यामो भस्मकेशतुषकपालशर्करातृणास्थिपिपीलिकावतीभिरार्द्राभिः सिकताभिर्वर्जयेद्भस्मना यजमानक्षयः केशेन स्त्रीमरणं तुषैः पुत्रनाशः कपालैरर्थनाशः शर्कराभिर्बन्धुवियोगस्तृणेन कर्मक्षयोऽस्थ्ना ग्रामनाशः पिपीलिकाभी राष्ट्रनाश आर्द्रसिकताभिर्भयं भवतीत्याह भगवान्बौधायनः " इति ।

वर्जयेदित्यनन्तरं स्थण्डिलकरणमिति शेषः । पिपीलिकाग्रहणं जन्तूपलक्षणम् ।

विधानपारिजाते स्थण्डिलोच्छ्राये विशेष उक्तः—

" कार्या शतार्धेऽङ्गुलसंमितोच्छ्रितिः शताहुतौ व्यङ्गुलसंमितोच्छ्रितिः ।
सहस्रहोमे चतुरङ्गुलोच्छ्रितिर्वस्वङ्गुला स्यादयुते समुच्छ्रितिः ॥
नृपाङ्गुला लक्षहुतौ समुच्छ्रितिर्विंशाङ्गुला स्यात्प्रयुते समुच्छ्रितिः ।
तत्त्वाङ्गुला कोटिमखे समुच्छ्रितिस्ततोऽधिकं नो विदधीत मानकम् " इति।

अथ प्रसङ्गाद्ब्रह्माहुतिकशान्त्यादिकर्मोपयोगिकुण्डस्थण्डिलयोः परिमाणम् । तत्रैकोनपञ्चाशत्संख्याहुतिपर्यन्तं स्थण्डिलमेव । तच्चाष्टादशाङ्गुलपरिमाणं परितोऽङ्गुष्ठोन्नतम् । अग्रे कुण्डेन सह विकल्पोऽशक्तिशक्तिभ्यां व्यवस्थितः । पञ्चाशदादिनवनवतिसंख्याहुतिपर्यन्तं मुष्टिमात्रम् । मुष्टी रत्निः । शतादिनवनवत्यधिकनवशताहुतिपर्यन्तमरत्निमितम् । निष्कनिष्ठमुष्टिहस्तोऽरत्निः ।

१ ग. घ. 'ङ्गुलेर्यावान्विशेषस्तावन्मात्रैवोच्छ्रितिर्न तूर्ध्वाङ्गुलिप्रमाणस्याप्यत्र ग्रहणमिति ता' ।

सहस्रादिहोमे हस्तमात्रम् । अयुतादौ द्विहस्तम् । लक्षादौ चतुर्हस्तम् । दशलक्षादौ षड्ढस्तम् । कोटिहोमादावष्टहस्तं दशहस्तं वा । चतुर्विंशत्यङ्गुलैर्हस्तः । अङ्गुलं तु तिर्यङ्निहिताष्टयवप्रमाणं स्वमध्यमामध्यपर्वमितं वा ज्ञेयम् । मुष्ट्या वा चतुरङ्गुलानि । अर्धयवोनचतुस्त्रिंशदङ्गुलैर्द्विहस्तं सार्धैकचत्वारिंशदङ्गुलैस्त्रिहस्तमष्टचत्वारिंशदङ्गुलैश्चतुर्हस्तं पादोनचतुष्पञ्चाशदङ्गुलैः पञ्चहस्तं पादोनैकान्नषष्ठ्यङ्गुलैः षड्ढस्तं सार्धत्रिषष्ठ्यङ्गुलैः सप्तहस्तं यवोनाष्टषष्ठ्यङ्गुलैरष्टहस्तं द्विसप्तत्यङ्गुलैर्नवहस्तं षट्सप्तत्यङ्गुलैर्दशहस्तं षण्णवत्यङ्गुलैः षोडशहस्तं कुण्डं स्थण्डिलं वा भवति । कुण्डाङ्गानां व्यासखातनाभिकण्ठमेखलायोनीनां सम्यग्ज्ञान एव कुण्डं युक्तं भवति । तत्करणप्रकारस्तु शान्तिप्रकरणे वक्ष्यते । स्थण्डिलं चतुरश्रमङ्गुलोत्सेधं चतुरङ्गुलोत्सेधं वा । समत्वपक्षे स्थूलद्रव्यहोमे तत्तत्परिमाणस्यापर्याप्तौ स्वोत्तरपरिमाणमपि ग्राह्यम् ।

यत्तु कारिकाकृतोक्तम्—

" स्थण्डिलात्तण्डुलैरेखा त्र्यङ्गुला त्र्यङ्गुलाधिका ।
एकरेखं द्विरेखं वा अग्निभद्रं तु कारयेत् " इति,

तत्र मूलं चिन्त्यम् ।

आयतनस्य गोमयेनोपलेपनादिकमुक्तं संग्रह आयतनसंस्कारं प्रकृत्य— " तद्गोमयेनोपलिम्पेत् " इति । तदग्न्यायतनम् ।

एतत्कारणमुक्तं स्मृतिरत्नाकरे पुराणे—

" सर्वत्र वसुधा मेध्या सशैलवनकानना ।
अथ विष्णुपदाक्रान्तोपलेपनमिदं कुतः ॥
पुरा शक्रो हि वज्रेण वृत्रं हत्वा महासुरम् ।
तन्मेदसा हि निर्लिप्ता तदर्थमुपलेपनम् " इति ॥

उद्धननोत्तरं यदि श्वा स्थण्डिलादावधितिष्ठति तदा प्रायश्चित्तविशेष उक्तो बौधायनेन—

" स्थण्डिलमुद्धृतं गौरश्वो वा यदि विकिरेदन्यद्वा श्वापदमधितिष्ठेत्तस्य पदमभ्युक्ष्य जपति पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषमिति कृतान्तात्कर्म प्रतिपद्यते " इति ।

(*विकिरेन्मूत्रादिभिर्विकीर्णं कुर्यात् । अथवा सप्तम्यर्थे द्वितीया । अस्मि-

* धनुश्चिह्नान्तर्गत क. ख. पुस्तकयोर्नास्ति ।

१ ख. °त श्वाऽधि° ।

न्पक्षे विकिरेदित्यस्य रेतोमूत्रपुरीषोत्सर्गं कुर्यादित्यर्थः । अधितिष्ठेदित्यत्र द्वितीयान्ते स्थण्डिलोद्धतपदे अनुवर्तनीये ।) स्थण्डिलग्रहणं कुण्डोपलक्षणम् । श्वग्रहणं+ निषिद्धद्विपदचतुष्पदपशूपलक्षणम् ।

रेखालेखनप्रकारोऽवोक्षणादि च धर्मसूत्रे—

" यस्मिन्देशेऽग्निमुपसमाधास्यन्स्यात्तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो रेखा लिखित्वाऽवोक्ष्योत्सिच्य तदुदकशेषमुत्तरेण पूर्वेण वाऽन्यदुपनिदध्यात् " इति ।

यत्र कुत्र गार्ह्ये सामयाचारिके वा कर्मणि गृहेऽरण्ये वाऽग्निमुपसमाधास्यन्प्रतिष्ठापयिष्यन्स्यात्तत्र पूर्वं प्राचीः प्रागग्रास्तिस्र उदगपवर्गा रेखा लिखेत् । उदगग्रास्तिस्रः प्रागपवर्गा रेखा लिखित्वाऽद्भिरवोक्षेत् । अवोक्ष्यैतदवोक्षणोदकमग्नेरायतनस्योत्तरतः पूर्वतो वोत्सिञ्चेत् । उत्सिच्यान्यदुदकं पात्रस्थमुपदध्यात् । पाके तु स्त्रिया(यो) न भवति(न्ति) । उपसमाधास्यन्निति लिङ्गस्य विवक्षितत्वात् । आर्याः प्रयता इत्यत्र तु भवतीति व्याख्यातमुज्ज्वलाकृता । अवोक्षणोदकादन्यदुदकं कर्मपर्याप्तमवोक्षणपात्रस्थं कृत्वा स्वसमीपे निदध्यात् । अथवा शुद्धजलपूरितकलशस्थमुदकमवोक्षणोत्सेचनार्थं पात्रान्तरे गृहीत्वा तेनोदकेनावोक्षणोत्सेचने कृत्वाऽन्यदवशिष्टं कलशपात्रस्थमुदकं कर्मार्थं स्वसमीपे निदध्यात् । अर्थत एव समीप उदकनिधाने सिद्धेऽत्र वचनमुत्सेचनोत्तरमेव यस्मात्कलशादवोक्षणोत्सेचनार्थमुदकं गृहीतं तस्य कलशस्य स्वसमीपे स्थापनार्थम् । तेनोत्सेचनपर्यन्तं गृहमध्य एव कलशो भवेदिति सिद्धं भवति । अथवा तावत्पर्यन्तं भूमौ तत्कलशस्थापनं वारयितुमत्र वचनम् । न चैतस्याद्दृष्टार्थत्वमेवास्त्विति वाच्यं, प्रणीताद्युदककार्यनिष्पादनरूपे दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् । उत्सेचनाभावेऽप्यावश्यकत्वादेतद्भवत्येव । रेखालेखनावोक्षणोत्सेचननिधानानां धर्मसूत्रे विधानं परिसंख्यानबलादग्निकार्यादिषु परिषेकादिव्यतिरिक्तगृह्यविहिततन्त्रनिवृत्तौ तद्विहितत्वाद्रेखालेखनावोक्षणोत्सेचननिधानानामपि निवृत्तिः स्यात्सा मा भूदित्येतदर्थम् । गृह्योक्ते कर्मण्येतेषामनावश्यकत्वार्थं वा । उदकनिधानं त्वावश्यकत्वाद्भवत्येव । वैश्वदेवे तु नैतदपि भवति । यथोपदेशं कुरुत इति विशेषवचनेन बाधात् । रेखालेखनाद्युदकनिधानान्तमुद्धनना-

---

* श्वग्रहणमित्यत्र श्वापदग्रहणमित्यपेक्षितम् । अथवा क. ख. पुस्तकस्थसूत्रपाठानुसारि ज्ञेयम् ।

त्प्रागेव कर्तव्यं न तूद्धननावोक्षणयोर्मध्ये। उद्धत्यावोक्ष्येतिल्यपा बोधितस्यो-द्धननावोक्षणयोरव्यवधानस्य बाधापत्तेः। उद्धननावोक्षणयोरव्यवधानं बाधित्वा मध्य एव कर्तव्यता तदा वक्तव्या, यदा धर्मसूत्रोक्तोल्लेखनादीनां मध्ये कर्तव्यतायां प्रमाणमुपलभ्येत । तदेवात्र नास्ति । प्रत्युतोद्धननावोक्षणयोरव्यवधानं बहुपु दृष्टमस्ति । न च शिष्टाकोपन्यायेन वेदकरणवेदिकरणयोर्मध्ये क्षुते यथोभयोरव्यवहितत्वबाधस्तथाऽनयोरपि सोऽस्त्विति वाच्यम्। तत्र क्षुतक्रमयोरेकदोपस्थिततत्वेनानयोः किं बाध्यमिति विचारे प्राप्ते पदार्थधर्मरूपक्रमापेक्षया पदार्थरूपक्षुतनिमित्ताचमनस्य प्राबल्यादव्यवहितत्वबाधस्य जैमिनिना स्वीकृतत्वात्प्रकृत[1] उद्धननानन्तरमेवोल्लेखनं कर्तव्यमित्येतादृशेऽर्थे प्रमाणाभावेनैतयोरव्यवहितत्वबाधस्याकल्पनात् । न च मातृदत्तेनोद्धननोत्तरमेवोल्लेखनादीनां प्रदर्शनात्तदनन्तरमेवानुष्ठानमिति वाच्यम्। (*पुनरित्यादिभाष्यग्रन्थस्योल्लेखनावोक्षणोत्सेचनोदकनिधानान्यपि धर्मशास्त्रोक्तत्वात्कर्तव्यानीत्येवंरीत्या संग्रहमात्रपरताया एव ल्यब्बोधिताव्यवहितानन्तर्यबाधापत्त्या कल्पनात्। न चास्त्वव्यवहितानन्तर्यबाधः, तथा च क्रमबोधकत्वमेव पुनरित्यादिग्रन्थस्येति वाच्यम् । अव्यवहितानन्तर्यानुगुण्येनैव निर्वाहे तदितरकल्पनाया अनुचितत्वात्। उद्धत्येत्त्यस्य संस्कार्यपदार्थसाधनपदार्थप्रदर्शनार्थमात्रमुक्तिः । न त्ववोक्षणनिवृत्त्यर्था । अन्यथा सूत्रविरुद्धत्वेन भाष्यग्रन्थस्याप्रयोजकत्वापत्तेः । अवोक्षणानुक्तिस्तु स्पष्टत्वात्। पुनर्धर्मशास्त्रे दर्शनादित्यत्र पुनःशब्देन तत्सत्त्वं सूचितम्। कथम्। पुनरित्यस्याऽऽवृत्तिबोधकत्वेनोद्धननस्य धर्मसूत्रोक्तानामुल्लेखनादिनां वाऽऽवृत्त्यभावेनोद्धनन उल्लेखनादिपु वाऽन्वयासंभवेनावोक्षणस्य वारद्वयं संभवाद्धर्मसूत्रोक्तावोक्षणात्पूर्वमेव पुनःशब्दस्यान्वये सत्यर्थादुद्धननोत्तरमन्यदवोक्षणमस्तीति। एतेनोद्धननावोक्षणोत्तरभावित्वमुल्लेखनादीनामिति शङ्काऽपि निरस्ता । ) एकमे(म)वोक्षणमुत्सेचनादिकं चेदानीं नानुतिष्ठन्ति पद्धत्यन्तरे लिखितं च नास्ति तद्भ्रान्तिमूलकमेव । धर्मसूत्र एतेषां विधानबलादनावश्यकमिति

* धनुश्चिह्नान्तर्गतस्थाने क. पुस्तके -" उद्धत्येत्यत्राऽऽकाङ्क्षित संस्कार्यपदार्थ साधनपदार्थ चोक्त्वाऽनन्तरं पुनर्धर्मशास्त्रे दर्शनादित्येतस्य मातृदत्तग्रन्थस्य न्यूनताक्रमप्रदर्शनपरताया एव वक्तुमशक्यत्वेन मध्येऽनुष्ठानासंभवात् । न च क्रमप्रदर्शनपरत्वे किं बाधकमिति वाच्यम् । पुनःशब्दस्य व्यर्थत्वापत्तेर्न्यूनताया अपरिहार्यत्वापत्तेश्च बाधकत्वात् " इति वर्तते ।

1 ग. घ. ङ. 'तत्वेन प्रकृ' ।

कृत्वा पद्धत्यन्तरे न लिखितमिति यदुच्यते तदोल्लेखनमपि न लेखनीयम्। उल्लेखनस्यैवावोक्षणोत्सेचनयोरप्येकसूत्रमणीतत्वेनोल्लेखनकरणाकरणाधीनत्वेनोल्लेखनं लिखितमवोक्षणादिकं न लिखितमित्यत्र भ्रान्तिरेव मूलं पश्यामः।

रेखालेखनसाधनानि ( *बौधायनगृह्ये—

" न लोष्टेन न काष्ठेन न शर्करया न नखेन । काष्ठेन वै व्याधितः स्याल्लोष्टेन कुलनाशनम् । शर्करया पुत्रनाशः स्यान्नखेन बन्धुनाशनम् । तस्मात्सुवर्णरजतताम्रशकलेन व्रीहिभिर्यवैर्वा दर्भैरङ्गुष्ठेन च महानाम्न्या चोपसंगृह्य तस्य मध्यमं प्राचीनं संततमृजुमुल्लिखेत् " इत्यादि ।

महानाम्नी, उपकनिष्ठिका । उपसंग्रहणान्तमेवाविरोधादत्रोपयुज्यते । रेखालेखनप्रकारस्तु तिस्रः प्राचीस्तिस्र उदीची रेखाः कृत्वेत्यनेन विरुद्धत्वान्नोपयुज्यते )।

गोभिलपरिशिष्टे—

" न नखेन न काष्ठेन नाश्मना मृन्मयेन वा ।
प्रोल्लिखेत्स्थण्डिलं विप्रः सिद्धिकामस्तु यो भवेत् ॥
भवेन्नखेन कुनखी काष्ठेन व्याधिमृच्छति ।
अश्मना धननाशः स्यान्मृन्मयेन कलिर्ध्रुवम् ॥
फलेन सुसमृद्धः स्यात्पुष्पेण श्रियमृच्छति ।
पर्णेन धनलाभः स्याद्दीर्घमायुः कुशेन तु ॥
तस्मात्फलेन पुष्पेण पर्णेनाथ कुशेन वा
ताम्रशल्कयुतेनाऽऽदौ लिखेत्स्थण्डिलमुत्तमम् " इति ।

अवोक्षणलक्षणं संग्रहे—

" अवाचीनेन हस्तेन कर्तव्यं स्यादवोक्षणम् " इति ।

गृह्ये—

" अग्निं मथित्वा लौकिकं वाऽऽहृत्य न्युप्योपसमादधाति " इति ।

याज्ञिकात्काष्ठादग्निं मथित्वा श्रोत्रियागाराल्लौकिकं वाऽऽहृत्याऽऽयतनमध्ये संस्थाप्य काष्ठान्यभ्याधाय प्रज्वलयतीत्यर्थः ।

संग्रहे—" कुण्डे वा स्थण्डिले वाऽलं तत्तन्नाम्ना हविर्भुजम् ।
स्थापयेन्मध्यदेशे तु " इति ।

* धनुश्चिह्नान्तर्गतं क ख. पुस्तकयोर्नास्ति ।

स्मृतिसारेऽपि—

" कुण्डे वा स्थण्डिले वाऽपि तत्तन्नाम्ना हविर्भुजम् ।
व्याहृतीभिर्मध्यदेशे योग्यं स्वाभिमुखं क्षिपेत् " इति ।

हविर्भुजमग्निम् । अलं पर्याप्तम् । अलमित्यत्र होमायेति शेषः । योग्यत्वं च द्वेधा । अरण्यादिजत्वं प्रदीप्तबहुलाङ्गारमयत्वं च ।

तत्राऽऽद्यमुक्तं सिद्धान्तशेखरे—

" उत्तमोऽरणिजन्योऽग्निरुत्तमः सूर्यकान्तजः ।
मध्यमः श्रोत्रियागारादधमः स्वगृहादिजः " इति ।

द्वितीयं स्मृत्यर्थसारे—

" कुण्डे वा स्थण्डिले वाऽपि मध्यदेशे हविर्भुजम् ।
दीप्तबह्वङ्गारमयं निर्धूमं स्थापयेद्बुधः " इति ।

अग्निप्रणयनपात्राण्याहात्रिः—

" सौवर्णं राजतं ताम्रं तदभावे तु मृन्मयम् ।
पात्रान्तरेण पिहितमग्निप्रणयने स्मृतम् " इति ।

गोभिलोऽपि—

" पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे ।
अग्निप्रणयनं कुर्याच्छरावे तादृशेऽपि वा " इति ।

तादृशे पिहिते । शरावो मृन्मयपात्रविशेषः ।

यस्तु—

" शरावे भिन्नपात्रे वा कपाले त्वायसेऽपि वा ।
नाग्निप्रणयनं कुर्याद्व्याधिहानिभयावहम् "

इति स्मृतिसारोक्तो निषेधः स पुराणशरावपरः ।

" तैजसे ताम्रपात्रे वा शरावेऽभिनवे तु वा "

इति नारदपञ्चरात्रवचनेऽभिनवशरावस्य ग्राह्यत्वोक्तेः । तैजसपदं गोबलीवर्दन्यायेन ताम्रेतरपरम् ।

( *गोभिलीयपरिशिष्टे—

" कपालैर्भिन्नपात्रैर्वा न त्वामैर्गोमयेन वा ।
अग्निप्रणयनं कार्यं यजमानभयावहम् " इति ।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तकातिरिक्तपुस्तकेषु नास्ति ।

भिन्नपात्रैर्मृन्मयैर्धातुमयैश्च । आमैरित्यत्र योग्यतया मृन्मयानामेव ग्राह्यम् । गोमयेन गोमयखण्डेन ।

अन्यदपि तत्रैव—

" अल्पः प्रणीतो विच्छिन्नोऽसमिद्धश्चापरिष्कृतः ।
त्वरया पुनरानीतो यजमानभयावहः ॥
तस्माच्छुभेन पात्रेण अविच्छिन्नाकृशं बहु ।
अग्निप्रणयनं कुर्याद्यजमानशुभावहम् ।
शुभं पात्रं तु कर्तव्यं यजमानसुखावहम् ।
शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः ।
तस्याभावे शरावेण नवेनाभिमुखं च तम् " इति ।

अल्पः कर्मापर्याप्तः । विच्छिन्नः कर्मपर्याप्तः प्रणीतोऽपि शिथिलबह्ववयवः । असमिद्धोऽप्रदीप्तः । अपरिष्कृतः पात्रान्तरपिधानादिधर्मोऽसंस्कृतः । अल्पत्वात्पुनःपुनरानीतः । अविच्छिन्नाकृशमित्यत्र कर्मधारयः । बह्विति क्रियाविशेषणम् । सौवर्णाद्यभावे कांस्यम् । )

अग्निस्थापनं वाग्यतेन कर्तव्यम्—

" अग्निसंस्थापनं कुर्याद्वाग्यतः संयतेन्द्रियः " ।

इति प्रयोगदर्पणे संग्रहोक्तेः ।

एवं होमकालेऽपि वाग्यमः—

" स्नास्यतो वरुणः कान्तिं जुह्वतोऽग्निः श्रियं हरेत् ।
भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम् " ।

इति प्रयोगपारिजाते स्मृत्यन्तरोक्तेः ।

तत्तन्नाम्ना हविर्भुजं स्थापयेदित्युक्तं तत्र कानि नामानीत्याकाङ्क्षायां पारिजाते—

" पावको लौकिको ह्यग्निः प्रथमः संप्रकीर्तितः[1] ।
अग्निस्तु मारुतो नाम गर्भाधाने विधीयते ।
ततः पुंसवने ज्ञेयः पवमानस्तथैव च ।
सीमन्ते मङ्गलो नाम प्रबलो जातकर्मणि ।
नाम्नि वै पार्थिवो ह्यग्निः प्राशने तु शुचिः स्मृतः ।
सभ्यनामा तु चौले स्याद्व्रतादेशे समुद्भवः ।

---

१ ख. ग. ड. परिकीर्तितः ।

गोदाने सूर्यनामाऽग्निर्विवाहे योजकः स्मृतः ।
चतुर्थ्यां तु शिखी प्रोक्तो धृतिरग्निरथापि वा ।
आवसथ्ये द्विजो ज्ञेयो वैश्वदेवे तु रुक्मकः ।
प्रायश्चित्ते तु विट्चैव पाकयज्ञेषु पावकः ।
देवानां हव्यवाहश्च पितॄणां कव्यवाहनः ।
शान्तिके वरदः प्रोक्तः पौष्टिके बलवर्धनः ।
पूर्णाहुत्यामिडो नाम क्रोधोऽग्निश्चाऽऽभिचारिके ।
वश्यार्थे कामदो नाम वनदाहे तु दूषकः ।
कुक्षौ तु जाठरो ज्ञेयः क्रव्यादो मृतदाहने ।
वह्निनामा लक्षहोमे कोटिहोमे हुताशनः ।
समुद्रे वाडवो ह्यग्निः क्षये संवर्तकस्तथा ।
ब्रह्मा वै गार्हपत्यस्तु ईश्वरो दक्षिणस्तथा ।
विष्णुराहवनीयस्तु अग्निहोत्रे त्रयोऽग्नयः ।
ज्ञात्वैवमग्निनामानि गृह्यकर्म समारभेत् " इति ॥

यद्यप्येतद्वचनस्य नामज्ञानमात्रपरतैवावगम्यते तथाऽपि—

" तत्तन्नाम्ना हविर्भुजं स्थापयेत् " ।

इति संग्रहादिवचने नामाकाङ्क्षापूरणस्याऽऽवश्यकत्वादाकाङ्क्षापूरकस्य शास्त्रान्तरस्य चाभावादेतस्य तदर्थताऽपि द्रष्टव्या । स्थापनं तु प्रणवान्ताभिर्व्याहृतिभिः कार्यम् ।

पुनराधेये—"भूर्भुवः सुवरोमित्यग्निं प्रतिष्ठाप्य" इति दर्शनात् । "भूर्भुवः सुवरोमित्यग्निं प्रतिष्ठापयति " इति भरद्वाजोक्तेश्च । एतच्च प्रणवान्तत्वमुदाहृतस्मृतिसारवक्ष्यमाणबौधायनवचनोक्तकेवलव्याहृतिविधानेन विकल्प(ल्प्य)ते । उद्धननाद्यग्निप्रतिष्ठापनान्तं यत्र यत्र " अग्निमुपसमाधाय " इति सूत्रकृद्वदति तत्र । यत्र न वदति तत्र स्वस्थानेऽवस्थिते परिस्तरणादिविधिनैव कार्यम् । अग्निप्रज्वलनमुपसमाधानं सिद्धानुवादमेके मन्यन्ते तेषामौपासने कर्तव्यानां समिन्धनादि, इतरत्रोद्धननादीति द्रष्टव्यम् । एतन्मतमेव युक्तम् " दक्षिणाग्निमुपसमाधाय "

१ ख. °खी नाम धृ° । २ ङ. °हकः । शा° । ३ ङ. °रोमग्निं । ४ ग. ङ. °रोमग्निं । ५ ग. °त्र स्था° । ६ ङ. कार्यः । ७ क. °सनक° ।

इति दर्शनात् । ननु " दक्षिणाग्निमुपसमाधाय " इत्यत्राऽऽहरणासंभवादस्तु प्रज्वलनमुपसमाधानशब्दार्थः, अत्र तु संभवादाहरणमेवोपसमाधानशब्दार्थः, स्थलान्तर आहरणे सिद्धे स्थापनस्यापि सिद्धत्वात्तत्संबन्ध्युद्धननादीनामपि सिद्धिरिति चेन्न । वैरूप्यापत्तेः । नन्वेवं तत्र तत्रानुवादो व्यर्थः, प्रज्वलनस्यार्थत एव सिद्धेरिति चेत् । सत्यम् । तत्र तत्रानुवादस्य स्थाननियमार्थत्वेन वैयर्थ्याभावात् । यत्र " अग्निमुपसमाधाय " इति वचनं तत्रोक्तस्थान एव कार्यम् । अन्यत्र त्वनियमः । उक्तस्थाने तदकरणे सर्वप्रायश्चित्तं नैतदन्यत्रेति द्रष्टव्यम् ।

अग्निप्रज्वलनं नाप्रोक्षितैः काष्ठैः कर्तव्यम् । तदुक्तं धर्मसूत्रे—" नाप्रोक्षितमिन्धनमग्नावादध्यात् " इति । श्रौते स्मार्ते लौकिकेऽग्नावप्रोक्षितमिन्धनं नाऽऽदध्यात् । केचिल्लौकिके नेच्छन्तीत्युज्ज्वलाकृता व्याख्यातम् ।

अग्निप्रबोधने विशेषो धर्मसूत्रे—" न चैनमुपधमेत् " इति । अप्रयत इत्येव । एनमग्निमप्रयतो नोपधमेत् । प्रयतस्य न दोष इत्येके । अपर आहुर्मुखेन नोपधमेत् । 'नाग्निं मुखेनोपधमेत्' इति मानवे दर्शनात् ।

स्मृत्यन्तरे तु—" मुखेनोपधमेदग्निं मुखादग्निरजायत " इति ।

उभयोर्विकल्पः । अपर आह वाजसनेयके श्रौतप्रकरणे—" मुखादग्निरजायत तस्मान्मुखेनोपसमिध्यते " इति दर्शनाच्छ्रौते मुखेनोपधमनमन्यत्र स्मार्तः प्रतिषेध इति । अन्ये तु वैणवेनाऽऽयसेन वा ससुषिरेणोपधमनमिच्छन्ति । एवमग्नेर्मुखव्यापारस्यान्वयाच्छ्रुतिरप्यनुगृहीता भवति । आस्यबिन्दूनां पातनशङ्काभयात्प्रतिषेधस्मृतिरपीति व्याख्यातमुज्ज्वलाकृता ।

संग्रहे—

" धमनीमन्तरा कृत्वा तृणं वा काष्ठमेव वा ।
मुखेनोपधमेदग्निं मुखादग्निरजायत ।
वेणोराग्नि(ग्नेः)प्रसूतत्वाद्वेणुरग्नेश्च[1] पावनः[2] ।
तस्माद्वेणुधमन्यैव धमेदग्निं विचक्षणः " इति ।

श्रुतिरपि—

" तेजो वै वेणुः । तेजः प्रवर्ग्यः । तेजसैव तेजः समर्धयति " इति ।

अग्नेर्वेणुस्पर्शनिषेध[3] उक्तो ग्रन्थान्तरे[4]—" न वेणुनाऽग्निं संस्पृशेत्[5] " इति ।

---

१ ग. 'रग्निश्च । २ ङ. पावकः । ३ ग. 'ग्नेने नि' । ४ ङ. 'न्तरेऽपि-'न । ५ क. 'ग्नि स्पृ' ।

अत्र वर्ज्यान्याह[1] देवलः—

" वस्त्रेण वाऽथ पर्णेन पाणिशूर्पास्यदारुभिः।
न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना " इति।

संग्रहे—

" पर्णेन धमने व्याधिः शूर्पेण धननाशनम्।
पाणिना मृत्युमाप्नोति दारुणा कान्तिनाशनम्।
वस्त्रेण स्त्रीविनाशः स्यादास्येनाऽऽयुष्क्षयो भवेत् " इति।

यत्तु " मुखेन धमनक्रिया " इति मुखधमनस्य कलिवर्जनं तत्साक्षान्मुखधमनस्यैव, न तु—" धमनीमन्तरा कृत्वा " इत्यनेन विहितस्यापीति द्रष्टव्यम्।

प्रतिष्ठापिताग्नेरुपस्थानं ततः कर्तव्यम्। " व्याहृतिभिर्न्युप्योपसमाधायोपतिष्ठते-जुष्टो दमूना अतिथिर्दुरोण इति " इति बौधायनवचनात्।

ततोऽग्नेर्ध्यानं कर्तव्यम्[2]—

" होष्यन्नग्नेर्विजानीयात्स्वरूपं श्रुतिचोदितम्।
अजानता कृतं कर्म तदल्पफलमिष्यते "।

इति गोभिलवचनात्। श्रुतिचोदितं चत्वारि शृङ्गेतिश्रुतिचोदितम्। इदं च स्मृतिचोदितस्य सप्तहस्तश्चतुःशृङ्ग इत्यस्योपलक्षणम्।

ध्याने विशेषः शारदातिलके—

" वैश्वानरं स्थितं ध्यायेत्समिद्धोमेषु देशिकः।
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु " इति।

एतच्च तान्त्रिके कर्मणि नियतम्।

ततोऽन्वाधानम्। तच्चाऽऽचारात्। प्रयोगवैजयन्त्यामप्येवम्। अत्राऽऽचारादन्वाधानमिति। तच्च स्थूलसमिद्‌द्वयाभ्याधानरूपं[3] श्रौते दृष्टत्वात्। तत्र देवतोल्लेखनमपि शिष्टाः कुर्वन्ति, तच्च प्रयोगे वक्ष्यते। यत्त्वत्र यथाऽऽह तदिति परिसमूहनं प्रयोगान्तर उक्तं तत्तुच्छम्। अग्निकार्यप्रकरणोक्तस्य पूर्वत्र प्राप्त्यभावात्।

ततः परिस्तरणादि। तदुक्तं गृह्ये—

" प्रागग्रैर्दर्भैरग्निं परिस्तृणात्यपि वोदगग्राः पश्चात्पुरस्ताच्च भवति दक्षिणानुत्तरान्करोत्युत्तरानधरान्यदि प्रागुदगग्राः" इति।

प्रागग्रैर्दर्भैः पुरस्ताद्दक्षिणतः पश्चादुत्तरत इति परिस्तृणाति हस्वा उदगपवर्गाः पश्चात्पुरस्ताच्च भवन्ति। अपि वा पश्चात्पुरस्ताच्च ये दर्भास्त उदगग्रा

---

१ क. °र्ज्यानाह। २ क. °म्। एत°। ३ ङ. °याज्यभ्या°।

भवन्ति प्रागग्रा एव दक्षिणा उत्तराश्च । प्रागुदगग्रा इत्यत्र प्रत्येकमग्रशब्दः परिसमाप्यते, प्रागग्रा उदगग्राश्चेति। यदि परिस्तरणदर्भाः प्रागुदगग्रा भवन्तीत्येतस्मिन्पक्ष इत्यर्थः । तत्र दक्षिणान्दर्भान्पूर्वापरेभ्यो दर्भेभ्य उपरिशयान्करोति । उत्तरांश्च दर्भानधरानधःशयान्करोतीत्यर्थः। अत्र दर्भैरिति वचनादेकैकस्मिन्भागे चत्वारश्चत्वारो दर्भा आचारात् । न्यायेन तु बहुत्वं त्रित्वे पर्यवस्यतीति वैजयन्त्याम् ।

परिस्तरणदेशावधिमाह कश्यपः—

" दशाङ्गुलप्रमाणेन परिस्तीर्य कुशान्क्रमात् " इति ।

स्मृत्यन्तरे तु पञ्चाङ्गुलः परिस्तरणदेशावधिरुक्तः—

" त्रिभिश्चैव चतुर्भिश्च पञ्चभिः षड्भिरङ्गुलैः ।
सेचनं परिधींश्चैव स्तरणं पूजनं तथा " इति ॥

तेनात्र विकल्पः । अत्राग्निक्षेत्रं बाह्यमेखला वाऽपादानावधिर्द्रष्टव्यः ।

ततो ब्रह्मायतने कुशास्तरणादि । तदुक्तं गृह्ये—

" दक्षिणेनाग्निं ब्रह्मायतने दर्भान्संस्तीर्य मयि गृह्णामि यो नो अग्निरिति द्वाभ्यामात्मन्नाग्निं गृहीत्वोत्तरेणाग्निं दर्भान्संस्तीर्य यथार्थं द्रव्याणि प्रयुनक्ति " इति ।

दक्षिणेन परिस्तीर्णमग्निं ब्रह्मण आयतन उपवेशनदेशे दर्भान्सम्यग्बहुलान्स्तीर्त्वा मयि यो नो अग्निरिति द्वाभ्यामात्मीयमग्निमात्मनि गृहीत्वा तथा संकल्प्य जपित्वोत्तरेणाग्निं दर्भान्सम्यग्बहुलान्स्तीर्त्वा यथार्थं यथाप्रयोजनं द्रव्याणि प्रयुनक्तीत्यर्थः । मयि यो न इत्यग्निं हृदि स्थितं द्वाभ्यां दर्भाभ्यां संस्थाप्येत्यात्मन्नग्निं गृहीत्वेत्यस्यार्थो गृह्यकारिकाकृता प्रदर्शितः स भाष्यविरोधादुपेक्ष्यः । आत्मन्यग्निग्रहणसमये सकुशं दक्षिणहस्तं हृदि धृत्वेति प्रयोगान्तरे यदुक्तं तत्र मूलं चिन्त्यम् । यद्यपि गृह्ये बर्हिर्नोक्तं तथाऽपि श्रौते दर्शनाच्छिष्टसमाचाराच्च ग्राह्यम् ।

तत्प्रमाणे विशेषः स्मृत्यन्तरे—

" यज्ञियानां तृणानां तु अग्रे प्रादेशमात्रतः ।
प्रच्छिद्य प्रतिगृह्णीयान्मुष्टिमात्रं तु बर्हिषि " इति ॥

मुष्टिमात्रमेकहविष्केषु स्थालीपाकादिकर्मसु । अनेकहविष्केषु तु सर्वेषां हविषामासादनं यथा भवति तथा पर्याप्तं बर्हिर्ग्राह्यम् । " अर्थात्परिमाणम् " इति कात्यायनोक्तेः ।

१ ग, ड, °रान्क° । २ क, अथाग्नि° ।

इध्मकाष्ठसंख्या तत्संनहनं च गृह्ये—

" एकविंशतिदारुमिध्मꣳ संनह्यत्याहुतिपरिमाणं वा तस्मिञ्छम्याः परिधीनिध्ममुपसंनह्यति " इति।

एकविंशतिदारुमेकविंशतिकाष्ठमिध्मं संनह्यति संनह्य प्रयुनक्तीत्यर्थः। अथवा यथाश्रुत एवार्थः। अस्मिन्कल्पे दर्व्यासादनात्प्राक्संनहनमात्रं कार्यम्। आसादनं तु येन चार्थ इतिवचनेनोपवेषासादनोत्तरमेव, श्रौते दृष्टत्वात्। संनहनोत्तरमनयोर्निधानमपि कार्यम्। बर्हिषोऽपीध्मात्पूर्वं संनहनं श्रौते दर्शनात्। इध्मेन सह बर्हिषोऽप्यासादनम्। न च प्रोक्षणीपात्रासादनानन्तरमेवेध्माबर्हिषोरासादनमस्त्विति वाच्यम्। स्वसत्तयोपयोगिनां पदार्थानामासादनानन्तरमेव स्वलोपेनोपयोगिनां पदार्थानामासादनस्योचितत्वात्। त्रिविधा[1] ह्युपयोगिनः पदार्थाः। केचन स्वसत्तया, स्वान्यथाभावेन केचन, स्वलोपेन केचन। तत्र दर्व्याज्यस्थालीप्रणीताप्रणयनप्रोक्षणीपात्रोपवेषाः[2] स्वसत्तया होमोपयोगिनः। अश्माहतवस्त्रद्वयोत्तरीयार्थाजिनमौञ्जीमेखलादण्डकौपीनतद्बन्धनार्थसूत्रोपवीतभिक्षापात्रकूर्चाः[3] स्वसत्तया उपनयनोपयोगिनः। स्वान्यथाभावेनोपयोगिनो[4] व्रीहयः स्थालीपाके। स्वलोपेन साधारणहोमोपयोगिनः संमार्गदर्भबर्हिरिध्मावज्वलनदर्भाज्यात्मकाः। सप्त पलाशसमिधः[5] स्वलोपेनोपयोगिन इति। एवं तत्र तत्र ज्ञेयम्। स्वसत्ता स्वस्य पात्रादेः सत्ताऽविकारिस्वरूपम्। स्वान्यथाभावः स्वस्य व्रीह्यादेरन्यथाभावस्तण्डुलौदनादिरूपः। स्वलोपः स्वस्य समिदादेर्लोपो नाशः। एवंप्रकारैर्यज्ञसाधनपदार्थास्त्रिविधा[6] भवन्ति।

यथाऽऽहुर्भट्टाचार्याः—

" स्वान्यथाभावसत्ताभ्यां स्वलोपेन च साधकाः।
त्रिविधाः संप्रयुज्यन्ते कर्मणा विनियोजकाः " इति॥

आहुतीनां परिमाणं संख्या। आहुतिपरिमाणमिव परिमाणं यस्य स

१ ख. °धा हि विनियोजकाः प°। २ क. °वेषा होमोपयोगिनः स्वसत्तया। अ°। ख. °वेषा होमोपयोगिनः स्वसत्तया विनियोजकाः। अ°। ३ क. °कूर्चा उपनयनोपयोगिनः स्वसत्तया। स्वा°। ख. °कूर्चा उपनयनोपयोगिनः स्वसत्तया विनियोजकाः। स्वा°। ४ क. °वेन व्री°। ख. °वेन विनियोजका व्री°। ५ क. °मिध उपनयनोपयोगिनः स्वलोपेनेति। ख. °मिध उपनयनोपयोगिनः स्वलोपेन विनियोजका इति। ६ ग. घ. ङ. °स्त्रिधा।

आहुतिपरिमाणः । उष्ट्रमुखशब्दवन्मध्यमपदलोपी समासः । यावत्य आहुतयस्तावद्दारुको भवेदित्यर्थः । जयादीनुपहोमान्वर्जयित्वाऽङ्गप्रधानाहुतयो गणयितव्या इति केचित् । जयादयोऽपि गणयितव्या इत्यन्ये । तस्मिन्निध्मे शम्याः शम्याकृतिकांस्त्रीन्परिधीनुपसंनह्यति बध्नाति । शम्याशब्द इहाऽऽकृतिवचनः । " शम्याभिः परिदधाति " इत्युत्तरत्र विधानादेव परिधीनां शम्याकृतित्वे सिद्ध इह शम्याग्रहणमुपसंनहनकाल एव शम्याकृतित्वसंपादनं यथा स्यादूर्ध्वं मा भूदित्येतदर्थम् । एकविंशतिदारुत्वपक्षे श्रौतविकृतिषु चतुर्विंशतिदारुत्वस्य दृष्टत्वात्परिधीनधिकानिच्छन्त्येके । अपरे तु संख्यायां परिधीनन्तर्भावयन्ति, तथा दर्शपूर्णमासयोर्दृष्टत्वादिति । आहुतिपरिमाणत्वपक्षे तु प्रत्याहुतिसमिधां दर्शनादभ्यधिकत्वमेव परिधीनां न्याय्यम् । शम्याः परिधीनुपसंनह्यतीत्युच्यमाने पृथगभ्यधिकानामुपसंनहनं प्राप्नोति तन्मा भूदिति तस्मिन्निध्म इत्युच्यते । तस्मिन्नित्येव सिद्ध इध्मग्रहणमिध्मसंख्यायां परिधीनामन्तर्भावार्थम् । इध्मेत्येव सिद्धे तस्मिन्निति वचनमाहुतिपरिमाणत्वेऽभ्यधिका एवेतिख्यापनार्थमिति मातृदत्तोऽपि ।

श्रौतसूत्र इध्मवृक्ष उक्तः—

" पालाशं खादिरं वैकविंशतिदारुमिध्मꣳ संनह्यति " इति ।

परिधिस्वरूपमपि तत्रैवोक्तम्—

" त्रयः परिधयोऽनियतवृक्षाः सत्वक्का आर्द्रा भवन्ति ते हि सरसा इति विज्ञायते शुष्का भवन्ति मेध्यत्वायेति विज्ञायते स्थविष्ठो मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्योऽणिष्ठो ह्रसिष्ठ उत्तरार्ध्यः " इति ।

अनियतवृक्षा नानाजातीयवृक्षा उपादानं येषां ते । सत्वक्कास्त्वक्सहिताः । एतच्च विशेषणं गार्ह्ये न संभवति । सूत्रकृता परिधीनां शम्याकृतित्वविधानात्तस्य च विना तक्षणमसंभवात् । युक्त्या स्थूलकाष्ठमूलभागस्य सूक्ष्मत्वमग्रभागस्य स्थूलत्वं शम्याकृतित्वार्थं तक्षणेन कर्तव्यमेव । एवं च श्रौतसूत्रदृष्टायाः सत्वक्तायाः शम्याकृतिविधिना बाधः । ते हि सरसा इति विज्ञायत इत्ययमर्थवादः । आर्द्रा भवन्तीत्यस्मिन्नर्थे शुष्का भवन्तीत्यस्मिन्नर्थे मेध्यत्वायेति विज्ञायत इत्ययमर्थवादः । एतच्चार्थवादद्वयप्रदर्शनं कर्माङ्गत्वज्ञानार्थम् । उक्तं च बौधायनेन—" अर्थवादैरभ्युदयाय " इति । एवं चाऽऽर्द्राः शुष्का वा परिधयः कर्तव्या इति पक्षद्वयं ज्ञेयम् । अर्थवादाज्ञाने यजुर्भ्रेषप्रायश्चित्तं भुवः स्वाहेत्यौपासनाग्नावेव हुत्वा सर्वप्रायश्चित्तं जुहुयात् ।

स्थविष्ठत्वं स्थूलतरत्वं तन्मध्यमस्य परिधेः। अणीयस्त्वं सूक्ष्मत्वं मध्यमापेक्षया दक्षिणार्ध्ये। एवं द्राघीयस्त्वं दीर्घत्वमपि। अणिष्ठत्वं सूक्ष्मतरत्वं ह्रसिष्ठत्वं ह्रस्वतरत्वम्। एते मध्यमापेक्षयैवोत्तरार्ध्ये। अर्धशब्दो भागवाची। दक्षिणभागे भवो दक्षिणार्ध्यः। उत्तरभागे भव उत्तरार्ध्यः।

इध्मस्य परिधीनां परिमाणं वैलङ्किकात्यायनावाहतुः—"द्विप्रादेश इध्मस्त्रिप्रादेशाः परिधयः" इति।

बौधायनगृह्ये (+तु परिधीनामरत्निमात्रत्वमुक्तम्—"अरत्निमात्राः परिधयः शुष्का आर्द्रा वा सत्वकाः" इति। एतच्चाऽऽयतनस्याल्पमानत्वेऽत्रोपयुक्तं भवतीति द्रष्टव्यम्। इध्मस्य प्रादेशपरिमितत्वमप्युक्तं तेनैव—"प्रादेशमात्राण्येकविंशतिमिध्मदारूणि भवन्तीति ब्राह्मणेन व्याख्यातम्" इति।

एतस्मात्सूत्रादेकविंशतिसंख्यातः परिधीनां भिन्नत्वम्। इदं च बौधायनीयानामेव नास्माकम्। "तस्मिञ्छम्याः परिधीनिध्म उपसंनह्यति" इत्यत्रत्येध्मग्रहणेन सूत्रकृता भेदाभावस्यैव ज्ञापितत्वेन तद्विरुद्धभेदस्यास्वीकारात्।) द्विप्रादेश इध्मः प्रादेशमात्रो वेति।

परिधीनां बाहुमात्रत्वमप्युक्तं भरद्वाजेन—"शम्यामात्रा बाहुमात्रा वा परिधयः" इति। शम्या षट्त्रिंशदङ्गुला। द्विचत्वारिंशदङ्गुलो बाहुः।

संग्रहे—

"समित्पवित्रं वेदश्च त्रयः प्रादेशसंमिताः
इध्मस्तु द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः।
स्मार्ते प्रादेश इध्मो वा द्विगुणः परिधिः स्मृतः" इति।

प्रादेशः प्रादेशप्रमाणः। द्विगुणो द्विप्रादेशः परिधिरित्यर्थः। परिधिरिति जातावेकवचनम्। एतस्माद्वचनाद्गृह्य इध्मस्य पाक्षिकं प्रादेशत्वं परिधीनां पाक्षिकं द्विप्रादेशत्वं च ज्ञेयम्। अयं च पक्षोऽसंभवे ज्ञेयः। परिधीनां न्यूनाधिकभाव उक्तो बौधायनगृह्ये—"तिस्रः शम्याः परिधीन्करोति[2] मध्यमाङ्गुलिरनामिका कनिष्ठिका" इति। प्रमाणानीति शेषः। बाहुमूलमारभ्य मध्यमाङ्गुल्यग्रान्तपरिमितो दक्षिणः। बाहुमूलमारभ्यानामिकाग्रान्तपरिमितो मध्यमः। बाहुमूलमारभ्य कनिष्ठिकाग्रान्तपरिमित उत्तर इत्यर्थः। अन्यत्स्प-

+ धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. ख. पुस्तकयोः—"प्रादेशपरिमितत्वमप्युक्तम्" इति ग्रन्थो वर्तते।

१ घ. ङ. 'ण वैल'। २ क. ख. 'ति बाहुमूलमारभ्य म'।

ष्टार्थम् । वस्तुतस्तु शम्याशब्दो यथाऽऽकृतिग्राहकस्तथा षट्त्रिंशदङ्गुलप्रमाणस्यापि । एवं च नात्र श्रौते उक्ते द्राघीयस्त्वह्रसिष्ठत्वे भवतः । नापि च मध्यमाङ्गुलिरनामिका कनिष्ठिकेति बौधायनोक्तौ दक्षिणोत्तरपरिध्योः प्रमाणभेदः । एवं च सर्वेषां षट्त्रिंशदङ्गुलात्मकमेव प्रमाणमिति ज्ञेयम् ।

इध्मस्य संनहनं शुल्बेनैव कार्यं श्रौते दर्शनाच्छिष्टाचाराच्च ।

शुल्बकरणं तु श्रौतसूत्रे—

"समूलानाममूलानां वा दर्भाणामयुग्धातु शुल्बं कृत्वा प्रागग्रमुदगग्रं वा निदधाति" इति ।

अयुग्धातु विषमधातु । धातुः संधिः । अवयव इति केचित् । अत्रायुग्धात्वित्यविशेषश्रवणादिध्मबन्धनपर्याप्तं विषमधातुकं शुल्बं कार्यम्, न तु बर्हिर्बन्धनार्थकशुल्बवत्त्रिधातुत्वपञ्चधातुत्वनियमः ।

ततः पात्रासादनादि । तदुक्तं गृह्ये—

"दर्वीं कूर्चमाज्यस्थालीं प्रणीताप्रणयनं येन चार्थः सकृदेव सर्वाणि यथोपपादं वा" इति ।

कूर्चः सावित्रीवाचनार्थमासनम् । येन चार्थ इत्यनुक्तानामपि प्रयोजनवतामुपसंग्रहार्थम् । सकृदेव युगपदेव । सर्वाण्युक्तान्यनुक्तानि च प्रयोजनवन्ति पात्राणि द्रव्याणि च प्रयुनक्ति । यथोपपादं यथासंभवं वेत्यर्थः । "यदेकमेकꣳ संभरेत्पितृदेवत्यानि स्युः" इति श्रुत्या पित्र्येष्वेकैकस्यैव पात्रस्य संभरणविधानात्पित्र्येषु मासिकश्राद्धाष्टकादिष्वेकमेकं सादनीयम् । "यत्सह सर्वाणि मानुषाणि" इति श्रुत्या मानुषेषु युगपत्पात्रसंभरणविधानादुपनयनादिषु मानुषेषु युगपत्पात्रसादनम् । "द्वे द्वे संभरति" इतिश्रुत्याऽवशिष्टेषु दैवेषु कर्मसु द्वंद्वं पात्रासादनमिति व्यवस्थैव वा यथोपपादशब्दार्थः । कूर्चस्य तूपनयन एवोपयोगः । उत्तरत्र पात्राण्युत्तानानि कृत्वेतिविधानादासादने न्यग्बिलता गम्यते ।

ततो ब्रह्मोपवेशनादि । तदुक्तं गृह्ये—

"एतस्मिन्काले ब्रह्मा यज्ञोपवीतं कृत्वाऽप आचम्यापरेणाग्निं दक्षिणाऽतिक्रम्य ब्रह्मसदनात्तृणं निरस्याप उपस्पृश्याग्निमभिमुख उपविशति" इति ।

एतस्मिन्काले पात्रासादनान्तरकाले ब्रह्मर्त्विग्यज्ञोपवीतं कृत्वाऽप आच-

१ क. ख. ग. ङ. °ते द्रा° । २ ग. घ. ङ. °ध्मसं° । ३ ग. घ. ङ. °पात्रसा° ।

म्याग्नेरदूरेणापरभागेण दक्षिणतो दक्षिणेन पदाऽतिक्रम्य ब्रह्मसदनस्य पश्चात्प्राङ्मुखः स्थित्वा स्वसदनात्तृणं निरस्याप उपस्पृश्याग्निमभिमुख उपविशति। एतस्मिन्काल इति वचनं वैदिकेऽपि पात्रासादनानन्तरमेव ब्रह्मणः प्रवेशो नार्वागित्येतदर्थम्। यज्ञोपवीतग्रहणं कर्माङ्गस्याऽऽविकाजिनस्य वाससो वोपादानार्थम्। पित्र्ये वा तस्य प्राचीनावीतित्वनिराकरणार्थम्। अथ वा यज्ञोपवीतस्यापि प्राधान्यख्यापनार्थम् । तेन ब्रह्मालाभे तत्स्थाने यज्ञोपवीतं वा स्यात्। "अथैकेषामुक्तं छत्रं यज्ञोपवीतं कमण्डलुं वा" इति। अथवैतस्मिन्काल इति वचनमनित्यः पुरुषो नित्यः काल इतिज्ञापनार्थम्। तेन च्छत्रादीनामेको वा ब्रह्मणः स्थानेऽवश्यं स्यादिति । अप आचम्येत्यनेन शुद्धस्यापि कर्माङ्गं पुनराचमनं विधीयते। अपरेणेत्यनेन पात्रहोमकर्तुरन्तरङ्गत्वं बाध्यते। ब्रह्मणः सदनमासनं तस्मात्तृणं निरस्येदित्यर्थः । ब्रह्मेति वचनमन्येषामप्यासनानि सन्तीति गमयति। तेन सर्वैरप्यृत्विग्भिः स्वस्वासन उपविश्यैव कर्म कर्तव्यं न तु केवलं भूमिष्ठैरिति । यजमानेन श्रौते दर्शनात्स्वासनात्तृणनिरसनमपि कार्यम्। ब्रह्मसदनात्तृणं निरस्येति दर्शनात्तृणमयमासनमिति गम्यते। स्मृतित एव निरसनोत्तरमुदकस्पर्शे सिद्धे पुनर्वचनं श्रौतप्रायश्चित्तार्थम्। एतच्च यज्ञोपवीतकरणादिकं सर्वं स्वकर्म यजमानेन वृतः सन्नेव कुर्यात्। नावृता याजयेयुरिति वरणरहितस्य कर्मणि प्रवृत्तिनिषेधात् । ऋत्विक्त्वं तु वरणभरणाधीनमित्यृत्विगधिकरणे मीमांसकैर्विस्तरेण प्रपञ्चितमस्ति तत्तत्र द्रष्टव्यम्। श्रौते तु सत्रे वरणभरणाभावेऽपि होत्रादिसंज्ञानिर्वाहार्थं संकल्पविशेषस्यापि निमित्तता मीमांसकैरङ्गीकृता।

ततः पवित्रकरणादि। तदुक्तं गृह्ये—

"समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कृत्वाऽन्येन नखाच्छित्त्वाऽद्भिरनुमृज्य पवित्रान्तर्हिते पात्रेऽप आनीयोपबिलं पूरयित्वोदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूयोत्तरेणाग्निं दर्भेषु सादयित्वा दर्भैरपिदधाति" इति।

समौ वर्णरूपाभ्यां, दैर्घ्येण साम्यस्य तु प्रादेशमात्रावित्यनेनैव सिद्धत्वात्। प्रच्छिन्नाग्रावित्यत्र प्रशब्दो दुर्लक्ष्यसाग्रतानिवृत्त्यर्थः । प्रादेशमात्रौ प्रादेशप्रमाणावेतादृशौ यौ दर्भौ तौ पवित्रौ पवनयोग्यौ संस्कारैः करोति। पवित्रशब्दो यद्यपि विशेष्यलिङ्गोऽस्ति तथाऽपि पवनसाधने नपुंसक एव दृश्यते । द्विवचनं तूद्भूतावयवत्वात्। भूमौ तृणं काष्ठं वाऽन्तर्धाय दर्भावग्रे प्रादेशमात्राववशेषयंस्तदुपरि धृत्वा तच्च नखादन्येनासिदेन काष्ठेन वा छित्त्वा पवनयोग्यौ करोति। कृत्वाऽद्भिरनुमार्ष्टि मूलादारभ्याग्रपर्यन्तं सोदकेन हस्तेन

मार्ष्टि। एतच्च धूल्यपसारणार्थम्। तेन धूल्यभावे न कार्यमिति केचित्। अदृष्टार्थं कर्तव्यमेवेत्यन्ये।

ततः पात्रं गृहीत्वा पवित्राभ्यामन्तर्हिते तस्मिन्प्रणीताप्रणयनपात्रेऽप आनीयोपबिलं पूरयेत्। यथा न स्कन्दन्त्युत्पवनादिना। तत उदगग्राभ्यां त्रिरुत्पूयोत्तरतोऽग्नेः संनिकृष्टतरे देशे दर्भेषु सादयित्वा दर्भैरपिदधातीत्यर्थः। उदगग्राभ्यां पवित्राभ्यामित्यत्र पवित्रग्रहणं हस्तयोरुदगग्रताव्यावृत्त्यर्थम्।

" समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति "

इत्येतस्मिन्कात्यायनसूत्रे देवयाज्ञिकपितृभूतिहरिस्वामिनः पवित्रयोरेव समानत्वोक्तेश्छेदनेन पवित्रे एव समे कार्ये न तु समप्रमाणौ कुशौ छित्त्वेत्यत्राऽऽग्रहः। भिन्नप्रमाणावपि च्छित्त्वा समौ कार्याविति तात्पर्यार्थ इति विशेषमाहुः।

ततः प्रोक्षणीसंस्कारादि। तदुक्तं गृह्ये—

" तिरःपवित्रं प्रोक्षणीः सꣳस्कृत्य यथापुरस्ताद्बिलवन्त्युत्तानानि
कृत्वा विषायेध्मं त्रिः सर्वाभिः प्रोक्षति " इति।

तिरःपवित्रं पवित्रे अन्तर्धाय प्रोक्षणीः संस्कृत्य। यथापुरस्तात्प्रणीतावत्। बिलवन्ति पात्राण्युत्तानानि कृत्वा विषाय विस्रस्येध्मं सर्वाभिः प्रोक्षणीपात्रस्थाभिरद्भिस्त्रिः सपवित्रेण पाणिना पात्राणि प्रोक्षति। प्रोक्षणीः संस्कृत्येत्येव सिद्धे तिरःपवित्रमिति वचनमितरधर्मनिवृत्त्यर्थम्। तेन तूष्णीं पात्रस्य त्रिः प्रक्षालनमपामानयनं करणत्वेन पृथिव्यभिध्यानसमकालं पूरणं प्रणीतास्विवात्र न भवतीति। सर्वाभिरित्यवशेषप्रतिषेधार्थम्।

प्रोक्षणलक्षणं संग्रहे—

" उत्तानेन तु हस्तेन कर्तव्यं प्रोक्षणं भवेत् " इति।

ततो दर्वीनिष्टपनादि। तदुक्तं गृह्ये—

" दर्वीं निष्टप्य संमृज्य पुनर्निष्टप्य निदधाति संमार्गानभ्युक्ष्याग्नावादधाति "इति।

दर्वीमग्नौ निष्टप्य संमृज्य पुनरग्नौ निष्टप्य निदधाति। जुहूवत्संमार्ग इत्युपदिशन्ति। चरुहोम उपस्तरणाभिघारणाद्यर्थं स्रुवस्याप्यपेक्षितत्वात्तस्य च संस्कृतस्यैवोपस्तरणाभिघारणादिरूपकर्मनिष्पादने योग्यत्वादासादनप्रोक्षणनिष्टपनसंमार्गादिरूपाः संस्कारा दर्वीवत्स्रुवस्यापि कार्याः। ते च दर्व्या सहैव। संमार्गस्तु श्रौतस्रुवसंमार्गवत्प्रथममेव कर्तव्यः। निधानं दर्भेष्विति केचित्। संमार्गदर्भानद्भिरभ्युक्ष्याग्नौ प्रहरतीत्यर्थः।

अभ्युक्षणलक्षणं संग्रहे—

"मुष्टी कृत्वा तु तत्तोयमभ्युक्षणमिति स्मृतम्" इति ।

तत आज्यविलापनादि । तदुक्तं गृह्ये—

"आज्यं विलाप्य पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्योदीचोऽङ्गारान्निरू(रु)ह्य तेष्वधिश्रित्यावद्योत्य दर्भतरुणाभ्यां प्रत्यस्य त्रिः पर्यग्नि कृत्वोदगुद्वास्याङ्गारान्प्रत्यू(त्यु)ह्योदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय पवित्रे अग्नावाधाय" इति ।

आज्यं बहिरेव विलाप्य द्रवीकृत्य पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निर्वपेत् । पुनराज्यग्रहणं प्राधान्यख्यापनार्थम् । तेन गव्यमाज्यं स्यात् । द्रव्यान्तरसंसर्गप्रतिषेधार्थं च । तेन शोधयित्वोपरिपवनेन ग्राह्यम् । तत उदीच उदग्भागस्थानङ्गारान्केनचित्काष्ठेन निरू(रु)ह्य तेषु निरूढेष्वङ्गारेष्वाज्यमाधिश्रित्यावद्योत्य दर्भैरवाचीनज्वालैरुपरि ज्वलयित्वा दर्भतरुणाभ्यां दर्भाग्राभ्यां प्रत्यस्य तस्मिंस्ते प्रास्योल्मुकेन त्रिः पर्यग्नि कृत्वोत्तरतस्तदुद्वास्य तानङ्गारांस्तेनैव काष्ठेन प्रत्यू(त्यु)ह्याग्नौ पुनः प्रक्षिप्योदगग्राभ्यां पवित्राभ्यां पुनराहृत्योत्पुनाति । एवमत्र क्रमः । आज्यस्थाल्यां पवित्रे पश्चाद्भागमारभ्य प्राग्भागं नीत्वा पुनः पश्चाद्भागमानीयोत्पुनाति । पुनर्द्विरेवमेव । श्रुत्यैव प्रत्यगपवर्गताऽत्र विहितोत्सर्गस्य बाधिका । ब्राह्मणे—"पुनराहारमेवमिव हि प्राणापानौ संचरतः" इति पवित्रयोः प्राणापानरूपयोः संचार उक्तः । प्राणो हि प्रागपवर्गं संचरति तस्य मुखनासिकानिरोधेन यतो निरोधः । अपानः प्रत्यगपवर्गं तस्य निरोधोऽपानद्वारलिङ्गनिरोधेन यतो दृश्यते । तस्मात्प्राणापानगतिभ्यां क्रमिकाभ्यां पुनराहारे प्रत्यगपवर्गता न निवार्येति । पुनराहारमिति णमुल्प्रत्ययान्तम् । पुनराहारोऽङ्गमुत्पवनस्य । पुनराज्यग्रहणं नवनीतस्यापि पितृयज्ञ उत्पवने पुनराहारधर्मो मा भूदित्येतदर्थम् । अपरे पूर्वमाज्यग्रहणं तूष्णीकेनाऽऽज्येनेत्यत्रायमेव संस्कारविधिर्न तु मन्त्रवर्जं दर्शपौर्णमासिक इत्येतदर्थमित्याहुः ।

पवित्रे अग्नावाधायेत्यत्र पुनः पवित्रग्रहणं विस्रस्य पृथग्भूतयोः सहाभ्याधानार्थम् । व्यक्तं च बौधायनीये—"पवित्रे विस्रस्याद्भिः संस्पृश्याग्नावनुप्रहरति" इति । यस्तु पर्यग्निकरणे दर्भद्वयोल्मुकयोः समुच्चयो गृह्यकारिकाकृतोक्तः स प्रमाणाभावादुपेक्ष्यः ।

१ ग. घ. ङ. 'त्यूह्य पु' । २ ग. घ. ङ. 'भ्यां पु' । ३ ग घ. ङ. 'हृत्याऽऽहृत्यो' ।

आज्यनिर्वपणदेश आपस्तम्बगृह्ये—"अपरेणाग्निं पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरुप्य" इति।

प्रयोगपारिजाते—

"अथाऽऽज्यस्थालीमादाय तस्यामाज्यं निषिच्य च।
उदगग्नेर्निरूढेषु त्वङ्गारेषु सभस्मसु॥
विलाप्यैतदधिश्रित्य अवज्वल्य ज्वलत्तृणैः।
आज्ये प्रत्यस्य दर्भाग्रे अङ्गुष्ठपर्वमात्रके" इति।

अत्रोक्तनिरूढशब्दार्थः स्मृतिदीपिकायां व्याख्यातः—

"निरूढः स्याद्विभक्तोऽग्निर्यः परिस्तरणाद्बहिः।
अनिरूढः स वै वह्निर्यः परिस्तृतिमध्यगः" इति।

एतच्च यत्राग्नेः प्रत्यूहनविधानमस्ति तत्परम्। यत्र तु प्रत्यूहनविधानं नास्ति तत्राऽऽयतनमध्य एव पृथक्करणं निरूढशब्दार्थो विद्यारण्यश्रीपादोक्तेः।

पर्यग्निकरणे तृणनिरसनविशेषमाह संग्रहकारः—

"पर्यग्निकरणायाग्निमनिरूढाद्यदाऽऽहरेत्।
बहिर्निरस्य तच्छेषं निरूढाद्यदि योजयेत्" इति।

सुदर्शनभाष्येऽपि—

"आज्यसंस्कारार्थानामङ्गाराणां प्रत्यूहनविधानादपवृत्ते कर्मणि लौकिकः संपद्यत इति न। अवद्योतनपर्यग्निकरणाग्न्योस्तु यदाऽऽयतनस्थादुपादानं तदाऽपवृत्तकर्मत्वेन लौकिकत्वात्त्यागः। यदा तु निरूढात्तदा तस्मिन्नेव प्रक्षेपः" इति।

ततः परिधिपरिधानादि। तदुक्तं गृह्ये—

"शम्याभिः परिदधात्यपरेणाग्निमुदीचीनकुम्बां मध्यमां निदधाति दक्षिणेनाग्निꣳ संस्पृष्टां मध्यमया प्राचीनकुम्बामुत्तरेणाग्निꣳ संस्पृष्टां मध्यमया प्राचीनकुम्बामपरेणाग्निं प्राङ्मुख उपविशति" इति।

शम्याभिः शम्याकृतिभिः परिधिभिः परिदधाति। कथम्। अपरेणाग्निमुदीचीनकुम्बां मध्यमां निदधाति। कुम्बः स्थूलप्रदेशः। दक्षिणेनाग्निं मध्यमया संस्पृष्टां प्राचीनकुम्बां दक्षिणां शम्यां निदधाति। उत्तरेणाग्निं मध्यमया संस्पृष्टां प्राचीनकुम्बामुत्तरां शम्यां निदधाति। अधरोत्तरभावः परिस्तरणवदत्रापि द्रष्टव्यः। इहाधिकारादेव सिद्धे त्रीण्यग्निग्रहणानि केवलस्याग्नेः संप्रत्ययः स्यात्परिस्तरणस्य मा भूदित्येतदर्थम्। तेनोपर्येव परिस्तरणानामग्नेः

परिधिभिः परिधानं कार्यं न बाह्यत इति । इतरथा पात्रासादनवद्ब्रह्मसदनवच्च बाह्यतः प्राप्नुयात् । दक्षिणोत्तरयोः पुनर्ग्रहणं संस्पृष्टामिति संशब्दश्चाग्रेर्दक्षिणत उत्तरतश्च तयोर्निधानं सम्यक्स्पर्शनेनाधरोत्तरभावश्च यथा स्यादित्येतदर्थम् । इतरथा मध्यमस्यैव दक्षिणत उत्तरतश्च निधानं स्पर्शमात्रं च प्राप्नुयात् । अपरेणाग्निं प्राङ्मुख उपविशतीत्येतत्सूत्रं दक्षिणतो यज्ञोपवीत्याचान्तः कुमार इत्येतस्मिन्नुत्तरसूत्रेऽन्वेति । तेन कुमारस्य प्राङ्मुखताऽपरेणाग्निं प्राङ्मुख उपविशतीत्येतस्य सूत्रस्य वैयर्थ्यापत्तिपरिहारश्च सिध्यति । एतच्च संस्कार्यमात्रोपलक्षणम् । तेन यत्र संस्कार्या पत्नी तत्र तस्या अपि पत्युर्दक्षिणत उपवेशने प्राङ्मुखत्वं भवति। अग्र उपविश्येतिवचनमुपवेशनान्वारम्भयोः कालाऽव्यवधानार्थम् । अथवाऽपरेणाग्निं प्राङ्मुख उपविशतीति भिन्नं सूत्रम् । दक्षिणतो यज्ञोपवीत्याचान्तः कुमार उपविश्यान्वारभत इति भिन्नम् । तत्र पूर्वमर्थादाचार्यपरमुत्तरत्र कुमारग्रहणादन्यस्य चासंभवात् । अस्मिन्पक्षे पूर्वसूत्रं कर्मवशेनायं नियम इतिख्यापनार्थं ज्ञेयम् । अग्निग्रहणं त्विह परिस्तीर्णस्याग्नेः संप्रत्ययार्थम् ।

यत्तु[1] स्मृत्यन्तेर[2] उक्तम्—

" त्रिभिश्चैव चतुर्भिश्च पञ्चभिः षड्भिरङ्गुलैः ।
सचनं परिधींश्चैव स्तरणं पूजनं तथा "

इति चतुरङ्गुलात्मकपरिधिपरिधानदेशावधिकथनम् । यच्च कश्यपोक्तम्—

" नवाङ्गुलप्रमाणेन विधिना परिधीन्न्यसेत् "

इति नवाङ्गुलात्मकपरिधिपरिधानदेशावधिकथनं तच्छाखान्तरविषयं न सत्याषाढसूत्रानुसारिविषयम् । भाष्यकृता परिस्तरणानामुपर्येव परिधिपरिधानस्योक्तत्वात् । परिधिपरिधानोत्तरमेव बर्हिरास्तरणं कार्यमन्यथा पवित्राभ्याधानपरिधिपरिधानयोर्ल्यपा बोधितस्याऽव्यवहितानन्तर्यस्य बाधापत्तेः । एतेनोत्पवनात्प्रागेव बर्हिस्तरणं कैश्चिदुक्तं तन्निरस्तं द्रष्टव्यम् ।

बर्हिरास्तरणोत्तरमाज्यस्थाल्यास्तत्र सादनमुपवेषनिरसनं प्रणीतोद्वासनादनन्तरं ब्रह्मयजमाननिष्क्रमणात्प्रागेव, श्रौते दृष्टत्वात् । प्रणीतोद्वासनस्याक्रियायामुत्तरपरिषेकान्ते ।

ततः परिषेकादि । तदुक्तं गृह्ये—

" अथ परिषिञ्चत्यदितेऽनुमन्यस्वेति दक्षिणतः प्राचीनमनुमतेऽनुम-

१ ख 'त्तु गृह्यकारिकासु त्रि' । २ ग. घ. ङ. 'न्तरोक्त' ।

न्यस्वेति पश्चादुदीचीन९ सरस्वतेऽनुमन्यस्वेत्युत्तरतः प्राचीनं देव सवितः प्रसुवेति सर्वतः प्रदक्षिणं परिषिच्येध्ममङ्क्त्वाऽभ्यादधात्ययं त इध्म आत्मा जातवेदस्ते० समेधय स्वाहा " इति ।

अथानन्तरमाचार्यः परिषिञ्चति सर्वतः सिञ्चति । कथम् । अदितेऽनुमन्यस्वेति दक्षिणतोऽग्नेः प्राचीनमुदकं सिञ्चति । सरस्वत इति च्छान्दसे ह्रस्वत्वे संबुद्धिलोपो गुणश्च । देव सवितः प्रसुवेति सर्वतः प्रदक्षिणं तमग्निं सिञ्चति। सावित्रहोममन्त्रस्याऽऽदिग्रहणमेतत् । छन्दोगानां तथा दर्शनादित्येके, तन्नेत्युत्तरत्र प्रतिपादयिष्यामः । अथशब्दः कुमाराधिकारनिवृत्त्यर्थः । सर्वमाचार्यकर्तृकं यावदुक्तमेव कुमारस्यार्थवत्वात् । प्रदक्षिणवचनं प्रत्येकं सर्वत्र मा भूत्सकृदेव परिषेको यथा स्यादित्येतदर्थम् । परिषिच्यैवमग्निमिध्ममाज्येन दर्व्याऽङ्क्त्वा प्रज्वलिताग्नौ हस्तेनाभ्यादधात्ययं त इध्म इत्यनेन मन्त्रेण। इध्माभ्याधानस्याजुहोतिचोदितत्वेऽपि वचनात्स्वाहाकारः । एवं सर्वसमिदाधाने द्रष्टव्यम् । परिषिच्येति वचनममन्त्रकेऽपि परिषेके दक्षिणतः प्राचीनमित्यारभ्य सर्वतः प्रदक्षिणमित्यन्तः परिषेको यथा स्यान्न तु सर्वतः प्रदक्षिणमित्येतावानेवेतिख्यापनार्थं परिषेकेध्माभ्यञ्जनयोर्मध्ये कर्मान्तरप्रतिषेधार्थं च । तेन सचरुतन्त्रहोमे परिषेकात्पूर्वमेव चरूद्वासनं सिद्धं भवति ।

संग्रहे समिद्धोमे विशेषः—

" मूलतः कर्मनाशः स्यान्मध्यतः पुत्रनाशनम् ।
अग्रेण मुञ्चतो व्याधिरेकपाणेर्धनक्षयः ॥
मूलमध्यममध्येन समिद्धोमस्य लक्षणम् " इति ।

मूलतो मूलेन । मध्यतो मध्येन । मूलतो मध्यत इत्युभयत्रापि मुञ्चत इत्येतस्यान्वयः । मूलमध्यमप्रदेशयोर्मध्यभागे धृत्वा समिधो होतव्याः । एतदेव समिद्धोमस्य समिदभ्याधानस्य लक्षणं ज्ञेयमिति ।

" अत्रैकपाणिना समिद्धोमनिषेधेन सव्यपाण्यन्वारब्धदक्षिणपाणिना होमविधिर्गम्यते " इति प्रयोगपारिजाते ।

स्रुवधारणे विशेषो विधानमालायाम्—

" अग्रे धृतो विनाशाय धृतो मध्ये प्रजाक्षयी ।
मूले धृतस्तु होतुस्तु मृतिं दद्यात्स्रुवो ध्रुवम् ॥

१ ख. घ. ङ. 'स्यार्थेयत्वा' । ग. 'स्यार्थेयत्वा' । २ क. 'नमार' ।

अग्रान्मध्याच्च मध्ये तु मूलान्मध्याच्च मध्यतः ।
स्रुवः प्रधार्यो विद्वद्भिः सर्वकामार्थसिद्धये " इति ॥

**अयमर्थः—दण्डस्य पञ्च भागान्कृत्वा द्वितीयभागे चतुर्थभागे वा स्रुवधारणं कार्यमिति ।**

**प्रयोगार्णवे—**

" कठिनद्रव्यहोमे तु मुष्टिना धारणं स्रुचः ।
द्रवद्रव्यस्य होमे तु उत्तानाङ्गुलिभिः स्मृतम् " इति ॥

**स्रुवस्याप्युत्तानाङ्गुलिभिरेव धारणम् । एतच्च स्रुक्स्रुवधारणं सौम्यतीर्थेन कार्यम् ।**

" निर्वपणसंस्रवणलाजहोमनित्यहोमान्कायतीर्थेन कुर्याद्दैवेन दैविकं पित्र्येण पैतृकं कमण्डलुस्पर्शनं नवान्नप्राशनं स्रुवग्रहणं दैविकं सौम्येनाऽऽग्नेयेन प्रतिग्रहं कुर्यात् "

**इति बौधायनोक्तेः । स्रुवग्रहणं स्रुगुपलक्षणम् । अत्र दैविकमिति विशेषणात्पित्र्यं स्रुवधारणं पितृतीर्थेनैव ।**

**सौम्याग्नेयतीर्थलक्षणं बौधायनोक्तम्—**

" अङ्गुलिमूले सौम्यं करमध्य आग्नेयम् " इति ।

**दर्व्यामप्येवं तस्याः स्रुवस्थानीयत्वात् ।**

**तत आघारहोमादि । तदुक्तं गृह्ये—**

"अथ दर्व्या जुहोत्युत्तरं परिधिसंधिमन्ववहृत्य दर्वीं प्रजापतये मनवे स्वाहेति मनसा ध्यायन्दक्षिणाप्राञ्चमृजुं दीर्घꣳ संततं दक्षिणं परिधिसंधिमन्ववहृत्येन्द्राय स्वाहेति प्राञ्चमुदञ्चमृजुमाघारावाघार्याऽऽज्यभागौ जुहोत्यग्नये स्वाहेत्युत्तरार्धपूर्वार्धे सोमाय स्वाहेति दक्षिणार्धपूर्वार्धे तावन्तरेणेतरा जुहोति युक्तो वह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् । त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान्पुरुषान्सनेम स्वाहा । या तिरश्ची निपद्यसेऽहं विधरणी, इति । तां त्वा घृतस्य धारयाऽग्नौ संराधनीं यजे स्वाहा । संराधन्यै देव्यै स्वाहा प्रसाधन्यै देव्यै स्वाहा " इति ।

**अथेध्माधानानन्तरं होमान्वक्ष्यमाणान्दर्व्या जुहोति । अथशब्द इध्माभ्याधानाघारयोः संबन्धार्थः । तेन यत्र यत्राऽऽघारौ तत्रैवेध्माभ्याधानं नान्यत्र । तेनाऽऽपूर्विक इध्माभ्याधानं नेति सिद्धं भवति । एवमिध्माभ्यञ्जनमपि दर्व्यैव**

भवतीति च। उत्तरं परिधिसंधिमनु उत्तरं परिधिसंधिमनु लक्षयित्वा तेन यथाऽवहृत्य प्रवेश्य दर्वीं प्रजापतय इत्यनेन मन्त्रेण मनसा ध्यायन्ननुच्चारयन्वाचा दक्षिणाप्रागपवर्गमकुटिलं संततमविच्छिन्नं जुहोत्याघारयतीत्यर्थः। दर्वीग्रहणं स्थाल्या सहान्ववहृत्य पश्चादुपादाय होमप्रतिषेधार्थम्। तेन पूर्वमेवोपादाय प्रवेश्याऽऽघारयितव्यम्। पूर्ववद्दक्षिणं परिधिसंधिमन्ववहृत्य दर्वीमिन्द्राय स्वाहेत्यनेनोत्तराप्रागपवर्गमकुटिलं दीर्घं संततं जुहोत्याघारयति। मनसा ध्यायन्निति निवर्तते। तस्मान्मनसा प्रजापतये जुह्वतीतिश्रुत्या प्राजापत्याघार एव तस्योक्तत्वात्। अतो वाचैवाभिघारयति। आघारावाघार्येतिवचनमनन्तरोक्तयोर्होमयोराघारसंज्ञार्थम्। तेन ज्योतिष्मत्यग्नौ होमः सर्वेषामिध्मकाष्ठानां संस्पर्शनं च सिद्धं भवति। दक्षिणाप्राञ्चमितिवचनं तिर्यक्त्वनिरासार्थम्। ऋजुमितिवचनं जिह्मत्वनिरासार्थम्। दीर्घमितिवचनं शास्त्रान्तरोक्तस्य द्वेष्यस्य ह्रस्वमितिकल्पनिरासार्थम्। संततमिति द्वेष्यस्य न्यञ्चं विच्छिनत्तीत्येतस्य कल्पस्य निरासार्थम्। उत्तराघार ऋजुग्रहणं दीर्घसांतत्ययोरनावश्यकत्वद्योतनार्थम्। आघारे धारायां चाऽऽदिसंयोग इत्यापस्तम्बोक्तविशेषस्वीकारे तु मन्त्रारम्भसमकालमाघारयोरारम्भः। आज्यभागाविति संज्ञा संव्यवहारार्था। आज्यभागान्तं कृत्वेत्यत्राग्नये स्वाहेत्यनेन मन्त्रेणाग्नेरुत्तरार्धस्य पूर्वार्धे सोमाय स्वाहेत्यनेन दक्षिणार्धस्य पूर्वार्धे जुहोतीत्युभयत्र शेषः। तावन्तरेणेतरा जुहोति, तावाज्यभागावन्तरेण तद्धोमदेशयोर्मध्य इतरा आहुतीर्जुहोति। तावन्तरेण जुहोतीत्येतावदुच्यमाने युक्तो वहेत्यादानीमेव देशसंबन्धः प्रसज्येत तन्मा भूत्किंतु सर्वासामेव भवतीत्येवमर्थमितरा इति वचनम्। यातिरश्चीत्येतस्मिन्मन्त्रे सश्राधनीमित्येव पाठः। यजेः सकर्मकत्वादित्येके। सश्राधनी यज इत्येव पाठो विभक्तिव्यत्ययादित्यन्ये। निरनुनासिकः पाठोऽपपाठ एवेति मातृदत्तः। छान्दसः पाठ इति तु युक्तम्। भूर्भुवः सुवरिति व्याहृतिभिर्जुहोत्येकैकशः समस्ताभिश्चेति। भूर्भुवः सुवरित्येताभिर्व्याहृतिभिर्जुहोति। एकैकश एकैकया व्यस्ताभिरित्यर्थः। यथा भूः स्वाहा। भुवः स्वाहा। सुवः स्वाहेति। भूर्भुवः सुवरिति वचनं व्याहृतिबहुत्वादिष्टपरिग्रहार्थम्। भूर्भुवः सुवरिति सिद्धे व्याहृतिभिरिति वचनमेतासामेवान्यत्र व्याहृतिग्रहणे संप्रत्ययार्थम्। तेन व्याहृतिभिरन्वादधाति व्याहृतिभी राकामहमित्येवमादिषु

१ क. ख. एव। भू॰।

श्रौतेषु स्मार्तेषु चैतासामेव संप्रत्ययः सिद्धो भवति। ननु भूर्भुवः सुवरिति व्याहृतय इत्येतेनैव सिद्धम्। न सिध्यति। तेनाऽऽधान एवेष्टपरिग्रहः कृतः स्यादिति। कर्षप्रमाणमाज्यं स्यादिति वचनात्सर्वाहुतिषु कर्षमात्रमाज्यं ज्ञेयम्।

अथ कर्मसमृद्धिसंपादकमुत्तरं तन्त्रम्। तत्र गृह्यम्—

"इमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्य० भेष५ स्वाहा। प्रजापत इत्येषा। यदस्य कर्मणोऽत्य० समर्धयित्रे स्वाहेत्युत्तरार्धपूर्वार्धेऽसꣳसक्तामितराभिराहुतिभिर्जुहोत्यत्रैके जयाभ्यातानात्राष्ट्रभृत इत्युपजुह्वति पुरस्तात्स्विष्टकृतश्चित्तं च स्वाहा चित्तिश्च स्वाहेति जयाञ्जुहोति चित्ताय स्वाहा चित्तये स्वाहेति वाऽग्निर्भूतानामधिपतिः समावत्वित्यभ्यातानानस्मिन्ब्रह्मन्नस्मिन्क्षत्र इत्यभ्यातानेष्वनुषजति पितरः पितामहा इति प्राचीनावीती जुहोत्युपतिष्ठते वर्तापाडृनधामेति राष्ट्रभृतः पर्यायमनुद्रुत्य तस्मै स्वाहेति पूर्वामाहुतिं जुहोति ताभ्यः स्वाहेत्युत्तराम्" इति।

प्राजापत्यायामेषेति वचनं यत्र यत्र सामान्यतः प्राजापत्या विहिता भवति तत्रैषैव ज्ञेयेत्येतदर्थम्। केचित्तु मनसा होमार्थं मन्यन्ते। तस्मान्मनसा प्रजापतये जुह्वतीति दर्शनात्। तन्न। एतस्य दर्शनस्याऽऽघारविषयत्वात्। तस्माद्वाचैव होतव्यम्। यदस्येत्यनेन स्विष्टकृदाहुतिमग्नेरुत्तरार्धपूर्वार्धे जुहोति। इतराभिराहुतिभिरसंसक्तामिति वचनादतिहायेतरा आहुतीर्होतव्यम्। असंसक्ताऽसंस्पृष्टा[1]। अत्रास्मिन्कर्मणि पुरस्तात्स्विष्टकृतः। एक आचार्याः। जयाश्चाभ्यातानाश्च जयाभ्यातानास्तांश्च राष्ट्रभृतश्च। इतिशब्दः समुच्चयार्थः। प्रकारार्थ इत्येके। जयानामभ्यातानानां राष्ट्रभृतामनन्तरमुपहोमत्वेनोपदेशाज्जयादीञ्जुह्वति प्रधानाहुतिसमीपे जुह्वति। अत्रेतिवचनं वेदाध्ययनार्थत्वेन मुख्य उपनयन एव यथा स्यान्न प्रायश्चित्तार्थोपनयन इत्येतदर्थम्। ननु प्रजापत इत्येषेत्यनन्तरमेव (+चित्तं च स्वाहा चित्तिश्च स्वाहेत्यारभ्य ताभ्यः स्वाहेत्युत्तरामित्यन्तं सूत्रं पठित्वा यदस्य कर्मणोऽत्यरी-

+ धनुश्चिह्नान्तर्गतस्थाने क. ख. पुस्तकयोः—"अत्रैके जयाभ्यातानात्राष्ट्रभृत इत्युपजुह्वतीत्येतावदेव सूत्रं कर्तव्यम्। स्विष्टकृतः पुरस्तादनुष्ठानं तु विधानक्रमादेव सिध्यतीति किमर्थं गुरुसूत्रकरणमिति चेन्न। येन कर्मणेर्त्सेदिति वचनात्कर्मसमृद्ध्यर्थं श्रौते गार्ह्ये स्मार्ते च कर्मणि यदि होमः क्रियते तत्र पुरस्तात्स्विष्टकृत एव भवेदितिज्ञापनार्थत्वात्" इति वर्तते।

[1] क. 'संस्पृष्टा।

रिचमित्यारभ्य राष्ट्रभृत इत्युपजुहतीत्येतदन्तं सूत्रमनन्तरं कर्तव्यम् । एवं च पुरस्तात्स्विष्टकृत इति वचनं न कर्तव्यमित्येतादृशं लाघवं परित्यज्य गौरवाङ्गीकरणं पुरस्तात्स्विष्टकृत एत उपहोमाः स्विष्टकृतमुत्तरं वेतिप्रदेशविकल्पो नात्र किं त्वनुष्ठानविकल्प एवेतिबोधनार्थम् । पुरस्तात्स्विष्टकृत इतिवचनं स्विष्टकृदुत्तरकालताव्यावृत्त्यर्थम् । ) अथ किमर्थं जयाभ्यातानानामेव पृथक्समासः, न राष्ट्रभृद्भिः सहेति, राष्ट्रभृतामपि सन्ति सहचारिण इति ख्यापनार्थम् । के ते । यद्देवा देवहेडनमित्यच्छिद्रकाण्डपठितमन्त्रकरणका होमास्तेषां साक्षादवचनाद्विकल्पः । विदधे च विकल्पेन यद्देवा देवहेडनमित्यनुवाकेन होमं चतुर्थं बौधायनः । जयादीनां प्रत्येकमनुक्रमणं ज्ञानार्थं विशेषविधानार्थं च । चित्तं च स्वाहा चित्तिश्च स्वाहेति यथापाठं त्रयोदश जयाञ्जुहोति । देवासुरा इत्यादि ब्राह्मणम् । चित्ताय स्वाहा चित्तये स्वाहेत्येवं चतुर्थ्यन्तैर्वा द्वादशभिर्जुहुयात् । अविकृतैव त्रयोदशी । एवमपि शाखान्तरेऽस्ति पाठ इत्यवगन्तव्यम् । अग्निरित्यष्टादशाभ्यातानाञ्जुहोति । अस्मिन्ब्रह्मन्नित्यादि देवहूत्यामित्यन्तमभ्यातानेष्वनुषजति । पितर इत्येतामाहुतिं प्राचीनावीती जुहोति उपतिष्ठते वाऽनेन मन्त्रेण प्राचीनावीती पितॄन् । अग्निमित्येके । तन्न, लिङ्गविरोधात् । ऋताषाडिति राष्ट्रभृतो जुहोति । द्वादशैते मन्त्रास्तेषु सप्तमोत्तमौ निरनुषङ्गावेकाहुतिकौ, अवशिष्टाः सानुषङ्गास्तेषु ये सानुषङ्गास्तानुक्त्वा तस्मै स्वाहेति पूर्वामाहुतिं जुहोति ताभ्यः स्वाहेत्युत्तरामाहुतिमित्यर्थः । अत्र त्रिविधेऽपि राष्ट्रभृन्मन्त्राणां विभागे दश पर्यायाः सप्तमोत्तमौ केवलाविति द्वाविंशतिमन्त्राः । तत्र ऋताषाडिति यथापाठमारभ्य तस्मै स्वाहेत्यन्ते पूर्वाहुतिः केवलं ताभ्यः स्वाहेत्यपराहुतिरित्येकः पक्षः । यथा, ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहेति । एवमुत्तरत्र । ऋताषाडिति यथापाठमारभ्य तस्मै स्वाहेत्यन्ते पूर्वाहुतिः पुनर्ऋताषाडिति यथापाठमारभ्य ताभ्यः स्वाहेत्यपराहुतिरिति द्वितीयः पक्षः । यथा, ऋताषाडृतधामा० क्षत्रं पान्तु तस्मै स्वाहा । ऋताषाडृतधामा० क्षत्रं पान्तु ताभ्यः स्वाहेति । एवमुत्तरत्र । तृतीयः पक्षोऽग्निमुखप्रयोगे वक्ष्यते । सर्वोऽपि होमो यज्ञपुरुषस्य जिह्वायामेव कार्यः । अन्यथाकरणे दोषश्रवणात् ।

तदाह संग्रहकारः—

“ यत्र काष्ठं तत्र कर्णौ हुनेच्चेद्व्याधिकृन्नरः ।

हुनेदित्यार्षम्।

धूमस्थानं शिरः प्रोक्तं मनोदुःखं भवेदिह।
यत्राल्पज्वलनं नेत्रं यजमानस्य नाशनम्॥
भस्मस्थाने तु क्लेशः स्यात्स्थाननाशो धनक्षयः
अङ्गारे नासिकां विद्यान्मनोदुःखं विदुर्बुधाः॥
यत्र प्रज्वलनं तत्र जिह्वा चैव प्रकीर्तिता।
गजवाजिप्रणादी तु वह्निः शुभफलप्रदः" इति।

जिह्वानामान्याह स एव—

"काली कराली च मनोजवा च सुलोहिनी या च सुधूम्रवर्णा।
स्फुलिङ्गिनी विश्वरुचिश्च देवी लेलायमाना इति सप्त जिह्वाः" इति।

ग्रन्थान्तरे—

"सुवर्णा कनका रक्ता कृष्णा चैव तु सुप्रभा।
बहुरूपाऽतिरिक्ता च सप्त जिह्वाः प्रकीर्तिताः॥
सुवर्णा वारुणी जिह्वा मध्यमा कनका स्मृता।
रक्ता चैवोत्तरा जिह्वा कृष्णा याम्यदिशि स्मृता॥
सुप्रभा पूर्वदिग्जिह्वा ह्यतिरक्ताऽग्निगोचरे।
ऐशाने बहुरूपा च जिह्वास्थानान्यनुक्रमात्॥
विवाहे वारुणी जिह्वा मध्यमा यज्ञकर्मसु।
उत्तरा चोपनयने दक्षिणा पितृकर्मसु॥
प्राचीना सर्वकार्येषु आग्नेयी शान्तिकर्मसु।
ऐशानी चोग्रकार्येषु ह्येतद्धोमस्य लक्षणम्" इति।

एतच्चाऽऽज्यहोमेष्वेव ज्ञेयम्। तत्राऽऽज्यस्य झटिति भस्मीभूतत्वेन तत्र द्वितीयाहुतिप्रक्षेपे दोषाभावात्। न चैतस्य बह्वाहुतिके कठिनद्रव्यहोमे नियमोऽसंभवात्। एता जिह्वा एकस्यामेवाऽऽज्यभागयोर्मध्यस्थायां ज्वालायां तत्तत्प्रदेशभेदेन ज्ञेयाः।

अथोत्तरपरिषेकादि। तदुक्तं गृह्ये—

"अथ परिषिञ्चति यथा पुरस्तादन्वमꣳस्थाः प्रासावीरितिमन्त्रान्तान्संनमति" इति।

अथाग्निं परिषिञ्चति यथा पुरस्तात्। अथशब्दः पूर्वैरतुल्यत्वज्ञाप-

नार्थः । तेन सर्वदर्विहोमाणामिदमङ्गं नोपनयनस्यैव । यथा पुरस्तादिति-वचनं पूर्वधर्मातिदेशार्थम् । मन्त्रान्तश्च मन्त्रान्तश्च मन्त्रान्तश्च मन्त्रान्ताः । तानन्वमꣳस्थाः प्रासावीरिति संनमति । ये त्वनुमन्यस्वेति तानन्वमꣳस्था इति । यस्तु प्रसुवेति तं प्रासावीरिति । यथा—अदितेऽन्वमꣳस्थाः । अनुमतेऽन्वमꣳस्थाः । सरस्वतेऽन्वमꣳस्थाः । देव सवितः प्रासावीरिति । तत्र मन्त्रानित्येव सिद्धेऽन्तग्रहणं देव सवितः प्रसुवेति यावदुक्तमेव समग्रो नाऽऽदिग्रहणमितिख्यापनार्थम् ।

अत्र प्राक्परिषेचनात्केचन धर्मा उक्ता मातृदत्तेन—

" परिधीन्दर्व्याऽङ्क्त्वा परिस्तरणेभ्यः किंचिद्बर्हिरादाय तस्य दर्व्या-मग्रमाज्यधान्यां मध्यं मूलं चेति प्रस्तरवत्तूष्णीमङ्क्त्वा तृणमपादाय प्रज्ञातं निधाय प्रस्तरवत्तूष्णीमनुप्रहृत्य[1] त्रिरङ्गुल्याऽन्ववदिश्य प्राणं चक्षुः पृथिवीं च संस्पृश्य परिधीन्क्रमेण प्रहृत्य संस्रावेणाभिजुहोति । अथ परिषेकं कृत्वाऽग्रेणाग्निं प्रणीताः पर्याहृत्यापरेणाग्निं निधाय किंचिदुदकमासिच्य पूर्ववत्तूष्णीं मार्जयेत् । ततो ब्रह्मणे यथाश्रद्धं दक्षिणां ददाति ब्रह्मा प्रतिगृह्य प्रतिनिष्क्रामति " इति ॥

परिधिप्रहरणोत्तरं प्रयोगवैजयन्त्यां नित्यत्वेन प्रायश्चित्तहोम उक्तः—

अनाज्ञातत्रयं त्वं नो अग्ने स त्वं नो अग्ने यत इन्द्र[2] भयामहे
स्वस्तिदात्र्यम्बकमिदं विष्णुर्व्याहृतिसप्तकम् " इति ।

अत्र मूलं चिन्त्यम् । परिध्यञ्जनादयस्तूष्णींमार्जनान्ताः परिषेकरहिता धर्माः कृताकृताः । एवं प्रायश्चित्तहोमोऽपि । ब्रह्मणे दक्षिणादानं तु नियतमेव ।

" यो ह्यदक्षिणेन यज्ञेन यजेत स यज्ञः प्रक्षामोऽनायुरुर्वरा
समृद्धा देया सा प्रायश्चित्तिः "

इति सूत्रकृतर्त्विग्भ्यो दक्षिणाया अप्रदाने दोषस्योक्तत्वात् । प्रक्षामो दग्धः । अनायुरित्यत्र यजमानो भवेदिति शेषः । उर्वरा भूमिः । समृद्धा सस्यवती । अत्र दक्षिणाविशेषस्यानुक्तत्वाद्यथाश्रद्धं हेम देयं गौर्वा ।

छान्दोग्यगोभिलगृह्ये तु—

" पूर्णपात्रं दक्षिणां ब्रह्मणे दद्यात्कꣳसं चमसं वाऽन्नस्य पूरयित्वा
कृतस्य वाऽकृतस्य वाऽपि वा फलानामेवैतत्पूर्णपात्रमित्याचक्षते " इत्युक्तम् ।

---

१ क. °त्य पुनस्तृणमनुप्रहृत्य त्रि° । २ क. ख. °ति । प° ।

कृतमवहतम् । अकृतमनवहतम् ।

होमान्ते वह्निपूजनमुक्तं स्मृत्यन्तरे—

" गन्धपुष्पादिभिर्वह्निं होमान्ते परिपूजयेत् " इति ।

गन्धपुष्पादिभिरित्यनेन पूर्वोपचारनिवृत्तिः क्रियते । बहिरग्निमनुलक्षीकृत्य पूजयेत् ।

" त्रिभिश्चैव चतुर्भिश्च पञ्चभिः षड्भिरङ्गुलैः ।
सेचनं परिधींश्चैव स्तरणं पूजनं तथा " ।

इति स्मृत्यन्तरे देशविशेषनियमोक्त्या पूजनबहिर्भावस्याप्युक्तत्वात् । शिष्टानां संप्रदायोऽप्येवम् । आगमशास्त्रे त्वग्नावेव पूजोक्ता । अयं प्रकारो वैदिकैर्नानुष्ठीयत इदानीम् । अग्निपूजन आरक्तगन्धपुष्पादि वर्जयेदित्यभियुक्ताः । दिव्यप्रकरणस्थाग्निपूजने रक्तगन्धपुष्पविधानात्तत्र न रक्तगन्धपुष्पनिषेधः । एतेन ज्ञायतेऽन्यत्राऽऽरक्तगन्धपुष्पनिषेध इति[1] । इदं चाऽऽरक्ताक्षताद्युपलक्षणम् ।

भस्मधारणं ब्रह्माण्डपुराणे—

" स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना ।
देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये " इति ।

अत्राग्नियजमानयोर्मध्ये केनाप्यन्तरागमने कृते तत्प्रायश्चित्तमुच्यते ।

तत्र पराशरप्रायश्चित्तकाण्डम्—

" द्वौ विप्रौ ब्राह्मणाग्नी वा दंपती गोद्विजोत्तमौ ।
अन्तरेण यदा गच्छेत्कृच्छ्रं सांतपनं चरेत् " इति ॥

एतदकर्मकालविषयम् ।

कर्मकाले तु विशेषस्तत्रैव—

" होमकाले तथा दोहे स्वाध्याये दारसंग्रहे ।
अन्तरेण यदा गच्छेद्द्विजश्चान्द्रायणं चरेत् " इति ॥

## अग्निमुखप्रयोगः ।

अथ प्रयोगः— कर्ताऽऽचम्य प्राणानायम्य पञ्चप्रस्थसिकताभिः शर्कराऽस्थ्यादिवर्जिताभिः शुक्लाभिरनार्द्राभिर्होमानुसारेण हस्तमात्रमर्थपरिमाणाभिः

१ क. ख. °ति । भ° ।

सिकताभिर्बाहुमात्रमधिकं वा समचतुरश्रं प्राक्प्रवणमुदक्प्रवणं प्रागुदक्प्रवणं समं वा प्राक्प्रवणाद्यन्यतम एव देशे सुश्लक्ष्णं स्थण्डिलं विदध्यात् । प्राक्प्रवणत्वपक्षे पश्चाङ्गुलोच्छ्रायः पश्चात्पुरस्ताच्चतुरङ्गुलोच्छ्रायः । उदक्प्रवणत्वपक्षे तर्जनीमध्यमान्यतरोर्ध्वाङ्गुलिप्रमाणं त्रेधा विभज्य तदेकांशपरिमितमंशं वर्धयित्वा तदंशचतुर्थांशं स्वचतुस्त्रिंशांशोनं तत्र संयोज्य तावत्परिमितोच्छ्रायो दक्षिणत ऊर्ध्वाङ्गुलिप्रमाणोच्छ्राय उत्तरतः । उदक्प्रवणत्वपक्षे प्राक्प्रवणत्वपक्षवदेव वोच्छ्रायः । प्रागुदक्प्रवणत्वपक्ष उत्तरदिशः प्रागर्धे पूर्वस्या दिश उत्तरार्धे चतुरङ्गुल उच्छ्रायः । इतरप्रदेशे पश्चाङ्गुल उदक्प्रवणपक्षवद्वा । ततस्तत्स्थण्डिलमक्षतारङ्गवल्ल्यादिभिः परितोऽलंकृत्य गोमयेनोपलिप्य शुद्धोदकेन प्रोक्ष्यैकं फलं पुष्पं पर्णं कुशं वा³ ताम्रशकलयुतं गृहीत्वा तेन स्थण्डिलमध्यप्रदेशे प्रादेशमात्रीः षडङ्गुलान्तरालास्तिस्रः प्राचीरुदगपवर्गास्तथैव तिस्रश्चोदीचीः प्रागपवर्गा रेखा लिखित्वा तद्रेखालेखनसाधनमुत्तरतो निरस्याप उपस्पृश्य यस्मिन्कस्मिंश्चिन्महति पात्रे शुद्धोदकं गृहीत्वा तदर्धेन कृत्स्नं स्थण्डिलमवोक्षति । न्युब्जेन विरलमुष्टिना जलसेचनमवोक्षणम् । ततोऽवशिष्टमर्धं जलमग्न्यायतनस्योत्तरतः पुरतो वोत्सिच्योदकस्पर्शप्रणीताप्रोक्षणपरिषेकादिकार्यार्थमन्यच्छुद्धमुदकं तस्मिन्नेव पात्र आनीय तत्पात्रं स्वस्योत्तरतः संस्थापयेत् । उत्सेचनाभावेऽप्यावश्यकत्वात्कार्यमेवेदम् । अवोक्षणपात्र आनयनं नास्ति तस्यैवाभावात् । ततोऽभ्याद्यन्यतमेन खनित्रेणोद्धत्यावोक्षति । उद्धननं सकृत्खनित्रप्रहरणमात्रम् । ततो वाग्यतो भूत्वा तैजसेनासंभवे लेपितेन नूतनेन मृन्मयेन वा पात्रयुग्मेन संपुटीकृत्य सुवासिन्या श्रोत्रियागारादभावे स्वगृहाद्वा प्रदीप्तबह्वङ्गारमयं निर्धूममग्निमाहृतं स्थण्डिलादाग्नेय्यां निधाय, समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती, अग्निप्रतिष्ठापने विनियोगः । भूर्भुवः सुवरित्यात्माभिमुखं पाणिभ्यामुल्लिखितदेशे द्वितीयाविभक्त्यन्ततत्तत्कर्मप्रयुक्तनामोच्चारणपूर्वकमग्निं प्रतिष्ठापयामीति प्रतिष्ठापयेत् । प्रणवान्ताभिर्व्याहृतिभिः स्थापनपक्षे प्रजापतिर्बृहतीत्यनन्तरं, प्रणवस्य परब्रह्मर्षिः परमात्माऽग्निर्वा देवता दैवी गायत्री छन्द इत्यधिकम् । ततः प्रोक्षितेन्धनानि प्रक्षिप्य वेणुधमन्या प्रबोध्योत्थाय, जुष्टो दमूना इत्यस्य विश्वे देवा अग्निस्त्रिष्टुप्, प्रतिष्ठापिताग्न्युपस्थाने विनियोगः " ॐ जुष्टो दमूना० भोजनानि " । इत्यग्निमुपस्थायोपविश्य—चत्वारि शृङ्गेति मन्त्रस्य याज्ञिक्यो देवता उपनिषदोऽ-

---

१ ग. घ. ङ. °ङ्गुलेर्यावान्विशेषस्तावत्प्रमा° । २ क. ख. °णप° । ३ ग. घ. ङ. वा लेखनिकारूपसुवर्णरजतताम्रान्यतमशकलेन व्रीहियवान्यतरेण च युतमङ्गुष्ठोपकनिष्ठिकाभ्यां गृ° ।

ग्निस्त्रिष्टुप्, अग्निध्याने विनियोगः—" ॐ चत्वारि शृङ्गा० आविवेश । सप्तहस्त-श्चतुःशृङ्गः० । तोमरं व्यजनं वामैर्घृतपात्रं च धारयन् । आत्माभिमुखमासीन एवंरूपो हुताशनः" इति ध्यायेत् । यत्राग्निमुपसमाधायेति सूत्रकृद्वदति तत्रोद्धननादिना संस्कृते देशेऽग्निमाहृत्य स्थापयित्वा होमः कार्यः । यत्र न वदति तत्र स्वस्थानेऽवस्थिते परिस्तरणादिविधिनैव कार्यः । अग्निज्वलनमुपसमाधानं सिद्धानुवादमेके मन्यन्ते । तेषामौपासने कर्तव्यानां समिन्धनादीतरत्रोद्धननादीति द्रष्टव्यम् । स्थलान्तरे केनचिन्निमित्तेन नीतस्य प्रत्यक्षस्याग्नेः संस्थापनेऽवरोपविधावग्न्यनुगमनप्रायश्चित्तहोमविधौ चोद्धननादि कर्तव्यमेव ।

## अथाऽऽघारप्राप्तमन्वाधानम् ।

तद्यथा—स्थूलसमित्त्रयमादाय "श्रद्ध एहि सत्येन त्वाऽऽह्वयामि" । इति त्रिरुक्त्वा, "याः पुरस्तात्प्र० श्रद्धां यज्ञमारभे । आकूत्यै त्वा० निविष्टम्" इति पठित्वा हृदयालम्भमुदकस्पर्शं प्राणायामं च विधायामुकहोमे या यक्ष्यमाणा देवतास्ताः सर्वाः परिग्रहीष्यामि जातवेदसमग्निमिध्मेन यक्ष्ये,

आघारहोमे—प्रजापतिं मनुमिन्द्रं चैकैकयाऽऽज्याहुत्या यक्ष्ये, आज्यभागहोमे, अग्निं सोमं चैकैकयाऽऽज्याहुत्या यक्ष्ये, सामान्यप्रधानहोमे—जातवेदसमग्निं सश्राधनीं सश्राधनीं देवीं प्रसाधनीं देवीमग्निं वायुं सूर्यं प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वा यथोक्ताः प्रधानदेवता द्वितीयया विभक्त्योल्लिख्य तृतीयया विभक्त्या यथोक्तद्रव्यमुल्लिख्य यक्ष्य इति वदेत् । अङ्गहोमे वरुणं[2] द्वाभ्यामाज्याहुतिभ्यां यक्ष्ये[3], अग्निं वरुणं चैकैकयाऽऽज्याहुत्या यक्ष्ये, अयासमग्निं प्रजापतिं[4] चैकैकयाऽऽज्याहुत्या यक्ष्ये ।

जयोपहोमे[5]—चित्तं चित्तिमाकूतमाकूतिं विज्ञातं विज्ञानं मनः शक्करीर्दर्शं पूर्णमासं बृहद्रथंतरं प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्ये ।

अभ्याता[6]नोपहोमे—अग्निं भूतानामधिपतिमिन्द्रं ज्येष्ठानामधिपतिं यमं पृथिव्या अधिपतिं वायुमन्तरिक्षस्याधिपतिं सूर्यं दिवोऽधिपतिं चन्द्रमसं नक्षत्राणामधिपतिं बृहस्पतिं ब्रह्मणोऽधिपतिं मित्रं सत्यानामधिपतिं वरुणमपामधिपतिं समुद्रं स्रोत्यानामधिपतिमन्नं साम्राज्यानामधिपतिं सोममोषधीनामधिपतिं सवितारं

• १ ग. °ङ्गः" इ° । २ ख. °णं वरुणं ० अग्निं वरुणं चाग्निं वरुणं चायास° । ३ ङ. °क्ष्ये । ज° । ४ ख. °तिं चाऽऽज्येन य° । ५ क. जयहो° । ६ क. °तानहो° ।

प्रसवानामधिपतिं रुद्रं पशूनामधिपतिम् । अत्रोदकस्पर्शः । त्वष्टारं रूपाणामधिपतिं विष्णुं पर्वतानामधिपतिं मरुतो गणानामधिपतींश्चैकैकयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वा प्राचीनावीती पितॄन्पितामहान्परानवरांस्ततांस्ततामहांनेकयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वा यज्ञोपवीत्यप उपस्पृशेत् । उपस्थानपक्षे पितॄन्पितामहानित्येतस्य वाक्यस्य नोल्लेखः ।

राष्ट्रभृदुपहोमे—ऋतासाहमृतधामानमग्निं गन्धर्वमोषधीरप्सरस ऊर्जः संहितं विश्वसामानं सूर्यं गन्धर्वं मरीचीरप्सरस आयुः सुषुम्नं सूर्यरश्मिं चन्द्रमसं गन्धर्वं नक्षत्राण्यप्सरसो बेकुरीः, भुज्युं सुपर्णं यज्ञं गन्धर्वं दक्षिणा अप्सरसः स्तवाः प्रजापतिं विश्वकर्माणं मनो गन्धर्वमृक्सामान्यप्सरसो वह्नीः, इषिरं विश्वव्यचसं वातं गन्धर्वमपोऽप्सरसो मुदाः, भुवनस्य पतिं परमेष्ठिनमधिपतिं मृत्युं गन्धर्वं विश्वमप्सरसो भूः सुक्षितिं सुभूतिं भद्रकृतं सुवर्वन्तं पर्जन्यं गन्धर्वं विद्युतोऽप्सरसो रुचः, दूरेहेतिममृडयं मृत्युं गन्धर्वं प्रजा अप्सरसो भीरूश्चारुं कृपणकाशिनं कामं गन्धर्वमाधीरप्सरसः शोचयन्तीः, भुवनस्य पतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इत्युल्लिखेत् । अथवा जयदेवता एकैकयाऽऽज्याहुत्या यक्ष्ये, अभ्यातानदेवता एकैकयाऽऽज्याहुत्या यक्ष्ये, राष्ट्रभृद्देवता एकैकयाऽऽज्याहुत्या यक्ष्य इति समुदितरूपेणोल्लेखः ।

स्विष्टकृद्धोमे—अग्निं स्विष्टकृतमेकया हुतशेषाहुत्या यक्ष्ये ।

प्रायश्चित्तहोमे—अग्निं तिसृभिराज्याहुतिभिर्यक्ष्ये, अग्निं वरुणं चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निं वरुणं चैकैकयाऽऽज्याहुत्या यक्ष्ये । इन्द्रं मघवन्तमिन्द्रं वृत्रहणं त्र्यम्बकं विष्णुमग्निं वायुं सूर्यं बृहस्पतिं वरुणमिन्द्रं विश्वान्देवांश्चैकैकयाऽऽज्याहुत्या यक्ष्ये ।

संस्रावहोमे—वसून्रुद्रानादित्यान्संस्रावाज्येन यक्ष्ये । एता देवता यक्ष्य इत्युल्लिखेत् । सद्यःपक्षे सद्यो यक्ष्य इति । अनेकदिनसाध्ये कर्मणि त्वेता देवता अद्यतनदिनप्रभृतिषु दिवसेषु यक्ष्ये यष्टाह इति वदेत् । श्वःप्रभृतिषु दिवसेषु केवलं यष्टाह इत्येव । प्रधानं कर्म श्व एव चेत्तदा श्वो यष्टाह इत्येव वदेत् । यक्ष्ये यष्टाह इति प्रयोगो यजमाने

१ ख. °हानाज्येन य° । २ ग. °नेकैक° । ३ ग. आयुः । ४ ग. °सो वेकु° । ५ ड. स्तव्याः । ६ ग. वह्नि । ७ क. ख. ग. °ग्निं ३ अग्निं वरुणं च २ इ° ।

कर्तरि। आचार्ये कर्तरि तु यक्ष्यामि यष्टास्मीत्येवं प्रयोगः। सूत्रानुक्तत्वात्प्रायश्चित्तहोमसंस्रावहोमाकरणपक्षे नैतयोरुल्लेखः।

ततः समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती, अन्वाधानसमिदाधाने विनियोगः—" ॐ भूर्भुवः सुवः " इत्यन्वाधानसमिधोऽग्नावादध्यात्। स्वाहाकारमप्यत्रेच्छन्ति केचित्। अस्मिन्पक्षे प्रजापतय इदं न ममेति त्यागः। स्थूलसमित्त्रयमादायेत्यारभ्य समिदाधानान्तं कर्माऽऽचारप्राप्तं शिष्टैः परिगृहीतत्वाल्लिखितम्।

ततोऽग्निक्षेत्रात्तद्वाह्यमेखलातो वा बहिः समन्ताद्दशाङ्गुलमितं पञ्चाङ्गुलमितं वा स्थलं त्यक्त्वा प्रागादिदिक्षु प्रागग्रैर्दर्भैः परिस्तृणाति। हस्त्वा उदगपवर्गाः पश्चात्पुरस्ताच्च भवन्ति। अथवा पुरस्तात्पश्चाच्चोदगग्रा दर्भाः। दक्षिणत उत्तरतश्च प्रागग्राः। पौरस्त्यपाश्चात्यपरिस्तरणदर्भमूलानामुपरि दक्षिणपरिस्तरणम्। उत्तरपरिस्तरणं तु तदग्राणामधस्तात्। परिस्तरणे चत्वारश्चत्वारस्त्रयस्त्रयो वा दर्भाः। प्रागग्रपरिस्तरणपक्षे त्वपरिमिता एव। प्रागुदगग्रपक्ष एवायमधरोत्तरभावः।

ततो दक्षिणेनाग्निं ब्रह्मायतने दर्भान्बहुलान्प्रागग्रान्स्तृणाति। आचार्यस्य होमकर्तृत्वे यजमानोपवेशनार्थमपि ब्रह्मायतनस्य पश्चादासनं कल्पयति। ततो मयि गृह्णामि यो नो अग्निरिति द्वयोरग्निरग्निस्त्रिष्टुप्, आत्मन्यग्निग्रहणे विनियोगः—"ॐ मयि गृह्णाम्यग्रे अग्नि९० परागात्" इति द्वाभ्यामात्मन्यग्निं गृह्णीते। आत्मन्यग्निर्गृहीत इति विभाव्य जपतीत्यर्थः।

ततोऽग्नेरुत्तरतः समीप एवोदगग्रान्दर्भान्संस्तीर्य तेषु यथाप्रयोजनं साधारणानि वैशेषिकाणि पात्राणि द्रव्याणि च सकृदेव यथोपपादं वाऽऽसादयेत्। तत्र यज्ञियदर्भाणामग्रभागं प्रादेशमात्रं बर्हिरर्थं प्रच्छिद्यापं उपस्पृश्य त्रिधातुना पञ्चधातुना वा शुल्बेन तद्बद्ध्वा पात्रेष्वासादयेत्।

ततो विषमसंधिमत्समसंधिमद्वा प्रदक्षिणं शुल्बं कृत्वा तदुदगग्रं वितत्य तेन पालाशं खादिरं वैकविंशतिदारुकमिध्मं बद्ध्वाऽऽसादयेत्। अथवा दर्व्यासादनात्प्रागिध्माबर्हिषोः संनहनमनधोनिधानं च कृत्वाऽवज्वलनदर्भासादनात्प्रागेतयोः पात्रेष्वासादनं कुर्यात्। तत्रेध्मस्त्रिभिः परिधिभिः सहैकविंशतिदारुको भिन्नपरिधिक आहुतिसंख्याकदारुको वाऽरत्निमात्रः

१ ग. ध. ङ. °दर्भाणाम्°। २ ग. °सने क°।

प्रादेशमात्रो वा। परिधयः शम्याकृतिकाः शुष्का आर्द्रा वा यस्य कस्यचिद्यज्ञियस्य वृक्षस्य। अत्रैव परिधीनां शम्याकृतित्वसंपादनम्। तत्र मध्यमः परिधिर्बाहुमूलमारभ्यानामिकाग्रान्तप्रमाणः। बाहुमूलमारभ्य मध्यमाग्रान्तप्रमाणो मध्यमात्सूक्ष्मश्च दक्षिणः। बाहुमूलमारभ्य कनिष्ठाग्रान्तप्रमाणो दक्षिणात्सूक्ष्मश्चोत्तरः। अथवा सर्वेऽपि समप्रमाणाः कार्याः। संस्पर्शस्तूभयपक्षेऽप्यावश्यकः। एतच्च परिमाणमरत्निमात्रायतनविषयम्। अधिके[1] तु दक्षिणपरिस्तरणानामुपरि मूलमुत्तरपरिस्तरणानामुपर्यग्रं यावता परिमाणेन भवति तावत्परिमितः पश्चिमपरिधिः। इतरौ तु तदनुरोधेन।

ततोऽग्न्यायतनादी(दै)शान्याममुकप्रवरान्वितामुकगोत्रोत्पन्नामुकशाखाध्यायिनममुकशर्माणममुककर्मणि ब्रह्माणं त्वामहं वृण इति कर्मकुशलं ब्रह्मिष्ठं ब्रह्माणं यजमानो वृणुयात्। ब्रह्मा वृतोऽस्मि कर्म करिष्यामीत्युक्त्वा यज्ञोपवीती द्विराचम्योत्तरेण पात्राणि गत्वाऽग्निहोमकर्त्रोर्मध्येन दक्षिणे[2]न पादेन दक्षिणाऽतिक्रम्योपवेशनार्थमास्तृतेभ्यो दर्भेभ्यस्तृणमुत्तरतो निरस्याप उपस्पृश्याग्निमभिमुख उपविशति। इत आरभ्य कर्मकाले वाग्यतः कर्ममना भवेत्। यदि वाग्यमलोपस्तदा "इदं विष्णुः" इति+वैष्णव्यृग्जपं "भूर्भुवः सुवः" इति समस्तव्याहृतिजपं च कुर्यात्। यस्मिन्कर्मणि होमार्थमन्यो वृतो भवति तत्र यजमानोऽपि ब्रह्मण्युपविष्टे तस्य पश्चाद्भागे होमकर्त्रा कल्पितादासनात्तृणं निरस्याप उपस्पृश्याग्निमभिमुख उपविशेत्। ब्रह्मालाभे तदासने छत्रं कूर्चं यज्ञोपवीतं दण्डं कमण्डलुं वा स्थापयेत्। ततो भूमौ काष्ठं तृणं वाऽन्तर्धाय समौ साग्रावन्तर्गर्भरहितौ दर्भावग्रे प्रादेशमात्राववशेषयन्धृत्वा तत्र काष्ठेनासिदेन वा छिनत्ति न नखेन। अप उपस्पृश्य तयोर्मूलमारभ्याग्रपर्यन्तं सोदकेन हस्तेनानुमार्ष्टि। ततः प्रणीतापात्रं गृहीत्वा त्रिः प्रक्षाल्य प्रागग्रे पवित्रे तस्मिन्निधाय किंचिदुदकमानीय पृथिवीं करणत्वेन ध्यायन्पुनरुदकेनोपबिलं पूरयित्वाऽङ्गुष्ठोपकनिष्ठिकाभ्यामुदगग्रे सग्रन्थिके पवित्रे धृत्वोत्तानाभ्यां प्रागग्राभ्यां पाणिभ्यां प्रणीतापात्रस्था अपस्त्रिरुत्पूय सव्यपाणिना प्रणीतापात्रं धृत्वा दक्षिणेन तत्पात्रमपिधाय नासिकासमं धारयन्नस्कन्दयन्नुत्तरेणैव[3] हृत्वोत्तरेणाग्निं दर्भेषु सादयित्वोदगग्रैर्दर्भैरपिदधाति। ततस्ते पवित्रे अप्रक्षालिते एव प्रोक्षणीपा[4]त्र उदगग्रे निधाय

---

+ पुंवद्भाव आवश्यकः। मध्यमपदलोपिसमासेन वा समाधेयम्।

१ ग. घ. ङ. °के त्वग्न्यायतनानुसारेण परिधिप्रमाणाभिवृद्धिः कार्या। ततोऽ°। २ क. °क्षिणे पा°। ३ ग. घ. ङ. °त्रे उदगग्रे अ°। ४ ग. घ. ङ. °पात्रे नि°।

तत्पात्रमद्भिः पूरयेत् । नात्र किंचिदुदकानयनं पृथिव्याः करणत्वेनाभिध्यानं पुनरुदकेनोपबिलपूरणं च प्रणीतावद्भवति। ततस्ता अपः पूर्ववदुत्पूय बिलवन्ति पात्राण्युत्तानानि कृत्वेध्मं विस्रस्य प्राक्संस्थं त्रिः सर्वाभिरद्भिः सपवित्रेण हस्तेन सर्वाणि पात्राणि प्रोक्षति । अमुष्टीकृतेनोत्तानेन हस्तेन जलसेचनं प्रोक्षणम् ।

ततः स्रुवं दर्वीमासादितान्साग्रान्संमार्गदर्भांश्च गृहीत्वाऽग्नौ दक्षिणहस्तेनैव सहैव निष्टप्य दर्वीं दर्भेषु निधाय सव्यहस्ते स्रुवं गृहीत्वा दक्षिणेन हस्तेन दर्भाग्रैरन्तरतोऽभ्याकारं सर्वतो बिलमभिसंमार्ष्टि दर्भमूलैर्दण्डम् । ततः पुनर्निष्टप्य दर्भेषु निधाय दर्वीं तथैव गृहीत्वा दर्भाग्रैः प्राक्संस्थं पुष्करप्रदेशं संमृज्य दर्भमध्यैः प्रत्यक्संस्थं पुष्कराधोभागं दर्भमूलैर्दण्डं च संमृज्य पुनर्निष्टप्य स्रुवस्योत्तरतो दर्भेषु निदधाति । संमृष्टासंमृष्टपात्राणां संसर्जनं न कार्यं कृत्स्नसंमार्जनक्रियासमाप्तिपर्यन्तमिति केचित् । प्रयोगसमाप्तिपर्यन्तमित्यन्ये । तत्र यदि संस्पर्शः " पुनरेव निष्टप्य संमृज्यात्स्वेन मन्त्रेण " इति भारद्वाजोक्तेरसंमृष्टपात्रसंस्पर्शे पुनः संमार्ग एव प्रायश्चित्तम् । ततः संमार्गदर्भानभ्युक्ष्याग्नावनुप्रहराति । मुष्टीकृतेनावाचीनेन हस्तेन जलसेचनमभ्युक्षणम् । केवलाज्यहोमतन्त्रे न स्रुवः ।

ततो गव्यमाज्यं बहिरेव द्रवीकृत्य पवित्रान्तर्हितायामपरेणाग्न्यायतनं दर्भेषु स्थापितायामाज्यस्थाल्यां गालितमाज्यं प्रभूतं निरुप्योपवेषेणोत्तरपरिस्तरणाद्बहिरुदग्दिक्स्थानङ्गारान्निरुह्य व्यन्तान्कृत्वा तेष्वधिश्रित्याऽऽयतनस्थाग्नौ प्रदीपितैर्दर्भैरवाचीनज्वालैरुपरि ज्वलयित्वा तान्सव्ये गृहीत्वा दक्षिणहस्तेनाङ्गुष्ठपर्वमात्रं दर्भाग्रद्वयमाज्ये प्रत्यस्य तैरेव दर्भैरन्यैर्वा प्रज्वालितैस्त्रिः पर्यग्नि कृत्वा तानपि दर्भानुत्तरतो बहिर्निरस्याप उपस्पृशेत् । यदा तु निरूढाग्नौ प्रदीपनं तदा तत्रैव निरसनं न बहिः ।

तत आज्यं कर्षन्निवोदगुद्वास्योपवेषेणाङ्गारानायतनस्थाग्नौ मेलयित्वोदगग्रे पवित्रे धृत्वा ताभ्यामाज्ये पश्चाद्भागमारभ्य प्राग्भागं नीत्वा पुनः पश्चाद्भागमानीयोत्पुनीयादित्येवं त्रिरुत्पूय पवित्रयोर्ग्रन्थिं विस्रस्य पवित्रे अग्नावभ्याधाय शम्याकृतिभिः परिधिभिरग्निं परिदधाति । अपरेणाग्निमुदीचीनकुम्बं मध्यमं दक्षिणेनाग्निं प्राचीनकुम्बं दक्षिणमुत्तरेणाग्निं प्राचीनकुम्बमुत्तरम् । तत्र दक्षिणस्य परिधेर्मध्यमपरिधिमूलस्योपरि मूलं कर्तव्यम्[१] । उत्तरस्य मध्यमपरिध्यग्रस्याधः परिस्तरणानामुपर्येव परिधिपरिधानं कार्यम्[२] ।

१ क. °स्याधो मूलम् । प° । २ क. कर्तव्यम् ।

ततोऽग्नेः पश्चाद्भूमिं प्रोक्ष्योदगग्रं बर्हिःसंनहनशुल्बं तत्राऽऽस्तीर्य तदुपरि प्रागग्रमुदगपवर्गं बर्हिरास्तीर्य तत्र स्रुवदर्व्याज्यस्थालीः क्रमेणोदक्संस्थं निदधाति । चरुहोमश्चेदत्र शृतं चरुमभिघार्योदगुद्वास्याग्नेः पश्चादाज्यस्थाल्या उत्तरतो बर्हिष्यासादयति । ततोऽग्न्यायतनस्य समन्तादङ्गुलत्रयपरिमितं स्थलं त्यक्त्वा परिषिञ्चति । अदितेऽनुमन्यस्वेति चतुर्णां मन्त्राणां वामदेव ऋषिरदितिरनुमतिः सरस्वती देवः सवितेति-क्रमेण चतुर्णां देवताः, यजूंषि, परिषेके विनियोगः—" अदितेऽनुमन्यस्व " इति दक्षिणतः प्राचीनं परिषिञ्चति । " अनुमतेऽनुमन्यस्व " इति पश्चादुदीचीनम् । " सरस्वतेऽनुमन्यस्व " इत्युत्तरतः प्राचीनम् । " देव सवितः प्रसुव" इत्यैशानीमारभ्य सर्वतः प्रदक्षिणं परिषिञ्चति ।

ततो दक्षिणेन पाणिना दर्व्याऽऽज्यस्थाल्याज्यमादाय भूमिष्ठमिध्मं मूलमध्याग्रप्रदेशेष्वङ्क्त्वा दर्वीं स्वस्थाने निधाय दक्षिणहस्तेनेध्ममादाय मूलमध्यभागयोर्मध्ये तं धृत्वाऽयं त इध्म इत्यस्य वामदेवो जातवेदा अग्निः स्वराट् त्रिष्टुप्, इध्माभ्याधाने विनियोगः—"अयं त इध्म आत्मा० मेधय स्वाहा" इति सव्यपाण्यन्वारब्धेन दक्षिणेन हस्तेन प्रदीप्ताग्नौ प्रागग्रमभ्यादधाति । जातवेदसेऽग्नय इदं० । सर्वेषु त्यागेष्वस्यै देवताया इदं पुरोवर्ति द्रव्यमुत्सृजे न ममेत्यर्थमनुसंदध्यात् । अन्यकर्तृकेऽपि होमादौ सर्वे त्यागा यजमानेनैव कार्याः ।

ततो दर्व्याऽऽज्यं गृहीत्वोत्तरं परिधिसंधिमनुलक्ष्य तेन दर्वीं प्रवेश्य—प्रजापतये मनवे स्वाहेत्यस्य वामदेवः प्रजापतिर्मनुर्यजुः, पूर्वाघारहोमे विनियोगः—" प्रजापतये मनवे स्वाहा " इति प्रजापतिं मनसा ध्यायन्मनसैव मन्त्रमुच्चारयन्वायव्यकोणमारभ्याऽऽग्नेयकोणपर्यन्तं संततमृजुं दीर्घं जुहोति । प्रजापतये मनव इदं० । पुनर्दर्व्याऽऽज्यं गृहीत्वा दक्षिणं परिधिसंधिमनुलक्ष्य तेन दर्वीं प्रवेश्येन्द्राय स्वाहेत्यस्य वामदेवो विश्वे देवा इन्द्रो वा यजुः, उत्तराघारहोमे विनियोगः—" इन्द्राय स्वाहा " इति मन्त्रं पठन्नैर्ऋतकोणमारभ्यैशानकोणपर्यन्तं संततमृजुं दीर्घमासीन एव जुहोति । इन्द्रायेदं० । उभयत्र सर्वेषामिध्मकाष्ठानामाघाराज्यसंस्पर्शः । यदि शीतवशेन कठिनं *चेदाज्यं तदाऽऽघारसांतत्यार्थं प्रकृतकर्मसंबन्ध्यग्निसमीपस्थापनेन विलीनं कुर्यात् । प्रायोगिकास्तु ताम्रादिनिर्मितेन तदग्निसंतप्तेन दण्डेन विलीनं

* चेदित्यनर्थकं निश्चयार्थकं वा ।

१ ग. घ. ङ. 'वा वेन्द्रो य' । २ क. 'ज्यस्य स' ।

कुर्वन्ति, तद्बहिरग्न्यायतनतद्दण्डप्रविष्टतदग्न्यवयवनाशादिदूषणापत्तेरन्याय्यम्। इत्यद्या रावाघार्य—

अग्नये स्वाहा सोमाय स्वाहेत्यनयोर्वामदेव ऋषिः, अग्निः सोम इति क्रमेण देवते, यजुषी, आज्यभागहोमे विनियोगः—अग्नये स्वाहा। अग्ना- वुत्तरार्धपूर्वार्धे जुहोति। अग्नय इदं०। सोमाय स्वाहा। अग्नौ दक्षिणार्धपूर्वार्धे जुहोति। इत्याज्यभागौ हुत्वा तावन्तरेणेतरा आहुतीस्तत्तत्कर्मविहितजिह्वायां ज्वालामध्य एव वा जुहोति। युक्तो वहेत्यस्य वामदेवो जातवेदा अग्निस्त्रि- ष्टुप्, या तिरश्चीत्यस्य वामदेवः सꣳराधन्यनुष्टुप्, सꣳराधन्यै देव्यै स्वाहा प्रसा- धन्यै देव्यै स्वाहेत्यनयोर्वामदेव ऋषिः सꣳराधनी देवी प्रसाधनी देवीति क्रमेण देवते यजुषी, सामान्यप्रधानाज्यहोमे विनियोगः—"युक्तो वह जातवेदः० नेम स्वाहा" जातवेदसेऽग्नय इदं०। "या तिरश्ची० नीं यजे स्वाहा" सꣳराधन्या इदं०। "सꣳराधन्यै देव्यै स्वाहा" सꣳराधन्यै देव्या इदं०। "प्रसाधन्यै देव्यै स्वाहा" प्रसाधन्यै देव्या इदं०। व्यस्तानां व्याहृतीना- मग्निर्ऋषिः समस्तव्याहृतीनां प्रजापतिर्ऋषिः, अग्निवायुसूर्यप्रजापतयः क्रमेण देवताः, गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि, सामान्यप्रधानहोमे विनियोगः— "ॐ भूः स्वाहा" अग्नय इदं०। "ॐ भुवः स्वाहा" वायव इदं०। "ॐ सुवः स्वाहा" सूर्यायेदं०। "ॐ भूर्भुवः सुवः स्वाहा" प्रजापतय इदं०।

ततस्तत्तत्कर्मणो विशेषिकप्रधानहोमं कुर्यात्।

तत उत्तराण्यङ्गानि। इमं मे वरुणेत्यनयोर्विश्वे देवा ऋषयो वरुणो देवता प्रथमस्य गायत्री छन्दः, द्वितीयस्य त्रिष्टुप्। त्वं नो अग्न इति द्वयोर्विश्वे देवा ऋषयः। अग्निर्वरुणश्च देवता त्रिष्टुप्छन्दः। त्वमग्ने अयासीत्यस्य विश्वे देवा अया अग्निरनुष्टुप्। प्रजापत इत्यस्य प्रजाप- तिर्विश्वे देवा वा प्रजापतिस्त्रिष्टुप्। उत्तराङ्गहोमे विनियोगः—"ॐ इमं मे वरुण० चके स्वाहा" वरुणायेदं०। "ॐ तत्त्वा यामि० मोषीः स्वाहा" वरुणायेदं०। "ॐ त्वं नो अग्ने० स्मत्स्वाहा" अग्नये वरुणाय चेदं०। "ॐ स त्वं नो० न एधि स्वाहा" अग्नये वरुणाय चेदं०। "ॐ त्वमग्ने अ० पजꣳ स्वाहा" अयसेऽग्नय इदं०। प्रजापते० यीणाꣳ स्वाहा" प्रजापतय इदं०। इत्यङ्गहोमः।

जयोपहोममन्त्राणां विश्वे देवा लिङ्गोक्ता देवता यजूंषि, उत्तराङ्गभूतजयो- पहोमे विनियोगः—"ॐ चित्तं च स्वाहा" चित्तायेदं०। "ॐ चित्तिश्च स्वाहा"

१ ग. घ. ङ. 'हेति द्वयोः। २ क. 'ध्यहो'। ३ ग. घ. ङ. 'र्धे। ई'।

चित्तय इदं०। चित्त्या इदमिति वा। "ॐ आकूतं च स्वाहा" आकूतायेदं०। "ॐ आकूतिश्च स्वाहा" आकूतय इदं०।आकूत्या इदमिति वा।"ॐ विज्ञातं च स्वाहा" विज्ञातायेदं०। "ॐ विज्ञानं च स्वाहा" विज्ञानायेदं०। "ॐ मनश्च स्वाहा" मनस इदं०। "ॐ शक्करीश्च स्वाहा" शक्करीभ्य इदं०। "ॐ दर्शश्च स्वाहा" दर्शायेदं०। "ॐ पूर्णमासश्च स्वाहा" पूर्णमासायेदं०। "ॐ बृहच्च स्वाहा" बृहत इदं०। "ॐ रथंतरं च स्वाहा" रथंतरायेदं०। "ॐ प्रजापतिर्जया० भूव स्वाहा" प्रजापतय इदं०। अथवा चित्ताय स्वाहा, चित्तये स्वाहा, आकूताय स्वाहा, आकूतये स्वाहा, विज्ञाताय स्वाहा, विज्ञानाय स्वाहा, मनसे स्वाहा, शक्करीभ्यः स्वाहा, दर्शाय स्वाहा, पूर्णमासाय स्वाहा, बृहते स्वाहा, रथंतराय स्वाहा, इति चतुर्थ्यन्तैर्होमः। यथालिङ्गं त्यागः। अविकृत एव त्रयोदशो मन्त्रः।

अभ्यातानोपहोममन्त्राणां विश्वे देवा लिङ्गोक्ता देवता यजूंषि, उत्तराङ्गभूताभ्यातानोपहोमे विनियोगः—"ॐ अग्निर्भूतानामधिपतिः स माऽवत्वस्मि० त्याः स्वाहा" अग्नये भूतानामधिपतय इदं०। "ॐ इन्द्रो ज्येष्ठानाम०" इन्द्राय ज्येष्ठानामधिपतय इदं०। "ॐ यमः पृथिव्या अधि०" यमाय पृथिव्या अधिपतय इदं०। "ॐ वायुरन्तरिक्षस्याधि०" वायवेऽन्तरिक्षस्याधिपतय इदं०। "ॐ सूर्यो दिवोऽधि०" सूर्याय दिवोऽधिपतय इ०। "ॐ चन्द्रमा नक्षत्राणामधिपतिः०" चन्द्रमसे नक्षत्राणामधिपतय इदं०। "ॐ बृहस्पतिर्ब्रह्मणोऽधि०" बृहस्पतये ब्रह्मणोऽधिपतय इदं०। "ॐ मित्रः सत्यानामधिपतिः०" मित्राय सत्यानामधिपतय इदं०। "ॐ वरुणोऽपामधि०" वरुणायापामधिपतय इदं०। "ॐ समुद्रः स्रोत्यानामधि०" समुद्राय स्रोत्यानामधिपतय इदं०। "ॐ अन्नं साम्राज्यानामधिप०" अन्नाय साम्राज्यानामधिपतय इदं०। "ॐ सोम ओषधीनामधि०" सोमायौषधीनामधिपतय इदं०। "ॐ सविता प्रसवानामधि०" सवित्रे प्रसवानामधिपतय इदं०। "ॐ रुद्रः पशूनामधि०" रुद्राय पशूनामधिपतय इदं०। अत्रोदकस्पर्शः। "ॐ त्वष्टा रूपाणामधि०" त्वष्ट्रे रूपाणामधिपतय इदं०। "ॐ विष्णुः पर्वतानामधिपति०" विष्णवे पर्वतानामधिपतय इदं०। "ॐ मरुतो गणानामधिपतयस्ते माऽवन्तव०" मरुद्भ्यो गणानामधिपतिभ्य इदं०। ततः प्राचीनावीती भूत्वा "पितरः पितामहाः परे० माऽवत। अस्मि०" पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्य इदं०।

ततो यज्ञोपवीत्यप उपस्पृशेत्। उपस्थानपक्षेऽपि प्राचीनावीतं न स्वाहाकारत्यागौ। एतच्च जीवत्पित्रादेरपि भवत्यनूहेनैव। अन्वारम्भकर्त्राऽपि प्राचीनावीतं कार्यम्। अत्र पत्नी नान्वारभते पितृकर्मत्वात्।

राष्ट्रभृन्मन्त्राणां विश्वे देवा लिङ्गोक्ता देवता यजूंषि । उत्तराङ्गभूतराष्ट्रभृदुपहोमे विनियोगः—

" ॐ ऋताषाडृतधामाऽग्निर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा " ऋतासाह ऋतधाम्नेऽग्नये गन्धर्वायेदं० । " तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा " ओषधीभ्योऽप्सरोभ्य ऊर्ग्भ्य इदं० । "सꣳहितो० र्वः स० पातु त०" सꣳहिताय विश्वसाम्ने सूर्याय गन्धर्वायेदं० । " तस्य मरीच० मता० पान्तु ता०" मरीचिभ्योऽप्सरोभ्य आयुभ्य इदं० । "ॐ सुषुम्नः० र्वः स०" सुषुम्नाय सूर्यरश्मये चन्द्रमसे गन्धर्वायेदं० । " तस्य नक्ष० नाम ता इ०" नक्षत्रेभ्योऽप्सरोभ्यो बेकुरिभ्य इदं० । "ॐ भुज्युः सु० र्वः स०" भुज्यवे सुपर्णाय यज्ञाय गन्धर्वायेदं० । " तस्य दक्षिणा० मता इ० " दक्षिणाभ्योऽप्सरोभ्यः स्तवाभ्य इ० । " प्रजापतिर्वि० र्वः स० " प्रजापतये विश्वकर्मणे मनसे गन्धर्वा० । " तस्यर्क्सामा० म ता इ० ऋक्सामेभ्योऽप्सरोभ्यो वह्निभ्य इ० । "ॐ इषिरो विश्व० र्वः स०" इषिराय विश्वव्यचसे वाताय गन्धर्वा० । "तस्यापोऽप्स० म ता इ०" अद्भ्योऽप्सरोभ्यो मुदाभ्य इदं० । "ॐ भुवनस्य० स्तिꣳ स्वा०" भुवनस्य पत्य इदं० । "ॐ परमेष्ठ्य० र्वः स०" परमेष्ठिनेऽधिपतये मृत्यवे गन्ध० । " तस्य वि० म ता० " विश्वस्मा अप्सरोभ्यो भूभ्य इ० । "ॐ सुक्षितिः० र्वः स०" सुक्षितये सुभूतये भद्रकृते सुवर्वते पर्जन्याय गन्ध० । "तस्य विद्यु० म ता इ०" विद्युद्भ्योऽप्सरोभ्यो रुग्भ्य इ० । "ॐ दूरे हेति० र्वः स० " दूरे हेतयेऽमृडयाय मृत्यवे गन्धर्वायेदं० । " तस्य प्रजा० म ता इ०" प्रजाभ्योऽप्सरोभ्यो भीरुभ्य इदं० । " ॐ चारुः कृपण० र्वः स०" चारवे कृपणकाशिने कामाय गन्धर्वा० । " तस्याऽऽधयो० म ता इ०" आधिभ्योऽप्सरोभ्यः शोचयन्तीभ्य इ० । " ॐ स नो भुव० यच्छ स्वाहा" भुवनस्य पत्य इ० । एते च जयाद्युपहोमा वैकल्पिकाः ।

ततो यदस्येत्यस्य वामदेवोऽग्निः स्विष्टकृदत्यष्टिः, स्विष्टकृद्धोमे विनियोगः—"यदस्य क० यित्रे स्वाहा" इत्युत्तरार्धपूर्वार्धे पूर्वाहुतितः किंचिद्भूयसीं पूर्वाभिराहुतिभिरसंसृष्टां जुहोति । अग्नये स्विष्टकृत इदं० । संसर्गश्चेत्सर्वमायश्चित्तमनाज्ञातादिजपश्च ।

तत इध्मसंनहनशुल्वं विस्रस्याद्भिरभ्युक्ष्याग्नौ प्रहृत्य दर्व्या परिधीन्परिधानक्रमेणाङ्क्त्वा परिस्तरणेभ्यः कांश्चिद्दर्भान्सर्वान्वा सर्वमा-

स्तृतं बर्हिश्चाऽऽदाय दर्व्यामग्राण्यनक्ति, मध्यानि मूलानि चाऽऽज्यस्थाल्याम् । एवं द्वितीयम् । तृतीयं तु मूलानि मध्यानि चाऽऽज्यस्थाल्याम् , अग्राणि दर्व्यामिति । एवमङ्क्त्वैकं तृणमक्तेभ्यस्तृणेभ्य उपादाय प्रज्ञातं निधायान्यानि दक्षिणोत्तराभ्यां पाणिभ्यामुत्तरपरिधिसंधिमनुप्रवेश्य नातिक्रान्ताग्न्यग्राण्यनूर्ध्वाग्राण्यङ्गारेष्वभर्जयंस्तदग्राणीषदृजुं हस्तं धारयन्नूर्ध्वमुद्यम्य ततो न्यञ्चमधोऽध आनीयाधरोत्तरावयवभावेनान्तत आयतने पर्यावर्तयति । ततस्त्रिरूर्ध्वमायतन एवाञ्जलिना नीत्वाऽग्नौ क्षिपति । ततः स्थापिततृणं प्रहृत्य त्रिरङ्गुल्याऽन्ववदिश्य घ्राणे युगपत्संस्पृश्याप उपस्पृश्य तथैव चक्षुषी संस्पृश्याप उपस्पृश्य पृथिवीं संस्पृशेत् । ततो मध्यमं परिधिमग्नौ प्रहृत्येतरौ परिधी द्वाभ्यां हस्ताभ्यां सहैव प्रहरति । अवाञ्चमुत्तरस्याग्रमङ्गारेषूपोहति ।

## ततः प्रायश्चित्तहोमः ।

अनाज्ञातमितिमन्त्रत्रयस्य विश्वे देवा ऋषयोऽग्निर्देवताऽऽद्ययोरनुष्टुबन्त्यस्य त्रिष्टुप् । त्वं नो अग्न इति द्वयोर्विश्वे देवा अग्निर्वरुणश्च त्रिष्टुप् । यत इन्द्रेतिद्वयोर्विश्वे देवा ऋषयः । इन्द्रो मघवान्प्रथमस्य देवता । वृत्रहेन्द्रो द्वितीयस्य । आद्यस्य बृहती द्वितीयस्यानुष्टुप् । त्र्यम्बकमित्यस्य विश्वे देवास्त्र्यम्बकोऽनुष्टुप् । इदं विष्णुरित्यस्य सोमो विष्णुर्गायत्री । सप्तानां व्याहृतीनां याज्ञिक्यो देवता उपनिषद ऋषयः । अग्निर्वायुः सूर्यो बृहस्पतिर्वरुण इन्द्रो विश्वे देवा इति क्रमेण देवताः । गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तित्रिष्टुब्जगतीति क्रमेण च्छदांसि । प्रायश्चित्ताज्यहोमे विनियोगः— "ॐ अनाज्ञातं० तथ९ स्वाहा" अग्नय इदं० । "पुरुषसंमितो० थ९ स्वाहा" अग्नय इ० । "ॐ यत्पाकत्रा म० जाति स्वाहा" अग्नय इदं० । "ॐ त्वं नो अग्ने० स्मत्स्वाहा" अग्नये वरुणाय चेदं० । "ॐ सत्वं नो अ० एधि स्वाहा" अग्नये वरुणाय चेदं० । "ॐ यत इन्द्र भ० जहि स्वाहा" इन्द्राय मघवत इदं० । "ॐ स्वस्तिदा वि० करः स्वाहा" इन्द्राय वृत्रघ्न इ० । "ॐ त्र्यम्बकं यजा० तात्स्वाहा" त्र्यम्बकायेदं० । "ॐ इदं विष्णु० सुरे स्वाहा" विष्णव इदं० । "ॐ भूः स्वाहा" अग्नय इ० । "ॐ भुवः स्वाहा" वायव इदं० । ॐ सुवः स्वाहा" सूर्यायेदं० । "ॐ महः स्वाहा" बृहस्पतय इदं० । "ॐ जनः स्वाहा" वरुणायेदं० । "ॐ तपः स्वाहा" इन्द्रायेदं० । "ॐ सत्य९ स्वाहा" विश्वेभ्यो देवेभ्य इदं० ।

यदि नैमित्तिकानि केवलहोमात्मकप्रायश्चित्तान्यापतितानि तानि निमित्तानन्तरमकृतानि स्युस्तान्यत्र कार्याणि । "ॐ वसुभ्यो रुद्रेभ्य आदित्येभ्यः स्वाहा" इति परिधिषु संस्रावाज्यं जुहोति, वसुभ्यो रु० त्येभ्यः संस्रावभागेभ्य इदं० ।

तत उत्तरपरिषेकः[1] पूर्ववत् । "अदितेऽन्वमꣳस्थाः । अनुमतेऽन्वमꣳस्थाः । सरस्वतेऽन्वमꣳस्थाः । देव सवितः प्रासावीः"

इति परिषेकमन्त्रेषु विशेषः । एतेषां मन्त्राणामृष्यादि पूर्ववत् । विधिना प्रणीतोद्वासनाकरणपक्षेऽत्रोपवेषं निरस्येत् । भङ्क्त्वेति संप्रदायः । तत्रोपवेषस्य समिद्रूपत्वे समिद्भ्रान्त्या समिन्धनादिकार्येषूपयोगः कृतः स्यात्तं निवारयितुं भङ्गो युक्तः । एतस्य स्थूलकाष्ठशकलरूपत्वे तु भङ्गस्य प्रयोजनाभावेन कर्मोपयुक्तव्यतिरिक्तलौकिकाग्नौ प्रक्षेपः । ततोऽग्रेणाग्निं प्रणीताः पर्याहृत्यापरेणाग्निं निधाय प्रागादिक्रमेण दिक्चतुष्टय ऊर्ध्वमधश्च जलमुत्सिच्य भूमाववशिष्टं जलं निनीयाऽऽत्मानं पत्नीं च मार्जयित्वा मुखं संमृजीत । यत्तु गृह्यकारिकाकृतोत्सेचनात्पूर्वं प्रणीतापात्र उदकान्तरानयनमुक्तं तत्प्रमाणाभावादुपेक्ष्यम् । आचार्यकर्तृके होमे यजमानपत्न्योरेव मार्जनं नाऽऽचार्यस्य ।

ततो ब्रह्मणे हिरण्यं गौर्वा पूर्णपात्रं वा तदभावे चमसपूरितं कांस्यपात्रपूरितं वा सकृदवहतमनवहतं वा धान्यं फलानि वा तत्प्रतिनिधिभूतं हिरण्यं + वा दक्षिणां दद्यात् । ब्रह्मा सप्तदशकृत्वोऽपान्य, देवस्य त्वेत्यस्य प्रजापतिः सविता यजुः, प्रतिग्रहे विनियोगः । "ॐ देवस्य त्वा स० भ्यां प्रति० क्षिणेऽग्नये हिरण्यं तेना० ह्णातु" इति हिरण्यं प्रतिगृह्णाति ।

गोप्रतिग्रहे—"ॐ अग्नये हिरण्यं तेन" इत्यस्य स्थाने "रुद्राय गां तया" इति मन्त्रे विशेषः । तृणं प्रदाय प्रतिग्रहः । अन्यत्समानम् ।

धान्यप्रतिग्रहे तु—"ॐ देवस्य त्वा० दक्षिणे विश्वेभ्यो देवेभ्यो धान्यं तेनामृ० गृह्णातु" इति धान्यं प्रतिगृह्णाति ।

फलप्रतिग्रहे तु—उत्तानस्त्वेत्यस्य प्रजापतिराङ्गिरसो[3] यजुः, प्रतिग्रहे विनियोगः—"ॐ उत्तानस्त्वाङ्गी० गृह्णातु" इति फलानि प्रतिगृह्णाति । अत्रापि सावित्रान्वाधीस्त इति केचित् । सर्वत्र व्याहृत्य

+ प्रथमान्तान्येव सर्वाणि प्रकल्प्यान्त एतानीति द्वितीयान्तमध्याहृत्य योजनीयम् ।

१ क. ख. 'कः । अ' । २ क. ख. स्वयंभूः । ३ ग. ङ. 'राङ्गिर' ।

प्रतिग्रहणम् । अधोवायोर्नमनमपाननम् । प्रतिग्रहमन्त्रगतद्रव्यदेवतायै प्रतिग्रहणं नाऽऽत्मन इति संकल्पो व्यावृत्तिः ।

प्रतिनिधित्वेन हिरण्यदाने तु यदीयप्रतिनिधित्वेन दानं तस्य मन्त्रः । निष्क्रयपक्ष उत्तानस्त्वेति प्रतिग्रहः । सर्वेषां तूष्णीमेव वा प्रतिग्रहः । अस्मिन्कल्पे नापाननम् । गोप्रतिग्रहे तस्यै तृणप्रदानं च नास्ति । व्यावृत्त्यप्रतिग्रहणमपि न भवति । भवतीति केचित् । सर्वत्र प्रतिग्रह आग्नेयतीर्थेनैव । “ आग्नेयेन प्रतिग्रहं कुर्यात् ” इति बौधायनोक्तेः । “ करमध्य आग्नेयम् ” इत्याग्नेयतीर्थलक्षणमुक्तं तेनैव ।

पूर्णपात्रलक्षणमुक्तं सुदर्शनभाष्ये—

“ अष्टमुष्टि भवेत्किंचित्किंचिच्चत्वारि पुष्कलम् ।
पुष्कलानि तु चत्वारि पूर्णपात्रं प्रचक्षते ” इति ॥
“ अष्टमुष्टि भवेत्किंचित्किंचिदष्टौ तु पुष्कलम् ।
पुष्कलैरष्टभिश्चैकः पूर्णपात्र उदीरितः ” ॥

इत्याधानवैजयन्त्यां पाठः ।

आगमसारसंग्रहे तु—

“ द्वात्रिंशत्पलताम्रेण निर्मितं ताम्रपात्रकम् ।
तण्डुलेन समापूर्य सहिरण्यं सदक्षिणम् ॥
कर्ता वृताय दद्यात्तत्पूर्णपात्रं विदुर्बुधाः ” ।

इत्युक्तं पूर्णपात्रलक्षणम् ।

छन्दोगपरिशिष्टे तु पुरुषाहारपर्याप्तधान्यस्यापि पूर्णपात्रत्वमुक्तम् । एतेषां शक्त्यपेक्षया योजना द्रष्टव्या । यत्र वैशेषिकी दक्षिणा विहिता तत्रापीदं दाक्षिणादानं कार्य[2]मिति केचित् । वस्तुतस्तु—सौमिकेष्टिपशुबन्धेषु प्राकृतान्वाहार्यदानलोप इवैतस्यापि लोपो युक्तः । अत्र[3] वोपवेषनिरसनम् । ततो ब्रह्मयजमानौ यथेतं प्रतिनिष्क्रामतः । एते च धर्मा आघारवत्सु दर्विहोमेषु गृह्यान्तरे दृष्टाः कृताकृताः । केचिद्वास्तुबलिकर्मानन्तरमेतान्धर्माननुतिष्ठन्ति । ततो यज्ञ नमस्त इत्यस्य विश्वे देवा यज्ञो यजुः । अग्न्युपस्थाने विनियोगः—“ ॐ यज्ञ नमस्ते यज्ञ० उप ते नमः ” इति यजमानो ब्रह्मा[1] चोपतिष्ठते । आचार्यर्त्विजामप्युपस्थानम् । अग्ने नय इत्यस्य विश्वे

१ क. ख. °क्षणं सु° । २ ग. घ. ङ. °र्यमेवेति । ३ ग. अत्रोप° ।

( अग्निपूजनं विभूतिधारणं च )

देवा अग्निस्त्रिष्टुप्, अग्निपूजने विनियोगः—" अग्ने नय० विधेम " इत्यग्न्यायतनात्षडङ्गुलं स्थलं विहायाग्निं तत्रानुलक्षीकृत्य पूजयेत् । वायव्यां दिशीति संप्रदायः । अग्निपूजन आरक्तगन्धपुष्पाक्षतान्वर्जयेत् । आरक्तपुष्पेषु जपापुष्पमेव वा वर्जयेत् । धूपदीपौ वर्जयेदिति कैश्चिल्लिखितं तत्र मूलं न विद्मः ।

मा नस्तोक इत्यस्याग्नी रुद्रो जगती । विभूतिधारणे विनियोगः— " ॐ मा नस्तोके तन० म ते " इत्यग्नेर्विभूतिं ललाटे धृत्वा—

" श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ।
आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन " ।

इत्यग्निं संप्रार्थ्य नमस्कुर्यात् । कर्मसमाप्तौ कर्मोपयुक्तमुदकमवशिष्टं चेत्परित्यज्यारिक्तत्वार्थं शुद्धमुदकं तत्पात्र आनीय स्थापयेत् ।

## इत्यग्निमुखप्रयोगः ।

अमुमुपनयनोपदिष्टं होमविधिमन्यत्राप्यतिदिशति—

" सर्वदर्विहोमाणामेष कल्पः " इति ।

अस्यार्थः । जुहोतिचोदितानि कर्माणि दर्विहोमास्तेषु सर्वेष्वेष उद्धननादिः प्रसाधनीदेवीहोमान्तोऽनुक्रान्तः कल्पो विधिर्भवति । अथवैष प्रसाधनीदेवीहोमान्तोऽनुक्रान्तो व्याहृतिहोमवारुणीहोमादिरनुक्रम्यमाणश्च कल्पो विधिर्भवतीत्यर्थः । पूर्वस्मिन्कल्पेऽग्रे तत्र तत्र व्याहृतिपर्यन्तं कृत्वेति वचनमिमं मे वरुण तत्वा यामीत्यादिविधानं चाप्राप्तत्वादपूर्वविधानार्थम् । द्वितीयकल्पे त्वनुवादो भवति । सर्वग्रहणं यत्र यत्र व्याहृतिहोमविधानं वारुण्याद्यनुक्रमणं च न कृतं भवति तादृशेषु सूत्रोक्तेषु शास्त्रान्तरोक्तेष्वपि च कर्मसु प्रसाधनीदेवीहोमान्तविधिप्रापणार्थम् । अस्मिन्व्याख्यान औपासन होमेऽतिप्रसङ्गः, स व्रीहिभिर्यवैर्वा हस्तेनैते आहुती जुहोतीत्यत्राऽऽहुतिग्रहणेन वारणीयः । एतत्कथमिति चेदुच्यते— एते जुहोतीत्येतावतैव सिद्ध आहुतिग्रहणं नियमार्थम् । आहुती एव केवले स्यातां नेतरत्तत्रेति । अस्मिन्कल्पे परिस्तरणपरिषेकयोरपि निवृत्तिः । ( +हस्ताग्रेणापि कदाचिद्धोमः स्यात्स

---

\+ धनुश्चिह्नान्तर्गतो ग्रन्थो ग. घ. ङ. पुस्तकेषु नास्ति ।

मा भूत्किंतु जुहूवद्धस्तोत्तरपार्श्वेनैव होम इतिज्ञापनार्थं च । ) वैश्वदेवे तूभयतः परिषेचनमिति प्राप्तस्य परिषेकस्य पुनर्वचनबलाद्यथोपदेशं कुरुत इति वचनबलाच्चेतरतन्त्रनिवृत्तिः । द्वितीयकल्पे तत्र तत्र व्याहृतिहोमविधानं वारुण्याद्यनुक्रमणं च परिसंख्यार्थम्, तेनेतरत्र प्रसाधनीदेवीहोमान्त एव विधिर्भवति न सर्वः । आग्नेयस्थालीपाके तूद्वास्येतिल्यप्प्रत्ययेन होमाव्यवधानस्योक्तेरिध्माभ्याधानादि प्रसाधनीदेवीहोमान्तं तन्त्रं निवर्तते। न च श्रपणात्पूर्वमेवेध्माभ्याधानादि प्रसाधनीदेवीहोमान्तमस्त्विति वाच्यम् । तादृशानुष्ठानस्य शास्त्रान्तरविरुद्धत्वेनास्वीकारात् । न च प्रणीताप्रणयनस्याऽऽत्मन्यग्निग्रहणस्य ब्रह्मणश्च निवृत्तिः । "सर्वदर्विहोमाणामेष कल्पः" इत्यनेनेध्माभ्याधानपूर्वतनतन्त्रप्रवर्तने बाधकाभावात् ।

अथवा—

> "आपूर्विकेषु यावदर्थं द्रव्यसंस्कारः परिस्तरणपरिषेकौ
> यावदुक्ता आहुतयोऽन्यानि च वैशेषिकाणि कर्माणि"

इति बौधायनवचनसिद्धमापूर्विकत्वमत्र । तेन प्रणीताप्रणयनादीनामपि निवृत्तिः । आपूर्विकेष्वप्राप्तत्वात्स्विष्टकृद्विधानं सौविष्टकृतीं जुहोतीत्येतावदुच्यमाने यदस्येत्यनेन होमः स्यात्स मा भूदित्येतदर्थमग्नये स्विष्टकृते जुहोतीत्येवं वचनम् । आघारतन्त्राभावादेव वारुण्यादिनिवृत्तिः । पूर्वपरिषेकसंबन्धादेवोत्तरपरिषेकप्राप्तिः । परिस्तरणविसर्गस्त्वार्थिकः । अथ वैवं सूत्रार्थः । जुहोतिचोदितानि कर्माणि दर्विहोमास्तेषु सर्वेष्वेष यथायोग्यं कल्पो विधिर्भवतीति । सर्वग्रहणं त्रिप्रकारा दर्विहोमा आघारवन्त आपूर्विका आग्निहोत्रिकाश्च तेषु सर्वेष्वनेनातिदेशः स्यादित्येतदर्थम् । यत्राऽऽघारवान्दर्विहोमस्तत्र सर्व एव योग्यो विधिः । यत्राऽऽपूर्विको दर्विहोमस्तत्र यावदर्थं द्रव्यसंस्कारः परिस्तरणपरिषेकौ चेत्येतेषामेव योग्यत्वादेतावानेव विधिः ।

नन्वापूर्विकशब्दबलात्केवलं यावदुक्तो होमोऽन्यानि वैशेषिकाणि कर्माणि चेत्येतावदेवानुष्ठेयं नान्यान्यङ्गान्यत्रानुष्ठेयानीति चेत् । सत्यम् । नासंस्कृतेन द्रव्येण जुहुयादिति शास्त्रान्तरेऽसंस्कृतद्रव्यहोमनिषेधेन द्रव्यसंस्कारस्याऽऽवश्यकत्वात् । अधिकरणसंबन्धित्वात्परिस्तरणपरिषेकावपि । न चैवमिध्माभ्याधानमप्यग्निसंबन्धित्वात्स्यादिति वाच्यं, बौधायनेनानुक्तत्वेन तदभावस्यैव सिद्धेः । आघाराभावादपीध्माभ्याधानस्याभावः । इध्माभ्याधानस्याऽऽघारसंबन्धित्वेनैकसंबन्धिनिवृत्तावपरसंबन्धिनोऽपि निवृत्ते-

निर्विवादत्वात् । एतयोः परस्परसंबन्धित्वे ज्ञापकं त्वथ दर्व्या जुहोतीत्यस्मिन्सूत्रे प्रदर्शितम् ।

सर्वं चैतदाह बौधायनः—

"आपूर्विकेषु यावदर्थं द्रव्यसंस्कारः परिस्तरणपरिषेकौ यावदुक्ता आहुतयोऽन्यानि च वैशेषिकाणि कर्माणि" इति ।

द्रव्यग्रहणं होमसाधनोपलक्षणम् ।

"नासंस्कृतेन पात्रेण जुहुयात्"

इति शास्त्रान्तरसंवादात् । एतावन्त्येवाङ्गान्याग्निहोत्रिकेषु संस्कृताज्येन चतुर्गृहीत्वा सर्वान्मन्त्राननुद्रुत्य प्रथमाहुतिः । अग्नये स्विष्टकृते स्वाहेति द्वितीयाहुतिः । ततोऽग्निहोत्रवत्त्रिः प्राशनं स्रुचो दर्भैः प्रक्षालनं यथोक्तानि वैशेषिकाणि कर्माणि ।

तथा च बौधायनः—

"आग्निहोत्रिकेषु स्रुक्स्रुवौ प्रयुज्याऽऽज्यं संस्कृत्य चतुर्गृहीत्वा सर्वान्मन्त्राननुद्रुत्य प्रथमामाहुतिं जुहोत्यग्नये स्विष्टकृते स्वाहेति द्वितीयामग्निहोत्रवत्त्रिः प्राश्य स्रुचं दर्भैः प्रक्षालयति यथोक्तानि वैशेषिकाणि कर्माणि ततः करोति" इति ।

दर्विहोमाणामित्यत्र बहुवचनं नानाहविष्कत्वायुज्यते । एतच्चोभयकल्पेऽपि समानम् । सर्वत्रैष कल्प इति वक्तव्ये दर्विहोमवचनं जुहोतिचोदितेष्वेव कर्मस्वेष कल्पो यथा स्यात्, जपत्यादिचोदितेषु मा भूदित्येतदर्थम् । एतदप्युभयकल्पे समानम् । यत्रोभयानुवादोऽन्यतरानुवादो वा तत्राऽऽघारवदेव तन्त्रम् । अन्यत्र त्रयाणां द्वयोर्वा विकल्पः कुत्रचिन्नियमो वा । तत्र त्रिवृदन्नहोमे बहिःसंस्कृतान्नप्रापकोपस्थितवचनबलादापूर्विकत्वमेव ।

मासिकश्राद्धे बहिःसंस्कृतान्नहोमेऽप्याघारवत्तन्त्रदर्शनादाघारवत्तन्त्रमपि पक्षे ।

स्थालीपाके तु व्याख्यानद्वयेऽप्यापूर्विकत्वमेव । भाष्यकृता तु पक्ष आघारवत्तन्त्रमप्यत्रोक्तम् । यत्र केवले चरुहोमे स्थालीपाकशब्देन विधानं नास्ति किंतु चरुशब्देन पक्वाज्जुहोतीत्येवं वा तत्राऽऽपूर्विकतन्त्रमेव । यत्र त्वाज्यादिहोमसहितश्चरुहोमस्तत्राऽऽघारवत्तन्त्रेणैव चरुहोमः । एतद्विषये ज्ञापकमथैनामाग्नेयेन स्थालीपाकेन याजयतीत्यस्मिन्सूत्रे प्रदर्शयिष्यते । एकाहुतिकेषूद्रवणादिनिमित्तकेषु होमेषु त्रयाणां द्वयोर्वैच्छिको विकल्पः । द्वित्र्याद्याहुतिकेषु होमेषु सर्वाननुद्रुत्य प्रथमामाहुतिं जुहोतीत्येतस्य विधेः स्वसूत्रविरुद्धत्वान्नाऽऽग्निहोत्रिकविधिः ।

१ क. °नलिङ्गादा° ।

औपासनहोमे त्वापूर्विकमेव तन्त्रम्। अत्र यद्यप्यतिदिष्टो विशेषविहितो वा द्रव्यसंस्कारो नास्ति तथाऽपि नासंस्कृतेन द्रव्येण जुहुयादितिशास्त्रान्तरेऽसंस्कृतद्रव्यहोमनिषेधाच्छ्रौतहोमोपदिष्टो मन्त्रवर्जं यथायोग्यं द्रव्यसंस्कारः कार्य एव। एवं श्रौतहोमोपदिष्टो होमसाधनसंस्कारोऽपि। स च निष्टपनमार्जनात्मकः। हस्तेन होमे सव्यहस्तेन दक्षिणहस्तस्य परिमार्जनम्। आज्येनोपासनहोमपक्ष आज्यसंस्कारो गृह्योक्तो मन्त्रवर्जं श्रौतो वा कार्यः। परिस्तरणपरिषेकावपि कार्यौ। अस्मिन्कल्प आहुतिग्रहणप्रयोजनमङ्गुल्युत्तरपार्श्वेन[1] होमसिद्धिरेव। वैश्वदेव इतरतन्त्रनिवृत्तिः पूर्ववदेवात्रापि। शास्त्रान्तरप्रोक्तेषु चर्वतिरिक्तद्रव्यसाध्येषु कर्मसु त्वाघारवत्तन्त्रमापूर्विकं तन्त्रं वेति यथाचारं व्यवस्थितं ज्ञेयमिति दिक्।

इत्यग्निमुखप्रयोगः।

इत्योकोपाह्वश्रीमद्गणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां प्रथमं प्रकरणम् ॥ १ ॥

१ ग. घ. ङ. 'जनं हस्ताग्रेणात्र न होमः किंतु हस्तोत्तरपार्श्वेनेवेति द्रष्टव्यम्। वै'।

अथ द्वितीयं प्रकरणम् ।

## प्रायश्चित्तसंग्रहकारिकाः ।

अथ संक्षेपेण कर्मसंधानार्थानि प्रायश्चित्तानि । तत्र तेषां संग्राहिका मत्कृताः कारिकाः—

विहितस्याननुष्ठानेऽन्यथानुष्ठान एव च ।
श्रुतिलक्षणकं प्रायश्चित्तं कृत्स्नं विधीयते ॥ १ ॥
प्रायो विनाशपर्यायः संधानं चित्तमीरितम् ।
तच्च ज्ञेयं द्विधा प्रत्यक्षातीन्द्रियविभेदतः ॥ २ ॥
बहिर्गतस्यानलस्य तत्र संस्थापनं पुनः ।
स्कन्नस्य हविषः शुद्धदेशस्थस्य पुनर्ग्रहः ॥ ३ ॥
बुधैश्चित्तं ह्येवमादि प्रत्यक्षं परिकीर्तितम् ।
जपहोमादिकं चित्तं बुधैः स्मृतमतीन्द्रियम् ॥ ४ ॥
प्रायश्चित्तनिमित्ते चेद्यत्संख्यावचनादिकम् ।
श्रूयमाणं भवेत्तच्च विज्ञेयमविवक्षितम् ॥ ५ ॥
आज्यं संस्कृत्य वह्नेस्तु परिस्तरणमाचरेत् ।
परिषिच्य ततोऽद्भिस्तं शुक्लपुष्पाक्षतादिभिः ॥ ६ ॥
अलंकृत्याग्निमाधाय पालाशीं समिधं ततः ।
सस्वाहाकारमन्त्रेण जुहुयाद्विहिताहुतिम् ॥ ७ ॥
दर्व्या संस्कृतया ज्ञेयः प्रायश्चित्तहुतौ विधिः ।
अथवा श्रौतसूत्रोक्ताः श्रौतसूत्रोक्तरीतितः ॥ ८ ॥
चित्तहोमाः प्रकर्तव्या नियमेन विचक्षणैः ।
शास्त्रान्तरोक्ताः सर्वे तु स्युर्गार्ह्यविधिनैव हि ॥ ९ ॥
एते विवेचयिष्यामः समनन्तरमेव तु ।
श्रौते भवेत्स्रुचा होमो नियता समिदाहितिः ॥ १० ॥
अनेकाहुतिके होमे तावत्यः समिधः स्मृताः ।
परिस्तृतौ विकल्पः स्यात्परिषेकस्त्वमन्त्रकः ॥ ११ ॥
परीत्यानलमग्रेण तस्य दक्षिणतः स्थितः ।
नाभिं प्रति स्रुचं धृत्वा जुहुयाद्विहिताहुतिम् ॥ १२ ॥

अनेकाहुतिके होमे विग्राह्यं होम ईरितः ।
यत्र स्रुवाहुतिविधिस्तत्र नाऽऽसादयेत्स्रुचम् ॥ १३ ॥
गृह्ये स्रुवाहुतिविधावपि दर्व्येव कीर्तिता ।
द्विस्त्रिर्गृहीतादिहोमे[1] स्यात्स्रुवोऽप्युभयत्र तु ॥ १४ ॥
ग्रहणार्थं स्रुवस्यापि कर्तव्यं सादनं त्विह ।
दर्व्याः स्रुचो वा संमार्गात्पूर्वं संमार्ग ईरितः ॥ १५ ॥
श्रौतस्रुवस्येव भवेत्संमार्गो मन्त्रवर्जितः ।
संमार्गदर्भाधानात्प्राक्चित्तहोमो यदाऽऽपतेत् ॥ १६ ॥
तदा संस्कृत्य चित्तार्थमाज्यं तेन हुतिं चरेत् ।
निर्वापकाले चित्तं चेत्तदाऽऽज्यं त्वेकमेव हि ॥ १७ ॥
चित्तार्थमथ कर्मार्थं नात्रोत्पत्तिः पृथग्भवेत् ।
श्रौतोक्तरीत्या होमेऽपि गृह्योक्त्यैवाऽऽज्यसंस्कृतिः ॥ १८ ॥
अग्नेः परिस्तृतेरूर्ध्वं नैव कार्या परिस्तृतिः ।
न कार्यं समिदाधानमिध्माधानादनन्तरम् ॥ १९ ॥
प्रायश्चित्तस्य कालस्तु निमित्तानन्तरं स्मृतः ।
प्रधानहोमतः प्राग्वा बौधायनमुनिस्मृतेः ॥ २० ॥
प्रायश्चित्तविशेषो न यत्र प्रोक्तस्तु तत्र वै ।
समस्ताभिर्व्याहृतिभिरेकाहुतिरुदीरिता ॥ २१ ॥
भवेद्दर्व्या स्रुचा वेयमाहुतिर्न स्रुवेण तु ।
एतदेव स्मृतं सर्वप्रायश्चित्तं हि याज्ञिकैः ॥ २२ ॥
यत्र होमस्त्वदृष्टार्थं विहितो न भवेद्यदि ।
सर्वाभिधानकं प्रायश्चित्तं तत्र तदाचरेत् ॥ २३ ॥
यत्र होमस्त्वदृष्टार्थं विहितोऽपि भवेद्यदि ।
सर्वाभिधानकं चित्तं तत्रापि च समाचरेत् ॥ २४ ॥
पूर्वमालेखनमतमाश्मरथ्यमतं परम् ।
पात्रानुक्तौ चित्तहोमे श्रौते स्रुग्घोमसाधनम् ॥ २५ ॥
गार्ह्ये भवेच्चित्तहोमे दर्विका होमसाधनम् ।
संख्यानुक्तौ सकृद्ग्राहो द्रव्यानुक्तौ घृतं स्मृतम् ॥ २६ ॥
कर्महोमस्य कर्ता यः स एवात्र प्रकीर्तितः ।
दाने कर्ता पतिः प्रोक्तः पत्नी स्यात्तदसंनिधौ ॥ २७ ॥

---

१ ग. घ. ङ. द्विरादिके ग्रहे गार्ह्ये श्रौत एकादिके स्रुवः । प्र° ।

एवं त्यागेऽपि विज्ञेयं कात्यायनमुनिस्मृतेः।
अनाहिताग्नेश्चित्तेष्टिस्थाने स्युः पाकधर्मतः॥ २८॥
सर्वत्र चरवः शास्त्रान्तराज्ज्ञेयं बुधैरिदम्।
पूर्णाहुतिरशक्तौ स्यात्तत्प्रकारोऽधुनोच्यते॥ २९॥
चतुर्वारं गृहीत्वाऽऽज्यमष्टवारमथापि वा।
स्रुचि द्वादशवारं वा दर्विकायामथापि वा॥ ३०॥
उपोत्तमेनान्तिमेन सह वा ग्रहणेन तु।
अभिपूर्याऽऽज्येन तां तु स्वाहाशब्दसमन्वितम्॥ ३१॥
चतुर्थ्यन्तं देवताया नाम प्रोक्त्वा तयाऽऽहुतिः।
स्वाहान्ते तु बुधैर्देया पूर्णाहुतिरियं स्मृता॥ ३२॥
पूर्णस्रुवेणात्यशक्तौ पूर्णाहुतिरुदीरिता।
सर्वत्रानाज्ञातजपो वैष्णव्यृग्जप एव च॥ ३३॥
समस्तव्याहृतीनां च जपः कार्यो त्रिपश्चिता।
द्रव्यस्य विहितस्यात्राभावश्चेत्स्यात्स्वरूपतः॥ ३४॥
स्वीकर्तव्यः प्रतिनिधिः प्रायश्चित्तं न चात्र तु।
अर्थद्रव्यविरोधेऽर्थो बलीयान्संप्रकीर्तितः॥ ३५॥
तत्र स्वरूपसत्तायामपि प्रकृतकर्मणः।
प्रधानकार्याशक्तत्व एष न्यायः प्रकीर्तितः॥ ३६॥
विरोधे द्रव्यगुणयोर्बलवद्द्रव्यमीरितम्।
प्रधानकार्यशक्तत्वे गुणसंपादनाय न॥ ३७॥
उपादानं प्रतिनिधेस्तत्रैष न्याय ईरितः।
लोपे स्वराक्षरादीनामाभिरित्याहुतिः स्मृता॥ ३८॥
मन्त्रलोपे प्रोक्षणादिलोपे च व्यत्यये तथा।
त्वं नः स त्वं न इत्याभ्यां जुहुयादाहुतिद्वयम्॥ ३९॥
यदि प्रधानयागात्प्राग्लुप्तस्य स्मरणं भवेत्।
तदा चित्तोत्तरमनिष्पन्नार्थाङ्गस्य वै क्रिया॥ ४०॥
निष्पन्नार्थं यदाऽङ्गं चेच्चित्तमेव न तु क्रिया।
उदाहरणमेतस्य ज्ञेयमिध्मेन्धनादिकम्॥ ४१॥
आज्यभागोत्तरं मुख्याहुतितः प्राक्स्मृतिर्यदि।
तदेध्ममनले दत्त्वा विपर्यासार्थचित्तकम्॥ ४२॥

ऊर्ध्वं चेच्चित्तमेव स्यादिति सूत्रे निदानके।
आज्यभागाद्यङ्गलोपे त्वं नः स त्वं न आहुती ॥ ४३ ॥
अकाले चेत्कृतं कर्म भवेद्यत्तस्य नैव तु।
क्रमार्थं पुनरावृत्तिरित्युक्तं कठसूत्रके ॥ ४४ ॥
परिस्तरणदर्भाणां परिधीनां च बर्हिषः।
इध्मोपवेषशुल्बानां दाहे च च्छेदने तथा ॥ ४५ ॥
मूत्राद्यैरुपघाते च सर्वथा च विनाशने।
तज्जातीयं च तद्रूपं तत्प्रमाणं तथैव च ॥ ४६ ॥
आहृत्य तद्यथापूर्वं यथास्थानं निवेश्य च।
तेन कर्म प्रकर्तव्यं नैवोपहतसंग्रहः ॥ ४७ ॥
द्वे त्वमग्ने अयाः प्राजापत्यर्चा च स्रुवाहुती।
इध्मे न्यूना समिच्चेत्स्याद्यत्पाकत्राहुतिं तदा ॥ ४८ ॥
हुत्वा संपादयेन्न्यूनमुक्तसंस्कारपूर्वकम्।
अधिके त्वधिकं त्याज्यं भवेदत्रापि साऽऽहुतिः ॥ ४९ ॥
बर्हिरिध्मादिपतने स्थालीपाकादिकर्मसु।
संस्थाप्य तूष्णीं स्वस्थाने जुहुयात्सर्वचित्तकम् ॥ ५० ॥
आधेयाग्न्युपघाते तु पुनस्त्वामन्त्रतः समित्।
एतेनैवाऽऽहुतिस्त्वेका होतव्योपहतेऽनले ॥ ५१ ॥
यदा कदाचिदग्निश्चेत्स्वयं प्रज्वलितस्तदा।
उद्दीप्यस्वेतिमन्त्राभ्यां द्वाभ्यामग्नौ समिद्द्वयम् ॥ ५२ ॥
प्रणीतानां प्रोक्षणीनां स्कन्दने पात्रपूरणम्।
आपो हि ष्ठादिभिः कुर्या[1]त्ततमित्याहुतिस्ततः ॥ ५३ ॥
शोषे स्रावेऽप्येवमेव प्रायश्चित्तं प्रकीर्तितम्।
समुत्सर्पेदायतनाद्बहिरग्निः स चेद्यदि ॥ ५४ ॥
पुनः प्रक्षेपणे योग्यस्तं धृष्ट्याऽऽदाय वै पुनः।
स्वस्थाने व्याहृतीभिस्तं प्रक्षिपेत्तदनन्तरम् ॥ ५५ ॥
सर्वप्रायश्चित्तमनाज्ञातत्रयजपादि च।
अध्वर्य्वाग्नीध्रहोतॄणां प्रयाजानां तथैव च ॥ ५६ ॥
अभावान्मा तम इति चित्तं नैतद्भवेदिह।
अङ्गारो यद्यायतनात्पतितश्चेद्बहिः स च ॥ ५७ ॥

१ घ. ङ. 'ततमि'।

श्रौताग्नेर्लौकिकाग्नेर्वा सांनिध्याज्ज्ञायते नहि ।
कस्यानलस्यायमिति तदाऽङ्गारमुपेक्ष्य तम् ॥ ५८ ॥
सर्वाख्यचित्तं जुहुयादित्युक्तं द्विशतीकृता ।
श्रौताग्नावथ गृह्याग्नौ होतव्यं सर्वचित्तकम् ॥ ५९ ॥
निर्वापादूर्ध्वमाज्यं चेत्स्कन्देदुत्पवनात्पुरा ।
वरं दत्त्वा ब्राह्मणाय देवान्जनमगन्निति ॥ ६० ॥
एतैर्मन्त्रैः पञ्चभिर्यत्स्कन्नं तदनुमन्त्रयेत् ।
उत्पूयमानमाज्यं चेत्स्कन्देद्दत्त्वा तदा वरम् ॥ ६१ ॥
अजां गां वा प्रदत्त्वा च देवानित्यादि पूर्ववत् ।
स्कन्देदुत्पूतमाज्यं चेत्तदा यत्स्वगृहे भवेत् ॥ ६२ ॥
मुख्यं द्रव्यं प्रदत्त्वा तद्देवानित्यादि पूर्ववत् ।
गृहीताज्यस्कन्दने तु वरदानानुमन्त्रणे ॥ ६३ ॥
विधाय भूपतय इत्येतेन मनुना पुरः ।
स्कन्नाज्यस्य प्रकुर्वीत प्रादेशं तदनन्तरम् ॥ ६४ ॥
भुवनेति तु मन्त्रेण तस्य दक्षिणतो भवेत् ।
भूतानां पतय इति तस्य पश्चिमतो भवेत् ॥ ६५ ॥
भूतायेत्युत्तरे तस्योर्ध्वं तु व्याहृतिभिः स्मृतः ।
स्वाहान्ता मनवो ज्ञेया बुधैर्व्याहृतिभिर्विना ॥ ६६ ॥
स्कन्नोपरि ततो वारि सिञ्चेत्सं त्वेतिमन्त्रतः ।
प्रक्षिपेच्छुचिदेशस्थं चेद्यज्ञस्येतिमन्त्रतः ॥ ६७ ॥
अभिमन्त्र्याशुचिस्थं चेद्गृह्णीयात्स्थानतः पुनः ।
हविःस्कन्देऽप्येष एव प्रायश्चित्तविधिः स्मृतः ॥ ६८ ॥
स्कन्दनं स्रुवपर्याप्तस्याधिकस्यापि वा यदि ।
एतत्स्कन्दनचित्तं तु तदा ज्ञेयं विचक्षणैः ॥ ६९ ॥
स्रुवपर्याप्ततो न्यूनस्कन्दे सर्वाभिधं भवेत् ।
द्रवद्रव्येषु सर्वेष्वप्येवमेव प्रकीर्तितम् ॥ ७० ॥
सर्वेषु कठिनद्रव्येष्वङ्गुष्ठपरुषोऽधिकम् ।
स्कन्नं यदि भवेत्पूर्वं चित्तमूने तु सर्वकम् ॥ ७१ ॥
नैव चित्तं भवेत्स्कन्दे बर्हिर्भस्मानलादिषु ।
अग्निक्षिप्ताहुतेः स्कन्दो बहिष्परिधि चेद्भवेत् ॥ ७२ ॥
संकृष्याञ्जलिना तां तु जुहुयान्मा यजेत्यतः ।
स्वस्यैव कर्तृताऽत्र स्यान्नाऽऽग्नीध्रस्तदसंभवात् ॥ ७३ ॥

एता९ संकृष्य जुहुधीत्येतल्लोपोऽत एव तु ।
पूर्णपात्रप्रदानस्यापि लोपोऽत्र प्रकीर्तितः ॥ ७४ ॥
निर्वापादावविहितां देवतां योजयेद्यदि ।
तस्मिन्द्रव्ये तु संयोज्य विहितां देवतां तदा ॥ ७५ ॥
यद्वो देवा अतीत्येतन्मनुना जुहुयात्ततः ।
देवतां चेदविहितां संस्मरन्निष्टवांस्तदा ॥ ७६ ॥
प्रायश्चित्तमिदं कृत्वा यागमावर्तयेत्कृतम् ।
एतदेव भवेच्चित्तमौपासनहुतावपि ॥ ७७ ॥
विपर्यासो यदि भवेत्स्वाहाकारप्रदानयोः ।
तदा मनोज्योतिरिति जुहुयाद्वै मनस्वतीम् ॥ ७८ ॥
अवदानद्रव्ययागदेवमन्त्रविपर्यये ।
ज्ञाते तन्त्रसमाप्तेः प्राक्त्वं नः स त्वं न आहुती ॥ ७९ ॥
जुहुयाद्वै ततः सर्वप्रायश्चित्तादिकं स्मृतम् ।
यन्मुख्यं स्वगृहे द्रव्यं दद्याद्विप्राय वै ततः ॥ ८० ॥
तन्त्रावृत्तिः पुनः कार्याऽत ऊर्ध्वं न भवेद्धुतिः ।
प्रधानद्रव्यस्यैकस्यानेकस्याप्यथवा पुनः ॥ ८१ ॥
बहुप्रधाने होमेऽनुत्पादे स्याद्यदि यागतः ।
पूर्वं स्मृतिस्तदा त्वं नः स त्वं नो अग्न आहुती ॥ ८२ ॥
हुत्वा द्रव्यं तदुत्पाद्य यागं कुर्याद्यथास्थितम् ।
स्मृते यागादुत्तरं तु कर्माऽऽरब्धं समापयेत् ॥ ८३ ॥
चित्तं ततोऽनन्तरोक्तमाहुत्यात्मकमाचरेत् ।
साङ्गस्यान्तरितस्यैव प्रधानस्य ततः कृतिः ॥ ८४ ॥
(*एकदेशापहारेऽग्नेर्मनस्वत्याहुतिर्भवेत् ।
औपासनहुतौ प्रातर्होमे चेदग्नये हुतम् ॥ ८५ ॥
सायंहोमे तु सूर्याय हुतं चेत्स्यात्पुनः क्रिया ।
तदा होमस्य कर्तव्या पक्षश्चेत्स्वीकृतो भवेत् ॥ ८६ ॥
तदेव चित्तमेतत्स्यान्नान्यपक्षे भवेदिदम् ।)
एकावदानाग्रहणे ज्ञाते यागात्पुरो यदि ॥ ८७ ॥
त्वं नः स त्वं न इत्याभ्यां जुहुयादाहुतिद्वयम् ।
अवदानं गृहीत्वा तद्यागं कुर्याद्यथास्थितम् ॥ ८८ ॥

---

* धनुश्चिह्नान्तर्गतं क. पुस्तक एव ।

यागोत्तरं यदि ज्ञातमाहुतिद्वयमेव तु।
होतव्यं न तदा यागः पुनः कार्यो मनीषिभिः ॥ ८९ ॥

---

अथ वक्ष्ये हविर्दोषान्यैर्हविर्दुष्टतामियात्।
अशुचिर्मक्षिका नीला याऽश्वदेहे च वर्तते ॥ ९० ॥
कुशातिका गवामङ्के तल्पादिषु च मत्कुणः।
यूका चैलशिरःस्था स्यात्कीटश्च मलपिण्डकृत् ॥ ९१ ॥
मार्जारो नकुलश्चाऽऽखुर्विष्ठा वायसकुक्कुटौ।
श्वा वानरो वस्त्रदशा छिन्नकेशनखानि च ॥ ९२ ॥
अशुचि स्याच्छरीरस्थमपि कुत्सितकं नखम्।
द्रव्याणि पूतिगन्धीनि घुणाख्यः कीट एव च ॥ ९३ ॥
द्रप्सस्वेदाश्रवसृक्स्नेहकासक्षवथवस्तथा।
नासिकामुखजो बिन्दुर्द्रप्सो ज्ञेयो हि सूरिभिः ॥ ९४ ॥
शरीरजं जलं स्वेदो वार्यश्रूक्तं हि नेत्रजम्।
असृग्ज्ञेयं हि रुधिरं स्नेहो घ्राणमलः स्मृतः ॥ ९५ ॥
कासः श्लेष्मविकारः स्याद्वदनाद्यो विनिर्गतः।
क्षवथुः क्षुतमित्युक्तं गोपालाख्येन सूरिणा ॥ ९६ ॥
मूत्रमज्जे वसाशुक्रे कर्णविट्पूयसस्तथा।
एतैरशुचिभिः स्पृष्टमन्यैरेतादृशैरपि ॥ ९७ ॥
उदक्यासूतिकाभ्यां वा चण्डालपतितादिभिः।
शिशुर्यज्वा गर्भिणी च ब्राह्मणो नृप इत्यमी ॥ ९८ ॥
भ्रूणा एतद्विहन्तारः स्मृता भ्रूणहनो बुधैः।
एतैरन्यैश्च पापिष्ठैः स्पृष्टं दृष्टं च यद्भवेत् ॥ ९९ ॥
यत्र प्रसूयते नारी म्रियते दह्यतेऽपि वा।
चण्डालाध्युषिते यत्र यत्र विष्ठादिसंगतिः ॥ १०० ॥
तस्मिन्नमेध्ये देशे यन्निहितं तच्च दुष्यति।
दुष्टं प्रधानयागात्प्राग्घविर्यदि भवेत्तदा ॥ १ ॥
शुद्धवारिणि हस्तेन तद्धविः प्रक्षिपेत्ततः।
द्वे मिन्दे जुहुयात्सर्वप्रायश्चित्तादिकं तथा ॥ २ ॥
पुनर्हविस्तावदेवोत्पाद्य यागः क्रमाद्भवेत्।
अत्यशक्तौ पुनर्यागमाज्येनैव समाचरेत् ॥ ३ ॥

दुष्टे यागोत्तरं शेषमाज्येनैव समापयेत् ।
दुष्टेन हविषा यागः कृतश्चेज्जुहुयात्तदा ॥ ४ ॥

प्रणवेन व्याहृतिभिर्जुहुयाद्द्वे स्रुवाहुती ।
पुनर्यागो नात्र भवेत्कात्यायनमुनिस्मृतेः ॥ ५ ॥

अवदानस्य ग्रहणे दोषज्ञानं यदा भवेत् ।
प्रक्षिपेत्तद्धविः सर्वं दुष्टं शुद्धजले ततः ॥ ६ ॥

पुनर्हविः समुत्पाद्य त्वं नः स त्वं न आहुती ।
हुत्वा यागं तेन कुर्यादनाज्ञातजपादि च ॥ ७ ॥

मध्यात्पूर्वार्धतोऽवत्तं गृहीतं दोषगामि चेत् ।
तत्प्रक्षिप्य जले शुद्धे मध्यात्पूर्वार्धतः पुनः ॥ ८ ॥

अवदाय यजेत्सर्वप्रायश्चित्तादिकं ततः ।
प्रधानयागद्रव्यस्य प्रधानात्प्राग्विनाशनम् ॥ ९ ॥

ज्ञातं भवेत्तदा तस्मिन्नेव तन्त्रे तदैव तु ।
नष्टं हविः समुत्पाद्य तेन यागं समाचरेत् ॥ ११० ॥

यागे बहुहविष्के स्यात्सर्वेषां हविषां यदि ।
नाशो दोषोपहारो वा प्रतिसंख्याय देवताः ॥ ११ ॥

इष्ट्वाऽऽज्येनैव सर्वास्ता यागमावर्तयेत्पुनः ।
अवर्जनीयैः क्षुद्रैश्चेन्मक्षिकाकीटकादिभिः ॥ १२ ॥

पिपीलिकादिभिश्चैव जीवैः स्याद्धविषो यदि ।
योगः पञ्चाधिकर्ज्ञेया तदा तस्य सदोषता ॥ १३ ॥

न्यूनैश्चेत्पतिताञ्जीवानुद्धृत्याद्भिः समुक्ष्य च ।
लौकिकाभ्यां पवित्राभ्यां पवनात्तस्य योग्यता ॥ १४ ॥

हविष्यपक्वे चित्तं तु कर्माऽऽरब्धं समाप्य तत् ।
चतुःशरावमात्रं तु पक्त्वा सुशृतमोदनम् ॥ १५ ॥

भोजयेत्तेन चतुरः सुशीलान्ब्राह्मणाञ्शुचीन् ।
तेषां भार्गव एकः स्यात्तेभ्यो देया वराः समाः ॥ १६ ॥

कृत्स्नं दग्धं यदा तत्स्यात्पुनरुत्पादयेद्धविः ।
स एव यागः कर्तव्यो न पुनर्याग इष्यते ॥ १७ ॥

स्वल्पं हविरदग्धं चेत्तदा सर्वाभिधानकम् ।
प्रायश्चित्तं प्रकुर्वीत ततो यागं च शेषतः ॥ १८ ॥

समापयेद्धुतेनान्यन्न पुनर्याग इष्यते ।
अधुना हविरुत्सेकप्रायश्चित्तं प्रवक्ष्यते ॥ १९ ॥
प्राच्यां दिशि समुत्सेकेऽग्नये स्वाहाहुतिर्भवेत् ।
दक्षिणस्यां यमायेति वरुणायेति पश्चिमे ॥ १२० ॥
सोमायेत्युत्तरस्यां स्यात्सर्वाभ्यः सर्वदिक्षु चेत् ।
यद्यवान्तरदिक्षु स्याद्धोमो व्याहृतिभिस्तदा ॥ २१ ॥
सर्वेष्वेतेषु होमत्वात्स्वाहाकारान्तता भवेत् ।
आप्यायस्वेति समिति चाऽऽज्येनाऽऽप्याययेद्धविः ॥ २२ ॥
द्वे मिन्दे जुहुयात्सर्वप्रायश्चित्तादिकं तथा ।
यागान्वाधानयोर्मध्ये यदि सूर्यग्रहो भवेत् ॥ २३ ॥
उद्वयं तमसस्पर्युदु त्यं चित्रमिति त्रिभिः ।
जुहुयादाहुतीस्तिस्रः प्रधानात्पूर्वमेव तु ॥ २४ ॥
केचिन्मन्त्रत्रयेणात्रोपस्थानमपि कीर्तितम् ।
मध्ये चन्द्रग्रहश्चेत्प्राक्प्रधानादाहुतिद्वयम् ॥ १२५ ॥
नवो नवो यमादित्या इत्याभ्यां जुहुयात्तदा ॥
केचिन्मन्त्रद्वयेनात्रोपस्थानमपि कीर्तितम् ॥ २६ ॥
अन्वाधानाक्रियायां तु न प्रायश्चित्तमिष्यते ।
वानस्पत्यस्य पात्रस्य भेदनेऽन्यत्समाहरेत् ॥ २७ ॥
गृह्याग्नौ ज्वलितं भिन्नं प्राग्दण्डं प्रहरेत्ततः ।
लौकिकानलसाध्यायां क्रियायां लौकिकेऽनले ॥ २८ ॥
वानस्पत्यस्य भिन्नस्य प्रक्षेपः पूर्ववद्भवेत् ।
मृन्मयं चेद्भिभिद्येत भूमिर्भूमिमगादिति ॥ २९ ॥
ब्रह्माभिमन्त्रितं भिन्नमभावे स्वाभिमन्त्रितम् ।
क्षिपेत्पात्रं जले शुद्धे तत्कार्येऽन्यन्नियोजयेत् ॥ १३० ॥
क्रियाकाले विधिमिमं प्राहुरन्ये तु सर्वदा ।
यत्किंचित्पात्रभेदे तु प्रणवेन घृताहुतिः ॥ ३१ ॥
समस्तव्याहृतीभिर्वा होतव्या यज्ञपार्श्वतः ।
आज्याधिश्रयणात्पूर्वं निरूढाग्नेर्विनाशनम् ॥ ३२ ॥
भवेद्यदि तदा स्थानात्पुनः कुर्यान्निरूहणम् ।
ततश्चतुर्गृहीतेन मनस्वत्याहुतिर्भवेत् ॥ ३३ ॥

१ क. ख. 'स्याज्जुहुयाद्याहृतीस्तदा । आ'। २ ग. चेद्भि भि'।

आज्यस्योद्वासनादूर्ध्वं निरूढाग्नेर्विनाशने ।
मनस्वत्येव होतव्या न तु तत्र निरूहणम् ॥ ३४ ॥
प्रधानाहुतिसंसृष्टा स्याच्चेत्स्विष्टकृदाहुतिः ।
तदा सर्वाभिधं चित्तमनाज्ञातजपादि च ॥ १३५ ॥

अन्वाधानोत्तरं स्वप्ने भवेत्स्वाम्यृत्विजां यदि ।
रेतःपातस्तदेमं मे तत्त्वा यामीति चाऽऽहुती ॥ ३६ ॥
हुत्वा व्याहृतिभिश्चैकां सूर्यं संपूजयेत्ततः ।
पुनर्मामनुवाकस्य जपस्त्रिरथ वा सकृत् ॥ ३७ ॥

विसर्गो बुद्धिपूर्वं चेत्तदा व्रातपतोऽधिकः ।
स्थालीपाकः प्रकर्तव्यः पूर्णाहुतिरथापि वा ॥ ३८ ॥
नैमित्तिको विरामश्चेत्किंचित्प्रारब्धकर्मणि ।
तदा सर्वाभिधं चित्तं हुत्वा शेषं समापयेत् ॥ ३९ ॥

चतुष्पादद्विपादानां कर्ममध्ये भवेद्यदि ।
ऋत्विजामृत्विगग्न्योर्वा पतिहोत्रोरथापि वा ॥ १४० ॥
चेद्वा भवेत्स्वामिपत्न्योरन्तरा गमनं तदा ।
मिन्दादिसंज्ञं दुर्गादिसंज्ञं वा जुहुयाद्गणम् ॥ ४१ ॥

दर्व्या द्वादशवारं तु गृहीत्वा स्रुचि वा घृतम् ।
तेन पश्चाऽऽहुतीः कार्या दुर्गादिगणहोमके ॥ ४२ ॥
एतत्कर्तुमशक्तश्चेज्जुहुयात्सर्वचित्तकम् ।
मिन्दाहुतिद्वयं चैव व्याहृत्यः प्रणवाधिकाः ॥ ४३ ॥

वारुण्यस्तन्तुमत्यश्चानुख्या चैव मनस्वती ।
महाव्याहृतयः सप्त ते प्रजापत एव च ॥ ४४ ॥
एष मन्त्रसमूहः स्यान्मिदादिगणसंज्ञकः ।
जातवेदस आद्यः स्यान्मनोज्योतिर्द्वितीयकः ॥ ४५ ॥
महाव्याहृतयस्तिस्र एष दुर्गादिको गणः ।
अन्वाहिताग्निरथ चेत्प्रयास्यञ्जुहुयात्तदा ॥ ४६ ॥
तुभ्यमित्याहुतिं हुत्वाऽरण्योः समिधि वा ततः ।
समारोप्यानलं यत्र वसेत्तत्र तु मन्थनम् ॥ ४७ ॥
उपावरोहमन्त्रेण कृत्वा कर्म समापयेत् ।
प्रमादादिष्ट्यकरणमन्वाधानोत्तरं यदि ॥ ४८ ॥

व्यस्ताभिश्च समस्ताभिः स्यादाहुतिचतुष्टयम्।
औपासनाहुतिद्रव्यं कठिनं वाऽथ चेद्द्रुतम् ॥ ४९ ॥
स्कन्देदस्कान्द्यौदस्कानित्येताभ्यामभिमन्त्र्य तत्।
उन्नम्भयेति तस्याथोपरिष्टात्प्रक्षिपेज्जलम् ॥ १५० ॥
अनाज्ञातजपं कृत्वा सर्वचित्तं विधाय च।
स्कन्नं द्रव्यं समादद्याद्गत्वोत्तरदिशं ततः ॥ ५१ ॥
उद्घाटितबिलां कुर्याद्वल्मीकस्य वपां शुचिम्।
उपस्पृश्य जलं शुद्धं दक्षिणेन करेण तु ॥ ५२ ॥
स्कन्नं सर्वं समादाय प्रजापत इति ह्यृचा।
तस्मिन्बिले क्षिपेद्भूरित्युपतिष्ठेद्भुदा ततः ॥ ५३ ॥
जुहोतिचोदनाभावान्नर्चि स्वाहाकृतिर्भवेत्।
पुनर्होमं प्रकुर्वीत संकल्पादि च पूर्ववत् ॥ ५४ ॥
औपासनाहुतिद्रव्ये कठिने वा द्रुतेऽपि वा।
अमेध्यसेवी पिण्डस्य कर्ता कीटो यदा पतेत् ॥ १५५ ॥
प्रायश्चित्तं तदा तत्र पूर्ववत्तु समाचरेत्।
तत्राऽऽदानं ह्यन्तिमेन मध्यमेनाथवा भवेत् ॥ ५६ ॥
पलाशस्य च पर्णेन मही द्यौः पृथिवीत्यृचा।
अन्तःपरिधि देशे तत्त्यजेत्पात्रस्य संस्कृतिम् ॥ ५७ ॥
विदधीत ततो योग्यामन्यत्सर्वं तु पूर्ववत्।
पयसौपासनहुतौ स्थाल्याश्चेत्स्रवणं भवेत् ॥ ५८ ॥
गर्भं स्रवन्तमगदमित्येतेनाभिमन्त्रयेत्।
सूर्यास्ततो होमकालः प्रोक्तस्तु नव नाडिकाः ॥ ५९ ॥
तदतिक्रमणे हुत्वाऽऽहुतिं दोषेतिमन्त्रतः।
एतस्या आहुतेर्देवो वरुणः परिकीर्तितः ॥ १६० ॥
प्राक्तनं समिदाधानात्कर्म कुर्याद्यथास्थितम्।
रुन्ध्याद्यावद्बलं श्वासं वरं दद्यादनन्तरम् ॥ ६१ ॥
समस्तव्याहृतीरुक्त्वा नित्यं होमं समाचरेत्।
व्याहृतीभिरुपस्थाय होमशेषं समाप्य च ॥ ६२ ॥
वरुणाय चरुः कार्यः पूर्णाहुतिरथापि वा।
प्रातर्होमस्य कालस्तु घट्यो द्वादश वा दश ॥ ६३ ॥
संगवः सूरिभिः प्रोक्तः प्रहरात्मक एव वा।
एतस्यातिक्रमे प्रातरित्येतेनाऽऽहुतिर्भवेत् ॥ ६४ ॥

एतस्या आहुतेर्देवो मित्रः सूर्योऽथवा स्मृतः ।
पूर्वं च समिदाधानाच्छ्वासरोधो यथाबलम् ॥ १६५ ॥
वरदानं प्रकुर्वीत व्याहृत्युच्चारणं तथा ।
नित्यहोममुपस्थानं व्याहृतीभिस्तथैव च ॥ ६६ ॥
होमशेषं समाप्याथ मैत्रसौर्यचरू स्मृतौ ।
वक्ष्ये होमस्य विच्छेदे प्रायश्चित्तमथाधुना ॥ ६७ ॥
अयाश्चेत्याहुतिः कार्या विच्छेदेऽर्वाक्त्रिरात्रतः ।
मनस्वत्या द्वितीया स्यादर्वाक्चेत्सप्तरात्रतः ॥ ६८ ॥
तन्तुमत्या तृतीया स्यादर्वाक्चेद्द्वादशाहतः ।
तत्रापि होमविच्छेदे पुनराहितिरेव तु ॥ ६९ ॥
जुहुयात्प्रतिसंख्याय वैतान्होमान्महापदि ।
ऊर्ध्वं चेदेष आपत्तावपि कल्पो न युज्यते ॥ १७० ॥
खण्डस्याऽऽक्षेपकत्वेऽपि वस्तुतः प्रबलत्वतः ।
श्रौतमेव भवेच्चित्तं नाया इत्यादिकं भवेत् ॥ ७१ ॥
तद्धि शास्त्रान्तरोक्तत्वाद्दुर्बलं नात्र युज्यते ।
श्रौतं चित्तं तदधुना सुस्पष्टं संप्रवक्ष्यते ॥ ७२ ॥
द्वयोस्त्रयाणामेकस्य वा होमस्यातिपातनम् ।
सप्तहोतृमनस्वत्यौ जुहुयात्तदनन्तरम् ॥ ७३ ॥
समाचरेदतिक्रान्तं होमं नेत्यपरे जगुः ।
एवमेव प्रातरौपासनहोमं समाचरेत् ॥ ७४ ॥
चतुर्थादिषु षष्ठान्तेष्वेकस्य ह्यतिपातनम् ।
सप्तान्तेष्विति केचित्तु बुधाः प्राहुः पुरातनाः ॥ १७५ ॥
द्वयोस्त्रयाणां सर्वेषां वा स्यात्तन्तुमते चरुः ।
अष्टमादिष्वपि चरुरेव तान्तुमतो भवेत् ॥ ७६ ॥
अत ऊर्ध्वमतिक्रामे भवेत्तु पुनराहितिः ।
उतैकाहमिति श्रुत्यैकाहं वा द्व्यहमेव च ॥ ७७ ॥
होमातिपत्तौ चित्तं न भवेत्कैश्चिदितीरितम् ।
यद्यस्तमितविभ्रान्त्या जुहुयादस्वकालके ॥ ७८ ॥
साङ्गो होमः पुनः कार्यस्तस्मिन्नेवानले ततः ।
जातत्वान्न पुनः कार्यं प्रादुष्करणमत्र तु ॥ ७९ ॥
होमानन्तरमग्नेस्तु भवतं न उपस्थितिः ।
एवमेवोदितभ्रान्तौ प्रायश्चित्तं प्रकीर्तितम् ॥ १८० ॥

ऊर्ध्वं प्रादुष्कृतेर्होमात्पूर्वं स्वामी समाचरेत् ।
भक्षणं चेद्धुतेः पूर्वं तस्मिन्नेवानले ततः ॥ ८१ ॥
कुर्याद्व्रातपतस्थालीपाकं स्याद्वाऽऽहुतिद्वयम् ।
यत्ते वयं यथा हेति होममन्त्रौ प्रकीर्तितौ ॥ ८२ ॥
समिधौ वा समादध्यादथवा प्रजपेदिमौ ।
पत्न्यामप्येवमेवेदं प्रायश्चित्तं प्रकीर्तितम् ॥ ८३ ॥
अतिसंकटतः प्रातर्होमो यदि न जायते ।
तदैतस्मिन्दिने स्वामी भोजनं न समाचरेत् ॥ ८४ ॥
सायंहोमे तु तद्रात्रौ भोजनं न समाचरेत् ।
एतावता होमसिद्धिः प्रायश्चित्तं न हीष्यते ॥ १८५ ॥
पूर्वाहुतेश्चेदुपरि स्कन्दः स्यादुत्तराहुतेः ।
तदा यत्रेत्यृचा वह्नौ वानस्पत्याभिधानया ॥ ८६ ॥
आदध्यात्समिधं पश्चात्स्कन्नशेषेण तूत्तराम् ।
तूष्णीं हुत्वाऽऽहुतिं सर्वं होमशेषं समापयेत् ॥ ८७ ॥
पुनर्होमं ततः कुर्यादभिहोमेऽप्ययदो भवेत् ।
उत्तराहुतिपर्याप्तद्रव्यसत्त्वे भवेन्न हि ॥ ८८ ॥
औपासनाहुतिद्रव्ये वृष्टिबिन्दुः पतेद्यदि ।
उपसाद्य हविः कूर्चे प्राकृतां समिदाहितिम् ॥ ८९ ॥
कृत्वा जपेद्व्याहृतीस्तु तेनैव हविषा ततः ।
मित्रो जनान्कल्पयतीत्यनया प्रथमाहुतिः ॥ १९० ॥
उत्तराहुतिहोमादिहोमशेषं ततश्चरेत् ।
ततः संकल्पप्रभृतिपुनर्होमं समाचरेत् ॥ ९१ ॥
प्रादुष्करणकालस्यातिक्रमे सर्वचित्तकम् ।
औपासनहुतौ स्याचेद्द्वितीयाहुतिविस्मृतिः ॥ ९२ ॥
समाप्तेः कर्मणः प्राक्सा होतव्याऽन्तरिताऽऽहुतिः ।
उत्तरं चेत्स्मृतिः सर्वचित्तमेव न चाऽऽहुतिः ॥ ९३ ॥
आद्याहुतेर्विस्मृतौ तु कृत्स्नं होमं पुनश्चरेत् ।
स्वकाले यद्यनारम्भः स्यादाद्यौपासनाहुतेः ॥ ९४ ॥
तदा परेद्युः सायं स्यात्सप्तहोत्राहुतिस्तथा ।
मनस्वत्या द्वितीया स्यात्ततो होमं समारभेत् ॥ १९५ ॥

१ ग. घ. ङ. स्याद्वाहु॰ ।

पिण्डयज्ञात्यये सप्तहोतृहोमः प्रकीर्तितः ।
औपासनाग्नेर्गमन उपलेपादि पूर्ववत् ॥ ९६ ॥
आहृत्य श्रोत्रियागारात्प्रतिष्ठाप्य हविर्भुजम् ।
विवाहे यदि निर्मन्थ्यो मथितव्यस्तदाऽनलः ॥ ९७ ॥
आऽन्यस्माद्धोमकालात्स्त्री नाश्नीयादथवा गृही ।
उपोषणाशक्ततायां विध्यन्तरमथोच्यते ॥ ९८ ॥
उपलेपादिकं वह्निस्थापनान्तं तु पूर्ववत् ।
पात्राणि च समासाद्य कुर्यात्प्राग्वत्पवित्रके ॥ ९९ ॥
संस्कृत्य प्रोक्षणीः पश्चात्पात्राणां प्रोक्षणं ततः ।
दर्वीं संमृज्य संस्कृत्याऽऽज्यं प्रागुक्तविधानतः ॥ २०० ॥
परिस्तीर्यानलं पश्चात्परिषेकं समाचरेत् ।
अलंकारं प्रकुर्वीताभ्याधानं समिधस्तथा ॥ १ ॥
अयाश्चेत्याहुतिं हुत्वा विसृज्य स्तरणानि तु ।
कृत्वोत्तरं ततः सेकं होमं नित्यं समाचरेत् ॥ २ ॥
अपोढे वर्तमाने तु मुख्योऽग्निर्यदि गच्छति ।
अपोढाग्नेरेकदेशं मुख्याग्न्यायतने ततः ॥ ३ ॥
निधाय सर्वचित्तं तु जुहुयाद्ध्रुवआहुतिम् ।
शान्तिके पौष्टिके चैव गृह्यानुक्त तु कर्मणि ॥ ४ ॥
अग्नेरनुगतिश्चेत्स्याच्चद्भस्म प्रक्षिपेद्बहिः ।
अनन्तरं स्थण्डिलस्योपलेपोल्लेखनादिकम् ॥ २०५ ॥
कृत्वा संस्थाप्य तत्राग्निमाज्यसंस्कृतिमाचरेत् ।
जुहुयात्तेन सर्वाख्यचित्तं संस्थापितेऽनले ॥ ६ ॥
अयाश्चेत्यपि होतव्यमिति केचिद्बुधा जगुः ।
औपासनाग्न्यनुगतावेवाया इति चित्तकम् ॥ ७ ॥
इत्येतस्मिन्मते नैतद्भवेदुपनयादिषु ।
किं त्वेतेष्वपि विज्ञेयं सर्वाख्यं चित्तमेव हि ॥ ८ ॥
गायत्र्या उपदेशात्प्राङ्मुख्यहोमादनन्तरम् ।
उपनायेऽग्निनाशश्चेदग्निं संस्थाप्य पूर्ववत् ॥ ९ ॥
हुत्वा मुख्याहुती तत्र जुहुयात्सर्वचित्तकम् ।
उपदेशोत्तरं नाशे स्यात्सर्वाभिधमात्रकम् ॥ २१० ॥
पाणिग्रहणतः प्राक्चेद्विवाहेऽनलनाशनम् ।
तदा मुख्याहुतीरेव नायाश्चेत्यादि चित्तकम् ॥ ११ ॥

अत ऊर्ध्वं त्वेतदेव सर्वाख्यमुभयत्र तु ।
संसर्गे कुणपोदक्यासूतिकापतितादिभिः ॥ १२ ॥
अन्याग्निभिश्च संसर्गे स्यात्तत्र पुनराहितिः ।
(*वस्तुतोऽन्याग्निसंसर्गे वैविचश्चरुरेव तु ॥ १३ ॥
क्षेपकत्वात्तु खण्डस्य नैवात्र पुनराहितिः । )
श्रौतातिदेशात्सूत्याद्यैः संसर्ग इयमेव तु ॥ १४ ॥
गृह्याग्निद्वयसंसर्गे गृह्याग्निस्वामिनावुभौ ।
गृहीत्वा समिधौ तस्मिन्संसृष्टाग्निं सहैव तु ॥ २१५ ॥
मन्त्रेण तु समारोप्य ततस्तं लौकिकानलम् ।
मन्त्रेणाच्छा गिर इति विभज्योभौ ततोऽनले ॥ १६ ॥
स्वे स्वे स्वां स्वां च समिधमुपावेति तु मन्त्रतः ।
निक्षिपेत्तां ततः पाको वैविचस्तूभयोर्भवेत् ॥ १७ ॥
पृथग्गतोऽग्न्येकदेशः संसृष्टो लौकिकाग्निना ।
श्रौताग्निना वाऽथ यदि वैविचो न तदा भवेत् ॥ १८ ॥
किंतूपेक्ष्यैकदेशं तं जुहुयात्सर्वचित्तकम् ।
शतद्वयीकृद्वरदराजाभ्यामित्थमीरितम् ॥ १९ ॥
वनदाहाग्निसंसर्गे भवेद्व्रातपतश्चरुः ।
चरुस्तदा स्याच्छुचये चेत्संसर्गः शवाग्निना ॥ २२० ॥
सूतिकानलसंसर्गे भवेत्सांकुसुकश्चरुः ।
वैद्युतानलसंसर्गे भवेदाप्सुमतश्चरुः ॥ २१ ॥
पाकानां वैविचादीनां पञ्चानां संनिपातने ।
निमित्तक्रमसत्त्वेऽपि ज्ञेयो वाचनिकः क्रमः ॥ २२ ॥
विविचिश्च शुचिः पश्चाद्व्रतभृच्चाप्सुमांस्ततः ।
ततः संकुसुक इति क्रमस्तत्रैवमेव तु ॥ २३ ॥
संनिपाते क्षामवतोऽप्यन्त एव भवेदयम् ।
चतुरादिषु यस्य स्यान्निमित्तस्य त्वसंभवः ॥ २४ ॥
तावन्मात्रं परित्यज्यान्यः क्रमः पूर्ववद्भवेत् ।
स्थालीपाकातिपत्तौ तु चरुः पाथिकृतो भवेत् ॥ २२५ ॥

---

*धनुश्चिह्नान्तर्गतश्लोकस्थाने ग. घ. ङ. पुस्तकेषु —"क्षेपकत्वे तु खण्डस्य वैविचश्चरुरेव तु । भवेदन्याग्निसंसर्गे नैवात्र पुनराहितिः" इति श्लोको वर्तते ।

१ ग. घ. ङ. 'तभृत' । २ ग. चरूणां ।

द्वयोरतिक्रमे वैश्वानरपाथिकृतौ चरू ।
तृतीयाद्यतिपत्तौ तु स्यात्तत्र पुनराहितिः ॥ २६ ॥
क्षेपकत्वे तु खण्डस्य स्थालीपाकातिपातने ।
श्रौत एव प्रकारः स्यात्स इदानीं प्रवक्ष्यते ॥ २७ ॥
आरब्धौ पार्वणस्थालीपाकौ चेदतिपन्नकौ ।
स्यातां तदा पाथिकृतं स्थालीपाकं समाचरेत् ॥ २८ ॥
भवेतां यद्यनारब्धावेतौ चेदतिपन्नकौ ।
तदा वैश्वानरस्थालीपाकं कुर्याद्विचक्षणः ॥ २९ ॥
प्रथमस्य प्रयोगस्य संकल्पोत्तरमक्रिया ।
चेद्विभ्रेषनिमित्तं तु प्रकर्तव्यं चरुत्रयम् ॥ २३० ॥
स्थालीपाकप्रकरणे तत्प्रकारः प्रदर्श्यते ।
कर्मणो गौणकालश्चेत्ततस्तस्याप्यनुष्ठितिः ॥ ३१ ॥
प्रकारान्तरमप्यत्राधुनाऽतिपतने ब्रुवे ।
आरब्धयोर्द्वयोः पातः स्याच्चेत्पाथिकृतश्चरुः ॥ ३२ ॥
ऊर्ध्वयोरपि पातश्चेत्तदा वैश्वानरश्चरुः ।
स्वकाले यद्यनारम्भश्चेत्स्थालीपाकयोर्द्वयोः ॥ ३३ ॥
विभ्रेषार्थं तदा कार्यं स्थालीपाकत्रयं बुधैः ।
पर्वणि व्रतलोपे तु कुर्याद्व्रातपतं चरुम् ॥ ३४ ॥
पर्वण्यार्त्याऽश्रुपाते तु कुर्याद्व्रातभृतं चरुम् ।
पवित्रस्य विनाशे तु स्यात्पवित्रव्रते चरुः ॥ २३५ ॥
हिरण्यस्य विनाशे तु स्याद्धिरण्यव्रते चरुः ।
स्वकीयगृहदाहे तु कुर्यात्कामव्रते चरुम् ॥ ३६ ॥
होममौपासनं दर्शस्थालीपाकादिकं तथा ।
जुहुयात्प्रातरस्नातश्चेत्तदा वारुणश्चरुः ॥ ३७ ॥
ऋत्विक्स्याद्यदि सुस्नातोऽस्नातश्चाथ स्वयं भवेत् ।
तदाऽपि वारुणः कार्यो नात्यन्तातुर एव तु ॥ ३८ ॥
विज्ञेयं प्रातरेवेदं सायं स्यात्सर्वचित्तकम् ।
अदने सूतकान्नस्य भवेत्तन्तुमते चरुः ॥ ३९ ॥
भार्या युग्मप्रसूर्गौर्वा स्यात्तदा मारुतश्चरुः ।
यमौ जातौ पुमांसौ चेत्तयोरेकोऽपि वा पुमान् ॥ २४० ॥
वैश्वानरो मारुतश्चेत्येवं केचिद्बुधा जगुः ।
एवंरूपाणीति सूत्राद्गृह्योक्तोऽप्याकृतो विधिः ॥ ४१ ॥

समुच्चीयत एवात्र भवेदौपासने स च।
कात्यायनादिभिर्ह्येतस्याप्युक्ताऽद्भुतताऽस्ति वै ॥ ४२ ॥
य आहिताग्नेरित्येतच्छास्त्राङ्गीकार एव तु।
स्थालीपाको भवेदेषोऽनङ्गीकारे त्वयं न हि ॥ ४३ ॥
गृह्योक्तविधिमेवात्र कल्पेऽस्मिंस्तु समाचरेत्।
स्नातकस्य यदा गौः स्याद्युग्मसूर्लौकिकानले ॥ ४४ ॥
प्रकुर्वीत तदा स्थालीपाकं गार्ह्यविधिं च सः।
गृह्योक्तविधिमात्रं वा स्थालीपाको भवेन्न तु ॥ ४५ ॥
वर्णिनो विधुरस्यापि विधिरेवं प्रकीर्तितः।
कात्यायनोक्तमेवात्र विधिं केचित्समूचिरे ॥ ४६ ॥
सर्वेऽपीमं विधिं कुर्युरिति प्राहुर्बुधाः परे।
पुमानन्यतरः सोऽपि मृतस्तत्रापि मारुतः ॥ ४७ ॥
आहिताग्नेर्भवेदिष्टिरिष्टी चेति यथायथम्।
कात्यायनोक्तस्य विधेर्विकल्पः स्यादनुष्ठितौ ॥ ४८ ॥
मृतशब्दश्रुतौ स्वस्य स्यात्सौरभिमतश्चरुः।
अनिष्ट्वाऽऽग्रयणेनान्नं भक्षयेद्यदि नूतनम् ॥ ४९ ॥
वैश्वानराख्यदेवत्यं चरुं कुर्वीत तत्र तु।
अविप्रतिग्रहेऽप्येष हिरण्यं दक्षिणाऽत्र तु ॥ २५० ॥
विद्विषाणस्य चेदन्नं भुञ्जीयात्स्यात्तदाऽप्ययम्।
अग्निर्गुणी भवेदेषु विविच्यात्रा गुणाः स्मृताः ॥ ५१ ॥
स्थालीपाके त्वतिक्रान्ते यद्यन्याग्नौ स्वयं यजेत्।
स्वाग्नावन्यो यजेद्यद्वा स्यादाग्नावैष्णवश्चरुः ॥ ५२ ॥
प्रधानोत्तरविज्ञान एवैष चरुरीरितः।
स्थालीपाकं पुनः कुर्यादनिषिद्धे दिने बुधः ॥ ५३ ॥
पूर्वं चेत्तत्परित्यज्य हविः सर्वाख्यचित्तकम्।
तदा होतव्यमेतावदेव चित्तं चरुर्न तु ॥ ५४ ॥
अत्रापि स्थालीपाकस्याऽऽहुराचार्याः पुनः क्रियाम्।
सर्वेष्वेतेषु कर्तव्या पूर्णाहुतिरथापि वा ॥ ५५ ॥
स्थालीपाके त्वनारब्धे नियतैषा प्रकीर्तिता ॥ ५६ ॥

इति संक्षेपेण प्रायश्चित्तानि।

# प्रायश्चित्तमन्त्राणामृष्यादिकथनम् ।

अथ कारिकासूपात्ताः प्रायश्चित्तमन्त्रा ऋष्यादिसहिता उच्यन्ते—

अनाज्ञातमितिमन्त्रत्रयस्य विश्वे देवा ऋषयः, अग्निर्देवता, प्रथमद्वितीययोरनुष्टुप्, तृतीयस्य त्रिष्टुप् । प्रायश्चित्तार्थे जपे विनियोगः—"ॐ अनाज्ञातं य० तथम् । पुरुष० तथम् । यत्पाकत्रा० यजाति" । इदं विष्णुरित्यस्य मन्त्रस्य सोमो विष्णुर्गायत्री । प्रायश्चित्तार्थे जपे विनियोगः—"ॐ इदं विष्णु० सुरे" । समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । प्रायश्चित्तार्थे जपे विनियोगः—"ॐ भूर्भुवः सुवः" । आभिर्गीर्भिरित्यस्य विश्वे देवा हरिवानिन्द्रस्त्रिष्टुप् । स्वराक्षरादिलोपनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ आभिर्गीर्भिर्य० ते स्याम स्वाहा" हरिवत इन्द्रायेदं० । त्वं नो अग्ने स त्वं नो अग्न इत्यनयोर्मन्त्रयोर्विश्वे देवा अग्निर्वरुणश्च त्रिष्टुप् । मन्त्रलोपनिमित्तकेऽमुककर्मलोपनिमित्तके विपर्यासनिमित्तके वा प्रायश्चित्ताज्यहोमे विनियोगः—"ॐ त्वं नो अ० स्मत्स्वाहा" अग्नये वरुणाय चेदं० । "ॐ स त्वं नो० एधि स्वाहा" अग्नये वरुणाय चेदं० । त्वमग्ने अयासीत्यस्य विश्वे देवा अया अग्निरनुष्टुप् । प्रजापत इत्यस्य विश्वे देवाः प्रजापतिस्त्रिष्टुप् । परिस्तरणदाहनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ त्वमग्ने अ० पज^४ स्वाहा" अयसेऽग्नय इदं० । "ॐ प्रजापते० णा^४ स्वाहा" प्रजापतय इदं० । परिध्यादिदाहे तु तत्तच्छब्देनोहो विनियोगवाक्ये । छेदनादिषु दाहशब्दे छेदनादिशब्दोहः । यत्पाकत्रेत्यस्य विश्वे देवा अग्निस्त्रिष्टुप् । इध्मसमिन्न्यूनत्वनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ यत्पाकत्रा० जाति स्वाहा" अग्नय इदं० । इध्मसमिदतिरेकनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः । इतीध्मसमिदतिरेकप्रायश्चित्ताज्यहोमे विनियोगवाक्यम् । समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । बर्हिष्पतननिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ भूर्भुवः सुवः स्वाहा" प्रजापतय इदं० । एवमिध्मादिपतनेऽपि । पुनस्त्वेत्यस्य मन्त्रस्याग्निरादित्या रुद्रा वसवो ब्रह्माणश्च त्रिष्टुप् । पुनस्त्वेतिमन्त्रस्याग्निर्वसुनीथोऽग्निस्त्रिष्टुबिति वा । अग्न्युपघातनिमित्तकप्रायश्चित्तसमिदाधाने विनियोगः । अग्न्युपघातनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः, इति होमे।

"ॐ पुनस्त्वाऽऽदित्या० कामाः स्वाहा" आदित्येभ्यो रुद्रेभ्यो वसुभ्यो ब्रह्मभ्यश्चेदं० । वसुनीथायाग्नय इदमिति वा । उद्दीप्यस्व मा नो

१ क. °स्य सो° । २ क. °योर्वि° । ३ क. ख. °हप्रा° । ङ. °हकप्रा° । ४ °त्सस्याऽऽ° । ५ क. °पु । अग्नि° । ६ ग. °मे । पुनस्त्वाऽऽदित्या० कामाः । " पु° ।

हिश्सीरित्यनयोर्याज्ञिक्यो देवता उपनिषदो जातवेदा अग्निरनुष्टुप् । स्वयं प्रज्वलननिमित्तकप्रायश्चित्तार्थे समिद्वयाभ्याधाने विनियोगः—"ॐ उद्दीप्यस्व जात० दिश" "मा ना हिश्सी० पातय"। आपो हिष्ठेतिमन्त्रत्रयस्याग्निर्विश्वे देवा वाऽऽपो गायत्री। स्कन्नप्रणीतापात्रपूरणे विनियोगः। स्कन्नप्रोक्षणीपात्रस्य पूरणे विनियोगः । शोषणेन रिक्तस्य पात्रस्य पूरणे विनियोगः, इति शोषणे । स्रवणेन रिक्तस्य पात्रस्य पूरणे विनियोगः । इति स्रवणे ।

"ॐ आपो हि० च नः"। ततं म आप इत्यस्य विश्वे देवा ऋभवो जगती, प्रणीतास्कन्दननिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः। प्रोक्षणीस्क०ज्यहोमे विनि०। प्रणीताशोषणनिमित्तकप्रायश्चि० । प्रणीतास्रवणनिमित्त०। प्रोक्षणीशोषणनिमित्तकप्रा०। प्रोक्षणीस्रवणनिमित्तकप्रायश्चित्ताज्य०। "ॐ ततं म आ० भुवः स्वाहा" ऋभुभ्य इदं० । समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । आयतनाद्बहिः समुत्सृप्तस्याग्नेः स्वस्थाने प्रक्षेपणे विनियोगः । अज्ञाताग्निबहिष्पातप्रायश्चित्ताज्यहोमे विनियोग इति यथायथं विनियोगवाक्यम् । "ॐ भूर्भुवः सुवः"

देवानित्यादीनां पञ्चानां सौत्रमन्त्राणां[3] वामदेव ऋषिः। देवा गन्धर्वाः पितर आप ओषधयो वनस्पतयश्च पञ्चजना इति क्रमेण देवताः। यजूंषि। स्कन्नानुमन्त्रणे विनियोगः—

"देवाञ्जनमगन्यज्ञस्ततो मा यज्ञस्याऽऽशीरागच्छतु वर्धताम्'। गन्धर्वाञ्जनमगन्यज्ञ० वर्धताम् । पितॄञ्जनम०वर्धताम् । आप ओषधीर्वनस्पतीञ्जनम० वर्धताम् । पञ्चजनाञ्जनम० वर्धताम्" ।

भूपतय इत्यादीनां चतुर्णां[4] मन्त्राणां वामदेव ऋषिः । आद्यानां त्रयाणामग्निर्वा । भूपतिर्भुवनपतिर्भूतानां पतिर्भूतमिति क्रमेण देवताः । यजूंषि । समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । प्रादेशकरणे विनियोगः—

"ॐ भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहा भूताय स्वाहा भूर्भुवः सुवः स्वाहा" ।

सं त्वा सिञ्चामीत्यस्य मन्त्रस्य प्रजापतिः स्कन्नं हविरनुष्टुप् । स्कन्नोपरि जलसिञ्चने* विनियोगः "सं त्वा सिञ्चामि० रिपत्" यज्ञस्य त्वेत्यस्य सौत्रमन्त्रस्य

* "जलसेचने" इति पाठोऽपेक्षितः ।

१ क. ख. °न स्रवणेन वा रि° । २ क. ख. °षणस्रावणयोः । आ° । ३ क. ख. सौत्राणां । ४ क. °र्णां वा° । ५ क. °स्य प्र° ।

वामदेवः[1] स्कन्नं हविर्यजुः । स्कन्नस्य स्वस्थाने प्रक्षेपे विनियोगः । अभिमन्त्रणकल्पे तु स्कन्नाभिमन्त्रणे विनियोग इति विनियोगवाक्यम् । "ॐ यज्ञस्य त्वा प्र मयाऽभि मया वि मयोन्मया परिगृह्णामि[2] " । मा यजमान इत्यस्य सौत्रस्य[9] वामदेवोऽग्निर्यजुः । बहिष्परिधिस्कन्नाया आहुतेः पुनरग्नौ होमे विनियोगः । "ॐ मा यजमानस्त० षं कृतꣳ स्वाहा " अग्नय इदं० । जुहुयादित्यस्य प्रक्षेपमात्रमर्थ इति वा । अस्मिन्कल्पे न त्यागः । अग्निभ्रातॄणां तृप्तिस्तु बहिष्परिधिपातमात्रेण ।

यद्वो देवा इत्यस्य विश्वे देवा देवास्त्रिष्टुप् । अविहितदेवतायोजननिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः । "ॐ यद्वो देवा अ० धेतन स्वाहा" देवेभ्य इदं० । मनोज्योतिरिति मनस्वतीसंज्ञकस्या[3]ग्निर्मनो ज्योतिस्त्रिष्टुप् । स्वाहाकारप्रदानविपर्यासनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः "ॐ मनोज्योतिर्जु० घृतेन स्वाहा" मनसे ज्योतिष इदं० । त्वं[4] नो अग्ने स त्वं नो अग्न इत्यनयोर्विश्वे देवा अग्निर्वरुणश्च त्रिष्टुप् । अवदानविपर्यासनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः "ॐ त्वं नो अ० स्मत्स्वाहा " अग्नये वरुणाय इदं० । "ॐ स त्वं नो० एधि स्वाहा" अग्नये वरुणाय चेदं० । एवं द्रव्यत्यागदेवतामन्त्रविपर्यासेऽप्यूहेन । प्रधानद्रव्यानुत्पादनिमित्तकप्रायश्चित्ताज्यहोमे विनियोग इति प्रधानद्रव्यानुत्पादनिमित्तकप्रायश्चित्ताज्यहोमविनियोगवाक्यम् । यन्म आत्मनः पुनरग्निमिति मिन्दाभिधयोर्द्वयोः सोम ऋषिर्मिन्दवाञ्जातवेदा अग्निः प्रथमस्य देवता । द्वितीयस्याग्निरिन्द्रो बृहस्पतिरश्विनौ च । प्रथमस्य गायत्री[5] छन्दः, द्वितीयस्यानुष्टुप् । हविर्दोषनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः । "ॐ यन्म आ० चर्षणिः स्वाहा" मिन्दवते जातवेदसेऽग्नय इदं० । "ॐ पुनरग्नि० मक्ष्योः स्वाहा" अग्नय इन्द्राय बृहस्पतयेऽश्विभ्यां चेदं० । अग्नये स्वाहेत्यादीनां[6] मन्त्राणां वामदेव ऋषिः । अग्निर्यमो वरुणः सोमश्चेति क्रमेण देवताः । यजूंषि । समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । चरूत्सेकनिमित्तकप्रायश्चित्ताज्यहोमे विनि० "ॐ अग्नये स्वाहा" अग्नय इदं० "ॐ यमाय स्वाहा" यमायेदं० "ॐ वरुणाय स्वाहा" वरुणायेदं० । "ॐ सोमाय स्वाहा" सोमायेदं० । "ॐ भूर्भुवः सुवः स्वाहा" प्रजापतय इदं० । आप्यायस्व सं ते पयाꣳसीत्यनयोरग्निर्ऋषिः । सोमो देवता प्रथमस्य गायत्री[7] छन्दः, द्वितीयस्य त्रिष्टुप् । उत्सिक्तस्य हविष आप्यायने विनियोगः "ॐ आप्यायस्व० गधे" "ॐ सं ते पयाꣳसी० धिष्व" । यन्म आत्मनः पुनरग्निरिति[8]मिन्दाभिध-

१ ग. घ. ङ. °देव ऋषिः । स्क° । २ ग. घ. ङ. °ह्णाति । मा । ३ ग. °कस्य मन्त्रस्यां° । ४ क. ख. त्वं नः स त्वं न इ° । ५ क. °त्री । द्वि° । ६ क ख. °नां वा° । ७ क. ख. °त्री द्वि° । ८ क. °तिद्वयोः । ९ क. सौत्रस्य ।

योर्द्वयोर्मन्त्रयोः सोम ऋषिः, मिन्दवाञ्जातवेदा अग्निः प्रथमस्य देवता। द्वितीयस्याग्निरिन्द्रो बृहस्पतिरश्विनौ च। प्रथमस्य गायत्री द्वितीयस्यानुष्टुप्। हविरुत्सेकनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ यन्म आत्म० णिः स्वाहा" मिन्दवते जातवेदसेऽग्नय इदं०। "ॐ पुनर० क्ष्योः स्वाहा" अग्नय इन्द्राय बृहस्पतयेऽश्विभ्यां चेदं०। उद्वयं तमस इत्यस्याग्निः सूर्योऽनुष्टुप्। उदु त्यं चित्रमित्यनयोः सोम ऋषिः, सूर्यो देवता। प्रथमस्य यागत्री द्वितीयस्य त्रिष्टुप्। यागान्वाधानमध्योत्पन्नसूर्यग्रहणनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः। यागान्वाधानमध्योत्पन्नसूर्यग्रहणनिमित्तकप्रायश्चित्तार्थे सूर्योपस्थाने विनियोग इत्युपस्थानविनियोगवाक्ये विशेषः। "ॐ उद्वयं त० त्तमम् स्वाहा" सूर्यायेदं०। "उदु त्यं जा० सूर्यम् स्वाहा" सूर्यायेदं०। "ॐ चित्रं देवा० पश्च स्वाहा। सूर्यायेदं०"।

( * उद्वयं०, उदु त्यं०, चित्रं० ), नवो नवो, यमादित्या इत्यनयोर्विश्वे देवाश्चन्द्रमास्त्रिष्टुप्। यागान्वाधानमध्योत्पन्नचन्द्रग्रहणनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः। यागान्वाधानमध्योत्पन्नचन्द्रग्रहणनिमित्तकप्रायश्चित्तार्थे चन्द्रोपस्थाने विनियोग इत्युपस्थानविनियोगवाक्ये विशेषः। "नवो नवो भ० मायुः स्वाहा" चन्द्रमस इदं०। "ॐ यमादित्या अ० गोपाः स्वाहा" चन्द्रमस इदं०।

भूमिर्भूमिमित्यस्य सौत्रमन्त्रस्य वामदेवो भूमिरनुष्टुप्। भिन्नमृन्मयपात्राभिमन्त्रणे विनियोगः—

"ॐ भूमिर्भूमिमगान्माता मातरमप्यगात्। ऋध्यास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्"।

प्रणवस्य परब्रह्मर्षिः परमात्माऽग्निर्वा देवता दैवी गायत्री छन्दः, पात्रभेदननिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ स्वाहा" परमात्मन इदं०। अग्नय इदमिति वा।

मनो ज्योतिरिति मनस्वतीसंज्ञकस्याग्निर्मनो ज्योतिस्त्रिष्टुप्। निरूढाग्निविनाशनिमित्तकप्रायश्चिताज्यहोमे विनियोगः—"ॐ मनो ज्योतिर्जु० घृतेन स्वाहा" मनसे ज्योतिष इदं०।

समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती। प्रधानाहुतिस्विष्टकृदाहुतिसंसर्गनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः। "ॐ भूर्भुवः सुवः स्वाहा" प्रजापतय इदं०।

---

* धनुश्चिह्नान्तर्गतं सर्वेष्वपि पुस्तकेष्वधिकम्।

इमं मे तत्त्वा यामीत्यनयोर्विश्वे देवा वरुणो देवता । प्रथमस्य गायत्री छन्दो द्वितीयस्य त्रिष्टुप् । समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । स्वप्नजातरेतोविसर्गजन्यदोषपरिहारनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—" ॐ इमं मे० के स्वाहा " वरुणायेदं० । "ॐ तत्त्वा या० पीः स्वाहा वरुणायेदं० । " " भूर्भुवः सुवः स्वाहा " प्रजापतय इदं० ।

पुनर्मामित्यनुवाकमन्त्राणामरुणा ऋषयः सूर्यो देवता । प्रथमस्यानुष्टुप्, द्वितीयस्य द्विपदा त्रिष्टुप्, तृतीयस्य द्विपदा गायत्री, चतुर्थस्यानुष्टुप् । स्वप्नजातरेतोविसर्गजन्यदोषपरिहारनिमित्तके जपे विनियोगः—

" पुन र्मा० तु मा ॥ १ ॥ यन्मेऽद्य० दापः ॥ २ ॥ इदं त० चंसे ॥ ३ ॥ यन्मे रे० कुरु ॥ ४ ॥ "

## अथ भिन्दादिगणः ।

यन्म आत्मन इत्यस्य विश्वे देवा अग्निर्जातवेदा गायत्री । पुनरग्निरित्यस्य विश्वे देवा अग्निरिन्द्रो बृहस्पतिरश्विनौ चानुष्टुप् । व्यस्तव्याहृतीनां याज्ञिक्यो देवता उपनिषदः । अग्निर्वायुः सूर्यो गायत्र्युष्णिगनुष्टुभः । प्रणवस्य परब्रह्मर्षिः परमात्माऽग्निर्वा देवता परमात्माग्न्योरभेदविवक्षयैकैव वा देवता । गायत्री छन्दः । यच्चिद्धि त इत्यस्य विश्वे देवा वरुणो गायत्री । यत्किंचेदमित्यस्य विश्वे देवा वरुणो विराड्जगती स्वराट्त्रिष्टुब्वा । कितवास इत्यस्य विश्वे देवा वरुणस्त्रिष्टुप् । तन्तुं तन्वन्नित्यस्य विश्वे देवास्तन्तुमानग्निर्जगती । निचृज्जगती वा । उद्बुध्यस्वेत्यस्य विश्वे देवास्तन्तुमानग्निस्त्रिष्टुप्, निचृत्त्रिष्टुब्वा । त्रयस्त्रिंशदित्यस्य विश्वे देवास्तन्तुमानग्निर्जगती । त्रिष्टुब्वा । अन्वग्निरित्यस्याग्निरग्निर्जातवेदा निचृत्त्रिष्टुप् । मनो ज्योतिरित्यस्य मनस्वतीसंज्ञकस्याग्निर्मनो ज्योतिस्त्रिष्टुप् । भूरग्नये च पृथिव्यै चेत्यादिमहाव्याहृतिसंज्ञकमन्त्रचतुष्टयस्य याज्ञिक्यो देवता उपनिषद ऋषयः, अग्निरग्निः पृथिवी मह[1]त् । वायुर्वायुरन्तरिक्षं महत् । सूर्य आदित्यो द्यौर्[2]महत् । प्रजापतिश्चन्द्रमा नक्षत्राणि दिशो म[3]हत् । महानिति वा सर्वत्र । इति क्रमेण देवताः । यजूंषि । सप्त त इत्यस्याग्निः सप्तवानग्निर्जगती । प्रजापत इत्यस्य विश्वे देवाः प्रजापतिस्त्रिष्टुप् । सर्वेषामन्तरागमनप्रायश्चित्ताज्यहोमे विनियोगः—

१ क. ख. ङ. महान् । २ क. ख. ङ. °र्महान् । प्र° । ३ क. ख. महानिति क° ।

"ॐ यन्म० णिः स्वाहा" मिन्द्वतेऽग्नय इदं०। "ॐ पुनरग्नि० क्ष्योः स्वाहा" अग्नय इन्द्राय बृहस्पतयेऽश्विभ्यां चेदं०। "ॐ भूः स्वाहा" अग्नय इदं०। "ॐ भुवः स्वाहा" वायव इदं। "ॐ सुवः स्वाहा" सूर्यायेदं०। "ॐ भूर्भुवः सुवः स्वाहा" प्रजापतय इदं०। "ॐ स्वाहा" परमात्मन इदं०। **अग्नय इदमिति वा। परमात्मनेऽग्नय इदमित्येकैव वा देवता।** "ॐ यच्चि० विस्वा०" वरुणायेदं०। "ॐ यत्किंचेदं० रिषः स्वाहा" वरुणायेदं०। "ॐ कितवा० प्रियासः स्वाहा" वरुणायेदं०। "ॐ तन्तुं त० जन९ स्वाहा" तन्तुमतेऽग्नय इदं०। "ॐ उद्बुध्य० त९ स्वाहा" तन्तुमते०। "ॐ त्रयस्त्रिंशं० तु स्वाहा" तन्तु०। "ॐ अन्वग्नि०न स्वाहा" अग्नये जातवेदस इदं०। "ॐ मनो० न स्वा०" मनसे ज्योतिष इदं०। "ॐ भूरग्नये च० हते च स्वाहा" अग्नयेऽग्नये पृथिव्यै महते चेदं०। "ॐ भुवो वायवे०ते च स्वाहा" वायवे वायवेऽन्तरिक्षाय महते चेदं०। "ॐ सुवरादित्याय च० ते च स्वाहा" सूर्यायाऽऽदित्याय दिवे महते चेदं०। "ॐ भूर्भुवः० च स्वाहा" प्रजापतये चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महते चेदं०। "सप्त ते तेन स्वाहा" सप्तवतेऽग्नय इदं०। "ॐ प्रजापते न० णा९ स्वाहा" प्रजापतय इदं०।

इति मिन्दादिगणः।

## अथ दुर्गादिगणः।

**(* जातवेदसे याज्ञिक्यो देवता उपनिषद ऋषयः। दुर्गा देवता त्रिष्टुप्, पश्चानामन्तरागमनप्रायश्चित्ताज्यहोमे विनियोगः—)** "ॐ जातवेदसे० त्यग्निः स्वाहा" जातवेदसेऽग्नय इदं०। "ॐ मनो ज्योति० तेन स्वाहा" मनसे ज्योति०। **पूर्ववत्तिस्रो महाव्याहृतयः।**

इति दुर्गादिगणः।

---

**तुभ्यं ता इत्यस्य विश्वे देवा अङ्गिरस्तमोऽग्निः कामो गायत्री। अन्वाधानानन्तरप्रासप्रयाणनिमित्तप्रायश्चित्ताज्यहोमे विनियोगः।** "ॐ तुभ्यं ता अ० मिरे स्वाहा" कामायेदं०।

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तकातिरिक्तपुस्तकेषु नास्ति।

---

२ ख. ग. घ. °ते०। "अ°।

अस्कान्द्यौरस्कानजनीत्यनयोर्विश्वे देवा यज्ञस्त्रिष्टुप् । स्कन्नस्यौपासनाहुतिद्रव्यस्याभिमन्त्रणे विनियोगः । " ॐ अस्कान्द्यौः पृ० यतु " । " अस्कान० महि " ।

उन्नम्भयेत्यस्य सोम आदित्योऽनुष्टुप् । स्कन्नस्यौपासनस्याऽऽहुतिद्रव्यस्योपरि जलसिञ्च(सेच)ने विनियोगः—"ॐ उन्नम्भ० दृतिम् " ।

प्रजापते न त्वदित्यस्य विश्वे देवाः सोमो वा प्रजापतिस्त्रिष्टुप् । स्कन्नस्यौपा० व्यस्य वल्मीकवपायां प्रक्षेपणे विनियोगः—" प्रजापते० रयीणाम् " ।

भूरित्यस्या व्याहृत्याः प्रजापतिरग्निर्गायत्री । वल्मीकवपाप्रक्षिप्तद्रव्यस्योपस्थाने विनियोगः—" ॐ भूः " ।

मही द्यौरित्यस्य विश्वे देवा द्यावापृथिवी गायत्री । कीटावपन्नस्य द्रव्यस्यान्तःपरिधिदेशे निवपने विनियोगः—" ॐ मही द्यौः पृ० मभिः " ।

गर्भꣳ स्रवन्तमगदमित्यस्य विश्वे देवा अग्निरिन्द्रस्त्वष्टा बृहस्पतिश्च त्रिष्टुप् । औपासनहोमस्थालीस्रवणनिमित्तके स्थाल्यभिमन्त्रणे विनियोगः—" ॐ गर्भꣳ स्रव० राचैः " ।

अयाश्चेत्यस्य सौत्रमन्त्रस्य[1] वामदेवोऽया अग्निः पङ्क्तिः । अर्वाक्त्रिरात्रजाताग्निविच्छेदनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—

" अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोऽयसा हव्यमूहिषेऽया नो धेहि भेषजꣳ स्वाहा " अयसेऽग्नय इदं० ।

अयाश्चेत्य० पङ्क्तिः । मनो ज्योतिरित्यस्य मनस्वतीसंज्ञकस्याग्निर्मनो ज्योतिस्त्रि० । त्रिरात्रप्रभृत्यर्वाक्सप्तरात्रजाताग्निविच्छेदनिमित्तकप्रायश्चित्ताज्यहो०— "ॐ अयाश्चाग्ने० " । "ॐ मनो ज्यो० तेन स्वाहा " मनसे ज्योतिष इदं० ।

अयाश्चेत्य० पङ्क्तिः । मनो ज्योति० ज्योतिस्त्रिष्टुप् । तन्तुं तन्वन्नित्यस्य सोमस्तन्तुमानग्निर्जगती । सप्तरात्रप्रभृत्यर्वाग्द्वादशाहजाताग्निविच्छेदनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ अयाश्चा० " " मनो ज्यो० " " तन्तुं तन्व० जनꣳ स्वाहा " तन्तुमतेऽग्नय इदं० ।

---

१ क. सौत्रस्य ।

दोषावस्तरित्यस्य सौत्रमन्त्रस्य[1] वामदेवो वरुणो यजुः। सायंहोमकालातिक्रमनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ दोषावस्तर्नमः स्वाहा" वरुणायेदं०।

समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती। सायंहोमकालातिक्रमनिमित्तप्रायश्चित्तार्थे पठने विनियोगः—"ॐ भूर्भुवः सुवः" सायंहोमकालातिक्रमनिमित्तप्रायश्चित्तार्थं उपस्थाने विनियोगः, इत्युपस्थानविनियोगवाक्यम्।

प्रातर्वस्तरित्यस्य वामदेवो मित्रः सूर्यो वा यजुः। प्रातर्होमकालातिक्रमनिमित्तप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ प्रातर्वस्तर्नमः स्वाहा" मित्रायेदं०। सूर्यायेदमिति वा।

समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती। प्रातर्होमकालातिक्रमनिमित्तप्रायश्चित्तार्थे पठने विनियोगः—"ॐ भूर्भुवः सुवः", उपस्थाने विनियोग इत्युपस्थानविनियोगवाक्य ऊहः। सग्रहस्य सप्तहोतृमन्त्रस्य प्रजापतिर्वाचस्पतिर्ब्रह्मा यजुः। मनो ज्योतिरि० त्रिष्टुप्। एकहोमातिपातननिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः। होमद्वयातिपातननिमित्तकप्रायश्चित्ताज्यहोमे विनियोग इति होमद्वयातिपातननिमित्तकप्रायश्चित्तहोमे। होमत्रयातिपातननिमित्तकप्रायश्चित्ताज्यहोमे विनियोग इति होमत्रयातिपातननिमित्तकप्रायश्चित्तहोमे। "ॐ महाहविर्होता स० थिव्यै स्वाहा" वाचस्पतये ब्रह्मण इदं०। "ॐ मनो ज्यो० घृतेन स्वाहा" मनसे ज्योतिष इदं०।

भवतं न इत्यस्य मन्त्रस्य सोमोऽग्नी पङ्क्तिः। अग्न्युपस्थाने विनियोगः—"ॐ भवतं नः स० द्य नः"। यत्ते वयं यथा हेतिद्वयोर्विश्वे देवा अग्निस्त्रिष्टुप्। होमान्तरशननिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ यत्ते वयं० गन्ने स्वाहा" अग्नय इदं०। "ॐ यथा हत० आयुः स्वाहा" अग्नय इदं०।

समिदभ्याधानपक्षे होमान्तरशननिमित्तकप्रायश्चित्तार्थे समिदभ्याधाने विनियोग इति विनियोगवाक्यम्। जपपक्षे जपे विनियोग इति।

यत्र वेत्थेत्यस्य विश्वे देवा वनस्पतिर्गायत्री। पूर्वाहुत्युपर्युत्तराहुतिस्कन्दननिमित्तकप्रायश्चित्तार्थे समिदाधाने विनियोगः—"ॐ यत्र वेत्थ व० गामय"

समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती। होमद्रव्ये वृष्टिबिन्दुपतननिमित्तकप्रायश्चित्तार्थे जपे विनियोगः। "ॐ भूर्भुवः सुवः"

[1] क. सौत्रस्य।

मित्रो जनान्कल्पयतीत्यस्य मन्त्रस्य विश्वे देवा मित्रस्त्रिष्टुप् । वृष्टिबिन्दुपतननिमित्तकपूर्वाहुतिस्थानविहितवैशेषिकप्रथमाहुतौ विनियोगः—"ॐ मित्रो जनान्कल्पय० ज्जुहोत स्वाहा" मित्रायेदं० ।

समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । प्रादुष्करणकालातिक्रमनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ भूर्भुवः सुवः स्वाहा" प्रजापतय इदं० ।

सग्रहस्य सप्तहोतृमन्त्रस्य प्रजापतिर्वाचस्पतिर्ब्रह्मा यजुः । मनो ज्योतिरि० तित्रिष्टुप् । स्वकाल औपासनहोमानारम्भनिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ महाहविर्होता० थिव्यै स्वाहा" वाचस्पतये ब्रह्मण इदं० । "मनो ज्योति० घृतेन स्वाहा" मनसे ज्योतिष इदं० ।

सग्रहस्य सप्तहोतृमन्त्रस्य प्रजापतिर्वाचस्पतिर्ब्रह्मा यजुः । पिण्डपितृयज्ञातिपातननिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ महाहविर्होता० थिव्यै स्वाहा" वाचस्पतये ब्रह्मण इदं० ।

समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । अमुककर्मार्थाग्निनाशप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ भूर्भुवः सुवः स्वाहा" प्रजापतय इदं० ।

अयाश्चेत्यस्य सौत्रमन्त्रस्य वामदेवोऽया अग्निः पङ्क्तिः । औपासनाग्न्यनुगमननिमित्तकप्रायश्चित्ताज्यहोमे विनियोगः—"ॐ अयाश्चाग्ने० भेषज९ स्वाहा" अयसेऽग्नय इदं० ।

समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । पृथग्गतौपासनाग्न्येकदेशस्य लौकिकाग्निना श्रौताग्निना वा जातस्य संसर्गस्य दोषपरिहारार्थप्रायश्चित्तहोमे विनियोगः—"ॐ भूर्भुवः सुवः स्वाहा" प्रजापतय इदं० ।

इति प्रायश्चित्तहोममन्त्रास्तेषामृष्यादि च ।

अथ शास्त्रान्तरोक्तानि प्रायश्चित्तानि गण्यन्ते—

स्वराक्षरादिलोपश्च इध्मादेश्छेदनादिकम् ।
इध्मकाष्ठातिरेकश्चेध्मकाष्ठन्यूनता तथा ॥ १ ॥
अनलस्योपघातश्च स्वयं प्रज्वलनं तथा ।
प्रणीताप्रोक्षणीस्कन्दः शोषणस्रवणे तथा ॥ २ ॥

---

१ क. स्य वि । २ क. सौत्रस्य । ३ ग घ. ङ. वः । इ ।

हविषो दोष उत्सेकः सूर्यचन्द्रग्रहस्तथा ।
पात्रभेदो निरूढाग्नेर्विनाशो वीर्यपातनम् ॥ ३ ॥
होममध्येऽशनं होमानारम्भः समये स्वके ।
पिण्डयज्ञात्ययो वह्निपत्न्यृत्विक्स्वामिमध्यतः ॥ ४ ॥
द्विपादाद्यागमोऽन्वाहित्युत्तरं वा क्रतिर्यजेः ।
एतेषां तु भवेत्प्रायश्चित्तं शास्त्रान्तरीयकम् ॥ ५ ॥

श्रौतोक्तप्रायश्चित्तानामत्र प्राप्तिः श्रौतमध्ये गार्ह्याम्नानबलात् । अविरुद्धत्वाच्छास्त्रान्तरोक्तानां प्राप्तिः । सर्वप्रायश्चित्तमात्रं वा सर्वत्र ।

इति संस्काररत्नमालायां प्रायश्चित्तप्रयोगः ।

इत्योकोपाह्वश्रीमद्गणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां द्वितीयं प्रकरणम् ॥ २ ॥

अथ तृतीयं प्रकरणम् ।

## ग्रहमखः ।

अथ ग्रहमखं वक्ष्ये श्रीदं कर्मसमृद्धिदम् ।
नवग्रहात्मा विघ्नेशस्तेन तुष्टोऽस्तु सर्वदा ॥ १ ॥

अथ ग्रहमखः । स च नित्यनैमित्तिककाम्यभेदेन त्रिविधः । शुभवारत्रिजन्मनक्षत्रायनविषुवोपरागादिषु नित्यः । उपनयनादिकर्मप्रारम्भेषु नैमित्तिकः । विपदपगमसंपदादिकामनासु काम्यः । तत्र काम्ये मण्डपकुण्डादिकं नित्यम् । नित्यनैमित्तिकयोरनित्यम्—

" नित्यं नैमित्तिकं हित्वा सर्वमन्यत्समण्डपम् " इति मात्स्योक्तेः ।

यदा स्थण्डिलं तदा वेदिरेव न मण्डपः, तथैव शिष्टाचारदर्शनादिति प्रयोगपारिजाते ।

मण्डपलक्षणं हेमाद्रौ मात्स्ये—

"गृहस्योत्तरपूर्वेण मण्डपं कारयेद्बुधः ।
रुद्रायतनभूमौ वा चतुरश्रमुदक्प्लवम् ॥
दशहस्तमथाष्टौ वा हस्तान्कुर्याद्विधानतः ।
तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः" इति ।

उत्तरपूर्वेणेति तृतीया सप्तम्यर्थे । उदक्प्लवमुदक्क्रमनिम्नम् । अष्टौ वा हस्तान्कुर्यादित्यत्र मण्डपार्थमिति शेषः । कुर्यात्स्वी कुर्यादित्यर्थः । दशहस्तमष्टहस्तं वा मण्डपं कुर्यादिति फलितोऽर्थः । विधानत इत्यनेन भूमिशोधननवभागकरणादिः सर्वा क्रिया गृह्यते । तस्य मण्डलस्य ।

कुण्डं तु स्कान्दे—

"नवग्रहमखे कुण्डं हस्तमात्रं समन्ततः ।
चतुरश्रमधोहस्तं योनिवक्त्रं समेखलम् ।
चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता" इति ।

अधोहस्तमधोभागे हस्तपरिमितखातम् । योनिवक्त्रं योनिवक्त्रवत् । वक्त्रं कण्ठः, तद्वद्विस्तारवत् । इदं कुण्डं मण्डपपक्षे तदीशानभाग उदीच्यां वा कार्यमिति हेमाद्रिः । मध्य इति केचित् ।

योनिर्मात्स्ये—

"वितस्तिमात्रा योनिः स्यात्षट्सप्ताङ्गुलिविस्तृता ।
कूर्मपृष्ठोन्नता मध्ये पार्श्वयोश्चाङ्गुलोच्छ्रिता ॥
गजोष्ठसदृशी तद्वदायता छिद्रसंयुता ।
मेखलोपरि सर्वत्र अश्वत्थदलसंनिभा" इति ॥

तद्वदङ्गुलोच्छ्रायवत्, पार्श्वयोर्विस्तृतेत्यर्थः । गजोष्ठसदृश्यश्वत्थदलसदृशी वेति विकल्पः ।

सा च योनिः पश्चिमतः कार्या—

"पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः" इति गर्गोक्तेः ।

कुण्डाभावे स्थण्डिले होमः कार्यः—

"नित्यं नैमित्तिकं होमं स्थण्डिले वा समाचरेत्" इति शारदातिलकात् ।
अत्र द्वयोर्ग्रहणेन काम्ये न स्थण्डिलमित्यर्थादुक्तं भवति ।

१ ग. घ. ङ. °म्ये स्थ° ।

मात्स्ये—

" तस्य चोत्तरपूर्वेण स्थण्डिलं हस्तमात्रकम् ।
त्रिवप्रं चतुरश्रं च वितस्त्युच्छ्रायसंमितम् ।
द्विरङ्गुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः ।
अङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि ।
त्र्यङ्गुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः " इति ।

तस्य कुण्डस्य । स्थण्डिलं वेदिः । वप्रो मेखला । वितस्तिर्द्वादशाङ्गुला, तया परिमितो य उच्छ्रायस्तेन संमितं संबद्धमित्यर्थः । द्विरङ्गुलोच्छ्रित इत्यत्र सुच्प्रयोग आर्षः । उपरि प्रथमवप्रोपरि । सर्वेषां वप्राणाम् ।

काम्येऽग्निचक्रमावश्यकम् । तच्च ज्योतिर्निबन्धे—

" सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः ।
सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशो दिवि भूतले च " इति ।

शुक्लप्रतिपदमारभ्यात्र गणनेति सांप्रदायिका ज्योतिर्विदः । एकया संहिता[1] सैका[2] गणितासु तिथिष्वधिकैका तिथिर्गणयितव्येत्यर्थः[3] । अत्रैकवचनं द्वित्रादितिथिविषये जात्यभिप्रायं ज्ञेयम् । वारैर्युता[4] कृताप्तेत्येतद्द्वयं तिथिविशेषणम् । कृतशब्देन कृतादियुगचतुष्टयबोधितचतुःसंख्या लक्ष्यते । तेन चतुःसंख्याया लाभः । आप्ता भाजिता । गुणास्त्रयः । अभ्रं शून्यम् । शश्येकः । युग्मं द्वौ । अन्यत्स्पष्टम् ।

एतदपवादस्तत्रैव—

" नित्ये नैमित्तिके कर्मण्यग्निचक्रं न विद्यते " इति[9] ।

अग्निचक्रं न विद्यते, अग्निचक्रापेक्षा नास्तीत्यर्थः ।

अथाऽऽहुतिपातो ज्योतिषे—

"तरणिविद्भृगुभास्करिचन्द्रमाः कुजसुरेज्यविधुंतुदकेतवः ।
रविभतो दिनभं गणयेत्क्रमात्प्रतिखगं त्रितयं त्रितयं न्यसेत् ।
दिनकरार्कितमःकुजकेतवो हुतभुजो न शुभास्त्वितरे शुभाः ।
दहनचक्रमिदं प्रविलोक्यतां हवनकर्मणि सर्वसमृद्धये " इति ।

---

१ क. ख. ग. सहिताः । २ क. ख. ग. सैकाः । ३ क. °र्थ. । वा° । ४ क. ग. °र्युताः कृ° । ५ क. ग. °तासा इत्ये° । ६ क. °द्वय ल° । ७ क. ग. भाजिताः । ८ क. °म् । अ° । ९ क. °ति । अथा° ।

तरणिः सूर्यः । विद्बुधः । भृगुः शुक्रः । भास्करिः शनिः । चन्द्रमाः प्रसिद्धः । कुजो भौमः । सुरेज्यो गुरुः । विधुंतुदो राहुः । केतुः प्रसिद्धः । दिनकरः सूर्यः । आर्किः शनिः । तमो राहुः । कुजो मङ्गलः । केतुश्चेत्येते हुतभुजश्चेन्न शुभाः । इतरेऽवशिष्टाश्चन्द्रबुधबृहस्पतिशुक्रा हुतभुजश्चेच्छुभा इत्यर्थः ।

अत्रापवादः क्रियासारे—

" नित्ये नैमित्तिके दुर्गाहोमादौ न विचारयेत् " इति ।

" (+सर्वतोभद्रपीठे तु सर्वाधारं प्रकीर्तितम् " इति स्मृतिवचनात्सर्वतोभद्रपीठं वेदिकायां शान्तिरत्नमालायां वक्ष्यमाणेन प्रकारेण रचयित्वा तत्र ब्रह्मादिदेवता आवाह्य संपूज्य तदुपरि वेदिपरिमिते श्लक्ष्णे क्षौमवस्त्रे कार्पासवस्त्रे वा ग्रहपीठानि निष्पादयेत् ।

तत्प्रकार इत्थम्— वेदिपरिमितं श्लक्ष्णं क्षौमं वस्त्रं कार्पासं वा प्रसार्य वस्त्रमान्तेऽवध्यर्थं चतुर्दिक्षु समन्तादेकैकां रेखां लिखित्वा ततोऽन्तरैकैकाङ्गुलान्तरालास्तिस्रस्तथैव लिखित्वा शिष्टं चतुरश्रमन्तर्गतं प्रागुदक्च त्रेधा विभज्य तेन निष्पन्नेषु नवकोष्ठेषु मध्यकोष्ठे सूर्यस्य । आग्नेयकोष्ठे सोमस्य । दक्षिणकोष्ठे भौमस्य । ऐशानकोष्ठे बुधस्य । उत्तरकोष्ठे गुरोः । पूर्वकोष्ठे शुक्रस्य । पश्चिमकोष्ठे शनेः । नैर्ऋतकोष्ठे राहोः । वायव्यकोष्ठे केतोः । इत्येवं क्रमेण वक्ष्यमाणप्रकारेण लिखित्वा तत्तद्वर्णाक्षतैः पूरयेत् ।

अथवा— यथा ग्रहपीठानां पत्रेषु निवेशो भवति तावत्प्रमाणं पत्रं सकर्णिकमष्टपत्रं पद्मं विलिख्य कर्णिकायां सूर्यस्याऽऽग्नेयपत्रे सोमस्य दक्षिणपत्रे भौमस्यैशानपत्रे बुधस्योत्तरपत्रे गुरोः पूर्वपत्रे शुक्रस्य पश्चिमपत्रे शनेर्नैर्ऋतपत्रे राहोर्वायव्यपत्रे केतोरिति ।

## अथ ग्रहपीठरचनाप्रकारः ।

प्रसारितवस्त्रस्य मध्ये रक्तवर्णचूर्णेन षड्यूकासप्तयवसहितैकाङ्गुलात्मकव्यासार्धेन कर्कटकेन सूर्यस्य वृत्तं पीठं विदध्यात् ।

आग्नेय्यां श्वेतचूर्णेन यूकाद्वयसप्तयवसहितचतुरङ्गुलात्मकभुजचतुष्टयेन चतुरश्रं सोमस्य पीठम् ।

---

+ धनुश्चिह्नान्तर्गतो ग्रन्थो ग. घ. ङ. पुस्तकेष्वेवास्ति ।

१ ङ. 'न्ते बध्य' । २ ङ. कर्कोट' ।

याम्यां रक्तवर्णचूर्णेन चतुर्यूकाधिकाङ्गुलत्रयात्मकभुजत्रयेणैकयूकापञ्चयव-सहितद्व्यङ्गुललम्बकं त्रिकोणं दक्षिणाग्रं भौमस्य पीठम् ।

ई(ऐ)शान्यां पीतचूर्णेन चतुर्यवान्तरं चतुरङ्गुलदीर्घमुदक्संस्थं भुजसंज्ञकं रेखाद्वयं समाग्रं लिखित्वैतद्रेखाद्वयोदग्गताग्रयोरन्तराले तदग्रसंगतामन्त-रालप्रदेशप्रादेशपरिमितामेकां रेखां लिखित्वा पौरस्त्यभुजोत्तरदि-ग्गताग्रात्पुरतोऽग्रसंलग्नां चतुर्यवात्मिकां प्राचीं रेखां विधाय तथैव पाश्चात्यभुजोत्तरदिग्गताग्रात्पश्चादग्रसंलग्नां चतुर्यवात्मिकां प्रतीचीं रेखां विधाय भुजद्वयमध्यत उत्तर ऋजुतिर्यक्सूत्रं दत्त्वा भुजद्वयमध्येत उत्तरे लिक्षा-पञ्चकयूकाद्वयसहितपञ्चयवाधिकाङ्गुलद्वयं नीत्वा तत्र चिह्नं कृत्वा चतुर्यवात्म-कप्राक्प्रत्यग्रेखावहिष्प्रान्तावारभ्य चिह्नपर्यन्तं षड्यवाधिकद्व्यङ्गुलात्मकं भुज-द्वयं कुर्यात् , इत्येवं बाणाकारं पीठं बुधस्य ।

उत्तरस्यां पीतचूर्णेन पूर्वपश्चिमभुजद्वयं त्र्यङ्गुलं दक्षिणोत्तरभुजद्वयं द्व्यङ्गुल-मित्येवं दीर्घचतुरश्रपीठं गुरोः ।

पूर्वस्यां श्वेतचूर्णेन पञ्चयूकासप्तयवैकाङ्गुलात्मकव्यासार्धेन कर्कोटकेन वृत्तं कृत्वा तस्मिन्वृत्ते पूर्वां दिशमारभ्य यूकात्रययवद्वयसहितद्व्यङ्गुलमिताः पञ्च ज्याः कृत्वा शिष्टं मार्जयेत् , इत्येवं पञ्चकोणपीठं शुक्रस्य । अथवा यूकाषट्कयव-षट्कसहितद्व्यङ्गुलात्मकव्यासार्धेन वृत्तं कृत्वा तस्मिन्वृत्ते पूर्वां दिशमारभ्य यूकाषट्कयवषट्कसहितत्र्यङ्गुलपरिमितप्रदेशे चिह्नं कृत्वा तत आरभ्यान्येषु प्रदेशेष्वेवमेव चिह्नानीत्येवं पञ्च चिह्नानि कर्कोटकेन कृत्वा यस्मात्कस्मादेक-स्माच्चिह्नादनन्तरं चिह्नं विहाय तृतीयचिह्नसंलग्नं यूकाद्वययवत्रयाधिकाङ्गुलपञ्चक-परिमितं बाहुं कृत्वैवमेवेतरांश्चतुरो बाहून्संपाद्य कोणाधस्थान्बाहून्वृत्तं च मार्ज-येदित्येवमुत्कारसंज्ञकं पञ्चकोणं शुक्रस्य पीठम् ।

पश्चिमायां कृष्णचूर्णेन लिक्षाचतुष्टययूकाचतुष्टययवचतुष्टयाधिकचतुरङ्गुला-त्मकव्यासार्धेन वृत्तं कृत्वा वृत्तसंगतां यूकापञ्चकयवत्रयाधिकषड्ङ्गुलमितां ज्यां कुर्यादित्येवं प्रत्यग्ज्यं षडङ्गुलक्षेत्रफलं शनेः पीठम् । अथवा लिक्षा-षट्कयवपञ्चकाधिकाङ्गुलद्वयात्मकव्यासार्धेन वृत्तं कृत्वा यूकाषट्कयवपञ्चा-धिकाङ्गुलत्रयपरिमितां वृत्तरेखासंलग्नां ज्यासंज्ञकां रेखां दद्यादित्येवं द्व्यङ्गुल-क्षेत्रफलं शनेः पीठम् ।

नैर्ऋत्यां नीलचूर्णेन चतुरङ्गुलपरिमितचतुर्भुजं चतुरश्रं कृत्वा तस्य चतुर-

१ ङ. प्राचीं । २ ङ. 'ध्य उ' । ३ ङ. कर्कोट' । ४ ङ. 'यमि' ।

अस्याऽऽग्नेयकोणाद्दक्षिणतो यूकाषट्कैकयवाधिकैकाङ्गुलात्मकं प्रदेशमृजुतया वर्धयित्वा तत्र चिह्नं कृत्वैवमेवोत्तरतो वर्धयित्वा चिह्नं कृत्वा दक्षिणदिग्गतचिह्नान्नैर्ऋतकोणपर्यन्तां रेखां लिखित्वोत्तरदिग्गतचिह्नाद्वायव्यकोणपर्यन्तां रेखां लिखित्वाऽधःस्थत्र्यङ्गुलात्मकभुजार्धयोश्चिह्नं कृत्वा ताभ्यां चिह्नाभ्यामेकैकाङ्गुलात्मकव्यासार्धेन कर्कटकेन वृत्तद्वयं लिखेत्, मध्यस्थितं सर्वं मार्जयेदित्येवं शूर्पाकारं पीठं राहोः ।

वायव्यां नानावर्णैः पूर्वापरमष्टाङ्गुलदीर्घं चतुर्यवान्तरं रेखाद्वयं विलिख्याध आरभ्य पञ्चाङ्गुलप्रमाणमुपरिभागादेकाङ्गुलप्रमाणं प्रदेशमुत्तररेखायास्त्यक्त्वा शिष्टत्र्यङ्गुलप्रमाणां रेखां संमार्ज्यैकयवाधिकचतुरङ्गुलात्मकौ भुजावुत्तरतो मिथो लग्नास्यौ कुर्यादित्येवं ध्वजाकारं पीठं केतोः ।

सर्वत्र कोष्ठमध्यभागानुसारेण पीठमध्यभागकल्पना । आदित्याभिमुखाः सर्व इत्येतस्मिन्पक्षे सोमचतुरश्रपीठस्य दिक्षु कोणाः कल्पनीयाः । भौमस्य तु पूर्ववदेव । बाणस्याग्रमीशानकोष्ठनैर्ऋतकोणसंमुखं यथा भवति तथा बुधबाणाकारपीठम् । बृहस्पतेः पूर्ववदेव । शुक्रपीठस्य पश्चिमां दिशमारभ्य पञ्चज्याकल्पनम् । शनेः पीठं प्राग्ज्यं कल्पनीयम् । नैर्ऋतकोष्ठेशानकोणाभिमुखं राहुपीठं शूर्पाग्रं कल्पनीयम् । ध्वजस्योत्तराग्रता पूर्वत्रोक्ताऽत्र दक्षिणाग्रतेति केतुपीठम् । इति विशेषः ) सर्वतोभद्रादिपीठे[1] मूलमन्त्रेण जुहुयादितिवचनाभावान्न मूलमन्त्रेण होमः,

किंतु—" प्रणवादिचतुर्थ्यन्तं[2] स्वाहाशब्दसमन्वितम्[3] ।
स्यात्पीठदेवताहोमे मन्त्रो नामैव कीर्तितः " ।

इति तन्त्रप्रकाशकारोक्तेर्नमःशब्दरहितेनैव[5] नाममन्त्रेण होम इति द्रष्टव्यम् । मूलमन्त्रस्वरूपं[6] तु गारुडे—

" प्रणवादिचतुर्थ्यन्तं नमोन्तं चैव सत्तम ।
देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्तितः[4] " इति ।

तथा च यत्र मूलमन्त्रेण जुहुयादिति वचनं विशेषविहितमन्त्राभावश्च तत्रायं मूलमन्त्रः । तेन कर्तव्ये होमे नमःशब्दोत्तरं स्वाहाकारो[7] भवति ।

---

१ क. °ठे यन्त्रे च मू° । २ क. °र्थ्यन्तः स्वा° । ३ क. °न्वितः । यन्त्रपीठादिदेवानां हो° । ४ क. मन्त्रः प्रकी° । ५ क. °तेनैवेति । ६ क. °पं गा° । ७ क. °कारोऽपि । अ° ।

# ग्रहमख प्रयोगः ।

अथ प्रयोगः— कर्ता स्नात्वा नित्यकर्म निर्वर्त्य मौहूर्तिकोक्ते[1] काल आचम्य प्राणानायम्य देशकालौ संकीर्त्य करिष्यमाणामुककर्मणि ग्रहानुकूल्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग्रहयज्ञं करिष्य इत्युपनयनादिकर्मप्रारम्भेषु नैमित्तिकग्रहयज्ञसंकल्पः । त्रिजन्मनक्षत्रायनविषुवोपरागेषु त्रिजन्मनक्षत्रे ग्रहयज्ञं करिष्ये । अयने विषुव उपरागे वा ग्रहयज्ञं करिष्य इति नित्यग्रहयज्ञसंकल्पः । विपदपगमसंपदादिकामनासु विपदपगमार्थं संपत्प्राप्त्यर्थं पुष्टिप्राप्त्यर्थमित्येवं तत्तत्कामनानुसारेण काम्यग्रहयज्ञसंकल्पः[2] । ततः संभारान्संभरेत् । तत्र नित्यनैमित्तिकयोर्यथोक्तवस्तूनि तदभावे प्रतिनिधिनिरूपाणि वा यथासंभवं संपादयेत् । काम्ये तु प्रतिनिध्यभावाद्यथोक्तवस्तून्येव[3] । संकल्पात्पूर्वं वा संभारसंभरणम् ।

ततो गणपतिपूजनादिनान्दीश्राद्धान्तं कृत्वाऽऽचार्यादिवरणं कुर्यात् । अमुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशाखाध्याय्यमुकशर्माऽहममुकप्रवरान्वितामुकगोत्रोत्पन्नममुकशाखाध्यायिनममुकशर्माणमस्मिन्ग्रहयज्ञ आचार्यत्वेन त्वां वृण इति विधिज्ञं कर्मकुशलं स्वशाखाविदं सदाचारिणं ब्राह्मणं पाणिना पाणिं संस्पृश्य वृणुयात् । तद्धस्ते फलादि दद्यादित्याचारः ।

ततस्तं संपूज्य प्रार्थयेत्—

" आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ।
तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत " इति ।

ततो ब्रह्माणं वृत्वा संपूज्य—

" यथा चतुर्मुखो ब्रह्मा स्वर्गे लोके पितामहः ।
तथा त्वं मम यज्ञेऽस्मिन्ब्रह्मा भव द्विजोत्तम[6] " इति तं[7] प्रार्थयेत् ।

ततः सदस्यं वृत्वा संपूज्य—

" भगवन्सर्वधर्मज्ञ सर्वधर्मभृतां वर ।
वितते मम यज्ञेऽस्मिन्सदस्यो भव सुव्रत " । इति[8] तं प्रार्थयेत् ।

ततो होमानुसारेणर्त्विजो वृत्वा[9] संपूज्य[10]—

" अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ।
सुप्रसन्नैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम् " इति तान्प्रार्थयेत् ।

---

१ ग. मौहूर्तिके । घ. ङ. ज्योतिर्विदुक्ते । ३ घ. ङ. °ल्पः । तत्र । ३ घ. ङ. °व । त° ४ क. °ध्याय्यमुकप्र° । ५ ग. ततस्तद्ध° । ६ घ. ङ. महीसुर । ७ ग. ब्रह्माणं । ८ ग. °ति सदस्यं संप्रार्थ्य त° । ९ ग. वृणुयात् । ततस्तान्स° । १० ग. °ज्य प्रार्थयेच्च । अ° ।

अथाऽऽचार्योऽग्न्यायतनस्य पश्चादुपविश्याऽऽचम्य प्राणानायम्य—

" यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ।
अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ।
सर्वेषामविरोधेन ब्रह्मकर्म समारभे " ।

इति प्रागादिक्रमेण सर्वतः सर्षपान्विकीर्य, शुची व इत्यस्य विश्वे देवा मरुतस्त्रिष्टुप् । अग्निः शुचिव्रततम इति द्वयोर्विश्वे देवा अग्निः शुचिर्गायत्री, पञ्चगव्येन भूमिप्रोक्षणे विनियोगः—" ॐ शुची वो हव्या मरुतः शु० पावकाः । अग्निः शुचिव्रत० हुतः । उदग्ने शु० प्यर्चयः " । इति पञ्चगव्येन सर्वतो याग-भूमिं[1] प्रोक्ष्य । आपो हि ष्ठेतितृचस्याग्निरापो गायत्री, शुद्धोदकेन भूमिप्रोक्षणे विनियोगः—" ॐ आपो हि ष्ठा मयो० यथा च नः" इति शुद्धोदकेन सर्वतो यागभूमिं[2] प्रोक्ष्य, स्वस्ति न इत्यस्य याज्ञिक्यो देवता उपनिषद इन्द्रादयो विराट्त्रिष्टुप् । जपे विनियोगः—" ॐ स्वस्ति न इन्द्रो वृद्ध० दधातु " इति जपित्वा, देवा आयान्तु यातुधाना अपयान्तु[4] विष्णो देवयजनं रक्षस्वेत्यग्न्या-यतनात्पश्चाद्भूमिमभिमृशेत्[3] । मण्डपपक्षे मण्डपार्थभूमिशोधनादि तदीयदेवतापूज-नान्तं[5] मत्कृतशान्तिरत्नमालापद्धत्युक्तरीत्या कुर्यात् । ( * उक्तलक्षणकुण्डसत्त्वे तत्कुशमुष्टिना संमृज्य कुण्डोपरितनमेखलायां श्वेतवर्णभूषितायामिदं विष्णु-रित्यस्य सोमो विष्णुर्गायत्री । विष्ण्वावाहने वि० " ॐ इदं विष्णुर्विचक्रमे० पा९ सुरे । विष्णवे नमो विष्णुमावाहयामि" इति विष्णुमावाहयेत् । ततो मध्यमे-खलायां रक्तवर्णभूषितायां ब्रह्म जज्ञानमित्यस्याग्निर्ब्रह्मा त्रिष्टुप् । ब्रह्मा-वाहने वि० " ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि० श्च विवः । ब्रह्मणे नमो ब्रह्माण-मावाहयामि " इति ब्रह्माणमावाहयेत् । ततोऽधोमेखलायां कृष्णवर्णभूषितायां मृडा नो रुद्रेत्यस्याग्नी रुद्रो विराड्जगती । रुद्रावाहने वि० " ॐ मृडा नो रुद्रोत नो मयस्कृधि० प्रणीतौ । रुद्राय नमः, रुद्रमावाहयामि" इति रुद्रमावाहयेत् । उदकस्पर्शः । ततो योन्यां रक्तवर्णभूषितायां गौरीर्मिमायेत्यस्य विश्वे देवा

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. पुस्तकेऽन्यो ग्रन्थोऽस्ति स यथा—" तत आयतन कुशमुष्टिना संमृज्य यथोक्तलक्षणकुण्डसत्त्वे ब्रह्मविष्णुरुद्राख्या मेखलादेवता आवाह्य गौरीं योनिदेवतामावाह्य " इति ।

१ ङ. भूमेः प्रो° । २ क. भूमिं । ३ क. भूमिं । ४ ग. अपाया° । ५ घ. ङ. °न्तं शा° ।

गौरी जगती, गौर्यावाहने वि० "ॐ गौरीर्मिमाय सलिलानि तक्ष० व्योमन्। गौर्यै नमः, गौरीमावाहयामि" इति गौरीमावाहयेत्। ततः पदार्थानुसमयेन तैरेव मन्त्रैः क्रमेण षोडशोपचारैः) संपूज्याऽऽयतनं समन्ताद्रङ्गवल्लिकया भूषयित्वा गोमयेनोपलिप्[1]योद्धननादि कृत्वा वरदनामानं मथितं श्रोत्रियागारादाहृतं वाऽग्निं प्रतिष्ठाप्य "ॐ चत्वारि शृङ्गा" इति ध्यायेत्। पुष्टिकामनायां तु बलवर्धननामाऽग्निः। ततो[2] ग्रहपीठदेवतास्थापनादि कुर्यात्।

तद्यथा—मण्डपस्येशानकोष्ठे मध्य एकहस्तप्रमाणां चतुर[3]श्रां द्वादशाङ्गुलोच्चां वेदिं विधाय तस्या अधस्तादेकाङ्गुलोच्छ्रायं त्र्यङ्गुलविस्तारमेकं वप्रं कृत्वा तस्याधस्तात्तथैवान्यदेकं वप्रं कृत्वा तस्याधस्तादेकं वप्रं त्र्यङ्गुलोच्छ्रायविस्तारं कृत्वा तद्वप्रत्रयमुपरितनवप्रमारभ्य क्रमेण श्वेतरक्तकृष्णचूर्णै रञ्जयेत्[4]। एतानि वप्राणि वेदिप्रमाणान्तर्गतान्येव भवन्ति। ततस्तस्यां सति संभवे[5] मत्कृतशान्तिरत्नमालोक्तरीत्या सर्वतोभद्रं[6] विरच्य तत्र ब्रह्मादिदेवताः[7] आवाहयेत्।

तद्यथा—ब्रह्म जज्ञानमित्यस्याग्निर्ब्रह्मा त्रिष्टुप्। ब्रह्मावाहने विनियोगः। "ॐ ब्रह्म जज्ञानं० विवः। ब्रह्मणे नमः, ब्रह्माणमावाहयामि" इति पीठमध्ये ब्रह्माणम्।

आप्यायस्वेत्यस्य सोमोऽग्निर्वा सोमो गायत्री। सोमावाहने विनियोगः। "ॐ आप्यायस्व समे० संगथे। सोमाय नमः सोममावाहयामि" इत्युत्तरे सोमम्।

अभि त्वेत्यस्य विश्वे देवा ईशानो गायत्री। ईशानावाहने विनियोगः— "ॐ अभि त्वा० महे। ईशानाय नमः, ईशानमावाहयामि" इतीशान्यामीशानम्।

इन्द्रं वो विश्वत इत्यस्य विश्वे देवा इन्द्रो गायत्री। इन्द्रावाहने विनियोगः—"ॐ इन्द्रं वो विश्व० वलः। इन्द्राय नमः, इन्द्रमावाहयामि" इति पूर्वे इन्द्रम्।

अग्निं दूतमित्यस्य प्रजापतिरग्निर्गायत्री। अग्न्यावाहने विनियोगः—"ॐ अग्निं दूतं वृणी० सुक्रतुम्। अग्नये नमोऽग्निमावाहयामि" इत्याग्नेय्यामग्निम्।

---

१ ग. घ. ङ. °प्योल्लेखना°। २ ग. घ. ङ. °तो मण्ड°। ३ क °श्रां विस्तृताधस्तनवप्रामङ्गुलोच्छ्रितावेस्ततोपरि वेदिं विधाय तस्या अधस्ताद्वप्रं त्र्यङ्गुलोच्छ्रायं(य) विस्तारं कृत्वा तदुपर्येकैकाङ्गुलोच्छ्राय त्र्यङ्गुलविस्तार वद्वप्रय विधाय तद्वप्र°। ४ ग. घ. ङ. °त्। ततो वेद्यां स°। ५ घ ङ. °वे शान्तिरत्नमालायां वक्ष्यमाणेन प्रकारेण स°। ६ घ. ङ. °भद्रपीठं वि°। ७ क. °तास्थापन पूजन च कुर्यात्। तत्र मन्त्राः। ब्र°। ग. °तास्थापन पूजनं च कुर्यात्। स्थण्डिलपक्षेऽपीयं वेदिः। अथ तन्मन्त्राः। ब्र°।

यमाय सोममित्यस्य प्रजापतिर्यमोऽनुष्टुप् । यमावाहने विनियोगः—"ॐ यमाय सोमं० ऽकृतः । यमाय नमः, यममावाहयामि " इति दक्षिणे यमम् ।

देवीमहमित्यस्याग्निर्निर्ऋतिस्त्रिष्टुप् । निर्ऋत्यावाहने विनियोगः—"ॐ देवीम० चष्टे । निर्ऋतये नमो निर्ऋतिमावाहयामि " इति नैर्ऋत्यां निर्ऋतिम् ।

तत्त्वा यामीत्यस्य विश्वे देवा वरुणस्त्रिष्टुप् । वरुणावाहने विनियोगः—"ॐ तत्त्वा यामि० प्रमोषीः । वरुणाय नमो वरुणमावाहयामि " इति पश्चिमे वरुणम् ।

वायो शतमित्यस्य विश्वे देवा वायुरनुष्टुप् । वाय्वावाहने विनियोगः—"ॐ वायो शतं० पाजसा । वायवे नमो वायुमावाहयामि " इति वायव्यां वायुम् ।

अष्टौ देवा इत्यस्य विश्वे देवा अष्टौ वसवो विराट्त्रिष्टुप् । अष्टवस्वावाहने विनियोगः—"ॐ अष्टौ देवा० स्वस्ति । अष्टवसुभ्यो नमोऽष्टवसूनावाहयामि " इति वायुसोममध्येऽष्टौ वसून् ।

नीलग्रीवाः शितिकण्ठा इत्यस्याग्निरेकादश रुद्रा अनुष्टुप् । एकादशरुद्रावाहने विनियोगः—" ॐ नीलग्री० श्रिताः । तेषा१ सहस्रयोजनेऽव धन्वानि तन्मसि । एकादशरुद्रेभ्यो नम एकादश रुद्रानावाहयामि " इति सोमेशानयोर्मध्य एकादश रुद्रान् ।

त्याञ्चित्यस्य विश्वे देवा द्वादशाऽऽदित्या गायत्री । द्वादशादित्यावाहने विनियोगः—"ॐ त्यान्नु क्षत्रि० ष्टये । द्वादशादित्येभ्यो नमो द्वादशाऽऽदित्यानावाहयामि " इतीशानेन्द्रयोर्मध्ये द्वादशादित्यान् ।

या वां कशेत्यस्य सोमोऽश्विनौ गायत्री । अश्व्यावाहने विनियोगः—"ॐ या वां कशा० क्षतम् । अश्विभ्यां नमोऽश्विनावावाहयामि " इतीन्द्राग्न्योर्मध्येऽश्विनौ ।

ओमास इत्यस्य सोमो विश्वे देवा गायत्री । विश्वे(श्वे)देवावाहने विनियोगः—"ॐ ओमासश्च० सुतम् " विश्वेभ्यो देवेभ्यो नमो विश्वान्देवानावाहयामि । इत्यग्नियमयोर्मध्ये विश्वान्देवान् ।

अभि त्यमित्यस्य सोमः सप्तयक्षाः प्रकृतिः । सप्तयक्षावाहने विनियोगः—"ॐ अभि त्यं देव० सुवः " सप्तयक्षेभ्यो नमः सप्तयक्षानावाहयामि । इति यमनिर्ऋत्योर्मध्ये सप्तयक्षान् ।

आऽयं गौरित्यस्याग्निः सर्पा गायत्री । सर्पावाहने विनियोगः—"ॐ आऽयं गौः पृ० न्त्सुवः " । सर्पेभ्यो नमः सर्पानावाहयामि । इति निर्ऋतिवरुणयोर्मध्ये सर्पान् ।

( सर्वतोभद्रमण्डलदेवतावाहनम् )

ऋताषाडित्यस्य पान्त्वित्यन्तस्य विश्वे देवा गन्धर्वाप्सरसो यजुः। गन्धर्वाप्सरआवाहने विनियोगः। "ॐ ऋताषाडृतधा० पान्तु" गन्धर्वाप्सरोभ्यो नमो गन्धर्वाप्सरस आवाहयामि। इति वरुणवाय्वोर्मध्ये गन्धर्वाप्सरसः।

यदक्रन्द इत्यस्य विश्वे देवाः स्कन्दस्त्रिष्टुप्। स्कन्दावाहने विनियोगः—ॐ "यदक्रन्दः प्रथ० जातं ते अर्वन्" स्कन्दाय नमः स्कन्दमावाहयामि। इति ब्रह्मसोममध्ये स्कन्दम्।

तत्पुरुषाय विद्महे चक्रतुण्डायेत्यस्य याज्ञिक्यो देवता उपनिषदो नन्दीश्वरो गायत्री। नन्दीश्वरावाहने विनियोगः। 'ॐ तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि। तन्नो नन्दिः प्रचोदयात्" नन्दीश्वराय नमो नन्दीश्वरमावाहयामि। इति स्कन्दस्योत्तरतो नन्दीश्वरम्।

यत्ते गात्रादित्यस्य विश्वे देवाः शूलो भूरिक्त्रिष्टुप्। शूलावाहने विनियोगः। "ॐ यत्ते गात्रा० मस्तु" शूलाय नमः शूलमावाहयामि। इति नन्दीश्वरस्योत्तरतः शूलम्।

कार्षिरसीत्यस्य सोमो महाकालो यजुः। महाकालावाहने विनियोगः। "ॐ कार्षिर० पां मृध्रम्" महाकालाय नमो महाकालमावाहयामि। इति शूलस्योत्तरतो महाकालम्।

द्वाविमौ वातौ वात इत्यस्य विश्वे देवा दक्षोऽनुष्टुप्। दक्षावाहने विनियोगः। "ॐ द्वाविमौ० यद्रपः" दक्षाय नमो दक्षमावाहयामि। इति ब्रह्मेशानयोर्मध्ये दक्षम्।

तामग्निवर्णामित्यस्य याज्ञिक्यो देवता उपनिषदो दुर्गा त्रिष्टुप्। दुर्गावाहने विनियोगः। "ॐ तामग्निवर्णां० तरसे नमः" दुर्गायै नमो दुर्गामावाहयामि। इति ब्रह्मेन्द्रयोर्मध्ये दुर्गाम्।

इदं विष्णुरित्यस्य सोमो विष्णुर्गायत्री। विष्णवावाहने विनियोगः। "ॐ इदं वि० सुरे" विष्णवे नमो विष्णुमावाहयामि। इति दुर्गायाः पुरतो विष्णुम्।

उदीरतामित्यस्य विश्वे देवाः स्वधा त्रिष्टुप्। स्वधावाहने विनियोगः। "ॐ उदीरताम० हवेषु" स्वधायै नमः स्वधामावाहयामि। इति ब्रह्माग्न्योर्मध्ये स्वधाम्।

परं मृत्यो, इत्यस्य विश्वे देवा मृत्युरोगास्त्रिष्टुप्। मृत्युरोगावाहने विनि-

योगः । "ॐ परं मृत्यो० वीरान्" । मृत्युरोगेभ्यो नमो मृत्युरोगानावाहयामि । इति ब्रह्मयमयोर्मध्ये मृत्युरोगान् ।

गणानां त्वेत्यस्य विश्वे देवा गणपतिर्जगती । गणपत्यावाहने विनियोगः । "ॐ गणानां त्वा० सादनम्" गणपतये नमो गणपतिमावाहयामि । इति ब्रह्मनिर्ऋत्योर्मध्ये गणपतिम् ।

शं नो देवीरित्यस्य विश्वे देवा आपो गायत्री । अबावाहने विनियोगः । "ॐ शं नो देवी० न्तु नः' अद्भ्यो नमोऽप आवाहयामि । इति ब्रह्मवरुणयोर्मध्ये, अपः ।

मरुतो यस्येत्यस्य विश्वे देवा मरुतो गायत्री । मरुदावाहने विनियोगः । 'ॐ मरुतो यस्य० जनः' मरुद्भ्यो नमो मरुत आवाहयामि । इति ब्रह्मवाय्वोर्मध्ये मरुतः ।

स्योना पृथिवीत्यस्य याज्ञिक्यो देवता उपनिषदः पृथिवी गायत्री । पृथिव्यावाहने विनियोगः । "ॐ स्योना पृथिवि भवा० प्रथाः' पृथिव्यै नमः पृथिवीमावाहयामि । इति ब्रह्मणः पादमूले कर्णिकाधः पृथिवीम् ।

इमं मे गङ्ग इत्यस्य याज्ञिक्यो देवता उपनिषदो गङ्गादिनद्यो जगती । गङ्गादिनद्यावाहने विनियोगः । 'ॐ इमं मे गङ्गे० सुषोमया' गङ्गादिनदीभ्यो नमो गङ्गादिनदीरावाहयामि । इति तत्रैव गङ्गादिनदीः । धाम्नो धाम्न इत्यस्य सोमः सप्तसागराः पङ्क्तिः । सप्तसागरावाहने विनियोगः । 'ॐ धाम्नो धाम्नो० नो मुञ्च' । सप्तसागरेभ्यो नमः सप्तसागरानावाहयामि । इति तत्रैव सप्तसागरान् ।

"ॐ मेरवे नमो मेरुमावाहयामि' । इति तदुपरि मेरुम् ।

तत आयुधानि । 'ॐ गदायै नमो गदामावाहयामि' इति सोमस्योत्तरे गदाम् । 'ॐ त्रिशूलाय नमस्त्रिशूलमावाहयामि' । इतीशानस्येशान्यां त्रिशूलम् । 'ॐ वज्राय नमो वज्रमावाहयामि' इतीन्द्रस्य पूर्वे वज्रम् । 'ॐ शक्तये नमः शक्तिमावाहयामि' । इत्यग्नेराग्नेय्यां शक्तिम् । 'ॐ दण्डाय नमो दण्डमावाहयामि' इति यमस्य दक्षिणे दण्डम् । 'ॐ खड्गाय नमः खड्गमावाहयामि' इति निर्ऋतेर्नैर्ऋत्यां खड्गम् । 'ॐ पाशाय नमः पाशमावाहयामि' इति वरुणस्य पश्चिमे पाशम् । 'ॐ अङ्कुशाय नमोऽङ्कुशमावाहयामि' इति वायोर्वायव्यामङ्कुशम् । इत्यायुधानि ।

'ॐ गौतमाय नमो गौतममावाहयामि' इति गदाया उत्तर गौतमम् । 'ॐ भरद्वाजाय नमो भरद्वाजमावाहयामि' इति त्रिशूलस्येशान्याम् । 'ॐ विश्वामित्राय

नमो विश्वामित्रमावाहयामि ' इति वज्रस्य पूर्वे विश्वामित्रम् । ' ॐ कश्यपाय नमः कश्यपमावाहयामि ' इति शक्तेराग्नेय्यां कश्यपम् । ' ॐ जमदग्नये नमो जमदग्निमावाहयामि ' इति दण्डस्य दक्षिणे जमदग्निम् । ' ॐ वसिष्ठाय नमो वसिष्ठमावाहयामि' इति खड्गस्य नैर्ऋत्यां वसिष्ठम् । ' ॐ अत्रये नमोऽत्रिमावाहयामि ' इति पाशस्य पश्चिमेऽत्रिम् । ' ॐ अरुन्धत्यै नमोऽरुन्धतीमावाहयामि ' इत्यङ्कुशस्य वायव्यामरुन्धतीम् । इत्यृषीन् ।

' ॐ ऐन्द्र्यै नम ऐन्द्रीमावाहयामि ' इति विश्वामित्रस्य पूर्वे ऐन्द्रीम् । ' ॐ कौमार्यै नमः कौमारीमावाहयामि ' इति कश्यपस्याऽऽग्नेय्यां कौमारीम् । ' ॐ ब्राह्म्यै नमो ब्राह्मीमावाहयामि ' इति जमदग्नेर्दक्षिणे ब्राह्मीम् । ' ॐ वाराह्यै नमो वाराहीमावाहयामि ' इति वसिष्ठस्य नैर्ऋत्यां वाराहीम् । ' ॐ चामुण्डायै नमश्चामुण्डामावाहयामि ' इति अत्रेः पश्चिमे चामुण्डाम् । ' ॐ वैष्णव्यै नमो वैष्णवीमावाहयामि ' इत्यरुन्धत्या वायव्यां वैष्णवीम् । ' ॐ माहेश्वर्यै नमो माहेश्वरीमावाहयामि ' इति गौतमस्योत्तरे माहेश्वरीम् । ' ॐ वैनायक्यै नमो वैनायकीमावाहयामि " इति भरद्वाजस्यैशान्यां वैनायकीम् । इत्यष्ट शक्तयः ।

एता देवता आवाह्य, नर्य प्रजामित्यस्याग्निर्नर्योऽनुष्टुप् । एतासां देवतानां प्रतिष्ठापने विनियोगः । " ॐ नर्य प्रजां मे गोपाय । अमृत० प्रतिष्ठिताम् " इति प्रतिष्ठाप्य (*पदार्थानुसमयेन पूजयेत् । काण्डानुसमयपक्ष आवाहनादिषोडशोपचा-

* धनुश्चिह्नान्तर्गतस्थाने क. ग. पुस्तकयोः--"काण्डानुसमयेन पदार्थानुसमयेन वा सर्वा देवताः पूजयेत् ।

ततः स्थण्डिलकरणादि । आधारवत्तन्त्रेणैतदुद्देशेन दश दश तिलाहुतीर्घृताहुतीर्वा जुहुयात् । एकैका वाऽऽहुतिं जुहुयादिति सम्प्रदायः । मैत्रादीनां नमःशब्दरहितैः प्रणवादिचतुर्थ्यन्तैः स्वाहाकारान्तैर्नामभिर्होमः । ततस्तदुपरि वेदिपरिमितं श्लक्ष्णं क्षौमं वस्त्रं प्रसार्य वस्त्रस्य समन्तादवध्यर्थं रेखां लिखित्वा ततः एकैकाङ्गुलान्तरालास्तिस्रः समन्ताद्रेखा लिखित्वाऽवशिष्टं चतुरश्रं प्राक्समदक्षं च त्रेधा विभज्य तेषु नवकोष्ठेषु मध्ये सूर्यस्याऽऽग्नेय्यां सोमस्य दक्षिणस्यां भौमस्यैशान्यां बुधस्योत्तरस्यां गुरोः प्राच्यां शुक्रस्य पश्चिमायां शनेर्नैर्ऋत्यां राहोर्वायव्यां केतोरित्येवं क्रमेण मण्डलानि तत्तद्वर्णाक्षतैः रचयेत् । अभावे विलिखेद्वा । अथवा यथा ग्रहमण्डलानां पत्रेषु निवेशो भवति तावत्प्रमाणं पत्रं सकर्णिकमष्टपत्रं पद्मं विलिख्य मध्ये सूर्यमितरेषु पत्रेष्वनन्तरोक्तक्रमेणाष्टौ ग्रहानावाहयेत् ।

अथ मण्डलरचनाप्रकारः ।

प्रसारितवस्त्रस्य मध्ये रक्तवर्णचूर्णेन षड्यूकासप्तयवसहितैकाङ्गुलात्मकव्यासार्धेन कर्कटकेन सूर्यस्य वृत्तं पीठं विदध्यात् । आग्नेय्यां श्वेततन्दु-

रैरेकस्य पूजां कृत्वा परस्याऽऽवाहनादिषोडशोपचारैः पूजां कुर्यादित्येवं क्रमेण सर्वदेवतापूजनम् ।

तत आयतनकरणादि । आघारवत्तन्त्रेणैतदुद्देशेन दश दश तिलाहुतीर्घृता-

---

र्णेन यूकाद्वयसप्तयवचतुरङ्गुलात्मकभुजचतुष्टयेन चतुरश्रं सोमस्य पीठम् । याम्यां रक्तवर्णचूर्णेन चतुर्यूकाधिकाङ्गुलत्रयात्मकभुजत्रयेणैकयूकापञ्चयवसहितद्व्यङ्गुललम्बकं त्रिकोणं दक्षिणाग्रमुत्तराग्रं वा भौमस्य पीठम् । ईशान्यां पीतचूर्णेन चतुर्यवान्तरं चतुरङ्गुलदीर्घमुदक्संस्थं भुजसंज्ञकं रेखाद्वयं समाग्रं लिखित्वैतद्रेखाद्वयोदग्गताग्रयोरन्तराले तदग्रसंगतामन्तरालप्रदेशपरिमितामेकां रेखां लिखित्वा पौरस्त्यभुजदक्षिणदिग्गताग्रात्पुरतोऽग्रसंलग्नां चतुर्यवात्मिकां प्राचीं रेखां विधाय तथैव पाश्चात्यभुजदक्षिणदिग्गताग्रात्पश्चादग्रसंलग्नां चतुर्यवात्मिकां प्रतीचीं रेखां विधाय भुजद्वयमध्यतो दक्षिणं ऋजुतिर्यक्सूत्रं दत्त्वा भुजद्वयमध्यतो दक्षिणे लिक्षापञ्चकयूकाद्वयसहितपञ्चयवाधिकद्व्यङ्गुलं मीत्वा[1] तत्र चिह्नं कृत्वा चतुर्यवात्मकप्राक्प्रत्यग्रेखावहिष्प्रान्तावारभ्य चिह्नपर्यन्तं षड्यवाधिकद्व्यङ्गुलात्मकं भुजद्वयं कुर्यादित्येव बाणाकारपीठं बुधस्य । उत्तरस्यां पीतचूर्णेन पूर्वपश्चिमभुजद्वयं त्र्यङ्गुलं दक्षिणोत्तरभुजद्वयं द्व्यङ्गुलमित्येव दीर्घचतुरश्रपीठं गुरोः । पूर्वस्यां श्वेतचूर्णेन पञ्चयूकासप्तयवैकाङ्गुलात्मकव्यासार्धेन कर्कटेन वृत्तं कृत्वा तस्मिन्वृत्ते पूर्वां दिशमारभ्य यूकात्रययवद्वयाङ्गुलद्वयमिताः पञ्च ज्याः कृत्वाऽवशिष्टं मार्जयेदित्येवं पञ्चकोणं शुक्रस्य । अथवा षड्यूकापञ्चयवाङ्गुलद्वयात्मकव्यासार्धेन वृत्तं कृत्वा तस्मिन्वृत्ते पूर्वां दिशमारभ्य षड्यूकापञ्चयवाङ्गुलत्रयपरिमितप्रदेशे चिह्नं कृत्वा तत आरभ्यान्येषु प्रदेशेष्वेवमेव चिह्नानीत्येव पञ्च चिह्नानि कर्कटकेन कृत्वा यस्मात्कस्मादेकस्माच्चिह्नादनन्तरं चिह्नं विहाय तृतीयचिह्नसंलग्नं यूकाद्वययवत्रयाङ्गुलपञ्चकपरिमितं बाहुं कृत्वैवमेवेतरांश्चतुरो बाहून्संपाद्य कोणाधस्स्थान्बाहून्वृत्तं च मार्जयेदित्येवमुत्कलसंज्ञकं पञ्चकोणं शुक्रस्य पीठम् । पश्चिमायां कृष्णचूर्णेन लिक्षाचतुष्टययूकाचतुष्टययवचतुष्टयाधिकचतुरङ्गुलात्मकव्यासार्धेन वृत्तं कृत्वा वृत्तसंगतां यूकापञ्चकयवत्रयसहितषडङ्गुलमितां ज्यां कुर्यादित्येव प्राग्ज्यं षडङ्गुलक्षेत्रफलं शनेः पीठम् । अथवा लिक्षाषट्कयवपञ्चकसहिताङ्गुलद्वयात्मकव्यासार्धेन वृत्तं कृत्वा यूकाषट्कयवपञ्चकाङ्गुलत्रयपरिमितां वृत्तरेखासंलग्नां ज्यां दद्यादित्येव द्व्यङ्गुलक्षेत्रफलं शनेः पीठम् । नैर्ऋत्यां नीलचूर्णेन चतुरङ्गुलमितचतुर्भुजं चतुरश्रं कृत्वा चतुरश्रस्याऽऽग्नेयकोणाद्दक्षिणतः षड्यूकैकयवैकाङ्गुलात्मकं प्रदेशमृजुतया वर्धयित्वा तत्र चिह्नं कृत्वैवमेवोत्तरतो वर्धयित्वा चिह्नं च कृत्वा दक्षिणदिग्गतचिह्नां नैर्ऋतकोणपर्यन्तां रेखां लिखित्वोत्तरदिग्गतचिह्नाद्वायव्यकोणपर्यन्तां रेखां लिखित्वाऽथ स्थद्व्यङ्गुलात्मकभुजार्धयोश्चिह्ने कृत्वा ताभ्यां चिह्नाभ्यामेकैकाङ्गुलात्मकव्यासार्धेन कर्कटकेन वृत्तद्वयं लिखेन्मध्यस्थितं सर्वं मार्जयेदित्येव शूर्पाकारं पीठं राहोः । वायव्यां नानावर्णेन पूर्वापरमष्टाङ्गुलदीर्घं चतुर्यवान्तरं रेखाद्वयं विलिख्याथ आरभ्य पश्चाङ्गुलप्रमाणमुपरिभागादेकाङ्गुलप्रमाणं प्रदेशं दक्षिणरेखायास्त्यक्त्वाऽवशिष्टद्व्यङ्गुलप्रमाणां रेखां समाज्यैकयवाधिकचतुरङ्गुलात्मकौ भुजौ दक्षिणतो मिथोलग्नाग्रौ कुर्यादित्येव ध्वजाकारं पीठं केतोः । एवं पीठानि विधायाग्न्युत्तारणं कुर्यात् " इति ग्रन्थो वर्तते ।

---

[1] ग. नीत्वा ।

हुतीर्वा जुहुयात् । एकैकाहुतिरिति संप्रदायः । मेर्वादीनां नमःशब्दरहितैः प्रणवादिचतुर्थ्यन्तैः स्वाहाशब्दसमन्वितैर्नाममन्त्रैर्होमः । होमकर्मणि समाप्ते ग्रहपीठवस्त्रं प्राच्यां शुक्रपीठं यथा भवति तथा सर्वतोभद्रपीठोपर्यास्तीर्य प्रतिमानामग्न्युत्तारणं कुर्यात् )।

## अथाग्न्युत्तारणपूर्वकप्राणप्रतिष्ठा।

अश्मन्नूर्जमित्यनुवाकमन्त्राणामग्निर्ऋषिरग्निर्देवता। त्रिष्टुबादीनि च्छन्दांसि। अग्न्युत्तारणे विनियोगः। " ॐ अश्मन्नू० स्वस्ति " इत्यनुवाकेन प्रतिमानामग्न्युत्तारणं कृत्वा पञ्चामृतैः शुद्धोदकेन च प्रक्षाल्य तत्तद्दिगानना ग्रहप्रतिमाः स्थापयित्वा सूर्यप्रतिमायाः कपोलौ स्पृष्ट्वा प्राणप्रतिष्ठां विदध्यात्।

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः। ऋग्यजुःसामानि च्छन्दांसि। चिद्रूपा परा प्राणशक्तिर्देवता। आं बीजं, ह्रीं शक्तिः। क्रों कीलकम्। सूर्यप्रतिमायां प्राणप्रतिष्ठापने विनियोगः । ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हों ( *ओं क्षं सं हंसः ह्रीं ओं ) हंसः सोऽहं सूर्यप्रतिमायाः प्राणा इह प्राणाः। ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः सोऽहं सूर्यप्रतिमाया जीव इह स्थितः। ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हों हंसः सोऽहं सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रत्वग्जिह्वाघ्राणपाणिपादपायूपस्था इहैवाऽऽगत्य स्वस्तये सुखं चिरं तिष्ठन्तु स्वाहा। इति जपेत्।

अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च । अस्यै देवत्वमर्चायै स्वाहा। इति मन्त्रमुक्त्वा प्रतिमां सजीवां ध्यायेत्। एवं प्राणप्रतिष्ठां विधाय प्रतिमां पञ्चामृतैः संस्नाप्य शुद्धोदकेन स्नापयेत्।

तत उदु त्यमित्यस्य सोमः सूर्यो गायत्री। सूर्यप्रतिमानेत्रोन्मीलने विनियोगः। " ॐ उदु त्यं जात० सूर्यम् " इतिमन्त्रेण सुवर्णशलाकया दर्भशलाकया वा गोघृतं गृहीत्वा तेन प्रतिमाया दक्षवामनेत्रे मन्त्रावृत्त्या क्रमेणोन्मील्य। अञ्जन्ति त्वामित्यस्य विश्वे देवा वनस्पतिस्त्रिष्टुप्। सूर्यप्रतिमानेत्रयोर्मधुनाऽभ्यञ्जने विनियोगः। " ॐ अञ्जन्ति त्वामध्वरे० पस्थे " इति मन्त्रा-

* धनुश्चिह्नान्तर्गत घ ङ. पुस्तकयोरेव।

१ घ. ङ. °त्य सू°। २ ग. क्रौं। ३ ग. क्रौं। ४ ग. क्रौं। ५ क्रौं। ६ घ. ङ. °णि । ओं आं ह्रीं क्रौं यं रं लं वं शं षं सं हों हंसः सोऽहं वा°। ७ क. °स्यै जीव°। ८ घ. °त्। सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रत्वग्जिह्वाघ्राणपाणिपादपायूपस्था इत्येकमेव वा। ए°।

वृत्त्या क्रमेण मधुना नेत्रे अभ्यज्योपहारं निवेदयेत् । नेत्रोन्मीलनमारभ्य प्रतिमायाः पुरतो न तिष्ठेत् । एवं सोमादिप्रतिमानामग्न्युत्तारणादिकमूहेन । प्रत्येकं कर्तुमशक्तौ सर्वासां सहैवोहेन । तत्र हंसः सोऽहमित्यनन्तरं सूर्यादिप्रतिमासु प्राणप्रतिष्ठापने वि० सूर्यादिप्रतिमानां प्राणा इत्यादिरूहो यथायथम् । ततो ग्रहानावाहयेत् ।

तद्यथा—आ सत्येनेत्यस्य विश्वे देवाः सूर्यस्त्रिष्टुप् । समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । सूर्यावाहने विनियोगः । " ॐ आ सत्येन० विपश्यन् " ॐ भूर्भुवः सुवः,' भगवन्ग्रहाधिपते किरीटिंस्त्रिदेवतामय पद्मासन पद्माभयकर द्विभुज लोहितमाल्याम्बरधर लोहितगन्धानुलेपन माणिक्याभरणभूषित जपापुष्पोपमद्युते सप्ताश्वरथारूढ कलिङ्गदेशोद्भव काश्यपसगोत्र सूर्येहाऽऽगच्छेति मध्ये द्वादशाङ्गुले वर्तुल आरक्ताक्षतापूरिते पीठे प्राङ्मुख्यां ताम्रप्रतिमायां रक्ताक्षतैः सूर्यमावाह्येहाधितिष्ठेति स्थापयेत् । भूर्भुवः सुवरित्यादिदेवतापदान्तमुक्त्वा पूजार्थं त्वामावाहयामीत्यावाह्येहाधितिष्ठेति स्थापयेदित्येवं वा सर्वत्र प्रयोगः ।

आप्यायस्वेत्यस्य सोमो विश्वे देवा वा सोमो गायत्री । व्याहृतीनामृष्यादि पूर्ववत्सर्वत्र । सोमावाहने विनियोगः । " ॐ आप्यायस्व समेतु ते० वाजस्य संगथे " भूर्भुवः सुवः, भगवन्नक्षत्राधिपते किरीटिन्सुधामय गदावर[3]कर द्विभुज श्वेतमाल्याम्बरधर श्वेतगन्धानुलेपन मौक्तिकाभरणभूषित गोक्षीरोपमद्युते दशाश्वरथारूढ यमुनातीरोद्भवाऽऽत्रेयसगोत्र सोमेहाऽऽगच्छेत्याग्नेय्यां चतुर्विंशत्यङ्गुले चतुरश्रे श्वेताक्षतपूरिते पीठे प्रत्यङ्मुख्यां स्फटिकप्रतिमायां रजतप्रतिमायां वा श्वेताक्षतैः सोममावाह्येहाधितिष्ठेति स्थापयेत् ।

अग्निर्मूर्धेत्यस्य प्रजापतिरग्निर्वाऽङ्गारको गायत्री । समस्तव्या० अङ्गारकावाहने विनियोगः । ' ॐ अग्निर्मूर्धा० जिन्वति ' भूर्भुवः सुवः, भगवन्नग्न्याकृते किरीटिञ्शक्तिशूलगदावरकर चतुर्भुज लोहितमाल्याम्बरधर लोहितगन्धानुलेपन प्रवालाभरणभूषित ज्वलत्पुञ्जोपमद्युते रक्तमेषरथारूढावन्तिकासमुद्भव भारद्वाजसगोत्राङ्गारकेहाऽऽगच्छेति दक्षिणे त्र्यङ्गुलत्रिकोणे रक्ताक्षतपूरिते पीठे दक्षिणामुख्यां रक्तचन्दनप्रतिमायां सुवर्णप्रतिमायां वा रक्ताक्षतैरङ्गारकमावाह्येहाधितिष्ठेति स्थापयेत् ।

---

१ घ. ङ. °रभ्योपहारपर्यन्तं प्र° । २ घ. ङ. °रतः स्वयमन्योऽपि यः कश्चन नैव ति° । ३ क. ग. °रदहस्त द्वि° ।

उद्बुध्यस्वेत्यस्याग्निर्बुधस्त्रिष्टुप् । समस्त०न्या० बुधावाहने विनियोगः । " ॐ उद्बुध्यस्वा० मेतम् " भूर्भुवः सुवः, भगवन्सौम्याकृते किरीटिन्सर्वज्ञानमय खड्गचर्मगदावरकर चतुर्भुज पीतमाल्याम्बरधर पीतगन्धानुलेपन मरकताभरणभूषित कुङ्कुमोपमद्युते पीतसिंहरथारूढ मगधदेशोद्भवाऽऽत्रेयसगोत्र बुधेहाऽऽगच्छेत्यैशान्यां चतुरङ्गुले बाणाकारे पीताक्षतपूरिते पीठ उदङ्मुख्यां सुवर्णप्रतिमायां पीताक्षतैर्बुधमावाह्येहाधितिष्ठेति स्थापयेत् ।

बृहस्पत इत्यस्य विश्वे देवा बृहस्पतिस्त्रिष्टुप् । समस्त० बृहस्पत्यावाहने विनियोगः । " ॐ बृहस्पते अति यद० चित्रम् " भूर्भुवः सुवः, भगवन्सर्वदेवताचार्य किरीटिन्सर्वविद्यामय दण्डाक्षसूत्रकमण्डलुवरकर चतुर्भुज पीतमाल्याम्बरधर पीतगन्धानुलेपन पुष्परागाभरणभूषित सुवर्णोपमद्युते पीताश्वरथारूढ सिन्धुदेशोद्भवाऽऽङ्गिरससगोत्र बृहस्पत इहाऽऽगच्छेत्युत्तरे षडङ्गुले दीर्घचतुरश्रे पीताक्षतपूरिते पीठ उदङ्मुख्यां सुवर्णप्रतिमायां पीताक्षतैर्बृहस्पतिमावाह्येहाधितिष्ठेति स्थापयेत् ।

शुक्रं त इत्यस्य विश्वे देवाः शुक्रस्त्रिष्टुप् । समस्त० शुक्रावाहने विनियोगः । " ॐ शुक्रं ते अन्य० रातिरस्तु " भूर्भुवः सुवः, भगवन्सर्वदैत्याचार्य किरीटिन्सर्वविद्यामय दण्डाक्षसूत्रकमण्डलुवरकर चतुर्भुज श्वेतमाल्याम्बरधर श्वेतगन्धानुलेपन वज्राभरणभूषित रजतोपमद्युते शुक्लाश्वरथारूढ भोजकटदेशोद्भव भार्गवसगोत्र शुक्रेहाऽऽगच्छेति पूर्वे नवाङ्गुले पञ्चकोणे श्वेताक्षतपूरिते पीठे प्राङ्मुख्यां रजतप्रतिमायां शुक्लाक्षतैः शुक्रमावाह्येहाधितिष्ठेति स्थापयेत् ।

शं नो देवीरित्यस्याग्निः प्रजापतिर्वा शनैश्चरो गायत्री । समस्त० शनैश्चरावाहने विनियोगः । " ॐ शं नो देवी० तु नः " भूर्भुवः सुवः, भगवन्क्रूराकृते किरीटिञ्शूलबाणधनुर्वरकर चतुर्भुज नीलमाल्याम्बरधर नीलगन्धानुलेपन नीलाभरणभूषित कज्जलमीनोपमद्युते नीलगृध्ररथारूढ सौराष्ट्रदेशोद्भव काश्यपसगोत्र शनैश्चरेहाऽऽगच्छेति पश्चिमे द्व्यङ्गुले धनुराकारे नीलाक्षतपूरिते पीठे प्रत्यङ्मुख्यां लोहप्रतिमायां नीलाक्षतैः शनैश्चरमावाह्येहाधितिष्ठेति स्थापयेत् ।

कया न इत्यस्य विश्वे देवा राहुर्गायत्री । समस्त० राह्वावाहने विनियोगः । " ॐ कया नश्चि० वृता " भूर्भुवः सुवः, भगवन्क्रूराकृते किरीटिन्करालवदन सिंहिकानन्दन खड्गचर्मशूलवरकर चतुर्भुज कृष्णमाल्याम्बरधर कृष्णगन्धानुलेपन गोमेदाभरणभूषित कालमेघोपमद्युते कृष्णसिंहरथारूढ राठिनापुरोद्भव

पैठीनसिसगोत्र राहो, इहाऽऽगच्छेति नैर्ऋत्यां द्वादशाङ्गुले शूर्पाकारे कृष्णाक्षतपूरिते पीठे दक्षिणामुख्यां सीसप्रतिमायां कृष्णाक्षतै राहुमावाह्येहाधितिष्ठेति स्थापयेत् ।

केतुं कृण्वन्नित्यस्य विश्वे देवाः केतुर्गायत्री । समस्त० केत्वावाहने विनियोगः । " ॐ केतुं कृण्वन्न० यथाः " भूर्भुवः सुवः, भगवन्क्रूराकृते किरीटिन्गदावरकर द्विभुज चित्रमाल्याम्बरधर चित्रगन्धानुलेपन वैडूर्याभरणभूषित धूम्रोपमद्युते चित्रकपोतरथारूढान्तर्वेदिसमुद्भव जैमिनिसगोत्र केतविहाऽऽगच्छेति वायव्यां षडङ्गुले ध्वजाकारे चित्राक्षतपूरिते पीठे दक्षिणामुख्यां कांस्यप्रतिमायां चित्राक्षतैः केतुमावाह्येहाधितिष्ठेति स्थापयेत् । बहुवचनान्तो वा केतुशब्दः । अस्मिन्पक्ष ऋष्यादिस्मरणवाक्ये केतव इत्यूहः । भगवन्तः क्रूराकृतयः किरीटिनो गदावरकरा द्विभुजाश्चित्रमाल्याम्बरधराश्चित्रगन्धानुलेपना वैडूर्याभरणभूषिता धूम्रोपमद्युतयश्चित्रकपोतरथारूढा अन्तर्वेदिसमुद्भवा जैमिनिसगोत्राः केतव इहाऽऽगच्छतेत्यावाहनवाक्य ऊहः । इहाधितिष्ठतेति स्थापनवाक्ये ।

अथवा सर्वत्र देशगोत्रे एवोच्चार्ये । असंभव इतरस्याभिध्यानमात्रम् । यथोक्तप्रतिमानामलाभे सर्वाः सुवर्णमय्यस्तदभावे तण्डुलपुञ्जादौ[1] यथोक्ताक्षतालाभे सर्वाः श्वेता एव । सर्वे ग्रहा आदित्याभिमुखा एव वा स्थापनीयाः । अस्मिन्पक्षेऽपि सूर्यः प्रसिद्धप्राच्यभिमुख एव ।

## अथाधिदेवताः ।

त्र्यम्बकमित्यस्य विश्वे देवा ईश्वरोऽनुष्टुप् । समस्तव्या० ईश्वरावाहने विनियोगः । 'ॐ त्र्यम्बकं य० तात्' भूर्भुवः सुवः, ईश्वराय नम * ईश्वरमावाहयामीति सूर्यदक्षिणपार्श्वे पञ्चवक्त्रं प्रतिवक्त्रं त्रिलोचनं वृषारूढं चन्द्रमौलिं कपालशूलखट्वाङ्गधारिणमीश्वरम् ।

गौरीर्मिमायेत्यस्य विश्वे देवा उमा जगती । समस्त० उमावाहने विनियोगः । " ॐ गौरीर्मिमाय० व्योमन् " । भूर्भुवः सुवः, उमायै नम उमामावाहयामि ।

---

* घ. ङ. पुस्तकयोः, ईश्वराय नम इत्यादिनाममन्त्रादनन्तरं पञ्चवक्त्रमित्यादितत्तद्विशेषणान्युल्लिख्येश्वरमावाहयामीति सूर्यदक्षिणपार्श्वे ईश्वरमित्यादितत्तद्देवताद्वितीयान्तनामाऽऽवाहयामीतीतिविशिष्टं क्रियापदं तत्तद्देवताया आवाहनस्थानप्रदर्शकं पदं द्वितीयान्तं तत्तद्देवतानाम च निर्दिष्टं वर्तते।

---

१ घ. ङ. °दलाभे पूगीफलेष्वक्षतपुञ्जेषु वा । य° ।

इति सोमदक्षिणपार्श्वे त्रिदशपूजितां श्वेतासनां पुरोगतसिंहामक्षसूत्रकमलदर्पणकमण्डलुधारिणीमुमाम्।

यदक्रन्द इत्यस्याग्निः स्कन्दस्त्रिष्टुप्। समस्त०या० स्कन्दावाहने विनियोगः। 'ॐ यदक्रन्दः० जातं ते अर्वन्' भूर्भुवः सुवः, स्कन्दाय नमः स्कन्दमावाहयामि। इत्यङ्गारकदक्षिणपार्श्वे षण्मुखं रक्ताम्बरधरं शिखण्डकविभूषणं मयूरवाहनं चतुर्भुजं दक्षिणहस्ताभ्यां कुक्कुटघण्टाधारिणं वामहस्ताभ्यां वैजयन्तीपताकाशक्तिधारिणं स्कन्दम्।

विष्णोरराटमित्यस्य सोमो विष्णुर्यजुः। समस्त०या० एकपदा निचृद्गायत्री वा। विष्ण्वावाहने विनियोगः। "ॐ विष्णोरर० त्वा" विष्णवे नमो विष्णुमावाहयामीति बुधदक्षिणपार्श्वे नीलमेघच्छविं श्रीवत्साङ्कं कौस्तुभवक्षसं गरुडारूढं चतुर्भुजं कौमोदकीपद्मशङ्खचक्रधारिणं विष्णुम्। नारायणो वाऽधिदेवता। अस्मिन्पक्षे सहस्रशीर्षेत्यस्य प्रजापतिर्नारायणोऽनुष्टुप्। समस्त० नारायणावाहने विनियोगः। "ॐ सहस्रशीर्षा० दशाङ्गुलम्" भूर्भुवः सुवः, नारायणाय नमो नारायणमावाहयामि। इति बुधदक्षिणपार्श्वे नीलमेघच्छविं श्रीवत्साङ्कं कौस्तुभवक्षसं गरुडारूढं चतुर्भुजं कौमोदकीपद्मशङ्खचक्रधारिणं नारायणम्।

ब्रह्मा देवानामित्यस्य विश्वे देवा ब्रह्मा त्रिष्टुप्। समस्त० ब्रह्मावाहने विनियोगः। "ॐ ब्रह्मा देवानां० रेभन्" भूर्भुवः सुवः, ब्रह्मणे नमो ब्रह्माणमावाहयामीति बृहस्पतिदक्षिणपार्श्वे यज्ञोपवीतिनं पद्मासनस्थं जटिलं चतुर्मुखमक्षमालापुस्तककमण्डलुधारिणं पार्श्वभागस्थापितपीतवासःकृष्णाजिनं पार्श्वस्थितहंसं ब्रह्माणम्।

सजोषा इन्द्रेत्यस्य सोम इन्द्रस्त्रिष्टुप्। समस्त०या० इन्द्रावाहने विनियोगः। "ॐ सजोषा इन्द्र० तो नः" भूर्भुवः सुवः, इन्द्राय नम इन्द्रमावाहयामीति शुक्रदक्षिणपार्श्वे चतुर्दन्तगजारूढं वज्राङ्कुशपाणिं शचीपतिं नानाभरणभूषितमिन्द्रम्।

इमं यमेत्यस्य विश्वे देवा यमस्त्रिष्टुप्। समस्त० यमावाहने विनियोगः। "ॐ इमं यम प्रस्तर० यस्व" भूर्भुवः सुवः, यमाय नमो यममावाहयामीति शनिपार्श्वे ईषत्पीतं द्विभुजं दण्डपाशपाणिं कृष्णवर्णं रक्तनेत्रं नानाभूषणभूषितं महिषारूढं यमम्।

कार्षिरसीत्यस्य सोमः कालो यजुरेकपदा गायत्री वा । समस्त० कालावाहने विनियोगः । " कार्षिरस्य० मृध्रम् " भूर्भुवः सुवः, कालाय नमः कालमावाहयामीति राहुदक्षिणपार्श्वे करालवदनं विभीषणं नित्यगं सर्पवृश्चिकरोमाणं पाशदण्डपाणिं कालम् ।

चित्रावसो, इत्यस्य प्रजापतिश्चित्रगुप्तो यजुः । एकपदा जगती वा । समस्त० चित्रगुप्तावाहने विनियोगः । " ॐ चित्रावसो स्व० शीय " भूर्भुवः सुवः, चित्रगुप्ताय नमश्चित्रगुप्तमावाहयामीति केतुदक्षिणपार्श्वे उदीच्यवेषसाकारं द्विभुजं लेखनीदक्षिणपाणिं पत्रवामपाणिं सौम्यदर्शनं चित्रगुप्तम् । इत्यधिदेवताः सुवर्णप्रतिमास्वक्षतपुञ्जेषु[1] वाऽऽवाहयेत् ।

इत्यधिदेवताः ।

## अथ प्रत्यधिदेवताः ।

अग्निं दूतमित्यस्य प्रजापतिरग्निर्गायत्री । समस्त० अग्न्यावाहने विनियोगः । " ॐ अग्निं दूतं वृणीमहे० सुक्रतुम् " भूर्भुवः सुवः, अग्नये नमोऽग्निमावाहयामीति सूर्योत्तरपार्श्वे पिङ्गभ्रुवं श्मश्रुलं पिङ्गत्रिनेत्रं छागस्थमरुणं सप्तार्चिषमक्षसूत्रशक्तिधारिणं वरदमग्निम् ।

अप्सु म इत्यस्य विश्वे देवा आपोऽनुष्टुप् । समस्त० अबावाहने विनियोगः । " ॐ अप्सु मे सोमो० षजीः " भूर्भुवः सुवः, अद्भ्यो नमोऽप आवाहयामीति सोमोत्तरपार्श्वे स्त्रीरूपिणीः श्वेता मकरवाहना मुक्ताभरणभूषिताः पाशकलशधारिणीरपः ।

स्योना पृथवीत्यस्य याज्ञिक्यो देवता उपनिषदो भूमिर्गायत्री । समस्त० भूम्यावाहने विनियोगः । " ॐ स्योना पृथि० प्रथाः " भूर्भुवः सुवः, भूम्यै नमो भूमिमावाहयामीत्यङ्गारकोत्तरपार्श्वे शुक्लवर्णां दिव्याभरणभूषितां चतुर्भुजां सौम्यवपुषं चण्डांशुसदृशाम्बरां रत्नपात्रसस्यपात्रौषधपात्रपद्मधारिणीं चतुर्दिङ्नागपृष्ठगतां भूमिम् । भूमिशब्दे पृथिविशब्दोच्चारणं वा ।

इदं विष्णुरित्यस्य सोमो विष्णुर्गायत्री । समस्त० विष्ण्वावाहने विनियोगः । " इदं विष्णुर्वि० पा१९ सुरे " भूर्भुवः सुवः, विष्णवे नमो विष्णुमावाहयामीति

---

१ घ. ङ. °मासु पूगीफलेष्वक्ष° ।

बुधोत्तरपार्श्वे नीलमेघच्छविं श्रीवत्साङ्कं कौस्तुभवक्षसं गरुडारूढं चतुर्भुजं कौमोदकीपद्मशङ्खचक्रधारिणं विष्णुम् ।

इन्द्रं व इत्यस्य विश्वे देवा इन्द्रो गायत्री । समस्त० इन्द्रावाहने विनियोगः । " ॐ इन्द्रं वो विश्वत० केवलः " भूर्भुवः सुवः, इन्द्राय नम इन्द्रमावाहयामीति बृहस्पत्युत्तरपार्श्वे चतुर्दन्तगजारूढं वज्राङ्कुशपाणिं नानाभरणभूषितं शचीपतिमिन्द्रम् ।

इन्द्राणीमित्यस्य विश्वे देवा इन्द्राण्यनुष्टुप् । समस्त० इन्द्राण्यावाहने विनियोगः—" ॐ इन्द्राणी० पतिः " भूर्भुवः सुवः, इन्द्राण्यै नम इन्द्राणीमावाहयामीति शुक्रोत्तरपार्श्वे द्विभुजां नानालंकारमण्डितां दिव्यवस्त्रां श्वेतगन्धानुलेपनां सौम्यां संतानमञ्जरीवामहस्तां वरदामिन्द्राणीम् ।

प्रजापत इत्यस्य विश्वे देवाः प्रजापतिस्त्रिष्टुप् । समस्त० प्रजापत्यावाहने विनियोगः—" ॐ प्रजापते न० रयीणाम् " भूर्भुवः सुवः, प्रजापतये नमः प्रजापतिमावाहयामीति शनैश्चरोत्तरपार्श्वे यज्ञोपवीतिनं हंसस्थमेकवक्त्रं चतुर्भुजमक्षस्रुवपुस्तककमण्डलुधारिणं प्रजापतिम् ।

आऽयं गौरित्यस्याग्निः सर्पा गायत्री । समस्त० सर्पावाहने विनियोगः—" ॐ आऽयं गौ० पृश्नि० न्त्सुवः " । भूर्भुवः सुवः, सर्पेभ्यो नमः सर्पानावाहयामीति राहूत्तरपार्श्वेऽक्षसूत्रधरान्कुण्डिकाकारपुच्छसंयुतान्भीषणानेकभोगांस्त्रिभोगान्वा सर्पान् ।

ब्रह्म जज्ञानमित्यस्याग्निर्याज्ञिक्यो देवता उपनिषदो वा ब्रह्मा त्रिष्टुप् । समस्त० ब्रह्मावाहने विनियोगः—" ॐ ब्रह्म जज्ञानं० विवः" भूर्भुवः सुवः, ब्रह्मणे नमो ब्रह्माणमावाहयामीति केतूत्तरपार्श्वे ब्रह्माणं यज्ञोपवीतिनं पद्मासनस्थं जटिलं चतुर्मुखमक्षमालास्रुवपुस्तककमण्डलुधारिणं पार्श्वभागस्थापितवासःकृष्णाजिनं पार्श्वभागस्थितहंसं ब्रह्माणम् । इति प्रत्यधिदेवताः सुवर्णप्रतिमास्वक्षतपुञ्जेषु वाऽऽवाहयेत् । अथवाऽग्न्यादयोऽधिदेवता ईश्वरादयः प्रत्यधिदेवताः । तत्तद्ग्रहावाहनानन्तरमेव तत्तदधिदेवताप्रत्यधिदेवतावाहनं वा ।

इति प्रत्यधिदेवताः ।

१ घ. ङ. 'रीवरकरामि' । २ घ. ङ. ब्रह्मा देवानामित्यस्य विश्वे देवा ब्र० । ३ घ. ङ. ब्रह्मा देवानां० रेभन्' । भू° । ४ घ. ङ. 'मामु पूगीफलेष्वक्ष° । ५ क. ख. ग. °ताः । अ° ।

## अथ क्रतुसंरक्षणदेवताः ।

गणानां त्वेत्यस्य विश्वे देवा गणपतिर्जगती । समस्त० गणपत्यावाहने विनियोगः—" ॐ गणानां त्वा गण० सीद सादनम् । " भूर्भुवः सुवः, सिद्धिबुद्धिसहिताय महागणपतये नमः सिद्धिबुद्धिसहितं महागपतिमावाहयामीति राहोरुत्तरतो गजाननं मूषकवाहनं नागयज्ञोपवीतिनं शशाङ्ककृतशेखरं सिद्धिबुद्धियुतं चतुर्भुजं त्रिनेत्रं दन्ताक्षसूत्रपरशुमोदकधारिणं गणेशम् ।

जातवेदस इत्यस्य याज्ञिक्यो देवता उपनिषदो दुर्गा त्रिष्टुप् । समस्त० दुर्गावाहने विनियोगः—" ॐ जातवेदसे सुनवा० दुरितात्यग्निः " भूर्भुवः सुवः, दुर्गायै नमो दुर्गामावाहयामीति शनेरुत्तरतः सिंहारूढां दशभुजां शक्तिवाणशूलखड्गचक्रचन्द्रबिम्बखेटकपालैंशुकटङ्कहस्तां दुर्गासुहारिणीं दुर्गाम् ।

वायो शतमित्यस्य विश्वे देवा वायुरनुष्टुप् । समस्त० वाय्वावाहने विनियोगः—" ॐ वायो शतं हरीणां० पाजसा " भूर्भुवः सुवः, वायवे नमो वायुमावाहयामीति सूर्यस्योत्तरतो धावद्धरिणपृष्ठस्थं द्विभुजं ध्वजहस्तं वरदं धूम्रवर्णं वायुम् ।

घृतं घृतपावान इत्यस्य सोम आकाशो यजुः । समस्त० आकाशावाहने विनियोगः—" ॐ घृतं घृतपा० रिक्षाय " भूर्भुवः सुवः, आकाशाय नम आकाशमावाहयामीति राहोर्दक्षिणतो नीलोत्पलाभं नीलाम्बरं द्विभुजं सौम्यं षँण्ढं चन्द्रार्कहस्तमाकाशम् ।

या वां कशेत्यस्य सोमोऽश्विनौ गायत्री । समस्त० अश्व्यावाहने विनियोगः—" ॐ या वां कशा० क्षतम् " भूर्भुवः सुवः, अश्विभ्यां नमोऽश्विनावावाहयामीति केतोर्दक्षिणतो द्विभुजौ दिव्यौषधिदक्षिणहस्तौ दर्शनीयपुस्तकवामहस्तावन्योन्ययुक्तदेहौ सुरूपचारुदर्शनरत्नभाण्डकरचन्द्रशुक्लाम्बरनारीयुगपार्श्वौ देवभिषजावश्विनौ ।

वास्तोष्पत इत्यस्य प्रजापतिर्वास्तोष्पतिस्त्रिष्टुप् । समस्त० वास्तोष्पत्यावाहने विनियोगः—" ॐ वास्तोष्पते० चतुष्पदे " भूर्भुवः सुवः, वास्तोष्पतये नमो वास्तोष्पतिमावाहयामीति बृहस्पतेरुत्तरतो भगवन्तं वास्तुपुरुषं महाबलपराक्रमं सर्वदेवाधिवासाश्रयशरीरं ब्रह्मपुत्रं सकलब्रह्माण्डधारिणं भूमिभारार्पितमस्तकं

---

१ घ. ङ. °थ कर्ममं° । २ घ. ङ. °म् । तामग्निवर्णामित्य° । ३ घ. ङ. ॐ तामग्निवर्णा० तरसे नमः । भू° । ४ क. °लभूक° । ग. °लशूल्ट° । ५ घ. ङ. दुर्गदेत्यामु° । ६ घ. ङ. °जवरकरं धू° । ७ ग. षङ्ढं ।

पुरपत्तनप्रासादप्रपावापीसरःकूपादिसंनिवेशसांनिध्यकरं सर्वसिद्धिप्रदं प्रसन्नवदनं विश्वंभरं परमपुरुषरूपं चक्रशार्ङ्गधरं वरदाभयहस्तं वास्तोष्पतिम्।

क्षेत्रस्य पतिनेत्यस्य विश्वे देवाः क्षेत्रपालोऽनुष्टुप्। समस्त० क्षेत्रपालावाहने विनियोगः—" ॐ क्षेत्रस्य पति० तीदृशे " भूर्भुवः सुवः, क्षेत्रपालाय नमः क्षेत्रपालमावाहयामीत्यङ्गारकस्योत्तरतः श्यामवर्णं त्रिलोचनमूर्ध्वकेशं सुदंष्ट्रं भ्रूकुटिकुटिलाननं नूपुरालंकृताङ्घ्रिं सर्पमेखलायुतं सर्पाङ्गमतिक्रूरं क्षुद्रघण्टामयीं करोटिकामयीं गुल्फावलम्बिनीं मालां दधानमुरगाबद्धं चन्द्ररेखासुमुखमष्टहस्तं शूलकुन्तखङ्गदुन्दुभियुतदक्षिणहस्तं कपालघण्टाचर्मचापयुतवामहस्तं भीमं दिग्वाससममितद्युतिं क्षेत्रपालम्।

अथवा सूर्यगुरुशनिकेतुमध्ये गणपत्यादीन्यथावकाशं स्थापयेत्।

इति क्रतुसंरक्षकदेवताः।

---

# अथ लोकपालाः।

त्रातारमिन्द्रमित्यस्य विश्वे देवा इन्द्रस्त्रिष्टुप्। समस्त० इन्द्रावाहने विनियोगः। " ॐ त्रातारमि० त्विन्द्रः " भूर्भुवः सुवः, इन्द्राय नम इन्द्रमावाहयामीति शुक्रमण्डलात्पुरत ऐरावतारूढं वज्रपाणिं सुवर्णवर्णं सहस्राक्षं नाकपममरेश्वरमिन्द्रम्।

अग्ने नयेत्यस्य विश्वे देवा अग्निस्त्रिष्टुप्। समस्त० अग्न्यावाहने विनियोगः। " ॐ अग्ने नय सु० विधेम " भूर्भुवः सुवः, अग्नये नमोऽग्निमावाहयामीति सोममण्डलादाग्नेय्यां सुवर्णवर्णं सप्तार्चिषं सप्तहस्तं स्वाहास्वधाप्रियं चतुःशृङ्गं सप्तजिह्वं द्विशीर्षं त्रिपादं मेषारूढं शक्त्यन्नस्रुक्स्रुवतोमरव्यजनघृतपात्रधारिणमग्निम्।

इमं यमेत्यस्य विश्वे देवा यमस्त्रिष्टुप्। समस्त० यमावाहने विनियोगः। " ॐ इमं यम प्रस्त० मादयस्व " भूर्भुवः सुवः, यमाय नमो यममावाहयामीत्यङ्गारकमण्डलाद्दक्षिणतो दण्डधारिणामिलाप्रियं महिषवाहनं कृष्णवर्णं शुभाशुभकर्मफलप्रदं यमम्।

असुन्वन्तमित्यस्याग्निर्निर्ऋतिस्त्रिष्टुप्। समस्त० निर्ऋत्यावाहने विनियोगः। " ॐ असुन्वन्त० मस्तु " भूर्भुवः सुवः, निर्ऋतये नमो निर्ऋतिमावा-

१ क. ख. ग. °हके°।

हयामीति राहुमण्डलान्नैर्ऋत्यां खड्गचर्मधरं नीलं नरारूढमूर्ध्वकेशं विरूपाक्षं करालं कालिकाप्रियं निर्ऋतिम् ।

तत्त्वा यामीत्यस्य विश्वे देवा वरुणस्त्रिष्टुप् । समस्त० वरुणावाहने विनियोगः । " ॐ तत्त्वा यामि० प्रमोषीः " भूर्भुवः सुवः,[1] वरुणाय नमो वरुणमावाहयामीति शनिमण्डलात्पश्चिमतो नागपाशधरमम्बुपतिं श्वेतभूषणं पद्मिनीप्रियं मकरारूढं वरुणम् ।

आ नो नियुद्भिरित्यस्य विश्वे देवा वायुस्त्रिष्टुप् । समस्त० वाय्वावाहने विनियोगः—" ॐ आ नो नियुद्भिः शति० सदा नः " भूर्भुवः सुवः । वायवे नमो वायुमावाहयामीति केतुमण्डलाद्वायव्यां जगत्प्राणरूपं कृष्णमृगारूढं हेमदण्डधरं श्यामवर्णं मोहिनीप्रियं वायुम् ।

सं ते पयाꣳसीत्यस्याग्निः सोमस्त्रिष्टुप् । समस्त० सोमावाहने विनियोगः—" ॐ सं ते पया० निधिष्व " भूर्भुवः सुवः । सोमाय नमः सोममावाहयामीति बृहस्पतिमण्डलादुत्तरतो मृगारूढं गदापाणिं श्वेतवर्णं रोहिणीप्रियं सोमम् ।

कुबेरपक्षे[2]—अश्वारूढं कुन्तपाणिं निधीश्वरं सुवर्णवर्णं धनदं रूपवन्तं प्रभुं चित्रिणीप्रियं कुबेरम्[3] । ऐन्द्रीन्यायेन मन्त्रः स एव, राजाधिराजायेति मन्त्रो वा । अस्य मन्त्रस्यारुणा ऋषयः कुबेरो देवता जगती छन्दः । इत्यृष्यादि द्रष्टव्यम् । नमोन्तोऽयं मन्त्रो द्रष्टव्यः ।

अभि त्वेत्यस्य विश्वे देवा ईशानो गायत्री । समस्त० ईशानावाहने विनियोगः—" ॐ अभि त्वा देव० मीमहे " भूर्भुवः सुवः, ईशानाय नम ईशानमावाहयामीति बुधमण्डलादीशान्यां शुद्धस्फटिकसंकाशं वृषारूढं वरदाभयशूलाक्षसूत्रधारिणं पञ्चवक्त्रं त्रिनेत्रं नानाभरणभूषितं पार्वतीप्रियमीशानम् ।

इति प्रतिमास्वक्षतपुञ्जेषु वा लोकपालानावाहयेत् । ईश्वरादिष्वपीहाऽऽगच्छेत्यावाह्येहाधितिष्ठेति संस्थापनमित्येवं वा प्रयोगः ।

१ क. °ति रक्तभू° । २ घ. ङ. °क्षे राजाधिराजायेत्यस्यारुणा. कुबेरोऽष्टिः । समस्तव्या० ती । कुबेरावा० । ॐ राजाधिराजाय० महाराजाय नमः । भू० शिबिकारूढ । ३ घ. ङ. °बेरमावा० इति कुबेरम् । स्थानं सोमस्यैवैतस्यापि । अभि ।

ततः—" नर्यं प्रजां मे गोपाय। अमृतत्वाय जीवसे। जातां जनिष्यमाणां च। अमृते सत्ये प्रतिष्ठिताम् "

(* इति सर्वा देवताः प्रतिष्ठाप्य काण्डानुसमयेन पदार्थानुसमयेन[1] वा [+पूजयेत्। एकस्य कृत्स्नां पूजां समाप्यान्यस्य कुर्यादित्येष काण्डानुसमयः। पदार्थानुसमयस्तु सर्वेषामावाहनं कृत्वा क्रमेणैकैकस्मै तं तमुपचारमर्पयेदिति। एष ग्रहाणां पूजने) विशेषः—ग्रहवर्णानि वासांसि। दिवाकराय[2] रक्तचन्दनम्। चन्द्राय श्वेतचन्दनम्। भौमाय रक्तचन्दनम्। बुधाय[3] कुङ्कुमयुक्तं चन्दनम्। गुरवे[4]ऽपि कुङ्कुमयुक्तं चन्दनमेव[5]। शुक्राय श्वेतचन्दनम्। शनिराहुकेतुभ्यो[6]ऽगरुः।

रवये[7] रक्तं करवीरम्। सोमाय श्वेतं करवीरम्, भौमाय रक्तोत्पलम्। बुधाय चम्पकपुष्पम्। गुरवेऽगस्त्यपुष्पम्। शुक्रायातसीपुष्पम्। शनये कालाञ्जनीपुष्पम्। राहवे सर्षपपुष्पम्। केतवे शङ्खिनीपुष्पम्।

रवये सल्लकीनिर्यासधूपः। सोमाय घृतयुक्ताक्षतधूपः। भौमाय सारफलीतिप्रसिद्धस्य सर्जरसस्य धूपः। बुधायागरुधूपः। गुरवे लोहवाण इति प्रसिद्धस्य सिह्लाद्र[8]व्यस्य धूपः। शुक्राय बिल्वफलनिर्याससहितस्यागरोर्धूपः। शनये गुग्गुलधूपः। राहुकेतुभ्यां लाक्षाधूपः। घृतदीपः सर्वेषाम्।

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने घ. ङ पुस्तकयोः—" इति देवताप्रतिष्ठापनं कुर्यात्। मन्त्रावृत्तिः प्रतिदेवतम्। तत्तदावाहनानन्तरमेव तत्तत्प्रतिष्ठापनं तत्तत्पूजनं चेति काण्डानुसमय एवात्र नियतः, सौकर्यात्। आवाहनं प्रतिष्ठापनं च क्रमेणैकैकस्या देवतायाः कृत्वैकैकस्यै तं तमुपचारं निवेदयेदित्येवंरूपो हि पदार्थानुसमयः। तस्य शुक्रार्कौ प्राङ्मुखौ ज्ञेयावित्यस्मिन्पक्षे प्रतिदेवतं यथायथं यथायोग्यप्राप्तप्राङ्मुखोदङ्मुखतयोस्तदभिमुखतायां वा विलम्बावहत्वान्न भवति। विलम्बसहने प्रधानस्य तदारम्भस्य वा पूर्वाह्णकालता बाध्येत। अतः काण्डानुसमय एवात्र। ग्रहाणां पूजनेऽयं " इति वर्तते।

+ एतच्चिह्नान्तर्गतग्रन्थस्थाने ख. पुस्तकेऽयं ग्रन्थः—" षोडशोपचारैः पूजयेत्। तत्र विशेषः— ग्रहवर्णानि वासांसि। गन्धाः पुष्पाणि च। ग्रहवर्णवस्त्रगन्धपुष्पाणामलाभे श्वेतान्येतानि। गुग्गुलुधूपः। तदलाभे यः कश्चन सौरभ्ययुक्। गुडौदनघृतपायसहविष्यान्नक्षीरषाष्टिकदध्योदनघृतौदनतिलमाषमिश्रिताम्ललवणमिश्रक्षीरौदनचित्रौदना इति ग्रहाणां क्रमेण नैवेद्यम्। एतेषामलाभे यथासंभवम् " इति।

१ ग. °न वा। २ घ. ङ. सूर्याय। ३ ग. घ. ङ. °य केशरयु°। ४ ग. घ. ङ. °वे केशरयु°। ५ ग. घ. ङ. °न्दनं, शु°। ६ ग. घ. ङ. °भ्योऽगुरुः। ७ ग. घ. ङ. सूर्याय। ८ ग. सिलाद्र°।

यथोक्तचन्दनपुष्पालाभे यत्किंचित्तत्तद्वर्णयुक्चन्दनादि । तत्तद्वर्णवस्त्रगन्धपुष्पाणामलाभे श्वेतानि । यथोक्तधूपालाभे गुग्गुलुः । तस्याप्यलाभे यः कश्चन सौरभ्ययुक् ।

रवये गुडौदनम् । सोमाय घृतयुक्तं पायसम् । भौमाय हविष्यान्नम् । बुधाय षाष्टिकपायसम् । गुरवे दध्योदनम् । शुक्राय घृतौदनम् । शनये तिलमाषमिश्रितमन्नम्[5] । राहवे लवणमिश्रक्षीरयुक्तमोदनम् । केतव आरक्तपिष्टयुतलवणमिश्राजाक्षीरयुततिलतण्डुलमिश्रितमोदनम्[6] ।

एतेषामलाभे तत्तद्वर्णयुक्तौदनो नैवेद्यं घृतौदनं वा ।

रवये द्राक्षाफलानि । सोमायेक्षवः । भौमाय पूगानि । बुधाय नारिङ्गाणि । गुरवे जम्बीराणि । शुक्राय बीजपूराणि । शनये खर्जूरफलानि । राहवे नारिकेराणि । केतवे [10]दाडिमानि ।

* यथोक्तफलालाभे नारिकेरफलानि खर्जूरफलानि वा । ]

सति संभवे फलपुष्पसमन्वितं वितानमप्यर्पणीयम् ।

अधिदेवताप्रत्यधिदेवतानां चैत एवोपचाराः । गणपत्यादिषु तु श्वेतमेव चन्दनं, शतपत्राण्येव पुष्पाणि, धूपो[11] गुग्गुलुरेव । गोघृतदीपः । घृतौदननैवेद्यम् । शतपत्रपुष्पालाभे यथासंभवं[12] पुष्पम् । फलं नारीकेरम् । खर्जूरफलं वेति द्रष्टव्यम् ।

ततः पीठादीशान्यामुदीच्यां वा मही द्यौरिति भूमिं स्पृष्ट्वा तत्र रङ्गवल्लीपद्मं विधायौषधयः संवदन्त इति प्रस्थपरिमितधान्यपुञ्जं तत्र कृत्वा तत्राऽऽजिघ्रे[13]त्यनेन नवमव्रणं तैजसं मृन्मयं वा चन्दनेनानुलिप्तं दध्यक्षतपुष्पमालाद्यलंकृतं त्रिसूत्रवेष्टितग्रीवं कलशं संस्थाप्येमं म इत्युदकेन पूरयित्वाऽऽप्यायस्वेत्यस्याग्निः सोमो गायत्री क्षीरप्रक्षेपे विनियोगः—

---

* एतस्मात्प्राक् घ. ङ. पुस्तकयोरधिकमेतत्—" ग्रहवर्णवस्त्राभावे स्वेन रञ्जितानि कृत्वा समर्पणीयानि । एतदसंभवे श्वेतानि । यथोक्तचन्दनपुष्पालाभे यानि कानिचित्तत्तद्वर्णानि । तदलाभे श्वेतानि । यथोक्तधूपालाभे गुग्गुलुः । तस्याप्यलाभे यः कश्चन सौरभ्ययुक् । यथोक्तौदनालाभे तत्तद्वर्णयुक्तपिष्टौदनो घृतौदनो वा नैवेद्यम् " इति । अत्रोपक्रमोक्ता फक्किकाऽऽवश्यिका ।

---

१ ग. घ. ङ. °दनः । सो° । २ घ. ङ. °दन. । शु° । ३ ग. घ. ङ. °दनः । श° । ४ ग. घ. ङ. °श्रितौदनः । रा° । ५ ग. घ. ङ. °युक्तौदन. । ए° । ६ ग. घ. ङ. °मिश्रिताजा° । ७ ग. घ. ङ. °त ओदनः । र° । ८ ग. पूगीफलानि । ९ ग. घ. ङ. °केरफलानि । के° । १० घ. ङ. °डिमीफलानि । ११ क. ख. धूपः स एव । १२ क. ख. °वं श्वेतपुष्पमिति । त° । १३ क. ख. °तं कुम्भं सं° ।

" ॐ आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम्। भवा वाजस्य संगथे "
इति कलशे क्षीरं प्रक्षिप्य,

दधिक्राव्ण इत्यस्य विश्वे देवा दधिक्रावाऽनुष्टुप्। दधिप्रक्षेपे विनियोगः—
" ॐ दधिक्राव्णो अकारिषं० तारिषत् " इति + कलशे दधि प्रक्षिप्य,

शुक्रमसीत्यस्य प्रजापतिराज्यं यजुः। आज्यप्रक्षेपे विनियोगः—" ॐ शुक्रमसि ज्योतिरसि तेजोऽसि " इति कलश आज्यं प्रक्षिप्य,

मधु वाता इति मन्त्रत्रयस्याग्निर्विश्वे देवा गायत्री। मधुप्रक्षेपे विनियोगः—
" ॐ मधु वाता० भवन्तु नः " इति कलशे मधु प्रक्षिप्य,

त्वे क्रतुमित्यस्य सोमः प्रजापतिस्त्रिष्टुप्। शर्कराप्रक्षेपे विनियोगः—" ॐ त्वे क्रतुमपि० योधि " इति कलशे शर्करां प्रक्षिप्य,

तत्सवितुरित्यस्या गायत्र्या विश्वामित्रः सविता गायत्री। गोमूत्रप्रक्षेपे विनियोगः—" ॐ तत्सवितु० यात् " इति कलशे गोमूत्रं प्रक्षिप्य,

गन्धद्वारामित्यस्य याज्ञिक्यो देवता उपनिषदः श्रीरनुष्टुप्। गोमयप्रक्षेपे विनियोगः—" ॐ गन्धद्वारा० श्रियम् " इति कलशे गोमयं प्रक्षिप्य,

पुनराप्यायस्वेत्यादिभिस्त्रिभिः क्षीरदधिघृतानि कलशे प्रक्षिप्य, नूतनाहृतचित्रपर्वतधातूंस्तूष्णीं प्रक्षिप्य, उद्धृताऽसि वराहेणेत्यस्य याज्ञिक्यो देवता उपनिषदो मृत्तिकाऽनुष्टुप्। सप्तमृत्प्रक्षेपे विनियोगः—" ॐ उद्धृताऽसि वराहेण कृष्णेन शत० कृतम् " इति कलशेऽश्वशालागजशालावल्मीकनदीसंगमह्रदराजद्वारगोष्ठप्रदेशाहृताः सप्त मृत्तिकाः प्रक्षिप्य[2] गन्धद्वारामित्यस्य याज्ञिक्यो देवता उपनिषदः श्रीरनुष्टुप्, गन्धप्रक्षेपणे वि० " गन्धद्वारा० श्रियम् " इति कलशे गन्धं प्रक्षिप्य या जाता ओषधय इत्यस्याग्निरोषधयोऽनुष्टुप्। ओषधिप्रक्षेपे विनियोगः—" ॐ या जाता ओ० सप्त च " इति कुष्ठमांसीहरिद्राद्वयमुराशैलेयचन्दनसटीचम्पकमुस्तात्मिका दशौषधीः[3] सहैव कलशे निक्षिपेत्।

कुष्ठं कोष्ठम्। मांसी जटामांसी। हरिद्रैका प्रसिद्धा। द्वितीया दारुहळद इति, मुरा मोरवेल इति परशुरामक्षेत्रे प्रसिद्धा[4]। शैलेयं शिलारसः। चन्दनं

+ क. ख. पुस्तकयोरत्र " कलशे दधि " इति पदद्वयरहितः पाठः। एवमग्रेऽपि।

१ क. इत्यस्या। २ क. ख. °प्य पुण्याहवाचनप्रकरणोक्तैर्गन्धद्वारामित्यादिभिर्गन्धादीन्त्रत्नान्तानुपचारान्प्रक्षिप्य या°। ३ क. ख. °धीः क°। ४ क. ख. प्रसिद्धिः।

प्रसिद्धम् । सटी कचोरः[2] । चम्पकश्चम्पकवृक्षत्वक् । मुस्ता भद्रमोथेति । एतासामभावे ( * शतावरी । मन्त्रस्तु यः पञ्चरत्नानां स एव । काण्डात्काण्डादित्यस्याग्निरोषधयोऽनुष्टुप्, दूर्वाप्रक्षेपे वि० । " ॐ काण्डात्काण्डा० शतेन च " इति कलशे दूर्वाः प्रक्षिप्य—

अश्वत्थे वेत्यस्याग्निरोषधयोऽनुष्टुप्, पञ्चत्वक्प्रक्षेपे वि० । " ॐ अश्वत्थे वो० पूरुषम् " इति न्यग्रोधपिप्पलप्लक्षजम्बूचूततरूणां त्वचः सहैव कलशे क्षिपेत् । जम्बूस्थान उदुम्बरो वा ।

अश्वत्थे व इत्यस्याग्निरोषधयोऽनुष्टुप्, पञ्चपल्लवप्रक्षेपे[3] वि० । "ॐ अश्वत्थे० पूरुषम् " इत्येतेषामेव तरूणां सहैव पल्लवान्कलशे क्षिपेत् ।

याः फलिनीरित्यस्याग्निरोषधयोऽनुष्टुप्, पञ्चपल्लवप्रक्षेपणे वि० " ॐ याः फलिनी० हसः" इति कलशे फलं प्रक्षिप्य,

अग्ने रेतश्चन्द्रमित्यस्याग्निर्हिरण्यं त्रिष्टुप्, हिरण्यप्रक्षेपे वि० " ॐ अग्ने रेत० रेयम् " इति कलशे हिरण्यं प्रक्षिप्य,

बृहस्पते जुषस्व न इत्यस्याग्निर्बृहस्पतिर्गायत्री । पञ्चरत्नप्रक्षेपे वि० " ॐ बृहस्पते जु० दाशुषे " इति[4] सुवर्ण[5]रजतमुक्तामाणिक्यप्रवालात्मकपञ्चरत्नानि प्रक्षिपेत् । एतेषामलाभे ) सुवर्णं कलशे प्रक्षिपेत् ।

ततो दूर्वाम्रपल्लवैः कलशस्य मुखमाच्छाद्य युवं वस्त्राणीत्यस्य विश्वे देवा मित्रावरुणौ त्रिष्टुप्[6]। वस्त्रयुग्मेन(ण) कलशवेष्टने विनियोगः—" ॐ युवं वस्त्राणि० सचेथे" इति कलशं[7] श्वेतवस्त्रयुग्मेन(ण) वेष्टयित्वा पूर्णा दर्वि परापतेत्यस्य विश्वे देवाः शतक्रतुरनुष्टुप्, कलशानने तण्डुलपूर्णपात्रनिधाने विनियोगः—" पूर्णा दर्वि० शतक्रतो " इति तण्डुलपूर्णपात्रं कलशानने निदध्यात्[8] ।

ततः—" कलशस्य मुखे० सर्वे समुद्राः० रकाः । गङ्गे च यमुने० जलेऽस्मिन्संनिधिं कुरु " ।

इति[9] कलशे देवता आवाह्य संपूज्य वरुणं तत्त्वा यामीत्यावाह्य संपूजयेत् ।

* धनुचिह्नान्तर्गतं क. ख. पुस्तकयोर्नास्ति ।

१ क. ख. 'मप्यभा' । २ घ. ङ. 'री । का' । ३ घ. ङ. 'प्रक्षेपणे । ४ ग. 'भे वं ( च ) सु' । ५ ग. घ. ङ. 'र्णं प्र' । ६ ग. 'प् । क' । ७ क. ख. 'शं व' । ८ क. ख. दर्वीति तण्डुलपूर्णेन पात्रेण कलशाननं पिधाय तत्र कलशस्य मु' । ९ क. 'ति दे' ।

ततः—" देवदानवसंवादे मथ्यमाने महोदधौ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥
शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः।
आदित्या वसवो रुद्रा विश्वे देवाः सपैतृकाः॥
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः।
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव॥
सांनिध्यं कुरु देवेश प्रसन्नो भव सर्वदा" इति संप्रार्थयेत्।

ततः—आपो हि ष्ठेतिमन्त्रत्रयस्याग्निर्[1]विश्वे देवा वाऽऽपो गायत्री। हिरण्यवर्णा इतिमन्त्रचतुष्टयस्याग्निरापस्त्रिष्टुप्। पवमानानुवाकमन्त्राणां सोम ऋषिः। पवमानसुवर्जनादयो देवताः। अनुष्टुबादीनि च्छन्दांसि। जपे विनियोगः—" ॐ आपो हि ष्ठा० ३ " " हिरण्यवर्णाः० ४ " " पवमानः सुवर्जनः० १७ " इति[2] स्थापितं कलशमभिमृश्य जपेत्। काम्ये स्वयमेवायं जप आचार्येण कार्यः। नित्ये नैमित्तिके च स्वाशक्तावन्यं[3] मन्त्रविदं ब्राह्मणं[4] जपार्थं वृत्वा संपूज्य तेन जपः कारणीयः। ग्रहपीठे नवग्रहमन्त्रजपार्थं त्रीन्ब्राह्मणानेकं वा ब्राह्मणं वृत्वा संपूज्य जपं कारयेत्। कलशसंबन्धिजपसंख्या त्वष्टोत्तरशतमष्टाविंशतिर्वा। ग्रहमन्त्रजपोऽप्येवमेव प्रतिमन्त्रम्।

## अथान्वाधानम्।

आचार्यः समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा ग्रहयज्ञहोमकर्मणि या यक्ष्यमाणा देवतास्ता इत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा गणपतिमेकया पलाशसमिदाहुत्या चर्वाहुत्याऽऽज्याहुत्या च यक्ष्य इति वदेत्[5]। केवलौदनाहुत्या केवलाज्याहुत्या वा यक्ष्य इति[6] वा वदेत्[7]। एतच्च प्रथमं तु वराहुतिरितिपाठे। प्रथमा तु वराहुतिरिति पाठे तु[8] केतुप्रत्यधिदेवतान्वाधानोत्कीर्तनान्ते गणपतिं प्रथमया समिच्चर्वाज्यवराहुत्या यक्ष्य इति, केवलौदनेन[9] केवलाज्येन वा भूयस्यैकाहुत्या यक्ष्य इति वा। वरत्वमुक्त-

१ ग. घ. ङ. °ग्निरापो। २ क. ख. °ति कुम्भम°। ३ घ. ङ. °शक्तौ मन्त्रविदमन्यं ब्रा°। ४ क. ख °णं नियुज्य त। अ°। ५ घ. ङ. °त्। अथवा केवलचर्वाहु°। ६ घ. ङ. इत्येवं व°। ७ घ. ङ. °त्। इदं च प्र°। ८ ङ. तु प्र°। ९ घ. ङ. °वलचरुवराहुत्या यक्ष्ये केवलाज्यवराहुत्या।

प्रमाणद्विगुणप्रमाणत्वमर्धाधिकप्रमाणत्वं वा। समिधि दैर्घ्यविषयकमेव द्वैगुण्य-[1]मर्धाधिकत्वं वा। विना स्पष्टवचनमेकदा समिद्द्वयाभ्याधाने दोषश्रवणात्।

वैशेषिकप्रधानहोमे—सूर्यं सोममङ्गारकं बुधं बृहस्पतिं शुक्रं शनैश्चरं राहुं केतुमेतत्संख्याकाभिरेतत्संख्याकाभिर्यथायथमर्कादिसमिद्भिस्तावतीभिश्चर्वाहु-तिभिस्तावतीभिराज्याहुतिभिश्च। एतदित्येतस्य स्थानेऽष्टोत्तरसहस्रमष्टोत्तरश-तमष्टाविंशतिं वा कीर्तयेत्।

ईश्वरमुमां स्कन्दं नारायणं ब्रह्माणमिन्द्रं यमं कालं चित्रगुप्तमेता[2] अधिदेवताः, अग्निमपो भूमिं विष्णुमिन्द्रमिन्द्राणीं प्रजापतिं सर्पान्ब्रह्माणमेताः[3] प्रत्यधि-देवताश्च,[4] एतत्संख्याभिरेतत्संख्याभिर्यथायथमर्कादिसमिद्भिस्तावतीभिश्चर्वा-[5]हुतिभिस्तावतीभिराज्याहुतिभिश्च। एतदित्येतस्य स्थाने[6] प्रधानदेवतानां योत्कीर्तितसंख्या ततो न्यूनां संख्यां प्रतिदेवतमष्टोत्तरशतमष्टाविंशतिमष्टौ वा कीर्तयेत्।

गणपतिं दुर्गां वायुमाकाशमश्विनौ वास्तोष्पतिं क्षेत्रपालमिन्द्रमग्निं यमं निर्ऋतिं वरुणं वायुं सोममीशानमेतत्संख्याभिरेतत्संख्याभिः पलाशसमिद्भि-स्तावतीभिश्चर्वाहुतिभिस्तावतीभिराज्याहुतिभिश्च। एतदित्येतस्य स्थानेऽधि-देवताप्रत्यधिदेवतानां योत्कीर्तिता संख्या ततो न्यूनां संख्यामष्टाविंशति-मष्टौ चतुर्वा कीर्तयेत्। अधिप्रत्यधिदेवतानां प्रधानाहुतिसंख्यादशांशेन होमः। कर्मसंरक्षणदेवतानां प्रतिदेवतं प्रधानाहुतिसंख्याविंशांशेनेत्येवं वा। (* अस्मिन्कल्पे प्रधानदेवतानां प्रतिदेवतं सहस्रं शतं वेत्येवमेव संख्याद्वयं भवति। न तु सहस्रशतात्मकसंख्ययोरष्टोत्तरत्वं न वाऽष्टाविंशतिसंख्यादशां-शविंशांशयोरत्रासंभवात्।

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. ख. ग. पुस्तकेष्वन्यथा ग्रन्थः स यथा—"सख्योत्कीर्त-नम्। सर्वतोभद्रं चेत्तदा पूजोत्तरमेव होमाकरणपक्षेऽत्रान्वाधानं सर्वतोभद्रमण्डलदेवता दशदश-सख्याकाभिर्घृताहुतिभिस्तिलाहुतिभिर्वा यक्ष्य इति ग्रहहोमात्पूर्वं वा मण्डलदेवतान्वाधानं होमोऽपि तत्पूर्वमेव। तेषां प्रत्येकमेकैकाऽऽहुतिरिति केचित्। ततोऽङ्गहोमे वरुणमित्यादि व्याहृत्यन्तत्वपक्षे। प्रसाधनादिव्यन्तत्वपक्षे तु– अग्निं स्विष्टकृतं हुतशेषाहुत्येत्यादि पात्रासादनकाले दर्व्यासादनोत्तरं बहूनां चरुद्धरणपात्राणां स्रुवाणामाज्यस्थालीनां च बह्वीनामासादनं प्रोक्षणं च कार्यम्। वक्ष्यमाणाघा-रवत्स्थालीपाकधर्मेण चरुं श्रपयित्वा युगपदनेककर्तृकचर्वाज्यहोमनिर्वाहाय सर्वेषां स्रुवाणां संमार्गः

१ क. °गुण्य वि°। २ क.ख. °मर्मामि°। ३ ख. °ह्माणं प्रत्येकमेत°। ४ क. °णम्। ए°। ५ क. °भिर्वा यथा°। ६ क. ख. °ने पूर्वसंख्यान्यूनाम°। ७ क. °तासंख्यातो न्यू°। ८ क. °धानदे°। ९ क. ग. °मः। इतरदेवतां विं°।

प्रधानाहुतिसंख्या यदि सहस्रं सहस्रं तदाऽधिदेवताप्रत्यधिदेवतानां शतं शतं, कर्मसंरक्षणदेवतानां दश दश।

प्रधानाहुतिसंख्या यदि शतं शतं तदाऽधिदेवताप्रत्यधिदेवतानां दश दश, कर्मसंरक्षणदेवतानां पञ्च पञ्चेति विवेकः।

सर्वतोभद्रपीठदेवतानां पूजोत्तरहोमाकरणपक्षे प्रधानोत्तरमेव होमस्य कर्तव्यत्वादत्रान्वाधानं पूर्ववत्कर्तव्यम्।

ततोऽङ्गहोमे वरुणं द्वाभ्यामाहुतिभ्यामित्यादि व्याहृत्यन्तत्वपक्षे।

प्रसाधनीदेव्यन्तत्वपक्षे त्वग्निं स्विष्टकृतमेकया हुतशेषाहुत्या यक्ष्य इत्यादि।

पात्रासादनकाले दर्व्या सह चरुहोमकर्तृदक्षिणहस्तानामाज्यहोमकर्तृसंख्यापरिमितस्रुवाणां चरूद्धरणपात्रस्याऽऽज्यहोमकर्तृसंख्यापरिमिताज्यस्थालीनां चाऽऽसादनप्रोक्षणे कार्ये। हस्तानां स्रुवाणां च संमार्गोऽपि। आसादिता हस्ता आसंमार्गं तत्रैवावस्थिताः स्युः, संमार्गोत्तरं बर्हिषि, अथवाऽऽसादनरहिता एव धर्माः। स्रुवस्थाने तावत्यो दर्व्यो वा। वक्ष्यमाणस्थालीपाकधर्मेण चरूंश्चरुं वा श्रपयित्वा युगपदनेककर्तृकचर्वाज्यहोमनिर्वाहाय सर्वेषां हस्तानां स्रुवाणां च संमार्गः कार्यः। दर्वीपक्षे तासामपि।

अथवा होममय एव चरुसमिद्धोमकर्तारः स्वस्वदक्षिणहस्तस्य स्ववामहस्तेन प्रोक्षणं कृत्वा निष्टप्याऽऽसादितसंमार्गदर्भैकदेशेन वामहस्तेन संमृज्य पुनर्निष्टप्य बर्हिषि निधाय दक्षिणहस्तेनैव स्वस्वहस्तसंमार्गदर्भप्रहरणं कुर्युरिति। प्रतिदैवतचरुपक्षे तावत्यश्चरुस्थाल्यस्तावन्ति मेक्षणानि च।

एकत्रश्रपणपक्षे प्रत्येकं व्युद्धृत्य तत्तद्देवतायै होमः। तेन तेन पर्यग्निकरणकाले सर्वहोमद्रव्यैः सहाऽऽज्यस्य पर्यग्निकरणम्। ततः शृतांश्चरूञ्शृतचरुं वाऽभिघार्योत्तरत उद्वास्य बर्हिष्यासाद्य तत्रैवाऽऽसादितेषु चरूद्धरणपात्रेषु, एकचरुपक्ष एकस्मिन्नुद्धरणपात्र उद्धरेत्।

एकचरुपक्षे प्रतिदैवतं पङ्क्त्याकारेण विभजेत्, तत्क्रमेणैव होमः।

कार्यं। स्रुवस्थाने दर्व्यो वा, तासामपि समार्गः। पर्यग्निकरणकाले सर्वहोमद्रव्यैः सहाऽऽज्यस्य पर्यग्निकरणम्। ततः शृत चरुमभिघार्योत्तरत उद्वास्य बर्हिष्यासाद्य तत्रैवाऽऽसादितेषु चरूद्धरणपात्रेषूद्धृत्य यथादैवत विभज्य परिषेकादि प्रसाधनीहोमान्तं व्याहृतिहोमान्तं वाऽन्वाधानोत्कीर्तितपक्षानुसारेण कृत्वा- -गणानां त्वेति मन्त्रेण पलाशसमिच्चर्वाज्यानामेकैकामाहुतिमाचार्य एव जुहुयात्। गणपतय इदं न ममेति यजमानस्त्यागं कुर्यात्। तत ऋत्विज उदङ्मुखाः प्राङ्मुखा वोपविश्य द्विराचम्यामुक्तकेशा निपातितजानुकाः सावधानमनसो वाग्यता भवेयुः। ततो " इति।

ततः परिषेकादिप्रसाधनीदेवीहोमान्तं व्याहृतिहोमान्तं वाऽन्वाधानोत्कीर्तितपक्षानुसारेण कुर्यात् । अस्मिन्नग्नौ चरुश्रपणासंभवेन गृहसिद्धान्नेन देवपवित्रसंस्कारसंस्कृतेन होमं कुर्वन्ति शिष्टा इदानीम् ।

ततो गणानां त्वेत्यस्य विश्वे देवा गणपतिर्जगती । होमे वि०—" ॐ गणानां त्वा गणपतिं० सादनम् स्वाहा " इत्येकां पलाशसमिधं जुहोति । गणपतय इदं न ममेति त्यागः । एवमेकां चर्वाहुतिमेकामाज्याहुतिं जुहोति । त्यागः पूर्ववत् ।

" जुहुयात्समिदन्नाज्यैः पृथगष्टोत्तरं शतम् "

इतिवचने समिद्विषयेऽपि जुहुयादित्युक्तत्वात्स्वाहाकारोऽत्र स्मार्तः ।

तत्र ऋत्विज उदङ्मुखाः प्राङ्मुखा वोपविश्य द्विराचम्यामुक्तकेशा निपातितजानुकाः सावधानमनसो वाग्यता होमं कुर्युः । होमारम्भात्प्रागेव) यजमान इमान्युपकल्पितानि हवनीयद्रव्याण्यन्वाधानोद्दिष्टसंख्याहुतिपर्याप्तानि या या यक्ष्यमाणा देवतास्ताभ्यस्ताभ्यो मया परित्यक्तानि न ममेति द्रव्यत्यागं कुर्यादिति सांप्रदायिकाः ।

प्रधानहोमान्वाधानात्पूर्वं[2] मण्डलदेवताहोमान्वाधानं कृतं चेदत्र[3] होममाचार्य एव कुर्यात् ।

तत्र ऋत्विज आवाहनोक्ततत्तन्मन्त्रैर्[4]ऋष्यादिस्मरणपूर्वकमन्वाधानोत्कीर्ति[5]तद्र[6]व्यैरन्वाधानोत्कीर्तितसंख्यया होमं कुर्युः । (+ अत्र विनियोगवाक्ये होमे विनियोग इति विशेषो द्रष्टव्यः । ) अर्कः पलाशः खदिरोऽपामार्गः पिप्पल उदुम्बरः शमी दूर्वाः कुशा इति क्रमेण[7] ग्रहसमिधः । एतासामलाभे पलाशसमिधः ।

तत्र सर्पिर्मधुदध्यक्ताः प्रादेशमात्रीरवान्तरशाखारहिता मूलतो द्व्यङ्गुलं प्रदेशं विहाय मध्यमानामिकाङ्गुष्ठैर्गृहीत्वा समिधो होतव्याः ।

\+ धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. ख. ग. पुस्तकेषु विद्यमानो ग्रन्थ एवम्—"तत्र चरुसमिद्धोमकर्तारः स्वस्वदक्षिणहस्तं निधाय वामहस्तेन संमृज्य पुनर्निधाय दक्षिणहस्तेनैव स्वस्वसंमार्गदर्भप्रहरणं कुर्युः । अत्र चरुश्रपणासंभवे गृहसिद्धान्नेन देवपवित्रसंस्कारसंस्कृतेन होम इति संप्रदायः ।" इति ।

१ घ. ङ. °नोत्कीर्तितम° । २ घ. ङ. °र्वं सर्वतोभद्रपीठदे° । ३ क. होमः । त° । ४ क. ख. ग. °न्त्रैरन्वा° । ५ क. ख. ग. °नोद्दिष्टद्रव्यै° । ६ क. ख. ग. °नोक्तसंख्य हो° । ७ घ. ङ. °ण स° । ८ घ. ङ. °मार्गोऽश्व° ।

तत्र समिदेकैका दूर्वाणां दर्भाणां च त्रिकं त्रिकम्[१] । दूर्वाः सप्तपत्रयुताः पञ्चपत्रयुता वा अच्छिन्ना ग्राह्याः । दर्भाः साग्राः । आज्यं दर्व्यैव होतव्यम् । अङ्गुष्ठाग्रेण[२] ग्रासमात्रं चरुं गृहीत्वाऽङ्गुष्ठेन निष्पीड्य संहताङ्गुलिनोत्तानेन दक्षिणेन हस्तेन[३] होतव्य इति सांप्रदायिकाः[४] ।

समाप्ते प्रधानहोम आचार्योऽत्र[५] चेदन्वाधानं पीठदेवताहोमस्य कृतं तदाऽत्र तदीयं होमं कृत्वा स्थापितदेवतानामुत्तरपूजनं विधाय प्रसीदन्तु भवन्त इति तान्संप्रार्थ्यान्वाधानोत्कीर्तितपक्षानुसारेण वारुणीहोमादि स्विष्टकृदादि वा संस्रावहोमात्प्राक्कुर्यात् । समिधां न स्विष्टकृत् ।

ततः सपत्नीको यजमानो यत्र यत्र बलिसमर्पणं कर्तव्यं भवति तस्मिन्देशेऽग्नेः पश्चाद्वोपविश्याग्न्यायतनस्य[६] समन्ताद्दिक्षु सदीपमाषभक्तबलीन्दि[७]क्पालेभ्यो दद्यात् । प्रतिबलिसमर्पणं साक्षतं जलं[८] पात्रे क्षिपेत् ।

त्रातारमिन्द्रमित्यस्य विश्वे देवा इन्द्रस्त्रिष्टुप् । इन्द्रप्रीत्यर्थं बलिदाने विनियोगः—" ॐ त्रातारमि० धात्विन्द्रः " इन्द्राय साङ्गाय सपरिवाराय[९] सायुधाय सशक्तिकायामुं सदीपं माषभक्तबलिं समर्पयामीति साक्षतं जलं पात्रे त्यक्त्वा भो इन्द्र बलिं भक्ष दिशं रक्ष मम सकुटुम्बस्याऽऽयुष्कर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भवेति प्रार्थयेत् । * अनेन बलिदानेनेन्द्रः प्रीयतामिति ततो वदेत् ।

अग्ने नयेत्यस्य विश्वे देवा अग्निस्त्रिष्टुप् । अग्निप्रीत्यर्थं बलिदाने विनियोगः " ॐ अग्ने नय सुप० विधेम " । अग्नये साङ्गाय सपरिवाराय सायुधाय सशक्तिकायामुं सदीपं माषभक्तबलिं समर्पया० भो अग्ने० भव० अग्निः प्रीयताम् ।

इमं यमेत्यस्य विश्वे देवा यमस्त्रिष्टुप् । यमप्रीत्यर्थं बलिदाने विनियोगः— " ॐ इमं यम० यस्व " यमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायामुं सदीपं माषभक्तबलिं समर्पयामि० भव० यमः प्रीयताम् ।

असुन्वन्तमित्यस्याग्निर्निर्ऋतिस्त्रिष्टुप् । निर्ऋतिप्रीत्यर्थं बलिदाने विनियोगः—" ॐ असुन्वन्तमय० मस्तु " निर्ऋतये साङ्गाय सपरिवाराय सायु-

* एतद्वाक्यं क. ख. पुस्तकयोर्नास्ति । एवमग्रेऽपि तत्तद्देवतानामघटितमेतद्वाक्यं नास्तीति बोध्यम् ।

१ क. ख. ग. °म् । आ° । २ घ. ङ. °ग्राः । अ° । ३ क. ख. °ण चरुं ग्रासमात्रं नि° । ४ घ. ङ. °न जुहुयादिति संप्रदायः । स° । ५ क. ख. °चार्यः प्रधानहोमान्वाधानोत्तरमन्वाधानं कृतं चेदत्र मण्डलदेवताहो० । ६ घ. ङ. °श्चादेव वोप° । ७ घ. ङ. °लीन्दद्या° । ८ क. ख. °लं क्षि° । ९ क. ख. °ल त्य° ।

धाय सशक्तिकायामुं सदीपं माषभक्तबलिं समर्पयामीति साक्षतं जलं त्यक्त्वा भो निर्ऋते० भव० निर्ऋतिः प्रीयताम् ।

तत्त्वा यामीत्यस्य विश्वे देवा वरुणस्त्रिष्टुप् । वरुणप्रीत्यर्थं बलिदाने विनियोगः—" ॐ तत्त्वा यामि ब्रह्मणा० प्रमोषीः " वरुणाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायामुं सदीपं माषभक्तबलिं समर्पयामीति साक्षतं जलं त्यक्त्वा भो वरुण० भव० वरुणः प्रीयताम् ।

आ नो नियुद्भिरित्यस्य विश्वे देवा वायुस्त्रिष्टुप् । वायुप्रीत्यर्थं बलिदाने विनियोगः—" ॐ आ नो नियु० दानः " वायवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकायामुं सदीपं माषभक्तबलिं समर्पयामीति साक्षतं जलं त्यक्त्वा भो वायो० भव० वायुः प्रीयताम् ।

सं ते पयाꣳसीत्यस्याग्निः सोमस्त्रिष्टुप् । सोमप्रीत्यर्थं बलिदाने विनियोगः—" ॐ सं ते पया० धिष्व " सोमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायामुं सदीपं माषभक्तबलिं समर्पयामीति साक्षतं जलं त्यक्त्वा भोः सोम० भव० सोमः प्रीयताम् ।

अभि त्वेत्यस्य विश्वे देवा ईशानो गायत्री । ईशानप्रीत्यर्थं बलिदाने विनियोगः—" ॐ अभि त्वा देव० मीमहे " ईशानाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायामुं सदीपं माषभक्तबलिं समर्पयामीति साक्षतं जलं त्यक्त्वा भो ईशान० भव० ईशानः प्रीयताम् ।

ततो ग्रहादिबलयो ग्रहपीठसमीपे—

आ सत्येनेत्यस्य विश्वे देवाः सविता त्रिष्टुप् । सूर्यप्रीत्यर्थं बलिदाने विनियोगः—" ॐ आ सत्येन रजसा० पश्यन् " सूर्याय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायेश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहितायेमं सदीपं माषभक्तबलिं समर्पयामि । भोः सूर्येमं बलिं गृहाण मम सकुटुम्बस्याऽऽयुष्कर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भवेति प्रार्थयेत् । अनेन ब० सूर्यः प्रीयताम् ।

आप्यायस्वेत्यस्य सोमः सोमो गायत्री । सोमप्रीत्यर्थं बलिदाने विनियोगः—" आप्यायस्व समे० संगथे " सोमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायोमाब्रूपाधिदेवताप्रत्यधिदेवतासहितायेमं सदीपं माषभक्तबलिं समर्पयामि । भोः सोम० भव० सोमः प्रीयताम् ।

---

१ घ. ङ. सूर्यः ।

अग्निर्मूर्धेत्यस्य प्रजापतिरङ्गारको गायत्री । अङ्गारकप्रीत्यर्थं बलिदाने विनियोगः—" ॐ अग्निर्मूर्धा० जिन्वति " अङ्गारकाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय स्कन्दभूमिरूपाधिदेवताप्रत्यधिदेवतासहितायेमं सदीपं माषभक्तबलिं समर्पयामि । भो अङ्गारकेमं० भव० अङ्गारकः प्रीयताम् ।

उद्बुध्यस्वेत्यस्याग्निर्बुधस्त्रिष्टुप् । बुधप्रीत्यर्थं बलिदाने विनियोगः—" उद्बुध्य० मेतम् " बुधाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय नारायणविष्णुरूपाधिदेवताप्रत्यधिदेवतासहितायेमं सदीपं माषभक्तबलिं समर्पयामि । भो बुधेमं० भव० बुधः प्रीयताम् ।

बृहस्पते अतीत्यस्य विश्वे देवा बृहस्पतिस्त्रिष्टुप् । बृहस्पतिप्रीत्यर्थं बलिदाने विनियोगः—" ॐ बृहस्पते० चित्रम् " बृहस्पतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय ब्रह्मेन्द्ररूपाधिदेवताप्रत्यधिदेवतासहितायेमं सदीपं माषभक्तबलिं समर्पयामि । भो बृहस्पत इमं० भव० बृहस्पतिः प्रीयताम् ।

शुक्रं त इत्यस्य विश्वे देवाः शुक्रस्त्रिष्टुप् । शुक्रप्रीत्यर्थं बलिदाने विनियोगः—" ॐ शुक्रं ते अन्य० रस्तु " शुक्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायेन्द्रेन्द्राणीरूपाधिदेवताप्रत्यधिदेवतासहितायेमं सदीपं माषभक्तबलिं समर्पयामि । भोः शुक्रेमं० भव० शुक्रः प्रीयताम् ।

शं नो देवीरित्यस्य प्रजापतिः शनैश्चरो गायत्री । शनैश्चरप्रीत्यर्थं बलिदाने विनियोगः—" ॐ शं नो देवीरभिष्ट० स्रवन्तु नः " शनैश्चराय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय यमप्रजापतिरूपाधिदेवताप्रत्यधिदेवतासहितायेमं सदीपं माषभक्तबलिं समर्पयामि । भोः शनैश्चर० भव० शनिः प्रीयताम् ।

कया न इत्यस्य विश्वे देवा राहुर्गायत्री । राहुप्रीत्यर्थं बलिदाने विनियोगः । " ॐ कया नश्चित्र० वृता " राहवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय कालसर्परूपाधिदेवताप्रत्यधिदेवतासहितायेमं सदीपं माषभक्तबलिं समर्पयामि । भो राहो० भव० राहुः प्रीयताम् ।

केतुं कृण्वन्नित्यस्य प्रजापतिः केतुर्गायत्री । केतुप्रीत्यर्थं बलिदाने विनियोगः । " ॐ केतुं कृण्वन्नकेतवे० जायथाः " केतवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय चित्रगुप्तब्रह्मरूपाधिदेवताप्रत्यधिदेवतासहितायेमं सदीपं माषभक्तबलिं समर्पयामि । भोः केतो, इमं बलिं० केतुः प्रीयताम् । केतुश-

न्दस्य बहुवचनान्तत्वपक्षे केतुभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यश्चित्रगुप्तब्रह्मरूपाधिदेवताप्रत्यधिदेवतासहितेभ्य इमं सदीपं माषभक्तबलिं समर्पयामि। भोः केतव इमं बलिं गृह्णीत मम सकुटुम्बस्याऽऽयुष्कर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारस्तुष्टिकर्तारो निर्विघ्नकर्तारो वरदा भवत। अनेन बलिदानेन केतवः प्रीयन्तामित्यूहः।

गणानां त्वेत्यस्य विश्वे देवा गणपतिर्जगती। गणपतिप्रीत्यर्थं बलिदाने विनियोगः। "ॐ गणानां त्वा० सादनम्" गणपतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय सिद्धिबुद्धिसहितायेमं सदीपं माषभक्तबलिं समर्पयामि। भोः सिद्धिबुद्धिसहित गणपत इमं ब० गणपतिः प्रीयताम्।

जातवेदस इत्यस्य याज्ञिक्यो देवता उपनिषदो दुर्गा त्रिष्टुप्। दुर्गाप्रीत्यर्थं बलिदाने विनियोगः। "ॐ जातवेदसे सुनवा० त्यग्निः" दुर्गायै साङ्गायै सपरिवारायै सायुधायै सशक्तिकायै, इमं सदीपं माषभक्तबलिं समर्पयामि। भो दुर्गे इमं बलिं गृहाण मम सकुटुम्बस्याऽऽयुष्कर्त्री क्षेमकर्त्री शान्तिकर्त्री पुष्टिकर्त्री तुष्टिकर्त्री निर्विघ्नकर्त्री वरदा भव० दुर्गा प्रीयताम्।

वायो शतमित्यस्य विश्वे देवा वायुरनुष्टुप्। वायुप्रीत्यर्थं बलिदाने विनियोगः। "ॐ वायो शतं० पाजसा" वायवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकायेमं सदीपं माषभक्तबलिं समर्पयामि। भो वायो, इमं बलिं० वायुः प्रीयताम्।

घृतं घृतपावान इत्यस्य सोम आकाशो यजुः। आकाशप्रीत्यर्थं बलिदाने विनियोगः। "ॐ घृतं घृतपा० क्षाय" आकाशाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायेमं सदीपं माषभक्तबलिं समर्पयामि। भो आकाशेमं बलिं० आकाशः प्रीयताम्।

या वां कशेत्यस्य सोमोऽश्विनौ गायत्री। अश्विप्रीत्यर्थं बलिदाने विनियोगः। "ॐ या वां कशा० मिक्षतम्" अश्विभ्यां साङ्गाभ्यां सपरिवाराभ्यां सायुधाभ्यां सशक्तिकाभ्यामिमं माषभक्तबलिं समर्पयामि। भो अश्विनाविमं बलिं गृह्णीतम्। मम सकुटुम्बस्याऽऽयुष्कर्तारौ क्षेमकर्तारौ शान्तिकर्तारौ पुष्टिकर्तारौ तुष्टिकर्तारौ निर्विघ्नकर्तारौ वरदौ भवतम्। अनेन बलिदानेनाश्विनौ प्रीयेताम्।

वास्तोष्पत इत्यस्य प्रजापतिर्वास्तोष्पतिस्त्रिष्टुप्। वास्तोष्पतिप्रीत्यर्थं बलिदाने विनियोगः। "ॐ वास्तोष्पते० चतुष्पदे" वास्तोष्पतये साङ्गाय सप-

रिवाराय सायुधाय सशक्तिकायेमं सदीपं माषभक्तबलिं समर्पयामि। भो वास्तोष्पत इमं बलिं० वास्तोष्पतिः प्रीयताम्। बलेर्विप्रकृष्टत्वे त्विममित्यत्रामुमिति सर्वत्र। तत्तत्प्रदेशोपविष्टो बलिसमर्पणं कुर्यादित्यस्मिन्कल्पे तु सर्वत्रेममित्येव न त्वमुमिति।

ततः क्षेत्रपालाय कुङ्कुमरक्तपुष्पादियुतं सदीपं सताम्बूलं सदक्षिणं माषभक्तबलिं दद्यात्[1]। अत्राऽऽवाहनादिपूजनमपि केचित्कुर्वन्ति।

क्षेत्रस्य पतिनेत्यस्य विश्वे देवाः क्षेत्रपालोऽनुष्टुप्। क्षेत्रपालप्रीत्यर्थं बलिदाने विनियोगः। "ॐ क्षेत्रस्य पतिना० तीदृशे" क्षेत्रपालाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय भूतप्रेतडाकिनीशाकिनीब्रह्मराक्षसवेतालादिपरिवारयुतायेमं कुङ्कुमारक्तपुष्पादियुतं सदीपं सताम्बूलं सदक्षिणं माषभक्तबलिं समर्पयामि। भो भोः क्षेत्रपाल सपरिवारेमं बलिं० क्षेत्रपालः प्रीयताम्।

ततः शूद्रेण दुर्ब्राह्मणेन वा समर्पितं बलिं बहिर्देशं प्रापयेत्। तस्य पृष्ठतः शान्तिपाठपूर्वकं स्वयं जलं सिञ्चन्साचार्यः सपत्नीको गृहाद्बहिर्गत्वा (*प्रत्येत्य हस्तौ पादौ च प्रक्षाल्याऽऽचम्याग्निसमीपमागत्य पुनराचम्य स्वायतन उपविशेत्। एवं पत्नी। तत आचार्यस्तथैव प्रक्षालितपाणिपाद आचान्तो) दर्व्यां स्रुवेण द्वादशगृहीतमष्टगृहीतं चतुर्गृहीतं वाऽऽज्यं गृहीत्वा[2] तदुपरि वस्त्रयुतं चन्दनादिभूषितं फलं निधायेडनामाऽयमग्निरित्यनुसंधाय यजमानतत्पत्न्यमात्यान्वारब्धस्तिष्ठन्पूर्णाहुतिं जुहुयात्।

समुद्रादूर्मिरिति मन्त्रत्रयस्य याज्ञिक्यो देवता उपनिषदोऽग्निस्त्रिष्टुप्। पूर्णाहुतिहोमे विनियोगः। "ॐ समुद्रादूर्मि० नाभिः" "वयं नाम० एतत्" "चत्वारि शृङ्गा० आविवेश"। मूर्धानं दिव इत्यस्य सोमोऽग्निर्वैश्वानरस्त्रिष्टुप्। पूर्णाहुतिहोमे विनियोगः। "ॐ मूर्धानं० देवाः"। पुनस्त्वेत्यस्याग्निर्वसुरुद्रादित्यास्त्रिष्टुप्। पूर्णाहुतिहोमे विनियोगः। "ॐ पुनस्त्वाऽऽदित्या० कामाः"। पूर्णा दर्वीत्यस्य विश्वे देवाः शतक्रतुरनुष्टुप्। पूर्णाहुतिहोमे

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने घ. ङ. पुस्तकयोः—" क्षेत्रपालाय नम इति क्षेत्रपालं नमस्कृत्य हस्तौ पादौ च प्रक्षाल्य प्रत्येत्याऽऽचामेत्। आचार्यपत्न्योरपि हस्तपादप्रक्षालनमाचमनं च। तत्र पत्न्याः सकृदमन्त्रकम्। ततो यजमानपत्न्याचार्या अग्निसमीपमागत्याऽऽचम्य स्वायतनेषूपविशेयुः। तत आचार्यो " इति ग्रन्थो वर्तते।

१ क. ख. °त्। क्षे°। २ घ. ङ. °त्वा दर्व्या अपूर्णतायामाज्येनाभिपूर्य त°।

विनियोगः । " ॐ पूर्णा दर्वि० तो " । सप्त त इत्यस्य प्रजापतिः सप्तवा-नग्निर्जगती । पूर्णाहुतिहोमे विनियोगः । " ॐ सप्त ते अग्ने० घृतेन स्वाहा " इति । यजमानोऽग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेऽ-ग्नये चेदं न ममेति त्यजेत् ।

तत आचार्यादयः " पूर्णाहुतिमुत्तमां० सयत्वाय " इत्याचारात्पठेयुः ।

तत आचार्यः सस्रावहोमादिसंस्थाजपान्तं कर्म कुर्यात् । ऋत्विजामपि संस्थाजपेनोपस्थानम् ।

ततो यजमान आचार्यादिभ्यो जपहोमफलं गृह्णीयान्न वा ।

ततो ब्रह्मसदस्यर्त्विक्सहित आचार्यः प्राङ्मुख उदङ्मुखो वा तिष्ठन्ग्रहवेदे-रीशान्यामग्नेः पश्चिमतो वा शुचौ देशे संमृष्टे गोमयोपलिप्ते रङ्गवल्ल्याद्यलं-कृते चतुष्पदं दीर्घचतुरश्रं सोत्तरच्छदं पीठं निधाय तत्रोदगग्रानमूलांस्त्रीन्हरि-तान्दर्भानास्तीर्यानास्तीर्य वा तत्रोपविष्टं धृतनवकञ्चुकीवस्त्रया पत्न्या सहितं सामात्यं प्राङ्मुखं परिहिताहतवस्त्रं यजमानं स्थापितकलशोदकेन पात्रान्तरे गृहीतेन तत्रत्यपञ्चपल्लवैः कुशदूर्वासहितैरभिषिञ्चेत् ।

तत्र मन्त्राः—आपो हि ष्ठेतितिसृभिर्हिरण्यवर्णा इति चतसृभिः पवमानः सुवर्जन इत्यनुवाकेनेति । एतेषामृष्यादिकं कलशासादनोत्तरकालिकजप-निरूपण उक्तम् । अभिषेके विनियोग इति विनियोगवाक्येऽत्र विशेषः । ' ॐ आपो हि ष्ठा० ३ । हिरण्यवर्णाः० ४ । पवमानः सुवर्जनः । पवित्रेण वि० १७ " इत्येतैर्मन्त्रैः,

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च पूजिताः
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥

ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥

इत्यग्निपुराणोक्तैर्मन्त्रैः[1],

ग्रहाणामादिरादित्यो लोकरक्षणकारकः ।
विषमस्थानसंभूतां पीडां दहतु ते रविः ॥
रोहिणीशः सुधामूर्तिः सुधागात्रः सुधाशनः ।
विषमस्थानसंभूतां पीडां दहतु ते विधुः ॥
भूमिपुत्रो महातेजा जगतां भयकृत्सदा ।
वृष्टिकृद्वृष्टिहर्ता च पीडां दहतु ते कुजः ॥
उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः ।
सूर्यप्रियकरो विद्वान्पीडां दहतु ते बुधः ॥
देवमन्त्री विशालाक्षः सदा लोकहिते रतः ।
अनेकशिष्यसंपूर्णः पीडां दहतु ते गुरुः ॥
दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महामतिः ।
प्रभुस्ताराग्रहाणां च पीडां दहतु ते भृगुः ॥
सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः ।
मन्दचारः प्रसन्नात्मा पीडां दहतु ते शनिः ॥
महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः ।
अतनुश्चोर्ध्वकेशश्च पीडां दहतु ते तमः ॥
अनेकरूपवर्णैश्च[2] शतशोऽथ सहस्रशः ।
उत्पातरूपो जगतः पीडां दहतु ते शिखी ॥

इति मन्त्रैर्देवस्य त्वेत्यादिभिर्मन्त्रैश्चाभिषिञ्चेत् । ततः[3] कलशोदकेनान्येन च जलेन तैलाभ्यङ्गसर्वौषध्यनुलेपनपूर्वकं सुस्नातौ दंपती[4] अभिषेकवासांसि परित्यज्याहतवासांसि परिधाय श्वेतचन्दनपुष्पाण्यलंकारांश्च धृत्वाऽग्नेः पश्चादुपविशतो दक्षिणतः पत्नी[5] । त्यक्तवासांस्याचार्यस्य ।

---

१ घ. ङ. इत्येतै., । २ क. °वर्णश्च । ३ क. ख. ग. ततोऽभिषेकानन्तरं क° । ४ घ. ङ. °ती अहतवासांसि परिधायाभिषेकवासांस्याचार्याय दत्वा श्वे° । ५ घ. ङ. °त्नी । त° ।

तत आचार्येण सह यजमानो मा नस्तोक इति विभूतिधारणं कृत्वाऽऽचार्यादीन्पादप्रक्षालनार्घ्यगन्धाक्षतपुष्पैः संपूज्य तेभ्यो दक्षिणां दद्यात्। तत्राऽऽचार्याय गौः। ब्रह्मणेऽनड्वान्। सदस्यायाश्वः। सूर्यप्रीत्यर्थं कपिला गौः १। सोमप्रीत्यर्थं शङ्खः २। अङ्गारकप्रीत्यर्थं रक्तोऽनड्वान् ३। बुधप्रीत्यर्थं सुवर्णम् ४। बृहस्पतिप्रीत्यर्थं पीतं वासः ५। शुक्रप्रीत्यर्थं श्वेताश्वः ६। शनिप्रीत्यर्थं कृष्णा गौः ७। राहुप्रीत्यर्थं कालायसम् ८। केतुप्रीत्यर्थं हस्ती छागो वेति ९ तत्तद्धोमकर्त्रे व्यवस्थया तां तां दक्षिणां दद्यात्।

यदि नवभ्योऽधिका ऋत्विजस्तदा तेभ्यः प्रत्येकमेकैका गौर्देया। न्यूनत्वे तु गोशङ्खादिनवदक्षिणा यथासंभवं तेभ्य एव देयाः।

अथ गवादीनां नवानां क्रमेण मन्त्राः—

कपिले सर्वदेवानां पूजनीयाऽसि सर्वदा।
सर्वदेवमयी यस्मादतः शान्तिं प्रयच्छ मे॥
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे।
पाञ्चजन्य प्रदास्यामि ह्यतः शान्तिं प्रयच्छ मे॥
धर्मस्त्वं वृषरूपेण जगदानन्दकारक।
अष्टमूर्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे॥
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥
पीतवस्त्रमिदं यस्माद्वासुदेवस्य वल्लभम्।
प्रदानात्तस्य मे विष्णुः सदा शान्तिं प्रयच्छतु॥
विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः[3]।
सूर्यस्य[4] वाहनं नित्यमतः शान्तिं प्रयच्छ मे॥
यस्मात्त्वं पृथिवी सर्वा धेनो वै कृष्णसंनिभे।
सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे॥
यस्मादायसकार्याणि त्वदधीनानि सर्वदा।
लाङ्गलाद्यायुधादीनि तस्माच्छान्तिं प्रयच्छ मे॥
सुप्रतीक गजेन्द्र त्वं देवेन्द्रस्य च वाहनम्।
दानेनानेन दत्तेन सदा शान्तिं प्रयच्छ मे॥

१ क. ख. °रक्तः। अ°। २ क. °ब्रद्वयं य°। ३ क. ख. ग. °वः। चन्द्रार्कवा°। ४ घ. सर्वस्य। ५ ख. °ह्नो नि°।

छागपक्षे—

यस्मात्त्वं छाग यज्ञानामङ्गत्वेन व्यवस्थितः ।
यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥

एतेषां पदार्थानां विषममूल्यकत्वेऽपि न्यूनलाभवद्भ्यः सुवर्णदानेन लाभसाम्यं संपादनीयम् । उक्तदक्षिणानामभावे सर्वेभ्यस्तुष्टिकरं हिरण्यमेव वा दद्यात् । अतो नात्र मूल्याध्यायोक्तमूल्यदानम् । सर्वेष्वपि पक्षेष्वाचार्याय द्विगुणं दद्यात् । कर्मणः साद्गुण्यार्थमन्येभ्यो ब्राह्मणेभ्यो भूयसीं दद्यात् ।

ततो ग्रहपीठदेवतानां मण्डपक्षेत्तदेवतानां च यजमानः पञ्चोपचारैरुत्तरपूजनं विधाय सप्रणवैस्तत्तन्नाममन्त्रैरादित्यादिदेवताभ्यो नम इति समुदितरूपेण वा पुष्पाञ्जलिं समर्पयेत् ।

तत आचार्यो ग्रहपीठदेवतानां मण्डपक्षेत्तदेवतानां चोद्वासनमुत्तिष्ठेति मन्त्रेण कुर्यात् ।

ततो यजमान इदं ग्रहपीठं सप्रतिमं सकलशं सोपस्करमाचार्याय तुभ्यमहं संप्रदद इत्याचार्याय समर्पयेत् । मण्डपक्षेत्सोपस्करं मण्डपसहितमिदं ग्रहपीठमिति ।

तत आचार्योऽग्निं संपूज्य—

" गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर
यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन " ॥ इति विसृजेत् ।

अथ यजमानः कांस्यपात्रगताज्ये सकुटुम्बः स्वंप्रतिरूपमवेक्ष्य—[1]

" आज्यं तेजः समुद्दिष्टमाज्यं पापहरं स्मृतम् ।
आज्यं सुराणामाहार आज्ये लोकाः प्रतिष्ठिताः ॥
अलक्ष्मीर्या यच्च दौःस्थ्यं मम गात्रेष्ववस्थितम् ।
तत्सर्वं क्षपयाऽऽज्य त्वं लक्ष्मीं पुष्टिं च वर्धय " ॥

इति पठित्वा तदाज्यं सदक्षिणं ब्राह्मणाय दद्यात् । ततो यावत्यः प्रधानाहुतयस्तावतो ब्राह्मणान्भोजयेद्यावन्ति तदाहुतिशतानि तावतो वा यावन्ति तत्सहस्राणि तावतो वा यथासंभवं वा । ततो यस्य स्मृत्येति विष्णुं स्मरेत् । ततो[2] भुक्तवद्भ्यो यथाविभवं दक्षिणां दत्त्वा क्षमाप्य तदाशिषो गृहीत्वा प्रणि-

१ ग. स्वस्वप्र° । २ ख. ग. घ. ङ. °तो भु° ।

पत्यानेन ग्रहमखाख्येन कर्मणाऽऽदित्यादयो ग्रहाः प्रीयन्तां न ममेतीश्वरार्पणं कृत्वा हृष्टमनाः सुहृद्युक्तो भुञ्जीत ।

इति संस्काररत्नमालायां ग्रहमखप्रयोगः ।

इत्योकोपाह्वश्रीमद्गणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां तृतीयं प्रकरणम् ॥ ३ ॥

अथ चतुर्थं प्रकरणम् ।

## उपनयनाधिकारिणः ।

अथोपनयनं सूत्रक्रमानुसारेणाऽऽदावुच्यते । तस्य श्रौतत्वेन वेदाध्ययनार्थत्वेन कर्माधिकारसंपादकत्वेन च मुख्यत्वात् । अङ्गभूयस्त्वलाभात्प्रायश्चित्तेन चरितार्थत्वमेतस्य न भवतीति ज्ञापयितुं चाऽऽचार्येणाऽऽदौ तदेव सूत्रितम् । उपनयनं नाम येन कर्मणा यस्मिन्वा कर्मणि आचार्येण विद्यार्थं सुमुहूर्ते कुमारस्य स्वसमीपे नयनम् । तच्च संकल्पप्रभृतिसावित्रीव्रतविसर्गान्तकर्मसमुदायात्मकम् । अत्र प्रधानं व्याहृतिभिः सावित्र्या सावित्रेण चाऽऽत्मनः समीपे कुमारस्य नयनम् । इतराण्यङ्गानि । गायत्र्युपदेशोऽपि प्रधानमित्यपरार्कः । अयं च दृष्टार्थः संस्कारः 'उपनयनं विद्यार्थस्य श्रुतितः संस्कारः' इति वचनात् ।

एतच्च त्रैवर्णिकानामेव न शूद्राणाम्—

'अशूद्राणामदुष्टकर्मणामुपनयनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि' इति धर्मसूत्रात् ।

इदमेव द्वितीयं जन्मेत्याह याज्ञवल्क्यः—

"मातुरग्रे विजननं द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः" इति ॥

इदमेव ब्रह्मजन्मेत्याह मनुः—

"तत्र यद्ब्रह्मचर्यं तु मौञ्जीबन्धेन चिह्नितम् ।
सा तस्य माता सावित्री पिता त्वाचार्य उच्यते" इति ।

पुंसामेवैतद्भवति न स्त्रीणाम् 'स्त्रीभिर्नाध्येयम्' इति स्त्रीणामध्ययनप्रतिषेधात्। 'न स्त्रीशूद्रसमीपे ब्रह्म श्रावयेत्' इति स्त्रीणां श्रवणप्रतिषेधात्।

"पाणिग्रहो विधिः स्त्रीणामौपनायनिकः परः"।

इति तासां विवाहस्यैवोपनयनरूपत्वाच्च।

यत्तु हारीतेन—

"द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च। तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भैक्षचर्या चेति सद्योवधूनामुपनयनं कृत्वा विवाहः"

इत्युक्तं तद्युगान्तरविषयम्।

"पुरा कल्पे हि नारीणां मौञ्जीबन्धनमीरितम्।
अध्यापनं च वेदानां सावित्रीवाचनं तथा"॥

इति कूर्मोक्तेः[1]।

## उपनयनकालः।

अथैतत्कालः। तत्रेयं श्रुतिः—

"वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्" इति।

अत्र च माणवककर्तृकं गुरुसमीपगमनं विधीयत इति प्राञ्चः। नवीनास्तु णिजर्थाविवक्षायां मानाभावादाचार्यकर्तृकं माणवकाधिकारिकमुपनयनमेव विधीयते नोपगमनम्। ऋत्विग्यजमानं वाचयति पञ्चभिः पावयतीत्यत्र यजमानाधिकारिकाध्वर्युकर्तृकवाचनपावनादिवत्। अत एव च्छान्दोग्योपनिषदि गुरुकर्तृकोपनयनानुकूलव्यापाररूपोपगमकर्तृकता—"जाबालो मातरमामन्त्र्याऽऽत्मानमुपनाययितुं गौतममाजगाम" इति। हेमाद्रौ बुधवचस्यपि—'गर्भाष्टमे वर्षे ब्राह्मणमुपनाययेत्' इति। एनयाऽन्नाद्यकामं याजयेदित्यत्र तु यजमानस्य प्रयोज्याध्वर्य्वादिकर्तृत्वे मानाभावाद्यजेः स्वार्थणिजर्थविशेषणतया परार्थवचोच्चारणं विधिश्च स्यादिति णिजर्थाविवक्षया यजनमेव विधीयत इत्याहुः।

केचित्तूपनायनशब्देनोपनयनमेवाभिधीयत इत्युक्तं तदयुक्तम्। उपनयनविषयप्रयोजकव्यापारस्योपनयनशब्दवाच्यत्वाल्लक्षणायां मानाभावादिति हेमाद्रिः।

अन्ये तु आचार्यसमीपनयनाङ्गको गायत्र्युपदेशः प्रधानं 'गायत्र्या ब्राह्मणमसृजत्' इति श्रुतौ 'गायत्र्या ब्राह्मणमुपनयीत' इति कात्यायनस्मृतौ चोपनय-

---

[1] ग. घ. ङ. यमोक्तेः।

नस्य गायत्र्युपदेशाङ्गत्वदर्शनात् । एवं चोपनयनपदं योगरूढम् । समिद्दर्शादिपदस्येवाङ्गवाचिनोऽप्युपनयनपदस्य तत्संबन्धेन प्रधानसंज्ञात्वोपपत्तेरित्याहुः ।

परे तु पङ्कजपदस्येवैकत्र यौगिकस्य रूढस्य च योगरूढपदवाच्यत्वादत्र तु नयने योगस्य गायत्र्युपदेशे च रूढेश्च सद्भावेनैकत्र विद्यमानत्वाभावान्न योगरूढत्वमुपनयनपदस्य । तेन समीपनयनस्यैव प्रधानत्वमित्याहुः ।

गृह्यम्—" उपनयनं व्याख्यास्यामः सप्तवर्षं ब्राह्मणमुपनयीतैकादशवर्षꣳ राजन्यं द्वादशवर्षं वैश्यं वसन्ते ब्राह्मणं ग्रीष्मे राजन्यꣳ शरदि वैश्यमापूर्यमाणपक्षे पुण्ये नक्षत्रे विशेषेण पुंनामधेये " इति ।

सप्त वर्षाणि जन्मतः परिमाणं यस्य स सप्तवर्षः । एतादृशं ब्राह्मणमुपनयेत् । एकादशद्वादशवर्षशब्दयोरप्येवं व्युत्पत्तिर्ज्ञेया । यस्मिन्पक्षे कलाभिश्चन्द्रमाः पूर्यते स आपूर्यमाणपक्षः पूर्वपक्षः शुक्लपक्ष इति यावत् । पुण्ये नक्षत्रे शुभे नक्षत्रे ज्योतिःशास्त्रविहिते । पुंनामधेये पुंशब्दाभिधेये । विशेषेणेतिवचनात्पुंशब्दाभिधेये विशिष्टमुपनयनम् । अन्यस्मिन्नपि पुण्य एव न गर्हिते ।

पुंशब्दाभिधेयानि नक्षत्राणि तु मातृदत्तेनोक्तानि—

" अश्वयुक्पुनर्वसू तिष्यो हस्तः शतभिषक्प्रोष्ठपदाः " इति ।

गर्गस्मृतौ तु श्रवणाभिजिदनूराधा अप्युक्ताः—

"पुंनाम श्रवणास्तिष्यो हस्तश्चैव पुनर्वसू ।
अभिजित्प्रोष्ठपाचैव अनूराधा तथाऽश्वयुक्" इति ॥

धर्मसूत्रेऽप्युपनयनकाल उक्तः—

" वसन्ते ब्राह्मणं ग्रीष्मे राजन्यꣳ शरदि वैश्यं गर्भाष्टमेषु ब्राह्मणं गर्भैकादशे राजन्यं गर्भद्वादशे वैश्यम् " इति ।

गर्भसहचरितं वर्षमपि लक्षणया गर्भशब्देनोच्यते । तदष्टमं येषां षष्ठादीनां वर्षाणां तानि गर्भाष्टमानि तेषूपनयनमित्यर्थः । गर्भादिः संख्या वर्षाणां तदष्टमेषु ब्राह्मणमुपनयेदितिवचनात् । वर्षं चात्र चान्द्रमानेन चैत्रशुक्लप्रतिपदादीति केचित् । अन्ये त्वष्टममासारम्भं गर्भाधानं वाऽऽरभ्य वर्षप्रवृत्तिमाहुः । गर्भाष्टमेष्वित्यत्र बहुवचनं षष्ठसप्तमयोः संग्रहार्थमिति सुदर्शनः । काम्यानामपि तेष्वन्तर्भावार्थमित्युज्ज्वलाकृतो महादेवदीक्षिताः । वसन्तादीनां पुनर्विधानमुदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहा इत्याश्वलायनोक्तस्य वसन्तातिरिक्तस्योदगयनस्य बाधनार्थम् । ' सप्तवर्षं

ब्राह्मणं वसन्त उपनयेदेकादशवर्षꣳ राजन्यं ग्रीष्मे द्वादशवर्षं वैश्यꣳ शरदि' इत्येव वक्तव्ये कालवयसोः पृथग्ग्रहणमशक्तौ कामसंयोगे वाऽन्यस्मिन्नपि वयसि सर्वस्मिन्नप्युदगयने भवेदिति कालवयसोरनित्यत्वख्यापनार्थम् ।

याज्ञवल्क्यः—

"गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम्" इति ॥

गर्भाधानमवधिं कृत्वा जन्मतो वाऽष्टममिति विज्ञानेश्वरः । गर्भग्रहणं सर्वत्रानुवर्तते ।

"गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः" ।

इतिस्मृत्यन्तरादित्यप्याह सः । सैके द्वादशे । उक्तेषु वचनेष्वष्टमवर्षसंबन्धेनैवाष्टवर्षत्वं न त्वतीताष्टवर्षत्वेनेति बोध्यम् ।

## अथ काम्यकालः ।

स च धर्मसूत्रे—

"अथ काम्यानि सप्तम आयुष्काममष्टमे ब्रह्मवर्चसकामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकाममापोडशाद्ब्राह्मणस्यानात्यय आद्वाविंशात्क्षत्रियस्याऽऽचतुर्विंशाद्वैश्यस्य" इति ।

एतानि कामनिमित्तान्युपनयनानि । सर्वत्रोपनयेदित्यनुषज्यते । अत्रापि गर्भत इत्यनुवर्तते । अत्राऽऽङभिविधौ । मर्यादायामिति केचित् । अत्ययोऽतिक्रमः । स एवाऽऽत्ययस्तदभावोऽनात्ययः । यादृच्छिको दीर्घ आङो वा प्रयोगः । प्रकरणादुपनयनस्यानात्यय इति गम्यते । आपत्तौ षोडशवर्षपर्यन्तोऽप्युपनयनस्य काल इति तात्पर्यार्थः । अत ऊर्ध्वं तु धर्मसूत्रोक्तं प्रायश्चित्तं कर्तव्यम् । तच्च—"अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत्तत उपनयनमथोदकोपस्पर्शनमथाध्याप्यः" इति ।

यस्य यः सावित्र्याः कालस्तदतिक्रमे त्रैविद्यकं त्र्यवयवा विद्या त्रिविद्या तामधीयते ते त्रैविद्यास्तेषामिदं त्रैविद्यकम् । 'चरणाद्धर्माम्नाययोः' इति वुञ्प्रत्ययः । एवंभूतं ब्रह्मचर्यमग्निपरिचर्यामध्ययनं गुरुशुश्रूषामिति परिहाप्य सकलं ब्रह्मचर्यधर्मं चरेत् । कियन्तं कालम् । ऋतुम् ।

'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । ऋतुमितिवचनादृत्वारम्भे प्रायश्चित्तारम्भः । तत उपनयनम् । एवंचरितव्रत उपनेतव्यः ।

## अथोदकोपस्पर्शनम् ।

तत उपनयनमारभ्य संवत्सरमुदकोपस्पर्शनं स्नानं कर्तव्यम् । शक्तस्य त्रिषवणमशक्तस्य यथाशक्ति । संवत्सरमित्यापस्तम्बः ।

अथाध्याप्यः । एवंचरितव्रतः पश्चादध्याप्य इति व्याख्यातमुज्ज्वलाकृता ।

स्वस्य पितृपितामहयोश्चानुपनीतत्वे तेषां ब्रह्महतुल्यत्वमभ्यागमनादीनां वर्जनं चोक्तं धर्मसूत्रे—

"अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुतास्तेषामभ्यागमनं भोजनं विवाहमिति वर्जयेत्" इति ।

यस्य माणवकस्य पिता पितामह इत्यनुपेतावनुपनीतौ स्यातां स्वयं च ते तथाविधा माणवका ब्रह्महसंस्तुता ब्रह्महण इत्येवं कीर्तिताः । ब्रह्मवादिभिरिति शेषः । अतस्तस्मिंस्तच्छब्दप्रयोगस्तद्धर्मप्राप्त्यर्थः । श्मशानवच्छूद्रपतितावित्यध्ययनप्रतिषेधो वक्ष्यते । ततश्च यथा ब्रह्महसमीपे नाध्येयमेवमेषामपीति । तेषामेषामभ्यागमनमाभिमुख्येन गमनं मातृपितृपुत्रदारशरीररक्षणार्थमपि वर्जयेत् । यद्यपि रक्षा सर्वतो ग्राह्येति वक्ष्यते । भोजनमुद्यतमपि वर्जयेत्, अपि दुष्कृतकारिण इति सत्यपि वचने । विवाहं वर्जयेत्, यद्यपि "स्त्रीरत्नं दुष्कुलादपि" इति मानववचनं तथाऽपीति व्याख्यातमुज्ज्वलाकृता ।

एतेषामिच्छतां प्रायश्चित्तमुक्तं धर्मसूत्रे—

"तेषामिच्छतां प्रायश्चित्तं यथा प्रथमेऽतिक्रम ऋतुरेवं संवत्सरं प्रतिपुरुषं संख्याय संवत्सरान्यावन्तोऽनुपेताः स्युः" इति ।

इच्छतामितिवचनान्न बलात्कारेण प्रायश्चित्तम् । यथा प्रथमे ब्रह्मचर्यस्यर्तुः काल एवमस्मिन्नतिक्रमे संवत्सरः कालः । अथोपनयनं तत उदकोपस्पर्शनमिति पूर्ववच्छेषम् । आपस्तम्बे दर्शनात् । यदि पितैवानुपेतः स्यात्संवत्सरमेकम् । अथ पितामहोऽपि ततो द्वौ । अथ स्वयमपि यथाकालमनुपनीतस्ततस्त्रीन्संवत्सरानिति व्याख्यातमुज्ज्वलाकृता । एतदनन्तरमध्यापयेदित्युक्तं धर्मसूत्रे—"अथाध्याप्यः" इति ।

उदकोपस्पर्शनमन्त्रा धर्मसूत्रे—

"सप्तभिः पावमानीभिर्यदन्ति यच्च दूरक इत्येताभिर्यजुष्पवित्रेण सामपवित्रेणाऽऽङ्गिरसेनापि व्याहृतीभिरेव" इति ।

पवमानः सोमो देवता यासां ताः पावमान्यः । ताश्च यदन्ति यच्च दूरक इत्येताः सप्त । यजुष्पवित्रेणाऽऽपो अस्मान्मातरः शुन्धत्वित्येतेन पूत एमीत्यन्तेन । सामपवित्रेण कया नश्चित्र आभुवदितितृचे गीतेन वामदेव्येन साम्ना । आङ्गिरसेन हंसः शुचिषदित्येतेन मन्त्रेण । एतैरञ्जलिना शिरस्यपोऽवसिञ्चेत् । अपि वा समस्तव्याहृतीभिरेव सिञ्चनमिति व्याख्यातमुज्ज्वलाकृता । अथ यस्य पिता पितामह इत्युपक्रमे यस्येत्येकवचनमन्तेऽप्ययथाध्याप्य इति । मध्ये तु ते ब्रह्महसंस्तुतास्तेषामभ्यागमनं तेषामिच्छतां प्रायश्चित्तमित्येतेषु बहुवचनम् । तत्रोपक्रमोपसंहारानुसारेण माणवकस्यैव प्रायश्चित्तमुपनयनमध्यापनं च । बहुवचनं तु तथाविधमाणवकबहुत्वापेक्षमित्यप्याह सः ।

स्वस्य पितामहादीनां त्रयाणां चानुपनीतत्वे सर्वेषां श्मशानतुल्यत्वं पूर्ववदभ्यागमनादीनां वर्जनं प्रायश्चित्तं चोक्तं धर्मसूत्रे—

> "अथ यस्य पितामहादि नानुस्मर्येत उपनयनं ते श्मशानसंस्तुतास्तेषामभ्यागमनं विवाहमिति वर्जयेत्तेषामिच्छतां प्रायश्चित्तं द्वादश वर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेत्तत उपनयनमथोदकोपस्पर्शनं पावमान्यादिभिः" इति।

यस्य माणवकस्य पितामहादि पितामहादारभ्य प्रपितामहस्तस्य पिता पितामहप्रपितामहाद्या अनुपनीताः स्वयं च यथाकालमनुपनीतस्ते तथाविधा माणवकाः श्मशानसंस्तुताः । तेन श्मशाने सर्वतः शम्याप्रासादित्यध्ययननिषेध एषामपि संनिधौ भवति । तेषामित्यादि स्पष्टार्थम् । पावमान्यादिभिरित्यनेन प्रतिपुरुषं संख्याय संवत्सरानित्येतदपि द्रष्टव्यमिति व्याख्यातमुज्ज्वलाकृता ।

अन्यच्च धर्मसूत्रे—

> "अथ गृहमेधोपदेशनं नाध्यापनं ततो यो निर्वर्तते तस्य संस्कारो यथा प्रथमेऽतिक्रमे तत ऊर्ध्वं प्रकृतिवत्" इति ।

गृहमेधोपदेशनं गृह्यशास्त्रोपदेशनं गृहस्थधर्मोपदेशनं वा नाध्यापनं कृत्स्नस्य वेदस्य किंतु गृह्यमन्त्राणामेव । तत एवं कृतप्रायश्चित्ताद्गृहस्थीभूताद्यो निर्वर्तत उत्पद्यते तस्य संस्कार उपनयनाख्यः कर्तव्यः । कथं, यथा प्रथमेऽतिक्रम ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरित्वेत्यन्तम् । ततस्तु यो निर्वर्तते तस्य प्रकृतिवद्यथाप्राप्तमुपनयनं कर्तव्यमिति । यस्य पितुरारभ्य नानुस्मर्येत उपनयनं तत्र प्रायश्चित्तं नोक्तं धर्मशास्त्रैस्तूहितव्यमिति व्याख्यातमुज्ज्वलाकृता ।

अथ संक्षेपेणायनादिनिर्णयः । तत्राऽऽश्वलायनः—

" उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगो-
दानविवाहाः " इति ।

कल्याणं ज्यातिःशास्त्राविरोधीति तद्वृत्तिकृत् ।

गर्गः—

" विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् " इति ।

निदाघो ग्रीष्मर्तुः । घनान्तः शरदृतुः ।

नन्वेवं विप्रं प्रति वसन्तनियमात् ,

" विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
अनध्याये चोपनीतः पुनःसंस्कारमर्हति " ।

इति बृहस्पतिना वसन्ताभावे दोषकथनाच्चोत्तरायणस्य विप्रं प्रति नित्य-प्राप्ततया विधिवैयर्थ्यमिति चेन्न । केनापि निमित्तेन वसन्तालाभे तदन्योत्तरा-यणप्रापणार्थत्वात्,

तथा च गर्गः—

" माघादिशुक्रान्तकपञ्चमासाः साधारणा वा सकलद्विजानाम् " इति ।

शुक्रो ज्येष्ठमासः सोऽन्तके मान्ते येषां ते शुक्रान्तकाः । स्वार्थे कप्रत्ययः । ते च ते पञ्च मासाश्चेति कर्मधारयः ।

वृद्धगार्ग्यः—

" माघादिमासषट्कं तु मेखलाबन्धने मतम् " इति ।

मैत्रेयसूत्रेऽपि—" वसन्तो ग्रीष्मः शरदृतवो वर्णानुपूर्व्येण माघादि-
षण्मासा वा सर्ववर्णानाम् " इति ।

आनुपूर्व्यं क्रमः । उत्तरायणशून्यमाघादिभागाषाढान्त्यभागयोर्निवृत्त्यै, उत्तरायणविधेरावश्यकत्वान्नैताभ्यां शास्त्राभ्यां पौनरुक्त्यम् । एतच्छास्त्रस्य मकरार्कविशिष्टपौषनिषेधार्थत्वेन पञ्चसंख्याविधेर्मिथुनार्कविशिष्टाषाढनिवृ-त्त्यर्थत्वेन च सार्थक्यान्न माघादिमासविधायकशास्त्रस्योत्तरायणविधायकशा-स्त्रेणैव प्राप्तावपि व्यर्थता । षट्संख्याविधेस्तु वैश्यं प्रति श्रावणादिनिषेधार्थ-त्वात्केनापि निमित्तेन शरदलाभे दक्षिणायनान्तर्गताषाढभागप्रापणार्थत्वाच्च न व्यर्थता ।

अस्ति हि तं प्रति दक्षिणायनविधिर्बृहस्पतिवृद्धवसिष्ठोक्तः—

" विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे ।
दक्षिणे तु विशां कुर्यान्नानध्याये न संक्रमे " इति ।

एवं च ब्राह्मणेन दक्षिणायन उपनयनं नैव कार्यं, नापि पौषाषाढयोः सत्यप्युत्तरायणे। उत्तरायणविशिष्टमाघादिपञ्चमासेषु कार्यम्। तत्रापि मीनार्कप्रभृति यावन्मिथुनप्रवेशं प्रशस्तः कालः। चान्द्रसौरान्यतरवसन्तलाभात्। मीनमेषयोस्तु प्रशस्ततरः। मीनमेषयोर्वा वसन्त इति बौधायनोक्तेः।

" मृगकुम्भगते भानौ मध्यमं मीनमेषयोः।
उत्तमं गोयुगस्थेऽर्के ह्यधमं चोपनायनम् "॥

इति बृहस्पतिवचनाच्च।

मृगो मकरः। गौर्वृषः। युगं मिथुनम्। मीनार्कविशिष्टश्चैत्रोऽनेकनिषेधापवादकतया प्रशस्ततमः।

" मीनस्थितेऽर्के खलु चैत्रमासे शुभप्रदो ब्राह्मणमौञ्जिबन्धः "।

इति बृहस्पतिवाक्यस्य तदर्थत्वात्।

अत एवोक्तं तेनैव—

" गोचराष्टकवर्गाभ्यां गुरुशुद्धिर्न लभ्यते।
तदोपनयनं कार्यं चैत्रे मीनगते रवौ॥
शुक्रे नष्टे तथा जीवे दुर्बले चन्द्रभास्करे।
व्रतोपनयनं कार्यं चैत्रे मीनगते रवौ " इति।

मौञ्जीपटले—

" जन्मप्राह्णुष्टगे सिंहे नीचे वा शत्रुगे गुरौ।
मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवौ " इति।

शौनकः—

" सिंहस्थे देवगुरौ मेषस्थे यदि भवेत्सहस्रांशुः।
मङ्गलकार्यं कुर्यादिति नारदपराशरौ वदतः " इति॥

एतच्चातिसंकटे ज्ञेयम्।

ज्योतिःशास्त्रे गर्गः—

" ज्येष्ठमासे विशेषेण ज्येष्ठपुत्रस्य नैव हि।
मौञ्जीबन्धं प्रकुर्वीत कृतश्चेन्मृत्युदो भवेत् " इति॥

स्मृत्यन्तरे—

" विवाहे चोपनयने जन्ममासं विवर्जयेत् " इति।

वृत्तशते—

" न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीयदिने विदध्यात् ।
न ज्येष्ठमासि प्रथमस्य सूनोस्तथा सुताया अपि मङ्गलानि " इति ॥

जन्मधिष्ण्यं जन्मनक्षत्रम् ।

मुहूर्तचिन्तामणौ—

" जन्मर्क्षमासलग्नादौ व्रते विद्याधिको व्रती ।
आद्यगर्भेऽपि विप्राणां क्षत्रादीनामनादिमे " ॥

इति विप्रक्षत्रियादिपरत्वेनोपनयने विशेष उक्तः ।

जन्ममास उक्तो गर्गेण—

" आरभ्य जन्मदिवसं यावत्त्रिंशद्दिनानि हि ।
जन्ममासः स विज्ञेयो गर्हितः सर्वकर्मसु " इति ॥

एतस्माद्वचनाद्वर्षमप्यत्र सावनमानेनैव ग्राह्यमिति केचित् । जन्ममासमात्रमत्र ग्राह्यमेतद्वचनान्न वर्षं जन्ममासानुरोधेनात्र ग्राह्यमित्यन्ये । तत्र यद्युक्तं तद्ग्राह्यम् ।

एतच्च वसन्तातिरिक्तकाले—

" वसन्तसमये दद्यादब्दे गर्भाष्टमेऽष्टमे ।
मेखलां जन्ममासेऽपि जन्मभे च तिथावपि " इति राजमार्तण्डोक्तेः ॥

## अथ तिथयः ।

ज्योतिर्निबन्धे[1] नृसिंहः—

" तृतीया पञ्चमी षष्ठी द्वितीया वाऽपि सप्तमी ।
पक्षयोरुभयोश्चैव विशेषेण सुपूजिताः ॥
धर्मकामौ सिते पक्षे कृष्णे च प्रथमा तथा ।
कृष्णे त्रयोदशीं केचिदिच्छन्ति मुनयस्तथा ॥
द्वादश्येकादशी चैव मध्यमे च प्रचक्षते " इति ।

धर्मो दशमी । कामस्त्रयोदशी । सिते शुक्ले पक्षे धर्मकामौ ग्राह्यौ । कृष्णे चेत्यत्र चकारः सिते पक्ष इत्यस्यानुकर्षणार्थः । तेन शुक्लप्रतिपदोऽपि ग्रहणम् । केचिदाचार्याः कृष्णपक्षान्तर्वर्तिनीं त्रयोदशीमप्युपनयने स्त्रीकुर्वन्ति । मध्यमे चेत्यत्र पक्षद्वय इति ज्ञेयम् ।

---

१ घ. ङ. ज्योतिर्निबन्धे ।

टोडरानन्दे वसिष्ठः—

" नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् ।
मेखलाबन्धने शस्तं चौळे वेदव्रतेषु च " इति ॥

अयं च प्रतिपद्दिनविधिर्नैमित्तिकानध्यायविधिश्चातीतकालस्याऽऽर्तस्य वटोरुपनयनविषयः ।

" प्रशस्ता प्रतिपत्कृष्णे कदाचिच्छुभगे विधौ ।
चन्द्रे बलयुते लग्ने वर्णानामतिलङ्घने " ॥

इतिव्यासोक्तेः ।

एवं—" चन्द्रे बलयुते लग्नाच्छुभभावे शुभेक्षिते ।
चतुर्दशीं प्रशंसन्ति कुमारे वयसाऽधिके " ॥

इति चतुर्दशीविधिरपि ।

" स्वाध्यायवियुजो घस्राः कृष्णप्रतिपदादयः ।
प्रायश्चित्तनिमित्ते तु मेखलाबन्धने मताः " ॥

इति कालादर्शादिधृतवृद्धगार्ग्यवचनात्सर्वेषां नैमित्तिकानध्यायानां कृष्णप्रतिपदादिनित्यानध्यायानां च प्रायश्चित्तोपनयनपरतैव नापूर्वोपनयनपरता । वियुजो विषमाः । घस्रा दिनानि । स्वाध्यायवियुजो दिवसास्तृतीयापञ्चमीसप्तमीनवम्येकादशीत्रयोदश्यन्ताः प्रायश्चित्तोपनयन उपयुज्यन्त इत्यर्थः ।

अमावास्या त्वत्रापि निषिद्धैव—

" अमावास्या तु सर्वत्र निन्दिता शुभकर्मणि " इति वचनात् ॥

अपरार्के—

" नष्टे चन्द्रेऽष्टमे शुक्रे निरंशे भास्करे तथा ।
कर्तव्यं नोपनयनं नानध्याये गलग्रहे " इति ॥

निरंशस्वरूपं ज्योतिर्निबन्धे—

" राशेः प्रथमभागस्थो निरंशः सूर्य उच्यते " इति ।

अत्रिः—" पराजितेऽतिनीचस्थे नीचे शुक्रे गुरौ तथा ।
व्रतिनं यदि कुर्वीत स भवेद्वेदवर्जितः " इति ॥

राजमार्तण्डः—

" नष्टे शुक्रेऽथवा जीवे निरंशे चैव भास्करे ।
उपनीतस्य शिष्यस्य जडत्वं मृत्युरेव च " इति ॥

युगादित्वादिनाऽनध्यायानामपि प्रतिप्रसवमाह भरद्वाजः—

" या चैत्रवैशाखसिता तृतीया माघस्य सप्तम्यथ फाल्गुनस्य ।
कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः " इति ।

अत्र चैत्रसिततृतीयामाघशुक्लसप्तम्योर्मन्वाद्योः प्रतिप्रसवः । मन्वादिषु तयोः स्मृत्यर्थसारे पाठात् । वैशाखशुक्लतृतीयायुगादेरपि ।

मुहूर्ततत्त्वे—

" त्रयोदश्यादिचतुष्कं सप्तम्यादित्रयं चतुर्थी च ।
अष्टौ गलग्रहास्त्याज्या गर्गस्य मते तथा षष्ठी " इति ।

अत्राप्यपवादः षष्ठीसप्तमीत्रयोदशीनां विनियोगोपन्यासेन दर्शितः अयं गलग्रहापवादो मूकाद्युपनयनविषय इति केचित् ।

स्मृत्यन्तरे—

" अनध्यायस्य पूर्वेद्युरनध्यायात्परेऽहनि ।
व्रतारम्भं विसर्गं च विद्यारम्भं च वर्जयेत् " इति ।

एतदपवादो द्वितीयासप्तमीत्रयोदशीनां विनियोगोपन्यासेन दर्शितः । स्मृतिसारे—

" सोपपदासूपनीतः पुनः संस्कारमर्हति " इति ।

अयं च निषेधो यजुर्वेदिनां न भवति—

" वेदव्रतोपनयने स्वाध्यायाध्ययने तथा ।
न दोषो यजुषां सोपपदास्वध्यापनेऽपि च " ॥

इति स्मृतिदर्पणे स्मृत्यन्तरोक्तेरिति केचित् । महानिबन्धेष्वदर्शनादिदं निर्मूलं, तेन तेषामपि निषेधोऽस्त्येवेत्यन्ये ।

ताश्चोक्तास्तत्रैव—

" ज्येष्ठशुक्लद्वितीया तु आश्विने दशमी सिता ।
चतुर्थी द्वादशी माघ एताः सोपपदाः स्मृताः " इति ।

चतुर्थी द्वादशी माघ इत्यत्र सितेत्यनुषज्यते ।

**वासरानाह नारदः—**

" गुरुशुक्रबुधानां तु वाराः श्रेष्ठतमाः स्मृताः ।
अधमः सोमवारस्तु सूर्यवारस्तु मध्यमः ॥
वारौ मन्दारयोर्वर्ज्यौ कृष्णे वर्ज्यो निशापतेः ।
अस्तं गतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनाम् " इति ॥

**मन्दः शनिः । आरो भौमः । निशापतिश्चन्द्रः । सौम्यो बुधः ।**

**तथा—**" सर्वेषां जीवशुक्रज्ञवाराः प्रोक्ता व्रते शुभाः ।
चन्द्रार्कौ मध्यमौ ज्ञेयौ सामबाहुजयोः कुजः ॥
शाखाधिपतिवारश्च शाखाधिपबलं तथा ।
शाखाधिपतिलग्नं च दुर्लभं त्रितयं व्रते " इति ॥

**सर्वेषां ब्राह्मणादीनाम् । जीवो बृहस्पतिः । ज्ञो बुधः । बाहुजः क्षत्रियः । बलं गोचराष्टवर्गादि ।**

**शाखाधिपबलासंभवे दोषमप्याह मदनरत्ने वृद्धगार्ग्यः—**

" शाखाधिपे बलिनि केन्द्रगते च मौञ्जीबन्धस्तदीयदिवसेषु शुभाय क्लृप्तः ।
अस्मिन्बलेन रहिते तु पुनर्द्विजानां स्याद्वर्णसंकर इति प्रवदन्ति तज्ज्ञाः" इति ।

**तदीयदिवसेषु शाखाधिपदिवसेषु । एतेन शाखाधिपबलस्याऽऽवश्यकतोक्ता भवति । तथा वर्णाधिपबलमप्यपेक्षते ।**

" सदाऽनुकूले चैकस्मिन्वर्णेशे बलशालिनि ।
ब्राह्मणादेः प्रकुर्वीत कुमारं व्रतचारिणम् " **इति पराशरोक्तेः ।**

" पती सितेज्यौ विप्राणां नृपाणां कुजभास्करौ ।
वैश्यानां शशभृत्सौम्याविति वर्णाधिपाः स्मृताः " ॥

**इति तेनैव व्यवस्थाप्रदर्शनाच्च ।**

**मदनरत्ने राजमार्तण्डः—**

" पितुः सूर्यबलं श्रेष्ठं शाखावर्णेशयोर्बटोः ।
सर्वेषां गुरुचन्द्रर्क्षबलं श्रेष्ठं प्रकीर्तितम् ॥
मौञ्जीबन्धे विवाहे च प्रतिष्ठायां विशेषतः " इति ।

**सर्वेषामित्यनेन येषां न शाखाधिपो गुरुस्तेषामपि बटूनां तत्पितॄणां च गुरुबलमावश्यकम् । उभयोरलाभे बटोरावश्यकमिति ध्वन्यते ।**

---

१ ग. 'यौ सोम' । २ क. ख. व्रतादिषु ।

संकटे चन्द्रताराबलाद्यभावेऽप्यधिकाराय दानमुक्तं ज्योतिर्निबन्धे—

" चन्द्रे च शङ्खं लवणं च वारे दिने विरुद्धे त्वथ तण्डुलांश्च ।
धान्यं च दद्यात्करणे तथा भे योगे विरुद्धे कनकं च देयम् " इति ।

दिनं तिथिः । अत्र चकारा गोदानसमुच्चयार्थाः ।

" सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ।
आमं तु वितुषं प्रोक्तं स्विन्नमन्नमुदाहृतम् "

इति वचनाद्धान्यशब्देन सतुषं व्रीह्याद्युच्यते ।

नित्यकाले बटोर्गुरुबलालाभे शान्त्या तल्लाभः । अनित्यकाले नैवमित्याह नारदः—

" बालस्य बलहीनोऽपि शान्त्या जीवो बलप्रदः ।
यथोक्तवत्सरे कार्यमनुक्ते नोपनायनम् " इति ।

केषुचिद्दुष्टस्थानेषु स्थिते गुरौ शान्त्याऽपि नोपनयनाधिकार इत्याह वसिष्ठः—

" बन्धौ तृतीये रिपुराशिसंस्थे इच्छन्ति पूजां जनिगे व्ययस्थे ।
पुरातना अष्टमगेऽपि सूरौ शान्त्याऽपि नैवोपनयाधिकारः " इति ।

बन्धुश्चतुर्थः । रिपुराशिः षष्ठः । जनिर्जन्मराशिः । व्ययो द्वादशराशिः ।

अतिसंकट एतेष्वपि राशिषु पूजाहोमादेर्द्विगुणत्वादिवृद्धिकल्पनयोपनयनं कार्यमेव न तूक्तसंवत्सरातिक्रमः कार्यः ।

" तस्माद्ग्रहेभ्यः कालत्वाद्बली संवत्सरो मतः " इति वचनात् ।

राशिविशेषस्थस्य गुरोरष्टमादिस्थानस्थितस्यापि नाधिकारप्रतिबन्धकत्वमित्याह भरद्वाजः—

" धनुर्मीनकुलीरस्थो जीवो जन्मान्त्यमृत्युगः ।
अतिसौख्यं बटोः कुर्याद्वसिष्ठवचनं यथा " इति ।

कुलीरः कर्कः । स च गुरोरुच्चस्थानम् । यथाऽऽहुर्दैवज्ञाः—

" अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः " इति ।

अजो मेषः । वृषभः प्रसिद्धो राशिः । मृगो मकरः । अङ्गना कन्या । कुलीरः कर्कः । झषो मीनः । वणिक्तुला । दिवाकरादीनां सप्तानां ग्रहाणां क्रमेण मेषादीनि सप्तोच्चस्थानानीत्यर्थः ।

**राजमार्तण्डः—**

" व्रते जन्मत्रिकारिस्थो जीवोऽपीष्टोऽर्चनात्सकृत् ।
शुभोऽतिकाले तुर्याष्टव्ययस्थो द्विगुणार्चनात् " इति ॥

**नक्षत्राण्याह नारदः—**

" श्रेष्ठान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तराणि च ।
विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने " इति ॥

**अर्कत्रयं हस्तचित्रास्वातयः । अन्त्यं रेवती । इज्यस्तिष्यः । चन्द्रो मृगशिरः । अदितिः पुनर्वसू । उत्तराशब्देनोत्तरात्रयम् । विष्णुत्रयं श्रवणधनिष्ठाशतभिषजः । अश्विनावश्विनी । मित्रोऽनूराधाः । अब्जयोनिभं रोहिणीनक्षत्रम् ।**

**बृहस्पतिः—**

" त्रिपूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे ।
त्वाष्ट्रे सौम्यपुनर्वस्वोरुत्तमं ह्युपनायनम् " इति ॥

**मैत्रमनूराधाः । वासवं धनिष्ठाः । त्वाष्ट्रं चित्रा । सौम्यं मृगशिरः ।**

**शार्ङ्गधरीये—**

" श्रवणादित्यपौष्णादिद्वये हस्तत्रये मृगे ।
सर्वेषां मेखलाबन्धः शुभः प्रोक्तो द्विजन्मनाम् " इति ॥

**वेदविशेषेण नक्षत्रविशेषविधिर्ज्योतिर्निबन्धे—**

" मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा ।
ऋग्वेदाध्यायिनां शस्तं मेखलाबन्धनं बुधैः ॥
पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशाङ्कभे ।
ध्रुवेषु च प्रशस्तं स्याद्यजुषां मौञ्जिबन्धनम् ॥
पुष्यवासवहस्ताश्विशिवविष्णूत्तरात्रयम् ।
प्रशस्तं मेखलाबन्धे बटूनां सामवेदिनाम् ॥
मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम् ।
अथर्ववेदिनां शस्तो भगणोऽयं व्रतार्पणे " इति ॥

**सार्पमाश्रेषाः । शैवमार्द्रा । पौष्णं रेवती । मैत्रमनूराधाः । शशाङ्कभं मृगशिरः । ध्रुवाण्युत्तरात्रयं रोहिणी च । वासवं ज्येष्ठा । अश्विनावश्विनी । शिव आर्द्रा । विष्णुः श्रवणम् । अदितिः पुनर्वसू ।**

---

१ ख. ग. °माश्रेषाः । २ क. घ. धनिष्ठाः ।

एषामसंभवे सारसमुच्चये—

" मघाग्नेयविशाखैन्द्रयाम्यं हित्वा च वारुणम् ।
व्रते शस्तानि सर्वेषां चेद्वेदोक्तं न लभ्यते " इति ।

आग्नेयं कृत्तिकाः । ऐन्द्रं ज्येष्ठा । याम्यं भरणी । वारुणं शततारका ।

तत्रापि पुंनक्षत्राण्यतिप्रशस्तानि ।

" विशेषेण पुंनामधेये " इति गृह्योक्तेः ।

तानि तु प्रागेवोक्तानि ।

यस्तु—

" ताराचन्द्रानुकूलेषु ग्रहाब्देषु शुभेष्वपि ।
पुनर्वसौ चोपनीतः पुनः संस्कारमर्हति " ॥

इति राजमार्तण्डवचने पुनर्वसुनिषेधः, स ज्योतिर्वित्प्रसिद्धवसिष्ठादिसंहितास्वदर्शनाद्धेमाद्र्यादिमहानिबन्धेषु पुनर्वसुविधेरेव प्रतीतेर्दाक्षिणात्यसकलशिष्टानां पुनर्वस्वोरुपनयनानुष्ठानाचरणस्योपलम्भाच्च निर्मूलः । समूलत्वेऽपि न यजुर्वेद्यथर्ववेदिविषयः । अनन्तरोदाहृतज्योतिर्निबन्धवचने यजुर्वेद्यथर्ववेदिनां तस्य विहितत्वात् ।

योगेषु व्यवस्थामाह श्रीपतिः—

" सवैधृतिस्तु व्यतिपातनामा सर्वोऽप्यनिष्टः परिघस्य चार्धम् ।
तिस्रस्तु योगे प्रथमे सवज्रे व्याघातसंज्ञे नव पञ्च शूले ॥
गण्डेऽतिगण्डे च षडेव नाड्यः शुभेषु कार्येषु विवर्जनीयाः " इति ।

प्रथमो योगो विष्कम्भः ।

उक्तान्यविषये त्वाह बृहस्पतिः—

" शिष्टाष्टादशयोगेषु प्रशस्तमुपनायनम् " इति ।

करणव्यवस्थाऽपि तेनैवोक्ता-

" ववादीनां तु षट्कं स्यादुपनाये सुपूजितम् ।
शकुन्यादीनि विष्टिं च वर्जयेच्च विशेषतः " इति ॥

दिनभागव्यवस्थामाह मनुः—

" सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम् ।
मध्याह्ने मध्यमं प्रोक्तमपराह्णे च गर्हितम् " इति ॥

उत्तरार्धेऽपि सर्वदेशेष्वित्यनुषज्यते ।

एवं व्यवस्थितेऽपि शुभकाले निमित्तविशेषेण निषेधमाह गर्गः—

" ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे ।
व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित् " इति ।

वर्ज्यानीति शेषः ।

संकटे तु चण्डेश्वरः—

" दाहे दिशां चैव धराप्रकम्पे वज्रप्रपाते च विदारणे च ।
केतौ तथोल्कांशुकणप्रपाते त्र्यहं न कुर्याद्व्रतमङ्गलानि " इति ॥

धर्मप्रकाशे गर्गः—

" चन्द्रसूर्योपरागेषु त्र्यहं प्रागशुभं भवेत् ।
सप्ताहमशुभं पश्चात्स्मृतं ग्रहणसूतकम् " इति ॥

एतच्चार्धग्रासविषयम् ।

" सर्वग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम् ।
त्रिद्व्येकाङ्गुलतो ग्रासे दिनमेकं विवर्जयेत् " ॥

इत्यङ्गिरसा विशेषस्योक्तेः । विस्तरतो दुष्टकालास्तु विवाहप्रकरणे वक्ष्यामः । एतेषूक्तेषु कालेषु सूत्रोक्तो मुख्यः कालः ।

स्मृत्युक्तस्तु संकटे—

" मुख्यो विधिः स्वशास्त्रोक्त इतरः स्यात्तु संकटे " इतिवचनात् ।

लल्लः—" व्रत्येऽह्नि पूर्वसंध्यायां वारिदो यदि गर्जति ।
तद्दिने स्यादनध्यायो व्रतं तत्र विवर्जयेत् " इति ॥

व्रत्येऽह्नयुपनयनदिवसे वारिदो मेघः । तद्दिने व्रत्यदिन उपनयनदिन इति यावत् । व्रतमुपनयनम् । तत्रानध्याये ।

अनेन वचनेन सर्वस्यैवोपनयनक्रियाकलापस्य निषेधे प्राप्ते नान्दीश्राद्धोत्तरं वेदारम्भरहितस्य सर्वस्योपनयनस्य कर्तव्यतोक्ता ज्योतिर्निबन्धे—

" नान्दीश्राद्धे कृते चेत्स्यादनध्यायस्त्वकालिकः ।
मौञ्जीबन्धं तदा कुर्याद्वेदारम्भं न कारयेत् " इति ॥

देशभेदेनाऽऽर्द्रादिज्येष्ठान्तव्यतिरिक्तेषु मृगादिविशाखान्तव्यतिरिक्तेषु नक्षत्रेषु वा यद्वृष्टिगर्जनादिकं तदकालिकं तन्निमित्तोऽनध्यायोऽकालिकः । स च नान्दीश्राद्धोत्तरं चेत्तदा मौञ्जीबन्धमुपनयनं कुर्यात् । तत्रत्यं वेदारम्भमात्रं तु नैव कारयेदित्यर्थः । नान्दीश्राद्धे कृत इतिवचनान्नान्दीश्राद्धात्प्राग्वारिद-

गर्जने मौञ्जीबन्धोऽपि न भवति । वेदारम्भं न कारयेदिति निषेधस्तु येषां सूत्रे वेदारम्भस्तद्दिन एव विहितस्तत्परः । सत्याषाढसूत्रानुसारिभिरकालिकानध्यायेऽपि मौञ्जीबन्ध एतस्माद्वचनात्कर्तव्य एव । वेदारम्भस्त्वविहितत्वादेव न भवति । ननु गायत्र्यारम्भेणैव सर्ववेदारम्भो भवतीति प्रयोगान्तर उक्तत्वाद्गायत्र्युपदेशात्मकारम्भ एव सर्ववेदारम्भस्तस्य च वेदारम्भं न कारयेदित्यनेन निषेध इति चेन्न । तस्याथर्ववेदव्यतिरिक्तसर्ववेदान्तराध्ययनार्थकपुनरुपनयननिवृत्तिबोधनार्थत्वात् । न चात्र किं मानमिति वाच्यम् । 'सर्वेभ्यो वै वेदेभ्यः साविज्यनूच्यत इति हि ब्राह्मणम्' इति धर्मसूत्रस्यागृह्यमाणविशेषत्वात् । एकमेवोपनयनं सर्वार्थमिति न्यायः । अस्मिन्नर्थे शाट्यायनब्राह्मणमेव पठितम् । अथर्ववेदस्य तु पृथगुपनयनं वचनात्कर्तव्यम् । तथा च तत्रैव श्रुतम्—"नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीत" इति । अन्यत्रान्यवेदार्थम् । भृग्वङ्गिरसोऽथर्ववेद इत्युज्ज्वलाकृद्व्याख्यानस्य च मानत्वात् ।

## अथोपनेतारः ।

तत्र वृद्धगर्गः—

"पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपनायेऽधिकारी स्यात्पूर्वाभावे परः परः" इति ॥

भ्राता पितुः ।

"पितैवोपनयेत्पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः" ॥

इति पितामहस्मरणात् ।

पिता विद्वांश्चेत्तर्ह्येवोपनयेदन्यथा न । धर्मसूत्रेऽविद्वत्कर्तृकोपनयने दोषस्योक्तेः । स चाग्रे प्रदर्श्यते । पितुर्विद्वत्त्वाभावे वक्ष्यमाणव्यासवचनोक्तलक्षणलक्षितः कश्चनोपनयनं कुर्यात् । एतद्वचनद्वयं विप्रपरं न क्षत्रियवैश्यपरं गायत्रीवाचनस्याध्यापनरूपत्वेन तत्र तयोरनधिकारात् । एतदर्थमेव "वेदैकनिष्ठं धर्मज्ञम्" इति वक्ष्यमाणव्यासवचने विप्रग्रहणं ज्ञेयम् । अतः पुरोहित एवोपनेतैतयोरिति ज्ञेयम् । ज्ञातयः सपिण्डास्तेषु तदतिरिक्तेषु च गोत्रजेषु येऽग्रजा वृद्धा वटोरपेक्षयेति द्वितीयपादार्थः । उपनेयकनिष्ठाचार्यत्वस्य निषिद्धत्वात् । गोत्रजा अग्रजा इत्यपेक्षितेऽकारलोपश्छान्दसः ।

यत्तु—"असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः" ।

इति योगीश्वरवचस्तत्पितामहवचोनुरोधेन पितृव्याभावविषयमिति प्राञ्चः। भगिन्यादिविवाहविषयमिति नवीनाः।

पित्राद्युक्ताधिकार्यभावे कर्तारमाह शौनकः—

" कुमारस्योपनयनं श्रुताभिजनवृत्तवान्।
तपसा धूतनिःशेषपाप्मा कुर्याद्द्विजोत्तमः " इति ॥

आचार्यं कुर्यादित्यधिकृत्य व्यासोऽपि—

" वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम्।
स्वशाखाढ्यमनालस्यं विप्रं कर्तारमीप्सितम् " इति ॥

वेदेषु वेदयोर्वेदे वैका निष्ठा यस्य। श्रोत्रियश्छन्दोध्यायी 'श्रोत्रियंश्छन्दोऽधीते' इति पाणिनिस्मरणात्।

" धर्मेण वेदानामेकां शाखामधीत्य श्रोत्रियो भवति "।

इति धर्मसूत्राच्च।

स्वशाखाढ्यं स्वस्य या पारम्पर्यागता शाखा तयाऽऽढ्यम्। एतेन स्वशाखीय एवाऽऽचार्यो भवतीति सूचितम्। विप्रग्रहणं क्षत्रियवैश्यनिवृत्त्यर्थम्। शूद्रस्य निवृत्तिस्तु वेदाध्ययनाद्यभावादेव भवति। आचार्यशब्दार्थो धर्मसूत्रे—'यस्माद्धर्मानाचिनोति स आचार्यः' इति। आचिनोत्युपदिशति।

बृहस्पतिः—

" आचिनोति च शास्त्राणि आचारे स्थापयत्यपि।
स्वयमाचरते यस्तु तमाचार्यं प्रचक्षते " इति।

याज्ञवल्क्यः—

" स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।
उपनीय दद्द्वेदमाचार्यः स उदाहृतः ॥
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते।
एते मान्या यथापूर्वमेभ्यो माता गरीयसी " इति ॥

यः सर्वा निषेकादिक्रियाः कृत्वाऽस्मै माणवकाय वेदं प्रयच्छत्यध्यापयति स गुरुः। एवं च पिता गुरुर्निषेकादिक्रियाकर्तृत्वात्तस्य।

देवलेनान्येऽपि गुरव उक्ताः—

" उपाध्यायः पिता ज्येष्ठो भ्राता चाऽऽचार्य एव च।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥

वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ।
माता मातामही गुर्वी पितुर्मातुश्च सोदराः ॥
पितामही स्वसा ज्येष्ठा धात्री च गुरवः स्त्रियः " इति ।

अत्र पुंसवनादिसंस्कारक्रियाकरणाभावेऽपि पितुर्गुरुत्वम् । यस्तु केवलमुपनयनमात्रं कृत्वा वेदमध्यापयति स आचार्यः । आचार्यस्योपनेतृत्वं विद्वत्पित्रभावे द्रष्टव्यम् । यस्तु वेदैकदेशमात्रमध्यापयति न तूपनयनादिक्रियाः करोति स उपाध्यायः । यो याजयिता स ऋत्विगित्युदाहृतः । एते पूर्वोक्ता यथापूर्वं पूर्वं पूर्वमनतिक्रम्येति यथापूर्वं यथाक्रमं पूर्वः पूर्वो मान्यः पूजार्ह इत्यर्थः । एभ्य एतेभ्यो माता जननी गरीयसी श्रेष्ठा, गर्भधारणादिक्लेशसहनादित्यर्थः ।

धर्मप्रकाशे पुराणे तु—

" द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः ।
तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे तु पूर्वजः "

इति पितुर्गरीयस्त्वमुक्तम् । अत्रेच्छया विकल्पः । तुल्यकल्पत्वं वेति नवीनाः ।

अविद्वत्कर्तृकोपनयने दोष उक्तो धर्मसूत्रे—

"तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति विज्ञायते " इति ।

वेदमजानानो यं माणवकमुपनयते । [य] माणवकोऽविद्वान्य उपनेता स च तमसः पापकर्मणः सकाशात्पापफलं दुःखाख्यं तमो मोहकरत्वात्प्रविशति प्राप्नोति । माणवको ह्यज्ञाननिरासार्थं विद्यार्थं संस्कारमपेक्षते स यदाऽविदुषा कृतस्तदा तेन विद्यां न प्राप्नोति । लोकनिन्दितेन कर्मणोभावपि दुःखं च प्राप्नुत इति विज्ञायते श्रुतिरित्यर्थ इति व्याख्यातमुज्ज्वलाकृता । न चैतद्वचनेभ्यः कृत्स्नवेदाध्यायिन एवाऽऽचार्यत्वं न वेदैकदेशाध्यायिन इति वाच्यम् । गोमधुपर्कार्हो वेदाध्याय्याचार्य ऋत्विक्स्नातकः श्वशुरो राजा वा धर्मयुक्तश्चेतिधर्मसूत्रव्याख्यानावसरे—' अत एव ज्ञायते वेदैकदेशाध्यायिनावप्यृत्विगाचार्यौ भवतः ' इत्युज्ज्वलाकृताऽभिधानात् ।

१ घ. ङ. अविद्व° । २ क. °स्तदाऽनेन ।

विश्वप्रकाशे स्मृत्यन्तरे—

"असगोत्रः सगोत्रो वा य आचार्य उपायने।
तदोपनेयपित्रादीनुद्दिश्याभ्युदयं चरेत्।
कन्योद्वाहेऽप्ययं मार्गो मुनिभिः परिकीर्तितः" इति।

वटूपनेत्रोरधिकारसिद्ध्यै प्रायश्चित्तमाह प्रयोगपारिजाते वृद्धविष्णुः—

"कृच्छ्रत्रयं चोपनेता त्रीन्कृच्छ्रांश्च वटुश्चरेत्" इति।

वटोः प्रायश्चित्तं ब्राह्मणभोजनादिसुगमप्रत्याम्नायद्वारैव, असामर्थ्यात्। गायत्रीजपरुद्रैकादशिन्यादि वैदिकाः प्रत्याम्नाया एतस्य नैव भवन्ति, अनधिकारात्।

उपनेत्रा वा मुख्यकल्पेन चरितव्यम्—

"ऊनद्वादशवर्षस्य प्रायश्चित्तं चरेत्पिता" इति वचनात्।

पितेत्युपलक्षणमुपनेतुः।

आचार्यस्य गायत्र्युपदेशाधिकारार्थं जपमप्याह स एव—

"सावित्रीमभ्यसेदग्निपवित्राणि च संस्मरन्।
गुरुर्द्वादशसाहस्रं सावित्रीं प्रजपेत्ततः।
स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतम्" इति।

प्रदानार्थमिदं स्मृतमित्यपि क्वचित्पाठः। अग्निपवित्राणि अग्न आयूंषि पवस इत्यादयो देवस्य त्वेतिप्रश्नान्तर्गताः षण्मन्त्राः। संस्मरन्निति लडादेशेन द्वादशसहस्रं द्वादशाधिकसहस्रं वा गायत्रीजपं संकल्प्य तस्मात्पूर्वं मानसो जप एतेषां गायत्रीजपाधिकारसिद्ध्यर्थं कार्य इति ज्ञाप्यते। अभ्यसेदित्यस्य जपेदित्यर्थः। द्वितीयार्धे सावित्रीं प्रजपेदिति वचनमनुवादः।

सावित्रीं प्रजपेदित्यस्य विधायकत्वे तु सकृज्जपविधायकमेकम्। अन्यद्द्वादशसहस्रद्वादशाधिकसहस्रान्यतरसंख्यजपविधायकं, नातः पुनरुक्तिदोषः। अस्मिन्पक्षे गायत्रीजपं संकल्प्याग्निपवित्रसंज्ञकान्षण्मन्त्रान्सकृज्जपित्वा सावित्रीं सकृदुक्त्वा द्वादशसहस्रद्वादशाधिकसहस्रान्यतरसंख्यया सावित्रीं प्रजपेदिति क्रमः।

संस्मरेदिति पाठे तु— अग्निपवित्राणि जपित्वा सकृद्गायत्रीमुक्त्वा संकल्पपूर्वकं द्वादशसहस्रं द्वादशाधिकसहस्रं वा गायत्रीं जपेदित्येवं क्रमः।

---

१ क. ख. 'त गोदाना'। २ क. जप्यम्।

गुरुरत्राऽऽचार्यः । अस्या गायत्र्याः प्रदानार्थं यः स्वस्याधिकारस्तदर्थमिदं स्मृतमित्यन्त्यार्धे योजना ।

इत्युपनेतार उपनेत्रुपनेयकर्तृकप्रायश्चित्तं च ।

---

## अथोपनयनोपयोगिपदार्थनिरूपणम् ।

तत्र मण्डपो वसिष्ठेनोक्तः—

" षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् ।
मण्डपं तोरणैर्युक्तं तत्र वेदिं[1] प्रकल्पयेत् ।
अष्टहस्तं तु रचयेन्मण्डपं वा द्विषट्करम् " इति ।

तत्र मण्डपे । द्विषट्करो द्वादशकरः । एतस्य मण्डपस्योपनयनविवाहसंस्काराङ्गत्वात्तयोश्च सूत्रोक्तत्वात्सूत्रोक्तसंस्काराङ्गमण्डपे सूत्रोक्तचतुर्विंशाङ्गुलात्मक एवारत्निर्ग्राह्यः ।

अन्यत्रापि—

" मङ्गलेषु च सर्वेषु मण्डपो गृहमानतः ।
कार्यः षोडशहस्तो वा न्यूनस्तु स्याद्दशावधिः ।
स्तम्भैश्चतुर्भिरेवात्र वेदिर्मध्ये प्रतिष्ठिता " इति ।

गृहमानत इत्यस्य महति गृहे महान्मण्डपः । अल्पे न्यून इत्यर्थः । दशावधिरिति न्यूनताया अवधिः । अतो वसिष्ठोक्तोऽष्टहस्तोऽत्यन्तापद्विषयः । स्तम्भैश्चतुर्भिरित्यत्र युक्तेति शेषः । इदं च वेदिविशेषणम् । वेदिर्मध्ये प्रतिष्ठितेति वचनाद्वेद्यनुरोधेनैव मण्डपः कार्यः, न तु पृथक् । अन्यथा— सद्मनो वामभागे तु वेदी[2] कार्या चतुष्करेति वेदिर्मध्ये प्रतिष्ठितेति वचनयोर्विरोधः स्यात् ।

" मण्डपः सद्मनो द्वारि कर्तव्यो गृहमानतः " ।

इतिवचनानुरोधेन मण्डपो यदि क्रियते तदा वेदेर्मण्डपबहिर्भाव एवेति द्रष्टव्यम् ।

वेदिरुक्ता मानवसूत्रानुसारिपद्धतौ संग्रहे—

" आचार्यस्य पदैः षड्भिश्चतुर्भिरथवा पदैः ।
आयामविस्तारवती बटोर्वेदी करोन्नता ।

---

१ घ. वेदीं । २ क. ख. 'परय वि' । ३ क. ख. 'तस्य च सू' । ४ ग. वेदि (:) कार्य (र्या) च' ।

लम्बा भित्तिर्द्विहस्ता स्यादुन्नता त्रिदशाङ्गुला।
प्रत्यग्वेद्यां च सा कार्या विस्ताराद्द्वादशाङ्गुला।
अष्टावष्टौ प्रकुर्वीत सोपानान्यथ पार्श्वयोः।
तन्मध्ये कलशाकारमिति यज्ञविदां मतम्" इति।

विवाहवेदिदृष्टाः कूर्मपृष्ठोन्नतत्वप्रागुदक्प्रवणत्वपुष्पमालारम्भास्तम्भाद्युप-शोभितत्वादयो धर्मा अविरोधादत्रापि ज्ञेयाः।

शिष्टास्त्विदानीं विवाहवेदिवदेव वेदिं कुर्वन्ति।

तत्रैव ग्रन्थान्तरे विशेषः—

"पश्चिमाभिमुखं द्वारं यद्वा चेदुत्तरामुखम्।
वेदिका तु तदा कार्या गृहान्निर्गमदक्षिणे" इति।

निर्गमशब्देन द्वारमुच्यते। पश्चिमाभिमुखद्वारोत्तराभिमुखद्वारयोर्दक्षिणे वेदिकरणोक्त्या[1] दक्षिणाभिमुखद्वारपूर्वाभिमुखद्वारयोर्वामभागे[2] वेदिः कार्येत्यर्थादवगतं भवति[3]। एवं च नैर्ऋत्यां वेदिर्न भवतीति तात्पर्यार्थः सिध्यति[4]। * केवलं दक्षिणामुखं तु द्वारं शिल्पशास्त्रे निषिद्धम्। एवं चावशिष्टं पूर्वाभिमुखमेव द्वारं तस्य वामभागे वेदिर्भवतीत्यर्थः सिध्यति[5]।

राशिविशेषपरत्वेन द्वारस्य दक्षिणा[भि]मुखतोक्ता श्रीपतिना—

"कर्किनक्रहरिकुम्भगतेऽर्के पूर्वपश्चिममुखानि गृहाणि।
तौलिमेषवृषवृश्चिकयाने दक्षिणोत्तरमुखानि(णि) तु कुर्यात्।
अन्यथा यदि करोति दुर्मतिर्व्याधिशोकभयहानिमश्नुते।
मीनचापमिथुनाङ्गनागते भास्करे न तु गृहाणि कारयेत्" इति।

उपनयने मात्रा सह भोजनमनुज्ञातं संग्रहकारेण—[6]

"मात्रा सहोपनयने विवाहे भार्यया सह।
अन्यत्र सहभुक्तिश्चेत्पातित्यं प्राप्नुयान्नरः" इति।

कृच्छ्रत्रयात्मकप्रायश्चित्ताचरणोत्तरं कामचारकामवादकामभक्षणनिषेधप्रवृत्तेरिव न स्त्रिया सह भुञ्जीतेति निषेधस्यापि प्रवृत्तत्वात्तस्य बाधोऽनेन क्रियते। न च मात्रा सहोपनयन इति वचनादुपनयनमध्ये यावन्ति भोजनानि

---

* पर्वोक्तार्थसमर्थनार्थं केवलमित्यादिर्ग्रन्थः।

[1] क. ख. °क्त्या पू°। [2] क. ख. °द्वारे वाम°। [3] ग. °वतीति वचनैर्नैर्ऋत्यां। [4] क. °ति। फे°। [5] ख. °ति। उ°। घ. ट. °ति। रा°। [6] क. °ति। उप°।

तेषु सर्वेष्वपि मातृसहितत्वमस्त्विति वाच्यम् । आचारसंवादेन सूत्रोक्ताशनपर्यायके भोजन एवैतस्य वचनस्य प्रवृत्तेरुचितत्वेन प्रधानोत्तरकालिके सूत्रकृता कण्ठरवेणानुक्ते भोजने मात्रा सहेत्यस्याप्रवृत्तेः ।

यत्तु— " मात्रा सहैव भुञ्जीत ऊर्ध्वं माता रजस्वला ।
व्रतबन्धः प्रशस्तः स्यादित्याह भगवान्यमः " ।

इतिवचनतो भोजनात्प्राङ्मातरि रजस्वलायां व्रतबन्धो न भवतीति केचित् । अन्ये त्वेतस्य वचनस्यैव महानिबन्धेष्वदर्शनेन निर्मूलत्वात्कर्तव्यमेवेत्याहुः । अत्राऽऽचारानुरोधेन ग्राह्यम् ।

कटिसूत्रं कौपीनं च परिकल्पनीयम् , तदुभयं यद्यप्यत्र सूत्रस्मृत्यादौ नोक्तं तथाऽपि ब्रह्मचारिधर्मप्रकरणे—

" मेखलामजिनं दण्डमुपवीतं च सर्वदा ।
कटिसूत्रं च कौपीनं ब्रह्मचारी तु धारयेत् " ॥

इति वक्ष्यमाणयमवचन उपनयनीयमेखलाजिनदण्डोपवीतानां सर्वदा ब्रह्मचारिकर्तृकधारणविधानवत्कटिसूत्रकौपीनयोरपि सर्वदा धारणविधानेनोपनयन आक्षेपतस्तत्प्राप्तिसिद्धेः ।

" वासः शाणीक्षौमाजिनानि " इति धर्मसूत्रव्याख्यानावसरे वस्यते कौपीनमाच्छाद्यते येन तद्वास इत्युज्ज्वलाकारोक्तेः ।

" गृहस्थः कुरुते कर्म वैदिकं वाऽथ तान्त्रिकम् ।
कटिबन्धनसंयुक्तं तत्सर्वं निष्फलं भवेत् " ॥

इति स्मृत्यन्तरे गृहस्थस्यैव कर्मकाले कटिबन्धननिषेधेन ब्रह्मचार्यादीनां कटिबन्धनस्यानुमतत्वप्रदर्शनात् । उज्ज्वलाकृता कौपीनधारणोक्त्या कटिबन्धनस्याप्यर्थत एव दर्शितप्रायत्वाच्छिष्टाचाराच्च ।

यज्ञोपवीतं गृह्ये—

" दक्षिणतो यज्ञोपवीत्याचान्तः कुमार उपविश्यान्वारभते " ।

इति दक्षिणत इत्यस्योपविश्येत्यनेनान्वयः ।

बौधायनगृह्ये—

" स्नातः शुचिवाससं बद्धशिखं यज्ञोपवीतं प्रतिमुञ्चन्वाचयति— यज्ञोपवीतं प० बलमस्तु तेज इति यज्ञोपवीतिनमप आचमय्य देवयजनमुदानयति " इति ।

---

१ घ. ङ. 'य. । बौधा' ।

धर्मसूत्रे—'अपि वा सूत्रमेवोपवीतार्थे' इति। अपि वा सूत्रमेव सर्वेषामुपवीतकृत्ये भवति न वास एवेति नियम इत्यर्थ इति व्याख्यातमुज्ज्वलाकृता।

एतच्च कार्पासम्।

"कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्" इति मनूक्तेः।

कार्पासाभावे देवलः—

"कार्पासक्षौमगोवालशाणवल्कतृणादिकम्।
यथासंभवतो धार्यमुपवीतं द्विजातिभिः" इति।

क्षुमाऽतसी। वल्कं तरुत्वक्। यथासंभवत इत्यत्र सार्वविभक्तिकस्तसिः। यथासंभवमित्यर्थः।

छान्दोग्यगृह्ये—

"यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वाऽपि वा कुशरज्जुमेव" इति।

भृगुः—"त्रिवृदूर्ध्ववृतं कुर्यात्तन्तुत्रयमधोवृतम्।
त्रिवृतं तूपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते" इति।

ऊर्ध्ववृतप्रकारमाह संग्रहकारः—

"करेण दक्षिणेनोर्ध्वं गतेन त्रिगुणीकृतम्।
वलितं ब्राह्मणैः सूत्रं शास्त्र ऊर्ध्ववृतं स्मृतम्" इति।

ऊर्ध्वं गतेनोर्ध्वस्थितेन दक्षिणकरेण त्रिगुणीकृतं सम्यग्वलितं तदूर्ध्ववृतमित्यर्थः।

देवलः—"विधवारचितं सूत्रमनध्यायकृतं च यत्।
विच्छिन्नं चाप्यधो यातं भुक्त्वा निर्मितमुत्सृजेत्" इति।

अधो यातमित्यत्र कटेरिति शेषः।

कात्यायनः—

"पृष्ठदेशे च नाभ्यां च धृतं यद्विन्दते कटिम्।
तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम्" इति।

नातिलम्बमित्यनेन कटितोऽधिकं निषिध्यते। नोच्छ्रितमित्यनेन कटितो न्यूनम्।

वसिष्ठः—"नाभेरूर्ध्वमनायुष्यमधो नाभेस्तपःक्षयः।
तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः" इति।

देवलः—"उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते।
एकमेव यतीनां स्यादिति शास्त्रविनिश्चयः" इति।

**इतरयोर्गृहस्थवानप्रस्थयोः । यतिस्त्रिदण्डी ।**

**स्मृत्यन्तरे—**

" छेदे विनाशे वा स्नातः कन्यया निर्मितं शुभम् ।
विधवाद्याभिरथवा सूत्रं गृह्णीत वै शुचिः " इति ।

**विधवेत्यापत्कल्पः ।**

**आह्निकप्रयोगपारिजाते कार्पासबीजाहरणादिविधिना कार्पासवृक्षलापनं तद्बीजेन यज्ञोपवीतकरणमुक्तं तत्तत एवावगन्तव्यम् ।**

**धारणे विशेषः श्रुतौ—**

" दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीत७ संवीतं मानुषम् " इति ।

**मनुः**—" उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।
सव्ये प्राचीनावीती स्यान्निवीती कण्ठसज्जनम् " इति ॥

**उपवीतनिर्माणधारणविधौ[2] बौधायनसूत्रे—**

" अथातो यज्ञोपवीतक्रियां व्याख्यास्यामो ब्राह्मणेन तत्कन्यया वा कृतं सूत्रमानीय भूरिति प्रथमां षण्णवतिं मिनोति भुव इति द्वितीयां सुवरिति तृतीयां मीत्वा पलाशपत्रे संस्थाप्याऽऽपो हि ष्ठेति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन सावित्र्या चाभिषिच्य वामहस्ते कृत्वा त्रिः संताड्य भूरग्निं चेत्येतैस्त्रिभिर्वलितं कृत्वा भूर्भुवः स्वश्चन्द्रमसं चेत्येतेन ग्रन्थिं कृत्वोंकारमग्निं नागान्यमं पितृन्प्रजापतिं वायुं सूर्यं विश्वान्देवान्नवतन्तुषु क्रमेण विन्यस्य संपूजयेद्देवस्य त्वेत्युपवीतमादायोद्वयं तमसस्परीत्यादित्याय दर्शयित्वा यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेज इति धारयेदित्याह भगवान्बौधायनः " इति ।

**एतावत्कर्तुमशक्तौ देवलः—**

" ग्रामान्निष्क्रम्य संख्याय षण्णवत्यङ्गुलीषु तत् ।
तावत्रिगुणितं सूत्रं प्रक्षाल्याब्लिङ्गकैस्त्रिभिः ॥
देवागारेऽथवा गोष्ठे नद्यां वाऽन्यत्र वा शुचौ ।
सावित्र्या त्रिवृतं कुर्यान्नवतन्तु तु तद्भवेत् ॥

१ ख. ल्पः । द । २ घ. ङ. धी बोधा ।

कार्पासं त्रिवृतं श्लक्ष्णं निदध्याद्वामहस्तके।
सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत्॥
हरिब्रह्मेश्वरेभ्यश्च प्रणम्य परिपूज्य च।
यज्ञोपवीतमिति वा व्याहृत्या वाऽपि धारयेत्" इति॥

उक्षयेदिति स्वार्थे णिच्। तूष्णीमेवोर्ध्ववृतत्वादिलक्षणविशिष्टं यज्ञोपवीतं निर्माय सावित्र्याऽऽपो हि ष्ठादिभिर्मन्त्रैर्वाऽभिमन्त्रिताभिरद्भिर्दशवारं सावित्र्यैवाभ्युक्ष्य यज्ञोपवीतं परममिति मन्त्रेण व्याहृतिभिर्वा धारयेदिति स्मृत्यर्णवे।

कौपीतकिशाखायां तु—

"यज्ञोपवीतेनोपव्ययामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय सर्वेषां वेदानामाधिपत्याय यशसे ब्रह्मवर्चसाय" इति यज्ञोपवीतधारणमन्त्र उक्तः।

यज्ञोपवीतशब्दार्थ उक्तः स्मृतिसारे—

"यज्ञाख्यः परमात्मा य उच्यते चैव होतृभिः।
उपवीतं ततोऽस्येदं तस्माद्यज्ञोपवीतकम्" इति॥

स्मृतिप्रकाशे—

"ज्ञातृविज्ञेययोरैक्यमविजानन्द्विजोत्तमः।
न त्यजेदात्मनः सूत्रं ब्राह्मं ब्रह्मविनिर्मितम्॥
सिसृक्षुरेक एवाग्रे समासीनः शिवः स्वयम्।
दृष्ट्वा गुणमयीं मायां सूत्ररूपामिवाकरोत्॥
तया तदात्मकं विष्णुं सृष्ट्वा पालं दिवौकसाम्।
स्वयं ब्रह्मा भवेद्रुद्रो रुद्रश्चास्य क्षयाय सः॥
ज्ञानात्मकेन हरिणा ब्रह्मात्मनि शिवेऽव्यये।
तत्सूत्रमुपवीतत्वाद्ब्रह्मसूत्रमिति स्मृतम्॥
यज्ञेन चोपवीतत्वाद्यज्ञसूत्रं विदुर्बुधाः।
तदाज्ञयाऽऽवृतत्वाच्च ब्रह्मणा ब्रह्मसूत्रकम्॥
तावल्लोकास्त्रयो वेदास्त्रयो देवास्त्रयोऽग्नयः।
शिवसृष्टास्त्रयो वर्णास्त्रिवृत्सूत्रं समाश्रयेत्॥
तद्ग्रन्थिमाश्रयंस्तारस्त्रिमात्रो नादसंयुतः।
तद्ग्रन्थ्यग्रं च सावित्री वेदमाता शिवाज्ञया॥

एवं द्वादशदै(दे)वत्यं ब्रह्मसूत्रं द्विजन्मनाम् ।
ब्रह्माऽग्रे कल्पयामास वेदार्हाणामनुत्तमम् ॥
येनांसे धृतमात्रेण ब्रह्मसूत्रेण ते द्विजाः ।
भवन्ति ब्राह्मणा नाम वेदार्हाश्च त्रयस्त्विह ॥
यावत्प्रभृति वामांसे ब्रह्मसूत्रं द्विजस्य तत् ।
गुरुः प्रतिष्ठापयति काले प्रभृतिसंयतः ॥
तावत्प्रभृति तस्यैव पिताऽऽचार्यः स उच्यते ॥
माता च तस्य सावित्री द्वितीयं जन्म चोच्यते ।
आकटेस्तत्प्रमाणं स्याद्दीर्घं तु [1]सुस्थितं [2]तथा ॥
आयुर्हरत्यतिह्रस्वमतिदीर्घं तपोहरम् ।
सिद्धार्थफलमानेन स्थूलं स्यादुपवीतकम् ॥
यशोहरमतिस्थूलमतिसूक्ष्मं धनापहम् ।
पवित्रं परमं शुद्धमायुष्यं च शुभावहम् ।
[3]औजस्यं ब्रह्मवर्चस्यं ब्रह्मसूत्रं तथोदितम्" इति ॥

" यज्ञोपवीतं परमं पवित्रं विभूषणं ब्राह्मणलक्षणं च ।
पद्मासनस्थेन पितामहेन उत्पादितं पङ्कजनालसूत्रात् " ।

इति यज्ञोपवीतोत्पत्तिः ।

" यज्ञोपवीतस्योत्पत्तिं जानाति ब्राह्मणो न चेत् ।
स वै वहति भाराय पुस्तकानि यथा वृषः " इति ॥

वासो धर्मसूत्रे—

' वासः शाणीक्षौमाजिनानि ' इति ।

वस्यते कौपीनमाच्छाद्यते येन तद्वासः । शणस्य विकारः शाणी पटी । क्षुमाऽतसी तस्य विकारः क्षौमम् । श्वेतपट्टाख्यं वासोविशेष इत्यन्ये । अजिनं यस्य कस्यचिन्मेध्यस्य पशोः । एतेषु त्रिष्वेकं वासः परिदध्यादित्यर्थ इति व्याख्यातमुज्ज्वलाकृता ।

वसिष्ठेन तु ब्राह्मणस्य [4]कार्पासं वास उक्तम्—

" ब्राह्मणस्य कार्पासं वासः " इति ।

एतच्चाहतं, तदुक्तं गृह्ये—

" अथैनमहतं वासः परिधापयति " इति ।

---

१ ग. सुस्थिरं । २ क. तदा । ३ क. आयुष्यं । ४ क. ख. ग. 'पासवा' ।

अहतलक्षणमाह प्रचेताः—

" ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् " इति ।

एतच्च वासः पुष्ये कर्तव्यमिति बौधायनगृह्ये दृष्टं तदस्माकमप्यविरुद्धम् ।

एतदनन्तरं द्विराचमनं कार्यम्—

" स्नात्वा पीत्वा क्षुते स्वापे भुक्त्वा रथ्याप्रसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधार्य च " ।

इति याज्ञवल्क्योक्तेः ।

अत्राऽऽचमनं पौराणमेव न तु वैदिकम्—

" न ह्यस्मिन्युज्यते कर्म किंचिदा मौञ्जिबन्धनात् ।
शूद्रेण तु समस्तावन्न तु वेदेन युज्यते " ॥

इति मनुनोपनयनोत्तरमेव वैदिककर्माधिकारस्योक्तत्वात् ।

उत्तरीयं धर्मसूत्रे—

" हारिणमैणेयं वा कृष्णं ब्राह्मणस्य कृष्णं चेदमुपस्तीर्णामनशायी स्याद्रौरवं राजन्यस्य बस्ताजिनं वैश्यस्याजिनं वैश्यस्याऽऽविकं सार्ववर्णिकम् " इति ।

हरिणो मृगस्तस्य विकारो हारिणं चर्म । एणी मृगी तस्या विकार ऐणेयं तच्च कृष्णं, कृष्णं चेद्विभृयान्न केवलं हारिणं तदा तस्मिन्नास्तीर्णे नाऽऽसीत न च शयीत । रुरुर्बिन्दुमान्मृगस्तस्य विकारो रौरवम् । बस्तश्छागस्तस्याजिनम् । अविरूर्णायुर्मेषस्तस्य विकार आविकं तत्सर्वेषां वर्णानाम् । तस्य हारिणादिभिर्विकल्पः । कम्बलोऽप्याविक एव सर्वेषामित्यर्थ इति व्याख्यातमुज्ज्वलाकृता ।

प्रावरणपर्याप्तोत्तरीयार्थाजिनासंभवे शाकलः—

" अखण्डं वा त्रिखण्डं वाऽष्टाचत्वारिंशदङ्गुलम् ।
चतुरङ्गुलविस्तीर्णं धारयेदजिनं सदा " इति ॥

खण्डत्रयमानं स्मृत्यन्तरे—

"त्र्यङ्गुलं तु बहिर्लोम यद्वा स्याच्चतुरङ्गुलम् ।
अजिनं धारयेद्विप्रश्चतुर्विंशाष्टषोडशैः' इति ॥

१ क. ख. शाखान्तरे ।

चतुर्विंशाङ्गुल एकः । अष्टाङ्गुलो द्वितीयः । षोडशाङ्गुलस्तृतीयः । एवं त्रिभिः खण्डैरष्टाचत्वारिंशदङ्गुलं(ल) परिमण्डलमजिनं धार्यमित्यर्थः । अत्र परिषीवणार्थं किंचिदधिकं ग्राह्यम् । अन्यथाऽष्टाचत्वारिंशदङ्गुलमजिनं धार्यमित्यनेन विरोधापत्तेः । अत्राङ्गुलानि संस्कार्यस्य ग्राह्याणि ।

मेखला गृह्ये—

"मौञ्जीं मेखलां त्रिवृतां ब्राह्मणस्य ज्याᳵ राजन्यस्याऽऽवीसूत्रं वैश्यस्य" इति ।

मौञ्जीं मुञ्जतृणनिर्मिताम् । त्रिवृतां त्रिगुणाम् । धनुषो रज्जुर्ज्या । आवीसूत्रमविलोममयी रज्जुः ।

धर्मसूत्रेऽपि—

"त्रिवृन्मौञ्जी मेखला ब्राह्मणस्य शक्तिविषये दक्षिणावृतानां ज्या राजन्यस्य मौञ्जी वाऽयोमिश्राऽऽवीसूत्रं वैश्यस्य सैरी तामली वेत्येके" इति ।

त्रिवृत्त्रिगुणा । मुञ्जानां विकारो मौञ्जी । एवंभूता ब्राह्मणस्य मेखला भवति । सा च शक्तिविषये शक्तौ सत्यां दक्षिणावृतानां कर्तव्या । तद्धितार्थे गुणभूतानामपि मुञ्जानामेतद्विशेषणम् । ज्या धनुषो रज्जुः । अथवा मौञ्जी सा चायोमिश्रा क्वचित्कालायसेन बद्धा । अविरेवाऽऽविः(वी) । अ(आ)व्याः सूत्रमावीसूत्रम् । अविलोममयी रज्जुः । सैरी सीरवाहयोक्ररज्जुः । तामलो वृक्षस्तस्य त्वचा ग्रथिता तामली । एवंभूता वा वैश्यस्य मेखलेत्येक आचार्या मन्यन्त इति व्याख्यातमुज्ज्वलाकृता ।

विशेषमाह मनुः—

"त्रिवृन्मौञ्जी समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी" इति ।

समा न क्वचित्सूक्ष्मा न क्वचित्स्थूला किं तर्हि सर्वत एव समा श्लक्ष्णा तन्तुतनुत्वगुणयुक्ता परिघृष्टा च, ज्या कदाचिच्चर्ममयी भवति कदाचित्तृणमयी । तत्र चर्ममयीव्यावृत्त्यर्थं मौर्वीति ज्याविशेषणम्, तथा धनुषोऽवतारितया श्रोणिबन्धः कर्तव्य इति मेधातिथिः । ज्यायां त्रिवृत्त्वादिगुणो न, स्वरूपनाशप्रसङ्गात् । शणतान्तव्यां त्वस्त्येवेति ज्ञेयम् ।

अनुकल्पमाह मनुः—

" मुञ्जाभावे तु कर्तव्या कुशाश्मन्तकबल्वजैः।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा " इति।

अत्राऽऽदिशब्दलोपो द्रष्टव्यः। तेनेत्थं वाक्यं भवति—मुञ्जाद्यभाव इति। ग्रन्थयश्च प्रवरसंख्यया। एकप्रवरस्यैको ग्रन्थिः, त्रिप्रवरस्य त्रयः, पञ्चप्रवरस्य पञ्चेति वृद्धाः।

दण्डो गृह्ये—

" बैल्वं पालाशं वा दण्डं ब्राह्मणस्य नैयग्रोधᳩ राजन्यस्यौदुम्बरं वैश्यस्य " इति।

धर्मसूत्रेऽपि—

" बैल्वः पालाशो वा दण्डो ब्राह्मणस्य नैयग्रोधः स्कन्धजोऽवाङ्ग्रो राजन्यस्य बादर औदुम्बरो वा वैश्यस्य वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति " इति।

नैयग्रोधो वटमयः, स चस्कन्धः शाखाविशेपस्तस्माज्जातः। अवाङवाचीनमग्रं यस्यैतादृशश्च। बादरो बदरवृक्षजः। वार्क्षो वृक्षमात्रजोऽनियतवृक्षजः, एतादृशो दण्डः सर्वेषां वर्णानां भवतीत्येक आचार्या उपदिशन्तीत्यर्थः।

मनुरपि—" ब्राह्मणे बैल्वपालाशौ क्षत्रिये वटखादिरौ।
पैप्पलौदुम्बरौ वैश्ये दण्डानर्हन्ति धर्मतः " इति।

अत्र सत्यपि द्वंद्वनिर्देशे बैल्वः पालाशो वा दण्ड इति धर्मसूत्रे विकल्पोक्तेरविवक्षितं साहित्यं ज्ञेयम्।

बौधायनधर्मसूत्रे—

" मूर्धललाटनासाग्रप्रमाणो याज्ञियस्य वृक्षस्य दण्डः " इति।

ब्राह्मणक्षत्रियवैश्यानां क्रमेण दण्डप्रमाणानीत्यर्थः। एषां क्रमेणेति पूर्वत्रोपक्रमात्। अत्र मूर्धादिप्रमाणानि संस्कार्यस्य ग्राह्याणि।

दण्डलक्षणान्याह मनुः—

" ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः।
अनुद्वेगकराश्चैव सत्वचो नाग्निदूषिताः " इति।

ऋजवः सरलाः। अव्रणा अच्छिद्राः। सौम्यदर्शना अकण्टकिताद्याः। अग्निदूषिता अग्निदग्धाः।

गोभिलगृह्ये—

" क्षौमशाणकार्पासौर्णान्येषां वसनान्यैणेयरौरवाजान्यजिनानि मुञ्जकाशताम्बल्यो रशनाः पार्णबैल्वाश्वत्था दण्डाः । क्षौमं शाणं वा वसनं ब्राह्मणस्य कार्पासं क्षत्रियस्याऽऽविकं वैश्यस्यैते नैवेतराणि द्रव्याणि व्याख्यातान्यलाभे सर्वाणि सर्वेषाम् " इति ।

ताम्बलीतामलीशब्दौ पर्यायौ ।

कूर्चस्त्वसंख्यदर्भात्मकः—

" यज्ञवस्तुनि मुष्टौ च स्तम्बे दर्भबटौ तथा ।
दर्भसंख्या न विहिता कूर्चे संस्तरणेऽपि च " ।

इति वचनात् ।

यत्तु प्रयोगपारिजाते—

" नवभिः सप्तभिर्दर्भैः पञ्चभिः क्रमशः कृतः ।
कूर्चः श्रेष्ठो मध्यमश्च कनीयांश्च समीरितः ॥
तद्ग्रन्थिर्द्व्यङ्गुला ज्ञेया तदूर्ध्वं चतुरङ्गुलम् " ।

इति कूर्चलक्षणं तदुपवेशनार्थकूर्चव्यतिरिक्तविषयमिति द्रष्टव्यम् ।

स्मृतिसारे—

" एकमातृप्रसूतानां कन्ये वा पुत्रकौ तयोः ।
सहोद्वाहं न कुर्वीत तथैव व्रतबन्धनम् " इति ।

उपनयनारम्भोत्तरं सूतके प्राप्ते विशेषः संग्रहे—

" कूश्माण्डीभिर्घृतं हुत्वा गां च दद्यात्पयस्विनीम् ।
चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् " इति ।

ब्रह्मचारिकर्तृकक्रियाकरणीभूतमन्त्राणां शं नो देवीरित्येवमादीनामुपनयनात्प्रागेव शिक्षणं कर्तव्यं, सूत्रवृत्तिकृदभ्यनुज्ञातत्वात् । पत्न्या यथाऽवेक्षणादिमन्त्राणाम् ।

---

## अथ त्रिवृदन्नहोमः ।

तत्रेत्थं सूत्रम्—

" उपस्थितेऽन्न ओदनस्यापूपानाꣳ सक्तूनामिति समवदाय सर्पिर्मिश्रस्य जुहोत्यग्नये स्वाहा सोमाय स्वाहाऽग्नयेऽन्नादाय स्वाहाऽग्नयेऽन्नपतये स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सर्वाभ्यो

देवताभ्यः स्वाहाऽग्नये स्विष्टकृते स्वाहेति सर्वत्रैवमनादिष्टदेवतेऽमुष्मै स्वाहेति यथादेवतमादिष्टदेवत एतेषामेवान्नानाꣳ समवदाय प्रागग्रेषु दर्भेषु बलिं करोति वास्तुपतये स्वाहेति त्रिवृताऽन्नेन ब्राह्मणान्परिविष्य पुण्याहꣳ स्वस्त्ययनमृद्धिमिति वाचयित्वा ऽथहरनं चरति " इति।

अस्यार्थः—उपस्थित आगत आनीतेऽन्ने ब्राह्मणपरिवेषणार्थमोदनस्यापूपानां सक्तूनां त्रयाणां समवदाय यावदर्थमवखण्ड्य मिश्रयित्वा पुनः सर्पिषा मिश्रीकृतस्य जुहोत्यग्नये स्वाहेत्येतैर्मन्त्रैः। उपस्थितवचनं बहिः संस्कृतस्य ग्रहणार्थम् , ओदनस्यापूपानां सक्तूनामित्येतावदुच्यमानेऽत्रैव संस्कारः प्राप्नुयात्। उपस्थितस्यौदनस्यापूपानां सक्तूनामित्येतावतैव सिद्धेऽन्नग्रहणं सव्यञ्जनार्थम्। तेन ज्ञायते, भोजनार्थमप्येतदुपस्थितं भवति न होमार्थमेवेति। अनेन ज्ञायते भोजनं हुतशेषस्यैव नान्यस्येति। ओदनादीनां द्वंद्वसमासेन निर्देश ओदनादीनां कदाचित्सहितानामपि पात्रान्तरे ग्रहणं स्यात्तन्मा भूदित्येतदर्थमसमासेन निर्देशः। अपूपानामिति बहुवचनात्त्रिप्रभृतयोऽपूपा ग्राह्याः। सक्तुशब्दस्तु बहुवचनान्त एव पिष्टशब्दवत् , यथा सक्तुभिर्जुहोतीत्यादौ। ओदनादीन्यक्षारलवणानि ग्राह्याणि।

" न क्षारलवणहोमो विद्यते "

इति धर्मसूत्रे निषेधात्। इतिशब्दोऽवधारणार्थः, ओदनस्यापूपानां सक्तूनामेव समवदायेति। तेन हविष्यभूतव्यञ्जनव्यावृत्तिः। ओदनादीनामेकदेशं समवदाय तेन सर्पिर्मिश्रितेन जुहोति। न त्रयाणां सर्वेषामेव मिश्रणम्। सर्पिःशब्दान्मिश्रणे संस्काररहितमेवाऽऽज्यम्। स्विष्टकृदाहुतिः पूर्वाहुतिभिरसंसक्तोत्तरार्धपूर्वार्धे होतव्या। अमुं त्रिवृदन्नहोममन्यत्राप्यतिदिशति—'सर्वत्रैवमनादिष्टदेवते' इति। सर्वत्र सर्वस्मिन्नपि कर्मण्यनादिष्टदेवते। नाऽऽदिष्टाऽनादिष्टा, अनादिष्टा देवता यत्र तदनादिष्टदेवतं तस्मिन्ननादिष्टदेवते, एतादृशेऽन्न उपस्थिते सत्येवंप्रकारेण होमः कर्तव्य इत्यर्थः। सर्वत्रेति वचनं सर्वेषु कर्मस्वेवान्न उपस्थितेऽयं होमः स्यान्न तु केवल उपस्थिते लौकिकेऽन्न इत्येतदर्थम्। अनादिष्टदेवत इति वचनं स्थालीपाकमासिकादिश्राद्धान्नव्यावृत्त्यर्थं, तस्याऽऽदिष्टदेवतत्वात्। काण्डव्रतादावन्नोपस्थितेरभावान्नैष होमः। इयं चान्नोपस्थितिः कण्ठरवोक्तैव ग्राह्या, अन्यथा श्राद्धान्तरसिद्धब्राह्मणभोजना-

१ ङ. 'न्नैव हो'। २ घ. श्राद्धोत्तर'।

र्थान्नोपस्थितेः सूत्रोक्तेषु काण्डव्रतादिषु शास्त्रान्तरप्रोक्तेषु कर्णवेधादिकर्मसु च सत्त्वेनातिप्रसङ्गापत्तेः । न चेष्टापत्तिः, तथाऽऽचाराभावात् । यद्येवं, युग्मान्ब्राह्मणानित्यत्रापि कण्ठरवोक्ताया अन्नोपस्थितेः सत्त्वात्त्रिवृदन्नहोमः प्राप्नोति । नैष दोषः । यद्येवमिष्टं स्यात्तत्रैवेदं विधायातिदिशेत् । तस्मात्प्रथमोक्तान्नोपस्थितिव्यतिरिक्तस्थल एवायं होम इति सिद्धं भवति । अमुष्मै स्वाहेति यथादेवतमादिष्टदेवते । आदिष्टदेवतेऽन्न उपस्थिते त्वमुष्मै स्वाहेति यथादेवतं होमः कार्य इत्यर्थः । आदिष्टदेवतेऽन्ने स्थालीपाक उपस्थिते कैश्चिदाचार्यैर्याज्यानुवाक्याभ्यां होमो विहितः स मा भूदित्येतदर्थममुष्मै स्वाहेति वचनम् । यथादेवतमिति वचनं यस्मिन्कर्मणि मन्त्रे यथा यथा छान्दसो धर्मो देवताशब्दे दृष्टो भवेत्तथैव नाममन्त्रेऽपि स्यादित्येवमर्थम् । दृष्टश्च क्षेत्रस्य पतिनेत्यस्मिन्मन्त्रे 'षष्ठीयुक्तश्छन्दसि वा' इत्यनेन घिसंज्ञारूपश्छन्दसि विकल्पेन विहितो धर्मस्तद्धर्मेणैव नाममन्त्रेण होमः । यथा क्षेत्रस्य पतये स्वाहेति घिसंज्ञाभावे क्षेत्रस्य पत्ये स्वाहेति । आदिष्टदेवत इति वचनमादिष्टदेवतान्नहोमीयमन्त्र एवैतन्नाऽऽज्यहोमीयनाममन्त्रे । तेन वेदोपाकरणादौ सदसस्पतये स्वाहेत्येवमेव मन्त्रः, न तु सदसस्पत्ये स्वाहेति । वास्तुबलिविधानात्पूर्वं परिभाषाकरणादेवं ज्ञायते पूर्वं स्विष्टकृद्धोमानन्तरं कर्मशेषं समाप्यैव वास्तुबलिरिति । वास्तुबलेरनावश्यकत्वद्योतनार्थं वा मध्ये परिभाषाकरणम् । अथवोत्तरत्र यथापुरस्तादित्येतस्य मध्यमणिन्यायेन ब्राह्मणानन्नेन परिविष्येत्यत्राप्यन्वयः । तेन सर्वत्रापि वास्तुबलिर्नैयत्यं सिध्यत्याचारश्चानुगृहीतो भवति । मध्ये परिभाषाकरणं तु वास्तुबलेरेवाऽव्यवहितत्वात्सर्वत्रातिदेशः स्याद्धोमस्य नैव स्याद्व्यवहितत्वात्तन्मा भूदित्येतदर्थम् । एतेषामिति वचनं बलिकरणे तान्येव द्रव्याणीति । एवकारो हविष्यव्यञ्जनस्यापि व्यावृत्त्यर्थः । समवदायेतिवचनात्पुनः पृथक्पृथग्गृहीत्वाऽवखण्ड्य मिश्रयित्वा तेन प्रागग्रेषु दर्भेषु बलिं करोति । प्रागग्रवचनमुदगग्रताव्यावृत्त्यर्थम् । नात्र सर्पिर्मिश्रणमवचनात् । बलिं करोतीतिवचनात्प्रथममवोक्ष्य बलिं तत्र न्युप्य तं परिषिञ्चति । त्रिवृता त्रिप्रकारेणान्नेन सव्यञ्जनेन ब्राह्मणान्परिविष्य संभोज्य तैः पुण्याहादीनि वाचयित्वा त्र्यहव्रतं चरतीत्यर्थः । अन्नेनेत्येतावतैव सिद्धे त्रिवृद्ग्रहणं युग्मान्ब्राह्मणानन्नेन परिविष्येत्यत्राप्योदनापूपसक्त्वात्मकत्रिवृदन्नसंप्रत्ययार्थम् ।

---

# उपनयनप्रयोगः ।

अथोपनयनप्रयोगः । उपनयनं चिकीर्षुराचार्यः कार्पासमुक्तविधिना निर्मितमेकं यज्ञोपवीतं प्रादेशमात्रं समचतुरश्रमश्मानमहतं वस्त्रद्वयं क्षौमं कार्पासं वा कौपीनं तद्बन्धनार्थं क्षौमं सूत्रमुत्तरीयार्थं काषायं वस्त्रमजिनं वा त्रिवृतां मौञ्जीं मेखलां प्रवरसंख्यग्रन्थियुतामुक्तलक्षणं दण्डमप्रच्छिन्नाग्राः प्रादेशमात्रीः सप्त पालाशीः समिधोऽनियतसंख्यैर्दर्भैर्निर्मितमासनार्थं कूर्चं कांस्यव्यतिरिक्तं भिक्षापात्रं गां चोपकल्पयेत् । होमादिसामग्रीं च पित्राद्युपनेतरि कुमारेण भिक्षया वरदानार्थं गौरुपकल्पनीया ।

कृतनित्यक्रिय आचार्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममोपनेतृत्वाधिकारसिद्ध्यर्थं कृच्छ्रत्रयात्मकं प्रायश्चित्तममुकप्रत्याम्नायेनाहमाचरिष्य इति संकल्प्य तच्चरेत् ।

एवं देशकालसंकीर्तनपूर्वकमुपनेयत्वाधिकारसिद्ध्यर्थं कृच्छ्रत्रयात्मकं प्रायश्चित्तं गोदानप्रत्याम्नायेनाहमाचरिष्य इति बटुना संकल्पं कारयित्वा तत्कारयेत् । तस्याशक्तावुपनेता वा कुर्यात् ।

ततो मम गायत्र्युपदेशाधिकारार्थं द्वादशसहस्रं द्वादशाधिकसहस्रं वा गायत्रीजपमहं करिष्य इति संकल्प्य, अग्न आयूंषीत्यादिषण्मन्त्राणां विश्वे देवा ऋषयः । आद्ययोरग्निः पवमानो देवता । मध्यमयोरग्निः पावकः। अन्त्ययोरग्निः शुचिर्गायत्री छन्दः । जपे विनियोगः । ‘ ॐ अग्न आयूंषि० व्यचयः ’ इत्यग्निपवित्रसंज्ञकान्षण्मन्त्रान्सकृज्जपित्वा, गायत्र्या विश्वामित्र ऋषिः, सविता देवता, गायत्री छन्दः । जपे विनियोगः । ‘ ॐ तत्सवितुर्वरेण्यं० दयात् ’ इति सकृज्जपित्वा, ऋष्यादिस्मरणपूर्वकं संकल्पितपक्षानुसारेण द्वादशसहस्रं द्वादशाधिकसहस्रं वा यथाकालं गायत्रीजपं कुर्यात् । अथवाऽग्निपवित्रसंज्ञकान्षण्मन्त्रान्गायत्रीं च सकृज्जपित्वोक्तसंख्यं गायत्रीजपं संकल्पपूर्वकं कुर्यात् । अथवा गायत्र्याः सकृज्जपो न कार्यः ।

तत आचार्यो ज्योतिर्विदादिभ्योऽवधारितादुपनयनदिनात्पूर्वेद्युस्तद्दिने वा सर्वं नित्यकर्म विधाय माङ्गलिकं स्नानं माङ्गलिकं वेषं च कृत्वा सोत्तरच्छदे रङ्गवल्लिकायुक्ते पीठे प्राङ्मुख उपविश्य स्वदक्षिणतः कृतमाङ्गलिकस्नानां कृतमाङ्गलिकवेषां भार्यां तद्दक्षिणतः कृतमाङ्गलिकस्नानं कृतमाङ्गलिकवेषं संस्कार्यं चोपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यास्य कुमारस्य द्विजत्वसि-

द्धिपूर्वकवेदाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाचार्यपैतृकसावित्रीमातृकमुपनयनाख्यं संस्कारं करिष्य इति संकल्पं कुर्यात्।

ततस्तदङ्गत्वेन पुण्याहादिवाचनं मातृकापूजनं नान्दीश्राद्धं ग्रहयज्ञमङ्कुरारोपणं मण्डपदेवताप्रतिष्ठापनं च करिष्ये । तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं यथाचारं कुलदेवतादिपूजनं [च] करिष्य इतिसंकल्पाद्यङ्कुरारोपणान्तं कुर्यात्। पूर्वमङ्कुरारोपणं पश्चाद्ग्रहयज्ञ इति वा क्रमः। इन्द्रः प्रीयतामिति पुण्याहवाचने विशेषः।

अथवा ग्रहयज्ञाङ्कुरारोपणे प्रधानसंकल्पात्पूर्वमेव कर्तव्ये । अस्मिन्पक्षे नास्मिन्संकल्प एतयोरुल्लेखः।

उपनयनस्य वेदाध्ययनार्थत्वेन द्विजत्वसंपादकत्वेन च विशिष्टत्वात्तत्र निर्विघ्नतासिद्ध्यर्थं ग्रहयज्ञात्पूर्वं विनायकशान्तिमपि पृथगेव कुर्यात्तन्त्रेण वा । सा च शान्तिरत्नमालायां द्रष्टव्या।

ग्रहयज्ञस्तु प्रधानसंकल्पदिनात्प्राक्सप्तदिनमध्ये दशदिनमध्य एव वा कर्तव्यः।

“ मण्डपस्थापनदिनात्पुरा ग्रहमखं चरेत्।
दशाहे वाऽथ सप्ताहे ततः प्राङ्नैव तं चरेत् ” ॥

इति ज्योतिःसागरवचनात् । मण्डपस्थापनदिनात्प्रधानसंकल्पदिनात्पुरा प्राक्, ग्रहमखं ग्रहयज्ञं चरेत्कुर्यात्। तत्र कालनियममाह दशाह इति । ततो दशाहात्सप्ताहाद्वा प्राङ्नैव तं ग्रहमखं कुर्यादित्यर्थः । अत्र गौर्यादिमातृका गणपत्यादयश्च वंशपात्रोपरि वस्त्रं प्रसार्य तत्र संस्थाप्याः।

ततो यथाचारमाम्रादिप्रशस्तवृक्षपर्णवेष्टिता दूर्वाः शमीशाखाः सूत्रेण षोढा वेष्टयेत्। तत्रैकत्र मुशलमेकत्र च्छुरिकाशस्त्रं मध्ये प्रक्षिप्य वेष्टनीयम्। ततस्ताः शाखा मातृकावंशपात्रे निधाय तासु चतसृषूदक्संस्थं नन्दिनीनलिनीमैत्रोमा नाममन्त्रेणाऽऽवाह्य तदुत्तरस्थमुशलगर्भायां पशुवर्धिनीं नाममन्त्रेणाऽऽवाह्य तदुत्तरस्थच्छुरिकाशस्त्रगर्भायां भगवतीं नाम्नैवाऽऽवाहयेत्।

ततो मातृकावंशपात्रस्योत्तरतः स्थापिते सूक्ष्ममृन्मयकलशद्वय एकस्मिन्वा यथाचारं तण्डुलपूर्णे हरिद्राखण्डलड्डुकपूगीफलयुते न्युब्जशरावपिहिते श्वेतचूर्णरञ्जिते सूत्रवेष्टिते गणानां त्वेति मन्त्रेणाविघ्नगणपतिमावाह्य नये॰ प्रजामिति प्रतिष्ठाप्याऽऽसनाद्याचमनीयान्तानुपचारान्समर्प्य स्वसमीपे ताम्रपात्रं निधाय तत्र ताः शाखाः संस्थाप्य भार्यया नीराजनसुगन्धितैलाभ्यङ्गयवा-

रकहरिद्राद्युद्वर्तनोष्णोदकस्नानानि कारयित्वाऽऽपो हि ष्ठेतितिसृभिः संस्नाप्याऽऽचमनीयं दत्त्वा ताः शाखा मातृकावंशपात्रे पूर्ववन्निधाय वस्त्रादिपुष्पान्तानुपचारान्समर्प्य दधिक्राव्ण इति दध्ना काण्डात्काण्डादिति दूर्वाभिश्चाभ्यर्च्य धूपाद्युपचारान्समर्प्य

" मन्त्रहीनं क्रियाहीनं भक्तिहीनं च देवताः।
यत्पूजनं कृतमिदं परिपूर्णं तदस्तु मे " ॥

इति संप्रार्थ्य वंशपात्रं स्वयं गृहीत्वाऽविघ्नगणपतिकलशं भार्यया ग्राहयित्वा घण्टादिवाद्यघोषेण सहितः सब्राह्मणः 'ॐ स्वस्ति न इन्द्रो वृद्धश्र० बृहस्पतिर्दधातु' 'अष्टौ देवा वसवः सो० ममृतं स्वस्ति' 'ऋद्ध्यास्म हव्यैर्नमसो० सवीराः' इति मन्त्रान्पठन्गृहमध्ये गत्वा प्रतिष्ठापनदेशमुपलेपयित्वा रङ्गवल्ल्यादिभिरलंकृत्य तत्र तण्डुलान्प्रक्षिप्य तेषु तद्वंशपात्रं नर्य प्रजामिति प्रतिष्ठाप्य तत्रैवोत्तरतः कलशं भार्यया निधाप्य पञ्चोपचारैः संपूज्य स्थापितदेवताप्रीत्यर्थं यथाविभवं ब्राह्मणान्सुवासिनीश्च संभोज्य तेभ्यो यथाविभवं वस्त्रादि दद्यात्।

ततो नीराजिताभ्यां दंपतिभ्यां सुहृदो वस्त्रादि दद्युः। ततः कर्ताऽन्यदपि कुलधर्मानुसारि कर्म चेत्तदपि कुर्यात्। यावन्मण्डपोद्वासनं प्रत्यहं स्थापितदेवताः पूजयेत्।

यथोक्तमण्डपकरणानुकूल्ये सति षोडशद्वादशान्यतमसंख्यहस्तपरिमितोऽसंभवेऽष्टहस्तपरिमितः स्थलानुरोधेन वा चतुर्द्वारोपशोभितस्तोरणैर्युक्तो दृढस्तम्भचतुष्टययुक्तः सद्मनो वामभागे द्वारसमीपे वा मण्डपः कार्यः। अत्राऽऽचार्यहस्त एव ग्राह्यो न तु संस्कार्यस्य। अन्यथा मण्डपस्याष्टहस्तत्वपक्षेऽतिलघुतापत्तेः।

" आचार्यहस्तमानेन मण्डपे निर्मिते शुभे।
मध्ये वेदी प्रकर्तव्या चतुरश्रा समन्ततः " ॥

इति ज्योतिर्निबन्धवचनाच्च।

आचार्य इति संस्कारकोपलक्षणं, तेन विवाहेऽपि मण्डपः संस्कारकस्य पित्रादेर्हस्तेनैव।

" कन्याहस्तैः पञ्चभिः सप्तभिर्वा कार्या वेदिः कूर्मपृष्ठोन्नता सा "।

इति वचनेन वेदिविषय एव कन्याहस्तपरिमाणत्वे प्रतिपादिते मण्डपे संस्कारकहस्तपरिमाणत्वमर्थतः प्रतिपादितं भवति। तत्राऽऽग्नेय्यामाम्रमयो जम्बूमयो

वा स्तम्भः । नैर्ऋत्यां खादिरो धात्रीवृक्षजो वा । वायव्यामौदुम्बरः शमीमयो वा । ई(ऐ)शान्यां बादर आश्मन्तको वा । एतैः स्तम्भैर्मण्डपं दृढं कटादिनाऽऽच्छादितं निर्माय तोरणाद्यैः शोभयित्वा पूर्ववद्बद्धाश्चतस्रः शाखाः 'दधिक्राव्णो अकारिषं' 'या जाता ओषधयः' इति मन्त्राभ्यां चतुर्णां ब्राह्मणानां हस्तेषु दत्त्वाऽऽग्नेयस्तम्भे 'गङ्गायै नमो गङ्गामावाहयामि' इत्यावाह्य संपूज्य सुदृढा स्थिरा भवेति प्रार्थयेत् । एवं नैर्ऋत्ये(ते) गौरीं वायव्ये धरणीमैशाने लक्ष्मीम् । ततो विप्रहस्तेभ्यस्ताः शाखा आदायाऽऽग्नेयादिस्तम्भेषु ताः शाखा बद्ध्वा तत्राऽऽग्नेयशाखायां नन्दिनीं नैर्ऋत्य(त)शाखायां नलिनीं वायव्यशाखायां मैत्रामैशानीशाखायामुमामावाह्य प्रतिष्ठापयेत् । ततः स्वहस्तस्थामेव मुशलगर्भां शाखां मण्डपमध्यमवंशे बद्ध्वा तत्र नाम्नैव पशुवर्धिनीमावाह्य प्रतिष्ठापयेत् । ततस्ताः काण्डानुसमयेन पदार्थानुसमयेन वा पूजयेत् । तत्र समुद्रज्येष्ठा इत्यादयश्चत्वारो मन्त्राः क्रमेण नन्दिन्यादीनां चतसृणां देवतानां स्नानमन्त्राः । चत्वारोऽपि पशुवर्धिन्याः । आपो हि ष्ठेतिमन्त्रत्रयस्य सर्वत्र समुच्चयः । गन्धद्वारामिति गन्धस्य । दधिक्राव्ण इति दध्नः । काण्डात्काण्डादिति दूर्वायाः । दूर्वासमर्पणोत्तरं पुष्पाद्युपचारसमर्पणमिति विशेषः ।

ततो मण्डपमध्य आग्नेय्यादिक्रमेण कलशस्थापनविधिना कुम्भचतुष्टयं स्थापयित्वा तत्रिसूत्र्या संवेष्ट्य तन्मध्ये देवकस्थापनं कुर्यात् । तच्चेत्थम् । अनुपहतपीठे वंशपात्रं निधाय तत्र देवकसंज्ञकच्छुरिकाशस्त्रगर्भायां शाखायां भगवतीमावाह्य प्रतिष्ठाप्याऽऽसनाद्याचमनीयान्तानुपचारान्समर्प्य चतसृभिः सुवासिनीभिर्नीराजनाभ्यङ्गोद्वर्तनोष्णोदकस्नानानि कारयित्वा देवकं वंशपात्रे संस्थाप्य वस्त्रादिभिरुपचारैः संपूज्य तस्मिन्नेव पीठे तत्कलशद्वयमेकं वा निधायाविघ्नसंज्ञकगणपतिं तत्राऽऽवाह्य प्रतिष्ठाप्य संपूजयेत् । तत एतत्समीपे मातृकावंशपात्रं निधाय ब्राह्मणभोजनादि सर्वं पूर्ववत्कुर्यात् ।

ततस्तस्मिन्मण्डपे मध्ये पञ्चपदपरिमितायामविस्तारा चतुष्पदपरिमितायामविस्तारा वा हस्तोन्नता वेदिः कार्या । तत्र वेदिमध्यसूत्रपश्चिमसूत्रसंपाताद्दक्षिणत उत्तरतश्चैकैकहस्तपरिमिते देशे चिह्नं कृत्वा, ऋजुत्वार्थं दक्षिणोत्तरचिह्नयोः पुरतोऽप्येवं चिह्नद्वयं कृत्वा तत्र संपातद्वयदक्षिणस्थचिह्नयोः प्राक्सूत्रं दत्त्वा तत्सूत्रमनु द्वादशस्वङ्गुलेषु चिह्नं कुर्यादेवमुत्तरस्थचिह्नयोः ।

एवं संसाध्य तत्र त्रिंशदङ्गुलोच्चां भित्तिं कुर्यात् । तस्याः पार्श्वयोरष्टाष्टौ सोपानानि कार्याणि । भित्तेरुपरि मध्यभागे कलशाकारं मृत्पिण्डं स्थापयेत् ।

अत्रापि प्रमाणमाचार्यस्य । कूर्मपृष्ठोन्नतत्वादयो विवाहवेदिदृष्टा धर्मा अविरोधादत्रापि कार्याः । शिष्टास्त्विदानीं विवाहवेदिवदेव वेदिं कुर्वन्ति ।

ततो द्वितीयदिने मातराचार्यः षट्प्रभृतिसमसंख्याकान्ब्राह्मणान्संभोज्य तैः पुण्याहस्वस्त्ययनर्धीर्वाचयित्वा, इन्द्रः प्रीयतामिति वदेत् ।

ततः कृतमङ्गलस्नानमलंकृतं कुमारं मात्रा सह भोजयेत् । मातुरभावेऽन्यया ऽप्रत्याख्यायिन्या । एतस्या अप्यभाव एकाकिनमेव भोजयेत् । अष्टौ ब्रह्मचारिणोऽपि भोजयेदित्याचारः ।

ततः कृतभोजनस्य कुमारस्य नापितेन केशान्वापयित्वा कुमारं संस्नाप्य द्विराचमय्य बद्धशिखं गन्धादिभिरलंकृत्याहतं वासस्तूष्णीं परिधाप्योपवेश्य द्विराचमनं कारयेत् । अत्राऽऽचमनं पौराणमेव । तद्यथा— केशवाद्यैस्त्रिभिर्नामभिरुदकं पिबेत् । चतुर्थपञ्चमाभ्यां करतले स्पृशेत् । षष्ठसप्तमाभ्यामोष्ठौ स्पृशेत् । अष्टमनवमाभ्यां मुखं संमृजेत् । दशमेन वामहस्तं प्रोक्ष्यैकादशेन पादौ प्रोक्ष्य द्वादशेन शिरः स्पृष्ट्वा त्रयोदशेनोर्ध्वोष्ठमङ्गुल्यग्रैः स्पृष्ट्वा चतुर्दशेन दक्षिणनासारन्ध्रमङ्गुष्ठतर्जनीभ्यां पञ्चदशेन वामनासारन्ध्रं ताभ्यामेव षोडशसप्तदशाभ्यां यथाक्रमं दक्षिणवामनेत्रे अङ्गुष्ठानामिकाभ्याम्, अष्टादशैकोनविंशाभ्यां यथाक्रमं दक्षिणवामश्रोत्रे अङ्गुष्ठकनिकाभ्याम्, विंशेन नाभिं ताभ्यामेव, एकविंशेन हृदयं पाणितलेन, द्वाविंशेन शिरः पाणिना, त्रयोविंशचतुर्विंशाभ्यां यथाक्रमं दक्षिणवामभुजावङ्गुल्यग्रैः स्पृशेदिति । केशवादिनामानि नमोन्तानि प्रथमान्तानि वा संबुद्ध्यन्तानि वा । संबुद्ध्यन्तपक्षे केचिद्विष्णुपदं हरिपदं चाविभक्तिकमेवोच्चारयन्ति तत्साधूनेव प्रयुञ्जीतेति नियमात्तुच्छम् । गायत्र्युपदेशात्प्राक्तनानि सर्वाण्यप्याचमनान्येवमेव ।

ततो वेद्यामुपवेश्योक्तरीत्याऽऽयतनं स्थण्डिलं वा वेद्यां विधाय तत्संस्कारं पूर्ववत्कृत्वा लौकिकारणिजं श्रोत्रियागारादाहृतं वा समुद्भवनामानमग्निं प्रतिष्ठापयामीति प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वोपनयनहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वा वैशेषिकप्रधानहोमे, आयुर्दामग्निमेकयाऽऽज्याहुत्या यक्ष्ये, आयुर्दां देवमग्निमेकयाऽऽज्याहुत्या यक्ष्ये । अङ्गहोमे, वरुणमित्यादि । पात्रासादनेऽश्मानमहतं वस्त्रद्वयमुत्तरीयार्थं काषायं वस्त्रमजिनं वा मौञ्जीं मेखलां दण्डं दर्वीं कूर्चमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषमङ्गारनिरूहणार्थं पात्रं कौपीनं तद्बन्धनार्थं क्षौमं सूत्रं बौधायनोक्तविधिना

निर्मितमुपवीतं भिक्षापात्रं च प्रयुज्य गां समीपे संस्थाप्य संमार्गदर्भानवज्वलनदर्भान्बर्हिरिध्ममाज्यं सप्त पालाशीः समिधश्चाऽऽसादयेत् । मातृदत्तेन पौष्करसादिपक्ष एव कूर्चप्रयोग उक्तः स चिन्त्यः ।

ततो ब्रह्मवरणादिपरिधिपरिधानान्तं कृत्वाऽग्नेरुत्तरतस्तिष्ठतः कुमारस्य कटावासादितं सूत्रमाबध्याऽऽसादितं कौपीनं परिधाप्य दर्भेषूपवेश्य द्विराचमनं कारयेत् ।

ततः कुमारस्तत्रैवोपविष्टः—देवस्य त्वेत्यस्य मन्त्रस्य प्रजापतिरुपवीतं यजुः । आदाने विनियोगः । 'ॐ देवस्य त्वा स० भ्यामाददे' इत्यासादितमुपवीतमादाय, उद्वयमित्यस्य सोमः सूर्योऽनुष्टुप् । आदित्यायोपवीतप्रदर्शने विनियोगः । 'ॐ उद्वयं त० रुत्तमम्' इत्युपवीतमादित्याय प्रदर्श्य, यज्ञोपवीतमित्यस्य परब्रह्म परमात्मा त्रिष्टुप् । उपवीतधारणे विनियोगः । 'ॐ यज्ञोपवीतं० स्तु तेजः' इति दक्षिणं बाहुमुद्धार्य धारयेत् ।

शिष्टास्त्विदानीं बौधायनोक्तविधिना यज्ञोपवीतनिर्माणासंभवेन सिद्ध एव यज्ञोपवीते तत्तन्मन्त्रैश्चेष्टाः कृत्वा तद्धारयन्ति । अत्राप्यसंभवे तूष्णीमेव निर्मितं यज्ञोपवीतं गायत्र्याऽऽपो हि ष्ठादिभिस्त्रिभिर्मन्त्रैर्वाऽभिमन्त्रिताभिरद्भिः सव्याहृतिकया गायत्र्या दशवारमभ्युक्ष्य यज्ञोपवीतं परमं पवित्रमिति मन्त्रेण समस्तव्याहृतिभिर्वा " यज्ञोपवीतेनोपव्ययामि दीर्घायुत्वाय सुप्रजास्त्वाय सुवीर्याय सर्वेषां वेदानामाधिपत्याय यशसे ब्रह्मवर्चसाय " इति कौपीतकयुक्तमन्त्रेण वा धारयेत् ।

ततो द्विराचम्याग्न्यायतनादीशान्यां दिशि द्विराचम्याग्रेणाग्निं ब्रह्माग्न्योर्मध्येनाऽऽचार्यस्य दक्षिणतो गत्वा तत्र प्राङ्मुख उपविश्य तमन्वारभते । अपरेणाग्निमिति मातृदत्तः ।

## उपनयनहोमः ।

अथाऽऽचार्यः कुमारेणान्वारब्धः परिषेकादिव्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात् ।

आयुर्दा इत्यस्य विश्वे देवा आयुर्दा अग्निस्त्रिष्टुप् । आयुर्दा देवेत्यस्य सौत्रमन्त्रस्य वामदेव आयुर्दा देवोऽग्निस्त्रिष्टुप् । उपनयनप्रधानाज्यहोमे विनियोगः । 'ॐ आयुर्दा अग्ने० दिमः स्वाहा' आयुर्देऽग्नय इदं० । 'ॐ आयुर्दा देवज० नयमः

स्वाहा' आयुर्दे देवायाग्नय इदं०। इति प्रधानाहुतिद्वयं जुहुयात्। अविज्ञातस्वरा मन्त्राः सर्वत्रैकश्रुत्येन प्रयोक्तव्याः।

तत इमं मे वरुणेत्यादि स्विष्टकृदन्तं कृत्वाऽग्नेरुत्तरत उत्तरपरिधिसंधिमग्रेणाऽऽसादितमश्मानं निधाय कुमारमग्रेणाग्निमानीय, 'ॐ आ तिष्ठेममश्मानमश्मेव त्वꣳ स्थिरो भव। प्रमृणीहि दुरस्यून्सहस्व पृतनायतः' इति दक्षिणेन पादेनाश्मन उपरि तं स्थापयति। सूत्रे दक्षिणेनेतिवचनं सव्यनिवृत्त्यर्थं क्रमार्थं वा। प्रथमे पक्षे दक्षिणपादस्यैवाश्मोपरि स्थापनं न सव्यस्य। द्वितीयपक्षे तु कुमारस्य प्रथमं दक्षिणपादमेव संस्थाप्य सव्यः संस्थापनीयः। सर्वत्र सौत्रमन्त्राणामृषिर्वामदेवः। मन्त्रोक्ता देवताः। छन्दांसि तूह्यानि। सौत्रमन्त्रे ह्यृष्याद्यवगमापेक्षा नास्तीति मतस्यापि सत्त्वान्नोच्यत ऋष्यादिकम्। मतान्तरमादायोच्यमाने तु सौत्रमन्त्राणामतिबहुत्वादतिविस्तरः स्यात्।

ततः कुमारमश्मनोऽवतार्याश्मानं तस्माद्देशान्निःसार्य पूर्वं परिधापितं वासः प्रज्ञातं निधाय,

"ॐ या अकृन्तन्नवयन्या अतन्वत याश्च देवी रन्तानभितो ददन्त। तास्त्वा देवीर्जरसा संव्ययंत्वायुष्मानिदं परिधत्स्व वासः। परिधत्त धत्त वाससैनꣳ शतायुषं कृणुत दीर्घमायुः। बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ। जरां गच्छासि परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा। शतं च जीव शरदः सुवर्चा रायश्च पोषमुपसंव्ययस्व" इत्यासादितयोर्वाससोर्मध्य एकं वासः परिधापयति।

'ॐ परीदं वासोऽधिधाः स्वस्तये भूरापीनामभिशस्तिपावा। शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन्' इति परिहितवाससं कुमारमभिमन्त्रयते। वसूनि चायवो विभजासजीवन्निति प्रमादपाठः।

ततस्तमुपवेश्य द्विराचमनं कारयेत्। 'ॐ या दुरिता परिबाधमाना शर्म वरूथे पुनती न आगात्। प्राणापानाभ्यां बलमावहन्ती स्वसा देवानाꣳ सुभगा मेखलेयम्' इत्यासादितया मेखलया कुमारं नाभिदेशे त्रिः प्रदक्षिणं परिव्ययति, द्विरित्येके सकृन्मन्त्रः। ततो नाभेरुत्तरतो मेखलायास्त्रिगुणं ग्रन्थिं कृत्वा दक्षिणतो नाभेः पर्यकर्षति।

"ॐ मित्रस्य चक्षुर्धरुणं धरीयस्तेजो यशस्वि स्थविरꣳ समिद्धम्।
अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं धत्स्वासावदितिस्ते कक्षां

बध्नातु वेदस्यानुवक्तवै मेधायै श्रद्धाया अनूक्तस्यानिराकरणाय ब्रह्मणे ब्रह्मवर्चसाय ”

इति कुमाराय कृष्णाजिनमुपरिष्टाल्लोमोर्ध्वग्रीवमुत्तरीयं करोति ।

रौरवं राजन्यस्य बस्ताजिनं वैश्यस्य । प्रावरणपर्याप्तोत्तरीयार्थाजिनालाभेऽष्टाचत्वारिंशदङ्गुलं चतुरङ्गुलविस्तीर्णं त्र्यङ्गुलविस्तीर्णं वाऽजिनं गृहीत्वा परिषीवणार्थं किंचिदधिकं गृहीत्वाऽष्टाचत्वारिंशदङ्गुलपरिमाणाविरोधेन परिषीव्य तत्परिमण्डलमजिनमुत्तरीयं कारयेत् । तत्र संस्कार्याङ्गुलैरष्टाङ्गुल एकः खण्डः षोडशाङ्गुलो द्वितीयश्चतुर्विंशाङ्गुलस्तृतीयः । यदा वास एवोत्तरीयं तदा मन्त्रनिवृत्तिरजिनपदलोपो वा । यत्र यत्र मन्त्रेऽसौशब्दस्तत्र संबुद्ध्यन्तं संस्कार्यस्य शर्मान्तं व्यावहारिकं नाम ग्राह्यम् ।

ततः ‘ॐ इन्द्राय त्वां परिददे ’ इति कुमारं ब्रूयात् । परिदेहीति कुमारः । अथाऽऽचार्यः ‘ॐ परीममिन्द्र ब्रह्मणे महे श्रोत्राय दध्मसि । अथैनं जरिमाणये ज्योक्छ्रोत्रे अधिजागरत् ’ इति ब्राह्मणकुमारमिन्द्राय परिददाति । कुमारमालभ्य मन्त्रं ब्रवीतीत्यर्थः । उत्थाप्य संस्पृश्य मन्त्रवचनं परिदानमिति गृह्यकारिकाकृत् । श्रोत्रशब्दस्थाने राष्ट्रशब्दः क्षत्रियकुमारपरिदाने पोपशब्दो वैश्यकुमारपरिदाने ।

अथाग्रेणाग्निं कुमारं दक्षिणतो नीत्वाऽपरेणाग्निमुदङ्मुखमुपवेश्य ‘ॐ त्वयि मेधां त्वयि प्रजां त्वय्यग्निस्तेजो दधातु । त्वयि मेधां त्वयि प्रजां त्वयीन्द्र इन्द्रियं दधातु । त्वयि मेधां त्वयि प्रजां त्वयि सूर्यो भ्राजो दधातु ’ इति त्रिभिर्हुतोच्छेषमाज्यं सर्वमर्धं वा सकृत्कुमारं प्राशयति । त्रयाणामन्ते प्राशनम् । यदा सर्वस्य प्राशनं तदा सप्तपलाशसमिधामभ्याधानार्थं लौकिकाज्येनाभ्यञ्जनम् । परिध्यञ्जनप्रायश्चित्तहोमयोः कर्तव्यतायामन्यदाज्यं पूर्ववत्संस्कृत्य तेनोभयं कार्यम् । यदा त्वर्धस्य प्राशनं तदाऽवशिष्टेन तेनैवाभ्यञ्जनं परिध्यञ्जनप्रायश्चित्तहोमौ च ।

अथवा हुतोच्छेषमाज्यमल्पीयसि लौकिके दध्नि सर्वमर्धं वाऽऽनीयाऽऽलोडनेन पृषद्गुणकं कृत्वा तत्प्राशयेदेतैरेव मन्त्रैः । हुतोच्छेषाज्येऽल्पं दध्यानीय पृषदाज्यं कर्तव्यमित्येवं तु न भवति । तृतीयमाज्यस्य दधन्यानीयेति पृषद्गुणत्वार्थं पशुसूत्रे दृष्टस्य दध्यधिकरणकाज्यानयनविधेरेवात्र ग्रहीतुमुचितत्वात् ।

ततो योगे योग इत्यस्याग्निरिन्द्रो गायत्री । इममग्न आयुष इत्यस्य विश्वे देवा अग्निवरुणसोमादितिविश्वदेवा भूरिक्त्रिष्टुप् । कुमारसमीक्षणे विनियोगः—'ॐ योगे योगे तव० मूतये' 'इममग्न आयुषे० थासत्' इति द्वाभ्यां प्राश्नन्तं कुमारं समीक्षते ।

अथवा हुतोच्छेषमाज्यं पृषदाज्यं वाऽऽभ्यां मन्त्राभ्यां प्राशयति । अस्मिन्पक्षे त्वयि मेधामिति मन्त्रत्रयस्य समीक्षणस्य च लोपः । ततः कुमारः प्राशनान्तमाचमनं कुर्यात् । हुतोच्छेषाज्यनाशे प्राशनाभावः । प्राशनाभावादाचमनस्याप्यभावः । आज्यान्तरं तत्स्थान उपादाय तत्प्राशनीयमिति केचित् ।

अथाऽऽचार्य आचान्तं कुमारमात्मानमुपस्पर्शयित्वा(र्श्य) 'ॐ शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषताऽऽयुर्गन्तोः' इति कुमारमभिमन्त्रयते ।

अथ कुमार आचार्यं ब्रह्माणं च बहिष्कृत्य पात्रसहितमग्निं प्रदक्षिणं परिक्रामति । आचार्यः 'ॐ आगन्त्रा समगन्महि प्रसमृत्युं युयोतन । अरिष्टाः संचरेमहि स्वस्ति चरतादिह स्वस्त्या गृहेभ्यः' इत्यासीन एव प्रदक्षिणमग्निं परिक्रामन्तं कुमारमभिमन्त्रयते 'ॐ ब्रह्मचर्यमागामुप मा नयस्व ब्रह्मचारी भवानि देवेन सवित्रा प्रसूतः' इति कुमारं वाचयति ।

को नामासीति कुमारं पृच्छति । अथ कुमारः स्वस्य शर्मान्तं व्यावहारिकं नाक्षत्रं च नामाऽऽचष्टे । यथा देवदत्तशर्मा कार्तिकोऽस्मीति । अथाऽऽचार्यः 'ॐ स्वस्ति देव सवितरहमनेन देवदत्तशर्मणा कार्तिकेनोदृचमशीय' इति कुमारस्य नामनी गृह्णाति ।

शं नो देवीरित्यस्य प्रजापतिरापो गायत्री । मार्जने विनियोगः 'ॐ शं नो देवी० तु नः' उभावद्भिर्मार्जयेते । उभयोर्मन्त्रः ।

## अथ प्रधानोपनयनम् ।

अथाऽऽचार्यो ज्योतिर्विदं संपूज्याग्नेर्दक्षिणतः प्राङ्मुख उपविश्याग्नेराग्नेय्यां दिशि स्वपुरोभाग आत्माभिमुखं कुमारमुपवेश्योभयोर्मध्ये ज्योतिर्विदा स्वस्तिकेनाङ्कित उदग्दशेऽन्तःपटे धृते ब्राह्मणैर्मङ्गलसूक्तपद्यपाठे च क्रियमाणे स्वकुलदेवतादीनां चिन्तनं पटस्थस्वस्तिकावलोकनं च कुर्व-

१ क. ग. आगन्ता । २ क. चरिता ।

मासीत। एवं कुमारोऽपि । अथवा स्वस्थानस्थितावेवोभौ । अस्मिन्पक्षे प्राग्दशोऽन्तःपटः ।

तत आचार्यो ज्योतिर्विदां सुलग्नसमयेऽन्तःपट उदक्प्राग्वा निष्काशिते तत्रस्थ एव कुमारस्योपनयनं कुर्यात् । तच्चेत्थम् । कुमारस्य दक्षिणमंसं स्वदक्षिणेन हस्तेन सव्यहस्तेन सव्यमंसं तूष्णीं किंचिदन्वारभ्य, समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । गायत्र्या विश्वामित्रोऽग्निश्च सविता गायत्री । देवस्य त्वेत्यस्य वामदेवः सविता यजुः । कुमारस्योपनयने विनियोगः । 'ॐ भूर्भुवः सुवः' 'ॐ तत्सवितुर्व० प्रचोदयात्' 'ॐ देवस्य त्वा स० हस्ताभ्यामुपनयेऽमुकशर्मन्' इति कुमारस्य दक्षिणं बाहुमात्मन आभिमुख्येनाऽऽनीय समासीनः कुमारमुपनयते कुमारं स्वसमीपे संमुखं करोतीत्यर्थः । इदं प्रधानोपनयनमाचार्यः कर्ममध्ये न विस्मरेत् । विस्मरणं चेदखिलं कर्माऽऽवर्तनीयं मातृदत्तोक्तेः । प्रधानत्वादिति भावः । अग्नेर्दक्षिणत उपनयनक्रियापक्ष उभावत्र स्वे स्वे स्थान उपविशतः । अत्र 'ॐ ये यज्ञेन दक्षिणया समक्ता अग्ने तेजस्विन्' इत्याद्या आशिषो दद्युराचारात् ।

अथाऽऽचार्यः—'ॐ अग्निष्टे हस्तमग्रभीत्सोमस्ते हस्तमग्रभीत्सविता ते हस्तमग्रभीत्सरस्वती ते हस्तमग्रभीत्पूषा ते हस्तमग्रभीद्बृहस्पतिस्ते हस्तमग्रभीन्मित्रस्ते हस्तमग्रभीद्वरुणस्ते हस्तमग्रभीत्त्वष्टा ते हस्तमग्रभीद्धाता ते हस्तमग्रभीद्विष्णुस्ते हस्तमग्रभीत्प्रजापतिस्ते हस्तमग्रभीत्' [ इति ] कुमारस्य दक्षिणं हस्तं साङ्गुष्ठं दक्षिणेन हस्तेन गृह्णाति । 'ॐ सविता त्वाऽभिरक्षतु मित्रस्त्वमसि धर्मणाऽग्निराचार्यस्तव देवेन सवित्रा प्रसूतो बृहस्पतेर्ब्रह्मचारी भवामुकशर्मन्नपोऽशान समिध आधेहि कर्म कुरु मा दिवा स्वाप्सीः' इति कुमारं संशास्ति । संशासनं शिक्षणम् । अपोऽशानेत्याचमनाद्युपलक्षणम् । मूत्रोत्सर्गादौ निमित्ते शौचान्ते विधिनाऽऽचमनं कुरु । समिध आधेहि यावद्ब्रह्मचर्यं सायंप्रातः सायमेव वाऽग्निकार्यं कुरु । कर्म कुरु संध्योपासनादिकं गुरुशुश्रूषावेदाध्ययनादिकं च कर्म कुरु । मा दिवा स्वाप्सीः । दिवा निद्रां मा कुर्वित्यर्थः । बाढमिति कुमारोऽङ्गी कुर्यात् ।

अथाऽऽचार्यो दक्षिणेन हस्तेन कुमारस्य तूष्णीं दक्षिणांसस्योपरि सामीप्येन पृष्ठतः प्रवेश्य क्रमेणावाचीनमभिमृश्य 'ॐ मम हृदये हृदयं ते अस्तु, मम

---

१ क. ख. °यनं ब्रह्मचारी न ।

चित्तं चित्तेनान्वेहि, मम वाचमेकमना जुषस्व, बृहस्पतिस्त्वा नियुनक्तु मह्यं, मामेवानुसꣳरभस्व, मयि चित्तानि सन्तु ते, मयि सामीच्यमस्तु ते, मह्यं वाचं नियच्छतात् " [ इति ] **कुमारस्य हृदयमभिमृशति।**

**अप उपस्पृश्य** ' ॐ प्राणानां ग्रन्थिरसि समाविस्रसः " [ इति ] **तथैव नाभिदेशमभिमृशति। अप उपस्पृश्य** ' ॐ भूर्भुवः सुवः सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैः सुमेधा मेधया सुब्रह्मा ब्रह्मचारिभिः " [ इति ] **कुमारमभिमन्त्र्य** 'ॐ भूर्ऋक्षु त्वाऽग्नौ पृथिव्यां वाचि ब्रह्मणि ददेऽमुकशर्मन्। भुवो यजुःषु त्वा वायावन्तरिक्षे प्राणे ब्रह्मणि ददेऽमुकशर्मन्। सुवः सामसु त्वा सूर्ये दिवि चक्षुषि ब्रह्मणि ददेऽमुकशर्मन्। इष्टतस्ते प्रियोऽसान्यमुकशर्मन्। अनलस्य ते प्रियोऽसान्यमुकशर्मन्। इदं वत्स्यावः प्राण आयुषि वत्स्यावः प्राण आयुषि वसामुकशर्मन् " [ इति ] **पुनः कुमारमभिमन्त्रयते।**

**अग्निरायुष्मानिति सानुषङ्गाणां मन्त्राणां विश्वे देवा अग्न्यायुष्मदादयो यजूंषि। कुमारस्य दक्षिणहस्तग्रहणे विनियोगः।** ' अग्निरायुष्मान्स व० सोम आयुष्मान्स० यज्ञ आयुष्मान्स० ब्रह्माऽऽयुष्मत्त० देवा आयुष्म० ' **एतैः पञ्चभिः पर्यायैर्दक्षिणेन हस्तेन कुमारस्य दक्षिणं हस्तं साङ्गुष्ठं गृह्णाति।**

**आयुष्टे विश्वत इत्यस्य विश्वे देवा आयुर्दा अग्निरनुष्टुप्। अग्नौ पृथिव्यामित्यस्य वामदेवोऽग्न्यादयो यजुः। कुमारस्य दक्षिणकर्णे जपे विनियोगः** 'ॐ आयुष्टे वि० मिते " " अग्नौ पृथिव्या प्रतितिष्ठ वायावन्तरिक्षे सूर्ये दिवि याꣳ स्वस्तिमग्निर्वायुरादित्यश्चन्द्रमा आपो नु संचरन्ति ताꣳ स्वस्तिमनुसंचरामुकशर्मन्प्राणस्य ब्रह्मचार्यभूरमुकशर्मन् ' [ इति ] **कुमारस्य दक्षिणे कर्णे जपति।**

**आयुर्दा अग्न इत्यस्य विश्वे देवा आयुर्दा अग्निस्त्रिष्टुप्। अग्नौ पृथिव्यामित्यस्य वामदेवोऽग्न्यादयो यजुः। कुमारस्योत्तरकर्णे जपे विनियोगः।** 'ॐ आयुर्दा अ० दिमम् ' 'अग्नौ पृथिव्यां० भूरमुकशर्मन् ' [ इति ] **कुमारस्योत्तरे कर्णे जपति।** ' मेधां त इन्द्रो ददातु मेधां देवी सरस्वती। मेधां ते अश्विनावुभावाधत्तां पुष्करस्रजौ ' [ इति ] **कुमारस्य मुखं स्वमुखेन सह संनिधाय जपति।**

**कषकादिदेवेभ्यस्त्वां परिदद इति कुमारं ब्रूयात्। परिदेहीति कुमारः।**

**तत आचार्यः—**

•" कषकाय त्वा परिददाम्यन्तकाय त्वा परिददाम्यघोराय त्वा परिददामि गदाय त्वा परिददामि यमाय त्वा परिददामि मखाय त्वा

---

१ घ. ङ. आयुर्धा।

परिददामि वशिन्यै त्वा परिददामि पृथिव्यै त्वा सवैश्वानरायै परिददाम्यद्भ्यस्त्वा परिददाम्योषधीभ्यस्त्वा परिददामि वनस्पतिभ्यस्त्वा परिददामि द्यावापृथिवीभ्यां त्वा परिददामि सुभूताय त्वा परिददामि ब्रह्मवर्चसाय त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददामि सर्वाभ्यस्त्वा देवताभ्यः परिददामि ''

**इति कुमारं कपकादिभ्यः परिददाति । यदि पुनरुपनयनं तदाऽत्र सावित्रीवाचनं कृत्वा सप्तपलाशसमिद्धोमादिकं कर्म कार्यं नात्राक्षारलवणाशनादिव्रतं चरितत्वात् । पुनरुपनयनप्रयोगस्त्वग्रे वक्ष्यते । प्रथमोपनयने तु परिदानानन्तरं सप्तपलाशसमिद्धोमादित्रिवृदन्नहोमान्तं वक्ष्यमाणरीत्या कृत्वा त्र्यहव्रतमक्षारलवणाशनादिकं वक्ष्यमाणरीत्या देवतोपस्थानपूर्वकं कुमारेण कारयित्वा चतुर्थदिवसे प्रातः सावित्रीवाचनं चतुर्थदिवसीयत्रिवृदन्नहोमादिकं सर्वं क्रमेण समापयेदित्येकं मतम् । सद्यः सावित्रीवाचनमिति पौष्करसादिमतम् । एतन्मतेऽपि त्र्यहव्रतं भवत्येव । "** सद्यः पौष्करसादिः **" इत्यस्मिन्सूत्रे प्राग्व्रतचर्यापरिसमाप्तेः शुक्रियाणामध्ययनदर्शनात् । व्रतमनारभ्याध्ययनस्यानुपपन्नत्वादिति** मातृदत्तोक्तेः **।**

**तत्र पौष्करसादिमतमाश्रित्य प्रयोग उच्यते । परिदानानन्तरं कुमारेणाऽऽसादितसप्तपलाशसमिधां घृतेनाभ्यञ्जनं कारयित्वोपनयनाग्नावभ्याधापयति मन्त्रान्वाचयति च । कुमारः—"** ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवं मां मेधया प्रज्ञया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा '' **[ इति ] एकां समिधं घृतेनाभ्यक्तामभ्यादधाति । अग्नय इदमिति त्यागं कुर्यात् । तथैव द्वे द्वितीये । तथैवावशिष्टाश्चतस्रस्तृतीये । अग्नये समिधावाहार्षमिति द्वितीये मन्त्रसंनामः । अग्नये समिध आहार्षमिति तृतीये । त्यागस्तु पूर्ववदेवोभयत्रापि । मन्त्रान्तर्गतद्वितीयसमिच्छब्दे तु नोहः । तस्येन्धनमात्राभिधायित्वात्संनमनावचनाच्च । केचिदभ्याधानात्पूर्वं संकल्पमपि कुर्वन्ति, तन्न । सर्वेष्वङ्गभूतेषु कर्मस्वतिप्रसङ्गापत्तेः "** समस्ते क्रतावर्थं श्रूयमाणं यजमानः कामयते, यानि तु कामयति श्रावयति **" इति सूत्रेण साक्षात्कमिधातुसमभिव्याहार एव संकल्पकर्तव्यतोक्तेश्च । न ह्यत्र कमिधातुः श्रूयते । एवमन्यत्रापि ।**

**ततः शुल्बप्रहरणादिसंस्थाजपान्तं कर्म समाप्य "** न गायेन्न रोदेन्न नृत्यदर्शी भवेन्मधुमांसाशनादि वर्जयेत् **" इत्यादीनि धर्मसूत्रोक्तानि, एतद्व्रत एवात**

ऊर्ध्वमित्यारभ्य न स्त्रियमुपैतीत्यन्तानि गृह्योक्तानि च ब्रह्मचर्याश्रमव्रतानि कुमारायोपदिशति।

ततोऽग्ने व्रतपत इत्यादीनां चतुर्णां मन्त्राणां विश्वे देवा ऋषयः। अग्निवायुसूर्यव्रतपतयः क्रमेण देवता यजूंषि। उपस्थाने विनियोगः। "ॐ अग्ने व्रतपते व्रतं च० ध्यताम्" [ इति ] अग्निमुपतिष्ठते। "ॐ वायो व्रतपते० वायुम्। आदित्यव्रतप० आदित्यम्। व्रतानां व्रतप० व्रतपतिम्" अत्र व्रतपतिशब्देनाग्निर्ग्राह्यः। "व्रतेन वै मेध्योऽग्निर्व्रतपतिः" इति श्रुतेः। एतद्व्रतोपायनम्। अस्य समावर्तने त्यागः।

अत्र गुरवे वरं ददाति "गुरो वरं ते ददामि" इति। गुरुरत्राऽऽचार्यः। पितुरप्याचार्यत्वे पूर्वोपक्रान्ताऽन्यस्मात्प्रतिग्रहेणाऽऽनीता गौर्वरार्थे देया। गौर्वरो ब्राह्मणस्य ग्रामो राजन्यस्याजा वैश्यस्य। गोरभावे शक्त्यनुसारेण पञ्चविधमानान्यतममानेन द्रव्यं देयम्। गुञ्जापरिमितं सुवर्णमिति पैङ्ग्यः।

आचार्यः सप्तदशकृत्वोऽपान्य, देवस्य त्वा सवितुरिति मन्त्रस्य प्रजापतिः सविता यजुः। वरप्रतिग्रहणे विनियोगः। "ॐ देवस्य त्वा सवि० दक्षिणे रुद्राय गां तयाऽमृतत्वमश्यां वयो० गृह्णातु" [इति] वरं प्रतिगृह्णाति। वामहस्तेन तृणप्रदानं दक्षिणहस्तेन प्रतिग्रहः। सूत्रे दात्र इत्यनन्तरं भूयान्मय इति पठितं तथा वा ब्रूयात्। प्रतिनिधित्वेन द्रव्यदानपक्षेऽप्ययमेव मन्त्रः। निष्क्रयत्वेन द्रव्यदानपक्षे तु। उत्तानस्त्वेत्यस्य प्रजापतिराङ्गीरसो यजुः। प्रतिग्रहणे विनियोगः। "ॐ उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु" इति प्रतिगृह्णाति। अत्रापि सावित्रान्वाधीस्त इति केचित्। वस्तुतस्तूष्णीमेव प्रतिग्रहो न मन्त्रेण। एतस्या दक्षिणाया यागसंबन्धित्वाभावात्। "देवा वै वरुणमयाजयन्" इति श्रुतौ यागस्यैवोपक्रमेण तत्संबन्धिदक्षिणाप्रतिग्रह एव समन्त्रकप्रतिग्रहस्योक्तेः। "तास्त्रीणां दक्षिणानां दर्शयति" इति सूत्रकृदुक्तेश्च। अस्मिन्कल्पेऽपाननं तृणप्रदानं च नास्ति। व्यावृत्य प्रतिग्रहणमपि न भवति। भवतीति केचित्। प्रतिग्रहमन्त्रेऽप्यृष्यादिस्मरणे विकल्पः।

तत उदायुषेत्यस्य सोमः सोमो यजुः। कुमारस्योत्थापने विनियोगः। "ॐ उदायुषा० अनु" [ इति ] कुमारं वाचयन्नुत्थापयति। "ॐ सूर्याय त्वां परिद्दे" इति कुमारं ब्रूयात्। परिदेहीति कुमारः। आचार्यः "ॐ सूर्यैष ते पुत्रस्तं ते परिददामि" इति सूर्याय कुमारं परिददाति।

ततो ब्रह्मचार्याचार्यो वा—तच्चक्षुरित्यस्य सोमः सूर्यो यजुः । सूर्योपस्थाने विनियोगः । “ ॐ तच्चक्षुर्देव० दृशे ” इति सूर्यमुपतिष्ठते । अथाऽऽचार्यः ‘ॐ अग्निष्ट आयुः प्रतरां कृणोत्वग्निष्टे पुष्टिं प्रतरां दधात्विन्द्रो मरुद्भिरिह ते दधात्वादित्यस्ते वसुभिरादधातु ’ [ इति ] कुमाराय पूर्वासादितमूर्ध्वाग्रं दण्डं प्रदाय तूष्णीं पूर्वासादितमरिक्तं भिक्षापात्रं प्रदाय भिक्षाचर्यं चरेति प्राह। ततो ब्रह्मचार्योमित्युक्त्वा प्रथमं मातरं भिक्षेत तदभावे मातृस्थानीयामन्याममत्याख्यायिनीं ‘ भवति भिक्षां देहि ’ इति । ततो मित्रकुलेषु । तत्र पुमांसं भवान्भिक्षां ददात्विति । तद्भिक्षितं द्रव्यमाहृत्य भैक्षमिदं भो इत्याचार्याय निवेदयेत् । आचार्यस्तत्सुभैक्षमिति प्रतिगृह्णाति । अत्रापि सप्तदशकृत्वोऽपाननमिति केचित् ।

ततो ‘ ॐ यस्य ते प्रथमवास्यꣳ हरामस्तं त्वा विश्वे अवन्तु देवाः । तं त्वा भ्रातरः सुहृदो वर्धमानमनु जायन्तां बहवः सुजातम् ” [ इति ] कुमारस्य पूर्वनिहितं वासो गृह्णाति ।

## अथ त्रिवृदन्नहोमः ।

आचार्यो ब्रह्मचार्यन्वारब्धः समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा त्रिवृदन्नहोमकर्मणि या यक्ष्यमाणा देवतास्ताः सर्वाः परिग्रहीष्यामि । जातवेदसमग्निमिध्मेनेत्यादिप्रसाधनींदेव्यन्तमुक्त्वा प्रधानहोमे, अग्निं त्रिवृदन्नाहुत्या यक्ष्ये, सोमं त्रिवृदन्नाहुत्या यक्ष्ये, अग्निमन्नादं त्रिवृदन्नाहुत्या यक्ष्ये, अग्निमन्नपतिं त्रिवृदन्नाहुत्या यक्ष्ये, प्रजापतिं त्रिवृदन्नाहुत्या यक्ष्ये, विश्वान्देवांस्त्रिवृदन्नाहुत्या यक्ष्ये, सर्वा देवतास्त्रिवृदन्नाहुत्या यक्ष्ये, अग्निं स्विष्टकृतं हुतशेषाहुत्या यक्ष्ये, एता देवताः सद्यो यक्ष्य इत्युक्त्वा समित्त्रयमग्नावभ्यादध्यात् । अग्निं स्विष्टकृतं हुतशेषाहुत्या यक्ष्य इत्यनन्तरं वास्तोष्पतिं त्रिवृदन्नबलिना यक्ष्य इति केचिद्वदन्ति ।

ततोऽग्निं परिस्तीर्य मयि गृह्णामि यो नो अग्निरिति द्वाभ्यामात्मन्यग्निं गृह्णीयात् ।

ततो ब्रह्मासनकल्पनादि ।

पात्रासादने स्रुवं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं

संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यं ब्राह्मणपरिवेषणार्थमानीताद्बहिरेव संस्कृतादन्नाद्गृहीतमोदनापूपसक्त्वात्मकं त्रिवृदन्नं चाऽऽसादयेत् । तत्रापूपास्त्रिभ्योऽधिका होमपर्याप्ता ग्राह्याः। अपूपशब्देन गोधूमविकाराः सच्छिद्राः पूरिका उच्यन्ते । मण्डका इति केचित् । सक्तवो भर्जितयवपिष्टानि । एतदभावे भर्जितगोधूमपिष्टानि । अपूपा अक्षारलवणा ग्राह्याः।

---

ततः पवित्रकरणादि।

ब्रह्माऽत्र स एव । पृथग्वा । प्रथमपक्षे नात्र तद्वरणं वृतत्वात् । ततः प्रणीताप्रणयनादि परिधिपरिधानान्तं कृत्वाऽऽसादितं त्रिवृदन्नं बहिर्निष्पन्नत्वादग्नावधिश्रित्याभिघार्योत्तरत उद्वास्याद्भिः प्रोक्षति । अयं देवपवित्रसंस्कारो मातृदत्तमते। उज्ज्वलाकृन्मते तु नैष संस्कारः। शूद्रकर्तृकपाक एव तेनोक्तेः। एवं मासिश्राद्धादावपि। ततस्तमभिघार्याग्नेः पश्चाद्बर्हिषि निधायापूपानवखण्ड्यौदने प्रक्षिप्य सक्तव(क्तूं)श्च प्रक्षिप्य लौकिकमाज्यमासिच्य मिश्रयित्वा सप्त भागान्समान्कृत्वा, इदं विश्वेभ्यो देवेभ्य इदꣳ सर्वाभ्यो देवताभ्य इत्यन्तिमभागयोर्देवतानिर्देशं कुर्यात् । न वा विभागनिर्देशौ।

ततोऽग्निं परिषिच्येध्माभ्याधानादिप्रसाधनीदेवीहोमान्तं कृत्वा सर्पिर्मिश्रितं त्रिवृदन्नमवदानधर्मेणावदायावदाय जुहोति । दर्व्यामुपस्तीर्य मध्यात्पूर्वार्धाच्चावदायाभिघार्य हविः प्रत्यभिघारयतीत्येषोऽवदानधर्मः। विभागपक्षे क्रमेण तत्तद्भागादवदानम्। 'अग्नये स्वाहा। सोमाय स्वाहा । अग्नयेऽन्नादाय स्वाहा । अग्नयेऽन्नपतये स्वाहा । प्रजापतये स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा। सर्वाभ्यो देवताभ्यः स्वाहा ' इति क्रमेण हुत्वा दर्व्यामुपस्तीर्य सर्वेभ्यो हविर्भ्य उत्तरार्धात्सकृत्सकृन्मेक्षणेन हस्तेन वाऽवदाय द्विरभिघार्य न हविः प्रत्यभिघारयति। अग्नये स्विष्टकृते स्वाहेतिपूर्वाहुतिभिरसंसक्तामुत्तरार्धपूर्वार्धे जुहोति यथालिङ्गं त्यागाः[2]। विभागाभावपक्ष एकमेवावदानमेकत्वाद्धविषः। अयं चावदानधर्मो भाष्यकृन्मते। अन्येषां मते तु लाजहोमव्यतिरिक्तस्थले न कुत्राप्यवदानधर्मोऽस्तीति द्रष्टव्यम्।

ततः परिस्तरणविसर्गपरिषेकौ कृत्वा सर्वप्रायश्चित्तं हुत्वोपस्थानं कुर्यात्। शुल्बप्रहरणादिधर्माः कृताकृताः।

---

१ क. 'र्भानवज्वलनदर्भानिध्मं बर्हिराज्यं। २ ग. घ. ह. त्यागः।

तत उत्तरेणाग्निं कांश्चिद्दर्भानास्तीर्य तत्र किंचिदुदकमासिच्य पूर्ववदासादितमन्नत्रयमेकीकृत्य ' वास्तुपतये स्वाहा ' [ इति ] तेन बलिं करोति । वास्तुपतय इदं० । ततो बलिं परिषिञ्चति । नात्र सर्पिर्मिश्रणमवचनात् ।

ततोऽनेनान्नेनान्येन च सव्यञ्जनेन ब्राह्मणान्संभोज्य पूर्ववत्पुण्याहादीनि वाचयेत् । तत्र त्रिवृदन्नहोमकर्मणः पुण्याहं भवन्तो ब्रुवन्तु, त्रिवृदन्नहोमकर्मणः स्वस्त्ययनं भवन्तो ब्रुवन्तु, त्रिवृदन्नहोमकर्मण ऋद्धिं भवन्तो ब्रुवन्तु । इति वाक्येषु विशेषः । ओमस्तु पुण्याहम् । ओमस्तु स्वस्त्ययनम् । ओमस्त्वृद्धिरिति विप्राणां प्रतिवचनानि ।

ततः श्रद्धामेधे प्रीयेतामिति वदेत् । अयं च होमः स्थालीपाकमासिश्राद्धादिव्यतिरिक्तेषु सूत्रोक्तेषु कर्मसूपनयनारम्भविहितान्नोपस्थितिव्यतिरिक्तायां सूत्रकृद्विहितायामन्नोपस्थितौ कार्यः ।

## अथ व्याहृतिहोमवारुणीहोमादिसहितो होमप्रयोगः ।

आचार्यो ब्रह्मचार्यन्वारब्धः समित्त्रयमादायेत्यादि प्राणायामान्तं कृत्वा त्रिवृदन्नहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे, अग्निं त्रिवृदन्नाहुत्या यक्ष्य इत्यादि सर्वा देवतास्त्रिवृदन्नाहुत्या यक्ष्य इत्यन्तं देवताः पूर्ववदुक्त्वाऽङ्गहोमे वरुणमित्यादि समित्त्रयाभ्याधानान्तं कृत्वाऽग्निं परिस्तीर्य पात्रासादनादि प्रसाधनीदेवीहोमान्तं पूर्ववत्कृत्वा व्यस्तसमस्तव्याहृतिभिश्चतस्र आहुतीर्हुत्वा पूर्ववदग्नये स्वाहेत्याद्याः सप्ताऽऽहुतीस्त्रिवृदन्नेन हुत्वा, इमं मे वरुणेत्याद्याः षडाहुतीर्जयाभ्यातानराष्ट्रभृद्धोमपक्षे तानपि हुत्वाऽग्नये स्विष्टकृते स्वाहेत्येतेनैव स्विष्टकृद्धोमं विदध्यात् ।

ततः शुल्बप्रहरणादिहोमशेषं सर्वं समाप्य वास्तुबलिं दत्त्वा ब्राह्मणान्संभोज्य पुण्याहस्वस्त्ययनर्धीर्वाचयित्वा श्रद्धामेधे प्रीयेतामिति वदेत् ।

इति व्याहृतिहोमवारुणीहोमादिसहितस्त्रिवृदन्नहोमप्रयोगः ।

---

## अथाऽऽपूर्विकतन्त्रेण प्रयोगः ।

आचार्यो ब्रह्मचार्यन्वारब्धः समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा त्रिवृदन्नहोमकर्मणि या यक्ष्यमाणा देवतास्ताः सर्वाः परिग्रहीष्यामि ।

अग्निं त्रिवृदन्नाहुत्या यक्ष्ये। सोमं त्रिवृदन्नाहुत्या यक्ष्ये। अग्निमन्नादं त्रिवृदन्नाहुत्या यक्ष्ये। अग्निमन्नपतिं त्रिवृदन्नाहुत्या यक्ष्ये। प्रजापतिं त्रिवृदन्नाहुत्या यक्ष्ये। विश्वान्देवांस्त्रिवृदन्नाहुत्या यक्ष्ये। सर्वा देवतास्त्रिवृदन्नाहुत्या यक्ष्ये। अग्निं स्विष्टकृतं हुतशेषाहुत्या यक्ष्ये। एता देवताः सद्यो यक्ष्य इत्युक्त्वा समित्त्रयमग्नावभ्याधायाग्निं परिस्तीर्योत्तरेणाग्निं दर्भान्संस्तीर्य पात्राणि प्रयुनक्ति। दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं हविरासादनार्थं दर्भान्संमार्गदर्भानवज्वलनदर्भानाज्यं समिधं त्रिवृदन्नं चाऽऽसाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य पात्राण्युत्तानानि कृत्वा प्रोक्ष्य दर्वीनिष्टपनाद्याज्यसंस्कारान्तं कुर्यात्।

ततोऽग्नेः पश्चादासादितान्दर्भानास्तीर्य तत्राऽऽज्यं निधाय तदुत्तरतो दर्वीं निदध्यात्।

ततो देवपवित्राख्यसंस्कारेण संस्कृत्याभिघार्याग्नेः पश्चादास्तृतेषु दर्भेष्वोदनापूपसक्तून्निधाय तानेकीकृत्य लौकिकमाज्यमासिच्य मिश्रयित्वाऽग्निं परिषिच्याऽऽसादितामेकां समिधमभ्याधाय दर्व्योपहत्योपहत्याष्टावाहुतीर्मिश्रितेन त्रिवृदन्नेन जुहोति— "अग्नये स्वाहा। सोमाय स्वाहा। अग्नयेऽन्नादाय स्वाहा। अग्नयेऽन्नपतये स्वाहा। प्रजापतये स्वाहा। विश्वेभ्यो देवेभ्यः स्वाहा। सर्वाभ्यो देवताभ्यः स्वाहा। अग्नये स्विष्टकृते स्वाहा" इति पूर्वाहुतिभिरसंसक्तामुत्तरार्धपूर्वार्धे जुहोति। यथालिङ्गं त्यागाः[1]। अन्त्याहुतिः पूर्वाहुतिभिरसंसक्तोत्तरार्धपूर्वार्धे होतव्या। नात्रावदानधर्म आपूर्विकत्वात्।

ततः परिस्तरणविसर्गपरिषेकौ कृत्वा सर्वप्रायश्चित्तं हुत्वोपस्थानं कुर्यात्। न वोपस्थानम्। सर्वप्रायश्चित्तहोमानन्तरं वोत्तरपरिषेकः।

तत उत्तरेणाग्निं कांश्चिद्दर्भानास्तीर्य तत्र किंचिदुदकमासिच्य पूर्ववदासादितमन्नत्रयमेकीकृत्य "वास्तुपतये स्वाहा" [ इति ] तेन बलिं करोति। वास्तुपतय इदं०। ततो बलिं परिषिञ्चति। नात्र सर्पिर्मिश्रणमवचनात्।

ततोऽनेनान्नेनान्येन च सव्यञ्जनेन ब्राह्मणान्संभोज्य पूर्ववत्पुण्याहादीनि वाचयेत्। ततः श्रद्धामेधे प्रीयेतामिति वदेत्।

इत्यापूर्विकतन्त्रेण त्रिवृदन्नहोमः।

---

१ ख. ग. घ. ङ. त्यागः।

उपनयनसमावर्तनवत्सातिरिक्तगोकृतगोस्तनपानशालाकरणवास्तुशमनसीमन्तोन्नयनपुंसवननामकरणान्नप्राशनचूडाकरणगोदानेष्वेवायं भवति नान्यत्र। पाणिग्रहणादिरग्निरित्येतत्खण्डोक्तरीत्या पुनःसंधानकरणपक्षे तत्राप्ययं भवति। समावर्तनादित्रिवृदन्नहोमे वास्तुबलेर्विकल्पः।

---

ततस्त्र्यहव्रतं कुमारायोपदिशति। इक्षुविकारलवणमाषमुद्गादिधान्यमधुमांसाशनं मञ्चकाद्युपरिशयनं मृन्मयेन जलपानं मृन्मयपात्रे कांस्यपात्रे च भोजनं शूद्रायोच्छिष्टदानं दिवाशयनं च न कार्यम्। उभौ कालौ भिक्षाचर्यमुदकुम्भाहरण सायमुपक्रम्य प्रत्यहमुभौ कालौ प्रत्यहं सायमेव वाऽग्निकार्यं कर्तव्यमिति। त्र्यहव्रतसमाप्त्यनन्तरमिक्षुविकारलवणशमीधान्यानामशने विकल्पः। उदकुम्भाहरणमग्निकार्यं च ब्रह्मचर्यव्रतसमाप्तिपर्यन्तमेव। ब्रह्मचारी बाढमित्युक्त्वाऽग्ने व्रतपत इत्यादिभिर्देवतोपस्थानं कृत्वा त्र्यहव्रतं स्वी कुर्यात्।

तत आचार्यो यथाचारं गायत्रीपूजनं विधाय गायत्र्युपदेशार्थमपरेणाग्निमासादितं कूर्चमुदगग्रं निधाय ‘ राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् ’ [ इति ] तस्मिन्प्राङ्मुख उपविशेत्। ततो ब्रह्मचारी तूष्णीमादित्याय नमस्काराञ्जलिं कृत्वाऽऽचार्यस्य दक्षिणं पादं सव्यान्वारब्धेन दक्षिणेन हस्तेनाधस्तादुपरिष्टाच्चावमृश्य पाणी व्यत्यस्य ताभ्यां सकुक्षिकौ तस्य पादौ धारयेत्। इदमुपसंग्रहणम्। अत्राऽऽचार्येण गुप्तं नाम कुमारायोपांशु कथनीयम्। कुमारस्तेनोपांशूच्चारितेन नाम्नाऽऽचार्यमभिवादयेत्। एतन्नामाविज्ञाने तु व्यावहारिकेण नाम्नोपांश्वेवाभिवादयेत्।

तत्राभिवादनप्रकार इत्थम्। दक्षिणं बाहुं सव्यान्वारब्धं श्रोत्रसमं प्रसार्यामुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्माऽहं भो अभिवादय इत्युपांशूच्चारयञ्शिरोवनतिपूर्वकं तिष्ठन्नाचार्यं नमस्कुर्यात्। इदमभिवादनम्।

तत आचार्येणाऽऽयुष्मान्भवामुकशर्मा३ अ, इत्यविसर्गाकारोत्तरेण प्लुतान्त्यस्वरोच्चारणेन केवलं प्लुतान्त्यस्वरोच्चारणेन वोपांशुप्रयुक्ताशीर्वाद आसीनो विनयावनतो भूत्वा सर्ववेदारम्भार्थत्वेन सावित्र्युपदेशं वाञ्छन्नध्येषणारूपं मन्त्रद्वयमेकश्रुत्या पठेत्। अधीहि भो इत्युक्त्वा सावित्रीं भो अनुब्रूहीति। तत उत्तानीकृतवामपाण्यङ्गुष्ठाङ्गुलीर्न्यङ्मुखीकृतदक्षिणपाण्यङ्गुष्ठाङ्गुलीभिर्दृढसंयोगिनीः कृत्वा दक्षिणाङ्के निक्षिप्याऽऽसीत।

तत आचार्यो गणानां त्वेत्यस्य विश्वे देवा गणपतिर्जगती। कुमाराभि:

मन्त्रणे विनियोगः। 'ॐ गणानां त्वा ० सादनम्' [ इति ] कुमारमभिमन्त्रयते। ततस्तमञ्जलिं स्वपाणिभ्यामादाय, व्यस्तसमस्तव्याहृतीनां गायत्र्याश्चर्ष्यादि पूर्ववत्स्मृत्वा, कुमारस्य गायत्र्युपदेशे विनियोग इति विनियोगवाक्यं स्मृत्वा,

" भूस्तत्सवितुर्वरेण्यं, भुवो भर्गो देवस्य धीमहि, सुवर्धियो यो नः प्रचोदयात्, भूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। सुवर्धियो यो नः प्रचोदयात्। भूर्भुवः सुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् "

सावित्रीमेवंप्रकारेण पच्छोऽर्धर्चशोऽनवानमिति प्राङ्मुखं कुमारं वाचयति। अत्र सर्वानुवाचनस्यादृष्टार्थत्वादवसानं विना यथा वाचनं स्यात्तथा वाचनं कार्यम्। सर्वथैवमुच्चारणाशक्तौ यथाशक्ति वाचयति। यथाशक्ति वाचयन्संधिकृतं वर्णविकारं नान्यथा कुर्वीतेति कौस्तुभे। तैत्तिरीयाणां गायत्र्यारम्भेणैव ऋग्यजुःसामात्मकवेदत्रयाध्ययनाधिकारो भवति।

ततः कर्माङ्गदेवताप्रीत्यर्थं शतद्वयं पञ्चाशद्वाऽल्पशक्तौ दश वा ब्राह्मणान्भोजयित्वा तेभ्यो दक्षिणां दद्यात्। ततः कर्माङ्गदेवताप्रीत्यर्थं गन्धताम्बूलादिभिर्ब्राह्मणपूजनं तेभ्यो भूयसीदक्षिणादानं च कृत्वा 'ॐ अग्ने तेजस्विन्' इत्यादिभिर्मन्त्रैराशिषो ग्राह्याः। ततः प्रमादादिति कर्मसाद्गुण्याय विष्णुं स्मरेत्।

ततो ब्रह्मचारी स्वकाले काल्प्राप्तां मध्याह्नसंध्यां कुर्यात्। नात्र सायमारम्भो नियतोऽनुक्तत्वात्। " संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु " इत्युक्तत्वात्।

"यावद्ब्रह्मोपदेशस्तु तावत्संध्यादिकं च न।
जाते ब्रह्मोपदेशे तु कर्म संध्यादिकं चरेत्" ॥

इति जैमिनिवचनतोऽपि मध्याह्नसंध्याया एव प्रथमतः प्राप्तत्वाच्च। 'त्र्यहे पर्यवेते तथैव त्रिवृताऽन्नेन ब्राह्मणान्परिविष्य' इतिसूत्रे तथेति वचनेनोपनयनाग्निप्राप्तेर्ज्ञापितत्वात्, बौधायनीय उपनयनाग्नेः कर्मसमाप्त्यन्तं व्यक्ततया धारणस्योक्तेश्चोपनयनाग्निश्चतुर्थदिवसीयकर्मसमाप्त्यन्तं संरक्षणीयः। तस्मिन्नेव

१ ग. 'त्र्येत्। त°'। २ घ. 'यं पञ्चाशद्वयं प'।

कर्मसमाप्तिपर्यन्तं सायंप्रातः सायमेव वाऽग्निकार्यसंज्ञकं समिदभ्याधानं कुर्यात्। तदनन्तरं लौकिकाग्नौ। तत्प्रयोगस्त्वग्रे वक्ष्यते।

" जाते ब्रह्मोपदेशे तु कर्म संध्यादिकं चरेत् "

इति जैमिनिवचनेनोपदेशोत्तरं संध्योपासनकर्तव्यता पूर्वत्र प्रदर्शिता। तच्चोपासनं कथं कार्यमित्याकाङ्क्षायां संध्यात्रयस्वरूपप्रदर्शनपूर्वकं तदभिधीयते।

तत्र संध्यास्वरूपं प्राह श्रुतिः—

" रक्षाꣳसि ह वा पुरोनुवाके तपोग्रमतिष्ठन्त तान्प्रजापतिर्वरेणोपामन्त्रयत तानि वरमवृणीताऽऽदित्यो नो योद्धा, इति तान्प्रजापतिरब्रवीद्योधयध्वमिति तस्मादुत्तिष्ठन्तꣳ ह वा तानि रक्षाꣳस्यादित्यं योधयन्ति यावदस्तमन्वगात्तानि ह वा एतानि रक्षाꣳसि गायत्रियाऽभिमन्त्रितेनाम्भसा शाम्यन्ति तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्रियाऽभिमन्त्रिता आऽप ऊर्ध्वं विक्षिपन्ति ता एता आपो वज्री भूत्वा तानि रक्षाꣳसि मन्देहारुणे द्वीपे प्रक्षिपन्ति यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधून्वन्त्युद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद " इति।

वक्ष्यमाणप्रकारेण प्राणायामादिकं कर्म कुर्वन्वक्ष्यमाणयथोक्तनामवर्णरूपोपेतसंध्याशब्दवाच्यमादित्यं ब्रह्मेति ध्यायन्नैहिकमामुष्मिकं च सकलं भद्रमश्नुते। य एवमुक्तध्यानेन शुद्धान्तःकरणो ब्रह्म साक्षात्कुरुते स पूर्वमपि ब्रह्मैव सन्नज्ञानाज्जीवत्वं प्राप्तो यथोक्तज्ञानेन तदज्ञानापगमे ब्रह्मैव प्राप्नोतीत्यर्थः। अत्राभिध्यानमुपासनम्।

व्यासोऽप्येतदेवाभिप्रेत्याऽऽह—

" न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह।
सोऽहमस्मीत्युपासीत विधिना येन केनचित् " इति॥

स्मृत्यन्तरेऽपि—

" संध्येति सूर्यगं ब्रह्म संधानादिविधानतः।
ब्रह्माद्यैः सकलैर्भूतैः स्तम्बान्तैः सच्चिदात्मनः॥

तस्य दासोऽहमस्मीति सोऽहमस्मीति वा मतिः ।
भवेदुपासकस्येति ह्येवं वेदविदो विदुः " इति ॥

संध्यास्वरूपमाह पराशरः—

" अहोरात्रस्य यः संधिः सूर्यनक्षत्रवर्जितः ।
सा तु संध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः " इति ॥

अत्र यद्यपि कालवाचकत्वेन संध्याशब्दः प्रतीयते तथाऽपि तस्मिन्काल उपास्या देवता संध्याशब्देनोपलक्ष्यते । तथा च देवताया उपासनमुपलक्ष्य पराशरवचने कर्मपरत्वेन संध्याशब्दः प्रयुक्तः । अथवा संधौ भवा क्रिया संध्या ।

अत एव व्यासः—

"उपास्ते संधिवेलायां निशाया दिवसस्य च ।
तामेव संध्यां तस्मात्तत्प्रवदन्ति मनीषिणः " इति ॥

तामेव क्रियां[1] विदधाति याज्ञवल्क्यः—

" संधौ संध्यामुपासीत नास्तगे नोद्गते रवौ " इति ।

सा च संध्या त्रिविधा ।

तदुक्तमत्रिणा—

" संध्यात्रयं तु कर्तव्यं द्विजेनाऽऽत्मविदा सदा " इति ।

तत्र कालभेदेन देवताया नामादिभेदमाह व्यासः—

" गायत्री नाम पूर्वाह्णे सावित्री दिनमध्यके ।
सरस्वती च सायाह्ने सैव संध्या त्रिषु स्मृता ॥
प्रतिग्रहान्नदोषात्तु पातकादुपपातकात् ।
गायत्री प्रोच्यते तस्माद्गायन्तं त्रायते यतः ॥
सवितृद्योतनात्सैव सावित्री परिकीर्तिता ।
जगतः प्रसवित्री वा वाग्रूपत्वात्सरस्वती " इति ॥

वर्णभेदः स्मृत्यन्तरे विहितः—

"गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका ।
सरस्वती तथा कृष्णा उपास्या वर्णभेदतः " इति ॥

---

१ ख. ग. घ. ङ. 'ति योगया' ।

तत्रैव—"गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी ।
सरस्वती विष्णुरूपा उपास्या रूपभेदतः" इति ॥

स्मृत्यन्तरे—

"उद्यदादित्यसंकाशां पुस्तकाक्षकरां स्मरेत् ।
कुम्भाजिनधरां रक्तगन्धाढ्यां हंसगामिनीम् ॥
रक्तमाल्याम्बरां देवीं प्रातर्ब्राह्मीं विचिन्तयेत् ॥
श्वेतां श्वेताम्बरां देवीं श्वेतगन्धानुलेपनाम् ।
त्रिनेत्रां वरशूलौ च परशुं चाभयं तथा ॥
वृषगां रुद्रशक्तिं च मध्याह्ने संविचिन्तयेत् ।
कृष्णां कृष्णाम्बरां देवीं कृष्णगन्धानुलेपनाम् ॥
शङ्खचक्रगदापद्मधरां देवीं सुपर्णगाम् ।
विष्णुशक्तिं तु सायाह्ने सर्वदा संविचिन्तयेत्" इति ॥

## संध्याकालनिर्णयः ।

अथ कालः । तत्र प्रातःसंध्यायाः कालपरिमाणमाह दक्षः—

"रात्र्यन्त्ययामनाडी द्वे संध्यादिः काल उच्यते ।
दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः" इति ॥

अग्निस्मृतौ तूदयात्प्राग्द्विमुहूर्त उक्तः—

"संध्याकालः प्रागुदयाद्विप्रस्य द्विमुहूर्तकः" इति ।

एतद्ब्रह्माह्निककर्तृपरमिति महेशादयः ।

धर्मसारे—"उत्तमा तारकोपेता मध्यमा लुप्तनारका ।
अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता" इति ॥

मध्याह्नसंध्यायाः कालपरिमाणं तत्रैव—

"अध्यर्धयामादासायं संध्या माध्याह्निकी स्मृता" इति ।

स्मृतिसंग्रहे—

"मध्याह्नस्नानादूर्ध्वं यः कालस्त्वव्यवधानतः ।
तत्र मध्याह्नसंध्या स्यादूर्ध्वं गौणः स्मृतो बुधैः" इति ॥

---

१ ख. ग. घ. ङ. पर्शुं चाभीतिमेव च । वृं ।

सायंसंध्यायाः कालपरिमाणं धर्मसारे—

" उत्तमा सूर्यसहिता मध्यमा लुप्ततारका ।
कनिष्ठा तारकोपेता सायंसंध्या त्रिधा मता " इति ॥

स्मृत्यन्तरे—

" प्रातःसंध्यां सनक्षत्रां मध्यमां स्नानकर्मणि ।
सादित्यां पश्चिमां संध्यामुपासीत यथाविधि " इति ॥

स्नानकर्मणीत्यत्र निर्वृत्त इति शेषः । तेन माध्याह्निकस्नानानन्तरमित्यर्थः

संध्याया गौणकालमाह गोभिलः—

" उदयास्तमयादूर्ध्वं यावत्स्याद्घटिकात्रयम् ।
तावत्संध्यामुपासीत प्रायश्चित्तं ततः परम् " इति ॥

## अथ देशः ।

व्यासः—" गृहे त्वेकगुणा संध्या गोष्ठे दशगुणा स्मृता ।
शतसाहस्रिका नद्यामनन्ता विष्णुसंनिधौ ।
बहिः संध्या दशगुणा गर्तप्रस्रवणेषु च ।
खाते तीर्थे शतगुणा ह्यनन्ता जाह्नवीजले " इति ॥

विष्णुरिति शिवादीनामुपलक्षणम् । खाते देवखाते ।

शातातपः—

" अनृतं मद्यगन्धं च दिवामैथुनमेव च ।
पुनाति वृषलस्यान्नं बहिः संध्या ह्युपासिता " इति ॥

यदि विहरणाद्यङ्गलोपस्तदा गृह एव संध्याद्वयं कार्यमित्याहात्रिः—

" संध्यात्रयं तु कर्तव्यं द्विजेनाऽऽत्मविदा सदा ।
उभे संध्ये तु कर्तव्ये ब्राह्मणाद्यैर्गृहे सदा " इति ॥

यद्यपि प्रशस्तत्वाद्बहिरेव संध्यात्रयं कर्तव्यत्वेन प्राप्तं तथाऽपि श्रौतत्वे विहरणस्य प्राबल्यात्तदनुरोधेन सायंप्रातःसंध्ये गृहेऽभ्यनुज्ञायेते ।

भारद्वाजसूत्रव्याख्यातारस्तु सायं संध्यायां विशेषमाहुः—

" आहिताग्निर्गार्हपत्यस्य पश्चात्सायं संध्यामुपासीत " इति ।

---

१ ग. 'रमेवेत्य' ।

## अथ प्रयोगः ।

बृहस्पतिः—

" प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहितः ।
प्राणायामत्रयं कृत्वा ध्यायेत्संध्यामिति श्रुतिः " इति ॥

स्मृतिसंग्रहे—

" बद्ध्वाऽऽसनं नियम्यासून्स्मृत्वा चर्ष्यादिक तथा ।
संनिमीलितदृङ्मौनी प्राणायामं समभ्यसेत् " इति ॥

स्मृतिसारे—

" प्राणानायम्य विधिवद्वाग्यतः संयतेन्द्रियः ।
अथ संध्यामुपासिष्य इति संकल्पमाचरेत् " इति ॥

प्राणायामात्पूर्वमाचमनमपि कर्तव्यम् ।

तदुक्तं स्मृत्यर्थसारे—

" आचम्यासून्समायम्य संध्योपासनमाचरेत् " इति ।

असून्प्राणान् ।

आचमनप्रकार उक्तो धर्मसूत्रे—

" आसीनस्त्रिराचामेद्धृदयंगमाभिरद्भिस्त्रिरोष्ठौ परिमृजेद्द्विरित्येके सकृदुपस्पृशेद्द्विरित्येके दक्षिणेन पाणिना सव्यमभ्युक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशेच्चक्षुषी नासिके श्रोत्रे च " इति ।

गौतमोऽपि—

" शुचौ देश आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीत्यामणिबन्धात्पाणि प्रक्षाल्यति वाग्यतो हृदयस्पृशस्त्रिश्चतुर्वाऽप आचामेत्पादौ चाभ्युक्षेत्खानि चोपस्पृशेत् " इति ।

याज्ञवल्क्योऽपि—

" अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः ।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् " इति ॥

अत्रोपस्पर्श आचमनम् ।

ब्राह्मतीर्थस्वरूपमाह याज्ञवल्क्यः—

" कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
[illegible] " इति ॥

एतदेव शङ्खलिखिताभ्यां स्पष्टीकृतम्—

" अङ्गुष्ठमूलस्योत्तरतः प्रागग्रायां लेखायां ब्राह्मं तीर्थं, प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यं, कनिष्ठिकातलयोरन्तरा प्राजापत्यं, पूर्वेणाङ्गुलिपर्वाणि दैवतम् " इति।

आचमनीयमुदकं विशिनष्टि शङ्खः—

" अद्भिः समुद्धृताभिस्तु हीनाभिः फेनबुद्बुदैः।
वह्निना न च तप्ताभिरक्षाराभिरुपस्पृशेत् " इति॥

याज्ञवल्क्योऽपि—

" अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः।
हृत्कण्ठतालुगाद्भिस्तु यथासंख्यं द्विजातयः॥
शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः " इति।

मनुरपि—

" हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः।
वैश्योऽद्भिस्तालुगाभिस्तु शूद्रः स्पृष्टाभिरन्ततः " इति॥

प्रचेता अपि—

" अनुष्णाभिरफेनाभिः पूताभिर्वस्त्रचक्षुषा।
हृद्गताभिरशब्दाभिस्त्रिश्चतुर्वाऽद्भिराचमेत् " इति॥

हृदयपर्यन्तमुदकगमनमाचमने नियतमन्यथोच्छिष्टदोष इत्युक्तं गोभिलगृह्ये—

" हृदयस्पृशस्त्वेवाप आचामेदुच्छिष्टो हैवातोऽन्यथा भवति " इति

इदमुपलक्षणं कण्ठपर्यन्तत्वादीनाम्।

उदकस्य ग्रहणप्रकारं परिमाणं चाऽऽह भारद्वाजः—

" आयतं पर्वतः कृत्वा गोकर्णाकृतिवत्करम्।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः॥
मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाऽऽचमनं चरेत्।
माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः " इति॥

स च पाणिर्दक्षिणो द्रष्टव्यः—

" त्रिः पिबेद्दक्षिणेन तु " इति पुराणवचनात्।

आचमने मन्त्रविशेषमिन्द्रियोपस्पर्शनं चाऽऽह भारद्वाजः—

"देव्याः पादैस्त्रिभिः पीत्वा खानि पश्चादुपस्पृशेत्" इति।

देव्या गायत्र्याः।

अत्रिणा तु—

"आपो हि ष्ठादिभिर्मन्त्रैस्त्रिभिस्त्रिः प्राशनं चरेत्" इत्युक्तम्।

एतच्चाऽऽचमनं द्विवारं कर्तव्यम्।

तदुक्तं षट्त्रिंशन्मते—

"होमे भोजनकाले च संध्ययोरुभयोरपि।
आचान्तः पुनराचामेज्जपहोमार्चनादिषु" इति॥

पृथ्वीचन्द्रोदये देवीनन्दिपुराणयोः—

"दाने प्रतिग्रहे होमे संध्यात्रितयवन्दने।
बलिकर्मणि चाऽऽचामेदादौ द्विर्नान्ततो द्विजः" इति।

प्राणायामलक्षणं मनुराह—

"प्रणवं व्याहृतीः सप्त गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते" इति॥

याज्ञवल्क्योऽपि—

"गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम्।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः" इति॥

अत्र पाठजपशब्दाभ्यां वर्णाभिध्यानमात्रं नोच्चारणं तस्यासंभवात्।

स्मृत्यन्तरे—

"शनैर्नासापुटे वायुमुत्सृजेन्न तु वेगतः।
न कम्पयेच्छरीरं तु स योगः परमो मतः" इति।

व्यासः—"आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत्।
ब्रह्माणं केशवं शंभुं ध्यायन्देवाननुक्रमात्" इति।

योगयाज्ञवल्क्यः—

"पूरकः कुम्भको रेच्यः प्राणायामस्त्रिलक्षणः।
नासिकाधृत उच्छ्वासो ध्मातः पूरक उच्यते।
कुम्भको निश्चलश्वासो रिच्यमानस्तु रेचकः" इति।

याज्ञवल्क्यः—

" दक्षिणे रेचकं कुर्याद्वामेनाऽऽपूर्य चोदरम्।
कुम्भकेन जपं कुर्यात्प्राणायामस्य लक्षणम् " इति।

दक्षस्तु—" वामेन रेचकं कुर्याद्दक्षेणाऽऽपूर्य चोदरम्।
कुम्भकेन जपं कुर्यात्प्राणायामस्य लक्षणम् " इत्याह।

स्मृतिसंग्रहे—

" पञ्चाङ्गुलिभिर्नासाग्रं पीडयेत्प्रणवेन वै।
मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः।
कनिष्ठानामिकाङ्गुष्ठैर्यतेश्च ब्रह्मचारिणः " इति।

संध्यामुपासिष्य इति पूर्वं संकल्पकरणमुक्तं तत्र संकल्पप्रकारो मतभेदेन त्रिविधः। कौमारिलमते तावत्संध्यावन्दनादिषु नित्येषु कर्मस्वधिकारवाक्यचोदितफलाभावेऽपि मन्त्रलिङ्गार्थवादादिबहुवाक्यपर्यालोचनयोपात्तदुरितक्षय एव फलत्वेन परिकल्पित इति तदनुरोधादुपात्तदुरितक्षयार्थं प्रातःसंध्यामुपासिष्ये ज्योतिष्टोमेन यक्ष्य इत्यादिरीत्या सर्वेषु नित्यकर्मसु संकल्पः।

गुरुमते तु विधिसिद्धिरेव विधेः फलमिति चोदितफलाभावेऽपि विधिसिद्ध्यर्थं प्रातःसंध्यामुपासिष्ये, ज्योतिष्टोमेन यक्ष्य इत्यादिरीत्या नित्येषु संकल्पः।

शारीरकभाष्ये तु ' जन्माद्यस्य यतः ' इति सूत्रे यतो वेत्यादिविषयवाक्यव्याख्याने ब्रह्मणः सकाशादेव प्रपञ्चजातमुत्पन्नं, यथा मृदः सकाशादुत्पन्नो घटः स्वोपादानां मृदमत्यक्त्वा जीवति प्रलीयमानोऽपि मृद्येव प्रलीयते, एवं ब्रह्मणः सकाशाज्जातं जगदपि ब्रह्मात्यक्त्वा जीवति प्रलीयमानं च ब्रह्मण्येव प्रलीयत इत्युक्त्वोत्तरशास्त्रसंदर्भेण ब्रह्मणि समन्वयादिकं प्रतिपाद्य ब्रह्मार्पणबुद्ध्यैव कर्माणि कर्तव्यानीत्युक्तम्। एतन्मते श्रीपरमेश्वरप्रीत्यर्थं प्रातःसंध्यामुपासिष्ये ज्योतिष्टोमेन यक्ष्य इत्यादिरीत्या संकल्पः।

इति संकल्पप्रकारः।

## ततो मार्जनम्।

तदुक्तं प्रयोगपारिजाते—

" संकल्प्य मार्जनं कुर्यादापो हि ष्ठादिभिस्त्रिभिः " इति।

स्मृतिसंग्रहेऽपि—

" आपो हीति त्रिभिर्मन्त्रैः शिरस्यंसे च विप्रुषः ।
यस्य क्षयायेत्यधस्तात्क्षिप्त्वाऽद्भिः परिषेचयेत् ॥
मध्यमानामिकाङ्गुष्ठैः क्षेपणं तु कुशोदकैः ।
रक्षस्तमोमोहजाताञ्जाग्रत्स्वप्नसुषुप्तिजान् ॥
वाङ्मनःकायजान्दोषान्नवैतान्मार्जनं दहेत् " इति ।

प्रजापतिरपि—

" ऋगन्ते मार्जनं कुर्यात्पादान्ते वा समाहितः ।
अर्धर्चान्तेऽथवा कुर्याच्छिष्टानां मतमीदृशम् " इति ।

प्रकारान्तरं संग्रहे—

" ससथत्रयमाकाशे मस्तके वरवत्रयम् ।
भूम्यां प्रोक्तं नत्रयं तु एतन्मार्जनलक्षणम् " इति ।

वरवत्रयमस्तक इति पाठस्तु असंगत एव । क्वचिदिवि स्याद्वरत्रत्रयमिति द्वितीयपादपाठः । नाभ्या आसीदन्तरिक्षमिति मन्त्रेऽन्तरिक्षस्य हृदयजन्यत्वाज्जन्यजनकयोरभेदोपचारस्वीकारेण हृदयशब्देनाऽऽकाशोऽत्र गृह्यते । अत्र नाभिशब्दो हृदयलक्षकः । अन्तरिक्षशब्देनाऽऽकाशः । नभोऽन्तरिक्षं गगनमिति कोशात् । एवं शीर्ष्णो द्यौः समवर्ततेत्यत्र पद्भ्यां भूमिरित्यत्रापि चाभेदोपचारस्वीकारेण शिरःपच्छब्दाभ्यां क्रमेण द्युभूम्योर्ग्रहणम् । एतान्यक्षराणि पादान्तप्रदर्शनार्थानि । चक्षसे । रसः । जिन्वथ । इत्येतेषु पादान्तेषु, आकाशे हृदये मार्जनं कुर्यात् । मयोभुवः । मातरः । गमाम वः । इत्येतेषु पादान्तेषु मस्तके शिरसि । दधातन । इह नः । च नः । इत्येतेषु पादान्तेषु भूम्यां पादयोरित्यर्थः ।

हारीतः—

" मार्जनार्चनबलिकर्मभोजनानि देवतीर्थेन कुर्यात् " इति ।

तच्च मार्जनं न धाराच्युतोदकेन कार्यम् ।

तथा च ब्रह्मा—

" धाराच्युतेन तोयेन संध्योपास्तिर्विगर्हिता ।
पितरो न प्रशंसन्ति देवता ऋषयस्तथा " इति ।

---

१ ग. तत्र ।

कथं तर्हि मार्जनमिति तत्राऽऽह स एव—

" नद्यां तीर्थे ह्रदे वाऽपि भाजने मृन्मयेऽपि वा।
औदुम्बरेऽथ सौवर्णे राजते दारुसंभवे।
कृत्वा तु वामहस्ते वा संध्योपास्तिं समाचरेत्" इति।

कृत्वेत्यनन्तरमुदकमिति शेषः ।

मृन्मयादिपात्रसद्भावे तु वामहस्तप्रतिषेधः—

" वामहस्ते जलं कृत्वा ये तु संध्यामुपासते।
सा संध्या वृषली ज्ञेया असुरास्तैस्तु तर्पिताः " इति स्मरणात्।

भाजन इत्यादिकं गृहसंध्याविषयं न तु नद्यादिसंनिधिकर्तव्यसंध्याविषयम्। पूर्वमार्जनानन्तरमापो वा इदमित्यनुवाकेनाभिमन्त्रणं कुर्वन्ति शिष्टाः। वस्तुतस्तु सर्वात्मकत्वेनाभिध्यानमात्रमनेन कार्यम्।

ततः समन्त्रमुदकपानं पुनर्मार्जनं च कुर्यात्।

तत्राऽऽह बौधायनः—

" अथातः संध्योपासनविधिं व्याख्यास्यामस्तीर्थं गत्वा प्रयतोऽभिषिक्तः प्रक्षालितपाणिपादोऽप आचम्याग्निश्च मा मन्युश्चेति सायमपः पीत्वा सूर्यश्च मा मन्युश्चेति प्रातः सपवित्रेण पाणिना सावित्र्या सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति " इति।

भारद्वाजः—" सायमग्निश्च मेत्युक्त्वा प्रातः सूर्येत्यपः पिबेत्।
आपः पुनन्तु मध्याह्ने ततश्चाऽऽचमनं चरेत् " इति।

प्रातः सूर्येत्यत्राप्युक्त्वेत्यस्यान्वयः। सूर्य इतीत्यपेक्षिते सूर्येतीति संधिश्छान्दसः।

कात्यायनोऽपि—

" शिरसो मार्जनं कुर्यात्कुशैः सोदकबिन्दुभिः।
प्रणवेन व्याहृतिभिर्गायत्र्येति क्रमात्त्रयम्।
अब्दैवताभिर्ऋग्भिश्च चतुर्थमिति मार्जनम् " इति।

मार्जनानन्तरं प्रजापतिः—

" उद्धृत्य दक्षिणे हस्ते जलं गोकर्णवत्कृते।
निःश्वसन्नासिकाग्रेषु पाप्मानं पुरुषं स्मरेत्।

ऋतं चेतितृचं वाऽपि द्रुपदां वा जपेदृचम् ।
दक्षनासापुटेनैव पाप्मानमपसारयेत् ।
तज्जलं नावलोक्याथ वामभागे क्षितौ क्षिपेत् " इति ।

## अथार्घ्यदानम् ।

तच्चाऽऽदित्योपासनं कुर्वन्कुर्यात् ।

तथा च श्रुतिः—

" उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन् " इति ।

एतदुपासनमेव प्रधानम् ।

" संध्यामुपासते ये तु सततं संशितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् " ॥

इत्यत्रैव फलसंबन्धावगमात् । अत एव रणेऽर्जुनादिभिरङ्ग्यत्वसामर्थ्यात्सूर्योपासनमात्रं प्रधानमकारि ।

भारते—" ते तथैव महाराज दंशिता रणमूर्धनि ।
संध्यागतं सहस्रांशुमादित्यमुपतस्थिरे " इति ।

अर्घ्यदानं प्रधानमिति केचित् । अङ्गमित्यन्ये ।

अर्घ्यदानप्रकारमाह व्यासः—

" कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठंस्त्रिरूर्ध्वमथ तत्क्षिपेत् " इति ।

अत्र संतत एव पाठो ग्राह्यः । अथ संततामित्यत्राथशब्दः प्राधान्यख्यापनार्थस्तेन संध्योपासनादिषु तृतीय एव पाठो ग्राह्य इति मातृदत्तोक्तेः । जपेऽप्येवम् । धीमहि धिय इत्यनयोः सांतत्ये सस्वरः संधिः । अनवानत्वमात्रं वाऽस्मिन्पाठे द्रष्टव्यम् । हिकारोऽनुदात्तः ।

आश्वलायनोऽपि—

" ततस्तिष्ठञ्जलं गृह्य प्राङ्मुखोऽञ्जलिना स्मरन् ।
मण्डले सुस्थितं तेजः स्फाटिकज्योतिषा समम् ।
उत्तीर्य तच्च संप्राप्तं दक्षिणेन पथाऽञ्जलिम् ।
व्याहृत्यादि जपेन्मन्त्रं स्मृत्वैवं परितो रवेः ।

---

१ घ. ङ. 'दानमङ्गमि' । २ घ. ङ. 'त् । अर्घ्य' ।

मन्देहान्युध्यतः क्रूरान्निक्षिपेत्तेष्वथाञ्जलीन्।
षोडशाक्षरमन्त्रेण पुनराकृष्य सत्वरः।
पुनर्जलं गृहीत्वैवं तेजोमन्त्रं च संस्मरन्॥
एवं त्रिवारमावर्त्य दग्ध्वा तानसुरान्द्विजः।
मन्त्रेणाऽऽकृष्य तत्तेजः स्थानादौ स्थापयेत्स्मरन्॥
पूर्ववद्वाममार्गेण स्मृत्वा संस्थाप्य चाऽऽत्मनि।
प्रदक्षिणं समावर्त्य जलं गृह्याऽऽचमेत्ततः" इति॥

स्थानादावाधारमण्डपे स्थितं ज्योतिर्नासादक्षिणरन्ध्रेणाऽऽधारमण्डपादन्तरञ्जलिमागतं मन्देहाख्यराक्षसनाशाय तोयेन सह क्षिप्तं गायत्रीशिरसा नासावामरन्ध्रेण पुनराधारमण्डपे स्थापयामीति भावयेदिति सर्वतात्पर्यार्थः।

षोडशाक्षरमन्त्रमाह व्यासः—

"षोडशाक्षरकं ब्रह्म गायत्र्यास्तु शिरः स्मृतम्।
ओमापो ज्योतिरित्येष मन्त्रो वै तैत्तिरीयके" इति॥

प्रणवत्वेनैकमक्षरम्। अन्यथा षोडशाक्षरकं ब्रह्मेत्येतद्विरुध्येतेति। अथवा सुवरित्यस्यैकाक्षरत्वभावनया षोडशाक्षरत्वं द्रष्टव्यम्।

जलाभावे रजसाऽर्घ्यं देयम्—

"जलाभावे महामार्गे बन्धने त्वशुचावपि।
उभयोः संध्ययोः काले रजसा चार्घ्यमुत्सृजेत्" इत्यत्रिस्मृतेः।

अर्घ्यदाने विशेषः संग्रहे—

"मुक्तहस्तेन दातव्यं मुद्रां तत्र न कारयेत्।
तर्जन्यङ्गुष्ठयोगे तु राक्षसी मुद्रिका स्मृता॥
राक्षसीमुद्रिकार्घ्येण तत्तोयं रुधिरं भवेत्।
जलेष्वर्घ्यं प्रदातव्यं जलाभावे शुचिस्थले॥
संप्रोक्ष्य वारिणा सम्यक्ततोऽर्घ्यं तु प्रदापयेत्।
ईषन्नम्रः प्रभाते वै मध्याह्न ऋजुरास्थितः॥
सूर्यायार्घ्याञ्जलीन्दद्यात्सायं तूपविशेद्भुवि" इति।

---

## अथ गायत्रीजपः।

[1] "जपन्नासीत सावित्रीं प्रत्यगा तारकोदयात्।
संध्यां प्राक्प्रातरेवं हि तिष्ठेदा सूर्यदर्शनात्" इति।

---

[1] ग. घ. क्षिप्रं।

सायं प्रत्यङ्मुख आसीन आनक्षत्रोदयं जपेत् । प्रातः प्राङ्मुखस्तिष्ठन्ना-सूर्योदयमित्यर्थः ।

शौनकः—" प्रातस्तिष्ठञ्जपेद्देवीं सायं चैवोपविश्य च ।
उपविश्य तु मध्याह्ने प्राङ्मुखो जपमाचरेत् " इति ॥

तद्विधिमाह मनुः—

" आचम्य प्रयतो नित्यमुभे संध्ये समाहितः ।
शुचौ देशे जपञ्जप्यमुपासीत यथाविधि " इति ॥

कथमित्यपेक्षित आह शङ्खः—

" कुशबृस्यां समासीनः कुशोत्तरीयां वा कुशपवित्रपाणिः
सूर्याभिमुखो देवतां ध्यायञ्जपं कुर्यात् " इति ।

आसनान्याह व्यासः—

" कौशेयं कम्बलं चैव अजिनं पट्टमेव च ।
दारुजं ताडपत्रं वा आसनं परिकल्पयेत् ॥
कृष्णाजिने ज्ञानसिद्धिर्मोक्षः श्रीर्व्याघ्रचर्मणि ।
कुशासने व्याधिनाशः सर्वेष्टश्चि(ष्टं चि)त्रकम्बलम्[1] ॥
वंशासने तु दारिद्र्यं पाषाणे व्याधिरेव च ।
धरण्यां तु भवेद्दुःखं दौर्भाग्यं छिद्रदारुजे ॥
तृणे धनयशोहानिः पल्लवे चित्तविभ्रमः " इति ।

प्रचेताः—" गोशकृन्मृन्मयं भिन्नं तथा पालाशपिप्पलम् ।
लोहबद्धं सदैवाऽऽर्कं वर्जयेदासनं बुधः " इति ।

स्मृत्यन्तरे—" मृगचर्म प्रयत्नेन वर्जयेत्पुत्रवान्गृही " इति ।

पुराणे—" सायं प्रातः समाचम्य दद्यात्सूर्याय चाञ्जलिम् ।
दत्त्वा प्रदक्षिणं कृत्वा जलं स्पृष्ट्वा विशुध्यति " इति ।

श्रुतिरपि—" यत्प्रदक्षिणं प्रक्र(क्रा?)मन्ति तेन पाप्मानमवधून्वन्ति " इति ।

गृह्यपरिशिष्टे—

" असावादित्यो ब्रह्मेति प्रदक्षिणं परिक्रामन्परिषिञ्चेत् " इति ।

---

१ ग. °म्बले । वं° ।

उपवेशनमन्त्र उक्तो गायत्रीकल्पे—

" पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चाऽऽसनम् " इति ।

ऋष्याद्याह व्यासः—

" पृथिव्या मेरुपृष्ठं तु ऋषिरित्यभिधीयते ।
कूर्मपृष्ठं देवता तु सुतलं छन्द ईरितम् ।
आसनारोहणे तस्य विनियोगः प्रकीर्तितः " इति ॥

गृह्यपरिशिष्टे—

" शुचौ देशे दर्भाम्भसोक्षिते दर्भान्संस्तीर्य व्याहृतिभिरुपविश्य प्राणायामत्रयं कृत्वाऽऽत्मानं व्याहृतीभिरभ्युक्ष्य सावित्र्या ऋषिदैव-तच्छन्दांस्यनुस्मृत्य षड्भिस्तदङ्गमन्त्रैर्यथाङ्गमात्मनि विन्यस्याऽऽत्मानं तद्रूपं भावयेत् । तत्सवितुर्हृदयाय नम इति हृदये, वरेण्यं शिरसे स्वाहेति शिरसि, भर्गो देवस्य शिखायै वषडिति शिखायां, धीमहि कव-चाय हुमित्युरसि, धियो यो नो नेत्रत्रयाय वौषडिति नेत्रललाटेषु विन्यस्य, प्रचोदयादस्त्राय फडिति करतलेऽस्त्रं प्राच्यादिषु दशसु न्यसे-देषोऽङ्गन्यास एतमेके नेच्छन्ति स हि विधिरवैदिकः " इति ।

अत्राऽऽसनोपवेशनविधिप्रदर्शनात्पूर्वत्र तूष्णीमेव दर्भासन उपवेशनमिति गम्यते ।

गायत्रीकल्पे तु—

" विन्यस्यैवं षडङ्गेषु ऋष्यादीन्संस्मरेत्ततः " इत्युक्तम् ।

बृहत्पराशरस्मृत्यादिषु तु प्रणवसप्तव्याहृतिवर्गकुक्षिपादवर्णदेवतान्यासा-दिकमप्युक्तमस्ति तत्तत्रैव द्रष्टव्यं विस्तरभीत्या नोच्यते ।

तत आवाहनम् ।

" आयात्वित्यादिभिर्मन्त्रैर्देवीमावाहयेत्ततः "

इति पाठक्रमादप्यत्रैवाऽऽवाहनम् ।

जपे गायत्री प्रणवव्याहृतियुता ज्ञेया । तथा च व्यासः—

" प्रणवव्याहृतियुतां गायत्रीं प्रजपेत्ततः " इति ।

जपसंख्यामाह योगयाज्ञवल्क्यः—

" ब्रह्मचार्याहिताग्निश्च शतमष्टोत्तरं जपेत् ।
वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत् ॥
सायं प्रातश्च मध्याह्ने सावित्रीं वाग्यतो जपेत् ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं प्रजपेद्धीमान्सर्वपापप्रणाशिनीम्[2] " इति ॥

बौधायनोऽपि—

" दर्भेष्वासीनो दर्भान्धारयमाणः सोदकेन पाणिना प्रत्यङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेदपरिमितकृत्वः प्राणायामशो वा शतकृत्व उभयतःप्रणवां ससप्तव्याहृतिकां मनसा वा दशकृत्वः " इति ।

प्रातःसंध्यायां विशेष उक्तस्तेनैव—

" एवमेव प्रातः प्राक्तिष्ठन् " इति ।

प्राणायामशः प्राणायामप्रकारेण । तमेव प्रकारमाह—उभयतःप्रणवामित्यादिना । अयं च प्रकारो[3] बौधायनीयानामेव न सत्याषाढसूत्रानुसारिणां ज्ञापकसिद्धस्योपनयनोपदिष्टतृतीयपाठस्यैव तैर्ग्रहीतुमुचितत्वात् । उक्तसंख्यात आधिक्यमेवापरिमितशब्दार्थः । न तु ततो न्यूनत्वमपि । " अपरिमितं प्रमाणाद्भूयः " इति कात्यायनेनाधिकस्यैवापरिमितशब्दार्थत्वोक्तेः ।

व्यासः—" अष्टोत्तरशतं नित्यमष्टाविंशतिमेव वा ।
विधिना दशकं वाऽपि त्रिकालं प्रजपेद्बुधः " इति ॥

नारदः—" सर्वत्रैव प्रदोषेषु[4] गायत्रीमष्टसंख्यया ।
अष्टाविंशत्यनध्याये जपेन्नाष्टोत्तरं शतम् " इति ॥

सुमन्तुः—" अष्टम्यां च चतुर्दश्यां नित्यादर्धं जपेत्सुधीः ।
प्रतिपत्सु तुरीयांशं पर्वण्यल्पतरं जपेत् " इति ॥

जपमालोक्ता स्मृत्यन्तरे—

" पर्वभिस्तु जपेद्देवीं माला काम्यजपे स्मृता ।
गायत्र्या वेदमूलत्वाद्वेदः पर्वसु गीयते ॥
आरभ्यानामिकामध्यं पर्व देवीमनुक्रमात् ।

---

१ घ. ङ. °णाशनी° । २ घ. ङ. °ति । बोधा° । ३ घ. ङ. °रो बोधा° । ४ क. ख. °षे तु गा° ।

तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु।
मध्यमाङ्गुलिमूले तु यत्पर्वद्वितयं भवेत्।
तं वै मेरुं विजानीयाज्जपे तं नातिलङ्घयेत्" इति।

अगस्त्यसंहितायाम्—

"कनिष्ठाऽनामिका मध्या चतुर्थी तर्जनी मता।
तिस्रोऽङ्गुल्यस्त्रिपर्वाः स्युर्मध्यमा त्वेकपर्विका।
पर्वभिस्तु जपः कार्यो नाङ्गुलीनां निपातनैः।
मध्यमाद्यद्वयं पर्व जपकाले विवर्जयेत्।
एतन्मेरुं विजानीयात्करमालाजपे बुधैः" इति॥

स्मृत्यन्तरे तु—

"आरम्यानामिकामूलात्प्रादक्षिण्येन वै क्रमात्।
मध्यमामूलपर्यन्तं जपेद्दशसु पर्वसु" इत्युक्तम्॥

जपस्त्रिविधः। नृसिंहपुराणे—

"त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत।
वाचिकश्च उपांशुश्च मानसस्त्रिविधः स्मृतः।
त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तरम्" इति॥

वाचिकोपांशुत्वयोर्लक्षणं पुराणेऽभिहितम्—

"यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः।
मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत्।
अपरैरश्रुतः किंचित्स उपांशुजपः स्मृतः" इति॥

विश्वामित्रेण मानसस्य लक्षणमुक्तम्—

"धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम्।
शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः" इति॥

त्रयाणां तारतम्यं च तेनैवोक्तम्—

"उत्तमं मानसं जाप्यमुपांशु मध्यमं स्मृतम्।
अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजः(द्विजाः)॥

१ क. ङ. °पेत्तं ना°। २ घ. °द्वयप°। ३ क. °त्तरः" इति। एतेषां लक्षणानि तत्राभिहितानि। य°। ४ क. °तः। धि°। ५ क. °म्यं विश्वामित्रेणोक्त°।

वाचिकस्यैकमेकं स्यादुपांशु शतमुच्यते ।
सहस्रं मानसं प्रोक्तं मन्वत्रिभृगुनारदैः " इति ॥

(+ **मानसजपस्य फलमुक्तं नृसिंहपुराणे—मानसं जपं प्रकृत्य,**

"अनेन देवता नित्यं स्तूयमाना प्रसीदति ।
प्रसन्ना विपुलान्भोगान्दद्यान्मुक्तिं च शाश्वतीम् " इति ॥ )

**स्मृत्यन्तरे—**

" चतुर्विंशत्यक्षरां तु गायत्रीं प्रजपन्हृदि ।
सर्वान्वर्णानभिध्यायेद्देवतामर्थमेव च " इति ॥

**अक्षरशब्दः स्वरेषु वर्तते । तत्र यद्यपि स्वरास्त्रयोविंशतिरेव गायत्रीमन्त्रे वर्तन्ते तथाऽपि ण्यमित्यत्र भावनया णियमिति स्वरद्वयं ज्ञेयम् ।**

**उक्तं च पिङ्गलेन—**

" इयादिपूरणः " इति ।

**पाद इत्यनुवर्तते । इयादिः पूरणो यस्य स इयादिपूरणः । आदिशब्देनो-वादयो गृह्यन्ते । तत्रायमर्थः— यत्र गायत्र्यादौ छन्दसि पादस्याक्षरसंख्या न पूर्यते तत्रेयादिभिः सा पूरयितव्या । यथा तत्सवितुर्वरेणियं दिवं गच्छ सुवः पतेत्येवमादय इति हलायुधेन व्याख्यातम् ।**

" घृणिरिति द्वे अक्षरे । सूर्य इति त्रीणि । आदित्य इति त्रीणि ।
एतद्वै सावित्रस्याष्टाक्षरं पद४ श्रियाऽभिषिक्तम् " ।

इति श्रुतिरपि साधिकाऽत्रेति ज्ञेयम् ।

जपे नियममाह शौनकः—

" कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ ततः ।
मध्ये संमुखहस्ताभ्यां जप एवमुदाहृतः " इति ।

**स्मृत्यन्तरे—**" हस्तौ नाभिसमौ धृत्वा प्रातः संध्याजपं चरेत् ।
हृत्समौ तु करौ मध्ये सायं मुखसमौ करौ " इति ।

**वृद्धमनुः—**

" वस्त्रेणाऽऽच्छाद्य तु करं दक्षिणं यः सदा जपेत् ।
तस्य तत्सफलं जप्यं तद्धीनमफलं स्मृतम् " इति ।

---

+ धनुश्चिह्नान्तर्गतं क. पुस्तक एव ।

आच्छादन आर्द्रवस्त्रनिषेधः स्मृत्यन्तरे—

"आच्छाद्याऽऽर्द्रेण वस्त्रेण करं यस्तु जपेद्यदि ।
निष्फलः स्यात्तस्य जपो देवता न प्रसीदति" इति ।

व्यासः—"मनःसंतोषणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः" इति ।

मन्त्रार्थ उक्तो बृहत्पराशरेण—

"तच्छुद्धं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ।
देवस्य सवितुर्भर्गो वरणीयं च धीमहि ।
तदस्माकं धियो यस्तु ब्रह्मत्वे च प्रचोदयात्" इति।

तत्सवितुर्जगत्कारणस्य श्रीसूर्यस्य वरेण्यं वरणीयम् । वृञ एण्यः । भर्गस्तेजः । अन्धकारभर्जनात् । "अव्याञ्जियुजिभृजिभ्यः कुश्च" इति भृजेरसुन् । धीमहि ध्यायेम । यो नो धियोऽस्माकं बुद्धीः प्रचोदयात्स्वरूपे प्रेरयेत्, प्रेरयतीत्यर्थः । इत्येवं गायत्रीमन्त्रार्थस्य चिन्तनं मनसाऽनुसंधानं कार्यम् । शब्दस्याप्येवम् । उत्तमं मानसं जाप्यमित्यनन्तरोदाहृतविश्वामित्रोक्तेः ।

[1]बौधायनः—

"*नाभेरधस्तात्संस्पर्शं कर्मयुक्तो विवर्जयेत्" इति ।

अत्रिः—"न [2]चे क्रामन्न च हसन्न पार्श्वमवलोकयन् ।
नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदा पादमाक्रम्य न चैव हि तथा करौ ।
न चासमाहितमना न च संश्रावयञ्जपेत्" इति ॥

व्यासः—"जपकाले न भाषेत व्रतहोमादिकेषु च ।
एतेष्वेवावसक्तस्तु यथा गच्छन्द्विजोत्तमः ॥
अभिवाद्य ततो विप्रं योगं क्षेमं च कीर्तयेत्" इति ।

यथा गमनवेलायां तन्मनस्कः सन्नेव गच्छति तद्वज्जपादिष्वपि तन्मनस्क एव भवेदित्यर्थः । विप्रमभिवाद्य तेन विप्रेण योगं क्षेमं च कीर्तयेदित्यर्थः । अलब्धलाभो योगः । लब्धस्य रक्षणं क्षेमः ।

* नाभेरधस्तु संस्पर्शमिति क. पुस्तके शोधितः पाठः ।

१ घ. ङ. बोधायनः । २ घ. ङ. चङ्क्राम° ।

**योगयाज्ञवल्क्यः—**

" यदि वाग्यमलोपः स्याज्जपादिषु कदाचन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् " इति ।

**संवर्तः—**" लोकवार्तादिकं श्रुत्वा श्रुत्वा तु परुषं वचः ।
संख्यां विना च यज्जप्तं तत्सर्वं निष्फलं भवेत् " इति ।

**संख्यां विना गणनां विनेत्यर्थः । अपरिमितत्वपक्षेऽपि गणना कर्तव्यैवान्यथा जपस्य निष्फलत्वापत्तेः ।**

**तथा च गौतमः—**

गच्छतस्तिष्ठतो वाऽपि स्वेच्छया कर्म कुर्वतः ।
अशुचेर्वा विना संख्यां तत्सर्वं निष्फलं भवेत् " इति ।

**बृहत्पराशरोऽपि—**

" असंख्यमासुरं यस्मात्तस्मात्तद्गणयेद्ध्रुवम् " इति ।

**गौतमः—**" क्रोधं मोहं क्षुतं निद्रां निष्ठीवनविजृम्भणे ।
दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि ॥
आचामेत्संभवे चैषां स्मरेद्विष्णुं सुरार्चितम् ।
ज्योतींषि च प्रशंसेद्वा कुर्याद्वा प्राणसंयमान् ॥
ज्वलनं गाश्च विप्रांश्च यतीन्वाऽपि विशुद्धये " इति ।

**पश्येदिति शेषः ।**

**संग्रहे—**" स्वरवर्णपदैर्वाक्यैः शुद्धमावर्तयेज्जपम् ।
न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत् ॥
संस्पृशेयुर्न चान्योन्यं दीक्षिता जापका द्विजाः ।
तैरेव भाषणं कृत्वा प्राणायामं समाचरेत् ॥
पादप्रसारणं वार्ता भूलेखनविजृम्भणे ।
जिह्वाप्रसारणं वासोनखच्छेदनताडने ॥
क्षुतनिष्ठीवने गात्रचालनं केशबन्धनम् ।
शिखाविमोक्षणं चैव केशानां चैव मार्जनम् ॥
आक्रन्दनं पर्यटनं तृणसूत्रादिबन्धनम् ।
अधरस्पन्दनं दन्तघर्षणं देहकम्पनम् ॥
आस्फोटनं प्रहसनं शयनं परिवीक्षणम् ।

यूकान्वेषणमङ्गुल्या मुखवायुप्रपूरणम् ॥
शिरःप्रच्छादनं शिल्पकरणं चोष्ठचर्वणम् ।
भवन्ति कर्माण्येतानि यदि चेतःप्रमादतः ॥
प्रक्षाल्य चरणौ हस्तावाचम्य च यथाविधि ।
प्राणायामत्रयं कृत्वा सवितारं विलोक्य च ॥
नमस्कृत्य ततो धीमाञ्जपशेषं समापयेत् " इति ।

**देशनियमस्तु योगयाज्ञवल्क्येनोक्तः—**

" अग्न्यगारे जलान्ते वा जपेद्देवालयेऽपि वा ।
पुण्यतीर्थे गवां गोष्ठे द्विजक्षेत्रेऽथवा गृहे " इति ।

**शङ्खोऽपि—**

" गृहे त्वेकगुणं जप्यं नद्यां तु द्विगुणं स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यगारे शताधिकम् ॥
सिद्धतीर्थेषु क्षेत्रेषु देवतायाश्च संनिधौ ।
सहस्रं शतकोटीनामनन्तं विष्णुसंनिधौ " इति ।

**अत्र नद्यामिति पदं तीरे लाक्षणिकं गङ्गायां घोष इत्यत्र गङ्गापदमिव। समीपसप्तमी वा । आर्द्रवासोविषयं वा ।**

" यदि स्यात्क्लिन्नवस्त्रो वै गायत्रीमुदके जपेत् ।
अन्यथा तु शुचौ भूम्यां कुशोपरि समाहितः " इति **यमोक्तेः** ।

**कूर्मपुराणेऽपि—**

" गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं यतः ।
एकान्ते तु शुभे देशे तस्माज्जप्यं सदाऽऽचरेत् " इति ।

**गायत्रीजपं प्रशंसति व्यासः—**

" दशकृत्वः प्रजप्ता सा त्र्यहाद्यच्च कृतं लघु ।
तत्पापं नाशयत्याशु नात्र कार्या विचारणा ॥
शतजप्ता तु सा देवी पापौघशमनी स्मृता ।
सहस्रजप्ता सा देवी उपपातकनाशिनी ॥
लक्षजप्येन च तथा महापातकनाशिनी ।
कोटिजाप्येन राजेन्द्र यदिच्छति तदाप्नुयात् " इति ॥

---

१ घ. ङ. °नाशनी ।

यमोऽपि—" गायत्र्या न परं जाप्यं गायत्र्या न परं तपः ।
गायत्र्या न परं ध्यानं गायत्र्या न परं हुतम् " इति ॥

मनुरपि—" योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतीन्द्रियः ।
स ब्रह्म परमभ्येति वायुभूतश्च मूर्तिमान् " इति ॥

गौतमोऽपि—

" अनेन विधिना नित्यं जपं कुर्यात्प्रयत्नतः ।
प्रसन्नो विपुलान्भोगान्भुक्त्वा मुक्तिं च विन्दति " इति ॥

जपसमाप्तौ जपनिवेदनमुक्तमाचारप्रदीपे—

" प्रातःसंध्याप्रयुक्तेन गायत्रीजपनेन च ।
अध्यष्टशतजप्येन ब्रह्मात्मा प्रीयतां रविः " इति ।

एवं मध्याह्नसंध्याप्रयुक्तजपे प्रातर्ब्रह्मपदयोः स्थाने मध्यरुद्रशब्दोहेन, सायंसंध्याप्रयुक्तजपे तु सायंविष्णुशब्दोहेन । जटमल्लग्रन्थे तु तथाविधमन्त्रावेव प्रदर्शितौ ।

ततो गायत्रीं विसर्जयेत् । तदुक्तं स्मृत्यन्तरे—

" उत्तमे शिखर इति देवीं जप्त्वा विसर्जयेत् " इति ।

## अथोपस्थानम् ।

तत्र बौधायनः[1]-

" ब्रह्महृदयेन वारुणीभ्यां रात्रिमुपतिष्ठत इमं मे वरुण तत्त्वा यामीति द्वाभ्यामेव प्रातः प्राक्तिष्ठन्मैत्रीभ्यामहरुपतिष्ठते मित्रस्य चर्षणीधृतो मित्रो जनान्यातयति प्रजानन्निति द्वाभ्याम् " इति ।

ब्रह्महृदयं प्रणवः ।

प्रातःसंध्योपस्थानं कूर्मपुराणेऽपि—

" अथोपतिष्ठेदादित्यमुदये सु समाहितः ।
मन्त्रैस्तु विविधैर्मैत्रैर्ऋग्यजुःसामसंभवैः " इति ।

मैत्रैर्मित्रदेवत्यैः । मित्रस्य चर्षणीधृत इत्यादिभिरित्यर्थः ।

मध्याह्नसंध्योपस्थानं ब्रह्मपुराणे—

---

१ घ. ङ. बोधायनः ।

"प्रक्षिप्य चाञ्जलिं सम्यगुदु त्यं चित्रमित्यपि ।
तच्चक्षुर्देव इति च हंसः शुचिषदित्यपि ।
एतज्जपेदूर्ध्वबाहुः सूर्यं पश्यन्समाहितः" इति[1]।

बौधायनेन तु गायत्रीजपानन्तरमेवोपस्थानमत्राप्युक्तम्—

"अप आचम्य दर्भेष्वासीनो दर्भान्धारयमाणः प्राङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेच्छतकृत्वोऽपरिमितकृत्वो वा दशावरामथाऽऽदित्य-[2]मुपतिष्ठेतोद्वयं तमसस्पर्युदु त्यं चित्रं तच्चक्षुर्देव हितं य उदगादिति" इति।

एतदेव तैत्तिरीयैः स्वीकार्यम्। इतरशास्त्रापेक्षया बौधायनोक्तस्याभ्यर्हितत्वात्।

सायंसंध्योपस्थानमपि कौर्मे—

"वारुणीभिस्तथाऽऽदित्यमुपतिष्ठेत्समाहितः" इति।

वारुण्यश्चेमं मे वरुणेत्याद्याः। यद्यपि वारुणीभिर्वरुणोपस्थानं लिङ्गबलात्प्राप्तं तथाऽपि श्रुतेः प्राबल्यात्तया लिङ्गं बाधित्वाऽऽदित्योपस्थाने मन्त्रा विनियुज्यन्त ऐन्द्रीवत्[3]। बौधायनसूत्रोक्तमन्त्रद्वयेनोपस्थानपक्षे सायं रात्रेरुपस्थानं प्रातरह्नः। वस्तुतो रात्र्यहोरूपत्वेनाऽऽदित्यमभिध्यायन्नुपतिष्ठेत[4]। एवं च न बौधायनकूर्मपुराणयोर्विरोधः।

अथ दिग्दिक्पत्युपस्थानम्। तत्र नारायणः—

"वारुणीभिस्तथाऽऽदित्यमुपस्थाय प्रदक्षिणाम्[5]।
कुर्वन्दिशो नमस्कुर्याद्दिगीशांश्च पृथक्पृथक्" इति।

यद्यप्येतस्माद्वचनात्सायंसंध्याङ्गता दिग्दिक्पतिनमस्कारस्य प्रतीयते तथाऽपि प्रातःसंध्यायामप्येतद्द्रष्टव्यम्। भगवत्स्मृतौ प्रातःसंध्यायामपि तस्य विहितत्वात्।

एतच्च नमः प्राच्यै दिशे याश्च देवता इत्याद्यैर्मन्त्रैर्लिङ्गात्।

नमो गङ्गायमुनयोरिति मन्त्रस्तु गङ्गायमुनान्तरवासिमुनिनमस्कारे लिङ्गाद्विनियुज्यते।

अत्र वा गायत्र्युद्वासनम्—

"उपस्थायाथवाऽऽदित्यं गायत्रीं तु विसर्जयेत्"।

१ घ. ङ. °ति। बोधा°। २ ग. घ. ङ. दशव°। ३ घ. ङ. °त्। बोधा°। ४ ग. घ. ङ. °तिष्ठते। ए°। ५ क. °क्षिणम्।

इत्याचारदर्पणे स्मृत्यन्तरवचनात् ।

संध्योपासनं प्रशंसति यमः—

" संध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥
यदह्ना कुरुते पापं कर्मणा मनसा गिरा ।
आसीनः पश्चिमां संध्यां प्राणायामैस्तु हन्ति तत् ॥
यद्रात्र्या कुरुते पापं कर्मणा मनसा गिरा ।
पूर्वां संध्यां समासीनः प्राणायामैर्व्यपोहति ॥
ऋषयो दीर्घसंधत्वाद्दीर्घमायुरवाप्नुयुः[1] ।
प्रजां यशश्च[2] कीर्तिं च ब्रह्मवर्चसमेव च " इति ।

अकरणे प्रत्यवायो दर्शितो दक्षेण—

" संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् " इति ॥

गोभिलोऽपि—

" संध्या येन न विज्ञाता संध्या येनानुपासिता ।
जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते " इति ॥

विष्णुपुराणेऽपि—

" उपतिष्ठन्ति ये संध्यां न पूर्वां न च पश्चिमाम् ।
व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप " इति ॥

कूर्मपुराणेऽपि—

" योऽन्यत्तु कुरुते सर्वं धर्मकार्यं द्विजोत्तमः ।
विहाय संध्याप्रणतिं स याति नरकायुतम् " इति ॥

एतत्सर्वमनार्तविषयम् ।

तथा च याज्ञवल्क्यः—

" अनार्तश्चोत्सृजेद्यस्तु स द्विजः शूद्रसंमितः ।
प्रायश्चित्ती भवेच्चैव लोके भवति निन्दितः " इति ॥

अत्रिरपि—" नोपतिष्ठन्ति ये संध्यां स्वस्थावस्थास्तु वै द्विजाः ।
हिंसन्ति वै सदा पापा भगवन्तं दिवाकरम् " इति ॥

---

१ क. °संधत्वा° । २ ग. °कीर्तिश्च ब्र° ।

**क्वचित्संध्याहानिरपि न दोषायेत्याह जमदग्निः—**

" राष्ट्रक्षोभे नृपक्षोभे रोगार्तौ भय आगते।
देवाग्निद्विजभूपानां कार्ये महति संस्थिते॥
संध्याहानौ न दोषोऽस्ति यतस्तत्पुण्यसाधनम् " **इति**॥

**अथ संध्याकालातिक्रमप्रायश्चित्तम्।**

**( * तत्र स्मार्तप्रायश्चित्तकुतूहले स्कान्दे—**

" उदयास्तमयादूर्ध्वं यावत्स्याद्घटिकात्रयम्।
तावत्संध्यामुपासीत प्रायश्चित्तमतः परम् " **इति**॥

**इदं च श्रान्तपरम्।**

**अन्यथा—**" प्रातःसंध्यां सनक्षत्रां नोपास्ते यः प्रमादतः।
गायत्र्यष्टशतं तस्य प्रायश्चित्तं विशुद्धये "॥

**इति कर्मप्रदीपवचनविरोधापत्तेः। प्रातःसंध्यां सनक्षत्रामिति सायंसंध्यां तु सादित्यामित्येतदुपलक्षणमिति पृथ्वीचन्द्रः )।**

**तत्र यमः—**

" प्राणायामत्रयं प्रातः संगवे द्विगुणं चरेत्।
मध्याह्ने त्रिगुणं प्रोक्तमपराह्णे चतुर्गुणम्॥
सायाह्ने पञ्चगुणकं संध्यातिक्रमणे भवेत् " **इति**॥

**( + स्मार्तप्रायश्चित्तकुतूहले संध्याकल्पे तु—**

" प्राणायामत्रयं प्रातर्द्विगुणं संगवे स्मृतम्।
मध्याह्ने त्रिगुणं प्रोक्तमपराह्णे तु षड्गुणम्॥
सायाह्ने द्वादशगुणं सूर्यहत्यां ततो व्रजेत् " **इत्युक्तम्।**

**शक्ताशक्तपरत्वेनात्र व्यवस्था। प्रातरादिष्वकरणे सूर्यहत्यां व्रजेत्। सूर्यहत्यां प्राप्नोतीत्यर्थः )।**

**यत्तु जमदग्निवचनं—**

" संध्याकाले त्वतिक्रान्ते स्नात्वाऽऽचम्य यथाविधि।
जपेदष्टशतं देवीं ततः संध्यां समाचरेत् "॥

**इति तत्प्राणायामाशक्तपरम्[1]। एवं कर्मप्रदीपवचनमपि।**

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख. पुस्तकयोः। + धनुश्चिह्नान्तर्गतं क. पुस्तके नास्ति।

---

१ क. °म्। य°।

यत्तु—“ यः संध्यां चैव नोपास्ते अग्निकार्यं यथाविधि ।
गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः ” ॥

इति स्मृतिवचनं तद्बुद्ध्या सकृल्लोपविषयम् ।

यत्तु वसिष्ठवचनं—

“ कालातिक्रमणे चैव त्रिसंध्यमपि सर्वदा ।
चतुर्थार्घ्यं प्रकुर्वीत भानोर्व्याहृतिसंपुटम् ” इति ॥

तदल्पकालातिक्रमविषयम् ।

एकाहाद्यतिक्रमे जमदग्निः—

“ एकाहं समतिक्रम्य संध्यावन्दनकर्म तु ।
अहोरात्रोषितो भूत्वा गायत्र्या अयुतं जपेत्
द्विरात्रे द्विगुणं प्रोक्तं त्रिरात्रे त्रिगुणं स्मृतम् ।
त्रिरात्रात्परतश्चेत्स्याच्छूद्र एव न संशयः ” इति ॥

दैवाद्यदि माध्याह्निकं दिवा न कृतं तदा विशेषः स्मर्यते—

“ रात्रौ प्रहरपर्यन्तं दिवाकृत्यानि कारयेत् ।
अवगाहं ब्रह्मयज्ञं सौरजप्यं विवर्जयेत् ” इति ॥

स्मृतिसंग्रहेऽपि—

“ दिवोदिताः क्रियाः कार्या रात्रावपि यथाक्रमम् ।
अवगाहं विना सौरं ब्रह्मयज्ञं च तर्पणम् ” इति ॥

अवगाहशब्देन निमज्जनरूपं स्नानं निषिध्यते ।

ब्रह्मयज्ञनिषेधस्तु तैत्तिरीयातिरिक्तपरः ।

“ ग्रामे मनसा स्वाध्यायमधीयीत दिवा नक्तं वा ”

इति श्रुतौ तैत्तिरीयाणां रात्रावपि तत्कर्तव्यताप्रतिपादनात् । अथवा बहुलं ब्रह्मयज्ञं निषेधयतीयं स्मृतिः । तेन तैत्तिरीयैस्तदतिरिक्तैश्च रात्रौ स्वल्पो ब्रह्मयज्ञः कर्तव्य एव । श्रुतेः साधारण्येन प्रबलत्वेन च सर्वशाखिषु प्रवृत्तेर्निराबाधात् । इदं च शौचाह्नेयर्षिमतेनोक्तम् ।

मध्याह्नसंध्या रात्रावपि कार्या सा चोपस्थानं विना तस्य सौरत्वात् ।

“ कुर्वीताऽऽवर्तनीं संध्यां रात्रावपि न दुष्यति ।
दद्यादर्घ्यं तु गायत्र्या सौरैर्मात्रं तु वर्जयेत् ” ॥

१ क. °त् । मध्या° । २ क. ख. °रमन्त्रं तु ।

इति स्मृतिरत्नावल्याद्युक्तेश्च।

संध्यायामन्यथाकरणे स्मार्तप्रायश्चित्तकुतूहले संवर्तः—

" स्वरमात्राविहीनं तु पदाक्षरविवर्जितम्।
न्यूनाधिकं वा कृत्वा तु आभिर्गीर्भिरितीरयेत् " इति॥

## अथ क्रमप्राप्तत्वादादौ मध्याह्नसंध्योपासनप्रयोगः।

शुचौ देशे दर्भानास्तीर्य तूष्णीमेव तेषु प्राङ्मुख उपविश्य कुशपाणिर्गायत्र्यास्त्रिभिः पादैरापो हि ष्ठादिभिस्त्रिभिर्मन्त्रैर्वा तूष्णीं वा त्रिराचम्य सोदकेन दक्षिणेन पाणिना त्रिर्द्विर्वोष्ठावलोमकौ परिमृज्य द्विः सकृद्वोष्ठावुपस्पृश्य सव्यं पाणिं पादौ शिरश्च प्रोक्ष्य चक्षुषी नासिके श्रोत्रे चाऽऽलभ्य प्रत्यालम्भमप उपस्पृशेदित्येवं पूर्ववत्त्रिराचम्य द्विरोष्ठौ परिमृज्य सकृदुपस्पृश्य सव्यं पाणिं पादौ प्रोक्ष्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य प्रत्यालम्भमप उपस्पृशेदित्येवं वा द्विवारमाचम्य,—

प्रणवस्य परब्रह्म ऋषिः। अग्निर्देवता गायत्री छन्दः। सप्तानां व्याहृतीनां याज्ञिक्यो देवता उपनिषद ऋषयः[2]। अग्निर्वायुः सूर्यो बृहस्पतिर्वरुण इन्द्रो विश्वे देवा इति क्रमेण देवताः। गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगतीति क्रमेण च्छन्दांसि। गायत्र्या अग्निर्विश्वामित्रश्चर्षिः सविता देवता गायत्री छन्दः, शिरोमन्त्रस्य याज्ञिक्यो देवता उपनिषद ऋषयः[3]। अब्दैवतं यजुश्छन्दः सर्वेषां प्राणायामे विनियोगः—" ॐ भूः, ॐ भुवः, ॐ सुवः,० भूर्भुवः सुवरोम् " इति ब्रह्मविष्णुशिवान्क्रमेण ध्यायन्पूरककुम्भकरेचकक्रमेण त्रिरभ्यसेत्।

अथवा कुम्भकेनैव त्रिरभ्यसेत्।

ॐ तद्ब्रह्मेत्यस्य पुरोर्नम इत्यन्तस्य याज्ञिक्यो देवता उपनिषदो ब्रह्मयजुः प्राणायामे विनियोगः—" ॐ तद्ब्रह्म। ॐ तद्वायुः० ॐ तत्पुरोर्नमः " इत्येतेन वा प्राणायामं कुर्यात्। इति प्राणायामत्रयं कृत्वा संध्यां ध्यायेत्। मध्याह्नसंध्यां युवतिं श्वेतां श्वेतवस्त्रां श्वेतगन्धानुलेपनां त्रिनेत्रां वरशूलपरश्वभयधारिणीं वृषवाहनां रुद्ररूपिणीं सावित्रीं ध्यायामीति सूर्याभेदेन ध्यात्वा

१ क. °श्च। अ°। २ क. ग. घ. ङ. ऋषिः। ३ ग. घ. ङ. ऋषिः।

देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं मध्याह्नसंध्योपास्तिं करिष्य इति संकल्पं कृत्वा—

आपो हि ष्ठेति मन्त्रत्रयस्याग्निर्विश्वे देवा वाऽऽपो गायत्री। मार्जने विनियोगः—"ॐ आपो हि ष्ठा० च नः" इति कुशोदकैर्मध्यमानामिकाङ्गुष्ठैर्ऋगन्तेऽर्धर्चान्ते पादान्ते वा मार्जनं कुर्यात्।

पादान्ते मार्जनपक्षे "तस्मा अरं गमाम वः" इत्यन्तैः पादैः शिरस्यंसयोश्च प्रतिपादं प्रोक्ष्य, "ॐ यस्य क्षयाय जिन्वथ" "आपो जनयथा च नः"। इति द्वाभ्यां कण्ठाधः प्रोक्षेदिति विशेषः।

अथवा—'ॐ आपो हि ष्ठा मयोभुवः' शिरसि। 'ता न ऊर्जे दधातन' पादयोः। 'महे रणाय चक्षसे' हृदि। 'यो वः शिवतमो रसः' हृदि। तस्य भाजयतेह नः' पादयोः। 'उशतीरिव मातरः' शिरसि। 'तस्मा अरं गमाम वः' शिरसि। 'यस्य क्षयाय जिन्वथ' हृदि। आपो जनयथा च नः' पादयोः। इति मार्जनक्रमः।

तत आपो वा इदमित्यनुवाकस्य याज्ञिक्यो देवता उपनिषद् आपो यजुः। सर्वात्मकत्वेनाबभिध्याने विनियोगः—"ॐ आपो वा इद१० राप ॐ" इति सर्वात्मकत्वेनापोऽभिध्यायेत्।

तत आपः पुनन्त्वित्यस्य याज्ञिक्यो देवता उपनिषद् ऋषयः। आपः पृथिवी ब्रह्मणस्पतिर्ब्रह्म च देवताऽष्टपदा, अष्टिश्छन्दः। उदकप्राशने[1] विनियोगः—"ॐ आपः पुनन्तु पृ० ब्रह१ स्वाहा" इत्युदकं पिबति।

ततो द्विराचम्य पुनर्मार्जनं कुर्यात्। प्रणवस्य परब्रह्मर्षिः। अग्निर्देवता गायत्री छन्दः। व्यस्तसमस्तव्याहृतीनां प्रजापतिर्ऋषिः। अग्निवायुसूर्यप्रजापतयो देवताः। गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि। गायत्र्या विश्वामित्र ऋषिः। सविता देवता गायत्री छन्दः। दधिक्राव्ण इत्यस्य विश्वे देवा दधिक्रावाऽनुष्टुप्। आपो हि ष्ठेति मन्त्रत्रयस्याग्निर्विश्वे देवा वाऽऽपो गायत्री। यच्चिद्धि त इति मन्त्रत्रयस्य विश्वे देवा ऋषयः। वरुणो देवता प्रथमस्य गायत्री छन्दः। द्वितीयतृतीययोस्त्रिष्टुप्। हिरण्यवर्णा इति मन्त्रचतुष्टयस्याग्निरापस्त्रिष्टुप्। पवमानानुवाकमन्त्राणां प्रजापतिर्ऋषिः पवमानसुवर्जनादयो लिङ्गोक्ता देवताः। गायत्र्यनुष्टुप्त्रिष्टुबिति च्छन्दांसि।

---

1 क. °कपाने।

व्यस्तसमस्तव्याहृतीनां पूर्ववत्पुनर्ऋष्याद्युक्त्वा द्रुपदेत्यस्य विश्वे देवा आपोऽनुष्टुप् । सर्वेषां मार्जने विनियोगः । ओमिति प्रणवान्ते मार्जयित्वा व्याहृत्यन्ते द्वितीयं मार्जनं कृत्वा गायत्र्यन्ते तृतीयमवशिष्टमन्त्रान्ते चतुर्थमिति मार्जयेत् । प्रतिमन्त्रं मार्जनमिति केचित् ।

ततो गोकर्णवत्कृते दक्षिणे हस्ते जलमादाय तत्र श्वासं त्यजन्नासिकाग्रे पापपुरुषं स्मरन्,

द्रुपदेत्यस्य विश्वे देवा आपोऽनुष्टुप् । पापपुरुषोत्सारणे विनियोगः—"ॐ द्रुपदादिव० तु मैनसः" इत्यनेन पापपुरुषमुत्सार्य तज्जलमनवलोकयन्स्वस्य वामभागे भूमावेव क्षिपेत् ।

तत उत्थाय सूर्याभिमुख आदित्यं रुद्ररूपां सावित्र्यभिधां संध्यां चाभेदेनाभिध्यायन्हस्ताभ्यां जलमादाय,

समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । गायत्र्या विश्वामित्रः सविता गायत्री । जलाभिमन्त्रणे विनियोगः—"ॐ भूर्भुवः सुवः । ॐ तत्सवितुर्वरेण्यं० चोदयात्" इति तज्जलमभिमन्त्र्य दक्षिणनासापुटेन तत्राऽऽदित्यमण्डलस्थं तेजः समागतं विभाव्य व्याहृतीनां गायत्र्याश्चर्ष्यादिकं पूर्ववत्स्मृत्वाऽर्घ्यदाने विनियोग इति विनियोगं च स्मृत्वा समस्तव्याहृतिसहितां गायत्रीं संततामुक्त्वा सवित्रे सावित्र्या इदमर्घ्यं न ममेति सूर्याभिमुख ऊर्ध्वं जलमञ्जलिनोत्क्षिपञ्जलेऽर्घ्यं दद्यात् ।

षोडशाक्षरस्य शिरोमन्त्रस्य याज्ञिक्यो देवता उपनिषदोऽवादयो यजुः । रक्षोपहननार्थं क्षिप्तस्य ज्योतिषः पुनः स्वस्थाने स्थापने विनियोगः—"ओमापो ज्यो० सुवरोम्" इति तत्तेजो वामनासापुटेनाऽऽकृष्य स्वस्थान आगतं विभावयेत् ।

एवं पुनर्जलग्रहणादि ज्योतिषः स्वस्थानस्थापनान्तं द्विवारं[२] कृत्वाऽऽत्मानं प्रदक्षिणीकुर्वन्नसावादित्यो ब्रह्मेत्यात्मानं परिषिच्याऽऽसीनोऽप उपस्पृशेत् ।

तत उपविश्य द्विराचम्य प्राणानायम्यापः स्पृष्ट्वा —

"ॐ अपक्रामन्तु भूता० समारभे" इति भूतान्युत्सार्य दर्भैरुदकेनाऽऽसनदेशं प्रोक्ष्य तत्र दर्भाद्यासनमास्तीर्य—

समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । पृथ्वीत्यस्य मन्त्रस्य मेरुपृष्ठ[३] ऋषिः कूर्मपृष्ठं देवता सुतलं छन्दः । आसनोपवेशने विनियोगः[४]—"ॐ भूर्भुवः

१ क. °दि पू° । २ ग. घ. ङ. °नोऽपः स्पृ° । ३ क. ख. °ष्ठमृषिः । ४ ख. ग. घ. ङ. °गः—पृ° ।

सुवः " "ॐ पृथ्वि त्वया धृता लोका० त्वं च० चाऽऽसनम्" इत्यासन उपविश्य पूर्ववत्प्राणायामत्रयं कृत्वा—

समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । आत्माभ्युक्षणे विनियोगः— " ॐ भूर्भुवः सुवः ' इत्यात्मानमभ्युक्षेत् ।

## अथ न्यासः ।

तत्सवितुर्हृदयाय नमः, हृदये । वरेण्यं शिरसे स्वाहा शिरसि । भर्गो देवस्य शिखायै वषट्, शिखायाम् । धीमहि कवचाय हुम्, उरसि । धियो यो नो नेत्रत्रयाय वौषट्, नेत्रभ्रूमध्येषु । प्रचोदयादस्त्राय फट्, करतलास्फोटनेनास्त्रं प्राच्यादिदशदिक्षु । अयं च न्यासः कृताकृतः ।

आयात्वित्यनुवाकस्थमन्त्राणां याज्ञिक्यो देवता उपनिषद ऋषयः[1] । सूर्याभिन्ना रुद्ररूपिणी सावित्र्यभिधा संध्या देवता । प्रथमद्वितीययोरनुष्टुप् । सर्ववर्ण इत्यस्य द्विपदा गायत्री । ओजोऽसीत्यस्य श्रियमावाहयामीत्यन्तस्य यजुः । आवाहने विनियोगः—" आयातु वरदा देवी अ० श्रियमावाहयामि " । इत्येतैरावाह्य—

प्रणवस्य परब्रह्मर्षिः । अग्निर्देवता, गायत्री छन्दः । समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । जपे विनियोगः— गायत्रिया गायत्री छन्दो विश्वामित्र ऋषिः सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदय॰ रुद्रः शिखा पृथिवी कुक्षिः पञ्चशीर्षोपनयने विनियोगः, इत्यृष्यादि स्मृत्वा मौनी चापल्यरहितोऽभाषमाणो नासाग्रदृष्टिरुन्नतगात्र एकाग्रचित्तः, देवस्य स्वप्रकाशस्य सवितुः श्रीसूर्यस्य वरेण्यं वरणीयं भर्गस्तेजो धीमहि ध्यायेम यो नो धियोऽस्माकं बुद्धीः प्रचोदयात्स्वरूपे प्रेरयतीत्यर्थं मनस्यनुसंदधदुपांश्वष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिर्वा( तिं वा ) यथाशक्त्युपनयनोपदिष्टतृतीयपाठधर्मेण जपं कुर्यात् ।

जपसमाप्तौ पुनः षडङ्गन्यासान्कुर्यात् ।

" मध्यसंध्याप्रयुक्तेन गायत्रीजपनेन च ।
अध्यष्टशतजप्येन रुद्रात्मा प्रीयतां रविः " इति जपं निवेदयेत् ।

---

१ ग. घ. ङ. ऋषिः ।

सहस्रादौ शतपदस्थाने सहस्र(स्रा)[ दि ] पदम्[2]। ततो[3] द्विः सकृद्वा[4]ऽऽचम्य प्राणानायम्य—

उद्वयमित्यस्याग्निर्विश्वे देवा वा सूर्योऽनुष्टुप्। उदु त्यमित्यस्य सोमः सूर्यो गायत्री। चित्रं देवानामित्यस्य सोमो विश्वे देवा वा सूर्यस्त्रिष्टुप्। तच्चक्षुर्देव हितमित्यस्य सोमः सूर्यो गायत्री। य उदगादित्यस्य सोमः सूर्यस्त्रिष्टुप्। हंसः शुचिषदित्यस्य विश्वे देवा अग्निर्वा सूर्यो जगती। सूर्योपस्थाने विनियोगः—"ॐ उद्वयं तम०" "ॐ उदु त्यं जात०" "चित्रं देवाना०" "तच्चक्षुर्दे०" "य उदगा०" "हंसः शुचिष०" इत्येतैरूर्ध्वबाहुरादित्यमुपतिष्ठते।

उत्तमे शिखर इत्यनुवाकमन्त्रयोर्याज्ञिक्यो देवता उपनिषद ऋषयः[5] सूर्याभिन्ना रुद्ररूपिणी सावित्र्यभिधा संध्या देवता। प्रथमस्यानुष्टुप्। द्वितीयस्य त्रिष्टुप्। घृणिः सूर्य आदित्य इत्यनुवाकमन्त्रयोर्याज्ञिक्यो देवता उपनिषद ऋषयो[6] रुद्ररूपसावित्र्यभिधसंध्याभिन्नः सूर्यो देवता। प्रथमस्य गायत्री द्वितीयस्य यजुः। संध्याविसर्जने विनियोगः—"उत्तमे शिखरे० ब्रह्मलोकम्" "घृणिः सूर्य आदि० रोम्"।

इति संध्यां विसर्जयेत्।

अन्तश्चरति भूतेष्वित्यादिमन्त्रद्वयस्य याज्ञिक्य उपनिषद ऋषयः[7]। आत्मा देवता प्रथमस्य द्विपदा गायत्री, द्वितीयस्य यजुः। आत्मोपस्थाने विनियोगः—"ॐ अन्तश्चर० रोम्" इत्यात्मानमुपतिष्ठते।

ततः संध्यायै नमः। गुरुभ्यो नमः। मातापितृभ्यां नमः। इत्यभिवाद्य सकृदेव पूर्ववदाचम्य प्राणानायम्य विष्णुं स्मरेत्[8]।

इति मध्याह्नसंध्या।

## अथ सायंसंध्या।

पूर्ववदाचमनप्राणायामौ कृत्वा सायंसंध्यां वृद्धां कृष्णां[9] कृष्णवस्त्रां कृष्ण-

---

१ क. °हस्रजपे श°। २ क. °म्। दशवारं जपे "अनेन दशजप्येन रुद्रात्मा प्रीयतां रविः" इत्यूहः। त°। ३ घ. ङ. °तो द्विजः सकृदाच°। ४ ग. °कृदाच°। ५ ग. घ. ङ. ऋषिः। ६ ग. घ. ङ. ऋषिः, रु°। ७ ग. घ. ङ. ऋषिः। ८ ग. घ. ङ. संस्मरेत्। ९ घ. ङ. कृष्णवस्त्रां।

गन्धानुलेपनां शङ्खचक्रगदापद्मधरां गरुडवाहनां विष्णुरूपिणीं सरस्वतीं ध्यायामीति सूर्याभेदेन ध्यात्वा देशकालसंकीर्तनाद्यभिध्यानान्तं कृत्वा— अग्निश्च मेत्यनुवाकमन्त्राणां याज्ञिक्यो देवता उपनिषद ऋषयः । अग्निर्मन्युर्मन्युपतयोऽहश्च देवताः । रक्षन्तामित्यन्तो मन्त्रो गायत्री दुरितं मयीत्यन्तः पङ्क्तिः । अवशिष्टमन्त्रो विराट् । एकं यजुर्वा । उदकपाने विनियोगः— "ॐ अग्निश्च मा० यदह्ना० सत्ये ज्योतिषि जुहोमि स्वाहा" इत्युदकं पीत्वाऽऽचम्य पुनः प्रणवव्याहृतिगायत्र्याद्यैर्मार्जयित्वा पाप्मानमुत्सार्य प्रत्यङ्मुख उपविश्यैव सूर्याभेदेन सरस्वत्यभिधां संध्यां ध्यायन्नर्घ्यत्रयं भूमावेव पूर्ववद्दद्यात् । तत्र सवित्रे सरस्वत्या इदमर्घ्यं न ममेत्यर्घ्यदानवाक्ये विशेषः ।

ततः पूर्ववत्प्रदक्षिणीकृत्याऽऽचमनप्राणायामौ कृत्वाऽपक्रामत्वित्यादिविधिना प्रत्यङ्मुखो गायत्रीजपं कृत्वा पूर्ववदुत्तरन्यासं कुर्यात् । तत्राऽऽयात्वित्यनुवाकमन्त्रेषु सूर्याभिन्ना विष्णुरूपिणी सरस्वत्यभिधा संध्या देवतेति देवतावाक्ये विशेषः । ऋषिच्छन्दोविनियोगवाक्यानि तु समानान्येव । विसर्जनवाक्येऽपीयं देवता ज्ञेया । शेषं पूर्ववत् ।

ततः—" सायंसंध्याप्रयुक्तेन गायत्रीजपनेन च ।
अध्यष्टशतजप्येन विष्ण्वात्मा प्रीयतां रविः "

इति जपं निवेद्य संध्याविसर्जनं विधायोपस्थानं कुर्यात् ।

तद्यथा—इमं मे वरुण तत्त्वा यामीति द्वयोर्विश्वे देवा ऋषयः । वरुणो देवता । प्रथमस्य गायत्री द्वितीयस्य त्रिष्टुप् । यच्चिद्धि त इति मन्त्रत्रयस्य विश्वे देवा ऋषयः । वरुणो देवता । प्रथमस्य गायत्री द्वितीयतृतीययोस्त्रिष्टुप् । आदित्योपस्थाने विनियोगः—"ॐ इमं मे वरु०" "तत्त्वा यामि०" "यच्चिद्धि ते०" यत्किं चेदं०" "कितवासो०" इत्यादित्यं प्रत्यङ्मुख उपस्थाय—

" यां सदा सर्वभूतानि स्थावराणि चराणि च ।
सायं प्रातर्नमस्यन्ति सा मा संध्याऽभिरक्षत्वों नमः " ॥

इति संध्यामुपस्थाय—

नमः प्राच्यै दिश इत्यादिमन्त्राणां स्वयंभूर्ऋषिः । प्राच्यादिदिशस्तत्तद्दिक्पतयस्तत्तद्दिग्वासिदेवताश्च देवताः । नमो गङ्गायमुनयोरित्यस्य गङ्गायमुनान्तरवासिनो मुनयो देवता यजूंषि । उपस्थाने विनियोगः—" ॐ नमः प्राच्यै दिशे याश्च दे० भ्यश्च नमः " । इति प्राचीं दिशं तदधिपतिं तद्वासिदेवांश्चोपस्थाय—

" नमो दक्षिणायै दिशे " इत्याद्यैस्तत्तन्मन्त्रैस्तत्तदुपस्थानं कुर्यात् । अवान्तरदिगाद्युपस्थानमन्त्रस्य चतुर्वारमावृत्तिः सकृदेव वा । नमो गङ्गायमुनयोरित्येतेन मुनीन्प्राङ्मुख उपतिष्ठेत । केचित्तु प्रतीच्यादिक्रमोऽत्रेत्याहुः । अत्र वा संध्याविसर्जनम् । ततः संध्यायै नम इत्यादि विष्णुस्मरणान्तं कुर्यात् ।

इति सायंसंध्या ।

## अथ प्रातःसंध्या ।

पूर्ववदाचमनप्राणायामौ कृत्वा प्रातःसंध्यां कुमारीं रक्तां रक्तवस्त्रां रक्तमाल्यां रक्तगन्धानुलेपनां पुस्तकाक्षकमण्डलुवजिनकरां हंसवाहनां ब्रह्मरूपिणीं गायत्रीं ध्यायामीति सूर्याभेदेन ध्यात्वा देशकालसंकीर्तनाद्यब्भिध्यानान्तं कृत्वा—

सूर्यश्चेत्यनुवाकमन्त्राणां याज्ञिक्यो देवता उपनिषद् ऋषयः सूर्यो मन्युर्मन्युपतयो रात्रिश्च देवताः । रक्षन्तामित्यन्तस्य गायत्री, दुरितं मयीत्यन्तस्य, पङ्क्तिः । अवशिष्टमन्त्रस्य विराट् । एकं यजुर्वा । उदकपाने विनियोगः—
" ॐ सूर्यश्च मा० यद्रात्रिया पापम० रात्रिस्तद० सूर्ये ज्योतिषि जुहोमि स्वाहा "
इत्युदकं पीत्वाऽऽचम्य पुनः प्रणवव्याहृतिगायत्र्याद्यैर्मार्जयित्वा पापपुरुषमुत्सार्य तिष्ठन्प्राङ्मुखः सूर्याभेदेन गायत्र्यभिधां संध्यां ध्यायन्नञ्जलिनाऽर्घ्यत्रयं जलमध्य एव दद्यात् । तत्र सवित्रे गायत्र्या इदमर्घ्यं न ममेत्यर्घ्यदानवाक्ये विशेषः ।

ततः प्रदक्षिणादि न्यासान्तं कुर्यात् । तत्राऽऽयात्वित्यनुवाकमन्त्रेषु सूर्याभिन्ना ब्रह्मरूपिणी गायत्र्यभिधा संध्या देवतेति देवतावाक्ये विशेषः । ऋषिच्छन्दोविनियोगवाक्यानि तु समानान्येव ।

ततः—" प्रातःसंध्याप्रयुक्तेन गायत्रीजपनेन च ।
अध्यष्टशतजप्येन ब्रह्मात्मा प्रीयतां रविः " ॥

इति जपं निवेद्य संध्यां विसृज्य मुकुलितकर आदित्यमुपतिष्ठते—

मित्रस्य चर्षणीधृत इत्यादिमन्त्रत्रयस्य विश्वे देवा ऋषयो मित्रो देवता । प्रथमस्य गायत्री, द्वितीयतृतीययोस्त्रिष्टुप् । आदित्योपस्थाने विनियोगः—
" ॐ मित्रस्य० " " मित्रो जना० " " प्रसमित्र० " इत्यादित्यमुपस्थाय

१ ग. घ. ङ. विधाय । २ ग. घ. ङ. ऋषिः ।

यां सदेति संध्यामुपस्थाय नमः प्राच्यै दिश इत्यादि विष्णुस्मरणान्तं सायंसंध्यावत्कुर्यात् ।

इति प्रातःसंध्या ।

## अथ प्रसङ्गाद्भोजनविधिः ।

आयुष्कामः प्राङ्मुखः कीर्तिकामो दक्षिणामुखः श्रीकामः प्रत्यङ्मुखो निष्कामः प्राङ्मुखः पित्र्यं विना नोदङ्मुखः कदाचन जीवन्मातृपितृको जीवदन्यतरो वा दक्षिणामुखो नैव कदाचनेत्यभिसंधायोपविश्य समस्तव्याहृतीनां पूर्ववदृष्याद्युक्त्वाऽन्नोपस्थाने विनियोग इति विनियोगमुक्त्वा भूर्भुवः सुवरों तदन्नमाह्रियमाणमुपस्थाय परिविष्टं प्रणवव्याहृतिसहितया गायत्र्याऽभ्युक्ष्य तर्जन्यां रौप्यं धृतं चेन्निष्काश्य वामहस्तेन चतुरश्रमण्डले स्थापितं भोजनपात्रं धृत्वा दक्षिणहस्तेन जलमादाय—

ऋतं त्वेत्यस्याग्निरन्नं यजुः । अन्नपरिषेचने विनियोगः—" ॐ ऋतं त्वा स० पिञ्चामि " इति सायमन्नं परिषिञ्चति ।

सत्यं त्वर्तेनेत्यस्याग्निरन्नं यजुः । अन्नपरिषेचने विनियोगः—" ॐ सत्यं त्वर्तेन परिषिञ्चामि " इति प्रातरन्नं परिषिञ्चति ।

ततो भोजनपात्रस्य दक्षिणतो दशाङ्गुलपरिमितं पञ्चाङ्गुलपरिमितं वा स्थलं त्यक्त्वा, तत्र तूष्णीमभ्युक्ष्यान्नात्किंचिदन्नं गृहीत्वा,

व्यस्तव्याहृतीनामग्निर्ऋषिः समस्तव्याहृतीनां प्रजापतिर्ऋषिः । अग्निवायुसूर्यप्रजापतयः क्रमेण चतसृणां देवताः[1] । गायत्र्युष्णिगनुष्टुब्बृहत्यः क्रमेण चतसृणां छन्दांसि,[2] बलिनिवपने विनियोगः—" भूः स्वाहा " अग्नय इदं० । पुनरन्नाद्गृहीत्वा—" भुवः स्वाहा " वायव इदं० । पुनर्गृहीत्वा—" सुवः स्वाहा " सूर्यायेदं० । पुनर्गृहीत्वा—" भूर्भुवः सुवः स्वाहाः " प्रजापतय इदं० । इति प्राक्संस्थमुदक्संस्थं वाऽभ्युक्षितप्रदेशे बलीन्निवपति । बलिषु न वा त्यागः । एवं सर्वेषु बलिषु ।

ततो बलीन्परिषिच्य हस्तं प्रक्षाल्य, अन्न पत इत्यस्याग्निरन्नपतिस्त्रिष्टुप् । अन्नाभिमन्त्रणे विनियोगः—" ॐ अन्नपतेऽन्नस्य नो० चतुष्पदे " इत्यन्नमभिमन्त्रयते ।

१ ग. घ. ङ. 'तयो दे' । २ ग. घ. ङ. 'हत्यश्छन्दां' ।

ततो गोकर्णाकृतिना हस्तेन माषपरिमितं जलमादाय— श्रद्धायां प्राण इत्यादिप्रथमानुवाकमन्त्राणां याज्ञिक्यो देवता उपनिषदः प्राणादयो यजुः । आत्मनः परमात्मनि संयुक्तत्वभावने विनियोगः— " ॐ श्रद्धायां प्राणे नि० श्रद्धायामपाने नि० मृतत्वाय " इत्यात्मानं परमात्मनि संयुक्तं भावयित्वा,

अमृतोपस्तरणमसीत्यस्य याज्ञिक्यो देवता उपनिषद उदकं यजुः । उदकपाने विनियोगः—" ॐ अमृतोपस्तरणमसि " इति पुरस्तादुदकं पिबति ।

ततः श्रद्धायां प्राण इति द्वितीयानुवाकमन्त्राणां याज्ञिक्यो देवता उपनिषदः प्राणादयो यजुः । आत्मनि होमे विनियोगः—" ॐ श्रद्धायां प्राणे नि० शिवो मा० प्राणाय स्वाहा " इति तर्जनीमध्यमाङ्गुष्ठैः परिविष्टादन्नाद्घृतप्लुतादेकामाहुतिं मुखे जुहोति ।

" श्रद्धायामपाने० " इति मध्यमानामिकाङ्गुष्ठैस्तथैव द्वितीयाम् । " श्रद्धायां व्या० " इति कनिष्ठिकानामिकाङ्गुष्ठैस्तथैव तृतीयाम् । " श्रद्धायामु० " इति तर्जनीरहिताभिः साङ्गुष्ठाभिः कनिष्ठातर्जन्यङ्गुष्ठैरेव वा तथैव चतुर्थीम् । " श्रद्धायाᳫं समा० " इति सर्वाङ्गुलीभिः पञ्चमीम् । त्यागे विकल्पः । अथवा सर्वा आहुतयो मुक्तकनिष्ठिकेन करेण होतव्याः ।

ततः प्रजापतिं मनसा ध्यायंस्तूष्णीं सकृद्भूयो जुहुयात् । अयं च होमोऽन्नरसमविजानता दन्तैः स्पर्शमकुर्वता मौनेनैव कर्तव्यः । अत ऊर्ध्वमनियमो मौनस्य । जीवत्पितृकस्य प्राणाहुत्यूर्ध्वं मौनं नास्त्येव । मौनलोपे विष्णुस्मरणम् ।

ततो भोजनपात्रमाधारोपरि संस्थाप्य दत्तांश्चतुरो बलीन्केनचिन्निष्कांश*यित्वा, असंभवे तान्प्रच्छाद्य पादौ भूमौ निधाय वामहस्ताङ्गुष्ठतर्जनीमध्यमाभिर्धृतभोजनपात्रः पञ्चार्द्रो मुक्तकेशो[2] भुञ्जीयात्[3] ।

गायत्र्यभ्युक्षितं किंचिदन्नं पात्रे कस्मिंश्चित्प्रदेशे पृथङ्निधायान्यदन्नं न गृह्णीयात् । भोजनान्ते तद्भुञ्जीयात् ।

वामहस्तेनान्नं न स्पृशेत् । न पादौ शिरो बस्तिं च स्पृशेत्[4] । पदा भोजन-

---

* निष्कासयेति युक्तः पाठः ।

१ क. ख. °वताः प्रा° । २ ग. घ. ङ. विमुक्तशिखो । ३ क. ख. °त् । वाम° । ४ क. ख. °त् । न प्र° ।

पात्रं न स्पृशेत् । नोच्छिष्टाज्यं गृह्णीयात् । द्रवद्रव्याणि च । न प्रसृताङ्गुलिर्भुञ्जीयात् ।[1]

न फूत्कारसंयुतं नाजीर्णी[2] नातिबुभुक्षितो [न] बहु नाऽऽर्द्रवासा नाऽऽर्द्रशिरा न देवतायतने न प्रसारितपादो न वेष्टितशिरा न सशब्दं नोत्सङ्गकृतभाजनो न ग्रासशेषं न बहूनां +भुञ्जतां त्वरान्वितो न ब्रह्म कीर्तयन्न भार्यया सह न भिन्नभाजने[3] न भूम्यां न पाणितले न तैलयन्त्रग्रावोलूखलपेषणयन्त्रशब्देषु जायमानेषु भुञ्जीयात् ।

यदि भुञ्जीयात्प्राणायामत्रयमष्टोत्तरसहस्रमष्टोत्तरशतं वा गायत्रीजपं[4] कुर्यात् । उद्धृतपीतावशेषितमुदकं नैव पिबेत् ।

यदि पिबेत्तदा चान्द्रायणं चरेत् ।

प्राणाहुत्युत्तरं दक्षिणभाग उदकपात्रासंस्थापने प्राणायामत्रयमष्टशतं गायत्रीजपश्च ।

चण्डालपतितरजस्वलावाक्यं शृण्वन्नैकमपि ग्रासं भुञ्जीयात् । यदि भुञ्जीयात्तदैकाहमुपवसेत् ।

उदकपानकाले भोजनपात्रे मुखाग्रादुदकं पतेत्तदा तदन्नं न भुञ्जीयात् । यदि भुञ्जीयात्तदा सहस्रं गायत्रीजपं कुर्यात् ।

ब्रह्मचारी चेन्माषमुद्गक्षारलवणादिवर्जमन्नं कांस्यव्यतिरिक्ते पात्रे भुञ्जीत ।

स्मृत्यन्तरे ताम्रपद्मपत्रपलाशेषु यो भोजनविधिः स गृहस्थेतरविषय इति केचित् । श्राद्धपरोऽयं विधिरित्यन्ये । ब्रह्मचारिपरोऽयमिति परे ।

अत्र पलाशे भोजनविधिर्वल्लीपलाशेतरविषयः । वल्लीपलाशे न भुञ्जीतेति स्मृत्यन्तरे निषेधात् । ताम्रवत्पित्तलेऽपि निर्णयः ।

वटाश्वत्थार्कपत्रेषु साग्रकदलीपत्रे पलाशमध्यमपत्रे[5] करे खर्परके पाषाणे च सर्वेषां भोजनं निषिद्धम् । अनापद्येषु[6] भोजने शतवारं गायत्र्या जपः । आपदि दशवारम् ।

त्र्यहव्रत एव माषमुद्गक्षारलवणादिवर्जनं, तदूर्ध्वं तु विकल्पः ।

+ भुञ्जानानामित्यात्मनेपदपाठो युक्तः ।

१ क. ख. 'लिभिर्भु' । २ ख. नाजीर्णे ना' । ग. घ. ङ. नाजीर्णो । ३ क. 'न्न कांस्यभा' । ४ क. 'पं च कु' । ५ क. ख. ग. 'ध्यप' । ६ ग. घ. ङ. 'षु भुञ्जानो गायत्रीं शतवारं जपेत् । आ' ।

जीवत्पितृकस्य प्राणाहुतिपर्यन्तमेव पात्रधारणं न तूर्ध्वम् । सर्वेषामप्येतदिति केचित् । यावद्भोजनं पात्रधारणमजीवत्पितृकाणामिति बहवः ।

उदकपानकाले दक्षिणहस्तेन पात्रं धारयन्नुद्धृतोदकपात्रं वामहस्तेनाऽऽदाय दक्षिणमणिबन्धे तत्पात्रं संस्पर्श्य वामहस्तेनैव पिबेत् । केचित्तु वामहस्तेन धारयन्दक्षिणेनैव पिबेदिति वदन्ति ।

ततः सर्वं भुक्तोच्छिष्टमन्नमादाय,—

" रौरवादिनिमग्नानां देहिनामन्नमिच्छताम् ।
तृप्तयेऽन्नमिदं दत्तमक्षय्यमुपतिष्ठतु " ॥

इत्युच्छिष्टान्नभाग्भ्य[1] उच्छिष्टमन्नं दत्त्वा,—

" रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् ।
अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु " ॥

इत्यन्नोपर्युदकं दद्यात् । जीवत्पितृकस्याप्येतदिति केचित् । नेत्यन्ये ।

ततोऽमृतापिधानमसीत्येतस्य याज्ञि० पद उदकं यजुः । उदकपाने विनियोगः—" ॐ अमृतापिधानमसि " इत्युदकं पीत्वोत्तिष्ठेत् ।

एकपङ्क्त्युपविष्टानां मध्ये यदि कश्चन नास्तिक्यात्प्रमादाद्वा भुञ्जानेषु पूर्वमुत्तिष्ठेत्तदा शिष्टं भोजनपात्रस्थमन्नं परित्यजेत् । संकटेऽग्निना भस्मना दर्भेणोदकेन द्वारव्यवधानेन वा पङ्क्तिभेदः कार्यः ।

भोजनपात्रे यदि लवणं शिष्टं भवेत्तदा तत्पात्रमस्पृशन्वामहस्तेन जलेन प्लावयेत्[2] । यदि न प्लावयेत्तदा प्राणायामत्रयमष्टोत्तरशतं गायत्रीजपश्च । उत्तरापोशनानन्तरं भोजनपात्रस्पर्शे स्नानं प्राणायामश्च ।

ततो भोजनपात्रं *निष्काशयित्वा हस्तप्रक्षालनमकुर्वन्नेकवारं गण्डूषमेवाऽऽदौ कृत्वा हस्तौ मुखं च यावल्लेपनिःसरणं तर्जनीरहिताङ्गुलिभिः प्रक्षाल्य लोहितनिःसरणं विना यावद्दन्तलग्नमुच्छिष्टं निर्गच्छति तावन्निष्काश्य षोडशगण्डूषान्कृत्वा मुखं पादौ च प्रक्षाल्य द्विराचम्य भूमिमुपलेप- + यित्वाऽभावे स्वयं विलिप्य पुनर्हस्तपादप्रक्षालनं कृत्वाऽऽचम्य भूमिं संस्पृश्य द्विराचम्य,

प्राणानां ग्रन्थिरित्यस्य याज्ञि० पद आत्मा यजुः । हृदयाभिमर्शने विनियोगः—" ॐ प्राणानां ग्रन्थि० प्यायस्व " । इति हृदयमभिमृशति ।

---

* अत्र निष्काश्येति पाठो युक्तः । + उपलेप्येति पाठो युक्तः ।

१ ग. घ. ङ. 'भाग्भ्योऽन्नं । २ ग. घ. ङ. 'येत्प्राणा' ।

( भोजनानन्तरं करणीयो विधिः )

ततः पुनराचम्य,

अङ्गुष्ठमात्रः पुरुष इत्यस्य याज्ञिक्यो देवता उपनिषदः परमात्माऽनुष्टुप्। दक्षिणपादाङ्गुष्ठे दक्षिणपाणिजलनिःस्रावणे विनियोगः—"ॐ अङ्गुष्ठमात्रः पु० भुक्" इति दक्षिणपादाङ्गुष्ठे दक्षिणं पाणिं निःस्रावयति।

श्रद्धायां प्राणे निविश्येत्यादिमन्त्राणां याज्ञिक्य[1] उपनिषद आत्मा यजुः। हुतानुमन्त्रणे विनियोगः—"ॐ श्रद्धायां प्राणे निविश्यामृत१ हुतम्। प्राणमन्नेनाऽऽप्यायस्व। श्रद्धायाम० समानमन्नेनाऽऽप्यायस्व" इत्यूर्ध्वहस्तो हुतानुमन्त्रणं कुर्यात्।

ब्रह्मणि म इत्यस्य याज्ञिक्य[2] उपनिषद आत्मा यजुः। स्वस्मिन्नात्मयोजने विनियोगः—"ॐ ब्रह्मणि म आत्माऽमृतत्वाय" इति स्वस्मिन्नात्मानं योजयेत्[3]। स्वं हृदयम्।

एतावत्कर्तुमशक्तावन्नाभिमन्त्रणान्तं कृत्वा,

"ॐ अमृतोप० मासि" इत्युदकं पीत्वा,

"ॐ प्राणाय स्वाहा। ॐ अपानाय स्वाहा। ॐ व्यानाय स्वाहा। ॐ उदानाय स्वाहा। ॐ समानाय स्वाहा" इत्येतैरेव मन्त्रैः पूर्ववदाहुतीर्हुत्वा बलिनिष्काशनादि सर्वं पूर्ववत्। भोजनान्तेऽमृतापिधानमसीत्युदकपानमेव नान्यत्समन्त्रकं कर्मजातम्। इत्यशक्तौ विधिः।

ततो वाङ्म इत्यादिमन्त्राणां याज्ञिक्य[4] उपनिषदो वागादयो यजुः। वागाद्यालम्भे विनियोगः—"ॐ वाङ्म आसन्" इति मुखमालभते। "ॐ नसोः प्राणः" इति नासिके युगपत्सकृदेव मन्त्रो द्विवचनलिङ्गात्। "ॐ अक्ष्योश्चक्षुः" इति चक्षुषी तथैव। "ॐ कर्णयोः श्रोत्रम्" इति श्रोत्रे। "ॐ बाह्वोर्बलम्" इति बाहू। 'ऊरुवोरोजः' इत्यूरू[5]। बाह्वन्तानां दक्षिणहस्तेन क्रमेण। ऊर्वोस्तु वामहस्तेनैव। मुखादीनि यथायथं दक्षिणवामहस्ताभ्याम्। एतेष्वपि द्विवचनलिङ्गात्सकृदेव मन्त्रः। अरिष्टा० इति सर्वाण्यङ्गानि। सकृदेव मन्त्रः।

वयः सुपर्णा इत्यस्य याज्ञिक्य[6] उपनिषदः सुपर्णास्त्रिष्टुप्। चक्षुर्निमार्जने

---

१ ग. घ. ङ. 'ज्ञिक्यो देवता उ'। २ ग. घ. ङ. 'ज्ञिक्यो देवता उ'। ३ क. 'त्। ए'। ४ ग. घ. ङ. 'ज्ञिक्यो देवता उ'। ५ ख. 'रू। श्रोत्रादिषु द्वाभ्यां हस्ताभ्यां सहैव। एते'। ६ ग. घ. ङ. 'ज्ञिक्यो देवता उ'।

विनियोगः। "ॐ वयः सु० बद्धान्" इति चक्षुषी निमृजीत। अङ्गुष्ठेन दक्षिणमनामिकयोत्तरम्।

नमो रुद्रायेत्यस्य याज्ञिक्यो देव० पदो[1] रुद्रविष्णू यजुः। उपस्थाने विनियोगः—"ॐ नमो रु० पाहि" इति रुद्रविष्णू उपतिष्ठते।

त्वमग्ने द्युभिरित्यस्य याज्ञिक्य उपनिषदोऽग्निस्त्रिष्टुप्। अन्नपाचनार्थमग्न्युपस्थाने विनियोगः—"ॐ त्वमग्ने द्युभि० शुचिः" इति जाठरमग्निमुपतिष्ठते।

शिवेन म इत्यस्य याज्ञिक्य[2] उपनिषदोऽग्निस्त्रिष्टुप्। प्रार्थने विनियोगः—"ॐ शिवेन०" इति प्रार्थयेत्[3]।

परिवेषणे शाकादीनां स्थानान्याह स्मृतिरत्नाकरे जातूकर्ण्यः—

"शाकादि पुरतः स्थाप्यं भक्ष्यं भोज्यं च वामतः।
संस्थाप्य ओदनो मध्ये दक्षिणे घृतपायसम्॥
ओदनस्यापरार्धे तु दद्यादुपरि सूपकम्" इति।

सूपकं सूपम्। स्वार्थे कः।

बलिदानाकरण+प्रायश्चित्तमाह जातूकर्ण्यः—

"अकृत्वा यश्चित्रबलिं भुङ्क्ते विप्रस्त्वनापदि।
प्राणायामत्रयं कृत्वा गायत्र्यष्टशतं जपेत्" इति[4]।
"भोजनादौ बलिं मुक्तं समुद्धार्यैव भोजनम्।
अनुद्धार्य तु यो भुङ्क्ते प्राणायामाष्टकं चरेत्" इति[5]।

समुद्धार्येति णिच्प्रयोगादन्यकर्तृकमुद्धरणम्[6]। न स्वकर्तृकमिति गम्यते।

अपोशा(आपोश)नाकरणप्रायश्चित्तमाह संवर्तः—

"अपोशा(आपोश)नमकृत्वा तु भुङ्क्ते योऽनापदि द्विजः।
भुञ्जानस्तु यदा ब्रूयाद्गायत्र्यष्टशतं जपेत्" इति।

अष्टशतमष्टोत्तरशतम्।

भोजने परस्परं स्पर्शे स्मृतिसारे—

"यदि भोजनकाले तु ब्राह्मणो ब्राह्मणं स्पृशेत्।
त्यक्त्वा तदन्नमुत्थाय प्राणायामत्रयं चरेत्" इति॥

---

+ अस्मादनन्तरं बल्युद्धरणाकरणेत्यधिकं पठितव्यं तथा सति भोजनादावित्यादिगम्यत इत्यन्तो ग्रन्थः संगच्छते। स ग्रन्थोऽधिक इत्येव वा बोध्यम्।

१ ग. घ. ङ. °ज्ञिक्यो देवता उ°। २ ग. घ. ङ. °ज्ञिक्यो देवता उ°। ३ क. ख. °त्। बलि°। ४ क. ख. °ति। अ°। ५ क. ख. °ति। आपो°। ६ ख. °तः। आपो°।

प्रयोगदर्पणे स्मृत्यन्तरे तु—

" यदि भोजनकाले तु ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन्भुक्त्वा गायत्र्यष्टशतं जपेत् " इत्युक्तम् ।

यज्ञोपवीतं विना भोजने लघुहारीतः—

" विना यज्ञोपवीतेन भुङ्क्ते तु ब्राह्मणो यदि ।
स्नानं कृत्वा जपं चैव उपवासेन शुध्यति " इति ।

जपो गायत्र्याः । इदं च ज्ञानतः ।

अज्ञानतस्तु—

" ब्रह्मसूत्रं विना भुङ्क्ते ब्राह्मणो यद्यकामतः ।
गायत्र्यष्टसहस्रेण प्राणायामेन शुध्यति " ।

इति संवर्तोक्तं द्रष्टव्यम् । अष्टसहस्रमष्टोत्तरसहस्रम् ।

( * स्मृत्यन्तरे— )

" नीलीक्षेत्रोत्पन्नान्नादिभुक्तौ चान्द्रम् । नीलीं धृत्वा
यदन्नादि दीयते तत्र दातुर्भोक्तुश्च सांतपनम् ।

यत्तु शङ्खः—

" नीलीवस्त्रं परिधाय भुक्त्वा स्नानार्हको भवेत् " इति ।

तदज्ञानविषयम् ।

स्मृत्यन्तरे—" कम्बले पट्टसूत्रे च नीलीदोषो न विद्यते " इति ।

स्मृत्यन्तरे—" भुक्त्वाऽनाचम्योत्थाने सद्यः स्नानम्, अस्थिदूषितान्नभक्षणे घृतप्राशनं, दन्तपाते च, एवं मुखे रक्तादिदुष्टे त्रिरात्रं, दीपोच्छिष्टमभ्यङ्गोच्छिष्टं च तैलं भुक्त्वा नक्तमाचरेत् " इति ।

भोजनकाले रेतोमूत्रपुरीषोत्सर्गे ब्रह्मपुराणे—

" रेतोमूत्रपुरीषाणामुत्सर्गश्चेत्प्रमादतः ।
तदादौ तु प्रकर्तव्या तेन शुद्धिर्मृदाऽम्बुभिः ।
पश्चादाचम्य तु जले जप्तव्यमघमर्षणम् " इति ।

एतदनिगीर्णग्रासविषयम् ।

---

* धनश्चिह्नान्तर्गतो ग्रन्थः क. ग. पुस्तकातिरिक्तपुस्तकेषु नास्ति ।

सक्तुभिगीर्णग्रासे तु, आपस्तम्बः—

" भुञ्जानस्य तु विप्रस्य कदाचित्स्रवते गुदम्।
उच्छिष्टमशुचित्वं च प्रायश्चित्तं कथं भवेत्।
आदौ कृत्वा तु वै शौचं ततः पश्चादुपस्पृशेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति " इति।

यत्तु शातातपः—

" कृत्वा मूत्रविडुत्सर्गं मोहाद्भुङ्क्तेऽथवा पिबेत्।
त्रिरात्रं तत्र कुर्वीत प्राणायामत्रयं ततः " इति[1]।

तद्भूयो ग्रासाशने। त्रिरात्रमित्यनन्तरमुपोषणमिति शेषः। विडुत्सर्गः पुरीषोत्सर्गः।

भोजनकालेऽशुचितायां शातातपः—

" अथ भोजनकाले चेदशुचिर्भवति द्विजः।
भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुध्यति।
भक्षयित्वा तु तं ग्रासमहोरात्रेण शुध्यति।
अशित्वा सर्वमन्नं तु त्रिरात्रेण विशुध्यति " इति[3]।

( + एतत्सर्वं प्राणाहुत्युत्तरं ज्ञेयम्।

दुष्टान्नाशने ब्रह्मपुराणे—

" भक्ष्यं त्वभक्ष्यवाक्येन(ण) यद्द्योद्रोषधर्मतः।
गुरोरपि न भोक्तव्यं वाग्दुष्टं तन्महापदि " इति।

एतत्प्रायश्चित्तमाह गौतमः, वाग्दुष्टादि प्रक्रम्य—

" छर्दनं घृतप्राशनं च " इति।

एतच्चाकामतः।

कामतस्तु शङ्खः—

" वाग्दुष्टं भावदुष्टं च भाजने भावदूषिते।
भुक्त्वाऽन्नं तु द्विजः पश्चात्त्रिरात्रं तु व्रती भवेत् " इति।

* व्रतमत्र यावकम्। )

+ धनुश्चिह्नान्तर्गतो ग्रन्थो घ. ङ पुस्तकयोर्नास्ति। * एतत्प्रभृति भोजनविधिसमाप्तिपर्यन्तो ग्रन्थो नास्ति ख. पुस्तके।

१ ख. ग. घ. ङ. 'ति। त्रि°। २ ख. ग. घ. ङ. 'षः। एतद्भूयो ग्रासाशने। वि°। ३ ख. °ति। दु°। ४ क. 'द्याद्दोष°।

संवर्तः—" केशकीटावपन्नं च नीलीलाक्षोपघातितम्[1] ।
स्नाय्वस्थिचर्मसंसृष्टं भुक्त्वा तूपवसेदहः " इति ।

इदमापद्यकामतः ।

अनापदि कामतस्तु शङ्खः—

" दूषितं केशकीटैश्च मार्जारैर्मूषकैस्तथा ।
मक्षिकाचटकैश्चैव त्रिरात्रं तु व्रतं चरेत् " इति ।

कामतोऽभ्यासे प्रचेताः, दुष्टकीटानुपक्रम्य,—

" एतैः काकादिभिश्चैव यदन्नं दूषितं भवेत् ।
तदन्नं कामतो जग्ध्वा कृच्छ्रं सांतपनं चरेत् " इति ।

अकामतोऽर्धम् ।

यत्त्वाह विष्णुः—

" भुक्त्वाऽस्पृश्यं तथाऽऽशौचिकीटकेशैश्च दूषितम् ।
कुशोदुम्बरबिल्वाद्यैः पनसाम्बुजपत्रकैः ॥
शङ्खपुष्पीसुवर्चादिक्काथं पीत्वा विशुध्यति " इति ।

तदापद्यशक्तविषयम् ।

सिद्धान्ने केशकीटादिपाते तु प्रचेताः—

" अन्नं भोजनकाले तु मक्षिकाकेशदूषितम् ।
अनन्तरं + स्पृशेदापस्तदन्नं भस्मना स्पृशेत् " इति ।

ब्राह्मेऽपि[2]—" चण्डालपतितामेध्यैः कुनखैः कुष्ठिभिस्तथा[3] ।
ब्रह्मघ्नसूतिकोदक्याकौलेयककुटुम्बिभिः ।
दु(व्यु)ष्टं वा केशकीटाक्तं मृद्भस्मकनकाम्बुभिः ।
शुद्धमद्यात्सल्लेखं प्रदुष्टं दुष्टमेव च " इति ।

कौलेयकः श्वा । कुटुम्बी कीटविशेषः । व्युष्टं पर्युषितम् ।

यत्तु कीटादिभिः सहैव पक्वं तत्तु वर्जनीयमेवेत्याह हारीतः—

" विशुद्धमपि चाऽऽहारं मक्षिकाक्रिमिजन्तुभिः[4] ।
केशरोमनखैर्वाऽपि दूषितं परिवर्जयेत् " इति ।

+ सर्वपुस्तकेषु दीर्घपाठः स चाऽऽर्षः ।

१ क. °तिनम् । २ घ. ङ. °पि— चाण्डा° । ३ घ. ङ. °ष्ठिना तथा । ४ घ. ङ. °काक्रमि° ।

क्वचिदपवादमाह यमः—

" देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च।
काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्जयेत्।
अन्नं तन्मात्रमुद्धृत्य शेषं संस्कारमर्हति।
घृतस्य प्रोक्षणाच्छुद्धिर्द्रवाणामतितापनात्।
संस्पर्शाच्च भवेच्छुद्धिरपामग्नेर्घृतस्य च।
छागेन मुखसंस्पृष्टं शुचि चैव हि तद्भवेत्" इति।

संवर्तः—" शूद्राणां भाजने भुक्त्वा अथवा भिन्नभाजने।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति" इति॥

भिन्नभाजनं कांस्यमेव—

" ताम्ररजतसुवर्णाश्मशङ्खस्फटिकानां भिन्नमभिन्नमपि"

इति देवलस्मरणात्।

" भिन्नकांस्ये तु योऽश्नीयान्नद्यां स्नात्वा जपेद्द्विजः।
गायत्र्यष्टसहस्रं तु एकभुक्तस्तदा शुचिः" इति बौधायनोक्तेश्च।

एतच्च ज्ञानतः, संवर्तोक्तं त्वज्ञानविषयम्।

यत्तु पराशरः—

" भिन्नभाण्डे तु भुञ्जानो ह्यज्ञानेन द्विजोत्तमः।
सुवर्णोदकसंस्पृष्टं घृतं प्राश्य विशुध्यति"॥

इति संवर्तोक्तिसमानविषयं तदिति द्रष्टव्यम्*।

+ स्मृत्यर्थसारे परिवेषणे रजोदृष्टौ तत्स्पृष्टान्नस्य त्यागः। एवं चण्डाल-सूतिकादिस्पृष्टेऽपि।

भुञ्जानस्य क्षुते संग्रहे—

" क्षुतं भोजनमध्ये चेज्जायते यस्य कस्यचित्।
आदित्यं जन्मभूमिं च स्मरेत्प्रोक्षितमस्तकः" इति।

इति भोजनविधिः।

* अस्मात्पुरतो घ. ङ. पुस्तकयोरनुपदं धनुश्चिह्नमध्ये संगृहीतो ग्रन्थो वर्तते। + एतत्पङ्क्तिद्वयं क. पुस्तके भुञ्जानस्येत्यादिमस्तक इतीत्यन्तग्रन्थात्पुरतो वर्तते।

१ घ. ङ. घृतानां। २ क. °ङ्खस्फाटि°। ३ क. ख. °कास्पृ°। ४ ग. घ. ङ. °स्पृष्टे। भु°।

# अथाग्निकार्यसंज्ञकं समिदभ्याधानमुच्यते ।

तत्रेदं गृह्यम्—

" उभौ कालौ साय९ सायं वा समिधोऽभ्यादधाति पुरस्तात्परिषेचनाद्यथा ह तद्वसवो गौर्यमिति प्रदक्षिणमग्निं परिमृज्य परिषिञ्चति यथा पुरस्ताद्व्याहृतिभिः समिधोऽभ्यादधात्येकैकशः समस्ताभिश्चैषा ते अग्ने समित्तया वर्धस्व चाऽऽच प्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहि स्वाहा । मेधां म इन्द्रो० स्रजौ स्वाहा । अप्सरासु च० जुषता९ स्वाहा । आ मां मेधा सु० जुषन्ता९ स्वाहेति तथैव परिमृज्य परिषिञ्चति यथा पुरस्ताद्यत्ते अग्ने तेज इत्येतैरुपतिष्ठते[1] मयि मेधां मयि प्रजामिति च " इति ।

अस्यार्थः— उभौ कालौ सायंप्रातः सायमेव वा समिधोऽभ्यादधाति, आसमावर्तनम् । अहरहः काष्ठकलापमित्यतोऽहरहरित्यनुवर्तनीयम् । अन्यथा सायंसमिदाधानपक्ष एव वीप्साश्रवणादावृत्तिः स्यात् । उभौ कालावित्यस्मिन्पक्षे न स्याद्वीप्साया अश्रवणात् । न चैवं सायमित्यत्र वीप्सावचनं व्यर्थमिति वाच्यम् । सर्वत्र यः प्रथमं प्रक्रान्तः पक्षः स एवाऽऽन्तं कार्य इतिपरिभाषाज्ञापनार्थत्वात् । न च प्रक्रमात्तु नियम्यत इति वचनादेव सिद्धिः । तस्यानुनिर्वाप्यविषयत्वात् ।

अथवाऽहरहरिति नानुवर्तते । न चैवं सायमित्यत्रैव वीप्साश्रवणादावृत्तिः स्यात् । उभौ कालावित्यस्मिन्कल्पे न स्यात्तस्या अश्रवणादिति वाच्यम् । अनुकल्पपक्षे वीप्सयाऽऽवृत्तौ सिद्धायां कैमुतिकन्यायेन मुख्यकल्पेऽपि तत्सिद्धेः । अस्मिन्व्याख्याने परिगृहीतपक्षः प्रक्रमात्तु नियम्यत इत्येतेनैव[2] सिध्यति ।

पुरस्तात्परिषेचनाद्यथा ह तद्वसवो गौर्यमित्यनेन मन्त्रेण प्रदक्षिणमग्न्यायतनं सोदकेन पाणिना संमृज्य परिषिञ्चति यथा पुरस्तात्, उपनयनोक्तेन पूर्वपरिषेकप्रकारेणेत्यर्थः । व्याहृतिभिरेकैकश एकैकया व्याहृत्या समस्ताभिश्चेति चतस्रः समिधोऽभ्याधायैषा त इत्याद्यैश्चतुर्भिश्चतस्रः समिधोऽभ्यादधातीत्यष्टौ समिधोऽभ्याधाय तथैव यथा ह तदिति परिमृज्योपनयनोक्तेनोत्तरपरिषेकप्रकारेण परिषिञ्चति ।

१ घ. ङ. °तिष्ठेते । २ घ. ङ. इत्यनेनै° ।

ततस्तमग्निं यत्ते अग्न इत्येतैस्त्रिभिर्मन्त्रैरुपतिष्ठते, मयि मेधां मयि प्रजां मय्यग्निरित्येतैस्त्रिभिश्च ।

पुरस्तात्परिषेचनादिति वचनं सर्वेष्वपि श्रौतेषु दर्विहोमेष्वभ्यन्तरदीक्षायामाधानादौ च परिषेकार्थम् । अग्रे परिषिञ्चतीति वचनं परिमार्जनपरिषेकयोः संबन्धप्रदर्शनार्थम् । तेनानन्तरोक्तेषु कर्मस्वपि परिमार्जनमपि सिध्यति । पुरस्तात्परिषेचनादिति सिद्धवदनुवादादेव परिषेकस्य समन्त्रत्वसिद्धौ यथा पुरस्तादिति वचनमत्रैव समन्त्रं परिषेक इतरत्र तु तूष्णीमित्येतदर्थम् , परिसंख्यानार्थं च । तेनाग्न्यायतनसंस्कारपरिस्तरणानि न विद्यन्ते । पूर्वपरिषेकसंबन्धादेवोत्तरपरिषेके सिद्धे पुनर्वचनं समन्त्रपूर्वपरिषेक एवायमुत्तरपरिषेकः । न त्वमन्त्रकपूर्वपरिषेकेऽपि । तेनैतत्समिदाधानातिरिक्तेषु कर्मसु नोत्तरपरिषेकः ।

अथवा पुरस्तात्परिषेचनादिति सिद्धवदनुवाद उद्धननादितन्त्रप्राप्त्यर्थः । अग्रे पुनः परिषिञ्चतीति वचनं पूर्वपरिषेकस्यैव पूर्वतन्त्रावधित्वप्रदर्शनार्थम् । उत्तरत्र तथैव परिमृज्य परिषिञ्चति यथा पुरस्तादिति वचनं परिसंख्यानार्थम् । तेनेतरस्योत्तरतन्त्रस्य निवृत्तिः ।

अथवा पुरस्तात्परिषेचनादिति वचनं परिषेकसदृशान्यधिकरणसंस्कारकाणि कर्माण्यग्न्यायतनसंस्कारपरिस्तरणात्मकान्येवात्र भवन्ति, नान्यानीत्येतदर्थम् । अग्रे परिषिञ्चतीति वचनं परिषेकान्तान्येवाधिकरणसंस्कारकाणि कर्माणि स्युर्नोत्तराणीध्माधानादीनि तादृशानीत्येतदर्थम् । यथा पुरस्तादितिवचनस्य प्रयोजनं तु पूर्ववदेव ।

परिमार्जने प्रदक्षिणवचनमेकप्रयत्नेनैव परिमार्जनं न तु व्यवच्छेदेन तत्तद्दिक्षु परिमार्जनमिति ज्ञापनार्थम् ।

एकैकशः समस्ताभिश्चेत्युभयवचनादेवं ज्ञायते, केवलव्याहृतिग्रहणे व्यस्ताः समस्ता वा व्याहृतयः प्रत्येतव्याः । न तु व्यस्ताः समस्ताश्चेति ।

परिसमुह्य समिध आदध्यात्सायं प्रातर्यथोपदेशं सायमेवाग्निपूजेत्येक इति धर्मसूत्रे वचनं परिषेकनिवृत्त्यर्थम् । तेन विहितप्रतिषिद्धत्वाद्विकल्पः ।

एतच्च प्रातःकालस्यातीतत्वादर्थात्सायमुपक्रम्याऽऽसमावर्तनादहरहरुभयोः कालयोः सायं सायमेव वा कार्यम् ।

न चोभयत्र क्रियापक्षे द्वितीयदिने प्रातरेवोपक्रमः कर्तव्यो वैश्वदेववदिति

---

१ इ तानि । सह° ।

वाच्यम् । उपस्थितसायंकालपरित्यागे प्रमाणाभावात्¹ । वैश्वदेववत्प्रातरुपक्रमसाधकप्रमाणाभावाच्च । वैश्वदेवे तु ये भूताः प्रचरन्ति दिवानक्तमितिमन्त्रे प्रातःसायंकालवाचकयोर्दिवानक्तपदयोर्मध्ये दिवापदप्रथमोपादानमेव प्रातरुपक्रमे प्रमाणम् । न ह्यत्र तथा प्रमाणं लभ्यते ।

प्रातःसंध्योत्तरमकृतस्याग्निकार्यस्य यावद्भोजनं गौणकालमाह याज्ञवल्क्यः—

" कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया " इति ।

अग्निकार्यार्थसमिदाहरणे विशेषो धर्मसूत्रे—

" सदाऽरण्यादेधानाहृत्याधो निदध्यान्नास्तमिते समिद्धारो गच्छेत् " इति ।

आत्मनः समिदाधानार्थमेधान्काष्ठानि सदा प्रत्यहमाहरेत् । तान्याहृतान्यधो निदध्यात् । अस्तमित आदित्ये समिध आहर्तुं न गच्छेच्चोरव्याघ्रादिसंभवादिति व्याख्यातमुज्ज्वलाकृता ।

अन्यश्च विशेषो बैजवापेनोक्तः—

" पुराऽस्तमयात्प्रागुदीचीं दिशं गत्वाऽहिंसन्नरण्यात्समिध आहरेच्छुष्का ब्रह्मवर्चसकामस्याऽऽर्द्रा अन्नाद्यकामस्योभयीरुभयकामस्य " इति ।

अहिंसन्नच्छिन्दन् । अभावे छिन्दन्नपीति ज्ञेयम् ।

समिन्नियमो वायवीये—

" पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ।
शमीरोहितकाश्वत्थास्तदभावेऽर्कवेतसौ " इति ॥

रोहितको वटावान्तरजातिः । रोहितो वर्णोऽस्यास्तीति मत्वर्थीयोऽच् स्वार्थे कन् । रोहीतक इति दीर्घेकारवानप्येतदर्थक एव ।

समिल्लक्षणं कात्यायन आह—

" नाङ्गुष्ठादधिका कार्या समित्स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका नोना तथा नैव द्विशाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता " इति ॥

प्रादेशान्नाधिका नोनेति सूत्रोक्तसमित्कार्यविषये न प्रवर्तते, तत्र तत्र

---

१ ख. °त् । वैश्वदेवे । घ. ङ. °त् । प्रात° ।

सूत्रोक्तस्य समिद्विषये प्रादेशमात्रत्वस्य वैयर्थ्यापत्तेः। शास्त्रान्तरोक्तसमिद्विषये तु विकल्पो वेति द्रष्टव्यम्।

## अथ प्रयोगः।

उक्तरीत्या सायंसंध्यां विधायाऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं सायमग्निकार्यं करिष्य इति संकल्प्याग्निं समिध्य प्रज्वाल्य ध्यायेत्।

उपनयनसमष्ट्युत्तरभावीन्यग्निकार्याणि तु श्रोत्रियागारादाहृते लौकिकेऽग्नावेव कार्याणि।

उपनयनाग्निरेव विवाहाग्निरिति पक्षे तु तत्रैवाग्निकार्यम्। विवाहहोमोऽपि तत्रैव। अग्नावौपासनत्वसिद्धिद्वारेत्यस्य लोप इति विशेषः। तत्राग्निकार्येऽग्न्यायतनसंस्कारपरिस्तरणयोर्विकल्पः।

उल्लेखनावोक्षणोत्सेचनकरणपक्ष आयतनं प्रकल्प्य तत्र लौकिकाग्नेः स्थापनं कृत्वा तत्र समिदाधानं कार्यम्।

ततो यथा ह तद्वसव इत्यस्य विश्वे देवा अग्निस्त्रिष्टुप्। परिसमूहने विनियोगः—" ॐ यथा ह तद्व० आयुः " इति सोदकेन पाणिनाऽग्निं प्रदक्षिणं परिसमूहेत्।

ततोऽदित इत्यादिभिः परिषेकं कृत्वा स्वयमेव पुराऽस्तमयात्प्रागुदीचीमसंभवे यां कांचन दिशं गत्वा स्वयमेव च्छित्त्वा, अशक्तावन्येन च्छेदयित्वा वाऽऽहृता अथ एव स्थापिता अष्टौ पलाशसमिधो गृहीत्वा शुद्धोदकेन प्रोक्ष्य व्यस्तव्याहृतीनामग्निर्ऋषिः समस्तव्याहृतीनां प्रजापतिर्ऋषिः। अग्निवायुसूर्यप्रजापतयः क्रमेण चतसृणां देवताः। गायत्र्युष्णिगनुष्टुब्बृहत्यः क्रमेण चतसृणां छन्दांसि। समिदभ्याधाने विनियोगः—" ॐ भूः, ॐ भुवः, ॐ सुवः, " " ॐ भूर्भुवः सुवः " इति चतसृभिश्चतस्रः समिधोऽभ्यादधाति। जुहोतिचोदनाभावान्न स्वाहाकारः।

केचित्तु स्वाहाकारमपीच्छन्ति। अस्मिन्पक्षे— अग्नय इदं० वायव इदं० सूर्यायेदं० प्रजापतय इदं० इति त्यागाः।

' ॐ एषा ते अग्ने० माहि स्वाहा ' अग्नय इदं०। " ॐ मेधां म इन्द्रो० स्रजौ

१ क. °षः। अग्नि°। २ घ. ङ. व्यस्तानां व्या°। ३ घ. ङ. °तयो दे°। ४ घ. ङ. °ह्त्यश्छन्दां°।

स्वाहा " इन्द्राय सरस्वत्या अश्विभ्यां चेदं० । ' ॐ अप्सरासु च या० न्मनः । दैवीं० षता९ स्वाहा ' मेधाया इदं० ।

आ मां मेधा सुरभिरित्यस्य याज्ञिक्य उपनिषदो मेधा त्रिष्टुप्, समिदभ्याधाने विनियोगः—" ॐ आ मां मेधा० जुषन्ता९ स्वाहा " मेधाया इदं० ।

इत्येतैश्चतुर्भिश्चतस्रोऽभ्यादधाति । एतेषु स्वाहाकारः सूत्रकृता पठितत्वात् ।

ततः पूर्ववत्परिसमुह्यादितेऽन्वमꣳस्था इत्येतैरुत्तरपरिषेकं कृत्वा परिस्तरणसत्त्वे तानि विसृज्य—

यत्ते अग्ने तेज इत्यादिमन्त्रत्रयस्याग्निर्द्विपदा गायत्र्यः । मयि मेधामित्यादि[1]मन्त्रत्रयस्याग्निर्द्विपदा गायत्र्यः । उपस्थाने विनियोगः—"ॐ यत्ते अग्ने तेज० यासम् " " यत्ते अग्नेवर्चस्ते० " " यत्ते अग्ने हरस्ते० " " मयि मे० त्यग्निस्तेजो० " " मयि मेधां० मयीन्द्र इन्द्रियं दधातु " "मयि मेधां० मयि सूर्यो भ्रा०" इत्येतैरग्निमुपतिष्ठते । अन्त्ययोर्मयि मेधामिति मन्त्रयोरैन्द्रीन्यायेन विनियोगः ।

ततो भस्म धृत्वाऽग्निं संपूज्य श्रद्धां मेधामित्यग्निं संप्रार्थ्य प्रमादादिति विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् ।

एवं प्रातरुक्तरीत्या प्रातःसंध्यां विधाय सायमग्निकार्यवत्प्रातरग्निकार्यं कुर्यात् । तत्र प्रातरग्निकार्यं करिष्य इति संकल्पवाक्ये विशेषः ।

इत्यग्निकार्यम् ।

तत उक्तप्रकारेण स्वसंनिहितानां पितृमात्रादीनामुपसंग्रहणमभिवादनं च कार्यम् । तत्राभिवादनं प्रत्यभिवादनज्ञानामेव कार्यं तदनभिज्ञानां तु नमस्क्रियामात्रम् । सभायज्ञशालादेवतायतनेषु सर्वान्युगपदेव नमस्कुर्यात् । न प्रत्येकम् । उन्मत्तमशुचिं धावन्तं जृम्भमाणं वमन्तं दन्तान्धावयन्तमभ्यक्तशिरसं स्नानं कुर्वन्तं जपन्तं यज्ञादिकर्मण्यासक्तं जलस्थं समित्पुष्पकुशादीन्वहन्तं पाषण्डं षण्ढं[2] शठं महापातकिनं नास्तिकं व्रात्यं पतितं कितवं कृतघ्नं च नाभिवादयेत् । न च नमस्कुर्यात् । प्रमादात्करणे त्वष्टोत्तरशतं गायत्रीजपः प्राणायामत्रयं च । क्षत्रियवैश्याभिवादने दशाष्टौ वा ब्राह्मणानभिवाद्य विशुध्यति । शूद्राभिवादने सचैलं स्नानं कृत्वा शतं ब्राह्मणानभिवाद्य विशु-

१ क. 'मिति म' । २ ख. ग. घ. ङ. 'ण्डं श' ।

ध्यति। सभायज्ञशालाराजगृहेषु नमस्कारमात्रं नाभिवादनम्। उदक्यासूतिकाभर्तृघ्नीगर्भघातिन्यो नाभिवाद्याः। एतासामभिवादन उपवासः। स्वयं युवा चेत्तदा युवतीनां गुरुपत्नीनां भुव्यभिवादनं कुर्यात्। ऋत्विजां मान्यत्वेऽप्यधिकवयस एवाभिवाद्याः। एवं श्वशुरमातुलपितृव्यादयोऽपि। एतेषां कनीयसां तु परितोषार्थमाभिमुख्यमभिभाषणं च। तच्चाभिभाषणं ब्राह्मणं प्रति कुशलशब्देन। क्षत्रियं प्रत्यनामयशब्देन। वैश्यं प्रति क्षेमशब्देन। शूद्रं प्रत्यारोग्यशब्देन। स्वस्मात्कनिष्ठानां ब्राह्मणानां क्षत्रियादीनां च स्वस्त्यस्त्वित्याशीर्देया। प्रत्यभिवादनं शूद्रं प्रत्यपि कार्यम् "प्रत्यभिवादेऽशूद्रे" इति पाणिनिसूत्रीयपर्युदासात्[1]। देवताप्रतिमायास्त्रिदण्डियतेश्च दर्शने नमस्कारं न कुर्याच्चेत्तदेकरात्रमुपोषणम्। संध्यान्ते तु शिष्यं पुत्रं दौहित्रं दुहितुः पतिं च विना सर्वान्कनीयसोऽप्यभिवादयेदेवेति। एतन्मूलमाकरे स्पष्टम्।

## अथ प्रसङ्गादुपनयनाग्निनाशप्रायश्चित्तमुच्यते।

आचार्यो देशकालौ संकीर्त्योपयनाग्न्यनुगमनप्रायश्चित्तं करिष्य इति संकल्प्योल्लेखनादिनाऽऽयतनसंस्कारं विधाय मथितं श्रोत्रियागारादाहृतं लौकिकाग्निं वा तत्र प्रतिष्ठाप्य प्रज्वाल्य परिस्तीर्य तूष्णीं परिमृज्य परिषिच्यालंकृत्य प्रातरग्निनाश आसायमुपवसेत्। सायमग्निनाश आप्रातरुपवसेत्।

तत आज्यं संस्कृत्य समिधमभ्याधाय सर्वप्रायश्चित्तं हुत्वाऽनाज्ञातादि जपेत्। समिदभ्याधानात्प्रागग्नेरनुगमन उपवासान्ते सर्वप्रायश्चित्तं हुत्वाऽनाज्ञातादिजपं कृत्वाऽन्तरितं समिदभ्याधानं कालप्राप्तं च तन्त्रेणैव कुर्यात्। समिदभ्याधानोत्तरमनुगमने तु कालप्राप्तमेव। उपवासासामर्थ्ये तु—अयाश्चाग्न इत्येकामाज्याहुतिं जुहुयात्।

तत्राऽऽपूर्विकतन्त्रेण प्रयोगः। देशकालौ संकीर्त्याग्न्यनुगमनप्रायश्चित्तं करिष्य इति संकल्प्योल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वा चत्वारि शृङ्गेति ध्यायेत्। अत्र विण्नामाऽग्निः।

ततः समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वोपनयनाग्न्यनुगमनप्रायश्चित्तकर्मणि या यक्ष्यमाणा देवता तां परिग्रहीष्यामि। अयासमग्निमेकयाऽऽज्याहुत्या यक्ष्ये[2]। एतां देवतां सद्यो यक्ष्य इत्युक्त्वाऽन्वाधानसमिधोऽग्नावादध्यात्। न वाऽन्वाधानम्।

---

१ घ. ङ. °सूत्रात्। २ ग. घ. ङ. °ग्निमाज्या°।

ततोऽग्निं परिस्तीर्य दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भानाज्यमेकां समिधं चाऽऽसाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य दर्वीं संमृज्याऽऽज्यं संस्कृत्याग्नेः पश्चाद्दर्भेष्वाज्यं दर्वीं च निधायाग्निं मन्त्रैः परिषिच्यालंकृत्य दर्व्याऽऽज्यमादाय, 'ॐ अयाश्चाग्नेऽस्य० भेषज९ स्वाहा' इत्येकामाहुतिं जुहुयात् । अयसेऽग्नय इदं० ।

ततः परिस्तरणानि विसृज्य सर्वप्रायश्चित्तं हुत्वोत्तरपरिषेकं कुर्यात् । अस्मिन्पक्षे समिदाधानात्प्रागग्न्यनुगमनेऽपि प्रायश्चित्तहोमानन्तरमेव समिदभ्याधानं कार्यम् । अथवा सर्वप्रायश्चित्तमात्रमत्र नोपवासो नायाश्चाग्न इत्याहुतिः ।

इत्यग्निनाशप्रायश्चित्तम् ।

## अथ चतुर्थदिवसीयोपनयनाङ्गानि ।

आचार्यः प्रातः कृतनित्यक्रियः कृतप्रातःसंध्याग्निकार्योपसंग्रहणाभिवादनेन ब्रह्मचारिणा सह प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य त्रिवृदन्नहोमं वास्तुपतये बलिदानं च पूर्ववत्कृत्वा ब्राह्मणान्संभोज्य पुण्याहस्वस्त्ययनर्धीर्वाचयित्वा श्रद्धामेधे प्रीयेतामिति वदेत् ।

ततो ब्रह्मचार्याचम्य प्राणानायम्य व्रतविसर्गार्थं देवतोपस्थानं पूर्ववत्कुर्यात् । तत्र 'तच्छकेयं तन्मे राध्यताम्' इत्येतस्य स्थाने 'तदशकं तन्मेऽराधि' इतिमन्त्रसंनामः । ततस्त्र्यहव्रतं विसृजेत् ।

तत आचार्यः स्थापितदेवतानां तत्रैव पञ्चोपचारैः पूजनं विधाय तद्वंशपात्रं स्वयं गृहीत्वा गृहीताविघ्नगणपकलशया भार्यया ब्रह्मचारिणा च सह वेदिसमीपमागत्य वेद्यामुपविश्य गणपतिमभ्यर्च्य षोडशोपचारैरावाहितदेवताः पूजयेत् । तत्राभिषेककाले नीराजनतैलाभ्यङ्गसुगन्धिद्रव्यसमर्पणोष्णोदकस्नानादि पूर्ववत् ।

तत आवाहितदेवताविसर्गोत्तरं पूर्ववन्मही द्यौरित्यादिविधिना पुण्याहादिवाचनं विदध्यात् । तत्रास्य मण्डपोद्वासनकर्मणः पुण्याहं भवन्तो ब्रुवन्त्वित्यादिवाक्यप्रयोगः । श्रद्धामेधे प्रीयेतामिति देवतानिर्देशः ।

ततः समुद्रज्येष्ठा इत्यभिषेकान्ते कुलपूज्योऽन्यो वा कश्चन मान्यस्ताः शाखा उन्मुच्य तत्सूत्रं कलशवेष्टनसूत्रं च क्षीराभ्यक्तं कृत्वाऽक्षतपूगीफलयुक्तं

तत्कर्तृहस्ते दद्यात् । स च भार्यायै तत्सूत्रं प्रदर्श्य वस्त्रादिधनपेटिकायां संस्थापयेत् ।

ततोऽग्निं विसृज्य ताः शाखास्तत्स्नानजलं च गृहस्योपरि शुद्धदेशे निक्षिप्याङ्गणवितानस्यैशानकोणे विमोचनं कुर्यात् । मुख्यमण्डपसत्त्वे तु देवतापूजनमावाहनक्रमेण तत्र तत्र गत्वा कार्यम् ।

ततो यथासंभवं ब्राह्मणभोजनं कृत्वा नानानामगोत्रेभ्यो ब्राह्मणेभ्यो गन्धादिपूजनपूर्वकं भूयसीं दक्षिणां दत्त्वोपनयनकर्मणः साङ्गतासिद्ध्यर्थं कुलमान्यायान्यस्मै वा मान्याय गां तत्प्रतिनिधिभूतं द्रव्यं वा दद्यात् । ततो विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् ।

ततो ब्रह्मचारी गुरुकुले वसेद्गुरोरनुकूलां सेवां च कुर्यात् । प्रागुक्तानि गृह्योक्तानि धर्मोक्तानि च व्रतानि यथाशक्त्याचरेत् । लौकिकाग्नावग्निकार्यं कुर्याद्यावत्समावर्तनम् ।

यदि मोटनाचारश्चेत्सोऽपि कार्यः । तच्च मोटनमुक्तं मेरुतन्त्रे—

" अथ मोटनकं वक्ष्ये देवाविर्भावकारणम् ।
पाकक्रिया प्रकर्तव्या चतुर्भक्ष्यसमन्विता ॥
भार्यया साधकेन्द्रस्य पातिव्रत्यादियुक्तया ।
अप्रसूताः स्त्रियः पञ्च आहूय सकुमारिकाः ॥
अलंकृताः पवित्रास्ता एकपङ्क्त्योपवेशयेत् ।
तत्राऽऽदौ विघ्नपस्थानमन्त्रे तु बटुकस्य च ॥

चकारात्कुलदेवतायाः ।

ताः संपूज्य महापात्रे पवित्रे तत्र चार्पयेत् ।
क्रमाद्द्विगुणमानेन मध्वाज्ये च सितादधि ॥
दुग्धं च निक्षिपेत्तत्र नैवेद्यं तत्र निक्षिपेत् ।
कुमारिकाया हस्तेन मन्थयेयुः स्त्रियश्च तत् ॥
स्त्रीभिस्तस्मिन्मथ्यमाने देवावेशः प्रजायते ।
देवावेशे जायमाने सुगन्धो वाति मारुतः ॥
सर्वं मनोगतं वक्ति देवताऽऽशु प्रसीदति ।
सिध्यन्ति सर्वकार्याणि मोटनानां शतेन च ॥
नवैर्भवेद्विवाहस्तु पञ्चाशद्भिः सुतस्तथा ।

नखैर्विंशैरित्यर्थः । पञ्चाशद्भिः सुतलाभ इत्यर्थः ।

अशीत्या गतराज्याप्तिर्विंशत्या लभते धनम् ॥
अष्टोत्तरशतेनापि असाध्येन तु मेलयेत् ।
कौमारिका चेष्टदेवं कौमार्या ईरितो विधिः " इति ॥

अष्टोत्तरशतसंख्यैर्मोटनैरसाध्येन कार्येणापि मेलयेत् । असाध्यमपि कार्यं साधयेदित्यर्थः । ( * अष्टोत्तरशतेनाष्टोत्तरशतसंख्यमोटनैः साधकेनाभीष्टदेवं मेलयेत् । साधकस्याभीष्टदेवो भवेदित्यर्थो वा । कौमारिका चाष्टोत्तरशतमोटनानि कुर्यात् । उत्तमपतिलाभार्थमिति शेषः । कौमारी योगेश्वरी तत्संबन्ध्येवायं विधिरित्यर्थः । अथवा कौमार्याः कुमार्येव कौमारी कुमारीप्रधानोऽयमीरितो विधिरित्यर्थः । कुमारीं विनाऽयं विधिर्नैव भवतीति तात्पर्यार्थः । ) कौमारिका चेष्टदेवमुद्दिश्योत्तमपतिलाभार्थमिमं विधिं कुर्यात् । अयं विधिः कौमार्या एवेरितः, कुमारिकां विना विधिर्न भवतीत्यर्थः । कौमारी योगेश्वरी तन्माहात्म्ये तस्यास्तथैव वर्णितत्वात् । तदुद्देशेनायं विधिर्भवतीत्यप्यर्थः । एवमन्येष्वपि संस्कारेष्वाचारश्चेत्कार्यम् ।

इति संस्काररत्नमालायामुपनयनप्रकरणम् ।

इत्योकोपाह्वश्रीमद्गणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां चतुर्थं प्रकरणम् ॥ ४ ॥

अथ पञ्चमं प्रकरणम् ।

## अथात्र प्रसङ्गात्संस्कारान्नभोजनप्रायश्चित्तमुच्यते ।

तत्र प्रायश्चित्तविवेकेऽङ्गिराः—

" जन्मप्रभृतिसंस्कारे बालस्यान्नस्य भोजने ।
असपिण्डैर्न भोक्तव्यं श्मशानान्ते विशेषतः " इति ॥

व्यासः— " निवृत्ते चौलहोमे तु संस्कारे तु द्विजोत्तमः ।
चरेत्सांतपनं भुक्त्वा जातकर्मणि चैव हि ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. घ. ङ. पुस्तकेषु नास्ति ।

अतोऽन्येषु तु भुक्त्वाऽन्नं संस्कारेषु द्विजोत्तमः।
नियोगादुपवासाच्च शुध्यते निन्द्यभोजने" इति॥

नियोगः प्राणायामः।

धौम्यः—"ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्" इति॥

आपस्तम्बः—

"यज्ञियान्नं नवश्राद्धं संग्रहे चैव भोजनम्।
स्त्रीणां प्रथमगर्भे च द्विजश्चान्द्रायणं चरेत्" इति।

यज्ञियान्नं यज्ञसंबन्ध्यन्नम्। यज्ञसंबन्ध्यन्नस्याभोज्यताऽग्नीषोमीयसमाप्तिपर्यन्तम्, अग्नीषोमीयवपाहोमपर्यन्तं वा राजक्रयपर्यन्तं वा। आरम्भसमय एव द्रव्यनिर्देशो यजमानेन कृतश्चेत्तदा न दोषः।

एतत्सर्वमुक्तं धर्मसूत्रे—

"अग्नीषोमीयसंस्थायामेव दीक्षितस्य भोक्तव्यं हुतायां वा वपायां क्रीते वा राजनि यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्निति ब्राह्मणम्" इति।

संस्था समाप्तिः। क्रीते वा राजनीतिपक्ष आपत्तौ।

अग्निष्टोमयाजमानसूत्रे—

"यदस्य यज्ञार्थं तन्निरादिश्य शेषाद्भुञ्जतेऽनिरादिश्य न भुञ्जते प्रागग्नीषोमीयात्" इति।

अस्य दीक्षितस्य। पूर्वत्र तस्यैवोपक्रमात्। यद्द्रव्यं यज्ञार्थं कल्पितं तन्निरादिश्य यज्ञार्थमेतन्मध्य एतावदिति निरादिश्य। अन्तर्भावितण्यर्थोऽत्र। तेन निरादेश्य निरादेशं निरादेशनं निर्देशनमिति यावत्। तद्यजमानं कारयित्वा शेषाद्ब्राह्मणा भुञ्जत इत्यर्थः। अन्यत्स्पष्टम्। संग्रहो विवाहः।

यत्तु—"सर्वेष्वपि च संस्कारेष्वन्नं भुङ्क्ते द्विजो यदि।
नियोगमुपवासं च प्रायश्चित्तं समाचरेत्"।

इति चूडादिसर्वसंस्कारेषु नियोगोपवासविधानं तदापद्विषयं बोध्यम्।

१ ख. 'यान्ने न'। २ ख. 'श्राद्धे सं'।

## अथान्तरितसंस्काराणां प्रयोगः ।

तत्राऽऽदौ तल्लोपप्रायश्चित्तम् ।

तत्र स्मृतिः—" आरभ्याऽऽधानमा चौलात्कालेऽतीते तु कर्मणाम् ।
व्याहृत्याऽऽज्यं सुसंस्कृत्य हुत्वा कर्म यथाक्रमम् ॥
एतेष्वेकैकलोपेऽपि पादकृच्छ्रं समाचरेत् ।
चूडाया अर्धकृच्छ्रं स्यादापदि त्वेव भाषितम् ।
अनापदि तु सर्वत्र द्विगुणं द्विगुणं भवेत् " इति ॥

आधानं गर्भाधानमारभ्य चौलान्तानां संस्काराणां सर्वेषामसर्वेषां वा कालेऽतीते कालातिक्रमे सत्याज्यं संस्कृत्य व्याहृत्या समस्तव्याहृतिभिः कर्मसंख्ययाऽऽज्याहुतीर्हुत्वा तावत्संख्ययाऽऽपदि पादकृच्छ्रं चूडातिक्रमनिमित्तमर्धकृच्छ्रं प्रायश्चित्तं कुर्यात् । अनापदि तु चूडातिक्रमनिमित्तं कृच्छ्रमितरत्रार्धकृच्छ्रमिति विशेषः । ततोऽतीतं यथाक्रमं कर्म चरेत् । कालेऽतीते त्वित्यत्र तुशब्दोऽप्यर्थे । तेन लोपस्यापि संग्रहः । यदि प्रमादन्तरितं कर्म तदीयान्तरितप्रायश्चित्तं वाऽकृत्वैवाग्रिमसंस्कारं करोति तदा पूर्वस्य लोप इतरथाऽतिक्रमः । तत्र लोपेऽप्यतिक्रान्तप्रायश्चित्तवदेव प्रायश्चित्तं द्रष्टव्यम् । परं त्वतीतकर्मानुष्ठानमत्र नास्ति ।

" प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ।
कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः " ॥

इति वचनेनातिक्रान्तस्यैव कर्मणः कर्तव्यताप्रतिपादनात् । यद्यप्यत्र होमोत्तरमतीतकर्मानुष्ठानं तदनन्तरं कृच्छ्रादिप्रायश्चित्तमिति क्रमः प्रतीयते तथाऽपि पाठक्रमादार्थक्रमस्य बलीयस्त्वाद्धोमोत्तरं कृच्छ्रादिप्रायश्चित्तं ततोऽतीतकर्मानुष्ठानमित्येवात्र क्रमः । हुत्वा चैव यथाक्रममिति पाठे तु यथाक्रमं यथासंख्यं व्याहृतिभिर्हुत्वा कृच्छ्रादिप्रायश्चित्तं चरेदित्यर्थः । अतीतकर्मानुष्ठाने प्रायश्चित्ते कृते पश्चादित्यनेन विकल्पः । एतेषु गर्भाधानादिचौलान्तेषु कर्मसु मध्य एकस्यैकस्य लोपे पादकृच्छ्रप्रायश्चित्तं चरेदित्येतेष्वेकैकलोपेऽपीत्यस्यार्थः । अपिशब्दो द्व्यादिकर्मलोपसमुच्चयार्थः । तेन कर्मद्वयलोपे त्रिप्रभृतिकर्मणां सर्वेषामसर्वेषां वा लोपेऽपि पादकृच्छ्रप्रायश्चित्तं भवति । पादकृच्छ्रविषय एवैकैकस्य लोपस्य निमित्तत्वोक्तिर्होम एकैकलोपस्य निमित्ततायाः पाक्षिकतां गमयतीति द्रष्टव्यम् ।

---

१ क. °मादर्थ° ।

अथवैवं योजना । अपिरवधारणार्थः । तस्य च पादकृच्छ्रमित्यनेनान्वयः । तथा चायमर्थो भवति । गर्भाधानादिचौलान्तेषु कर्मसु मध्य एकैकस्य संस्कारस्य लोपे पादकृच्छ्रमेव चरेत्, न होम इति । अयं च होमः प्रतिसंस्कारं समस्तव्याहृतिभिः कार्यः । अनन्तरोदाहृतस्मृतिवाक्यात् ।

कात्यायनस्तु सप्त प्रायश्चित्ताहुतीराह—

" त्वं नः स त्वं न इत्याभ्यामिमं मे ह्यनया ऋचा ।
ये ते शतमयाश्चाभ्यामुदुत्तममवाहुतीः ॥
हुत्वा पृथक्पृथक्पादमर्धं चौले समाचरेत् " इति ।

प्रायश्चित्ते कृतेऽप्यन्तरितानुष्ठाने विकल्पः—

" प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ।
कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः " इति ।

शिष्टानां तु प्रायः करणपक्ष एव संमतः । यदि तु सर्वेऽप्युपनयनपूर्वतनाः संस्कारा अन्तरिताः स्युस्तदा प्रायश्चित्तपूर्वकं तान्कृत्वोपनयनं कार्यम् । प्रायश्चित्तेनैव चरितार्थता संस्काराणामिति पक्षे प्रायश्चित्तमात्रं कृत्वोपनयनं कार्यम् ।

## अथैतस्य प्रयोगः ।

उपनयनदिनात्पूर्वदिने पत्न्या कुमारेण च सहकृतमङ्गलस्नान आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्य कुमारस्य गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलकर्मान्तानां संस्काराणां कालातिपत्तिजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्तहोमं करिष्य इति संकल्प्योल्लेखनादिविधिनाऽग्न्यायतनं संस्कृत्य त्रिणामानं श्रोत्रियागाराहृतं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वाऽग्निं परिस्तीर्योत्तरेणाग्निं दर्भान्संस्तीर्य तेषु दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भानेकां समिधमाज्यं चेति पात्राण्यासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य दर्वीनिष्टपनादि पवित्रे अग्नावाधायेत्यन्तं कृत्वाऽग्निमदित इत्याद्यैः परिषिच्याऽऽसादितां समिधमाधाय,

त्वं नः स त्वं न इति मन्त्रद्वयस्य विश्वे देवा ऋषयः । अग्निर्वरुणश्च देवते । त्रिष्टुप्छन्दः । इमं मे वरुणेत्यस्य विश्वे देवा वरुणो गायत्री । ये ते शतमित्यस्य वामदेवो वरुण इन्द्रः सविता विष्णुर्विश्वे देवा

मरुतश्च त्रिष्टुप् । अयाश्चेत्यस्य वामदेवोऽया अग्निः पङ्क्तिः । उदुत्तमं वरुण, अव ते हेड इत्यनयोर्विश्वे देवा वरुणस्त्रिष्टुप् । समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । संस्कारातिक्रमनिमित्तप्रायश्चित्ताज्यहोमे विनियोगः । " ॐ त्वं नो अ० स्मत्स्वाहा " अग्नये वरुणाय चेदं० । " ॐ स त्वं नो अ० एधि स्वाहा " अग्नये वरुणाय चेदं० । " ॐ इमं मे० के स्वाहा " वरुणायेदं० । " ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितताः पुरुत्रा । तेभ्यो न इन्द्रः सवितोत विष्णुर्विश्वे देवा मुञ्चन्तु मरुतः स्वस्त्या स्वाहा " वरुणायेन्द्राय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यश्चेदं० । " ॐ अयाश्चाग्नेऽस्य० षज९ स्वाहा " अयसेऽग्नय इदं० । " ॐ उदुत्तमं० स्याम स्वाहा " वरुणाये० । " ॐ अव ते हे० तानि स्वाहा " वरुणायेदं० । " ॐ भूर्भुवः सुवः स्वाहा " प्रजापतय इदं० । इति प्रतिसंस्कारमष्टावाहुतीराज्येन जुहोति ।

ततः परिस्तरणानि विसृज्यादितेऽन्वमंस्था इत्याद्यैरुत्तरपरिषेकं कृत्वाऽग्निं पूजयेत् । अथवा प्रतिसंस्कारं समस्तव्याहृतिभिरेकामेवाऽऽज्याहुतिं जुहुयात् । नेतराः सप्ताऽऽहुतयः ।

ततश्चौलातिरिक्तसंस्काराणां प्रमादादकरणे प्रत्येकं पादकृच्छ्रमपि ब्राह्मणचतुष्टयभोजनप्रत्याम्नायद्वारैव बटुना कारयेच्चौलाकरणे त्वर्धकृच्छ्रं षड्ब्राह्मणबटुभोजनप्रत्याम्नायद्वारैव स्वयमेव वा मुख्यकल्पेन कुर्यात् । आलस्यादिना चौलातिरिक्तसंस्काराणामकरणे प्रत्येकमर्धकृच्छ्रम् । चौलाकरणे कृच्छ्रम् । मुख्यकल्पासंभवे सहस्रसंख्यतिलहोमायुतगायत्रीजपद्वादशब्राह्मणभोजनाद्यन्यतमप्रत्याम्नायेन पादकृच्छ्रार्धकृच्छ्रयोर्गोदानरुद्रैकादशिनीजपादिरूपप्रत्याम्नायासंभवात्तिलहोमाद्यन्यतम एव प्रत्याम्नायः । स च तुरीयांशरूपोऽर्धरूप इति पादकृच्छ्रार्धकृच्छ्रानुसारेण कल्पनीयः ।

" पादकृच्छ्रे वस्त्रदानं कृच्छ्रार्धे तैलकाञ्चनम् ।
पादोनकृच्छ्रे गोदानं कृच्छ्रे गोमिथुनं स्मृतम् "

इति विष्णूक्तो वा प्रत्याम्नायः कल्पयितव्यः । तैलयुक्तं काञ्चनं तैलकाञ्चनमिति समासः । सहस्रसंख्यतिलहोमस्तु प्रणवव्याहृतिसहितया गायत्र्या प्रणवसहितसमस्तव्याहृतिभिर्वा केवलेन प्रणवेन वा । अयुतगायत्रीजपस्तूपनयनोपदिष्टतृतीयपाठेन कार्यः । प्रायश्चित्तसंकल्पस्तु मम पुत्रस्य गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनान्तसंस्कारकर्मणां स्वकालेऽकरणेन जनितस्य प्रत्यवायस्य परिहारार्थं पादकृच्छ्रं प्रायश्चित्तं तथा मम पुत्रस्य

चौलसंस्कारकर्मणः स्वकालेऽकरणेन जनितस्य प्रत्यवायस्य परिहारार्थमर्धकृच्छ्रं प्रायश्चित्तं च क्रमेण करिष्य इतिसंकल्पपूर्वकं विप्रभोजनहोमान्यतरप्रत्याम्नायद्वारा कुर्यात्। सूर्यावलोकननिष्क्रमणयोः शास्त्रान्तरोक्तत्वेनानावश्यकत्वान्न तदकरणे प्रायश्चित्तम्।

अथ षष्ठे मास्यन्नप्राशनमित्यत्रत्याथशब्देन निष्क्रमणस्य ज्ञापितत्वादावश्यक एवायं संस्कार इति यद्युच्यते तदाऽन्नप्राशनपदादेतदुल्लेख एतदकरणप्रायश्चित्तं च भवत्येव। एवं प्रायश्चित्तं विधायातीतान्संस्कारानुपनयनदिने तत्पूर्वदिने वा तन्त्रेण कुर्यात्। चौलं तूपनयनदिन एव।

पत्न्या संस्कार्येण च सहोपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्या भार्यायाः प्रतिगर्भसंस्कारातिशयद्वाराऽस्यां जातस्यास्यां जनिष्यमाणगर्भाणां च बीजगर्भसमुद्भवैनोनिबर्हणक्षेत्रसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानाख्यं कर्म, अस्य जातस्य बीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनाख्यं कर्म, अस्य जातस्य जनिष्यमाणगर्भाणां च बैजिकगार्भिकैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं सीमन्तोन्नयनाख्यं कर्म, अस्य कुमारस्य गर्भाम्बुपानजनितदोषनिबर्हणबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्म, अस्य पुत्रस्य बीजगर्भसमुद्भवैनोनिबर्हणायुर्वर्चोभिवृद्धिव्यवहारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नामकर्म, अस्य शिशोरायुरभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सूर्यावलोकनम्, अस्य शिशोरायुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं निष्क्रमणम्, अस्य पुत्रस्य मातृगर्भमलप्राशनशुद्धिबीजगर्भसमुद्भवैनोनिबर्हणान्नाद्यब्रह्मवर्चसतेजइन्द्रियायुरभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमन्नप्राशनाख्यं कर्म चाद्य, अस्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणबलायुर्वर्चोभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चौलाख्यं कर्मास्यामुकशर्मणः कुमारस्य द्विजत्वसिद्धिपूर्वकवेदाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाचार्यपैतृकसावित्रीमातृकमुपनयनाख्यं कर्म च[1] श्वः करिष्य इति संकल्पः।

जातकर्मचूडाकरणकर्मणोः कुमारशब्दप्रयोगवत्तन्मध्यस्थत्वान्नामकर्मादावपि तत्प्रयोग इति कल्पे नामकर्मादिसंकल्पे पुत्रादिशब्दस्थाने कुमारशब्दस्य प्रयोगः कार्यः। कुमारस्य पुत्रस्येत्युभयप्रयोगो वा नामकरणान्नप्राशनयोर्धर्मसूत्रस्मृत्युक्तः। शिशुत्वबालत्वव्यवहारस्तु तच्छुद्धिव्य-

१ ग. घ. ङ. च श्वस्तन्त्रेण क०।

वस्थाविषये द्रष्टव्यः । सा च व्यवस्थाऽग्रे वक्ष्यते । पुंसवनादिभ्यः संस्कारकर्मभ्यश्चौलोपनयनयोः कालभेदादङ्गानि पृथगेव । तन्त्रं तु पुण्याहवाचनादिमात्रपर्यवसायि । शास्त्रान्तरोक्तत्वेन सूर्यावलोकनस्याकरणपक्षे न संकल्पः ।

ततस्तदङ्गत्वेन गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च कृत्वाऽन्नप्राशनचौलोपनयनाङ्गत्वेन विहितमङ्कुरारोपणं कृत्वोपनयनाङ्गत्वेन ग्रहयज्ञं नन्दिन्यादिमण्डपदेवताप्रतिष्ठापनं च कार्यम् । सति संभवे नान्दीश्राद्धोत्तरमेवान्तरितान्संस्कारान्कृत्वा ग्रहयज्ञाङ्कुरारोपणमण्डपदेवताप्रतिष्ठापनानि कुर्यादिति क्रमः । ग्रहयज्ञोत्तरं वाऽन्तरितसंस्काराः कार्याः । सर्वेषां सद्यःकरणे तूपनयनान्तानां सर्वेषां संस्काराणां संकल्पवाक्यान्युच्चार्याद्य करिष्य इत्येव वदेत् । अस्मिन्पक्षेऽन्नप्राशनसंस्कारस्य प्रायश्चित्तेनैव चारितार्थ्यं न तु तस्याप्यनुष्ठानम् । तदनुष्ठानेऽन्नप्राशनानुष्ठानोत्तरम् ।

" न केशादीन्वापयीत भुक्तोऽभ्यक्तो व्रती नरः " ।

इति भोजनोत्तरं वपननिषेधेन चौलासंभवात् । अत्र सर्वाण्यङ्गानि सकृदेवानुष्ठेयानि । वैशेषिकहोमोऽपि संप्रतिपन्नदेवताकश्चेत्सकृदेवानुष्ठेयः । यथा धात्रीचतुष्टयहोमः ।

तत उल्लेखनादिनाऽऽयतनसंस्कारं विधाय तत्रौपासनाग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यायेत् । अन्यः कर्ता चेल्लौकिकाग्नौ स्वकालप्राप्तं कर्म यद्भवति तत्कर्मप्रयुक्ताग्निनामात्र ज्ञेयं सर्वाणि वा ।

ततः समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा पुंसवनसीमन्तोन्नयननामकरणान्नप्राशनहोमकर्मणि या यक्ष्यमाणा देवता इत्यादिव्याहृत्यन्तमुक्त्वा वैशेषिकप्रधानहोमे धातारं चतसृभिराज्याहुतिभिर्यक्ष्ये । अनुमतिं चतसृभिराज्याहुतिभिर्यक्ष्ये । राकां द्वाभ्यामाज्याहुतिभ्यां यक्ष्ये। सिनीवालीं द्वाभ्यामाज्याहुतिभ्यां यक्ष्ये । त्रयोदशाहुतिपक्षे कुहूमेकयाऽऽज्याहुत्या यक्ष्य इत्यधिकम् ।

ततोऽङ्गहोमे वरुणं द्वाभ्यामित्यादि व्याहृतिहोमान्तं कृत्वा प्रधानहोमः । संप्रतिपन्नदेवताकत्वात्पुंसवनसीमन्तोन्नयनसंबन्धिधात्रीचतुष्टयमव्यवहितत्वान्नामकर्मसंबन्धिप्रधानैकदेशभूतं धात्रीचतुष्टयं च तन्त्रेण हुत्वाऽनु नोऽद्यानुमतिरित्याद्या अष्टौ नव वाऽऽहुतीर्जुहुयात् । सर्वेषां सद्यःक्रियापक्षे चौलस्यापि सहैव कर्तव्यत्वादन्वाधानेऽन्नप्राशनपदोत्तरं चौलपदस्याप्युल्लेखः कार्यः ।

---

१ ग. घ. ङ. ॅवापत्तेः । अॅ ।

तत इमं मे वरुणेत्यङ्गहोमं जयाद्युपहोमांश्च कृत्वा स्विष्टकृदादिसंस्थाजपान्तं समाप्य त्रिवृदन्नहोमं पुण्याहवाचनं च कुर्यात् । वास्तुबलेर्विकल्पः । मद्यमित्यादिपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनकर्मणां पुण्याहं भवन्तो ब्रुवन्त्विति त्रिः कर्ता वदेत् । एवं स्वस्त्ययनं भवन्तो ब्रुवन्तु । ऋद्धिं भवन्तो ब्रुवन्त्विति । चौलस्यापि सहकर्तव्यतायां तु, अन्नप्राशनपदोत्तरं चौलपदस्यापि प्रयोगः । ततः क्रमेण प्रधानानि । तत्र यत्र क्रियाया असंभवस्तत्र संस्कार्यं स्पृशंस्तं तं मन्त्रं पठित्वाऽन्ते तां तां क्रियां विभावयेत् । यत्र तु संभवस्तत्र सा सा क्रियेदानीमेव निष्पाद्यते मयेति बुद्ध्या तत्तन्मन्त्रान्ते तां तां क्रियां कुर्यात् । मन्त्रपाठमात्रं वा । तत्र गर्भाधानसंस्कारसिद्ध्यर्थं शयनाह्वानरेतोवस्कन्दनमन्त्रान्संस्कार्यं स्पृष्ट्वा पठित्वा तां तां क्रियां तत्तन्मन्त्रान्ते विभावयेत् । एवं पुंसवनसंबन्धिदधिद्रप्सादिप्राशनमन्त्रान्संस्कार्यं स्पृष्ट्वा पठित्वा तां तां क्रियां विभावयेत् ।

ततो वक्ष्यमाणप्रयोगरीत्या संस्कार्यं संस्पृशन्सीमन्तमुन्नीय वक्ष्यमाणरीत्या जातकर्म कुर्यात् । तत्र जातमपि पुत्रमिदानीमेव जातोऽयमिति विभाव्य तन्मुखं वीक्ष्याश्मनि कुमारं धारयित्वोद्धूपनादिस्तनाभिमर्शनान्तं सर्वं कर्म कुर्यात्संभवात् । अथवा[1] संस्कार्यं स्पृष्ट्वा मन्त्रान्पठित्वाऽन्ते तां तां क्रियां विभावयेत् । आपो[2] हविष्ष्वित्येतस्य जप एव । इदानीं तस्याः सूतिकात्वाभावेन तत्प्रयुक्तविधेरसंभवात् । न चैवमुद्धूपनस्य सूतकाग्निसाध्यत्वात्तस्य चेदानीमभावात्कथं तत्संबन्ध्यनुष्ठानमिति वाच्यम् । सूतकोपलक्षितकर्मार्थोऽग्निः सूतकाग्निः । तच्च कर्मोद्धूपनं तदर्थत्वस्यान्यस्मिन्नग्नावपि संभवेनोद्धूपनकर्मणः प्रवृत्तेर्निराबाधात् । अथवा यथावस्थितमन्त्रपाठ एव । यदा तु कुमारो महांस्तदा सर्वेषां पाठ एव ।

ततो वक्ष्यमाणरीत्या नामदानं विधाय वक्ष्यमाणरीत्या दधि मधु घृतमितित्रिवृत्सव्यञ्जनमन्नं च समन्त्रं प्राशयित्वा ब्राह्मणान्संभोज्याऽऽशिषो वाचयित्वा विष्णुं संस्मरेत् ।

तत उपनयनदिन एव वक्ष्यमाणरीत्या चौलं विधायोपनयनमारभेत । 'उपनीत्या सहाथवा ' इति वचनादुपनयनदिने चौलकर्तव्यतानियमः । अत्र सहशब्द उपनयनसंनिकृष्टकालपरः । यदि पूर्वापत्यस्य संस्कारेष्वन्तरितेषु सत्स्वेवाप-

१ ख. ग. घ. ङ. 'नना' । २ क. 'पो गृहेष्वित्ये' ।

रस्य संस्कारो यः कश्चन प्राप्नुयात्तदा पूर्वस्यान्तरितान्संस्कारान्कृत्वैवापरस्य प्राप्तः संस्कारः कर्तव्यः । पूर्वापत्यसंस्कारसंपादनपूर्वकमेवापरसंस्कारसंपादनस्य युक्तत्वात् । यमलयोर्ज्येष्ठक्रमेणैव संस्कारकर्तव्यतादर्शनाद्व्यवस्थार्थं यमलविषयकशास्त्रस्वीकारे बाधकाभावाच्च । अन्यथाऽसति महति प्रतिबन्धे ज्येष्ठभ्रातृसंस्कारात्पूर्वं कनिष्ठभ्रातृसंस्कारे ज्येष्ठभ्रातुरभिवादनानर्हत्वापत्तेः । आचारश्चाप्येवमेव ।

" ज्येष्ठे त्वकृतसंस्कारे गर्भाधानादिकर्मभिः ।
कनिष्ठो नैव संस्कार्य इति शातातपोऽब्रवीत् " इति वचनमपि ।

वस्तुतस्त्वत्र मूलं चिन्त्यम् । असति महति प्रतिबन्ध इतिविशेषणाज्ज्येष्ठभ्रातुः काराग्र(गृ)हादिना षोडशवर्षपर्यन्तं प्रतिबन्धे कनिष्ठस्य तावत्पर्यन्तमुपनयनप्रतिबन्धः । न चैवं परिवेत्तृत्वादिदोषप्रतिपादकशास्त्रवैयर्थ्यं, तस्य ज्येष्ठकनिष्ठभ्रातृदाराद्यनेकविषयकदोषबाहुल्यप्रतिपादनार्थत्वेन सार्थक्यसंभवात् । अन्तरितसंस्काराणां प्राप्तसंस्कारसतन्त्रतयाऽनुष्ठाने नोत्तरायणादिनियमो न चोक्तकालस्य नियमः । ज्येष्ठान्तरितसंस्कारकालानुरोधेन कनिष्ठसंस्कारा उत्कृष्टव्याः । तत्रापि यथोक्तकाले कार्याः । अथवा कनिष्ठसंस्काराः स्वकाल एव कार्यास्तदनुरोधेन ज्येष्ठस्येति ; अत्र यद्युक्तं तद्ग्राह्यं सुधीभिः । अन्तरितसंस्काराणामन्यकर्तृकत्वे गर्भाधानस्य प्रायश्चित्तमात्रमेव । * गर्भाधानादिसंस्काराणामगतौ केवलं प्रायश्चित्तेनापि चरितार्थता । उपनयनादिसंस्काराणां कालातिपत्तौ तु तत्तत्कालातिपत्तिप्रायश्चित्तं कृत्वोपनयनादयः संस्काराः क्रमेणावश्यं कार्याः । अत एवाऽऽचार्येणोपनयनमुखेनाऽऽम्नानं

* क. पुस्तके टिप्पणीरूपेण वहिर्लिखितो ग्रन्थः—"प्रयोगपारिजाते संस्कारातिपत्तिप्रायश्चित्तमुच्यते । तत्र भृगुः—' गर्भाद्यसंस्कृतस्यापि कर्तव्यं चोपनायनम् । प्रायश्चित्तं तु पूर्वेषां नौपनायनिकस्य तु । श्रौतस्मार्ताधिकारी स्यान्नौपनायनिकं विना ' इति । प्रायश्चितप्रकारं तु भगवानाह—आरभ्याऽऽधान० । संस्कारमयूखे भृगुः—' गर्भाद्यसंस्कृतस्यापि कर्तव्यं चोपनायनम् । प्रायश्चित्तं तु पूर्वेषां नौपनायनिकस्य तु । श्रौतस्मार्ताधिकारी स्यान्नौपनायनिकं विना ' इति । उपनयनप्राग्भाविगर्भाधानादिसंस्काराणां मुख्यगौणकालातिक्रमे प्रायश्चित्तमात्रानुष्ठानं न पुनः संस्कारानुष्ठानमपि । उपनयनं तूभयविधकालातिक्रमेऽपि प्रायश्चित्तानुष्ठानपूर्वमनुष्ठेयमेव न प्रायश्चित्तमात्रानुष्ठानमिति वाक्यार्थः " इति ।

कृतम्। विवाहस्त्विच्छायां सत्याम्। वैराग्ये तीव्रे जाते समावर्तनादीनां लोपः। तत्र संन्यासाश्रम एव।

इति संस्काररत्नमालायामन्तरितसंस्काराणां तन्त्रेण प्रयोगः।

इत्योकोपाह्वश्रीमद्गणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां पञ्चमं प्रकरणम्॥ ५॥

अथ षष्ठं प्रकरणम्।

## अथ विकलाङ्गोपनयनम्।

तत्र ब्रह्मपुराणम्—

"ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः।
तस्मात्षण्ढान्धबधिरकुब्जवामनपङ्गुषु॥
जडगद्गदरोगार्तशुक्लाङ्गविकलाङ्गिषु।
उन्मत्ते च तथा मूके ध्वस्तपुंस्त्वे निरिन्द्रिये॥
सर्वेष्वेतेषु संस्कारा भवेयुस्तु यथोचितम्।
मूकोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते॥
कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः।
तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा॥
संस्कारमन्त्रहोमादीन्करोत्याचार्य एव तु।
उपनेयांश्च विधिवदाचार्यः स्वसमीपतः॥
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत्।
कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेत्" इति॥

गद्गदो गद्गदभाषी। रोगार्तोऽपस्मारादिरोगार्तः। शुक्लाङ्गः श्वेतकुष्ठादिमान्। विकलानि दुर्बलानि हीनानि वाऽङ्गानि यस्य सः। उन्मत्त उन्मादवान्। ध्वस्तं पुंस्त्वं यस्य सः। निर्गतमिन्द्रियं यस्य सः। आघातेन च्छिन्नेन्द्रिय इति यावत्। यथोचितमित्यनेन ये ये द्विजत्वनिष्पादका उचिता विहिताः संस्कारास्त एतेषामप्यशक्याङ्गहानेन कार्या इति सूच्यते। द्विज-

त्वनिष्पादका इति विशेषणदानेनाग्न्याधानादीनां स्थालीपाकानां च व्यावृत्तिः क्रियते । तेषां हि केवलं प्रत्यवायमात्रनिवर्तकत्वं न तु द्विजत्वनिष्पादकत्वम् । केचिदाचार्याः 'मूकोन्मत्तौ न संस्कार्यौ' इति वदन्ति । उपनयनाद्यैरिति शेषः । तेषामध्ययनासंभवेनाध्ययनार्थस्योपनयनस्याभावात् । उपनयनवत्काण्डव्रतादीनामप्यभावः । उन्मत्त उन्मादवान्विक्षिप्तचित्त इति यावत् । एतयोर्मूकोन्मत्तयोः कर्मसूपनयनादिकर्मस्वनधिकारादधिकाराभावात् । चकारोऽवधारणार्थः । कर्मस्वधिकाराभावादेव पातित्यं नास्तीत्यर्थः । द्वितीयश्चकारः समुच्चयार्थः । उपनयनादिकर्माणि न सन्ति पातित्यं च नास्तीत्येवं समुच्चयः । मूकोन्मत्तयोः कर्मस्वनधिकारात्पातित्यमिति नास्ति किंतु 'ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः सः' इति श्रुत्या ब्राह्मणादुत्पन्नयोर्मूकोन्मत्तयोरप्युपनयनादिसंस्कारार्हत्वप्रतिपादनात्तावपि संस्कार्यौ तदपत्यं च संस्कार्यमित्यपरे । अन्यथा 'न संस्कार्यौ' इति कैश्चिदाचार्यैरुक्तं तद्विपरीतमेतादृशमर्थमाहुः । 'संस्कारमन्त्रहोमादीन्करोत्याचार्य एव तु' इत्यत्र कुमारं स्पृष्ट्वेति शेषः । संस्कारमन्त्राः कु(न्त्रान्कु)मारकर्तृकसंस्कारमन्त्रपठनं होमादिकर्माणि चाऽऽचार्य एव कुर्यात् । उपनयने कुमारकर्तृकहोमाभावाद्धोमशब्देन समिदभ्याधानं गृह्यते । आदिशब्देन मार्जनोपस्थानादिकाण्डव्रतानां लोप एव । तेषामध्ययनाङ्गत्वात् ।

न चैवमुपनयनस्याप्यध्ययनार्थत्वान्मूकोन्मत्तविषये लोपोऽस्त्विति वाच्यम् । तस्य द्विजत्वसंपादनद्वाराऽध्ययनार्थत्वेनाध्ययनासंभवेऽपि द्विजत्वसंपादनायावश्यमपेक्षितत्वात् । एवं गोदानमपि भवत्येव । तस्याध्ययनाङ्गत्वाभावात् ।

विवाहसंभवे समावर्तनमपि कंचित्कालं व्रताचरणं कृत्वोत्तरायणे कार्यम् । विद्यास्नानोभयस्नानयोरभावाद्व्रतस्नानमेव तयोः । विवाहासंभवे तु तस्य नैष्ठिकब्रह्मचर्यमेव । कलौ यो नैष्ठिकब्रह्मचर्यनिषेधः स मूकोन्मत्तत्वदोषरहितपुरुषपरः । 'उपनेयांस्तु विधिवदाचार्यः स्वसमीपतः' इत्यस्यार्थः— उपनेयान्पूर्वोक्तषण्ढादीन्विधिवत्स्वगृह्योक्तप्रकारेणाऽऽचार्यः स्वसमीपतः स्वाभिमुखान्कुर्यादिति । 'आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत्' इत्यस्यार्थः— अग्निसमीपं वाऽन्यभिमुखान्वा कुर्यात् । पूर्वत्राऽऽचार्यः स्वाभिमुखान्कुर्यादित्युक्तं तत्रेदं पक्षान्तरम् । 'सावित्रीं स्पृश्य वा जपेत्' इत्यत्रत्यो वाशब्दः प्रसिद्धेन सावित्रीवाचनेन सह विकल्पार्थः । स च योग्यतानुसारेण व्यवस्थितो ज्ञेयः । कुमारस्य मूकत्वे स्पर्शपूर्वकः सावित्रीजपः । उन्मत्तत्वे यदि पठति तदा वाचनं नो चेत्स्पृष्ट्वा जप इति । षण्ढत्वान्धत्वादौ तु वाचनमिति

व्यवस्था । सावित्रीं स्पृश्य वा जपेदित्यत्र स्पृश्य वा सावित्रीं जपेदित्यन्वयः । स्पृश्येत्यत्र कुमारमिति शेषः । स्पृश्येत्यत्र समासाभावेऽपि क्त्वो ल्यबादेशश्छान्दसः । एवं कुमारकर्तृकसंस्कारमन्त्रपठनविधितदीयहोमादिकरणविधी व्यवस्थितौ ज्ञेयौ । पूर्वविधिः कुमारस्य मूकत्वे ज्ञेयः । उत्तरविधिस्तु कुमारस्याङ्गवैकल्ये । उन्मत्तत्वे पूर्ववत् । उपनेयांस्तु विधिवदित्याद्यग्निसमीपं वेत्यन्तं सर्वेषु समानम् । मूकबधिरादौ को नामासीति नामप्रश्नोऽपि नास्त्ययोग्यत्वान्न नाम पृच्छतीति बोधायनोक्तेश्च । अन्यदङ्गजातं यथासंभवं कार्यम् । मूकोन्मत्तयोरुपनयनेऽस्य द्विजत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाचार्यपैतृकसावित्रीमातृकमुपनयनाख्यसंस्कारं करिष्य इति संकल्पवाक्यम् ।

इति विकलाङ्गोपनयनम् ।

## अथ पुनरुपनयनम् ।

तच्च त्रिविधम् । प्रत्यवायनिमित्तप्रायश्चित्तत्वेन विहितं निमित्तविशेषेण कृतोपनयनस्य वृथाचेष्टात्वापत्तौ तत्फलार्थत्वेन विहितं वेदान्तराध्ययनचिकीर्षायां तदर्थत्वेन विहितं च ।

तत्राऽऽद्यं प्रयोगपारिजाते शातातपः—

"लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनम्[1] ।
उपनायं पुनः कुर्यात्तप्तकृच्छ्रं तथैव च " इति ॥

लशुनः प्रसिद्धः । ( *स च श्वेत एव निषिद्धः ।

तथा च पराशरः—

" पीयूषं श्वेतलशुनं वृन्ताकफलगृञ्जने " इति ।

श्वेतपदं लशुनवृन्ताकाभ्यामपि संबध्यते । तेन रक्तलशुनकृष्णवृन्ताकभक्षणे न प्रायश्चित्तमिति माधवः । ) गृञ्जनं लशुनतुल्यः कन्द इति विज्ञानेश्वरः । यदीयं चूर्णं गायकाः कण्ठशुद्ध्यै विटाश्च मदार्थमश्नन्ति स पत्रविशेष इति माधवः ।

* धनुश्चिह्नान्तर्गतं क. ख. पुस्तकयोर्नास्ति ।

1 ख. ग. शुभम् ।

(*माधवीये श्राद्धप्रकरणे तु—

" श्वेतकन्दः पलाण्डुविशेषो गृञ्जनम्।

' लशुनो दीर्घपत्रश्च पिच्छगन्धो महौषधः ॥
फरण्यश्च पलाण्डुश्च लतार्कश्च परारिका ।
गृञ्जनो यवनेष्टश्च पलाण्डोर्दश जातयः '।

इति सुश्रुतेनोक्तत्वात् " इत्युक्तम् ।

मूलविशेषो वा गाजरापरपर्याय इत्यपि माधवेनोक्तम् ।

" गन्धाकृतिरसैस्तुल्यः सूक्ष्मनालः पलाण्डुना ।
सूक्ष्मनालाग्रपत्रत्वाद्भिद्यतेऽसौ पलाण्डुतः " ।

इति वाग्भट्टटीकायां हेमाद्रौ बाष्पचन्द्रवचनमेव विनिगमकं त्विह परिभावनीयम् । परं तु गाजरापरपर्यायता वक्ष्यमाणेनैव दूषिता द्रष्टव्या । हेमाद्रावप्युत्तरत्र पलाण्डुविशेष एवेत्युक्तम् ।

राजनिघण्टौ—

" रसेभो हि महाकन्दो गृञ्जनो दीर्घपत्रकः ।
पृथुपत्रः स्थूलकन्दो यवनेष्टो बलो हितः ॥
गृञ्जनस्य मधुरं कटुकन्दं नालमप्युपदिशन्ति कषायम् ।
पत्रतश्च यमुशन्ति च तिक्तं सूरयो लवणमस्थि वदन्ति ॥
गाजरं पिण्डमूलं च पीतकन्दः समूलकम् ।
स्वादुमूलं सुपीतं च नागरं पीतमूलकम् ॥
गाजरं मधुरं रुच्यं किंचित्कटु कफापहम् ।
आध्मानकृमिशूलघ्नं दाहपित्तविनाशनम् " इति ॥

वैद्यके—" गृञ्जनं शिखिमूलं च यवनेष्टश्च वर्तुलम् ।
ग्रन्थिमूलं शिखाकन्दं कन्दं डिण्डीरमोदकम् ॥
गृञ्जनं कटु उष्णं च कफवातरुजापहम् ।
रुच्यं च दीपनं हृद्यं दुर्गन्धि गुल्मनाशनम् " इति ॥ )

" विषदग्धेन शल्येन यो मृगः परिहन्यते ।
अभक्ष्यं तस्य तन्मांसं तद्धि गृञ्जनमिष्यते " इत्यपरार्कः ।

यत्तु हेमाद्रिः—गाजराख्यं मूलं गृञ्जनमित्याह, यच्च माधवः—मूलविशेषो गाजरापरपर्यायो गृञ्जनमित्याह, तदुभयमपि न ।

---

+ धनुश्चिह्नान्तर्गतं क. ख. पुस्तकयोर्नास्ति ।

" गृञ्जनं चुक्रिकां चुक्रं गाजरं पोतिकां तथा " ॥

इति ब्राह्मे पृथङ्निर्देशानुपपत्तेः । चुक्रिका 'चुक्का' इति भाषया प्रसिद्धा । चुक्रमत्यम्लं दधि । पोतिका 'पोई' इति प्रसिद्धा । एतच्च पुनरुपनयनं बुद्ध्या भक्षणे । अबुद्ध्या भक्षणे तु तप्तकृच्छ्रमात्रम् ।

" छत्राकं लशुनं चैव पलाण्डुं गृञ्जनं तथा ।
चत्वार्यज्ञानतो जग्ध्वा तप्तकृच्छ्रं चरेद्द्विजः " इति बृहस्पत्युक्तेः ।

पलाण्ड्वाद्येकनाश्यरोगे तु नैष दोषः ।

तथा च पलाण्ड्वाद्यनुवृत्तौ सुमन्तुः—

" एतान्येवाऽऽतुरस्य भिषक्क्रियायामप्रतिषिद्धानि " इति ।

गौतमः—" उष्ट्रीक्षीरमानुषीक्षीरप्राशने पुनरुपनयनं तप्तकृच्छ्रं च " इति ।

प्राशनाभ्यास एतदिति शूलपाणिः । (*अविखरोष्ट्रीक्षीरप्राशने पुनरुपनयनं तप्तकृच्छ्रं चेति ) ।

स्मृत्यन्तरे—" रेतोमूत्रपुरीषाणां गौडीमाध्व्योश्च भक्षणे ।
क्रव्यादपशुविष्ठानां संस्काराच्छुद्धिरिष्यते " इति ।

मनुः—" अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः " इति ॥

एतदतीतसुरासंपर्कविषयम् । तप्तकृच्छ्रपूर्वकश्चैष विधिर्ज्ञेयः । तप्तकृच्छ्रपूर्वकं पुनःसंस्कारं प्रकृत्य 'मूत्रपुरीषकुणपरेतसां प्राशने चैवम्' इति गौतमोक्तेः ।

बृहस्पतिः—" रेतोमूत्रपुरीषाणां शुद्ध्यै चान्द्रायणं चरेत् " इति ।

रेतोमूत्रपुरीषाणामित्यनन्तरं प्राशन इति शेषः । अत्र चान्द्रायणतप्तकृच्छ्रयोर्ज्ञानाज्ञानाभ्यां व्यवस्था ज्ञेया । संस्कारस्तूभयत्र तुल्य एवेति शूलपाणिः ।

पाद्मे—" प्रेतशय्याप्रतिग्राही पुनःसंस्कारमर्हति " इति ।

स्मृत्यन्तरे— " सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति " इति ।

एतच्च तीर्थयात्रां विना गमने ।

" तीर्थयात्रां विना गत्वा पुनःसंस्कारमर्हति " इति बौधायनोक्तेः ।

मार्कण्डेयः—" खरमारुह्य विप्रस्तु योजनं यदि गच्छति ।
तप्तकृच्छ्रत्रयं प्रोक्तं शरीरस्य विशोधनम् ॥

---

* धनुश्चिह्नान्तर्गतं सर्वपुस्तकेषु वर्तते । परं त्वधिकं लेखकप्रमादात्पतितं प्रतिभाति ।

पुनर्जन्म प्रकुर्वीत घृतगर्भविधानतः ।
जातकर्मादिसंस्कारैः संस्कृतः शुद्धिमाप्नुयात् ” इति ॥

शाकलः—“ यदि चेद्वै द्विजो गच्छेदारुह्योष्ट्रं खरं वृषम् ।
पुनस्तस्य क्रियाः कार्याः शिखाया वापनेन च ॥
आदौ तु विधिना ऽब्दं प्रायश्चित्तं समाचरेत् ” इति ।

हेमाद्रौ प्रायश्चित्तकाण्डे वृद्धगौतमः—

“ खरमुष्ट्रं च महिषमनड्वाहमविं तथा ॥
बस्तमारुह्य मुखजे क्रोशे[1] चान्द्रं विनिर्दिशेत् ” इति ॥

मुखजो विप्रः । चान्द्रं चान्द्रायणम् ।

मनुः—“ चाण्डालान्नं द्विजो भुक्त्वा सम्यक्चान्द्रायणं चरेत् ।
बुद्धिपूर्वे तु कृच्छ्राब्दं पुनःसंस्कारमेव च ” इति ॥

अभ्यासविषयमेतदिति मदनरत्ने ।

पराशरः—“ यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः ।
अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति ॥
स चरेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च ।
जातकर्मादिभिः सर्वैः संस्कारैः शुद्धिमाप्नुयात् ” इति ॥

भारद्वाजीयपितृमेधसूत्रे—

“ यद्येतस्मिन्कृत आगते घृतकुम्भादुन्मग्नस्य जातकर्मप्रभृति द्वादशरात्रं व्रतं चरित्वा तथैव जाययाऽग्नीनादधीत व्रात्येन पशुना वा यजेत गिरिं गत्वाऽग्नये कामायेष्टिं निर्वपेदीप्सितैः क्रतुभिर्यजेत ” इति ।

एतस्मिन्कृते, उत्तरकर्मणि कृते । व्रात्येन व्रात्यस्तोमेन । पशुनैन्द्राग्नेन ।

वृद्धमनुः—“ जीवन्यदि समागच्छेद्घृतकुम्भे निमज्जयेत् ।
उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत् ॥
व्रतचर्या द्वादशाहं त्रिरात्रमथवाऽस्य तु ।
स्नात्वोद्वहेत्ततो भार्यामन्यां वा तदभावतः ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वै यजेत् ।
अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ॥
इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्तथा ” इति ।

---

१ ग. क्रोशं ।

तदभावतस्तदभाव इत्यर्थः।

ममौर्ध्वदेहिकजनितानिष्टदोषनिबर्हणपूर्वकपुनर्गृहस्थाश्रमसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं तामेव स्त्रियमुद्वहिष्य इति संकल्पः। न वा पुनर्गृहस्थाश्रमसिद्धिद्वारेति। देवपित्रर्णानपाकरणे तु देवपित्रर्णापाकरणसिद्धिद्वारेत्यपि वक्तव्यम्। यदि पूर्वस्त्रिया अभावस्तदा स्त्र्युद्वाहं करिष्य इति प्रीत्यर्थमित्यनन्तरं वदेत्। नात्र पित्रादिकर्तृकं दानम्। पूर्वोढायामेतस्यां भार्यायां मदुपभोगार्हतासिद्धिद्वारैतस्मिन्नग्नावौपासनत्वसिद्धिद्वारा चेति विवाहहोमसंकल्पवाक्यम्। स्त्र्यन्तरपरिणये तु विवाहसंकल्पः प्रथमविवाहसंकल्पवदेव। विवाहहोमोत्तरं गृहप्रवेशस्थालीपाकश्चतुर्थीकर्म च।

ब्रह्मचारिणं पुरस्कृत्य पैठीनसिः—

"मधुमांसाशने त्रिरात्रमुपवासः पुनरुपनयनं च" इति।

अयं च त्रिरात्रोपवासः प्राजापत्याशक्तस्येत्युक्तं मदनरत्ने। 'एतयोरमत्या भक्षणे कृच्छ्रो मत्या पराकः। अभ्यासे द्विगुणं पुनःसंस्कारश्च' इति स्मृत्यर्थसारे। तथा तत्रैव—'मातापितृगुर्वाचार्योपाध्यायेभ्योऽन्यप्रेतसंस्कारे ब्रह्मचारिणः पुनरुपनयनं कार्यम्' इति। अपरार्केऽप्येवम्। तथा—'रेतोविण्मूत्रकरनिर्मथितदधिबहिर्वेदिपुरोडाशभक्षणानामत्यभ्यासेऽतिकृच्छ्रः पुनरुपनयनं च' इति। बहिर्वेदिपुरोडाशभक्षणं लौकिकपुरोडाशभक्षणमिति केचित्। ऋत्विग्व्यतिरिक्तकर्तृकसंस्कृतपुरोडाशभक्षणमेव लौकिकपुरोडाशभक्षणम्। तथा च लौकिकं च तत्पुरोडाशभक्षणं चेत्येवमेव समासोऽत्रेत्यन्ये। पुरोडाशशब्दस्य विहितसंस्कारपूर्वकाकारविशिष्टद्रव्यवाचित्वादुत्तरकल्प एव श्रेयान्। एतच्च ज्ञानतोऽज्ञानतस्तूपवासः।

तथा च कौर्मे—"शणपुष्पं शाल्मलीं च करनिर्मथितं दधि।
बहिर्वेदि पुरोडाशं जग्ध्वा नाद्यादहर्निशम्" इति॥

स्मृत्यन्तरे—"कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात्।
गण्डकीबाहुतरणात्पुनः संस्कारमर्हति" इति॥

गौडास्तु—"करतोयाजलस्पर्शात्कर्मनाशाविलङ्घनात्"॥

इति पठन्ति। तन्न। दानधर्मेषु करतोयास्नाने प्राशस्त्योक्तेः।

"करतोये सदानीरे सरिच्छ्रेष्ठेऽतिविश्रुते।
आप्लावयसि पौराणां पापं हरकरोद्भवे"॥

---

१ घ. ङ. °ल्पः। दैव°।

इति स्मृतिदर्पणचन्द्रिकालिखितस्नानमन्त्राच्च ।

स्मृतिमञ्जर्याम्—

" द्विजोऽकृतोपाकरणः समावर्तेत मोहतः ।
स प्राजापत्यपूर्वं तु पुनःसंस्कारमर्हति " इति ॥

इत्थं विहिते प्रायश्चित्तार्थे पुनरुपनयने विशेषः पारिजातमदनरत्नयोः कश्यपेनोक्तः—

" चीर्णप्रायश्चित्तः प्राच्यामुदीच्यां वा दिशि गत्वा यत्र ग्राम्यपशूनां शब्दो न श्रूयते तस्मिन्देशेऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य प्राक्प्रणीतेन विधिना पुनः संस्कारं कुर्यात् " इति ।

ब्रह्मासनमास्तीर्येतिवचनं ब्रह्मनियमार्थम् । तेन नात्र दण्डादिभिर्ब्रह्मसिद्धिः । प्राक्प्रणीतेन प्रागुक्तेन विधिनेत्यर्थः ।

स्मृत्यन्तरे—" मेखलाम(चा)जिनं वासो दण्डो भिक्षा व्रतानि च ।
निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि " इति ॥

अथ द्वितीयं पुनरुपनयननिमित्तम्—तच्च पाणिभ्यां कुमारस्यांसाभिमर्शनपूर्वकसमीपानयनरूपप्रधानोपनयनविधायके सूत्रे मातृदत्तेनोक्तम्—

" अत्राथशब्द इदं प्रधानकर्मैतस्य विस्मरणे सर्वं कर्माऽऽवर्तेत इति ख्यापनार्थः " इति ।

समयोद्योते स्मृत्यन्तरे—

" विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
+ अनध्याये चोपनीतः पुनःसंस्कारमर्हति " इति ॥

विनर्तुना वसन्तेनेति पृथगेकं पुनःसंस्कारे निमित्तम् । कृष्णपक्षगलग्रहापराह्णा इति निमित्तत्रयं च तथा । विनर्तुना वसन्तेनेति वसन्तलाभे सत्यन्यत्र करणे पुनःसंस्कारनिमित्तं नान्यदा । अन्यथा माघफाल्गुनज्येष्ठाषाढानां विधानं विरुद्धं स्यात् ।

अथवा विनर्तुना वसन्तेनेत्येतस्य संनिहितत्वात्कृष्णपक्षशब्देऽन्वयः । तथा चायमर्थो भवति । वसन्तर्तुना विना कृष्णपक्ष उपनयने पुनःसंस्कारो नान्यदेति । कृष्णपक्षगलग्रहशब्दयोरप्यन्वय इति केचित् । गलग्रहशब्द एवान्वय इत्यन्ये ।

+ अत्र प्रदर्शितार्थानुसारेण ' अपराह्णे ' इति पाठोऽपेक्षितः

स्मृतिदर्पणे वसिष्ठः—

" पापांशकगते चन्द्रे अरिनीचस्थितेऽपि च ।
अपराह्णे चोपनीतः पुनःसंस्कारमर्हति " इति ॥

अत्रापराह्णस्त्रेधाविभक्तदिनतृतीयांश इत्युक्तं मदनरत्ने ।

अथ तृतीयं पुनरुपनयननिमित्तम्—एतच्च ' सर्वेभ्यो वै वेदेभ्यः सावित्र्य-नूच्यत इति हि ब्राह्मणम् ' इति धर्मसूत्रव्याख्यानावसर उज्ज्वलाकृतोक्तम्— ' उपनयने यत्सावित्र्या अनुवाचनं तन्मुखेन सर्वे वेदा अनूक्ता भवन्ति । अतोऽगृह्यमाणविशेषत्वादेकमेवोपनयनं सर्वार्थम् ' इति ।

अस्मिन्नर्थे शाट्यायनब्राह्मणमेव पठितम् । अथर्ववेदार्थे तु पृथगुपनयनं वचनात्कर्तव्यम् । तथा च तत्रैव श्रुतम् ' नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीत ' इति । अन्यत्रान्यवेदार्थम् । भृग्वङ्गिरसोऽथर्ववेद इति । त्रिविधे पुनरुपनयने द्वितीयतृतीययोः क्वचिदपि ग्रन्थे विशेषानुक्तेरविकृतं पुनरुपनयनं गार्हपत्याधानात्प्राक्सूर्योदयेऽविकृताधानवत् ।

## प्रायश्चित्तभूतपुनरुपनयनप्रयोगः ।

प्रायश्चित्तभूतपुनरुपनयने तूक्तेभ्यो वचनेभ्योऽनेकविशेषावगतेस्तत्प्रयोगो लिख्यते । तच्च यत्र प्रायश्चित्तसहितं विहितं तत्र पर्षदुपदिष्टविधिना प्रायश्चित्तं कृत्वा कार्यम् । यथोष्ट्रीक्षीरपानादौ । यत्र जातकर्मादिसंस्कारसहितं विहितं तत्र निमित्तानन्तरं करणपक्ष उदगयनवसन्ताद्यनालोच्यैव पर्षदुपदेशेन चौलान्तान्संस्कारान्कृत्वा कार्यम् । अन्यथोदगयनवसन्ताद्यावश्यकम् । तिथिनक्षत्रालोचनमात्रमेव वा । कालान्तरे पुनरुपनयनकर्तव्यतायामपि तावत्पर्यन्तं संध्यावन्दनं भवत्येव ।

" संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु " इति वचनात् ।

महापातकप्रकरणे—' सम्यक्संध्यामुपासीत ' इति स्मृतेश्च महापातकिनोऽपि संध्यावन्दनकर्तव्यतायां सिद्धायां किमु वक्तव्यं तदन्यस्य । ब्रह्मयज्ञादिकं तु न भवत्यशुचित्वात्तथावचनाभावाच्च । पुनःसंस्कारार्हस्य तु कर्मलोपभयाद्रात्रावपि संस्कारो विहितो नान्यस्येति मुहूर्तमार्तण्डटीकायाम् । कर्ता च पितृसत्त्वे स एव । तदभावे पितामहपितृव्यादिः सपिण्डः । तदभावे यः कश्चिद्विद्वान्स्वशाखाढ्यः । पुनरुपनयनं यस्मिन्देशे तत्रैव जातकर्मादयः कार्याः ।

अस्य कृतौर्ध्वदेहिकस्य पुनःसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातक-

र्मादीन्युपनयनान्तानि संस्कारकर्माणि करिष्य इति संकल्पः। एवं निमित्तान्तरेऽपि तत्तन्निमित्तोद्देन संकल्पः।

ततः सर्वोद्देशेन स्वस्तिवाचनादि। श्मश्रूपपक्षवापनानन्तरं चौले केशवापनमिति विशेषो महद्व(द्वाव)यसः। विवाहसंकल्पतदर्थस्वस्तिवाचनादिकं तु संस्कार्येण स्वयमेव पृथक्कर्तव्यम्। यत्र तु पुनरुपनयनमात्रं प्रायश्चित्तत्वेन विहितं तत्र पर्षदुपदिष्टविधिना तदेव कार्यम्। तत्राऽऽचार्यः कृच्छ्रत्रयमग्निपवित्रमन्त्रजपपूर्वकं द्वादशसहस्रं द्वादशाधिकसहस्रं वा गायत्रीजपं कुर्यात्। संस्कार्यो निमित्तानन्तरोपनयन एतत्प्रायश्चित्तं न कुर्यादिति केचित्।

ततः कृतनित्यक्रिय आचार्यः पत्नीसत्त्वे सपत्नीको ग्रामात्प्राच्यामुदीच्यां वा दिशि गत्वा यत्र ग्राम्यपशुशब्दो न श्रूयेत तादृशं देशं यावत्पर्याप्तं संमार्जनोपलेपनाभ्यां शोधयित्वा तत्रोपविश्य स्वस्य दक्षिणतः संस्कार्यमुपवेश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यामुकशर्मणस्तीर्थयात्रां विना प्रत्यन्तादिदेशगमनजनितदोषनिरसनपूर्वकपुनःसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुनरुपनयनं करिष्य इत्येवं तत्तन्निमित्तानुसारेण संकल्पं कृत्वा गणपतिपूजनपुण्याहवाचनादिमण्डपदेवताप्रतिष्ठापनान्तं कुर्यात्। पुण्याहवाचने त्वग्निः प्रीयतामिति विशेषः।

ततो युग्मान्ब्राह्मणानन्नेन परिविष्य पुण्याहस्वस्त्ययनर्धीर्वाचयित्वा कृतमङ्गलस्नानं संस्कार्यं भोजयित्वा वपनस्नाने कारयेत्। महद्व(द्वाव)यसः श्मश्रूपपक्षवापनानन्तरं केशवापनम्। ततः स्थण्डिलकरणादि। अन्वाधाने प्रायश्चित्तभूतपुनरुपनयनहोमकर्मणि या इत्यादि प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इत्यन्तमुक्त्वाऽग्निं स्विष्टकृतं हुतशेषाज्याहुत्येत्यादि। पात्रासादनेऽहतवासोमेखलाजिनदण्डभिक्षापात्रव्यतिरिक्तानि पात्राण्यासादयेत्।

ततो ब्रह्माणं दक्षिणत उपवेश्य पवित्रकरणादिकपकादिपरिदानान्तम्। तत्राहतवासःपरिधापनमेखलाबन्धनाजिनोत्तरीयकरणानि न सन्ति। तत्तद्विधायके सूत्रेऽथशब्देन तत्तदभावस्य ज्ञापितत्वात्। नात्र जयाद्युपहोमाः।

ततोऽपरेणाग्निं कूर्चमित्यादिविधिना सावित्रीवाचनं कृत्वा सप्तपलाशसमिद्धोमादि। नात्र व्रतं, चरितत्वात्। भिक्षाचरणमपि न। तद्विधायकसूत्रेऽथशब्देन तदभावस्य ज्ञापितत्वात्। दण्डदानभिक्षामन्त्रदानयोः परस्परसंबन्धित्वेनैकसंबन्धिनिवृत्तावपरसंबन्धिनिवृत्तेरपि सिद्धेः। एतयोः परस्पर-

संबन्धित्वं तु दण्डं प्रदायेतिल्यपा सिद्धम् । प्रथमवस्त्रदानमपि न । परिहितत्वात् । यदि ब्रह्मचारिणः समापितवेदस्य पुनरुपनयनं तदा संध्योपासनादिरूप एव कर्म कुर्वित्यत्रत्यकर्मशब्दस्यार्थ उपदेष्टव्यः । न तु गुरुशुश्रूषादिरूपवेदाध्ययनादिरूपावप्यर्थावुपदेष्टव्यौ ।

यदि त्वब्रह्मचारिणः पुनरुपनयनं तदा समिध आधेहीत्यस्य वाक्यस्य लोपः । प्रथमोपनयनवत्त्र्यहमग्निधारणम् । अग्निकार्याधिकारी चेत्तदा समिध आधेहीत्यस्त्येव । उपनयनाग्नावग्निकार्यत्रिवृदन्नहोमौ भवतः । वास्तुबलिर्नियतः । यस्मिन्नाश्रमे पुनरुपनयनं प्राप्तं तदाश्रमधर्माः कार्याः । यत्र तु पुनरुपनयनानन्तरमाश्रमान्तरस्वीकारस्तत्र जीर्णानि मेखलादीनि व्युदस्य नूतनानि धारयित्वा ब्रह्मचारिव्रतचर्यामुचितकालेन समाप्य विधिनाऽऽश्रमान्तरं स्वीकुर्यात् ।

इति संस्काररत्नमालायां विकलाङ्गोपनयनपुनरुपनयनप्रयोगः ।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां षष्ठं प्रकरणम् ॥ ६ ॥

अथ सप्तमं प्रकरणम् ।

## अथ संक्षेपेण ब्रह्मचारिधर्माः ।

तत्रेदं सूत्रम्—

“ एतद्व्रत एवात ऊर्ध्वमाचार्यकुलवास्यश्नाति क्षारं लवणꣳ शमीधान्यमिति दण्डी जटी मेखली शिखाजटो वा स्यात्काषायमजिनं वा वस्ते न स्त्रियमुपैत्यष्टाचत्वारिꣳशद्वर्षाणि चतुर्विꣳशतिं द्वादश यावद्ग्रहणं वा न त्वेवाव्रतः स्यात् ” इति ।

एतदित्यनेन प्रकृतं सावित्रीव्रतमक्षारलवणभोजनादि प्रतिनिर्दिश्यते । एतद्व्रतं यस्य सोऽयमेतद्व्रतः । एतद्व्रत एवात ऊर्ध्वमपि स्यात् । एवकारो

१ क. ख. घ. ङ. ‘मवास्यादा’ ।

वक्ष्यमाणान्यपि व्रतानि त्र्यहे स्युरित्येतदर्थम् । द्वौ ब्रह्मचारिणौ, आचार्यकुलवासी नैष्ठिकश्च । तयोर्यो विद्यार्थमेवाऽऽचार्यकुले वसति तच्छील आचार्यकुलवासी । यस्त्वाश्रमाथ्यूर्ध्वमपि विद्याक्रियाया ब्रह्मचर्यं चरति स नैष्ठिकः । तयोराचार्यकुलवासपक्षाति क्षारं लवणं शमीधान्यं च । इतिशब्दः समुच्चयार्थः । दण्डी मेखलीति मत्वर्थीय इनिः । जटीति नित्ययोगे । शिखैव जटा यस्य सोऽयं शिखाजटः । शिखामेव धारयेदितरान्केशान्वापयेदित्यर्थः । काषायं कषायेण रक्तं वस्त्रमजिनं वा वस्ते परिदधाति । काषायग्रहणं प्रदर्शनमात्रम् । माञ्जिष्ठं हारिद्रमिति यथावर्णं भवति । न स्त्रियमुपैति न मैथुनं चरतीत्यर्थः । कियन्तं कालमेतानि व्रतानि चरतीत्याकाङ्क्षायामष्टाचत्वारिंशद्वर्षाणीत्यादि । अष्टाचत्वारिंशत्, चतुर्विंशतिं, द्वादश, यावदध्ययनं वा व्रतचर्या भवति । यस्य नास्ति व्रतं सोऽव्रतः । अव्रतस्तु नैव भवेत् । अतिक्रान्ते संकल्पिते काले विद्यायामगृहीतायां प्राक्समावर्तनादव्रतो न स्याद्व्रतवांस्त्वेवाधीयीतेत्येतदर्थं तुशब्दः । समावृत्तेनापि प्राङ्निवेशादध्येयमिति वक्ष्यति धर्मे । सोऽप्याचार्यकुलेऽधीयानो नैवाव्रतः स्यादित्येतदर्थमेवकारः । व्रती त्वेव स्यादित्येतावता सिद्धे नाव्रत इति निषेधद्वयवचनं निविष्टोऽपि कृच्छ्रापत्तौ येन केनचिद्विक्षेपेणाऽऽचार्यकुले वसन्कालाद्यपेक्षयाऽव्रतो नैव स्यादित्येतदर्थम् । धर्मसूत्रे—' न गायेन्न रोदेन्न नृत्यदर्शी स्यात् ' इति । गानं सामव्यतिरिक्तम् । रोदनमश्रुमोचनम् । एतदुभयं न कुर्यात् । नृत्यदर्शी नृत्यदर्शनशीलो न भवेदित्यर्थः । तथा—' न नग्नां स्त्रियं प्रेक्षेदोषधिवनस्पतीनाच्छिद्य नोपजिघ्रेदुपानहौ छत्रं यानमिति वर्जयेत् ' इति । प्रेक्षमाणस्य मनसो विकारो भवति । अतो नग्नां स्त्रियं न प्रेक्षेत । ओषध्यः फलपाकान्ताः । वनस्पतयो ये पुष्पैर्विना फलन्ति । वीरुद्वृक्षाणामप्युपलक्षणम् । तेषां पत्रपुष्पे आच्छिद्य नोपजिघ्रेत् । आच्छिद्येतिवचनाद्यादृच्छिके गन्धग्रहणे न दोषः । उपानहौ प्रसिद्धौ(द्धे) । छत्रं प्रसिद्धम् । यानं शकटादि । हिशब्द एवंप्रकाराणामुपलक्षणार्थः ।

यमः—" मेखलामजिनं दण्डमुपवीतं च सर्वदा ।
कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥
अग्नीन्धनं भैक्षचर्यामधःशय्यां गुरोर्हितम् ।
आसमावर्तनात्कुर्यात्कृतोपनयनो द्विजः " इति ॥

अग्नीन्धनमग्निकार्यसंज्ञकं समिदभ्याधानम् ।

बौधायनधर्मसूत्रे—

" ब्राह्मणो वै ब्रह्मचर्यमुपायंश्चतुर्धा तानि प्रविशन्त्यग्निपादं मृत्युपादमाचार्यपादमात्मन्येवास्य चतुर्थः पादः परिशिष्यते स यदग्नौ समिधमादधाति य एवास्याग्नौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशत्यथ यदात्मानं दरिद्रीकृत्य भिक्षुर्भूत्वा भिक्षन्ब्रह्मचर्यं चरति य एवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशत्यथ यदाचार्यवचः करोति य एवास्याऽऽचार्ये पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशत्यथ यत्स्वाध्यायमधीते य एवास्याऽऽत्मनि पादस्तमेव तेन परिक्रीणाति तं संस्कृत्याऽऽत्मन्धत्ते स एनमाविशति " इति ।

अन्यच्चात्रैव—

" स यदन्यो भिक्षितव्यां न विन्देतापि स्वामेवाऽऽचार्यजायां भिक्षेताथो स्वां मातरं नैनꣳ सप्तम्यभिक्षितादियाद्भैक्षस्यानाचरणे दोषः पावकस्यासमिन्धने सप्तरात्रमकृत्वैतदवकीर्णिव्रतं चरेत् । तमेवं विद्वासमेवं चरन्तं सर्वे वेदा आविशन्ति यथा ह वा अग्निः समिद्धो रोचत एवꣳ ह वा एष स्नात्वा रोचते य एवं विद्वान्ब्रह्मचर्यं चरतीति हि ब्राह्मणमिति हि ब्राह्मणम् " इति ।

व्यासः—" ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वहम् ।
सजातीयगृहेष्वेव सार्ववर्णिकमेव वा " इति ॥

भविष्ये—" सर्वं वाऽपि चरेद्ग्रामं पूर्वोक्तानामसंभवे ।
अन्त्यवर्जं महाबाहो इत्याह भगवान्विभुः " इति ॥

अन्त्यः शूद्रः ।

धर्मसूत्रे—सायंप्रातरमत्रेण भिक्षाचर्यं चरेद्भिक्षमाणोऽन्यत्रापपात्रेभ्योऽभिशस्ताच्च " इति ।

अमत्रेण पात्रेण । अपगतानि पाकाद्यर्थानि पात्राणि चातुर्वर्ण्यैः सह तेऽपपात्राः प्रतिलोमरजकादयः । अभिशस्तः पतितः । एतेभ्योऽन्यत्र भिक्षाचर्यं चरेदित्यर्थः ।

सार्ववर्णिकसर्वग्रामपक्षयोरपि शूद्रात्पक्वमन्नं नैव ग्राह्यं, तदाहाङ्गिराः—

" आममेवाऽऽददीतास्मादवृत्तावेकरात्रकम् ।

आमं पूयति संस्कारो धर्म्यं तेभ्यः प्रतीच्छताम् ॥
तस्मादामं ग्रहीतव्यं शूद्रादपि समाहितैः ।
चण्डालपतितादिभ्यो न भिक्षेदाममप्यणु " इति[2] ॥

पूयति पुनाति । क्वचित्तथैव पाठः ।

अविशेषेण सजातीयेष्वेव भिक्षाचरणं व्यासेनोक्तं, तत्र विशेषमाह मनुः—

" वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् " इति ॥

ये वेदैर्वेदाभ्यां वेदेन वा । एवं यज्ञैश्च हीना ये न भवन्ति । अथ च स्वेषु वर्णाश्रमविहितकर्मसु प्रशस्ताश्च भवन्ति तेषां गृहेभ्यः प्रयतो नियमवान्, ब्रह्म वेदस्तदर्थं व्रतं चरतीति ब्रह्मचारी, अन्वहं प्रत्यहं भैक्षमाहरेदित्यर्थः । भैक्षमित्यत्र समूहार्थे ' भिक्षादिभ्योऽण् ' इत्यण्प्रत्ययः ।

क्वचिद्भिक्षानिषेधमाह स एव—

" गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्वं पूर्वमुपाश्रयेत् " इति ॥

गुरोः कुले । गृह इति केचित् ।

यत्तु तेनैवोक्तं—

" मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् " ॥

इति तदुपनयनाङ्गभिक्षापरमिति । प्रथमवाशब्दोऽवधारणार्थः । मात्रादयः शब्दाः प्रसिद्धार्थाः । निजा सोदर्या । अवमानोऽवज्ञानं न दीयत इति प्रत्याख्यानं या न करोति तामपि भिक्षेतेत्यर्थः ।

तथा चाऽऽश्वलायनः—

" अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा " इति ।

अन्यत्रालाभे गुर्वादिष्वपि भिक्षितव्यमित्याह गौतमः—

" आचार्यज्ञातिगुरुष्वलाभादन्यत्र " इति ।

आचार्यज्ञातिगुरुष्वपि भिक्षितव्यमन्यत्र भैक्षालाभ इत्यर्थः ।

यमः—" आहारमात्रादधिकं न क्वचिद्भैक्षमाहरेत् ।
युज्यते स हि दोषेण कामतोऽधिकमाहरेत् " इति ॥

यः कामत इच्छातोऽधिकं भोजनपर्याप्तितोऽधिकं यद्याहरेत्तदा स दोषेण

---

१ ख. घ. ङ. पूर्यति । २ ख. घ. ङ. °ति । अ° ।

पापेन युक्तो भवेदित्युत्तरार्धार्थः। कामत इत्युक्त्याऽकामतोऽधिकाहरणे न दोषः।

धर्मसूत्रे—"तत्समाहृत्योपनिधाय गुरवे प्रब्रूयाद्भैक्षमिदं भो इति तेन प्रदिष्टं भुञ्जीत" इति।

तद्भैक्षं गुरुसमीपमाहृत्य गुरुसमीप एव संस्थाप्य तस्मै प्रब्रूयाद्भैक्षमिदं भो इति। ततस्तेन गुरुणा प्रदिष्टं भोजनायाभ्यनुज्ञातमन्नं भुञ्जीतेति व्याख्यातमुज्ज्वलाकृता।

तथा—"विप्रवासे गुरोराचार्यकुलायैतैर्विप्रवासेऽन्येभ्योऽपि श्रोत्रियेभ्यो नाऽऽत्मप्रयोजनश्चरेत्प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीत" इति।

यदि गुरुर्विप्रोषितोऽसंनिहितः स्यात्तत आचार्यकुलाय, आचार्यस्य यत्कुलं भार्यापुत्रादि तस्मै प्रब्रूयाद्भैक्षमिदं भो इति तेन प्रदिष्टं भुञ्जीत। तैः सकुल्यैः सह गुरोर्विप्रवासेऽन्येभ्योऽपि श्रोत्रियेभ्यः प्रब्रूयात्। तैः प्रदिष्टं भुञ्जीतेति-वचनविपरिणामेनान्वयः।

गौतमोऽप्याह—

"असंनिधौ तद्भार्यापुत्रसब्रह्मचारिभ्यः" इति।

आत्मैव प्रयोजनं यस्य स आत्मप्रयोजनः। एवंभूतो भिक्षां न चरेत्। केवलमात्मार्थं भिक्षां न चरेदित्यर्थः। आत्मप्रयोजनपदं यदा श्रोत्रिया अपि न लभ्यन्ते तदा प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीतेति वक्ष्यमाणो विधिर्यथा स्यादित्येतदर्थम्। प्रोषितः शिष्य आचार्यप्रयोजनः स्वप्रयोजनो वाऽऽचार्य-कुलश्रोत्रियाभावे भिक्षितादन्नात्किंचिदादायाग्नौ प्रक्षिप्य भुञ्जीतेत्यर्थः।

तथा—"भुक्त्वा स्वयममत्रं प्रक्षालयेन्न चोच्छिष्टं कुर्यादशक्तौ भूमौ निखनेदप्सु वा प्रवेशयेदार्याय पर्यवदध्याद्वाऽन्तर्धिने वा शूद्राय" इति।

अमत्रं भोजनपात्रम्। भुक्त्वेति संनिधानाद्भोजनपात्रं स्वयमेव प्रक्षालयेत्। भिक्षापात्रस्य त्वन्येनापि प्रक्षालने दोषो न। उभयोरपि पात्रयोर्ग्रहणमित्यन्ये। यावच्छक्नोति भोक्तुं तावदेव भोजनपात्रे कृत्वा भुञ्जीत। भोजने प्रवृत्तो यदि भोक्तुं न शक्नुयात्तदा तदन्नं भूमौ निखनेत्। अथवाऽप्सु प्रवेशयेत्प्रक्षिपेत्। आर्यस्त्रैवर्णिकस्तस्मा अनुपनीताय पर्यवदध्यात्। सर्वमेकस्मिन्पात्रेऽवधाय तत्समीपे भूमौ स्थापयेत्। अन्तर्धानमन्तर्धिः सोऽस्यास्तीत्यन्तर्धी। व्रीह्यादि-त्वादिनिः। अन्तर्धी दासः। अन्तर्हितं हि तस्य शूद्रत्वम्। प्रकरणात्स आचार्यस्य। आचार्यदासाय शूद्राय वा पर्यवदध्यात्प्रयच्छेदित्यर्थः।

अत्रैकान्नाशित्वनिषेधमाह याज्ञवल्क्यः—

" ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि " इति ।

ब्रह्मचर्यमष्टाङ्गमैथुनत्यागः ।

तान्याह दक्षः—

" ब्रह्मचर्यं सदा रक्षेदष्टधालक्षणं पृथक् ।
स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥
वैपरीत्ये ब्रह्मचर्यं नष्टं प्राह प्रजापतिः ।

नष्टमित्यत्र भवतीति शेषः ।

न ध्यातव्यं न वक्तव्यं न श्रोतव्यं कथंचन ।
एतैः सर्वैः सुनिष्णातो यतिर्भवति नान्यथा " इति ।

अभिलाषपूर्वकस्मरणकीर्तनप्रेक्षणानि निषिद्धानि । केलिः परिहासादिबाह्यचेष्टा । गुह्यभाषणं संभोगार्थं रहोमन्त्रणम् । संकल्पो मानसं कर्म । अध्यवसायः संभोगनिश्चय इति । एकमेकस्वामिकम् ।

स्मृत्यन्तरे भिक्षाशने विशेष उक्तः—

" पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् " इति ।

पूजनं प्रणामरूपम् । कुत्रचित्प्रणमेदशनं नित्यमित्येव पाठः । अकुत्सयन्नगर्हयन् । नित्यमित्यनेनैतस्य सार्वत्रिकत्वं सूच्यते ।

धर्मसूत्रे—" अष्टौ ग्रासा मुनेर्भक्षः[1] षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्यापरिमितं ब्रह्मचारिणः " इति ॥

मुनेः संन्यासिनो भक्षोऽष्टौ[2] ग्रासाः । अरण्यवासी वानप्रस्थस्तस्य षोडश । द्वात्रिंशद्गृहस्थस्य । ब्रह्मचारिणो विद्यार्थस्य नैष्ठिकस्य च ग्रासनियमो नास्तीत्यर्थः ।

अन्यदपि तत्रैव—

" आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् " इति ।

आहिताग्नेरपि गृहस्थत्वेन पूर्वश्लोकेन प्राप्तस्य ग्रासनियमस्य कालयो-

---

१ ग. °भक्ष्याः षो° । २ ग. भक्ष्या अष्टौ ।

भोजनमित्यस्य कालनियमस्य च नियमो नास्तीत्येतेन ज्ञायते। आहिताग्नेर्बहिःसमिदाहरणादेरावश्यकत्वाद्ब्रह्मचारिणश्च गुरुसेवाया अवश्यकर्तव्यत्वात्तद्विरोधिशरीरनैर्बल्यापादकं काम्यव्रतादिकं नानुष्ठानार्हमित्यर्थः। अनडुद्ग्रहणं दृष्टान्तार्थम्।

अत्र पात्रनियममाह हारीतः—

" लौहे मृन्मये वा पात्रे भुञ्जीत " इति।

लोहं काञ्चनम्। लोहशब्दस्य काञ्चननामसु निघण्टौ पाठात्।

कांस्यपात्रे भोजनं ताम्बूलाभ्यञ्जने च निषेधति प्रचेताः—

" ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम्।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् " इति॥

निषिद्धान्नमाहात्रिः—

" हस्तदत्ता तु या भिक्षा लवणं व्यञ्जनानि च।
भोक्ता ह्यशुचितां याति दाता स्वर्गं न गच्छति " इति॥

मनुः—" व्रते वा देवदैवत्ये पित्र्ये कर्मण्यथापि वा।
काममभ्यर्थितोऽश्नीयाद्व्रतमस्य न लुप्यते " इति॥

अभ्यर्थितः काममश्नीयादित्यन्वयः। अभ्यर्थितः प्रार्थितः।

आश्वलायनः—

" अञ्जनाभ्यञ्जने क्षौद्रं गन्धपुष्पाक्षतान्व्रती।
वर्जयेत्पादुकाछत्रयानोष्णीषरथादिकम् " इति॥

कूर्मपुराणे—" आदर्शं नैव वीक्षेत नाऽऽचरेद्दन्तधावनम्।
गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत न कामतः " इति॥

वसिष्ठोऽपि—" चेद्व्याधितः कामं गुरोरुच्छिष्टं भेषजार्थं सर्वं प्राश्नीयात् " इति॥

व्याधित इति संजातार्थे इतच्प्रत्ययः। सर्वग्रहणं मांसलशुनाद्यभक्ष्यमात्रसंग्रहार्थम्। तद्भक्षणेनापगतव्याधिरादित्यमुपतिष्ठेत।

तथा च बौधायनोऽभक्ष्यभक्षणं प्रकृत्य—

" स यदाऽगदो भवति तदोत्थायाऽऽदित्यमुपतिष्ठते हंसः शुचिषत् " इति।

स रोगी। अगद इति पदच्छेदः। हंसः शुचिषदित्येका, ऋक्।

धर्मसूत्रे—" गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबन्धस्तदधीना भिक्षा " इति।

यदा द्वितीयं तृतीयं वा वेदमधीयानस्य माणवकस्य गुरुसमवायो भवति

गुरवः समवेता भवन्ति तदा भिक्षायामुत्पन्नायां यं गुरुमिदानीमनुबन्धो यतोऽधीते तदधीना भिक्षेति व्याख्यातमुज्ज्वलाकृता ।

अन्यच्च—" समावृत्तो मात्रे दद्यान्माता भर्तारं गमयेद्भर्ता गुरुम् " इति ॥

कृतसमावर्तनो विवाहात्प्रागर्जितं मात्रे दद्यात् । माता भर्तारं गमयेत्पतिं प्रापयेत् । स च गुरुं माणवकस्येति शेष इति व्याख्यातं तेनैव ।

बृहस्पतिः—" अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् " इति ॥

ब्राह्मणकाम्या ब्राह्मणेच्छा ।

याज्ञवल्क्यः—" मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादादि वर्जयेत् " इति ॥

मधु क्षौद्रम् । मद्यनिषेधस्य तु सामान्यनिषेधेनैव सिद्धत्वात् । मांसं प्रोक्षिताद्यप्यत्र निषिध्यते । अञ्जनं कज्जलादिनाऽक्ष्णोः । एतच्चाभ्यञ्जनोपलक्षणम् । तेन तैलादिना गात्राणामभ्यङ्गोऽपि निषिद्धः । एतदपि वैद्योपदेशादृते । औषधस्याव्रतघ्नत्वात् । अत्रोच्छिष्टनिषेधो व्याधिराहित्ये ज्ञेयः ।

स चेद्व्याधित इत्युदाहृतवसिष्ठवाक्यात् ।

" गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत न कामतः "

इत्युदाहृतकूर्मपुराणवाक्याच्च ।

शुक्तं निष्ठुरवाक्यम् ।

" शुक्ता वाचो विवर्जयेत् " इति गौतमोक्तेः ।

उदयेऽस्तमये च भास्करावलोकनं न कार्यं, तदुक्तं धर्मसूत्रे—

" उद्यन्तमस्तं यन्तमादित्यं दर्शने विवर्जयेत् " इति ।

उदयसमयेऽस्तसमये चाऽऽदित्यं न पश्येदित्यर्थः ।

मनुरपि—" नेक्षेतोद्यन्तमादित्यमस्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् " इति ।

अश्लीलं मर्मभाषणम् । परिवादो निन्दा । आदिशब्देन परिहासादि ।

यमः—" खट्वासने च शयनं वर्जयेद्दन्तधावनम् ।
स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत्क्वचित् " इति ।

मनुः—" द्यूतं च जनवादं च परिहासं तथाऽनृतम् ।
स्त्रीणां च प्रेक्षणालम्भावुपघातं परस्य च ।
खट्वासने च शयनं ब्रह्मचारी विवर्जयेत् " इति ।

द्यूतमक्षक्रीडा। जनवादो देशवार्ता।

गौतमः—" गुरुसमीपे कण्ठप्रावृत्त्यावसक्थिकापाश्रयणपादप्रसारणनिष्ठीवनविजृम्भणहसितावस्फोटनानीति वर्जयेत् " इति।

कण्ठप्रावृत्तिर्वस्त्रेण कण्ठाच्छादनम्। आवसक्थिका योगपट्टः। तस्यापाश्रयणं कट्यादिषु संश्रयणम्। निष्ठीवनं लालाविसर्जनम्। अवस्फोटनं भुजास्फालनादि।

हारीतः—" हयरथगजचैत्यवृक्षवृषभारोहणमहानद्यवतरणमहासाहसानि वर्जयेत् " इति।

गोभिलः—" अवलेखनदन्तप्रक्षालनपादप्रक्षालनादि वर्जयेत् " इति।

अवलेखनं कङ्कतादिना शिरोगतकेशप्रसाधनम्। पादप्रक्षालनमुद्वर्तनपूर्वकं पादेन वा पादस्य।

बौधायनधर्मसूत्रे—

" मूत्रपुरीषे नावेक्षेतामेध्यं दृष्ट्वा जपत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषा१ श्रेष्ठो दीक्षे मा मा हासीः " इति।

एतच्च गृहस्थादिसाधारणं ज्ञेयम्।

पराशरीयप्रायश्चित्तकाण्डे—

" गुरुं हुंकृत्य तुंकृत्य विप्रं निर्जित्य वादतः।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः " इति॥

तस्य प्रायश्चित्तमाह बौधायनः—

" वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य क्षमापयेत् " इति॥

अत्र वादग्रहणं हुंकारतुंकारच्छलोपलक्षणम्।

छललक्षणमक्षपादेन गौतमेन न्यायसूत्रे प्रथमाध्याय उक्तम्—

" वचनविघातोऽर्थविकल्पोपपत्त्या छलनम् " इति।

अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं प्रकल्प्य दूषणाभिधानम्। यथा नवकम्बलोऽयं देवदत्त इति वाक्यस्य नूतनाभिप्रायेण प्रयुक्तस्यार्थान्तरं कल्पयित्वा दूषणदानम्। नास्य नवकम्बलाः सन्ति दरिद्रत्वात्। न ह्यस्य द्वित्वमपि संभाव्यते कुतोऽस्य नवेति। वाक्छलं सामान्यच्छलमुपचारच्छलमिति त्रैविध्यं छलस्य। तल्लक्षणानि तत्रैव द्रष्टव्यानि।

शुश्रूषायाः फलमाहतुर्देवलबौधायनौ—

" यथा खनन्खनित्रेण नरो वार्यधिगच्छति ।
एवं गुरुगतां विद्यां शुश्रूषुरधिगच्छति " इति ॥

अकरणे दोषमाह यमः—

" यथाऽन्नं विषसंयुक्तं विषं चान्नेन संयुतम् ।
तादृशं स्यादशुश्रूषोर्ब्रह्माधीतं न संशयः " इति ॥

अत्रोपायान्तरमाह नारदः—

" गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थं नोपलभ्यते " इति ॥

स्मृत्यन्तरे—" नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ।
देवताभ्यर्चनं चैव संध्योपासनमेव च " इति ॥

जैमिनिः—" यावद्ब्रह्मोपदेशस्तु तावत्संध्यादिकं च न ।
जाते ब्रह्मोपदेशे तु कर्म संध्यादिकं चरेत् " इति ॥

ब्रह्म गायत्री । संध्यादिकमित्यादिशब्दाद्ब्रह्मयज्ञो गृह्यते । सोऽपि तदहः-प्रभृति संध्योपासनानन्तरं यावत्पर्यन्तं किंचिदधीतं न भवति तावत्पर्यन्तं प्रत्यहं गायत्र्या कर्तव्य इति तात्पर्यार्थः । ब्रह्मचारिणा कस्यापि शववाहनादि-क्रिया न कर्तव्याः । करणे कृच्छ्रात्मकं प्रायश्चित्तं पुनरुपनयनं च ।

तथा च देवलः—

" ब्रह्मचारी न कुर्वीत शववाहादिकाः क्रियाः ।
यदि कुर्याच्चरेत्कृच्छ्रं पुनःसंस्कारमेव च " इति ॥

आदिपदमलंकारादेर्ग्राहकं न तु दाहादेः । तत्र प्रायश्चित्तस्य गुरुत्वात् । लोभहेतुकक्रियायाः सामान्यवचनेनैव निषेधे सिद्धे ब्रह्मचारिणं प्रति पुनर्निषेधो धर्मार्थक्रियाया अपि निषेधार्थः । अन्यथा वैयर्थ्यात् ।

मनुरपि—" आचार्यं स्वमुपाध्यायं मातरं पितरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतं व्रतेन न वियुज्यते " इति ॥

मिताक्षरायां गालवः—

" गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति " इति ।

एतच्च मातृपित्रुपाध्यायाचार्यमातामहव्यतिरिक्तविषयम् ।

तथा च कालादर्शे—

"मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकम् ।
कुर्यान्मातामहानां च व्रती न भ्रश्यते व्रतात्" ॥

इति संवर्तः । तस्य कर्मलोपो नास्ति ।

तथा च चन्द्रिकायाम्—

"पित्रोर्गुरोर्विपत्तौ तु ब्रह्मचार्यपि यो नरः ।
सव्रतश्चापि कुर्वीत ह्यग्निपिण्डोदकक्रियाम् ॥
तेनाशौचं न कर्तव्यं संध्या चैव न लुप्यते ।
अग्निकार्यं च कर्तव्यं सायं प्रातश्च नित्यशः" इति ॥

यावत्पर्यन्तं तदीयं कर्म करोति तावत्पर्यन्तमाशौचमस्त्येव ।

"ब्रह्मचारी यदा कुर्यात्पिण्डनिर्वपणं पितुः ।
तावत्कालमशौचं स्यात्पुनः स्नानेन शुध्यति" ॥

इति प्रजापतिवचनात् । अपरार्कमाधवादयस्त्वेकाहमाशौचमाहुः ।

उदाहरन्ति च वचनम्—

"आचार्यं वाऽप्युपाध्यायं गुरुं वा पितरं च वा ।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम् ॥
कृत्वा पतति नो तस्मात्प्रेतान्नं तत्र भक्षयेत् ।
अन्यत्र भोजनं कुर्यान्न च तैः सह संविशेत्" इति ॥

अन्यत्र द्वितीयदिनमारभ्येत्यर्थः ।

"एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति" इति ब्राह्मोक्तेः ।

यत्तु—"गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति" ॥

इति वचनं तत्तदन्नभोजनविषयम् । प्रेताहारैस्तदन्नभोजनैः । और्ध्वदेहिककर्मकरणे कर्त्रन्तरसद्भावे तु पित्रादिमरणेऽप्याशौचाभाव एव । ब्रह्मचारिणा मृतसपिण्डानां समावर्तनोत्तरं मृतक्रमेणोदकदानं सर्वाशौचस्थानापन्नं त्रिरात्रमाशौचं च कार्यम् । न तु समावर्तनात्पूर्वमुदकदानाशौचे ।

तथा च मनुः—

"आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् ।
समाप्ते तूदकं दत्त्वा त्रिरात्रमशुचिर्भवेत्" इति ॥

आदिष्टी ब्रह्मचारीति मिताक्षरायां व्याख्यातम् ।

याज्ञवल्क्योऽपि—

"न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा" इति ।

ब्रह्मचारिणो मृतोद्देशेनोदकदानमपि नैव कुर्युः । एवं पतिता अपि नैव कुर्युरिति । पतिताः प्रच्युतद्विजातिकर्माधिकाराः । ततश्च ब्रह्मचर्यदशायां सपिण्डमरणे सति समावर्तनानन्तरं त्रिरात्रमशुचित्वाद्विवाहो मातापित्रनुज्ञायां सत्यामपि न भवति । उदकदानसाहचर्यान्मृताशौचविषय एवैतत् ।

इति संक्षेपेण ब्रह्मचारिधर्माः ।

## अथ काण्डव्रतानि ।

तत्र श्रावण्यां पौर्णमास्यां प्रथममध्यायोपाकर्म कृत्वा तत्पूर्वमपि वा वक्ष्यमाणे विद्यारम्भानुकूले सुमुहूर्ते होमपूर्वकं प्राजापत्यकाण्डव्रतमुपाकृत्य तत्काण्डाध्ययनं कृत्वा तस्योत्सर्गं कुर्यात् । एवं सौम्यादिकाण्डव्रतेष्वपि ज्ञेयम् ।

अथवा तन्त्रेण सर्वाणि काण्डव्रतान्युपाकृत्य यथाशक्ति व्रतमाचरन्सर्वाणि काण्डान्यधीत्य तन्त्रेण तानि व्रतान्युत्सृजेत् ।

यदि तु सारस्वतपाठेनाध्ययनं तदा तन्त्रेणैवोपाकरणं कार्यमुत्सर्जनमप्येवम् । आरम्भसमाप्तिरूपे उपाकरणोत्सर्जने काण्डाध्ययनव्रतयोः पृथङ्न भवतः । काण्डव्रतानां काण्डाध्ययनाङ्गत्वेनाध्ययनार्थाभ्यामुपाकरणोत्सर्जनाभ्यामेव सिद्धेः । असमाप्ते काण्डेऽध्यायोत्सर्गकाल आगतेऽध्यायमुत्सृज्य विरम्य पुनरध्यायमुपाकृत्य काण्डं यथाकालमुपाकृत्याधीत्य काण्डं यथाकालमुत्सृज्य विरमितव्यम् । काण्डानां संकीर्णत्वेन यथाकाण्डमिदानीमध्ययनासंभवात्काण्डानुक्रमणिकायां सारस्वतपाठस्याप्यभ्यनुज्ञातत्वाच्च सारस्वतपाठेनैवेदानीमध्ययनमस्ति । उपाकरणोत्सर्जनयोरारम्भसमाप्तिरूपयोस्तन्त्रं नैव भवति । स्वरूपविरोधात् । अत्र सर्वमाचार्यकर्तृकम् । यावदुक्तं ब्रह्मचारी ।

अथ सारस्वतपाठेनाध्ययनेऽपि काण्डपरिज्ञानस्याऽऽवश्यकत्वात्तदर्थं काण्डानुक्रमण्यनुसारेण काण्डान्युच्यन्ते ।

काण्डपरिज्ञानस्याऽऽवश्यकत्वं तु—

"अपि सारस्वते पाठे ज्ञानमात्रमिहोच्यते"

इत्यनेनोक्तं, सारस्वतपाठेऽपि काण्डानुक्रमविषयकमदृष्टार्थं ज्ञानमात्रमिष्यत एव बुधैरिति तात्पर्यार्थः । एतस्मादेव वचनात्सारस्वतपाठोऽप्यस्तीति ज्ञायते ।

## अथ काण्डानि ।

तानि च बौधायनगृह्यकाण्डानुक्रमणसूत्रयोरुक्तानि ।

### तत्र प्राजापत्यं काण्डम् ।

इषे त्वेतिप्रश्न उत्तमानुवाकवर्जम् । तृतीयस्यां प्रत्युष्टमिति प्रश्नद्वयम् । मम नामेत्येतस्यानुवाकस्य पयस्वतीरोषधय इत्यादिः शेषः । सं त्वा सिञ्चामीति प्रश्न उत्तमानुवाकवर्जम् । पाकयज्ञमित्यादयो द्वितीयानुवाकवर्जं पञ्चानुवाकाः । सशान्तिकाश्चित्तिः स्रुगित्यादयस्त्रयोदशानुवाकाः । प्रजापतिर्ब्रह्मवादिन इति द्वितीयकाण्डब्राह्मणान्तर्गतं प्रश्नद्वयम् । सत्यं प्रपद्य इति प्रश्नः । देवा वै नर्चिनेत्यादयश्चत्वारोऽनुवाकाः । निवीतं मनुष्याणामित्यारभ्य मनुष्यलोकं चाभिजयतीत्यन्तोऽनुवाकः । स॑श्रवा इत्यनुवाकः । मनुः पृथिव्या इत्यादयश्चत्वारोऽनुवाकाः । विश्वरूपो वै त्वाष्ट्र इत्यादयः षडनुवाकाः । देवा वै सामिधेनीरनूच्येत्यादिर्निवीतमित्येतस्यानुवाकस्य शेषः । समिधो यजतीत्यादयः षडनुवाकाः । इन्द्रो वृत्र॑ हत्वेत्यनुवाकः । सशान्तिकः परे युवा॑समिति प्रश्नः । इति प्राजापत्यकाण्डम् ।

---

### अथ सौम्यकाण्डम् ।

आप उन्दन्तु देवस्य त्वेति प्रश्नद्वयमुत्तमानुवाकवर्जम् । पवमानः सुवर्जन इत्यनुवाकः । ब्रह्म संधत्तमित्यनुवाकः । आददे ग्रावेतिप्रश्न उत्तमानुवाकवर्जम् । चित्तिः स्रुगिति प्रश्नान्तर्गतस्तरणिरित्यनुवाकः । प्राचीनव॑शमिति प्रश्नषट्कम् । प्रजननमित्यादयस्त्रयोऽनुवाकाः । देवासुराः स प्रजापतिरिन्द्रमित्यादयश्चत्वारोऽनुवाकाः ।उभये वा एते ब्रह्मवादिनो वदन्ति कति पात्राणीत्यनुवाकद्वयम् । देव सवितः प्रसुवेत्यादयः षडनुवाकाः । देवा वै यथादर्शमित्यादयोऽष्टानुवाकाः । त्रिवृत्स्तोम इति प्रश्नः । सशान्तिकौ युञ्जते मनो देवा वै सत्रमासतेति प्रश्नौ । इति सौम्यकाण्डम् ।

### अथाऽऽग्नेयकाण्डम् ।

घर्मः शिर उद्धन्यमानमित्यनुवाकौ । कृत्तिकास्वग्निमादधीतेत्यादयः पञ्चा-

नुवाकाः । इमे वा एत इत्यादयस्त्रयोऽनुवाकाः । भूमिर्भूम्नेत्यनुवाकः । देवासुरास्ते देवा विजयं परा वा एष भूमिर्भूम्ना द्यौर्वरिणेत्याहेत्यनुवाकत्रयम् । देवासुरा अग्नीषोमयोरित्यनुवाकः । उप प्रयन्तः संपश्यामीत्यनुवाकौ । मम नामेत्यनुवाकस्ताः संदधामि हविषा घृतेनेत्यन्तः । अयज्ञः संपश्यामि प्रजा अहमित्याहाग्निहोत्रं जुहोतीति त्रयोऽनुवाकाः । युञ्जानः प्रथमं मन इत्यादयः सप्त प्रश्नाः । तत्राऽऽद्यप्रश्नचतुष्टयस्योत्तमानुवाकाञ्जीमूतस्येव यदक्रन्दो मा नो मित्रो ये वाजिनमग्नेर्मन्व इति पञ्चानुवाकांश्च वर्जयेत् । मा नो हिꣳसीज्जनितेत्यनुवाकादूर्ध्वं सशान्तिक आप्यायस्व मदिन्तमेत्यनुवाकः । इयमेत्यनुवाकादूर्ध्वं सशान्तिक ईयुष्टे य इत्यनुवाकः । प्रजापतिर्मनसेत्यनुवाकादूर्ध्वं सशान्तिको ज्योतिष्मतीमित्यनुवाकः । आयुषः प्राणमिन्द्रो दधीच इत्यनुवाकौ । सावित्राणीत्यादयः सप्त प्रश्नाः । तत्र समिद्धो अञ्जन्गायत्री त्रिष्टुब्जगती कस्त्वाऽऽच्छ्यति प्रजापतेरक्षि पत्रस्व वाजसातय इत्यनुवाकान्, इन्द्राय राज्ञे सूकर इति चतुर्दशानुवाकान्रोहितो धूम्ररोहित इति त्रयोदशानुवाकान्स्तेगान्दꣳष्ट्राभ्यामिति षोडशानुवाकांश्च वर्जयेत् । अङ्गिरसो वै सत्रमासतेति प्रश्नः । उदस्थाग्नि वा एतस्येत्यनुवाकौ । संज्ञानं लोकोऽसीति प्रश्नौ । ब्रह्म वै चतुर्होतार इत्यादयः पञ्चानुवाकाः । इत्याग्नेयकाण्डम् ।

## अथ वैश्वदेवकाण्डम् ।

अनुमत्यै पुरोडाशमितिसंहितान्तर्गतः प्रश्न उत्तमानुवाकवर्जम् । ऋतमेव परमेष्ठीत्यनुवाकः । ब्राह्मणान्तर्गता अनुमत्यादयस्त्रयः प्रश्नाः । प्रजा वै सत्रमासताग्निर्वाव संवत्सर इत्यनुवाकौ । देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते सुरा ऊर्ध्वमित्यनुवाकः । वायव्यꣳ श्वेतमित्यादयश्चत्वारः प्रश्नाः । तत्रोत्तमानुवाकान्वर्जयेत् । प्रजापतिरकामयत प्रजाः सृजेयेतीति तृतीयकाण्डम् । तत्र पञ्चप्रश्नानामन्तिमाननुवाकान्वर्जयेत् । इषे त्वेत्यादिरश्मिरसीत्यन्तानां प्रश्नानां क्रमेणोत्तमानुवाका उशन्तस्त्वेत्येतत्पूर्वं युक्ष्वाहीत्यनुवाकश्च । देवस्य त्वेत्यादयः प्रजननप्रश्नशेषा दशानुवाकाः । एकस्मा इत्यादय एकादशानुवाकाः । अर्वाङित्यादयो दशानुवाकाः । मेषस्त्वा पचतैरवत्वित्यादय एकादशानुवाकाः । पृथिव्यै स्वाहेत्यादयश्चतुर्दशानुवाकाः । जीमूतस्य यदक्रन्दो मा नो मित्रो ये वाजिनमग्नेर्मन्व इति पञ्चानुवाकाः । इन्द्राय राज्ञे सूकर इत्यादयश्चतुर्दशानुवाकाः । रोहितो धूम्ररोहित इत्यादयस्त्रयोदशानुवाकाः । स्तेगान्दꣳष्ट्राभ्यामिति षोड-

शानुवाकाः। समिद्धो अञ्जन्गायत्री कस्त्वेति त्रयोऽनुवाकाः। प्रयासाय स्वाहा चित्तꣳ संतानेनेति द्वावनुवाकौ। प्रजापतेरक्षि पवस्व वाजसातय इत्यनुवाकौ। यो वा अश्वस्य मेध्यस्य शिर इत्यनुवाकः। सांग्रहण्या प्रजापतिरश्वमेधमसृजतेति प्रश्नद्वयम्। अङ्गिरसो वै सत्रमासतेत्यादयः प्रजननप्रश्नान्तर्गताः सप्तानुवाकाः। साध्या वै, इत्यारभ्य दशानुवाकाः। प्रजवं वा इत्यारभ्य दशानुवाकाः। बृहस्पतिरकामयत श्रन्मे देवा इत्यारभ्यैकादशानुवाकाः। गावो वा इत्यारभ्य दशानुवाकाः। नवैतान्यहानि भवन्तीत्यादिः प्रश्नशेषः। यस्य प्रातःसवन इत्यादयस्त्रयोऽनुवाकाः। जुष्टो दमूना इति प्रश्नद्वयम्। पीवोन्नामिति प्रश्नः। भर्ता सन्हरिꣳ हरन्तमित्यनुवाकौ। अग्निर्नः पात्विति प्रश्नः। अग्नेः कृत्तिका इत्यनुवाकत्रयम्। स्वाद्वीं त्वेतिप्रश्नः। युवꣳ सुराममित्यनुवाकः। सर्वान्वा इति प्रश्नः। अञ्जन्तीति प्रश्नः। ब्रह्मणे ब्राह्मणमिति प्रश्नः। तुभ्यं ता इत्यादयश्चत्वारोऽनुवाकाः। इति वैश्वदेवकाण्डम्।

सशान्तिकः सह वै देवानामिति प्रश्नः स्वायंभुवं काण्डम्

---

भद्रं कर्णेभिरिति प्रश्न आरुणं काण्डम्।

शं नो मित्र इति पूर्वोत्तरशान्तिसहितः शीक्षां व्याख्यास्याम इति प्रश्नः साꣳहित्यो देवता उपनिषदः। सशान्तिकोऽम्भस्य पार इति प्रश्नो याज्ञिक्यो देवता उपनिषदः। ब्रह्मविदाप्नोति भृगुर्वै वारुणिरिति प्रश्नद्वयं सशान्तिकं वारुण्यो देवता उपनिषदः। मातृदत्तेन तु स्वायंभुवकाण्डमात्रमधिकं पाक्षिकत्वेन संगृहीतम्। आरुणादिकाण्डानि तु नैव संगृहीतानि। तत्कल्पे भद्रप्रश्न आग्नेयकाण्डेऽन्तर्भवति। काठकत्वसामान्यात्। अवशिष्टाः पञ्च प्रश्ना वैश्वदेवकाण्डस्यान्त्यत्वात्तत्रैवान्तर्भवन्ति। स्वायंभुवकाण्डस्य पृथक्त्वपक्षे तस्यैवान्त्यत्वात्तत्रान्तर्भावो ज्ञेयः। एतद्यथाकाण्डमध्ययनम्।

रुद्र आरण्यके च विशेषोऽनुक्रमणिकायाम्—

"होतृप्रवर्ग्यकाण्डं च याश्चोपनिषदो विदुः।<br>
अरुणाम्नायविधी चैव काठके परिकीर्तितौ॥<br>
रुद्रो नारायणश्चैव मेधो यश्चैष पित्रियः।<br>
रुद्रमारण्यकं चैव नाव्रती श्रोतुमर्हति" इति॥

होता चित्तिः स्रुगिति प्रश्नः । प्रवर्ग्यकाण्डं युञ्जते देवा वै सत्रमासतेति प्रश्नद्वयम् । उपनिषदः शीक्षादयस्त्रयः प्रश्नाः । अरुणो भद्रप्रश्नः । आम्नायविधिः स ह वै प्रश्नः । रुद्रो नमस्ते रुद्रेति प्रश्नः । नारायणोऽम्भस्येति प्रश्नः । पित्रियो मेधः परे युवाꣳसमिति प्रश्नः । एतत्सर्वमत्रत्येकभक्तब्रह्मचर्यादिनियमरहितः श्रोतुमपि नार्हति कुतस्तस्याध्ययनम् । अरुणश्चाऽऽम्नायविधिश्चारुणाम्नायविधी । तौ काठके परिकीर्तितौ । काठकसंज्ञया समाख्याताविस्यर्थः । होतुप्रवर्ग्यकाण्डमित्यादि पित्रिय इत्यन्तं संज्ञाप्रदर्शनार्थम् । अरण्येऽध्येतव्यत्वादारण्यकत्वम् ।

## अथ दिवाकीर्त्यानि ।

" कारीर्यश्चाथ पित्र्याश्च दिवाकीर्त्येति यत्र च ।
रुद्रः संततिरित्येतावनुवाकौ च सात्रिके ॥
होतृविध्यवसाने च अनुवाकचतुष्टयम् ।
सूक्तेषु सूक्तं यत्सौर्यं मेधो यश्चैष पित्रियः ॥
काठकानि च सर्वाणि सर्वाण्यारण्यकानि च ।
दिवाकीर्त्यानि शाखायामेतावन्तीति धारणा " इति ॥

कारीर्यो मारुतमसि मरुतामिति चत्वारोऽनुवाकाः । पित्र्याः सोमाय पितृमते, उशन्तस्त्वा हवामह उशन्तः, इन्द्रो वृत्रꣳ हत्वा, वैश्वदेवेन वै प्रजापतिः प्रजा असृजत ता वरुणप्रघासैः, अग्नये देवेभ्यः पितृभ्यः, सुरावन्तं बर्हिषदꣳ सुवीरम्, उशन्तस्त्वा हवामह आ नो अग्ने सुकेतुना, इत्येतेऽनुवाकाः । दिवाकीर्त्येति पदं यस्मिन्ननुवाके स चासावादित्योऽस्मिन्निति । रुद्रो नमस्त इति प्रश्नः । सात्रिकेऽनुवाकचतुष्टये संततिरिति द्वावनुवाकौ दिवाकीर्त्याविस्यर्थः । सात्रिके सत्रसंबन्धिनि प्रकरण इत्यर्थः । दिवाकीर्त्येति यत्र चेत्यनेनैव सिद्धे संततिरित्यादिवचनं ब्राह्मणस्य परायातत्वाद्दिवाकीर्त्येति यत्र चेत्यस्याप्राप्तिराशङ्किता स्यात्सा मा भूदित्येतदर्थम् । होतृविधिः प्रजापतिरकामयत प्रजाः सृजेयेति स एतं दशहोतारमिति प्रश्नः । ब्रह्मवादिन इत्यस्य प्रश्नस्यानुवाकसप्तकं होतृविधिः । तस्यावसानं विरामः समाप्तिः । तस्यां सत्यां यदनुवाकचतुष्टयं प्रजापतिः सोऽन्तर्वानित्यादिकं तच्च दिवाकीर्त्यमित्यर्थः ।

" गर्भादयोऽनुवाका ये ताननह्नेव पठेद्द्विजः " इति[1] ।

---

१ ख. °ति । तृती° ।

" द्वितीयकाण्डस्य भवेद्ब्राह्मणे यस्तृतीयकः।
प्रश्नस्तस्यान्त्यानुवाकांश्चतुरो वै पठेद्दिने " ॥

इतिवचनद्वयसंवादादयमर्थो लभ्यते। सूक्तेषु मध्ये यत्सूक्तं सौर्यं सूर्यदेवताकं सूर्यो देवीमुषसमित्यारभ्य सूर्य आत्मा जगतस्तस्थुषश्चेत्यन्तम्। यश्च पित्रियो मेधः परे युवांसमिति प्रश्नः स दिवाकीर्त्य इत्यर्थः। कारीर्यश्चापि पित्र्यश्चेत्यनेनैव सिद्धे मेधो यश्चैष पित्रिय इति वचनं परे युवांसमिति प्रश्नस्य पित्रियो मेध इति संज्ञासिद्ध्यर्थम्। काठकानि, कठशाखाप्रवर्तकेन मुनिनोक्तत्वात्काठकानीत्युच्यन्ते। तानि चाष्टौ सावित्रनाचिकेतचातुर्होत्रवैश्वसृजारुणकेतुकाख्याः पञ्च चितयः। तत्र संज्ञानमिति प्रश्नः सावित्रचितिः। लोकोऽसीतिप्रश्नो नाचिकेतचितिः। ब्रह्म वै चतुर्होतार इत्यनुवाकश्चातुर्होत्रचितिः। यच्चामृतमित्यादयश्चत्वारोऽनुवाका वैश्वसृजचितिः। भद्रं कर्णेभिरितिप्रश्न आरुणकेतुकचितिः। एताः पञ्च चितयः। दिवःश्येन्याख्येष्टिसमुदाय एकः। अपाघाख्येष्टिसमुदायोऽपरः। तत्र तुभ्यं देवेभ्य इति द्वावनुवाकौ दिवःश्येन्याख्येष्टिसमुदायः। तपसा देवा देवेभ्यो वा इति द्वावनुवाकावपाघाख्येष्टिसमुदायः। इति द्वाविष्टिसमुदायौ। आम्नायविधिः स्वाध्यायब्राह्मणमष्टमम्। तच्च सह वै देवानामितिप्रश्नात्मकम्। आम्नायस्याऽऽम्नायाध्ययनस्य विधिर्ब्राह्मणं यस्मिन्प्रश्ने स आम्नायविधिस्तम्। अनेन कृत्स्नस्य प्रश्नस्य संग्रहः सिद्धो भवति। एतान्यष्टौ काठकानि भद्रं कर्णेभिरित्यादीनि नारायणान्तान्यारण्यकानि च दिवाकीर्त्यानि। दिवैव कीर्त्यानि कीर्तितव्यानि न तु रात्रावित्यर्थः। तैत्तिरीयशाखायामेतावन्त्येव दिवाकीर्त्यानीत्यवधारणा कर्तव्येत्यन्त्यार्धार्थः।

एतेषां काण्डर्षीणां प्रत्यहं तर्पणं कर्तव्यं, तदुक्तं तत्रैव—

" अथ काण्डऋषीनेतानुदकाञ्जलिभिः शुचिः।
अव्यग्रस्तर्पयेन्नित्यमन्नैः पर्वाष्टमीषु च " इति ॥

अथ सर्वकाण्डाध्ययनानन्तरम्, अव्यग्रः शुचिश्च सन्नित्यं प्रत्यहमुदकाञ्जलिभिरेतान्काण्डर्षीस्तर्पयेत्। पर्वस्वमावास्यापौर्णमासीष्वष्टमीषु च। अन्नैरपि तर्पयेदित्यर्थः। एतच्च सूत्रानुक्तत्वात्कृताकृतम्। करणे फलाधिक्यमकरणे प्रत्यवायाभाव इति द्रष्टव्यम्। सारस्वतपाठेनाध्ययनेऽपि काण्डानुक्रमज्ञानमपेक्षितमेवेत्येतदर्थे वचनं तु प्रागेवोदाहृतम्।

---

१ ग. 'टेश्द्विजः' इ°। २ क. घ. 'श्येनाख्ये'। ३ क. ङ. 'श्येनाख्ये'।

कोऽयं सारस्वतो नाम कश्च सारस्वतः पाठ इत्याकाङ्क्षायामितिहासः प्रदर्श्यते। ब्रह्मसभायां दुर्वासाः साम गायन्नास। तं खलु तेजसा क्रूरं दृष्ट्वा सभामध्ये सरस्वत्यस्मयत। ततः क्रुद्धो मुनिः सरस्वतीं शशाप मर्त्ययोनौ प्रजायस्वेति। ततस्तं देवी प्रसादयामास भगवन्विप्रगृहे प्रजायेयमिति। ततः स मुनिस्तथेत्युक्त्वा जगाम। ततो देव्यात्रेयगृहेऽजायत। ततो वेदविदं भर्तारं प्राप्य विद्यानिधिं पुत्रं सरस्वती प्रासूत। ततो विद्यानिधिं कृतोपनयनं पुत्रं पिता सारस्वतं वेदमध्यापयामास यथावृद्धक्रमेण। ततस्तं बालत्वादल्पमेधसं पिता ताडयामास पृष्ठे वेणुदलेन। ततः सोऽरोदीत्। साऽपि तं दृष्ट्वा पुत्रमालिङ्ग्यातिदुःखिता बभूव।

अश्रुपूर्णं तं वागीशा निवार्य च पुनः पुनः।
ततः सा चिन्तयामास यस्याः कस्याः सुतो नहि॥
प्राप्य मां ताड्यते बालो मम प्राणप्रियः सुतः।

ततश्चतुःषष्टिकलाः सर्वान्वेदान्साङ्गान्ब्रह्मविद्यापर्यन्तान्सारस्वताय सरस्वत्युपादिशत्। क्षुत्पिपासे निवर्त्य वायुधारणां चोपादिशत्।

ततः संपूर्णविद्योऽसौ कुरुक्षेत्रे वसन्मुनिः।
तपस्तेपे महाभागो देवैरपि सुदुष्करम्॥
ततः कालेन महता ह्यनावृष्टिरभूत्किल।

कुरुक्षेत्रे सारस्वतं हृष्टं पुष्टमन्तर्वायुं धार्यमाणं तमृषिं ददृशुः।

तमूचुर्मुनयः सर्वे शाकं देहीति नः प्रभो।
अलं शाकेन भो विप्रा यदि शाको भवेद्भुवि॥
सारस्वतो मुनिः प्राह तेभ्यो देहीति चण्डिकाम्।
सुत शाकं प्रदास्यामि यदि शाकेन ते ह्यलम्॥
शाकंभरीति मुनिना प्रसन्नाऽकारि वै तदा।
शाकाहारास्ततः सर्वे मुनयः कृतजीविताः।
दुर्भिक्षे विनिवृत्तेऽप्यध्ययनं नास्मरंस्तदा॥
अन्योन्यमभिजग्मुस्त उच्चरंश्च न कंचन।
ततो विस्मृतवेदास्तु बभूवुर्मुनयो भृशम्॥

ततोऽतिदुःखितेषु मुनिषु नारदेनोक्तं सारस्वतं कृतसर्ववेदाध्ययनं गत्वाऽध्ययनं कुरुध्वमिति। ततस्ते सारस्वतं प्रार्थयामासुः। अध्यापनं कुरुष्व भगवन्निति। ततः सारस्वतः प्रार्थितश्चतुःषष्टिमुनिगणसहस्रेभ्यश्चतुःषष्टिसहस्रवे-

दानध्यापयामास । ततस्तान्वेदांस्तच्छाखिनः साकल्येनाधीतवन्तः । तैत्तिरीयशाखिनस्तु साकल्येनाध्ययनं कृत्वा सर्ववेदविलक्षणां तैत्तिरीयशाखां दृष्ट्वाऽन्योन्यमूचुः । अहो, अतीव विस्मयोऽस्माकं सर्वविलक्षणां शाखामध्यापयति स्मास्मान्मूढान्कृत्वा निर्मिताम् । ततः सर्वे तैत्तिरीयशाखिनः संभूय सारस्वतमूचुः—नायं वेदस्त्वयाऽध्यापितः सर्ववेदविलक्षणत्वादिति ।

ततः सारस्वतः सर्वाञ्छ्रेष्ठान्मुनीन्माह वचः—

यद्ययं न भवेद्वेदः प्रतिज्ञां तु करोम्यहम् ।
अग्निप्रवेशनं कुर्यां भवन्तो वाचमीरिताम् ॥
तमूचुर्मुनयः सर्वे वचनं यत्त्वयोदितम् ।
यदि वेदक्रमं विप्र प्रतिज्ञां कुर्महे वयम् ॥

ततः सारस्वतेन सहिताः सर्वे मुनयस्तत्र तत्र मुनीन्गत्वा निर्णेतुं न शक्नुमः, इति तैरुक्ता ब्रह्माणं जग्मुर्यथायथं प्रतिज्ञा निवेदिताः । ब्रह्माऽपि मुनिं सारस्वतमाह । सत्यं प्रतिज्ञातं तत्रभवता सारस्वतेन । सारस्वतो वेदपाठः सारस्वतोक्तक्रमेणैवाध्येतव्योऽन्यथाऽध्ययनफलं नास्तीति । तत इतरान्मुनीन्माह । सत्यं न पाठक्रमेणार्थानुष्ठानक्रमो भवतीति । तस्मात्सर्वैर्जितं नाग्निप्रवेशनं कर्तव्यमितीतिहासः । काण्डानुक्रमणरीत्या सारस्वतपाठेन वा वेदाध्ययनमवश्यं कर्तव्यम् ।

तथा च श्रुतिः—

"तस्मात्स्वाध्यायोऽध्येतव्यो यं यं क्रतुमधीते तेन तेनास्येष्टं भवति" इति ।

स्वः स्वकीयोऽध्यायः शाखा ।

तदुक्तं भट्टपादैः—

"अत्र स्वाध्यायशब्देन स्वशाखैका तु गृह्यते" इति ।

अनेन च स्वाध्यायाध्ययनस्य प्राथम्यमावश्यकत्वं चोक्तं न तु द्वितीयवेदाध्ययनस्य निवृत्तिः ।

एवं च—"वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्" इत्यविरुद्धम् ।

याज्ञवल्क्योऽपि—

"वेद एव द्विजातीनां निःश्रेयसकरः परः ।
यं यं क्रतुमधीयीत तस्य तस्याऽऽप्नुयात्फलम्" इति ।

**स्मृतिसारमुच्चये—**

" वेदो यस्य शरीरस्थो न स पापेन लिप्यते ।
वेदात्मा स तु विज्ञेयः शरीरैः किं प्रयोजनम् ॥
वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि न संशयः ॥
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम सर्वकर्मबहिष्कृतः ॥
नित्यं नैमित्तिकं काम्यं यच्चान्यत्कर्म वैदिकम् ।
अनधीतस्य विप्रस्य सर्वं भवति निष्फलम् ॥
अनधीतो द्विजो यस्तु शास्त्राणि तु बहून्यपि ।
शृणोत्यब्राह्मणो नाशं नरकं स प्रपद्यते ॥
नाधीतवेदो यो विप्र आचारेभ्यः प्रवर्तते ।
नाऽऽचारफलमाप्नोति यथा शूद्रस्तथैव सः ॥
अनधीतस्य विप्रस्य पुत्रो वाऽध्ययनान्वितः ।
शूद्रपुत्रः स विज्ञेयो न वेदफलमश्नुते ॥

**अध्ययनान्वितो वेदाध्ययनान्वितः ।**

अनभ्यासाच्च वेदानामाचारस्य च लङ्घनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति " इति ।

**बृहन्नारदीये—**

" अनधीत्य तु यो वेदाञ्शास्त्राणि पठते द्विजः ।
शूद्रतुल्यः स विज्ञेयो नरकायोपपद्यते " इति ॥

**अन्यच्च—**" शब्दब्रह्ममयो विष्णुर्वेदः साक्षाद्धरिः स्मृतः ।
वेदाध्यायी तु यो विप्रः सर्वान्कामानवाप्नुयात् " इति ॥

**तस्माद्ब्राह्मणेनावश्यं वेदोऽध्येतव्यः । तत्र वेदाभ्यासः पञ्चधा ।**
**तथा च स्मृतिः—**

" वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा " इति ॥

**तत्राप्यादौ परम्परागतो वेदः पठनीयः । तथा च वसिष्ठः—**

" पारम्पर्यागतो येषां वेदः सपरिबृंहणः ।
प्रथमं तमधीयीत तच्छाखं कर्म चाऽऽचरेत् " इति ॥

परिबृंहणानि छन्दआदीन्यङ्गानि मीमांसादीन्युपाङ्गानि च । तैः सहितः पारम्पर्यागतो वेदो यस्तं प्रथममधीयीतेत्यर्थः ।

वाराहे—" स्वशाखां प्रथमं यस्तु पठित्वाऽन्यां पठेद्यदि ।
प्रत्यक्षरं तु लभते गायत्र्या द्विगुणं फलम् " इति ॥

व्यासः—" तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना " इति ॥

रहस्यमुपनिषत् ।

स्वशाखात्यागपूर्वकपरशाखाश्रयणे दोषमाह वसिष्ठः—

" यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् ।
स शूद्रवद्बहिः कार्यः सर्वकर्मसु साधुभिः ॥
न जातु परशाखोक्तं बुधः कर्म समाचरेत् ।
आचरन्परशाखोक्तं शाखारण्डः स उच्यते ॥
अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ।
तच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् " इति ॥

जातु कदाचिदपीत्यर्थः । तच्छाखीयैः स्वशाखाप्रोक्तैः । शाखीयब्राह्मण उक्तत्वादष्टौ विकृतीरपि सति सामर्थ्ये पठेत् । तासां लक्षणानि तैत्तिरीयबह्वृच[1]प्रातिशाख्यशिक्षादिभ्योऽवगन्तव्यानि । तैत्तिरीयाणां स्वप्रातिशाख्ये[2] जटान्तविकृतिविषय एव प्रमाणोपलम्भात्सत्यपि सामर्थ्ये तावदेव वाऽध्ययनम् ।

संहितापदक्रमाध्यनस्य काम्यत्वमप्युक्तं वेदब्रह्मचारण्यके—

" अन्नाद्यकामो निर्भुजं ब्रूयात्स्वर्गकामः प्रतृण्णमुभयकाम उभयमन्तरेण " इति ।

द्वयोः पदयोरक्षरयोर्वा यः संधिस्तस्याविच्छेदेनाध्ययनं तन्निर्भुजं संहितापारायणमुच्यते । द्वयोः पदयोः संधिराहित्येनोच्चारणं प्रतृण्णं पदपारायणम् । निर्भुजं प्रतृण्णं चैतदुभयमन्तरेण न केवलं निर्भुजं न केवलं प्रतृण्णमेतादृशं क्रमपारायणमित्यस्यार्थः । शाखाभेदस्त्वध्ययनभेदात्सूत्रभेदाद्वा वैजयन्तीकारैरुपोद्घातग्रन्थे प्रपञ्चितः ।

एतच्छाखाध्येतृऋषिपरम्परा, एतच्छाखायाः शकुनिवृषभवृक्षस्वरूपत्वं चोक्तं काण्डानुक्रमणिकायाम्—

" वैशम्पायनो यास्कायैतां शाखां प्राह पैङ्गये ।
यास्कः पैङ्गिस्तित्तिरय उखाय प्राह तित्तिरिः ॥

---

१ ख. घ. ङ. 'यबह्वृ' । २ ख. घ. ङ. पारशाख्ये ।

उखः शाखामिमां प्राह आत्रेयाय यशस्विने ।
तेन शाखा प्रणीतेयमात्रेयी इति प्रोच्यते ॥
यस्यां पदकृदात्रेयो वृत्तिकारस्तु कुण्डिनः ।
तां विद्वांसो महाशाखां भद्रमश्नुवते महत् ॥
त्रिशीर्षाणमर्कांसं नवात्मानमष्टपुच्छम् ।
द्वात्रिंशत्पक्षं समन्वीक्षेच्छकुनिं ब्रह्मसंमितम् ॥

उत्तमोपनिषदोऽस्य शिरोऽर्कांवंसौ भुवनस्य पतेर्नव यान्यात्मा सः ।
कठविहितानि विदुः पुच्छेऽष्टौ यदपि च शेषं तौ पक्षौ ॥

मन्त्रात्मा घर्मशृङ्गोऽष्टास्य उपनिषत्ककुत् ।
विध्यङ्ग ऋषभः स्वर्विच्चतुर्होतृललामवान् ॥
शाखाद्यादिं विपाप्मानं विधिमन्त्रमयं सकम् ।
समान्तमेतं पन्थानं दिव आहुर्मनीषिणः ॥
रहस्यमूल ऋक्पर्णो यजुष्पुष्पप्रवालवान् ।
सामाथर्वस्कन्दशाखो विप्रभ्रमरसेवितः ॥
यज्ञकर्मफलः श्रीमान्ब्राह्मो वृक्षः साक्षादेषः ।
यस्तं विद्यात्सहर्षिभिर्विप्रः स स्वर्गच्छेदाप्त्वा कीर्तिम् " इति ॥

पूर्वमेकीभूय स्थिता वेदास्तत्तद्वेदाध्यायिनः सकल वेदाध्ययनं कर्तुमसमर्थान्दृष्ट्वाऽधीतवेदत्वसिद्धये जगदुपकाराय च वेदव्यासेन वेदा व्यस्तास्तत्तच्छाखापरिच्छिन्नाः कृताः ।

ततः स भगवान्वैशंपायननाम्ने स्वशिष्याय यजुर्वेदं प्राह । ततः स वैशम्पायनो यास्कनाम्ने मुनय एतां तैत्तिरीयशाखां प्राह । स च यास्कः पैङ्गये । पलिङ्गव इत्यपि पाठः । स चास्मत्सूत्रानुगुणः ।

ततः पैङ्गिर्ऋषिस्तित्तिरये । स चोखाय । स चाऽऽत्रेयाय । यशस्वीत्यात्रेयस्य विशेषणम् ।

यशस्वित्वमेवाऽऽह—" तेन शाखा प्रणीतेयमात्रेयी इति प्रोच्यते " इत्यनेन ।
तेनाऽऽत्रेयेणेयं शाखाऽन्येभ्यः प्रणीताऽध्यापिता सत्यात्रेयीति संज्ञां प्राप्तवती । एतादृशं यश आत्रेयस्य । यस्याः शाखाया आत्रेय ऋषिः पदकृद्भवति । वृत्तिकारः कुण्डिन ऋषिर्भवति । एतादृशी तां महाशाखामधीतवन्तो विद्वांसो महद्भद्रं कल्याणमश्नुवते ।

अथैतच्छाखात्मकस्य वेदस्य शकुनिवृषभस्वरूपमाह— त्रिशीर्षाणमित्यारभ्य चतुर्होतृललामवानित्यन्तेन । त्रिशीर्षाणमर्कांसं नवात्मानमष्टपुच्छं द्वात्रिंशत्पक्षमेतादृशं शकुनिं समन्वीक्षेत्, यो जानीयात्स ब्रह्मणः संमतं ब्रह्मलोकं गच्छेदित्यर्थः । ब्रह्मसंमितमितिपाठे शकुनेर्विशेषणम् । उत्तमा उपनिषदः शीक्षा ब्रह्मविद्भृगुरिति प्रश्नत्रयम् । एतासामुत्तमत्वं तु बाहुल्येन ब्रह्मज्ञानोपयोगित्वात् । अर्कौ प्रवर्ग्यकाण्डे अंसौ स्कन्धौ यस्य । भुवनस्य पतिः प्रजापतिः "प्रजापतिर्वै भुवनस्य पतिः" इति श्रुतेः । प्रजापतेर्यानि नव काण्डानि शाखादिं याजमानं चेत्यादिना नवाऽऽहुः कस्य तद्विद इत्यन्तेनोक्तानि तानि तस्याऽऽत्मा । कठशाखाप्रवर्तकेन मुनिना प्रोक्तान्यष्टौ काठकानि पुच्छे पुच्छस्थाने विदुः । वेदविद इति शेषः । यदपि च शेषं काण्डं शेषभूतानि काण्डानि द्वात्रिंशत्तानि पक्षौ तस्य शकुनेः ।

इति शकुनिस्वरूपम् ।

---

## अथ वृषभस्वरूपम् ।

मन्त्रात्मा मन्त्रभाग आत्मा यस्य । घर्मौ प्रवर्ग्यकाण्डे ते शृङ्गे यस्य । अष्टौ काठकानि आस्यं मुखं यस्य सोऽष्टास्यः । उपनिषदः ककुद्यस्य । विध्यङ्गो ब्राह्मणान्यवशिष्टान्यङ्गानि यस्य । चतुर्होतारश्चित्तिः स्रुगित्यादयो मन्त्राः सब्राह्मणा ललामानि भूषणानि यस्य । एतादृशमृषभस्वरूपं यो वेद स स्वर्वित्स्वर्गविद्भवेदित्यर्थः । शाखा स्वशाखाऽऽद्या येषां ते स्वशाखाद्या अन्ये वेदास्त आदिर्मूलं यस्य तम् । अत्र तद्गुणसंविज्ञानबहुव्रीहिर्ज्ञेयः । विपाप्मानं विगतकल्मषम् । विधिमन्त्रमयं मन्त्रब्राह्मणात्मकम् । सकं सुखसहितम् । समो वैषम्यरहितोऽन्तः प्रान्तो यस्य । एतादृशं दिवः स्वर्गस्य पन्थानं मार्गं मनीषिण ऋषय आहुः । वेदाध्ययनतदुक्तकर्माचरणमेव स्वर्गस्य पन्था इति तात्पर्यार्थः ।

## अथ वृक्षस्वरूपम् ।

रहस्यमुपनिषदो मूलं यस्य । ऋचः पर्णानि यस्य । यजूंषि पुष्पाणि प्रवालानि च यस्य । सामान्यथर्वाणः स्कन्धाः शाखाश्च यस्य । विप्रा एव भ्रमरास्तैः सेवितः । यज्ञकर्माण्येव फलानि यस्य । श्रीमाञ्शोभावानेष ब्राह्मो ब्रह्मरूप एव साक्षाद्भवति । यस्तं वृक्षं विद्याज्जानीयात्स ऋषिभिः सहितो विप्रोऽस्मिँल्लोके कीर्तिं पुण्यां कीर्तिमाप्त्वा प्राप्य

स्वः स्वर्गं गच्छेदित्यर्थः । स हर्षिर्विप्र इति पाठे स ऋषिर्ऋषितुल्यो विप्र इत्यर्थः । हेति निपातोऽवधारणार्थः ।

ऋषिपरिज्ञानफलमप्युक्तमनुक्रमणिकायाम्—

" एतानृषीन्यजुर्वेदं यः पठन्वेद वेदवित् ।
ऋषीणामेति सायुज्यं सालोक्यं ब्रह्मणस्तथा " इति ॥

यो वेदविद्यजुर्वेदं पठन्नेतानुक्तानृषीन्वेद स ऋषीणां सायुज्यं ब्रह्मणः सालोक्यं चैतीत्यर्थः । सर्वोऽपि वेदः सार्थोऽध्येतव्यः ।

तदुक्तं पराशरेण—

" ज्ञातव्यः सर्ववेदार्थः सर्वकर्मप्रसिद्धये ।
पाठमात्रमधीयानः पङ्के गौरिव सीदति " इति ।

पङ्के कर्दमे ।

यास्कोऽपि—" यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ।
स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा " इति ॥

मीमांसकैरपि सार्थवेदाध्ययनम् ' अथातो धर्मजिज्ञासा ' ' अथातो ब्रह्मजिज्ञासा ' इति पूर्वोत्तरमीमांसादिभूतयोः सूत्रयोर्व्याख्यावसर उक्तम् ।

यजुर्वेदस्वरूपं त्रिभाष्यरत्ने—

" यजुर्वेदः पिङ्गलाक्षः कृशमध्यो बृहद्गलः ।
बृहत्कपोलः कृष्णाङ्घ्रिस्ताम्रः कश्यपगोत्रजः " इति ।

चरणव्यूहे प्रादेशमात्रत्वमप्युक्तम् ।

अथाध्ययनमुहूर्तः संग्रहे—

" उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत् ।
विद्यारम्भे व्रतोद्देशे क्षौरे चैव विशेषतः " इति ।

स्मृतिसारे—

" विद्यारम्भो व्रतं क्षौरं न भवेत्तु गलग्रहे " इति ।

गलग्रहास्तूपनयनकालनिरूपण उक्ताः ।

वारानाह मार्कण्डेयो विद्यारम्भं प्रकृत्य—

" वारे दिनेशभृगुसुज्ञबृहस्पतीनां विद्वानसौ भवति " इति ।

दिनेशः सूर्यः । भृगुः शुक्रः । सुज्ञो बुधः ।

वसिष्ठः—“ रविवारे तु पूर्वाह्णे विद्यारम्भो विधीयते।
चन्द्रवारेऽपराह्णे तु विद्या गुर्वी विधीयते ” इति ॥

नक्षत्राण्याह महेश्वरः—

“ हस्तादित्रितयं तथा निर्ऋतिभे पूर्वान्त्यभेष्वश्विभे
मित्रर्क्षे च मृगादिपञ्चसु शुभः प्रारम्भ आद्यः स्मृतः।
विद्यानां हरिभत्रये च दिवसे सूरेर्भृगोर्वा दिनेऽ-
नध्यायाख्यतदाद्यवर्जिततिथौ केन्द्रस्थितैः सद्ग्रहैः ” इति ॥

हस्तादित्रितयं हस्तचित्रास्वातयः। निर्ऋतिभं मूलनक्षत्रम्। पूर्वा पूर्वात्रयम्। अन्त्यभं रेवतीनक्षत्रम्। अश्विभमश्विनीनक्षत्रम्। मित्रर्क्षमनूराधानक्षत्रम्। हरिभत्रयं श्रवणधनिष्ठाशततारकाः। सूरिर्बृहस्पतिः। भृगुः शुक्रः। अनध्यायदिनान्यनध्यायाद्यदिनानि च वर्जयित्वा केन्द्रस्थानस्थितैः सद्ग्रहैः शुभग्रहैर्युतैर्लग्नैर्युतासु तिथिषु च विद्यानामाद्यः प्रथमः प्रारम्भः कर्तव्य इत्यर्थः।

अन्यच्च राजमार्तण्डः—

“ विद्यारम्भः प्रशस्तो भवति मधुरिपौ प्राप्तबोधे शशाङ्के
शस्ते तीक्ष्णद्युतौ च त्रिदशपतिगुरावुद्गते चाथ शुक्रे।
स्वाध्याये सिंहसंस्थं खरकिरणयुतं देवपूज्यं विहाय
शुक्रादित्यज्ञवारे त्रिदशपतिगुरौ केन्द्रसंस्थे न पापे ” इति ॥

मधुरिपुर्विष्णुः। तस्मिन्प्राप्तबोधे सति। शशाङ्कश्चन्द्रस्तस्मिन्प्रशस्ते। तीक्ष्णद्युतिः सूर्यस्तस्मिंश्च प्रशस्ते सति। त्रिदशपतिगुरुर्बृहस्पतिस्तस्मिञ्शुक्रे चोद्गतेऽनस्तगे सति। खरकिरणः सूर्यस्तेन युतं देवपूज्यं बृहस्पतिं सिंहस्थं विहाय स्वाध्याये स्वाध्यायदिवसे। शुक्रादित्यबुधान्यतमवारयुते त्रिदशपतिगुरुर्बृहस्पतिस्तस्मिन्केन्द्रसंस्थे च सति विद्यारम्भः प्रशस्तो भवतीत्यर्थः। न पापे न निषिद्धस्थानस्थिते।

“ अनध्यायाः प्रदोषाश्च षष्ठी रिक्तास्तथैव च।
वर्जनीयाः प्रयत्नेन विद्यारम्भे तु सर्वदा ” इति ॥

अक्षरारम्भे वक्ष्यमाणो यो गणपतिहरिलक्ष्मीगुरुपूजादिविधिः सोऽत्रापि कार्यः।

शास्त्रविशेषे वारविशेषमाह नृसिंहः—

“ सर्ववेदांश्च शास्त्राणि चाभ्यसेत्सूर्यवासरे।
कामशास्त्रं महातन्त्रं रोगघ्नं वैष्णवं तथा ॥

अङ्गशास्त्रं भिषक्शास्त्रं चान्द्रेऽह्नि सततं लभेत् ।
क्षुद्रशास्त्रं कुलघ्नं च रणवादाग्निशस्त्रकम् ॥
अस्त्रशस्त्रप्रयोगं च कुजवारांशकोदये ।
योगशास्त्रं महातन्त्रमद्वैतं ब्रह्मनैष्ठिकम् ॥
गीतकाद्यं च नृत्यं च कामशास्त्रं च सोमजे ।
सर्ववेदान्षडङ्गानि जीववारे समारभेत् ॥
मङ्गलं नृत्यवादित्रं श्रीकामं श्रीप्रतिष्ठितम् ।
पूजाङ्गवेदवेदार्थमारभेच्छुक्रवासरे ॥
शुभं वाऽप्यशुभं वाऽपि न स्मरेच्छास्त्रमर्कजे ।
विद्यारम्भो यदि स्यात्तु मन्दवारांशकोदये ।
पुराणमपि नाशाय नराणां तु न संशयः " इति ॥

कामशास्त्रं प्रसिद्धम् । महातन्त्रं मन्त्रशास्त्रम् । रोगघ्नं भिषक्शास्त्रम् । वैष्णवं विष्णुमन्त्रपूजादिप्रतिपादकम् । महातन्त्रशब्दो गोबलीवर्दन्यायेन वैष्णवातिरिक्तपरः । तथाशब्दः सूर्यवासरान्वयार्थः ।

" कामशास्त्रं मन्त्रशास्त्रं रविवारे समभ्यसेत् " ।

इति वाक्यान्तरसंवादात् । अङ्गशास्त्रं सामुद्रिकम् । क्षुद्रशास्त्रं बौद्धादिशास्त्रम् । कुलघ्नमाभिचारिकशास्त्रम् । महातन्त्रत्वेन सूर्यवासरेऽभ्यासः प्राप्तः स एतस्मिन्नंशे न भवति । किं तु कुजवासर एतस्याभ्यासः कर्तव्य इति । रणशब्देन मल्लशास्त्रम् । अस्त्रशस्त्रप्रयोगस्याग्रे पृथगुपादानात् । वादो व्यवहारशास्त्रम् । अग्निशास्त्रमग्नियन्त्रनिर्माणादिशास्त्रम् । एतेन शिल्पं सर्वमुपलक्षणीयम् । योगशास्त्रं प्रसिद्धम् । महातन्त्रं सांख्यशास्त्रन्यायशास्त्रधर्मशास्त्रादि । अद्वैतं वेदान्तशास्त्रम् । ब्रह्मनैष्ठिकं यत्याश्रमधर्मप्रतिपादकम् । गीतकाद्यं नारदादिप्रणीतं संगीतशास्त्रम् । नृत्यं भरतप्रणीतम् । मङ्गलमलंकारादिशास्त्रम् । श्रीकामं श्रीप्रदायकम् ।

अध्ययनारम्भकाले क्षुतं न हानिकृदित्युक्तं प्रतापमार्तण्डे ज्योतिर्निबन्धे च—

" भैषज्ये वाहनारोहे आसने शयनेऽशने ।
विद्यारम्भे बीजवापे क्षुतं हानिकरं नहि " इति ॥

इत्यध्ययनारम्भकालः ।

## अथाध्यापकधर्माः ।

**तत्र यमः**—" सततं प्रातरुत्थाय कृतनित्यक्रियो गुरुः ।
प्राणायामत्रयं कुर्याच्छिष्यमध्यापयेत्ततः " इति ॥

**मनुरपि**—" अध्यापयिष्यमाणस्तु यथाकालमतन्द्रितः ।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चाऽऽरमेत् " इति ।

अध्यापयिष्यमाण इत्यत्र गुरुरिति शेषः । आरमेदित्यत्रान्तर्भावितो णिच् । तेन शिष्यमारमयेदित्यर्थो लभ्यते । अथवाऽऽरमेदिति यथाश्रुतमेव । अध्यापनान्निवर्तेतेत्यर्थः ।

**स्मृतौ**—" एकः श्रोता दक्षिणतो निषीदेद्वौ वा भूयांसस्तु यथावकाशम् " इति ।

अस्यार्थः—एकः श्रोताऽध्येता दक्षिणत उपविशेदथवा द्वौ शिष्यौ । अथ वा भूयांसो बहवः शिष्या यथावकाशमनियम उपवेशन इति ।

**स्मृत्यन्तरे**—" आसने तु समासीन आचान्तः प्राङ्मुखो गुरुः ।
प्रणवं प्राक्समुच्चार्य शिष्यमध्यापयेत्सदा " इति ॥

**तत्रैव**—" अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् ।
शिष्याणामुपदेशार्थं कुर्याद्वृत्तिं विलम्बिताम् " इति ॥

अभ्यासार्थे वेदाभ्यासार्थे द्रुतां त्वरितां वृत्तिं जानीयात् । प्रयोगार्थे कर्मार्थे मन्त्रपाठे मध्यमां वृत्तिं जानीयात् । शिष्योपदेशार्थे शिष्याध्यापनार्थे विलम्बितां वृत्तिं जानीयादित्यर्थः ।

**याज्ञवल्क्यः**—" कृतज्ञाद्रोहिमेधाविशुचिकल्पानसूयकाः ।
अध्याप्या धर्मतः साधु शक्ताप्तज्ञानवित्तदाः " इति ॥

कृतमुपकारं जानन्तीति कृतज्ञाः । अद्रोहिणो द्रोहरहिताः । मेधाविनो धारणावन्तः । शुचयः शुद्धाः । कल्पा नीरोगाः । अनसूयका गुणिनां दोषानाविष्करणशीलाः । शक्ताः शुश्रूषायाम् । आप्ता अप्रतारकाः । ज्ञानदा विद्याप्रदाः । वित्तदा अर्पणपूर्वमर्थदातारः । धर्मग्रहणमर्थोपलक्षणम् । नन्वर्थतोऽप्यध्याप्य इति न संगच्छते । भृताध्ययनभृतकाध्यापनयोः प्रायश्चित्तस्मरणात् ।

तथा च पराशरप्रायश्चित्तकाण्डे विष्णुः—

" भृतकाध्ययनं कृत्वा भृतकाध्यापिनस्तथा ।
अनुयोगप्रदानेन त्रीन्पक्षान्यावकं पिबेत् " इति ॥

मैवम् । भृतिसंकल्पपूर्वकमध्यापनं प्रतिषिद्धमितरस्य वृत्तिहेतुत्वेनाविरोधात् ।

अत एव मनुः—

" धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा ।
तत्र विद्या न वक्तव्या न्युप्तं बीजमिवोखरे " इति ॥

विहिताननुष्ठात्रे नास्तिकाय वा विद्यादाने धर्माभाव इत्यर्थः ।

यमोऽपि—" धर्मार्थौ यत्र न स्यातां न शुश्रूषाऽपि तद्विधा ।
विद्यया सह मर्तव्यं न विद्यामुखरे वपेत् " इति ॥

अनन्तरोदाहृतभृतकाध्यापनं कृत्वेतिवाक्यगतस्यानुयोगशब्दस्यार्थो मिताक्षरायाम्—" अधीयानस्य विप्रादेस्तिरस्कारोऽनुयोगः " इति ।

मनुर्ज्ञानदोऽप्यध्याप्य इत्याह—

" आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
आप्तशाखोऽर्थदः साधुस्त्वध्याप्यः स्यात्तु धर्मतः " इति ॥

असूयकादयो नाध्याप्या इत्याह विद्यैव—

" विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् " इति ।

श्रुत्यन्तरे तु—असूयकायानृजवे शठायेति पाठान्तरम् । असूयकायानृजवेऽयतायेत्यत्रायतायेति पदच्छेदः । विद्या ब्राह्मणं प्रत्याजगाम पश्चात्तं प्रार्थयामास । हे ब्राह्मण त्वं मां गोपायानधिकारसकाशाद्रक्ष । ते तव शेवधिर्निधिरहमस्मि । निधिर्यथाऽभीष्टप्रदाता तथाऽहमस्मीत्यर्थः । प्रार्थ्यमाह—असूयकायेत्यादिना । जातं निश्चयं गुरवे प्रदर्श्य तद्दूषणार्थमेवैदंपर्येण यतमानो हेत्वाभासोपन्यासशीलो दुष्टोऽसूयकः । गुरूक्तिः सर्वाऽपि यथार्थैवेति ज्ञानं विश्वासः । स नास्ति यस्य सोऽविश्वासोऽनृजुश्च । गुरूक्तिसमनन्तरमेव जातनिश्चयोऽपि यः पूर्वमेवैतज्ज्ञातचरमिति, इदानीमपि न ज्ञातमिति वा प्रदर्शयितुं यतते स शठः । अयतायेतिपाठेऽशुचय इत्यर्थः । तेन पाठद्वयमपि संग्राह्यम् । एतादृशाय पुरुषाय न मां ब्रूयाः । तथा तथा सति वीर्यवत्यभीष्टफलदात्री स्यां नान्यथेति श्रुत्यर्थः ।

नारदः—" गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थं नोपलभ्यते " इति ॥

चतुर्थं साधनम् ।

विष्णुः—" नापरीक्षितं याजयेन्नाध्यापयेन्नोपनयेद्यदि तु यः प्राह यस्तु पृच्छति तयोरन्यतरः प्रैति दोषं चाधिगच्छति " इति ।

प्रैतीत्यस्य मरणं गच्छतीत्यर्थः।

धर्मसूत्रे—" शयानश्चाध्यापनं वर्जयेन्न तस्यां शय्यायामध्यापये-द्यस्यां सह शयीत " इति।

दिवा नक्तं च शयानस्याध्यापनप्रतिषेधः। स्वस्य तु धारणार्थमधीयानस्य न दोषः। यस्यां शय्यायां भार्यया सह रात्रौ शयीत तस्यां शय्यायामासीनोऽपि नाध्यापयेदिति व्याख्यातमुज्ज्वलाकृता।

अन्यच्च तत्रैव—

" प्रवचनयुक्तो वर्षाशरदन्तं मैथुनं न चरेत् " इति।

प्रवचनमध्यापनं तेन युक्तो वर्षासु शरदि च मैथुनं वर्जयेदिति व्याख्यातं तेनैव।

तथा—" अनध्यायो निशायामन्यत्र धर्मोपदेशाच्छिष्येभ्यो मनसा वा स्वयमूर्ध्वमर्धरात्रादध्यापनं नापररात्रमुपोत्थायानध्याय इति संविशेत् " इति।

निशायामनध्यायोऽध्ययनमध्यापनं च न कुर्यात्। शिष्येभ्यस्तु धर्मोपदेशोऽनुज्ञायते। निशायामनध्यायस्य प्रतिप्रसवो मनसा वा स्वयं चिन्तयेदिति। ऊर्ध्वमर्धरात्रादध्यापनमित्ययमपि प्रतिप्रसवः। निशायाः षोडशनाडिका आरभ्याध्ययनं भवति। रात्रेस्तृतीयो भागोऽपररात्रम्। ऊर्ध्वमर्धरात्रादुपोत्थायोत्थायाध्यापयेत्। नापररात्रं संविशेन्न शयीत। यद्यपि तस्मिन्नष्टम्यादिरनध्यायः प्राप्तो भवति किं पुनः स्वाध्याये।

तथा च मनुः—

" न निशायां परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् " इति।

( *व्याख्यातं तेनैव। )

तथा—" न समावृत्ते समादेशो विद्यते " इति।

समावृत्तशिष्यं प्रत्याचार्येणसमादेशो न देय इदं त्वया न कर्तव्यमिति। यथाऽसमावृत्तदशायां दीयत उदकुम्भमाहरेति। नैमित्तिके स्वेच्छया करणे न प्रतिषेध्य इति व्याख्यातं तेनैव।

तथा—" तस्मिन्गुरोर्वृत्तिः पुत्रमिवैनमनुकाङ्क्षन्सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेन्न चैनमध्ययनविघ्नेनाऽऽत्मकार्येष्वभ्यु-

---

* धनुश्चिह्नान्तर्गतं सर्वपुस्तकेषु वर्तते, परं त्वत्रानुपयुक्तम्।

परुन्ध्यादनापत्स्वन्तेवास्यनन्तेवासी भवति विनिहितात्मा गुरावनैपुण्यमापद्यमानः " इति ।

तस्मिन्नन्तेवासिनि गुरोर्वृत्तिप्रकारो वक्ष्यते । एनं शिष्यं पुत्रमिवाभ्याहितः स्यादित्यनुकाङ्क्षन्सर्वेषु धर्मेषु किंचिदप्यनपच्छादयन्नविगूहयन्सुयुक्तः सुप्रवहितस्तत्परो भूत्वा विद्यां ग्राहयेत् । न चैनं शिष्यमध्ययनविघ्नेनाऽऽत्मप्रयोजनेषूपरुन्ध्यादनापत्सु । उपरोधोऽस्वतन्त्रीकरणम् । अनापत्स्वितिवचनादापद्यध्ययनविघातेनाप्युपरोधे न दोषः । आपद्यमान इत्यन्तर्भावितो ण्यर्थः । योऽन्तेवासी विनिहितात्मा द्वयोराचार्ययोर्विनिहितात्मा गुरावनैपुण्यमापादयति नायं प्रदेयः सम्यगुक्त इति सोऽन्तेवासी न भवति स त्याज्य इत्यर्थ इति व्याख्यातं तेनैव ।

तथा—" अपराधेषु चैनꣳ सततमुपालभेताभित्रासोपवासोदकोपस्पर्शनान्यदर्शनमिति दण्डो यथामात्रमानिवृत्तेः " इति ।

अपराधेषु कृतेष्वेनं शिष्यं सततमुपालभेरन्नि(ते)दमयुक्तं त्वया कृतमिति । अभित्रासो भयोत्पादनम् । उपवासो भोजनेऽन्नालाभः । उदकोपस्पर्शनं शीत उदके स्नापनम् । अदर्शनं यथाऽसावात्मानं न पश्यति तथा करणं गृहप्रवेशनिरोधः । सर्वत्र ण्यन्तात्प्रत्ययः । इत्येते दण्डाः शिष्यस्य यथामात्रं यथापराधं तदनुरूपं व्यस्ताः समस्ताश्चाऽऽनिवृत्तेः, यावदसौ[1] ततोऽपराधान्निवर्तते तावदेते दण्डा इति व्याख्यातं तेनैव[2] ।

शिष्यताडनप्रकारो मनुनोक्तः—

" भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा " इति ॥

अत्र सोदरविशेषणाद्भिन्नोदरे भ्रातरि ताडनं प्रतिषिद्धं भवति ।

वृद्धगौतमोऽपि—

" शिष्यशिष्टिरवधेनाशक्तौ रज्जुवेणुदलाभ्यां तनुभ्यामन्येन घ्नत्राज्ञा शास्यः " इति ।

शिष्टिः शासनम् । अवधेन प्रहारं विना । प्रहारं विना शासनासंभवे प्रहारेणैव शासनम् । तच्च रज्जुवेणुदलाभ्यां तनुभ्यां सूक्ष्माभ्यां न तु स्थूला-

---

१ ग. 'सौ ततो' । २ ग. घ. 'व । आदित्यपुराणे—" लाडने बहवो दोषास्ताडने बहवो गुणाः । लाडने जायते मूर्खस्ताडने पण्डितो भवेत् " इति । शि' ।

भ्याम्। तनुभूतरज्जुवेणुदलव्यतिरिक्तेनान्येन पाषाणखण्डादिना यः शिष्यं हन्ति प्रहरति राज्ञा स शास्य इत्यर्थः। एतच्च शिरसि न कार्यम्।

तथा च मनुः—

"पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन।
अतोऽन्यथा तु प्रहरंश्चोरस्याऽऽप्नोति किल्बिषम्" इति।

उत्तमाङ्गं शिरः।

यमः—"योऽर्थार्थी सन्द्विजोऽध्यायान्पाठयेत्तु विधानतः।
अनध्याये च तं प्राहुर्वेदविप्लविकं[1] बुधाः" इति॥

अध्याया वेदाः। अनध्याये चेत्यत्र चकारः पूर्वार्धस्थस्य द्विजोऽध्यायान्पाठयेदित्यस्यानुकर्षणार्थः।

वसिष्ठः—"यो हि विद्यामधीत्यार्थिने न संप्रददाति न स धर्मभाग्भवति" इति।

विद्यादानस्य फलमाह संवर्तः—

"विद्यादानेन महति ब्रह्मलोके महीयते" इति।

इति संक्षेपेणाध्यापकधर्माः।

## अथ संक्षेपेणाध्येतृधर्माः।

तत्र मनुः—"अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः।
कृतब्रह्माञ्जलिश्चैव लघुवासा जितेन्द्रियः" इति।

अत्र द्विराचमनमुक्तं कूर्मपुराणे—

"स्नानान्तेऽध्ययनारम्भे कासश्वासागमे तथा।
चत्वरं वा श्मशानं वा समागम्य द्विजोत्तमः।
संध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत्ततः" इति॥

ब्रह्माञ्जलिस्वरूपं तु स एवाऽऽह—

"संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः" इति।

संहत्य संहतौ कृत्वेत्यर्थः।

अत्राऽऽदावुपसंग्रहणमुक्तं धर्मसूत्रे—

"उदिते त्वादित्य आचार्येणाध्ययनाय समेत्योपसंग्रहणम्" इति।

तत्प्रकारस्तूपनयनप्रकरण उक्तः।

[1] ग. °विकवि(यि)कं।

एतच्चान्तेऽपि कर्तव्यम्—

"ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा" इति मनूक्तेः।

ब्रह्म वेदस्तस्याऽऽरम्भ इत्यर्थः।

अध्ययनारम्भ ओंकारोऽपि वक्तव्यः, "ओंकारः स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्यते" इतिधर्मसूत्रात्।

ओंकारः प्रणवः। ब्रह्म वेदः। एतदादि, ओंकारादि। प्रतिपद्यत आरभते। अन्यत्स्पष्टमिति व्याख्यातमुज्ज्वलाकृता।

भारद्वाजशिक्षायाम्—

"प्रश्नानुवाकाद्यारम्भे सविसर्गोच्चको हरिः।
न संधिः प्रणवे[1] नित्यं विरामे स्वरितो भवेत्" इति।

प्रश्नाश्चानुवाकाश्च प्रश्नानुवाकाः। तेषु य आद्यः प्रश्नोऽनुवाको वा तस्याऽऽरम्भ इत्यर्थः। प्रश्नानुवाकारम्भ इत्येतावदुच्यमाने सर्वप्रश्नानुवाकारम्भे वक्ष्यमाणो विधिः स्यात्स मा भूदित्येतदर्थमाद्यग्रहणम्। सविसर्गश्चोच्चकश्च सविसर्गोच्चकः। सविसर्गः प्रथमैकवचनान्त इत्यर्थः। उच्च एवोच्चकः। उदात्त इति यावत्। एतादृशो हरिशब्दः प्रश्नानुवाकाद्यारम्भे वक्तव्यः। प्रणवेऽग्रे सति नित्यं सदा हरिशब्दे संधिर्न कर्तव्य इत्यर्थः। विरामेऽवसानेऽध्ययनसमाप्तौ तु हरिशब्द उच्चक उदात्तो न भवति किंतु नित्यं सदा स्वरितः, अन्त्यस्वरित एव भवेत्। संध्यभावोऽप्यत्रास्त्ये[2]वेति।

प्रणवानन्तरं व्याहृतीस्तदनन्तरं सावित्रीं चानुब्रूयात्।

"प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम्।
सावित्र्याश्चानुवचनं ततो वृत्तान्तमारभेत्" इति संवर्तोक्तेः।

वृत्तान्तोऽध्ययनम्।

प्रणवात्पूर्वं प्राक्कूलदर्भासनोपवेशनं पवित्रैः पावनं प्राणायामत्रयं चाऽऽह मनुः—

"प्राक्कूलान्पर्युपासीत पवित्रैश्चैव पावितः।
प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हति" इति।

प्राक्कूलाः प्रागग्रा दर्भाः।

पवित्रपावनं गौतम आह—"प्राणोपस्पर्शनं दर्भैः" इति।

---

१ ङ. °वे त्वत्र वि°। २ ङ. °स्त्येव। प्र°।

प्राणाः शीर्षण्यानि चक्षुरादीनीन्द्रियाणि तेषामुपस्पर्शनं दर्भैर्मार्जनमिति हरदत्तः ।

अध्ययनान्तेऽप्योंकारो वाच्यः ।

" प्रणवं ब्रह्मणः कुर्यादादावन्ते च सर्वदा " इति मनूक्तेः ।

ब्रह्मणो वेदस्य ।

भूमिं स्पृष्ट्वा विरामः कार्यः । तदुक्तं स्मृत्यन्तरे—

" ओंकारं प्रथमं कृत्वा ततो ब्रह्म प्रवर्तयेत् ।
ओंकारं च पुनः कृत्वा भूमिं स्पृष्ट्वा समापयेत् " इति ।

अध्ययनमिति शेषः ।

अध्ययनसमाप्तावप्युपसंग्रहणं कर्तव्यं शिष्येण ब्रह्मारम्भावसानयोर्गुरोः पादोपसंग्रहणं कार्यमिति विष्णूक्तेः ।

(*व्यासशिक्षायाम्—

" काण्डप्रश्नानुवाकान्ते दशाष्टौ पञ्च मात्रिकाः ।
ग्रन्थानां तु समाप्तौ तत्रिगुणः काल उच्यते " इति ।

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" आरण्यकाध्ययने विशेषः । प्रवर्ग्यसूत्रे—" अध्येष्यमाणो मदन्तीरुपस्पृश्य प्रथमानुवाकेन शान्तिं कृत्वाऽधीयीताधीत्य चोत्तमेनैवं कर्मसु यत्र क्व चाशान्तिकृतं पश्येत्पुनरेव शान्तिं कृत्वाऽधीयीत न प्रवर्ग्योयोपनिष्क्रम्याप्रविश्य ग्राममन्यदधीयीत " इति । भद्रप्रपाठकाध्ययने विशेष उक्तः श्रुतौ—" प्रवर्ग्यवदादेशः । अरुणाः काण्डऋषयः । अरण्येऽधीयीरन् । भद्रं कर्णेभिरिति द्वे जपित्वा । महानाम्नीभिरुदक२ सꣳस्पर्श्य । तमाचार्यो दद्यात् । शिवा नः शंतमेत्योषधीरालभते । सुमृडीकेति भूमिम् । एवमपवर्गम् । धेनुर्दक्षिणा । कꣳसं वासश्च क्षौमम् । अन्यद्वा शुक्लम् । यथाशक्ति वा । एवꣳ स्वाध्यायधर्मेण । अरण्येऽधीयीत । तपस्वी पुण्यो भवति । तपस्वी पुण्यो भवति " इति । आदिश्यते विधीयत इत्यादेशोऽनुष्ठेयोऽर्थः । स च प्रवर्ग्यवदत्रावगन्तव्यः । प्रवर्ग्याध्ययनादौ ये धर्मास्तेऽत्राप्यनुष्ठेयाः । ते च प्रवर्ग्यधर्माः सूत्रकृता सूत्रिताः—" संवत्सरमेतद्व्रतं चरेदेतस्मिन्संवत्सरेऽधीयीत यद्येतस्मिन्संवत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेत्सवत्सरे पर्यवेते खिलेऽच्छादिर्देशेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरुपस्पृश्य " इत्यादयः । तानेतान्धर्मानाचरेत् । अरुणाख्या अत्र काण्डऋषय. । तेऽपि होतव्या इत्यर्थः । अयं होमो व्रताङ्गम् । सोऽयमारुणकेतुकाख्यो ग्रन्थोऽरण्य एवाध्येतव्यः, न तु ग्रामे । अध्ययनोपक्रमे शान्त्यर्थं भद्रं कर्णेभिरिति द्वे ऋचौ जपेत् । आपमापामित्येताभिर्महानाम्नीभिर्ऋग्भिरध्येतारं माणवकमुदकं स्पर्शयेत् । ततस्तं माणवकमाचार्यो दद्यात् । व्रताय नियुञ्जीत । शिवा न इति मन्त्रेणौषधीः स्पृशेत् । सुमृडीका सरस्वतीतिमन्त्रेण भूमिं स्पृशेत् । यथाऽध्ययनस्योपक्रमे सर्वमेतदनुष्ठितमेवमध्ययनस्यावसानेऽपि सर्वमेतदनुतिष्ठेत् । स्वाध्ययनसमाप्तावाचार्याय धेनुर्दक्षिणा देया । भोजनार्थे कांस्यपात्रं देयम् । प्रावरणार्थे क्षौमं वस्त्रं देयम् । तदशक्तावन्यत्कार्पासमयं शुक्लवस्त्रं देयम् । अत्यन्तमशक्तौ यथाशक्ति किमपि देयम् । एवमुक्तेनाध्ययनधर्मेण युक्तः सन्नरण्ये गुरुमुखाद्ग्रन्थमधीयीत । एवमधीयानो व्रतनियमानुष्ठानात्तपोयुक्तो भवति । अभ्यासोऽयं मङ्गल इति व्याख्यातं विद्यारण्यश्रीपादैः । अन्यदप्याह " इति ।

काण्डादीनां समाप्तौ विरामकालाः क्रमाद्दशादिमात्रा भवेयुः। काण्डान्ते यथा—जनद्रुस्त्रियासु। प्रश्नान्ते यथा—कल्पयाति। अनुवाकान्ते यथा—पशून्पाहि। ग्रन्थानां समाप्तौ विरामे तत्काण्डविरामस्त्रिगुणः कालस्त्रिंशन्मात्र इत्यर्थः। यथा समुद्रो बन्धुः। येभ्यश्चैनत्माहुः। ओम्, इति।

सर्वसंमतशिक्षायामपि—

"समाप्तावनुवाकस्य मात्राणां पञ्चकं स्मृतम्।
अष्टौ दशेति विज्ञेयं प्रश्ने काण्डे यथाक्रमम्॥
तन्त्राणां तु समाप्तौ तत्रिगुणः काल इष्यते।
वेदस्योपक्रमे विद्वानवसानेऽप्यतन्द्रितः॥
उच्चरेत्प्रणवं ब्रह्म रक्षायै छन्दसां स्फुटम्।
आदावनुक्ते स्रवति परस्ताच्च विशीर्यते॥
प्रारम्भकश्चतुर्मात्रो वेदस्थः स्यात्तदर्धकः।
अध्ययनानुवाकान्त्यः कर्माद्यश्च त्रिमात्रकः॥
प्रारम्भाद्याः क्रमान्नादा मात्राणुद्व्यणुमात्रिकाः।
वेदारम्भे तु यो नादो मकारो मात्रिको भवेत्" इति॥

तन्त्रं ग्रन्थः। स्रवति च्यवते। विशीर्यत इत्यत्र वेद इति शेषः।

कारीर्याद्यध्ययने व्रतविशेषः काण्डानुक्रमणिकायाम्—

"अक्षारालवणं भूमौ मुखेन पशुवद्द्विजः।
चतूरात्रं तु भुञ्जीत कारीर्यध्ययने व्रतम्॥
कारीरीव्रतवच्चापि कलाव्रतमिहोच्यते।
न तत्र पशुवद्भुञ्ज्यान्न च भूमाविति स्थितिः॥
कलाव्रतं तु यत्प्रोक्तमग्निकाण्डे तदुच्यते।
सावित्रेभ्यः प्रभृत्यूर्ध्वमौ(मो)षध्यनुवाकादिति।
समित्कलापं त्र्यहमाहरन्ति [च] मृगारेष्ट्याम्" इति॥

कारीर्यो मारुतमसि मरुतामोज इत्यादयश्चत्वारोऽनुवाकास्तदध्ययन एतद्व्रतं भवतीत्यर्थः। कारीरीव्रतवदेव कलाव्रतं कलासंज्ञकं व्रतं यदुक्तं तदग्निकाण्डेऽग्निकाण्डाध्ययने भवति। अनेन सर्वस्मिन्नप्यग्निकाण्डे प्राप्तौ नियममाह—सावित्रेभ्य इत्यनेन। सावित्राः, युञ्जानः प्रथमं मन इत्याद्या अष्टौ मन्त्रास्तेभ्य आरभ्य या जाता ओषधय इत्यनुवाकपर्यन्तानामध्ययन एतद्व्रतं भवति। मृगारेष्टिः, अग्नेर्मन्व इत्यनुवाकस्तस्याध्ययन इत्यर्थः।

वैश्वदेवमन्त्राध्ययने व्रतविशेष उक्तो धर्मसूत्रे—

" तेषामुपयोगे द्वादशाहं ब्रह्मचर्यमधःशय्या क्षारलवणमधुमांसवर्जनं चोत्तमस्यैकरात्रमुपवासः " इति।

तेषां होमानां बलीनां च ये मन्त्रास्तेषामुपयोगे नियमपूर्वके ग्रहणे द्वादशाहं ब्रह्मचर्यं मैथुनवर्जनमधःशय्या स्थण्डिलशायित्वं क्षारलवणादिवर्जनं च भवति। उपयोक्तुरेव व्रतम्।

अन्ये तु पत्न्या अपीच्छन्ति, उपयोगः प्रथमप्रयोगः। तत्र पत्न्या अपि सहाधिकार इति वदन्तः। उत्तमस्योत्तमेन वैहायसमितिवक्ष्यमाणस्य ये भूताः प्रचरन्तीत्यस्यैकरात्रमुपवासः कर्तव्य इति व्याख्यातमुज्ज्वलाकृता। अस्मिन्व्याख्यान उपयोक्तुरेव व्रतमित्यारभ्य वदन्त इति मतान्तरप्रदर्शनम्। नियमपूर्वकं ग्रहणं गुरोः सकाशाद्विद्याग्रहणं तदर्थमित्यर्थः।

भद्रप्रपाठकाध्ययने विशेषः संवत्सरमेतद्व्रतं चरेदित्यनुवाक उक्तः।

प्रवर्ग्यप्रपाठकाध्ययने विशेषः प्रवर्ग्यसूत्रे—

" अवान्तरदीक्षां व्याख्यास्याम उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽपराह्णे केशश्मश्रूणि वापयित्वा प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य चतस्र औदुम्बरीः समिध आर्द्रा अप्रच्छिन्नाग्राः[1] प्रादेशमात्रीर्घृतान्वक्ता[2] अभ्याधापयति पृथिवी समिदित्येतैः प्रतिमन्त्रमग्ने व्रतपते व्रतं चरिष्यामीत्येतैर्यथारूपं देवता उपतिष्ठतेऽथैनꣳ सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति प्रथमोत्तमयोर्वा ततः संमील्य वाचं यच्छत्यथास्याहतेन वाससा प्रदक्षिणꣳ समुखꣳ शिरो वेष्टयित्वाऽस्तमिते ग्रामं प्रपादयति वाग्यत एताꣳ रात्रिं तिष्ठत्यास्ते वा श्वोभूते प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य वयः सुपर्णा इति मुखं विवेष्ट्य य उदगात्तच्चक्षुरित्यादित्यमुपतिष्ठतेऽथैनꣳ षट्तयमभिविदर्शयति सप्ततयमित्येकेऽग्निमादित्यमुदकुम्भमश्मानꣳ हिरण्यं वत्सं महानग्न्याꣳ सप्तमीं त्रीण्यादितोऽभिविदर्श्योत्तराण्यभिविदर्शयत्यथास्य ब्रह्मचर्यमधि[3] नित्यं न नक्तं भुञ्जीत यदि भुञ्जीतावज्वलितं भुञ्जीत न मृन्मयं प्रतिधयीत न स्त्रिया न शूद्रेण संभाषेत न च्छत्रं नोपानहौ धारयेन्न चक्रीवदारोहेन्न समाजमीक्षेत नापपात्रं न हर्म्याणि न शवं न स्नायान्नाञ्जीत नाभ्यञ्जीत

१ ग. अच्छि°। २ ग. °ताभ्यक्ता। ३ घ. °मभि नि°।

॥ १९ ॥ अष्टमीं पर्वाणि चोपवसेन्न च संविशेदेतस्मिन्नेव संवत्सरेऽधीयीत पुनर्यावदध्ययनमेतद्व्रतं चरेत्संवत्सरे पर्यवेते प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य द्यौः समिदित्यावृत्तैः समिधोऽभ्याधायाऽऽदित्य व्रतपत इत्यावृत्तैर्देवता उपतिष्ठते गुरवे वरं दत्त्वा केशश्मश्रूणि वापयतेऽथास्य स्वाध्यायमधि नित्यं नानुत्सृष्टाध्यायोऽधीयीत न नक्तं नाभिदोषं ब्रह्मचर्यमापद्य न दतः प्रक्षाल्य न मा॰सं भक्षयित्वा न केशान्प्रविध्य न केशश्मश्रूणि वापयित्वा न स्नातो नानुलिप्तो न स्रग्वी नाक्तो नाभ्यक्तो नाऽऽर्द्रो नाऽऽर्द्रे नानपवृष्टे नाभ्रे न च्छायायां न पर्यावृत्त आदित्ये न हरितयवान्प्रेक्षमाणो न ग्राम्यस्य पशोरन्ते नाऽऽरण्यस्य नापामन्ते नाशृतमुत्पतितं न लोहितं दृष्ट्वा नापपात्रं न हर्म्याणि न शवं न शरीराणि प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य दर्भेष्वासीनो दर्भान्धारयमाणः पराचीनमधीयीत वरं वा दत्त्वौपासनेऽध्येष्यमाणो नान्या वाचो वदेदध्येष्यमाणो मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वाऽधीयीताधीत्य चोत्तमेनैवं कर्मसु यत्र क्व चाशान्तिकृतं पश्येत्पुनरेव शान्तिं कृत्वाऽधीयीत न प्रवर्ग्यायोपनिष्क्रम्याप्रविश्य ग्राममन्यदधीयीतान्यदधीयीत " इति ।

केशशब्दस्यादन्तत्वात्पूर्वनिपातेऽपि केशपूर्वकवपनस्याऽऽसुरत्वेन श्रुतौ निन्दितत्वान्न तथा वपनं किं तु श्मश्रुपूर्वकमेव वपनम् । खिल ओवृतः । अच्छदिर्दर्शो यत्र गृहच्छर्दींषि न दृश्यन्त एतादृशे देश इत्यर्थः । संपरिस्तीर्येत्यत्रत्यसंशब्दाद्बहुलदर्भैः परिस्तरणं न तु दर्भसंख्यानियमः । यथारूपं यथालिङ्गम् । अथशब्दः कालाव्यवधानार्थः । प्रभृतीः, आदीः । अभिव्याहारयति पाठयति । अशक्तौ प्रथमोत्तमयोरनुवाकयोरादी वा पाठयति । ततः, अभिव्याहरणोत्तरम् । संमील्येत्यत्र नेत्रे इति शेषः । अथशब्दः कालाव्यवधानार्थः । अहृतम्—" ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् " इतिलक्षणलक्षितम् । परिभाषयैव प्रादक्षिण्ये सिद्धे पुनर्वचनं शिरोवेष्टनस्य लोकरीतिसिद्धत्वेन परिभाषाया अप्रवृत्तिः, तथा चाप्रादक्षिण्यमपि कदाचिदित्याशङ्कां वारयितुमनुकूलवाची वा प्रदक्षिणशब्दः । प्रपादयति प्रापयति । एतां रात्रिम् । यस्मिन्दिन एतदन्तं कर्म कृतं तदीयां रात्रिमित्यर्थः । " कालाध्वनोरत्यन्तसं-

---

१ क. ॰ब्दस्य पूर्वे॰ । २ क. ग. आवृत्तः । ३ ख. घ. ॰हतं धौतम् । परि॰ । ४ ग. एवैत॰ ।

योगे" इति सूत्रेणात्यन्तसंयोगे द्वितीया, तेन कृत्स्नां रात्रिं तिष्ठेदित्यर्थः सिद्धो भवति। अशक्तावास्ते। अत्रापि वाग्यत एतां रात्रिमित्यनुवर्तते। मुखं विवेष्टयेति वचनान्मुखस्यैव विवेष्टनं न तु शिरसोऽपि। षट्तयमित्यत्र संख्याया अवयवे तयप्। एवं सप्ततयमित्यत्रापि। महानग्न्या वत्सतरी कुमारी वा। वत्सं महानग्न्यां चेत्येतावतैव सिद्धे महानग्न्याः सप्तमीमिति वचनं षट्तयपक्षे महानग्न्याया एवाभाव इति प्रदर्शनार्थम्। आदितः क्रमेण। अभ्यभिमुखं संमुखमिति यावत्। एनमिति शेषः। अर्थादेव क्रमे सिद्ध इदं वचनमश्मादिषूत्तरेषु पदार्थेषु क्रमनियमो नेति प्रदर्शनार्थम्। अष्टाङ्गमैथुनत्यागो ब्रह्मचर्यं तदाचरन्न नक्तं भुञ्जीतेत्यादिधर्माननुतिष्ठेत्। नित्यग्रहणाद्यदा कदाचिदशक्तिवशेन भोजने न दोष इति गम्यते। नित्यं नक्तं यदि भुञ्जीत तदा दर्भोल्मुकैरुपर्यवज्वाल्य भुञ्जीत। न मृन्मयं प्रतिधयीत मृन्मयपात्रेण जलपानं न कुर्यात्। न स्त्रिया न शूद्रेण संभाषेत। न स्त्रिया शूद्रेण च संभाषेतेत्येकेन नञैव सिद्धौ द्वितीयनञो वचनादेवं ज्ञायतेऽन्यत्र स्त्रिया सह कदाचित्संभाषणे नातीव दोषः। अत्र तु कदाचिदपि स्त्रियाऽपि सह भाषणं नैव कार्यमिति। चक्रीवद्गर्दभादि नाऽऽरोहेत्। सामान्यनिषेधादेवात्रापि निषेधे सिद्धेऽत्र वचनं कर्माङ्गत्वार्थं, तेन भ्रान्त्यादिना गर्दभाद्यारोहणे गर्दभाद्यारोहणनिमित्तकप्रायश्चित्तेन सह कर्माङ्गलोपप्रायश्चित्तमप्यत्र भवति। एवमन्यत्रापि। समाजो जनसमूहः। अपपात्राश्चण्डालाः। तानपि नेक्षेत। हर्म्याणि गृहाणि नेक्षेत। न च शवमीक्षेत। न स्नायादित्यनेन निमज्जनरूपस्नाननिषेधः। पर्वाणि पौर्णमास्यमावास्यादीनि। संवेशनं निद्रा। एतस्मिन्नेव वत्सरेऽधीयीत। यस्मिन्संवत्सर एतद्व्रतमारब्धं तस्मिन्नेव संवत्सरेऽनुवाकादीनामध्ययनं कर्तव्यमित्यर्थः। एतद्व्रतं यावदध्ययनं तावत्पर्यन्तं कर्तव्यम्। पुनःशब्दादेतस्मिन्नेव वत्सरे कालान्तरे पुनरेतदध्ययने यावदध्ययनं व्रतं कर्तव्यम्। अध्ययने कृत्स्ने कृते मध्ये विरामे न व्रतम्। किं तु, अध्ययनसमानकालिकमेव व्रतमिति। संवत्सरे पर्यवेते गते। आवृत्तैर्विपरीतैः। स्वाध्यायमधीत्यत्र नित्यशब्दोऽन्वेति। स्वाध्याये नित्यं सर्वदा ग्रहणधारणाध्ययनयोर्वक्ष्यमाणा धर्मा भवन्ति। नानुत्सृष्टाध्यायोऽधीयीतेति। उत्सर्जनोत्तरमेवाध्ययनमेतस्य कर्तव्यं न तु तत्पूर्वमुपाकर्मणि कृतेऽपीत्यर्थः। उत्सर्जनोत्तरं यावदुपाकर्म तावदनध्यायसत्त्वेऽपि वचनादध्ययनम्। अथवा नोत्सृष्टोऽनुत्सृष्टः। अध्यायो वेदः। अनुत्सृष्ट उत्सर्जनविधिनाऽनुत्सृष्टोऽध्याय एतद्व्यतिरिक्तो वेदो येन सोऽनुत्सृष्टाध्यायः। एतादृशः सन्नाधीयीतेति। एतद्व्यतिरिक्तवेदभागस्योत्सर्जने जात एवैतदध्ययनं कर्तव्यमिति। नक्तं रात्रौ। अभि-

दोषं, दोषा रात्रिस्तस्या अभि पूर्वतने घटिकाद्वयात्मके दिनान्तात्मके काले। प्रविध्य कङ्कतादिना प्रसाध्य। नानुलिप्तो गन्धादिना। न स्रग्वी मालावान्। नाऽऽर्द्रे नानपवृष्ट इत्येतद्द्वयं देशविशेषणम्। अभ्र इति सति सप्तमी। अभ्रे सति नाधीयीतेत्यर्थः। न च्छायायां नाऽऽदित्यानभिसंबद्धे देशे। पर्यावृत्तेऽह्नो मध्यभागात्। हरितग्रहणादितरयवप्रेक्षणे निषेधो न। न ग्राम्यस्य पशोरन्ते नारण्यस्येत्यत्र पशोरन्त इत्यनुवर्तते। उभयत्राधीयीतेति शेषः। द्वितीयनञ्वचनप्रयोजनं न शूद्रेण संभाषेतेत्यत्र यथोक्तं तथाऽत्रापि द्रष्टव्यम्। नाश्रुतमित्यत्र मांसमिति शेषः। लोहितं रक्तम्। उत्पतितमिति लोहितविशेषणम्। दृष्ट्वेत्युत्तरत्राप्यनुवर्तते। अधीयीतेति शेषः। शरीरशब्देनास्थि। एतद्दर्शनेऽप्यनध्यायः। एतेषां निषेधानां जनरहिते महारण्य एतस्याध्ययनं कर्तव्यमिति फलम्। पराचीनमग्रिममध्ययनप्रदेशम्। प्रथमानुवाकप्रभृति क्रमेण पूर्वत्र संवत्सरे पर्यवेत इत्युपक्रमाद्द्वितीये संवत्सरे प्रथमसंवत्सराधीतानुवाकादीनामुत्तराङ्गभूतमग्न्युपसमाधानादिके श्मश्रुवापनान्ते कृते नानुत्सृष्टाध्यायोऽधीयीतेत्यादि निषेधान्परिपालयन्नग्रिमप्रदेशाध्ययनार्थमग्निमुपसमाधाय संपरिस्तीर्य दर्भेष्वासीनो दर्भान्धारयमाणोऽग्निसमीप एवाग्रिमं प्रदेशमधीयीतेत्यर्थः। दर्भेष्वासीनो दर्भान्धारयमाण इत्यत्र विशेषवचनादत्रैतावदेव, नान्ये केशश्मश्रुवापनान्ताः प्रागुक्ता धर्माः। कल्पान्तरमाह। वरं वा दत्त्वौपासने वरं दत्त्वा वौपासने, औपासनसमीपेऽधीयीत। एतच्च वरदानमौपासनसमीपाध्ययनविषये। *वाशब्दस्य वरदानेऽन्वये वरदानस्य वैकल्पिकत्वम्। औपासनपदार्थेऽन्वयो वा वाशब्दस्य। अयं च पक्षो दूरे गन्तुमशक्तस्य। तच्चौपासनं गुरोरेव स्वस्य तदभावात्। अथवाऽत्रौपासनशब्दो ज्ञापनार्थः। उपनयनमारभ्याप्यग्निधारणमस्तीति।

उक्तं च बौधायनेन—

" उपनयनादिरग्निस्तमौपासनमित्याचक्षते पाणिग्रहणादिरित्येके " इति।

उपनयनमारभ्य धारणे विवाहहोमस्तत्रैव। अग्नावौपासनत्वसिद्धिद्वारेत्येतस्य विवाहहोमसंकल्पवाक्ये लोपः। उपाकर्मोत्सर्जने अपि तत्रैव। औपासनशब्दो गृहलक्षको वा। अध्येष्यमाणोऽध्ययनं करिष्यमाणोऽन्या वाचोऽध्ययनातिरिक्ता वाचो यावदध्ययनं न वदेत्। अध्येष्यमाणो मदन्तीस्तप्ता अप उपस्पृश्य नमो वाच इति प्रथमेनानुवाकेन शान्तिं कृत्वाऽधीयीत। अधीत्य

* एतदाद्यशक्तस्येत्यन्तं क. पुस्तक एवाधिकम्।

चोत्तमेन शं नो वात इत्यनुवाकेन शान्तिं कुर्यात्। प्रपाठकमध्ये विरामेऽप्युत्तमा शान्तिः। उपक्रमे प्रथमा। एवं शान्तिकरणमेतत्प्रपाठकमन्त्रकरणककर्मस्वपि। नन्वेवं कर्मस्विति वचनं प्रवर्ग्यप्रपाठकोक्तमन्त्रसाध्यकर्मसु प्रवर्ग्यसंभरणप्रचारोद्वासनधर्मेष्टकाकुलायिन्युपधानादिषु शान्तिप्रापणार्थम्। न चैवं प्रवर्ग्यप्रचारे पुनर्विधानं व्यर्थमिति चेत्सत्यम्। संभरणोद्वासनादिषु शान्तिकरणस्य कृताकृतत्वद्योतनार्थत्वेन वैयर्थ्याभावात्। यत्र क्व च यत्र कुत्रचिदशान्तिकृतं शान्तिरहितं पश्येत्, शान्तिविरहितं पठितं कर्म वा कृतमिति जानीयात्। तत्र शान्तिं कृत्वा पुनरधीयीत कर्म च कुर्यात्[1]। यद्यशान्तिकृतं पश्येदित्येतावतैव सिद्धे यत्र क्व चेति वचनं परिभाषार्थम्। तेन सर्वारण्यकप्रपाठकाध्ययनविषयेऽपि पुनरध्ययनं तच्छान्तिपूर्वकं सिद्धं भवति। न प्रवर्ग्याय प्रवर्ग्यप्रपाठकाध्ययनार्थं ग्रामाद्बहिरुपनिष्क्रम्याप्रविश्य ग्राममन्यदध्ययनान्तरं नाधीयीतेत्यर्थः। अन्यदधीयीतेत्यस्य द्विरुक्तिः प्रपाठकसमाप्तिद्योतनार्था।

इति प्रपाठकाध्ययने विशेषः।

विष्णुः—)"नापररात्रमधीत्य शयीत" इति।

स्मृत्यन्तरे—"प्रदोषपश्चिमौ यामौ वेदाभ्यासेन योजयेत्।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते" इति॥

अत्र प्रदोषशब्देनाऽऽद्ययामो ग्राह्यः। पश्चिमशब्देनान्त्यः। उत्तरत्र यामद्वयग्रहणात्।

गुर्वनुज्ञयैवाध्येयमन्यथा दोष इत्याह व्यासः—

"ऋचमर्धर्चमथवा पादं वा पदमेव वा।
गृह्णाति योऽननुज्ञातः परस्मात्पठतो द्विजः॥
स ब्रह्मस्तेयकृद्विप्रो नरकं प्रतिपद्यते" इति॥

मनुः—"नाविस्पष्टमधीयीत न शूद्रजनसंनिधौ।
न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्" इति॥

वेदाध्ययनकाले रजस्वलासंभाषणमवश्यं प्राप्तं भवति चेत्तदा किं कर्तव्यमित्याकाङ्क्षायां धर्मसूत्रे—

"ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन्संभाषितुं ब्राह्मणेन संभाष्य तया संभाषेत संभाष्य तु ब्राह्मणेनैव संभाष्याधीयीत" इति।

---

१ ग. घ. ङ. °त यद्य°। २ क. ख. °त्। न प्र°।

यो वेदमध्येष्यमाणो मलवद्वाससा रजस्वलया सह संभाषितुमिच्छति स पूर्वं ब्राह्मणेन संभाषणं कृत्वा पश्चात्तया संभाषेत, संभाष्य पुनर्ब्राह्मणेनैव संभाष्याधीयीतेति व्याख्यातमुज्ज्वलाकृता ।

व्यासः—"मेखलाजिनदण्डानां धारणैर्ब्रह्मचारिभिः ।
वेदः कृत्स्नोऽधिगन्तव्यः सर्वज्ञानाद्विजातिभिः" इति[1] ॥

सर्वज्ञानादिति चतुर्थ्यर्थे पञ्चमी । सर्वज्ञानार्थमित्यर्थः ।

विद्याधिगमोपायमाह नारदः—

"अहेरिवेक्षणाद्भीतः सौहित्यान्नरकादिव ।
राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति" इति ॥

सौहित्यं पापम् ।

विघ्नहेतूनप्याह स एव—

"द्यूतं पुस्तकशुश्रूषा नाटकासक्तिरेव च ।
स्त्रियस्तन्द्रा च निद्रा च विद्याविघ्नकराणि षट्" इति ॥

द्यूतमक्षक्रीडादि । पुस्तकशुश्रूषा पुस्तकस्य पुराणादेः शुश्रूषा श्रोतुमिच्छा पुस्तकसेवनमात्रं वा । नाटकासक्तिर्नाटकशास्त्रे लोलुपता । स्त्रियः सर्वदा स्त्रीषु रतिः । तन्द्राऽऽलस्यम् । निद्रा प्रसिद्धा । एवमन्यान्यपि लोकतो विद्यानाशकराण्यवगन्तव्यानि ।

स्मृत्यन्तरे—"पुस्तकप्रत्ययाधीतं नाधीतं गुरुसंनिधौ ।
राजते न सभामध्ये जारगर्भ इव स्त्रियाः" इति ॥

(*अन्यच्च—"यत्कीटैः पांशुभिः श्लक्ष्णैर्वल्मीकः क्रियते महान् ।
न तत्र बलसामर्थ्यमुद्योगस्तत्र कारणम् ॥
सहस्रगुणिता विद्या शतशः परिकीर्तिता ।
आगमिष्यति जिह्वाग्रे स्थलं निम्नमिवोदकम् ॥
हयानामिव जात्यानामर्धरात्रार्धशायिनाम् ।
न हि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥
नान्नपानविलम्बी स्यान्न च नारीनिबन्धनः ।
सुदूरमपि विद्यार्थी व्रजेद्गरुडहंसवत्" इति ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थो ङ. पुस्तके नास्ति ।

---

1 ङ. 'ति । वि' ।

शुश्रूषया रहिताया विद्याया निष्फलत्वमुक्तं नारदीयशिक्षायाम्—

" शुश्रूषाविरहिता विद्या यद्यपि मेधागुणैः समुपयाति ।
वन्ध्येव यौवनवती न तस्य विद्या सफला भवति " इति ॥ )

अध्ययनकर्त्रा शूद्रान्नं वर्जनीयमित्याह पराशरः—

" शूद्रान्नरसपुष्टस्य ह्यधीयानस्य नित्यशः ।
जपतो जुह्वतो वाऽपि गतिरूर्ध्वा न विद्यते " इति ॥

ऊर्ध्वा गतिः स्वर्गगतिः।

आपत्कालेऽब्राह्मणादप्यध्येतव्यमित्याह मनुः—

" अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्यादिशुश्रूषा यावदध्ययनं गुरोः " इति ॥

( *अब्राह्मणात्क्षत्रियाद्वैश्याद्वा । अनुव्रज्या शुश्रूषेत्यनुगमनमात्रं कार्यं न पादप्रक्षालनादि । इयं चाऽऽपद्ब्राह्मणाध्यापकाभावरूपाऽध्येतुः ।

गौतमोऽपि—

" आपत्कल्पोऽब्राह्मणाद्ब्राह्मणस्य विद्योपयोगोऽनुगमनं शुश्रूषाऽऽ समाप्तेः " इति ।

अब्राह्मणादा समाप्तेरित्युभयत्र पदच्छेदो द्रष्टव्यः ।

गरुडपुराणे—" आहुः समस्तविद्यानां वेदविद्यामनुत्तमाम् ।
अतस्तद्दातुरस्त्येव लाभः स्वर्गापवर्गयोः " इति ॥

महाभारते—" यो ब्रूयाच्चापि शिष्येभ्यो धर्म्यां ब्राह्मीं सरस्वतीम् ।
पृथिवीगोप्रदानाभ्यां स तुल्यफलमश्नुते " इति । )

एतदध्ययनमुपाकर्म कृत्वा कर्तव्यमित्याह कार्ष्णाजिनिः—

" नभोमासे नभस्ये वा समुपाकृत्य सूत्रतः ।
द्विजश्छन्दांस्यधीयीत मासान्पञ्चार्धसंमितान् " इति ॥

सूत्रतः सूत्रोक्तप्रकारेण ।

वेदाध्ययनं कर्तुमशक्तस्यैकदेशाध्ययनमप्यनुजानाति पराशरः—

" अग्निकार्यात्परिभ्रष्टाः संध्योपासनवर्जिताः ।
वेदांश्चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥
तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः ।
अध्येतव्योऽप्येकदेशो यदि सर्वो न शक्यते " इति ।

---

* धनुश्चिह्नान्तर्गतं ड. पुस्तके नास्ति ।

वृषलभीतेन वृषलत्वभीतेन ।

लघुव्यासः—" ऋक्पादमप्यधीयीत मार्गेणोक्तेन धर्मवित् ।
न त्वेव चतुरो वेदानन्यायेन कथं चन " इति ॥

*वेदविस्मरणे दोष उक्तो वराहपुराणे—

" जातायामपि विद्यायां विस्मरेत्पठितां श्रुतिम् ।
अनधीत्या प्रमादेन मृतो गर्दभतां व्रजेत् ॥
यावद्वेदोत्थवर्णानां पठितानां च विस्मृतिः ।
तावद्वर्षाणि भुङ्क्ते स खरयोनिं द्विजोत्तमः " इति ॥

जातायां वेदविद्यायामपि । अनधीत्याऽनध्ययनेन हेतुना यदि पठितामपि श्रुतिं विस्मरेत्तदा स्वाचारसंपन्नोऽपि द्विजोत्तमः श्रुत्यक्षरैसंख्यवर्षपर्यन्तं खरयोनिं प्राप्नोतीत्यर्थः ।

इति संक्षेपेणाध्येतृधर्माः ।

अध्ययनधर्मास्तु पाणिनीयशिक्षाप्रातिशाख्यभारद्वाजशिक्षादिषु द्रष्टव्याः ।

---

## अथ प्रसङ्गान्मन्दबुद्धित्वहरं विधानम् ।

तत्र ऋग्विधानम्—

" ओष्ठापिधानामन्त्रं च जपेद्दशदिनं प्रति ।
वाग्देवी मातृका तस्य जिह्वाग्रे वर्तते सदा ॥
ओष्ठामन्त्रेण जुहुयाद्विद्याश्रीस्तत्कुले स्थिरा ।
त्रिमधुं चाष्टसाहस्रं प्रतिवर्षं तु फाल्गुने " इति ॥

त्रिमधुमित्यत्र पुंस्त्वमार्षम् । आज्यं क्षीरं मधु चेति मधुत्रयं, तच्च मिश्रितमेव न तु पृथक् । एतद्द्रव्यत्रयं तोलनेन समप्रमाणं कृत्वैव ग्राह्यम् । संभव आज्यक्षीरे गोरेव मुख्ये । अष्टसाहस्रमष्टसंख्यैसाहस्रमष्टाधिकसाहस्रं वा । प्रतिवर्षमित्यत्र वर्षसंख्याया अनुक्तत्वाद्यावच्छक्यम् । अस्य मन्त्रस्य ब्रह्मा, ऋषिः । अनुष्टुप्छन्दः । नकुली सरस्वती देवता ।

ध्यानम्—" विकासभाजि हृत्पद्मे स्थितामुल्लासदायिनीम् ।
परवाक्स्तम्भिनीं नित्यां स्मरामि नकुलीं सदा " इति ।

---

* एतत्प्रभृति प्राप्नोतीत्यर्थ इत्यन्तं ड. पुस्तके नास्ति ।

---

१ ख. घ. °त्तमोऽक्ष° । २ ग. °रव° । ३ ख. °ख्यया सा° ।

मन्त्रस्तु—" ॐ ओष्ठापिधाना नकुली दन्तैः परिवृता पविः।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत् " इति।

अयमेव मन्त्रो बालामन्त्रेण संयुक्तः कार्यः। तत्राऽऽदावेकं बीजम्, पविरित्यनन्तरं द्वितीयम्, अन्ते तृतीयम्।

धारणाभिवृद्ध्यर्थं नमो ब्रह्मण इत्यस्य मन्त्रस्य न्यासपूर्वकं त्रिपुरासिद्धान्ते श्रुतधरीमाहात्म्ये पुरश्चरणमुक्तम्। अस्य मन्त्रस्यानिराकरण ऋषिः। बृहती छन्दः। धारणासरस्वती देवता।

" सुरासुरैः सेवितपादपङ्कजा करे विराजत्कमनीयपुस्तका।
विरञ्चिपत्नी कमलासनस्थिता सरस्वती नृत्यतु वाचि मे सदा " इति ध्यानम्।

अयमपि मन्त्रो बालामन्त्रेण संयुक्तो जप्तव्यः ( जपितव्यः ), शीघ्रं धारणाप्रदो भवति। तत्राऽऽद्यप्रणवोत्तरं प्रथमं बीजम्, भूयासमित्यनन्तरं द्वितीयम्, अन्त्यप्रणवोत्तरं तृतीयम्। अनेनाभिमन्त्रितं जलं प्राश्नीयात्सारस्वतप्राप्तिः।

गीर्वाणेन्द्रैस्तु यश्छन्दसामृषभ इति शीक्षाप्रपाठकस्थमन्त्रस्य लक्षं पुरश्चरणमुक्तम्। कलौ चतुर्गुणं प्रोक्तमितिवचनाच्चतुर्गुणं पुरश्चरणम्। तच्च पञ्चात्मकं त्र्यात्मकं द्व्यात्मकं वेति तान्त्रिकपरिभाषासिद्धम्। विना विशेषवचनं काम्यादिप्रयोगेऽप्येतादृशमेव। यादृशी स्यात्पुरश्चर्या विनियोगोऽपि तादृश इति स्थलविशेषे तन्त्रान्तरे दर्शनात्। प्रकृते विशेषवचनाभावात्पुरश्चरणजपसंख्यैवं। अत्र यन्त्रपूजान्यासादिकस्याऽऽकाङ्क्षितत्वेन स्पष्टतया वक्तव्यत्वेऽपि " मन्त्रशास्त्रं गोपनीयम् " इति कुब्जिकातन्त्रवचनादनवस्थाभयाच्चानुक्तिरिति ज्ञेयम्।

इति मन्दबुद्धित्वहरं विधानम्।

## अथ संक्षेपेणानध्यायाः।

तत्रोशना—" अयने विषुवे चैव शयने बोधने तथा।
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु " इति॥

अयने दक्षिणायनमुत्तरायणं च यस्मिन्दिने तत्रेत्यर्थः। जात्यभिप्रायं वैकवचनम्। एवं विषुव इत्यत्रापि। विषुवे तुलामेषौ। शयनं हरेः शयनदिनमाषाढशुक्लैकादशी। बोधनं हरेः प्रबोधनदिनं कार्तिकशुक्लैकादशी।

१ घ. °व्यः। अने°।

अयनविषुवप्रयुक्तानध्याये विशेषः स्मृत्यन्तरे—

" निशाद्वयं दिवा रात्रौ संक्रमे वासरद्वयम् ।
अनध्यायं प्रकुर्वीत अयने विषुवे तथा " इति ॥

दिवाऽयनविषुवसंक्रान्तौ रात्रिद्वयम् । रात्रावयनविषुवसंक्रान्तौ दिनद्वयमनध्याय इत्यर्थः ।

मन्वादयः संगृहीता हेमाद्रौ—

" तिथ्यग्नी न तिथिस्तिथ्याशे कृष्णेभोऽनलो ग्रहः ।
तिथ्यर्कौ न शिवोऽश्वोऽमातिथी मन्वादयो मधोः " इति ॥

तिथ्यग्नी । न । तिथिः । तिथ्याशे । कृष्णेभः । अनलः । ग्रहः । तिथ्यर्कौ । न । शिवः । अश्वः । अमातिथी । मन्वादयः । मधोः । इति पदानि ।

तिथिः पूर्णिमा । अग्निस्तृतीया । मधोश्चैत्रादारभ्य क्रमः । चैत्रस्य पूर्णिमाशुक्लतृतीये इत्यर्थः । न, वैशाखे मन्वादिर्नास्ति । ज्येष्ठस्य तिथिः पूर्णिमा । आषाढस्य तिथ्याशे पूर्णिमाशुक्लदशम्यौ । श्रावणस्य कृष्णेभः कृष्णपक्षाष्टमी । भाद्रशुक्लपक्षस्यानलस्तृतीया । आश्विनशुक्लपक्षस्य ग्रहो नवमी । कार्तिकस्य तिथ्यर्कौ पूर्णिमाशुक्लद्वादश्यौ । न, मार्गशीर्षे मन्वादिर्नास्ति । पौषशुक्लस्य शिव एकादशी । माघशुक्लपक्षस्याश्वः सप्तमी । फाल्गुनस्यामातिथी दर्शपूर्णिमे । एता मधोश्चैत्रादारभ्य क्रमान्मन्वादयो ज्ञेया इत्यर्थः ।

पद्मपुराणेऽपि—

" अश्वयुक्शुक्लनवमी कार्तिकी द्वादशी सिता ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ।
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा आषाढस्य च पूर्णिमा ।
कार्तिकी फाल्गुनी चैत्री ज्ये(ज्यै)ष्ठी पञ्चदशी तथा ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः " इति ॥

अश्वयुगाश्विनः । भाद्रपदस्य चेत्यत्र चकारः सितेत्यस्यानुवृत्त्यर्थः । तथाशब्दो भाद्रपदस्येत्यत्रापि तृतीयान्वयार्थः । आषाढस्यापीत्यत्रापिशब्दः सितेत्यस्यानुवृत्त्यर्थः । अयमपिशब्दो माघमासस्येत्यत्रापि योज्यः । तेनात्रापि सितेत्यस्यानुषङ्गः सिध्यति ।

युगादयो विष्णुपुराणे—

" वैशाखमासस्य सिता तृतीया नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे " इति ।

नभस्यो भाद्रपदः ।

मनुः, अनध्यायं प्रकृत्य—

" अमावास्याचतुर्दश्योः पौर्णमास्यष्टकासु च " इति ।

हारीतः—" प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः ।
श्वोऽनध्यायेऽद्य शर्वर्यां नाधीयीत कदाचन " इति ।

प्रतिपत्स्वित्यादिपूर्वार्धं प्रतिपदादिष्वनध्याय इतिभिन्नार्थविधायकं न तु श्वोऽनध्याय इत्युत्तरार्धेनैकार्थकम् । अन्यथा सूर्योदयोत्तरं किंचित्प्रतिपदनन्तरं द्वितीया । एतादृशे विषये तत्पूर्वरात्रावनध्याये प्राप्त एतन्निषेधस्य वैयर्थ्यापत्तेः । श्वोऽनध्याय इति युगादिमन्वादिप्रयुक्तानध्यायपरम् । तथा च श्व एतादृशानध्याये पूर्वरात्रौ नाधीयीतेत्यर्थः । श्व इत्युदयानन्तरमनध्यायतिथिसत्त्वे । तदनन्तरं स्वाध्यायतिथिसत्त्वे तु न पूर्वशर्वर्यामनध्याय इति शिष्टाः ।

यमः[1]—" अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी ।
हन्ति पञ्चदशी मेधां तस्मादेता विवर्जयेत् " इति ।

स्वाध्याय इति शेषः ।

आर्षे रामायणे रामं प्रति हनूमद्वाक्यम्—

" सा स्वभावेन तन्वङ्गि त्वद्वियोगाद्विकर्शिता ।
प्रतिपत्पाठशीलस्य विद्येव तनुतां गता " इति ।

स्मृतिरत्नावल्याम्—

" चतुर्दश्यां यदा पर्व प्रागस्ताद्दृश्यते रवेः ।
अनध्यायं प्रकुर्वीत त्रयोदश्यां तु धर्मवित् ॥
अभितश्चेदनध्यायस्तत्राप्येके प्रकुर्वते ।
संदेहेऽपि त्वनध्यायं मन्वते हि द्विजोत्तमाः " इति ।

उक्ततिथीनामहोरात्रानध्यायनियामकपरिमाणं स्मृत्यर्थसारे—

" उदयेऽस्तमये वाऽपि मुहूर्तत्रयगामि यत् ।
तद्दिनं तदहोरात्रमनध्यायं विदो विदुः ॥

---

१ क. ख. ग. घ. °र्थः । यमः ।

केचिदाहुः क्वचिद्दश यावत्तु दिननाडिकाः ।
तावदेव त्वनध्यायो न तस्मिंश्च दिनान्तरे " इति ॥

दिनं चान्द्रं तिथिरिति यावत् । यद्यस्मिन्दिन उदयेऽस्तमये वा मुहुर्तत्रयगाम्यनध्यायादिनं तिथिर्भवेत्तत्तस्मिन्दिने तदहोरात्रमनध्यायमनध्यायरूपमेव विदो बुधा विदुरित्यर्थः । ( *दिनान्तरे तिथ्यन्तरे ।

" प्रतिपल्लेशमात्रेण कलामात्रेण चाष्टमी ।
दिनं दूषयते सर्वं सुरा गव्यघटं यथा " ॥

इति वचनं तत्प्राच्याचारमूलकं ज्ञेयम् ।

कालादर्शे स्मृतिः—

" चातुर्मास्यद्वितीयासु वेदाध्यायं विवर्जयेत् " इति ॥

ता आह गार्ग्यः—

" शुचावूर्जे तपस्ये च या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः " इति ॥

विधुक्षय इत्यत्र बहुव्रीहिः । विधुक्षयः कृष्णपक्षः । आषाढ्युत्तरा कार्तिक्युत्तरा फाल्गुन्युत्तरा चेत्यर्थः । )

त्रयोदश्यादिप्रदोषे तु नाध्येयमित्यस्मिन्नर्थे पौराणं वाक्यम्—

" मेधाकामस्त्रयोदश्यां सप्तम्यां च विशेषतः ।
चतुर्थ्यां च प्रदोषेषु न स्मरेन्न च कीर्तयेत् " इति ।

न स्मरेदित्यनेनान्यानध्यायेभ्योऽत्र दोषाधिक्यं ध्वन्यते ।

त्रयोदश्यादिद्वैविध्ये निर्णयो ब्रह्माण्डपुराणे—

" रात्रौ यामद्वयादर्वाग्यदि पश्येत्त्रयोदशीम् ।
प्रदोषः स हि विज्ञेयः सर्वस्वाध्यायवर्जितः ॥
षष्ठी च द्वादशी चैव अर्धरात्रोननाडिका ।
प्रदोषे न त्वधीयीत तृतीया नवनाडिका " इति ।

अर्धरात्रोननाडिकाऽर्धरात्राद्घटिकयैकयोनेत्यर्थः । अनेनेदृशस्थले पूर्वदिन एव प्रदोषप्रयुक्तोऽध्ययननिषेधो न तूत्तररात्रिमुखे सप्तम्यादिसत्त्वेऽपीति नियम्यते ।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके ।

---

१ क. °त् । तस्मि° । २ ख. ग. घ. ङ. °गामि यद° । ३ ख. घ. ङ. °त्तद° । ४ ख. ज्ञानवन्तो । ५ ङ. °ते । ज्यो° ।

बृहन्मनुना प्रकारान्तरेण प्रदोष उक्तः—

" चतुर्थ्यां च त्रयोदश्यां सप्तम्यामर्धरात्रतः ।
अर्वाङ्नाध्ययनं कुर्याद्यदीच्छेत्तस्य धारणम् " इति ।

स्मृत्यर्थसारे विशेषः—

" चतुर्थ्याः पूर्वरात्रे तु नवनाडीषु दर्शने ।
नाध्येयं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी ।
अर्धरात्रात्पुरा चेत्स्यान्नाध्येयं पूर्वरात्रके " इति ।

ज्योतिर्निबन्धे—

" अर्कतर्कत्रितिथिषु दिवसैः स्यात्तदग्रिमैः ।
रात्र्यर्धसार्धप्रहरैः स प्रदोष इति स्मृतः " इति ।

अग्रिमैरर्कतर्कत्रितिथ्यग्रिमैर्दिनैरित्यर्थः । अर्को द्वादशी । तर्कः षष्ठी । त्रिस्तृतीया । द्वादश्या रात्रौ प्रथमं रात्र्यर्धं यामद्वयात्मकं तन्मध्ये त्रयोदशीसंबन्धश्चेत्तदा प्रदोष इत्यर्थः । एवं षष्ठ्या रात्रौ प्रथमसार्धप्रहरमध्ये सप्तमीसंबन्धे । तथा तृतीयाया रात्रौ प्रथमप्रहरमध्ये चतुर्थीसंबन्ध इति । शिष्टास्त्विदानीमेतदेव स्वी कुर्वन्ति ।

गलग्रहेष्वप्यनध्याय उक्तो बृहस्पतिना—

" पुत्रजीवितमिच्छेच्चेन्नाधीयीत गलग्रहे " इति ।

पुत्रजीवितमिच्छेच्चेदितिवचनात्पुत्रिण एव गलग्रहेष्वनध्यायो नेतरस्येति । गलग्रहास्तूपनयनकालनिरूपण उक्ताः ।

ज्योतिर्निबन्धे—

" अष्टकासु च सर्वासु युगमन्वन्तरादिषु ।
अनध्यायं प्रकुर्वीत य(त)था सोपपदास्वपि " इति ।

अयं च सोपपदानिषेधो न यजुर्वेदिनाम्—

" वेदव्रतोपनयने स्वाध्यायाध्ययने तथा ।
न दोषो यजुषां सोपपदास्वध्यापनेऽपि च " ।

इति स्मृत्यन्तरोक्तेरिति केचित् । महानिबन्धेष्वदर्शनादिदं निर्मूलमित्यन्ये । अस्मिन्कल्पे त्वस्त्येव तेषामपि निषेधः । तास्तूपनयनप्रकरण उक्ताः ।

धर्मसूत्रे—" श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं
प्रदोषे नाधीयीत " इति ।

---

१ क. 'मध्यरा' । २ क. ग. 'रणाम् । ३ क. ख. च नि' ।

प्रदोषोऽत्र प्रथमो रात्रिभाग इत्युज्ज्वलाकृतः । पूर्वरात्रिरिति माधवः । ग्रहणाध्ययनधारणाध्ययनयोरयं निषेधः । प्रदोषग्रहणाद्रात्रावप्यूर्ध्वं न दोष इत्युज्ज्वलाकृतः । उपाकर्मोत्तरं त्र्यहमेकाहं वाऽनध्यायः कार्यः ।

तदुक्तं गृह्ये—" त्र्यहमेकाहं वा क्षम्य यथाध्यायमध्येतव्यमिति वदन्ति " इति ।

क्षम्याध्ययनाद्विरम्येत्यर्थः । अयमनध्यायस्त्वनित्य इत्यत्र ज्ञापकमुत्सर्जनप्रकरणे वक्ष्यते ।

धर्मसूत्रे—"तैषीपक्षस्य रोहिण्यां विरमेदर्धपञ्चमाꣳश्चतुरो मासानित्येके"

इति गृह्योक्तेन विकल्पः । अनयोः पक्षयोः पञ्च मासानधीते । अर्धः पञ्चमो येषां तेऽर्धपञ्चमाः । अर्धाधिकांश्चतुरो मासानधीयीतेत्येवमेके मन्यन्ते । अस्मिन्पक्षे प्रोष्ठपद्यामुपाकरणं शास्त्रान्तरदर्शनादुत्सर्जनेऽस्य चाप्रतिकर्षः । उत्सर्जने च कृते श्रावण्याः प्राक्शुक्लपक्षेषु धारणाध्ययनं वेदस्य कृष्णपक्षेषु व्याकरणाद्यङ्गाध्ययनं श्रावण्यामुपाकृत्याग्रहीतस्य ग्रहणाध्ययनमिति व्याख्यातमुज्ज्वलाकृता ।

गौतमः—" तिस्रोऽष्टकास्तिस्रोऽभि वार्षिकम् " इति ।

उपाकरणादूर्ध्वं प्रागुत्सर्जनाद्यदध्ययनं तद्वार्षिकं तदभि तस्याऽऽदावन्ते च यत्कर्म क्रियते तत्र त्रिरात्रमित्यर्थः ।

औशनसे व्यक्तोऽयमर्थः—

" उपाकरणे चोत्सर्जने च त्र्यहमनध्यायः " इति ।

मानवे च—" उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् " इति ।

क्षपणमनध्यायः । गृह्येऽप्येवम् ।

अष्टका आश्वलायनसूत्रे—

" हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः " इति ।

महालयान्तर्गताष्टम्यष्टकात्वेन संगृहीता हारीतेन—

" तथा महालयाष्टमी " इति ।

माघ्याः पौर्णमास्या योऽपरपक्षस्तस्याष्टमीमेकाऽष्टकेत्याचक्षत इत्येतत्सूत्रस्थैकग्रहणेन ज्ञापिताश्चाऽऽचार्येण ।

धर्मसूत्रे—" मातरि पितर्याचार्य इति द्वादशाहाः " इति ।

मात्रादिषु मृतेषु द्वादशाहमनध्याय इत्यर्थः । अयं विधिर्गृहस्थानामपि ।

---

१ ख. घ. ङ. °तः । उपा° । २ ग. घ. ङ. °नस्याप्र° । ३ क. °षु साधा° । ४ ङ. °पक्षस्य व्या° ।

केचिदाशौचं तावन्तं कालमिच्छन्ति । नेति वयम् । अनध्यायप्रकरणादिति व्याख्यातमुज्ज्वलाकृता ।

याज्ञवल्क्यः—"त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये तथा ॥
संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥
पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।
ऋतुसंधिषु भुक्त्वा तु श्राद्धिकं प्रतिगृह्य च" इति ॥

निर्घात[1] आन्तरिक्ष उत्पातध्वनिः । द्युनिशमहोरात्रम् ।

यत्तु—"त्र्यहं न कीर्तयेद्ब्रह्म राज्ञो राहोश्च सूतके" ।

इति[2] राहुसूतकविषये त्र्यहानध्यायकीर्तनं तद्ग्रस्तास्तविषयम् । ऋतुसंधिष्वृतुसंधिगतासु[3] प्रतिपत्स्विति विज्ञानेश्वरः । श्राद्धिकं प्रतिगृह्य चेत्येतत्पार्वणविषयम् । एकोद्दिष्टभोजनादौ मन्वादिभिस्त्र्यहोक्तेः ।

अन्यच्च स एव—

"पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये" इति ॥

शक्रपातोच्छ्रयकालस्तु—

"आश्विनकृष्णपञ्चम्यामिन्द्रध्वजोत्थापनं विजयदशम्यां तदवरोपणम्" इति ।

धर्मसूत्रे—"श्वगर्दभनादाः सलावृक्येकसृकोलूकशब्दाः सर्वे
वादितशब्दा रोदनगीतसामशब्दाश्च" इति ।

शुनां गर्दभानां बहूनां नादा बहुवचननिर्देशात् । सलावृकी वृकावान्तरजातिविशेषः । क्रोष्ट्रीत्यन्ये । लिङ्गस्याविवक्षितत्वात्पुंसोऽपि ग्रहणम् । "इन्द्रो यतीन्सालावृकेभ्यः प्रायच्छत्" इत्यादिदर्शनात् । एकसृक एकवचनः, शृगालः । उलूको दिवाभीतः । एषां शब्दाः । वादितानि वीणावेणुमृदङ्गादीनि तेषां च शब्दाः । रोदनशब्दा गीतशब्दाः सामशब्दाश्च । एते श्रूयमाणास्तात्कालिकानध्यायहेतव इति व्याख्यातमुज्ज्वलाकृता ।

---

१ ख. °निः । अयं च राहुसूतकनिमित्तकत्र्यहमनध्यायो ग्रस्तविषयः । अहोरात्रमनध्यायो रवीन्द्वोर्ग्रहणे भवेदित्ययमहोरात्रानध्यायस्त्वेतदतिरिक्तविषयः । श्रा° । २ घ. ङ. °ति वचनं तद्ग्र° । ३ घ. ङ. °सु । श्रा° ।

तथा—" संदर्शने चारण्ये श्मशाने सर्वतः शम्याप्रासाच्छ्मशानवच्छूद्र-
पतितौ " इति ।

अरण्ये च यावति प्रदेशे श्वश्चण्डालो वा दृश्यते तावत्कालमनध्यायः । श्मशानेऽध्ययनं वर्जयेत् । सर्वतः सर्वासु दिक्षु शम्याप्रासादर्वागित्यर्थः । पञ्चमीनिर्देशादर्वागिति गम्यते । शूद्रपतितसकाशेऽपि शम्याप्रासादर्वाङ्नाध्येयमिति व्याख्यातं तेनैव ।

तथा—" प्रोदकयोश्च पाण्योः " इति ।

पूर्वसूत्राद्भुक्त्वेत्यनुवर्तते । प्रोदकावार्द्रौ पाणी यावत्तावन्नाधीयीतेति व्याख्यातं तेनैव ।

तथा—" पृष्ठारूढः पशूनां नाधीयीत तावन्तं कालम् " इति ।

हस्त्यश्वादीनां पशूनां पृष्ठारूढः पृष्ठासीनः सन्नाधीयीत तावन्तं कालमित्यर्थ इति व्याख्यातं तेनैव ।

याज्ञवल्क्योऽपि—

" श्वक्रोष्टृगर्दभोलूकसामवाणार्तनिस्वने ।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ।
भुक्त्वाऽऽर्द्रपाणिरम्भोन्तरर्धरात्रेऽतिमारुते ॥
पांशुवर्षे च दिग्दाहे संध्यानीहारभीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः " इति ॥

सामान्यारण्यकसामानि । वाणो वंश इति विज्ञानेश्वरः । शततन्तुर्वीणेति हरदत्तः । आर्तः पीडितः । अमेध्याः सूतिकादयः । स्तनितं गर्जितम् ।

संध्यागर्जने विद्युति च विशेषो धर्मसूत्रे—

" संधावनुस्तनिते रात्रिं स्वप्नपर्या(र्य)न्तां विद्युत्युपव्युषं यावता वा कृष्णां रोहिणीमिति शम्याप्रासाद्विजानीयादेतस्मिन्काले विद्योतमाने सप्रदोषमहरनध्यायो देहे चापररात्रे स्तनयित्नुनोर्ध्वमर्धरात्रादित्येके " इति ।

संधौ संध्यायाम् । अनुस्तनिते मेघगर्जिते सर्वां रात्रिं नाधीयीत । संधौ

१ घ. ङ. °वश्चाण्डा° । २ क. ख. ग. घ. ङ. दहे ।

विद्युति सत्यां स्वप्नपर्या(र्य)न्तां रात्रिम्। इदं च सायंसंध्यायाम्। उषः समीपमुपव्युषं तत्र विद्युति सत्यामपरेद्युः सप्रदोषमहरनध्यायः। प्रदोषादूर्ध्वमध्येयम्। यावता कालेन शम्यामासादर्वागवस्थितां गां कृष्णामिति वा रोहिणीमिति वा विजानीयात्तस्मिन्काल उपव्युषे वा विद्योतमान इत्यन्वयः। रात्रेस्तृतीयभागोऽपररात्रस्तस्य त्रेधा विभक्तस्याऽऽद्यांशो महारात्रः। तदन्त्यो दहः। तस्मिन्दहेऽपररात्रे स्तनयित्नुना मेघगर्जननिमित्तेन सप्रदोषमहरनध्यायः, अर्धरात्रादूर्ध्वमनन्तररात्रावधिरित्येक आचार्या मन्यन्ते। स्वपक्षस्तु दह एव। इदं च वर्षर्तौ ज्ञेयमिति व्याख्यातमुज्ज्वलाकृता।

हारीतस्तु—"सायंसंध्यास्तनिते रात्रिः प्रातःसंध्यास्तनितेऽहोरात्रम्" इत्याह।

विद्युति विशेषमाह गौतमः—

"विद्युति नक्तं चापररात्रात्रिभागादिप्रवृत्तौ सर्वम्" इति।

पूर्वरात्रौ विद्युत्यपररात्रावधिरनध्यायः। दिनतृतीयांशोत्तरं तस्यां सत्यां रात्रिसमाप्तिपर्यन्तम्। अर्धरात्रे मध्ययामद्वय इति विज्ञानेश्वरः। मध्यदण्डचतुष्टय इति निर्णयामृतः। एतद्वर्षातिरिक्तविषयम्। वर्षासु तु तात्कालिक इति व्यवस्था बोध्या।

धर्मसूत्रे—"छर्दयित्वा स्वप्नपर्यन्तम्" इति।

छर्दयित्वा वमनं कृत्वा स्वप्नपर्यन्तं नाधीयीतेति व्याख्यातमुज्ज्वलाकृता।

अत्राऽऽपस्तम्बेन विशेष उक्तः—

"छर्दयित्वा स्वप्नान्ते घृतं वा प्राश्य" इति।

विष्णुः—"न वादित्रशब्दे न शूद्रपतितयोः समीपे न देवतायतनश्मशानचतुष्पथरथ्यासु नोदकान्ते न पीठोपहितपादो न हस्त्यश्वोष्ट्रनौगोयानेषु न वान्तो न विर(रि)क्तो नाजीर्णी न पञ्चनखान्तरागमने" इति।

पीठोपहितपादः पीठोपरिस्थापितपादतलः। यानेष्वित्यत्राऽऽसीन इति शेषः। वान्तः कृतवमनः। विर(रि)क्तः कृतविरेकः। अजीर्णी भुक्तपाकपर्यन्तम्। पञ्चनखाः श्वादयः।

मनुः—"शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम्।
नाधीयीताऽऽमिषं जग्ध्वा सूतकान्नं तथैव च" इति।

प्रौढपादः पादोपरिपादतलः। आसनारूढपादो वेति हरदत्तः।

---

१ ख. घ. ङ. °न्तरं रा°।

स्मृत्यन्तरे—“ न विवादे न कलहे न सेनायां न सङ्गरे ।
न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥
रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते ” इति ॥

अधीयीतेति शेषः ।

हेमाद्रौ स्मृतिः—

“ यज्ञे चानूबन्ध्यान्तं दीक्षितस्यर्त्विजां च ” इति ।

मनुः—“ त्र्यहं न कीर्तयेद्ब्रह्म सपिण्डीकरणे तथा ” इति ।

सपिण्डीकरणे कृते सत्यनन्तरं त्र्यहमनध्याय इत्यर्थः ।

स्मृतिसंग्रहे—

“ उदके मध्यरात्रे च विण्मूत्रे च विसर्जिते ।
उच्छिष्टे श्राद्धभुक्तौ च मनसाऽपि न चिन्तयेत् ” इति ।

स्मृतिसारे—

“ सर्वकुत्सितगन्धेषु परिवेषे सभासु च ।
अभ्यङ्गे स्नानकाले च महास्वेदेऽतिकम्पने ॥
गोविप्ररोधने सर्वश्राद्धेषु श्राद्धपङ्क्तिषु ।
श्मशाने शूद्रसंपर्के मलादीनां निदर्शने ॥
रोदने व्याकुले देशे जपस्थाने महालये ।
महोत्पातेषु च तथा स्वाध्यायं वर्जयेद्बुधः ” इति ॥

सर्वश्राद्धेष्वित्यनेन श्राद्धकर्तुरध्ययननिषेधः । श्राद्धपङ्क्तिष्वित्यनेन श्राद्धभोक्तुरध्ययननिषेधः । सप्तमीनिर्देशात्तत्तत्काले ।

धर्मोद्योते—“ फलान्या(न्य)पस्तिलान्भक्ष्यान्यच्चान्यच्छ्राद्धिकं भवेत् ।
प्रतिगृह्याप्यनध्याय इति बौधायनोऽब्रवीत् ” इति ॥

यमः—“ आगतं चातिथिं दृष्ट्वा नाधीयीतैव बुद्धिमान् ।
अभ्यनुज्ञापितस्तस्मिन्नध्येतव्यं प्रयत्नतः ” इति ॥

तस्मिन्नतिथ्यागमनसमयेऽभ्यनुज्ञापितोऽतिथिना ।

आरण्यमार्जाराद्यन्तरागमने विशेषः स्मृत्यर्थसारे—

“ आरण्यमार्जारसर्पनकुलपञ्चनखादेरन्तरागमने त्रिरात्रम् । आरण्यश्वशृगालवानरादेर्द्वादशरात्रं, खरवराहोष्ट्रचण्डालसूतिकोदक्यादेर्मासम् । शशमेषश्वपाकादेः षण्मासं, गजसारससिंहव्याघ्रमहापातकिकृतघ्नादेरब्दम् ” इति।

अन्यच्च—" शोभनदिने चानध्यायो विवाहप्रतिष्ठोत्थापनादिष्वा समाप्तेः
सगोत्राणाम् " इति ।

विवाह इत्युपनयनोपलक्षणम्—

तथा—" श्रवणद्वादशीमहाभरण्योः प्रेतद्वितीयायां रथसप्तम्यामाकाशे
शवदर्शने चाहोरात्रम् " इति ।

महाभरणी महालयान्तर्गता । प्रेतद्वितीया यमद्वितीया ।

कौर्मे—" श्लेष्मातकस्य च्छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः " इति ॥

श्लेष्मातकं भाषया " भोंकरी " इति प्रसिद्धम् । शाल्मलिः " सावरी " इति भाषया प्रसिद्धः । मधुको भाषया " मोहा " इति प्रसिद्धः । कोविदारः कञ्चनारः ।

आश्विने शुक्लपक्षे मूलनक्षत्रे पुस्तकस्थापने कृते तदारभ्य पुस्तकविसर्जनपर्यन्तमनध्यायः ।

तदुक्तं देवीपुराणे—

" नाध्यापयेन्न च लिखेन्नाधीयात कदाचन ।
पुस्तके स्थापिते देवि[1] विद्याकामो द्विजोत्तमः " इति ॥

एवमन्येऽप्यनध्याया धर्मसूत्रादौ द्रष्टव्याः ।

अनध्यायाध्ययने दोष उक्तो बृहन्नारदीये—

" अनध्यायेष्वधीतानां प्रजां प्रज्ञां यशः श्रियम् ।
आयुष्यं बलमारोग्यं निकृन्तति यमः स्वयम् ॥
अनध्याये तु योऽधीते तं विद्याद्ब्रह्मघातकम् ।
न तेन सह भाषेत न तेन सह संविशेत् " इति ॥

" चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेव सर्वदा ।
दुर्मेधसामनध्यायस्त्वन्तरागमनेषु च ॥
तत्र विस्मृतिशीलानां बहुवेदप्रपाठिनाम् ।
चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु च ॥
वेदाङ्गन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेत् " ॥

---

१ क. देवी ।

इति हेमाद्युक्तानध्यायप्रकरणस्थस्मृतिवाक्यवशेन कलौ पुरुषान्दुर्मेधसो मन्यमानाः शिष्टा वेदाध्ययन एतानेवानध्यायान्नियमेन स्वी कुर्वन्तीति ।

इत्यनध्यायाः ।

## अथानध्यायापवादाः ।

तत्रेदं धर्मसूत्रम्—

"विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम्" इति ।

विद्यां प्रति वेदाध्ययनं प्रत्यनध्यायः श्रूयते न पुनः कर्मयोगे मन्त्राणामनध्यायो हेतुरित्यर्थ इति व्याख्यातमुज्ज्वलाकृता ।

आपस्तम्बीयपरिभाषासूत्रे—

"स्वाध्यायेऽनध्यायो मन्त्राणां न कर्मण्यर्थान्तरत्वात्" इति ।

मनुः—"वेदो[१]पकरणे चैवं स्वाध्याये चापि नैत्यके ।
निरोधो नास्त्यनध्याये होममन्त्रजपेषु च" इति ।

वेदो[२]पकरणान्यङ्गानि । जाताविकवचनम् ।

राणे—"नैत्यके नास्त्यनध्यायः संध्योपासन एव च ।
उपाकर्मणि कर्मान्ते होममन्त्रेषु चैव हि ॥
अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ।
न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेत् ॥
एष धर्मः समासेन कीर्तितो ब्रह्मचारिणाम् ।
ब्रह्मणाऽभिहितः पूर्वमृषीणां भावितात्मनाम् ।
अधीयीत सदा सर्वां ब्रह्मविद्यां समाहितः ॥
सावित्रीं शतरुद्रीयं वेदान्तांश्च विशेषतः ।
अभ्यसेत्सततं युक्तो भस्मस्नानपरायणः" इति ।

सदेत्यनेन पर्वसु प्रतिपत्सु चापि ब्रह्मविद्याया अनध्यायो नेति सूच्यते ।

स्मृतिरत्नावल्याम्—

"अल्पं जपेदनध्याये पर्वण्यल्पतरं जपेत् ।
नित्ये जपे च काम्ये च क्रतौ पारायणे तथा ॥

---

१ क. ग. 'दोपाकृ' । २ क. ग. घ. ङ. 'दोपाक' ।

नानध्यायोऽस्ति वेदानां ग्रहणे ग्राहणे स्मृतः ।
देवतार्चनमन्त्राणां नानध्यायः स्मृतस्तथा ॥
नानध्याये जपेद्वेदान्रुद्रं चैव विशेषतः ।
पौरुषं पावमानं च गृहीतनियमादृते " इति ।

यदि मयेदमपठित्वा न भोक्तव्यमिति नियमस्तदाऽध्येयमित्यर्थः ।

स्मृत्यर्थसारे—" चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु तु ।
वेदाङ्गन्यायमीमांसा धर्मशास्त्राणि चाभ्यसेत् " इति ।

धर्मोद्योते—" सौराणां रौद्रमन्त्राणां पैतृकाणां च नैत्यके ।
जपहोमादिकार्येषु नानध्यायो न कामिके " इति ॥

इति संस्काररत्नमालायां ब्रह्मचारिधर्माध्यापकाध्येतृधर्ममन्दबुद्धित्वहरविधानानध्यायतदपवादाः ।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां सप्तमं प्रकरणम् ॥ ७ ॥

अथाष्टमं प्रकरणम् ।

## अथ काण्डव्रतोपाकरणम् ।

" तत्रेदं[1] सूत्रम्—काण्डोपाकरणे काण्डविसर्गे च सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषꣳ स्वाहेति काण्डर्षिर्द्वितीय इमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयाऽसि प्रजापते यदस्य कर्मणोऽत्यरीरिचमिति चात्रैके जयाभ्यातानान्राष्ट्रभृत इत्युपजुह्वति यथापुरस्तात् " इति ।

अस्यार्थः—नव षट्पञ्च चत्वारि[2] वा काण्डानि, तत्र प्राजापत्यं सौम्यमाग्नेयं वैश्वदेवं स्वायंभुवमारुणम् । सांहितीर्देवता उपनिषदो वारुणीर्देवता उपनिषदो याज्ञिकीर्देवता उपनिषद इति नवपक्षे काण्डानि । षट्पक्ष आरुणान्तानि षट्, पञ्चपक्षे स्वायंभुवान्तानि पञ्च, चतुष्पक्षे वैश्वदेवान्तानि चत्वारीति । तेषामनुक्रमणं काण्डानुक्रमणिकायां द्रष्टव्यम् । तेषां काण्डानामुपाकरणं

---

१ ङ. °दं धर्मसू° । २ ङ. °त्वारि । ते° ।

काण्डोपाकरणं तस्मिन्काडोपाकरणे, काण्डव्रतारम्भ इत्यर्थः। काण्डानां विसर्गः काण्डव्रतविसर्ग इत्यर्थः । तस्मिन्प्रसाधनीदेवीहोमान्तं कृत्वा सदसस्पतये हुत्वा काण्डर्षिभ्यो जुहोति । अमन्त्रास्वमुष्मै स्वाहेति यथादेवतमितिवचनात् । प्रजापतये काण्डर्षये स्वाहा । सोमाय काण्डर्षये स्वाहा । अग्नये काण्डर्षये स्वाहा । विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा । स्वयंभुवे काण्डर्षये स्वाहेति यथाकाण्डं जुहुयात् । ततो वारुण्यादिस्विष्टकृदन्तं यथोक्तमुपहोमाश्च। यथापुरस्तादित्यनेन स्विष्टकृतः पूर्वत्वं होमविधिश्च प्राप्यते । अथवा सदसस्पतिर्द्वितीयः काण्डर्षिर्भवतीत्यर्थः । अस्मिन्कल्पे काण्डर्षिहोमानन्तरं सदसस्पतिहोमः । अत्र द्वितीयवचनं प्रसिद्धस्य काण्डर्षेः प्राथम्यार्थम् । पूर्वस्मिन्कल्पे द्वितीयवचनं सदसस्पतिरेव काण्डर्षिर्मा भूदित्येतदर्थम् । वारुण्याद्यनुक्रमणमाघारवन्नियमार्थम् । कुत्रचिद्व्याहृतिहोमविधानमेव तथा । यथापुरस्तादिति वचनं जयहोमे राष्ट्रभृद्धोमे च मन्त्रविषये पक्षान्तरस्यापि सत्त्वादुपनयने यः परिगृहीतः पक्षः स एवात्रेति ज्ञापनार्थं स्विष्टकृतः प्राक्कर्तव्यतार्थं च । ननु समावर्तनादावन्यतरानुवादेनैवाऽऽघारवन्नियमे सिद्ध उभयानुवादो व्यर्थ इति चेन्न । तस्य नियमार्थत्वात् । तथा हि । यत्रोभयानुवादः समावर्तनादौ तत्रोभयसहितमेवाऽऽघारवत्तन्त्रं नियतमिति । तेनोभयानुवादातिरिक्तस्थले यद्यदननूदितं भवति तस्यानियमः सिध्यति । काण्डव्रतोपाकरणोत्सर्गयोर्व्याहृतिहोमानुवादाभावान्न व्याहृतिहोमनियमः । चतुर्थीहोमे संवादाभिजयने शूलगवे मासिश्राद्धाष्टकाश्राद्धादावाग्रहायणीकर्मणि च वारुण्याद्यनुवादाभावान्न वारुण्यादिनियमः । त्रिवृदन्नहोमे शास्त्रान्तरोक्तेषु कर्मसु चाऽऽघारवत्तन्त्रत्वपक्षेऽपि व्याहृतिहोमवारुण्याद्यनियम उभयानुवादाभावात् । अथवा यत्र व्याहृतिहोमवारुण्यादिहोमानुवादो नास्ति तत्रैतयोर्निवृत्तिरेव । तेन पूर्वं तन्त्रं प्रसाधनीदेवीहोमान्तमुत्तरं तन्त्रं स्विष्टकृदादीति द्रष्टव्यम् ।

## अथ प्रयोगः ।

आचार्यो ब्रह्मचारिसहितः कृतनित्यक्रियः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यास्यामुकशर्मणो ब्रह्मचारिणः प्राजापत्यकाण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्राजापत्यकाण्डव्रतोपाकरणं करिष्ये । तदङ्गं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च

१ ङ. °स्मिन्पक्षे का° । २ ग. घ. ङ. °ण्डर्षेयः प्रा° । ३ ग. घ. ङ. °स्मिन्नपि कल्पे । ४ क. ख. ग. घ. पूर्वत° । ५ क. °तरत° ।

करिष्य इति संकल्प्योक्तरीत्या कुर्यात्। अत्र सविता प्रीयतामिति विशेषः। एवं सर्वेषु व्रतेषु।

अत्र ब्रह्मचारिण उपाकरणाङ्गत्वेन वपनं स्नानं च कारयित्वा तस्मै नूतनकटिसूत्रकच्छोपवीताजिनोत्तरीयदण्डांस्तूष्णीं दत्त्वा पुराणान्यप्सु निक्षिपेदिति केचित्।

तत उल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय समुद्भवनामानं श्रोत्रियागारादाहृतं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा प्राजापत्यकाण्डव्रतोपाकरणहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तं प्रसाधनीदेव्यन्तं वोक्त्वा प्रधानहोमे सदसस्पतिमाज्याहुत्या यक्ष्ये। प्रजापतिं काण्डर्षिमाज्याहुत्या यक्ष्य इति वदेत्। अथवा प्रजापतिं काण्डर्षिमाज्याहुत्या सदसस्पतिमाज्याहुत्येति विपरीतम्।

ततोऽङ्गहोमे वरुणमित्यादि स्विष्टकृद्धोमेऽग्निं स्विष्टकृतमित्यादि वाऽन्वाधानोत्कीर्तितपक्षानुसारेण व्याहृतिहोमान्तं प्रसाधनीदेवीहोमान्तं वा कृत्वा प्रधानहोमं कुर्यात्। सदसस्पतिमद्भुतमित्यस्य याज्ञिक्यो देवता उपनिषदः सदसस्पतिर्गायत्री। प्राजापत्यकाण्डव्रतोपाकरणप्रधानाज्यहोमे विनियोगः—"ॐ सदसस्पति० सिषम् स्वाहा। सदसस्पतय इदं०। ॐ प्रजापतये काण्डर्षये स्वाहा। प्रजापतये काण्डर्षय इदं०" विपरीतं वा। इत्यन्वाधानोत्कीर्तितपक्षानुसारेणाऽऽहुतिद्वयं हुत्वेमं मे वरुणेत्यादिहोमशेषं समापयेत्। जयादिहोमा वैकल्पिकाः। अत्रात्रग्रहणमुपाकरणे यदि जयाद्युपहोमोऽनुष्ठितस्तदोत्सर्जने कर्तव्य एव, तत्राभावेऽप्यत्राप्यभाव इत्येतदर्थम्।

अथ ब्रह्मचार्यग्ने व्रतपत इत्यादिभिरुपनयनोक्तरीत्या देवतोपस्थानं कृत्वा गुरवे वरं दद्यात्। नात्र त्रिवृदन्नहोमः।

तत आचार्यो ब्राह्मणभोजनं कृत्वा भूयसीं दक्षिणां च दत्त्वा कर्मसाद्गुण्याय विष्णुं स्मृत्वा कर्मेश्वरायार्पयेत्। अधीते काण्डे तस्यैवोत्सर्जनम्। उपाकरणवत्सर्वम्। तत्रैतावान्विशेषः। अस्यामुकशर्मणो ब्रह्मचारिणः प्राजापत्यकाण्डाध्ययनार्थं स्वीकृतस्य प्राजापत्यकाण्डव्रतस्योत्सर्जनं करिष्य इति संकल्पवाक्यम्। प्राजापत्यकाण्डव्रतोत्सर्जनहोमकर्मणीत्यन्वाधाने, प्राजापत्यकाण्डव्रतोत्सर्जनप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये। उपाकरणे

---

१ ग. घ. °कल्पोक्त°। २ क. ग. यक्ष्ये। अ°। ३ क. °दिनाऽन्वा°। ४ क. °तिमि°। ५ घ. °धानहो°। ६ क. °र्जने हो°।

यदि जयादिहोमाः कृता भवेयुस्तदाऽत्रापि कार्याः । अचारिषमशकमराधी-त्यूह उपस्थानमन्त्रेषु । अन्यत्समानम् ।

इति प्राजापत्यकाण्डव्रतम् ।

---

## अथ सौम्यकाण्डव्रतम् ।

सौम्यकाण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सौम्यकाण्डव्रतो-पाकरणं करिष्य इति संकल्पवाक्यम् । सौम्यकाण्डव्रतोपाकरणहोमकर्मणीति सदसस्पतिमाज्याहुत्या सोमं काण्डर्षिमाज्याहुत्येति सोमं काण्डर्षिमाज्याहुत्या सदसस्पतिमाज्याहुत्येति विपरीतं वेति चान्वाधाने सौम्यकाण्डव्रतोपाकरण-प्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये । अन्वाधानोत्कीर्तितपक्षानुसा-रेण सदसस्पतिहोमानन्तरं तत्पूर्वं वा सोमाय काण्डर्षये स्वाहेत्याहुतिः । सोमाय काण्डर्षय इदमिति त्यागः । व्रतग्रहणान्तं प्राजापत्यकाण्डव्रतोपाकर-णवत् । सौम्यकाण्डेऽधीत उत्सर्जनम् । सौम्यकाण्डाध्ययनार्थं स्वीकृतस्य सौम्यकाण्डव्रतस्योत्सर्जनं करिष्य इति संकल्पवाक्ये । सौम्यकाण्डव्रतोत्सर्ज-नहोमकर्मणीत्यन्वाधाने । सौम्यकाण्डव्रतोत्सर्जनप्रधानाज्यहोमे विनियोग[२] इति विनियोगवाक्ये । अचारिषमशकमराधीत्युपस्थानमन्त्रेषु । अन्यत्सर्वं सौम्यकाण्डव्रतोपाकरणवत् ।

इति सौम्यकाण्डव्रतम् ।

## अथाऽऽग्नेयकाण्डव्रतम् ।

आग्नेयकाण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाग्नेयकाण्डव्रतो-पाकरणं करिष्य इति संकल्पवाक्ये । आग्नेयकाण्डव्रतोपाकरणहोमकर्मणीति सदसस्पतिमाज्याहुत्याऽग्निं काण्डर्षिमाज्याहुत्येति, अग्निं काण्डर्षिमाज्या-हुत्या सदसस्पतिमाज्याहुत्येति विपरीतं वेत्यन्वाधाने । आग्नेयकाण्ड-व्रतोपाकरणप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये । अन्वा-धानोत्कीर्तनानुसारेण सदसस्पतिहोमानन्तरं तत्पूर्वं वाऽग्नये काण्डर्षये स्वाहेत्याहुतिः । अग्नये काण्डर्षय इदमिति त्यागः । अन्यत्सर्वं प्राजापत्यका-

१ क. °स्य का° । २ घ. ङ. °र्वं प्राजापत्यका° । ३ क. °त्या यक्ष्येऽग्नि । ४ क. °हुत्या यक्ष्य इति, ।

ण्डव्रतोपाकरणवत् । आग्नेयकाण्डेऽधीत उत्सर्जनम् । आग्नेयकाण्डाध्ययनार्थं स्वीकृतस्याऽऽग्नेयकाण्डव्रतस्योत्सर्जनं करिष्य इति संकल्पवाक्ये । आग्नेयकाण्डव्रतोत्सर्जनहोमकर्मणीत्यन्वाधाने । आग्नेयकाण्डव्रतोत्सर्जनप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये । अचारिषमशकमराधीत्युपस्थानमन्त्रेषु । अन्यत्सर्वमाग्नेयकाण्डव्रतोपाकरणवत् ।

इत्याग्नेयकाण्डव्रतम् ।

## अथ वैश्वदेवकाण्डव्रतम् ।

वैश्वदेवकाण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं वैश्वदेवकाण्डव्रतोपाकरणं करिष्य इति संकल्पवाक्ये । वैश्वदेवकाण्डव्रतोपाकरणहोमकर्मणीति सदसस्पतिमाज्याहुत्या[1] विश्वान्देवान्काण्डर्षीनाज्याहुत्येति, विश्वान्देवान्काण्डर्षीनाज्याहुत्या सदसस्पतिमाज्याहुत्येति विपरीतं वेत्यन्वाधाने । वैश्वदेवकाण्डव्रतोपाकरणप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये । अन्वाधानोत्कीर्तनानुसारेण सदसस्पतिहोमानन्तरं तत्पूर्वं वा विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहेत्याहुतिः । विश्वेभ्यो देवेभ्यः काण्डर्षिभ्य इदमिति त्यागः । अन्यत्सर्वं प्राजापत्यकाण्डव्रतोपाकरणवत् । वैश्वदेवकाण्डेऽधीत उत्सर्जनम् । वैश्वदेवकाण्डाध्ययनार्थं स्वीकृतस्य वैश्वदेवकाण्डव्रतस्योत्सर्जनं करिष्य इति संकल्पवाक्ये । वैश्वदेवकाण्डव्रतोत्सर्जनहोमकर्मणीत्यन्वाधाने वैश्वदेवकाण्डव्रतोत्सर्जनप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये । अचारिषमशकमराधीत्युपस्थानमन्त्रेषु । अन्यत्सर्वं वैश्वदेवकाण्डव्रतोपाकरणवत् ।

इति वैश्वदेवकाण्डव्रतम् ।

## अथ स्वायंभुवकाण्डव्रतम् ।

स्वायंभुवकाण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्वायंभुवकाण्डव्रतोपाकरणं करिष्य इति संकल्पवाक्ये । स्वायंभुवकाण्डव्रतोपाकरणहोमकर्मणीति सदसस्पतिमाज्याहुत्या[3] स्वयंभुवं काण्डर्षिमाज्याहुत्येति, स्वयंभुवं काण्डर्षिमाज्याहुत्या सदसस्पतिमाज्याहुत्येति विपरीतं वेत्यन्वा-

---

१ क. °त्या यक्ष्ये वि° । २ क. °हुत्या यक्ष्य इति । ३ क. °त्या यक्ष्ये स्व° । ४ क. °हुत्या यक्ष्य इति ।

धाने । स्वायंभुवकाण्डव्रतोपाकरणप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये । अन्वाधानोत्कीर्तनानुसारेण सदसस्पतिहोमानन्तरं तत्पूर्वं वा स्वयंभुवे काण्डर्षये स्वाहेत्याहुतिः । स्वयंभुवे काण्डर्षय इदमिति त्यागः। अन्यत्सर्वं प्राजापत्यकाण्डव्रतोपाकरणवत् । स्वायंभुवे काण्डेऽधीत उत्सर्जनम् । स्वायंभुवकाण्डाध्ययनार्थं स्वीकृतस्य स्वायंभुवकाण्डव्रतस्योत्सर्जनं करिष्य इति संकल्पवाक्ये । स्वायंभुवकाण्डव्रतोत्सर्जनहोमकर्मणीत्यन्वाधाने । स्वायंभुवकाण्डव्रतोत्सर्जनप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये । अचारिषमशकमराधीत्युपस्थानमन्त्रेषु । अन्यत्सर्वं स्वायंभुवकाण्डव्रतोपाकरणवत् । एतत्काण्डस्य पाक्षिकत्वं तु प्रागेवोक्तम् ।

मातृदत्तोऽप्येवमाह—" स्वायंभुवं काण्डं पञ्चममेके " इति ।

केषांचिन्मते स्वायंभुवकाण्डं पञ्चमं पृथक् । केषांचिन्मते पृथङ्न भवतीत्यर्थः। अपृथक्त्वपक्षेऽन्त्ये वैश्वदेवकाण्डेऽन्तर्भावो ज्ञेयः ।

## अथैतेषां तन्त्रेणोपाकरणप्रयोगः ।

ब्रह्मचारिणा सहाऽऽचार्यः कृतनित्यक्रियः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यास्यामुकशर्मणो ब्रह्मचारिणो वेदाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्राजापत्यसौम्याग्नेयवैश्वदेवाख्यकाण्डचतुष्टयव्रतोपाकरणं तन्त्रेण करिष्य इति संकल्प्य गणेशपूजनादिनान्दीश्राद्धान्तं कुर्यात् ।

स्वायंभुवकाण्डस्यानन्तर्भावपक्षे प्राजापत्यसौम्याग्नेयवैश्वदेवस्वायंभुवाख्यकाण्डपञ्चकव्रतोपाकरणं तन्त्रेण करिष्य इत्येवं संकल्पः ।

नान्दीश्राद्धोत्तरं ब्रह्मचारिणा वपनं स्नानं च कारयित्वा तस्मै नूतनकटिसूत्रकच्छोपवीताजिनोत्तरीयदण्डान्दत्त्वा पुराणान्यप्सु निक्षिपेदिति केचित् ।

तत उल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय समुद्भवनामानं श्रोत्रियागारादाहृतं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा प्राजापत्यसौम्याग्नेयवैश्वदेवाख्यकाण्डचतुष्टयव्रतोपाकरणहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तं प्रसाधनीदेवी-[2]होमान्तं वोक्त्वा प्रधानहोमे सदसस्पतिं प्रजापतिं काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षीश्चैकैकयाऽऽज्याहुत्या यक्ष्य इति प्रजापतिं

१ क. 'वाक्यम् । स्वा' । २ घ. ङ. 'देव्यन्तं वो' ।

काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षीन्सदस्पतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इति विपरीतं वा। अङ्गहोमे वरुणं द्वाभ्यामित्यादि।

स्वायंभुवकाण्डस्यानन्तर्भावपक्षे प्राजापत्यसौम्याग्नेयवैश्वदेवस्वायंभुवाख्यकाण्डपञ्चकव्रतोपाकरणहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तं प्रसाधनीदेव्यन्तं वोक्त्वा प्रधानहोमे सदसस्पतिं[1] प्रजापतिं काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षीन्स्वयंभुवं काण्डर्षिं चैकैकयाऽऽज्याहुत्या यक्ष्य इति प्रजापतिं[2] काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षीन्स्वयंभुवं काण्डर्षिं सदसस्पतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इति विपरीतं वा। अङ्गहोमे वरुणं[3] द्वाभ्यामित्यादि। व्याहृतिहोमान्ते प्रसाधनीदेवीहोमान्ते वा प्रधानहोमः।

स यथा—सदसस्पतिमित्यस्य याज्ञिक्य[4] उपनिषदः सदसस्पतिर्गायत्री। काण्डचतुष्टयव्रतोपाकरणप्रधानाज्यहोमे विनियोगः। स्वायंभुवकाण्डस्यानन्तर्भावपक्षे काण्डपञ्चकव्रतोपाकरणप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये विशेषः। "ॐ सदसस्पति० सिष९ स्वाहा। सदसस्पतय इदं०। ॐ प्रजापतये काण्डर्षये स्वाहा। प्रजापतये काण्डर्षय इदं०। ॐ सोमाय काण्डर्षये स्वाहा। सोमाय काण्डर्षय इदं०। ॐ अग्नये काण्डर्षये स्वाहा। अग्नये काण्डर्षय इदं०। ॐ विश्वेभ्यो देवभ्यः काण्डर्षिभ्यः स्वाहा। विश्वेभ्यो देवेभ्यः काण्डर्षिभ्य इदं[5]० "

स्वायंभुवकाण्डस्यानन्तर्भावपक्षे स्वयंभुवे काण्डर्षये स्वाहेति षष्ठ्याहुतिः। स्वयंभुवे काण्डर्षय इदं न ममेति त्यागः।

काण्डर्षिहोमानन्तरं वा सदसस्पतिहोमः। इति प्रधानहोमं कृत्वेमं मे वरुणेत्यादि सर्वं होमशेषं समापयेत्। जयादिहोमे विकल्पः। त्रिवृदन्नहोमो नात्र।

ततो ब्रह्मचारी, अग्ने व्रतपते व्रतं चरिष्यामीत्यादिभिरुपस्थाय गुरवे वरं दद्यात्।

ततो ब्राह्मणभोजनं भूयसीदक्षिणादानं(?) च विधाय कर्मसाद्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत्।

इति तन्त्रेणोपाकरणप्रयोगः।

१ क. 'तिं सो'। २ क. 'तिं सो'। ३ घ. ङ. 'रुणमि'। ४ घ. ङ. 'ज्ञिक्यो देवता उ'। ५ घ. ङ. 'दं०। स्वयभुवे काण्डर्षये स्वाहा। स्वयंभुवे काण्डर्षय इदं०। स्वा'।

# अथोत्सर्जनम् ।

आचार्यो नद्यादौ प्रशस्तदेशे ब्रह्मचारिसहितः कृतनित्यक्रियः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यामुकशर्मणा ब्रह्मचारिणा वेदाध्ययनार्थं स्वीकृतस्य प्राजापत्यसौम्याग्नेयवैश्वदेवाख्यकाण्डचतुष्टयव्रतस्योत्सर्जनं तन्त्रेण करिष्य इति संकल्प्य गणेशपूजनादि नान्दीश्राद्धान्तं कुर्यात् । स्वायंभुवकाण्डस्यानन्तर्भावपक्षे स्वीकृतस्य प्राजापत्यसौम्याग्नेयवैश्वदेवस्वायंभुवाख्यकाण्डपञ्चकव्रतस्योत्सर्जनं तन्त्रेण करिष्य इति संकल्पवाक्य ऊहः । नात्र वपनादि ।

तत उल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय समुद्भवनामानं श्रोत्रियागारादाहृतं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा प्राजापत्यसौम्याग्नेयवैश्वदेवाख्यकाण्डचतुष्टयव्रतोत्सर्जनहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तं प्रसाधनीदेव्यन्तं वोक्त्वा प्रधानहोमे सदसस्पतिं प्रजापतिं काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षींश्चैकैकयाऽऽज्याहुत्या यक्ष्य इति । प्रजापतिं काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षीन्सदसस्पतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इति विपरीतं वा । अङ्गहोमे वरुणं द्वाभ्यामित्यादि ।

स्वायंभुवकाण्डस्यानन्तर्भावपक्षे प्राजापत्यसौम्याग्नेयवैश्वदेवस्वायंभुवाख्यकाण्डपञ्चकव्रतोत्सर्जनहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तं प्रसाधनीदे[2]व्यन्तं वोक्त्वा प्रधानहोमे सदसस्पतिं प्रजापतिं काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षीन्स्वायंभुवं काण्डर्षिं चैकैकयाऽऽज्याहुत्या यक्ष्य इति । प्रजापतिं काण्डर्षिं सोमं काण्डर्षिमग्निं काण्डर्षिं विश्वान्देवान्काण्डर्षीन्स्वयंभुवं काण्डर्षिं सदसस्पतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इति विपरीतं वा ।

अङ्गहोमे वरुणं द्वाभ्यामित्यादि । व्याहृतिहोमान्ते प्रसाधनीदेवीहोमान्ते वा प्रधान होमः ।

स यथा—सदसस्पतिमित्यस्य याज्ञिक्यो देवता उपनिषदः सदसस्पतिर्गायत्री । काण्डचतुष्टयव्रतोत्सर्जनप्रधानाज्यहोमे विनियोगः ।

स्वायंभुवकाण्डस्यानन्तर्भावपक्षे काण्डपञ्चकव्रतोत्सर्जनप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये विशेषः ।

---

१ घ. ङ. 'रुणमि' । २ क. 'देवीस्यन्तं । ३ घ. ङ. 'रुणमि' ।

"ॐ सदसस्पति॰ सिष॰ स्वाहा। सदसस्पतय इदं॰। ॐ प्रजापतये काण्डर्षये स्वाहा। प्रजापतये काण्डर्षय इदं॰। ॐ सोमाय काण्डर्षये स्वाहा। सोमाय काण्डर्षय इदं॰। ॐ अग्नये काण्डर्षये स्वाहा। अग्नये काण्डर्षय इदं॰। ॐ विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा। विश्वेभ्यो देवेभ्यः काण्डर्षिभ्य इदं॰"।

स्वायंभुवकाण्डस्यानन्तर्भावपक्षे स्वयंभुवे काण्डर्षये स्वाहेति पष्ठ्याहुतिः। स्वयंभुवे काण्डर्षय इदं न ममेति त्यागः।

काण्डर्षिहोमानन्तरं वा सदसस्पतिहोमः। इति प्रधानहोमं कृत्वा, इमं मे वरुणेत्यादि सर्वं होमशेषं समापयेत्।

उपाकरणे यदि जयादिहोमाः कृता भवेयुस्तदाऽत्रापि कार्याः। नात्र त्रिवृदन्नहोमः।

ततो ब्रह्मचारी, अग्ने व्रतपते व्रतमचारिषमित्यादिभिर्देवतोपस्थानं कृत्वा व्रतं विसृज्य गुरवे वरं दद्यात्।

तत आचार्यो ब्राह्मणभोजनं भूयसीदक्षिणादानं च विधाय कर्मसाद्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत्।

अथाऽऽरुणकाण्डस्यानन्तर्भावपक्षे प्रयोगः।

आरुणकाण्डमध्येष्यमाणस्त्रिकालस्नायी भवेत्। एकस्मिन्नह्नि दिवोपोष्य द्वितीयेऽह्नि नक्तं भुञ्जीत। तृतीयेऽहोरात्रमुपोष्य चतुर्थेऽह्नि दिवा भुक्त्वा पञ्चमेऽह्नि नक्तं भुञ्जीत। इत्येवं चतुर्थकालपानभक्तो भवेत्। पानं क्षीरादिविषयम्। भक्तोऽन्नम्। अशक्तावहरहर्वा भैक्षमश्नीयादिति। एतदुभयमपि प्रतिदिनं कालद्वये स्त्री क्रियते।

"तस्माद्द्विरह्नो मनुष्येभ्य उपह्रियते प्रातश्च सायं च" इत्याम्नातत्वात्। एतत्कर्तुमशक्तो प्रतिदिनं भिक्षित्वा तदन्नं भुञ्जीत। नद्यादिभ्यः पात्रेणाप उद्धृत्य वस्त्रेण शोधयित्वा ताभिः सर्वमुदककार्यं कुर्वीत न तु नद्यादौ। न चापां संग्रही भवेत्। भिक्षापात्रादन्यत्र [यो] भक्ष्यादिवस्तुसंग्रहस्तद्युक्तो न भवेदिति भाष्यकाराः। संग्रहः संचयः। औदुम्बरीभिः समिद्भिरग्निपरिचर्यां कुर्यात्।[1] अग्न्यादिभ्योऽरुणान्तेभ्यो होमं कुर्यात्[2]। प्रवर्ग्यकाण्डोक्तान्धर्मानप्यनुतिष्ठेत्। एतादृशं व्रतं भद्रमपाठकाध्ययनदिनमारभ्य संवत्सरपर्यन्तं मास-

१ क. ग. °गः। अरु°। २ घ. °त्। भद्रप्रपाठकाध्य°।

द्वयपर्यन्तं वा कुर्यात् । भद्रमपाठकाध्ययनसमाप्तावप्युदगयन आपूर्यमाणपक्षस्य पुण्ये नक्षत्र आचार्यं प्राप्याभिवाद्याऽऽरुणकाण्डमधीहि भो इति तं प्रार्थयेत् ।

तत आचार्यस्तेन सहारण्यं गत्वाऽऽरुणकाण्डव्रतं चरेति तमनुजानीयात् ।

ततोऽध्येता तमाचार्यमभिवाद्य केशश्मश्रुलोमनखानि वापयित्वा दन्तधावनं कृत्वाऽहते वाससी परिधायाऽऽचम्यारुणान्काण्डर्षींस्तर्पयामीति तर्पयेत् । न वा तर्पणम् ।

तत आचार्यो ब्रह्मचारिसहितः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यास्यामुकशर्मणो ब्रह्मचारिण आरुणकाण्डाध्ययनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमारुणकाण्डव्रतोपाकरणं करिष्ये, तदङ्गं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्य इति संकल्प्योक्तरीत्या कुर्यात् ।

अत्र वा वपनं(न) दन्तधावनादितर्पणान्तम् । नूतनकटिसूत्रकच्छोपवीताजिनोत्तरीयदण्डांस्तूष्णीं ब्रह्मचारिणे दत्त्वा पुराणान्यप्सु निक्षिपेदिति केषांचिन्मतेऽत्रापि भवति ।

तत उल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय समुद्भवनामानं श्रोत्रियागारादाहृतं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वाऽऽरुणकाण्डव्रतोपाकरणहोमकर्मणि या यक्ष्यमाणा इत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा प्रधानहोमे सदसस्पतिमाज्याहुत्या यक्ष्य इति । अरुणान्काण्डर्षीनाज्याहुत्या यक्ष्य इत्युत्कीर्तयेत् । विपरीतं वोत्कीर्तनम् ।

ततोऽग्निं वायुं सूर्यं ब्रह्माणं प्रजापतिं चन्द्रमसं नक्षत्राणि ऋतून्संवत्सरं वरुणमरुणं चैकैकयाऽऽज्याहुत्या यक्ष्ये । अङ्गहोमे वरुणमित्यादि अन्वाधानोत्कीर्तितपक्षानुसारेण प्रसाधनीदेवीहोमान्तं व्याहृतिहोमान्तं वा कृत्वा प्रधानहोमं कुर्यात् । सदसस्पतिमित्यस्य याज्ञिक्यो देवता उपनिषदः सदसस्पतिर्गायत्री । आरुणकाण्डव्रतोपाकरणप्रधानाज्यहोमे विनियोगः—

" ॐ सदसस्पतिम० सिषः स्वाहा । सदसस्पतय इदं० । ॐ अरुणेभ्यः काण्डर्षिभ्यः स्वाहा । अरुणेभ्यः काण्डर्षिभ्य इदं० "

१ क. °र्त्यामु° । २ घ. °दण्डं च तूष्णी ।

विपरीतं वाऽन्वाधानोत्कीर्तितपक्षानुसारेण हुत्वाऽग्नये स्वाहा वायवे स्वाहा सूर्याय स्वाहा ब्रह्मणे स्वाहा प्रजापतये स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यः स्वाहा, ऋतुभ्यः स्वाहा संवत्सराय स्वाहा वरुणाय स्वाहाऽरुणाय स्वाहा । एकादशव्रतहोमानाज्येन जुहुयाद्यथालिङ्गं त्यागः ।

पुनर्मामित्यनुवाकस्थमन्त्राणामरुणा ऋषयः सूर्यो देवता प्रथमस्यानुष्टुब्द्वितीयस्य द्विपदा त्रिष्टुप्तृतीयस्य द्विपदा गायत्री चतुर्थस्यानुष्टुप् । उदुम्बरसमिदाधाने विनियोगः—

" ॐ पुनर्मामैत्वि० मैतु मा " इत्येकां समिधमादधाति । ' ॐ यन्मेऽद्य रेतः० यदापः ' इति द्वितीयाम् । ' ॐ इदं तत्पुनरा०चसे ' इति तृतीयाम् । ' ॐ यन्मे रेतः प्र० जसं कुरु " इति चतुर्थीम् ।

तत इमं म इत्यादिहोमशेषं समापयेत् । जयाद्युपहोमा वैकल्पिकाः । न त्रिवृदन्नहोमः ।

अथ ब्रह्मचारी अग्ने व्रतपत इत्यादिमन्त्रचतुष्टयस्य सोम ऋषिः । अग्न्यादयः क्रमेण देवताः । यजुः । उपस्थाने विनियोगः—" ॐ अग्ने व्रत० ष्यामि, वायो व्रतपते०, आदि० व्रतानां० " इत्येतैरग्न्यादीनुपतिष्ठते ।

न नक्तं भुञ्जीत न हरितयवान्प्रेक्षमाण इत्यादयः प्रवर्ग्यधर्मा अत्रापि भवेयुः ।

तत आचार्यो दूर्वादर्भान्धारयमाणस्तूष्णीं मदन्तीरुपस्पृश्य, भद्रं कर्णेभिरित्यनयोः शान्तिमन्त्रयोररुणा ऋषयो देवा इन्द्रो वृद्धश्रवाः पूषा विश्ववेदास्तार्क्ष्योऽरिष्टनेमिर्बृहस्पतिश्चेति देवताः । त्रिष्टुप्छन्दः । ॐ शान्तिः शान्तिः शान्तिरित्यस्यारुणा ब्रह्म यजुः । शान्त्यर्थे जपे विनियोगः—" ॐ भद्रं कर्णे० शान्तिः " इति शान्तिं जपित्वा भद्रं कर्णेभिरिति द्वयोर्मन्त्रयोः पूर्ववदृष्याद्युक्त्वा जपे विनियोग इति विनियोगं च स्मृत्वा " ॐ भद्रं कर्णेभिः । स्वस्ति न इन्द्रो० दधातु " इति द्वे ऋचौ पठित्वा, आपमापामिति पञ्चानां महानाम्नीसंज्ञकर्चामरुणा ऋषयः । तत्तद्विशेषणविशिष्टा आपो देवताः । अनुष्टुप्छन्दः । मदन्त्युदकस्पर्शने विनियोगः—" ॐ आपमापाम० मुदीषत " इति पञ्चभिर्महानाम्नीभिर्ऋग्भिर्मदन्त्युदकं स्पृशेत् । अन्तेवासिना[1]ऽपि दूर्वादर्भधारणादि मदन्त्युदकस्पर्शनान्तं कारयेत् ।

---

१ घ. ङ. 'सिनमपि ।

ततो भद्रं कर्णेभिरित्यारभ्य कृत्स्नं काण्डमध्यापयीत ।

ततस्तूष्णीं मदन्तीरुपस्पृश्य पुनर्भद्रं कर्णेभिरिति शान्तिं कृत्वा, शिवा नः शंतमेत्यस्यारुणा ओषधीरेकपदा गायत्री । ओषध्यालम्भने विनियोगः— " ॐ शिवा नः शंतमा भव " इत्योषधीरालभते ।

सुमृडीकेत्यस्यारुणा भूमिर्द्विपदा गायत्री भूम्यालम्भने विनियोगः— "ॐ सुमृडीका० शि" इति भूमिमालभते । एतदन्तमन्तेवासिनाऽपि कारयेत् । अत्र वाऽङ्गहोमादितन्त्रसमापनम् ।

ततोऽन्तेवासिना सह गृहमागत्य तेन भिक्षालब्धेनान्नेन ब्राह्मणभोजनं कारयेत् । एतत्काण्डस्यान्तर्भावपक्षे काण्डर्षिसदसस्पतिहोमौ पृथङ्न स्तः । अग्नये स्वाहेत्याद्या आहुतयः समिदाधानादिकं च वैशेषिकत्वाद्भवत्येव ।

वस्तुतस्त्वनन्तर्भाव एव युक्तः । " ॐ अरुणाः काण्डऋषयः [1] " इत्येतच्छ्रुतिस्वरसात् ।

एवमहरहरुल्लेखनादि काण्डर्षिसदसस्पतिहोमवर्जं भूम्यालम्भनान्तं कर्माऽऽ संवत्सराद्वा मासद्वयाद्वा कर्तव्यम् । भद्रप्रपाठकाध्ययने जातेऽपि संवत्सरपर्यन्तं मासद्वयपर्यन्तं वा व्रतं कर्तव्यमेव । स्वीकृतपक्षानुसारेण व्रतं समाप्योत्सर्जनं कुर्यात् ।

तत्रैतावान्विशेषः । आरुणकाण्डाध्ययनार्थं स्वीकृतस्याऽऽरुणकाण्डव्रतस्योत्सर्जनं करिष्य इति संकल्पवाक्यम् । आरुणकाण्डव्रतोत्सर्जनहोमकर्मणीत्यन्वाधाने । आरुणकाण्डव्रतोत्सर्जनप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये । काण्डर्षिसदसस्पतिहोमानन्तरमग्न्यादिदेवताभ्यो होमः । उपाकरणे यदि जयादिहोमाः कृताः स्युस्तदाऽत्रापि कार्या एव । आदित्यव्रत० मचारिषं० राधीत्यादित्यमुपतिष्ठते । वायो व्रतपत इति वायुम् । अग्ने व्रतपत इत्यग्निम् । व्रतानां व्रतपत इति व्रतपतिमग्निम् । एतेषामृष्यादि पूर्ववदेव । आचार्याय शिष्यः कंसं क्षौमं कार्पासजं वा वासो धेनुं च दद्यात् । अशक्तावेतदन्यतममेकं दद्यात् । अत्यशक्तावन्यद्धान्यादि वा । स्वाध्याये कर्मण्यारम्भे समाप्तौ च शान्तिं कुर्यान्मध्येऽवस्येच्चेच्छान्तिं कृत्वाऽवस्येत् । पुनः शान्तिं कृत्वोपक्रमेत् । प्रवर्ग्यवदादेश इत्येतदन्तं व्रतं कर्माङ्गं नाध्ययनाङ्गमिति मते प्राजापत्यकाण्डव्रतोपाकरणोत्सर्जनवदुपाकरणोत्सर्जने । केशश्मश्रुलोमनखवापनादिस्नानान्त आरुणकाण्डाध्ययनाधिकारार्थमारुण-

[1] घ. ङ. भवन्तु ।

काण्डव्रतोपाकरणं करिष्य इति संकल्पवाक्यम् । आरुणकाण्डव्रतोपाकरणहोमकर्मणि० सदसस्पतिमाज्याहुत्याऽरुणान्काण्डर्षीनाज्याहुत्येति । अरुणान्काण्डर्षीनाज्याहुत्या सदसस्पतिमाज्याहुत्येति विपरीतं वेति चान्वाधाने । आरुणकाण्डव्रतोपाकरणप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये । अन्वाधानोत्कीर्तितपक्षानुसारेण सदसस्पतिहोमानन्तरं तत्पूर्वं वाऽरुणेभ्यः काण्डर्षिभ्यः स्वाहेत्याहुतिः । अरुणेभ्यः काण्डर्षिभ्य इदमिति त्यागः । इति होमे विशेषः । अन्यत्समानम् ।

ततो दूर्वादर्भधारणादिमहानाम्नीभिरुदकस्पर्शनान्तं कृत्वा भद्रमपाठकमध्यापयेत् ।

ततस्तूष्णीं मदन्त्युपस्पर्शनादि भूम्यालम्भनान्तं दूर्वादर्भधारणादि भूम्यालम्भनान्तं यावदध्ययनमहरहः कर्तव्यम् । न प्रत्यहं होमः । अधीतेऽस्मिन्काण्ड उत्सर्जनम्[1] । आरुणकाण्डाध्ययनार्थं स्वीकृतस्याऽऽरुणकाण्डव्रतस्योत्सर्जनं करिष्य इति संकल्पवाक्ये । आरुणकाण्डव्रतोत्सर्जनहोमकर्मणीत्यन्वाधाने । आरुणकाण्डव्रतोत्सर्जनप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये । उपस्थानमन्त्रेषु अग्ने व्रतपत इत्येष एव प्रथमो मन्त्रः । नाऽऽदित्य व्रतपत इति । अन्ते कंसादिदक्षिणादानमिति प्रयोगः । यद्यालस्याद्विद्याकाले व्रतमकृतं चेत्तदाऽष्टोत्तरसहस्रमष्टोत्तरशतं वा गायत्र्याऽऽज्याहुतीर्हुत्वा कृच्छ्रं प्रायश्चित्तं कृत्वाऽऽरुणकेतुकस्य प्रथमाहारे व्रतं चरित्वा नियमपूर्वकमाचार्यसकाशात्सकृत्प्रपाठकमधीत्याग्निं प्रयुञ्ज्यात् । आरुणकेतुकस्याकर्तव्यतायामपि प्रायश्चित्तपूर्वकमुक्तनियमपूर्वकमाचार्यसकाशात्सकृत्प्रपाठकाध्ययनमावश्यकम् ।

इत्यारुणकाण्डव्रतप्रयोगः ।

ततः सांहितीदेवतोपनिषदादीनामनन्तर्भावपक्ष एतान्यपि पृथक्पृथगुपाकृत्योत्सृजेत् । एतदध्ययने शान्त्युत्तरं "यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्" इत्यारभ्य "श्रुतं मे गोपाय" इत्यन्तं पठित्वा शिष्यमपि[2] पाठयित्वाऽध्यापनं कुर्यात् । अन्ते पुनः पठित्वा पाठयित्वा शान्तिः ।

१ ङ. 'धीते तस्मि' । २ ख. ङ. शिष्येणापि ।

एतेषु व्रतेषु वक्ष्यमाणचौलकालनिर्णयवत्कालनिर्णयो द्रष्टव्यः,

"ग्रहनक्षत्रवारांशवर्गोदयनिरीक्षणम् ।
चौलवत्तु समाख्यातं सगोदानव्रतेषु च" इति श्रीधरोक्तेः ।

व्रतेषु च व्रतेष्वपीत्यर्थः ।

स्वकाले व्रतलोपे प्रायश्चित्तमाहात्रिः, व्रतलोपं प्रकृत्य—

"पिता भ्राताऽपरो वाऽपि प्राजापत्यत्रयं चरेत्" इति ।

बटोरशक्तौ पित्रादीनामनुष्ठानं शक्तौ तु तेनैव कार्यम् ।

इति काण्डव्रतोत्सर्जनम् ।

---

## अथ गोदानम् ।

तच्च गृह्ये चौलातिदेशसौकर्यार्थमग्र उक्तमपि समावर्तनात्प्राक्कर्तव्यत्वादत्रैवोच्यते । न च गोदानातिदेश एव चौले कुतो न कृत इति तु न शङ्कनीयम् । गोदानसंस्कारस्य चौलोत्तरभावितयोत्तरसंस्कारस्य पूर्वसंस्कारे चौलेऽतिदेशासंभवात् ।

तच्च गोदानं गृह्ये—

"एवं विहितं षोडशे वर्षे गोदानकर्म सशिखं वापयति शिखामत्रावशिनष्टीत्येकेषामग्निगोदानो वा भवति गुरवे गां ददाति" इति ।

यथा चूडाकर्मैवं विहितमुपनीतस्य षोडशे वर्षे गोदानकर्म स्यात् । तत्रैतावान्विशेषः । सशिखं शिखाभिः सह यथा स्यात्तथा शिरःस्थितान्केशान्वापयति मध्यमामपि शिखां नावशिनष्टीत्यर्थः । मध्यमां शिखामत्रावशिनष्टीत्येकेषां मतम् । अग्निकार्यमेव गोदानं यस्य सोऽग्निगोदानः । अग्निगोदानो वा कुमारो भवति । उपसमाधानादि पुण्याहवाचनान्तमग्निकार्यमेव वा भवतीत्यर्थः । गुरव आचार्याय गामुभयकल्पेऽप्यन्ते ददाति । न चाग्निगोदानो वा भवतीत्येतत्समीपे विहितत्वात्तत्कल्प एवैतद्दानमिति वाच्यम् । गोदानस्योभयकल्पेऽपि प्रवृत्तौ बाधकाभावेन समीपविधानरूपहेतुनैतत्कल्पाङ्गत्वनियमसाधनस्याप्रयोजकत्वात् । न चैवमग्निगोदानो वा भवतीत्येतस्मात्पूर्वमेव गुरवे गां ददातीति पठितव्यम् । उत्तरकल्पे त्वनुवृत्त्यैवैतत्प्राप्नोतीति वाच्यम् । अग्निगोदानो वा भवतीत्यनेन वपनस्येव गोदानस्यापि पूर्वं बाध एव प्रापित उत्तरकल्पेऽनुवृत्तेरेवासंभवात् । एतच्चोपनयनादूर्ध्वं षोडशे वर्षे कार्यम् । चौलवदस्मिन्नेव काल उपाकृत्य चरितव्यमिति ।

मनुरपि—" केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य व्यधिके ततः " इति ॥

राजन्यबन्धुः क्षत्रियः। व्यधिके चतुर्विंश इत्यर्थः।

याज्ञवल्क्योऽपि—" केशान्तश्चैव षोडशे " इति।

केशान्तो गोदानाख्यं कर्म गर्भादारभ्य षोडशे वर्षे ब्राह्मणस्य भवति। एतच्च द्वादशवार्षिके वेदव्रते बोद्धव्यम्। इतरस्मिन्पक्षे यथासंभवं द्रष्टव्यम्। राजन्यवैश्ययोस्तूपनयनकालवद्द्वाविंशे चतुर्विंशे वा द्रष्टव्यमिति विज्ञानेश्वरः। गोदानमिति कर्मनामधेयं तत्प्रख्यन्यायात्। एतच्च यथाशक्तिब्रह्मचर्यपक्षेऽपकृष्य समावर्तनात्प्रागेव कर्तव्यं न तु षोडशवर्षप्रतीक्षेति बोध्यम्।

## अथ प्रयोगः।

आचार्यो ब्रह्मचारिसहितः कृतनित्यक्रियो वक्ष्यमाणचौलोक्ततिथ्यादिकाले प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्यास्यामुकशर्मणो ब्रह्मचारिण आयुर्वर्चोभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गोदानसंस्काराख्यं कर्म करिष्य इति संकल्प्य गणपतिपूजनादिनान्दीश्राद्धान्तमुक्तरीत्या कुर्यात्। अत्र केशिनः प्रीयन्तामिति विशेषः, चौलधर्मत्वादेतस्य।

तत उल्लेखनादिविधिना स्थण्डिलसंस्कारादि विधाय तत्र सूर्यनामानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा गोदानहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वाऽङ्गहोमे वरुणमित्यादि। नात्र वैशेषिकहोमः। जयादिहोमा वैकल्पिकाः। व्याहृतिहोमवारुण्यादिहोमा अत्र नियताः। एवमिति चौलातिदेशात्संस्थाजपान्तं समानम्।

ततस्त्रिवृदन्नहोमं पुण्याहादिवाचनान्तं विधाय प्रजापतिः प्रीयतामिति वदेत्।

ततोऽग्नेः पश्चात्स्वस्थाने ब्रह्मचारिणमुपवेश्य स्वयं तद्दक्षिणत उपविश्याग्नेर्ब्रह्मचारिणो वोत्तरतो धृतानडुहगोमयां ब्रह्मचारिमातरं धृतानडुहगोमयं यं कंचन ब्रह्मचारिणं वोपवेश्योष्णशीताभिरद्भिरुन्दनादिवपनान्तं वक्ष्यमाणचौलोक्तरीत्या कुर्यात्।

अत्रैतावान्विशेषः। चौले यथाचारं धृताभिः शिखाभिः सह मध्यमशिखाया अपि वापनम्। अथवा मध्यमशिखामवशेषयेत्। सशिखं वापयतीत्यशिखानां भृग्वादीनां शिखाधारणं विधातुमनुवादः। न तु सर्वेषां सशिखवप-

---

१ घ. °द्धान्तं कृत्वोक्त°। २ ग. घ. °यतामि°। ३ क. °यं क°।

नविधिः। तथा च भृग्वादिगोत्रिव्यतिरिक्तानां सर्वेषां मध्यमशिखामवशेष्यैव वपनम्। भृग्वादिगोत्रिणां तु मध्यमशिखाया वपने विकल्प इति ज्ञेयम्।

ततः केशसंयमनादिकं वक्ष्यमाणचौलोक्तरीत्या कृत्वा सर्पिष्मन्तमोदनं नापिताय दत्त्वाऽऽचार्याय वरं दद्यात्।

ततो ब्राह्मणभोजनं भूयसीदक्षिणादानं च विधाय कर्मसाङ्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत्।

अग्निगोदानो वा भवतीत्यस्मिन्पक्षे पूर्ववत्संकल्पप्रभृति त्रिवृदन्नहोमं पुण्याहादिवाचनान्तं कृत्वा वरदानब्राह्मणभोजनाद्येव कार्यं न तु वपनम्। एतस्य कालात्यये चौलवत्प्रायश्चित्तं कृत्वा कर्तव्य[त्व]मेव न तु चौलवत्प्रायश्चित्तेन चरितार्थता। एतस्योपनयनोत्तरभावित्वात्।

इति संस्काररत्नमालायां काण्डव्रतोपाकरणोत्सर्जनगोदानप्रयोगः।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिगणेशदीक्षितततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायामष्टमं प्रकरणम् ॥ ८ ॥

अथ नवमं प्रकरणम्।

## अथ बौधायनसूत्रानुसारेण ब्रह्मचारिव्रतलोपप्रायश्चित्तम्।

पूर्वेद्युस्तद्दिने वा ब्रह्मचारी देशकालौ संकीर्त्य मम भिक्षाग्निकार्यलोपजनितदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं बौधायनोक्तप्रायश्चित्ताज्यहोमपूर्वककृच्छ्रत्रयमितं प्रायश्चित्तमहमाचरिष्य इति संकल्पः।

कृच्छ्रत्रयाचरणाशक्तौ तु, अमुकप्रत्याम्नायेनाहमाचरिष्य इति संकल्पवाक्य ऊहः। एवं शौचाचमनसंध्यावन्दनलोपशूद्रादिस्पर्शनकौपीनकटिसूत्रयज्ञोपवीतमेखलाजिनदण्डादित्यागदिवास्वापच्छत्रोष्णीषादिधारणपादुकाध्यारोहणोद्वर्तनानुलेपनाञ्जनाभ्यञ्जनजलक्रीडाद्यूतगीतनृत्यवाद्याद्यभिरतिपाखण्ड्यादिसंभाषणपर्युषितभोजनादिव्रतलोपे तत्तन्निमित्तानुसारेण संकल्प ऊहनीयः।

तत उल्लेखनादिना स्थण्डिलसंस्कारं विधाय तत्र विण्नामानं श्रोत्रियागा-

१ घ. °नोक्तं प्रा°।

रादाहृतं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एही-त्यादिप्राणायामान्तं कृत्वा ब्रह्मचारिव्रतलोपप्रायश्चित्तहोमकर्मणि या यक्ष्य-माणा इत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा प्रधानहोमे—अग्निं वायुं सूर्यं प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निमग्निं पृथिवीं महान्तं चैकैकयाऽऽज्या०, वायुं वायुमन्तरिक्षं महान्तं चैकैकयाऽऽज्याहुत्या० । सूर्य-मादित्यं दिवं महान्तं चैकैकयाऽऽज्याहुत्या० । प्रजापतिं चन्द्रमसं नक्षत्राणि दिशो महान्तं चैकैकयाऽऽज्याहुत्या यक्ष्य इति सर्वत्र महान्तमित्यस्य स्थाने महदिति वा । अग्निं विश्ववेदसं विभावसुं शतक्रतुं चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निं द्वाभ्यामाज्याहुतिभ्यां यक्ष्ये । अग्निं वायुं सूर्यं प्रजापतिं चैकै-कयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वा स्विष्टकृद्धोमे—अग्निं स्विष्टकृतं हुतशेषा-ज्याहुत्या यक्ष्य इत्यादि अङ्गहोमे—वरुणं द्वाभ्यामित्यादि वोक्त्वाऽन्वा-धानोत्कीर्तितपक्षानुसारेण प्रसाधनीदेवीहोमान्तं व्याहृतिहोमान्तं वा कृत्वा प्रधानहोमं कुर्यात् ।

व्यस्तव्याहृतीनामग्निर्ऋषिः[1] । समस्तव्याहृतीनां प्रजापतिर्ऋषिः[2] । अग्निवा-युसूर्यप्रजापतयः क्रमेण देवताः । गायत्र्युष्णिगनुष्टुब्बृहत्यः क्रमेण च्छन्दांसि । ब्रह्मचारिव्रतलोपप्रायश्चित्तप्रधानाज्यहोमे विनियोगः—

" ॐ भूः स्वाहा । अग्नय इदं० । ॐ भुवः स्वाहा । वायव इदं० । ॐ सुवः स्वाहा । सूर्यायेदं० ॐ भूर्भुवः सुवः स्वाहा । प्रजापतय इदं० ।

भूरग्नय इत्यादिमन्त्रचतुष्टयस्य याज्ञिक्यो देवता उपनिषदः । मन्त्रोक्ता देवता यजूंषि । ब्रह्मचारिव्रतलोपप्रायश्चित्तप्रधानाज्यहोमे विनियोगः—

" ॐ भूरग्नये च० पृ० महते च स्वाहा । अग्नयेऽग्नये पृथिव्यै महते चेदं० । ॐ भुवो वायवे चा० ते च स्वाहा । वायवे वायवेऽन्तरिक्षाय महते चेदं० । ॐ सुवरादित्याय च दि० ते च स्वाहा । सूर्यायाऽऽदि-त्याय दिवे महते चेदं० । ॐ भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा । प्रजापतये चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महते चेदं० "

पाहि नो अग्न इत्यादिमन्त्रचतुष्टयस्य याज्ञिक्यो देवता उपनिषद ऋषयः । प्रथमस्याग्निः । द्वितीयस्य विश्ववेदाः । तृतीयस्य विभावसुः । चतुर्थस्य शत-

१ घ. ङ. व्यस्तानां । २ ख. ऋषिः ।

क्रतुः। एकपदा गायत्री छन्दः । ब्रह्मचारिव्रतलोपप्रायश्चित्तप्रधानाज्यहोमे विनियोगः—

"ॐ पाहि नो अग्न एनसे स्वाहा। अग्नय इदं०। ॐ पाहि नो विश्ववेदसे स्वाहा । ॐ विश्ववेदस इदं० । ॐ यज्ञं पाहि विभावसो स्वाहा। विभावसव इदं० । ॐ सर्वं पाहि शतक्रतो स्वाहा । शतक्रतव इदं० "

पुनरूर्जेति द्वयोरग्निरग्निर्गायत्री । ब्रह्मचारिव्रतलोपप्रायश्चित्तप्रधानाज्यहोमे विनियोगः—

"ॐ पुनरूर्जा निवर्तस्व० विश्वतः स्वाहा । अग्नय इदं०। ॐ सह रय्या निव० स्पारि स्वाहा । अग्नय इदं० "।

पुनर्व्यस्तसमस्तव्याहृतीनां पूर्ववदृष्यादिकं स्मृत्वा ताभिराहुतिचतुष्टयं हुत्वा कृच्छ्रत्रयं प्रायश्चित्तमाचरेत् । अशक्तौ गोदानाद्यन्यतमप्रत्याम्नायेन। ततोऽन्वाधानोत्कीर्तनानुसारेण स्विष्टकृदादि वारुणीहोमादि वा होमशेषं समापयेत्। होमशेषं समाप्य वा कृच्छ्रत्रयं कुर्यात् । न त्रिवृदन्नहोमः।

## अथाऽऽपूर्विकतन्त्रेण प्रयोगः ।

पूर्ववत्संकल्पप्रभृति ताः सर्वाः परिग्रहीष्यामीत्येतदन्तं कृत्वा, प्रधानहोमे—अग्निं वायुं सूर्यमित्याद्यैकैकयाऽऽज्याहुत्या यक्ष्य इत्यन्तं पूर्ववदुक्त्वा, अन्वाधानसमिधोऽभ्याधायाग्निं परिस्तीर्य यावदुपयुक्तानि पात्राण्यासाद्य पवित्रकरणादि प्रणीतावर्जं पवित्रे अग्नावाधायेत्यन्तं कृत्वाऽदित इत्याद्यैः परिषिच्य तूष्णीमेकां समिधमभ्याधाय पूर्ववत्प्रधानाहुतीर्हुत्वा कृच्छ्रत्रयात्मकं प्रायश्चित्तं चरित्वा परिस्तरणानि विसृज्यादितेऽन्वमꣳस्था इत्याद्यैः परिषिच्य ब्राह्मणान्संभोज्य विष्णुं संस्मरेत्[2] । होमशेषसमाप्त्यनन्तरं वा कृच्छ्रत्रयम्[1] ।

इति बौधायनसूत्रानुसारि ब्रह्मचारिव्रतलोपप्रायश्चित्तम् ।

देवलस्तु—" कालातिक्रमणे कुर्यात्प्रायश्चित्तं विधानतः ।
कृच्छ्रं द्वादशरात्रं तु हुत्वा चाऽऽज्याहुतीः शतम् ॥
अष्टाविंशतिरष्टौ वा क्रमात्कुर्याद्व्रतानि हि ।
व्यत्यये यावदभ्यस्तं वेदं तावत्पुनः पठेत् ". इत्याह ॥

अयं च होमो गायत्र्या ।

---

१ क. ख. ग. 'त्रयप्रा' । २ क. स्मरेत् ।

" प्रत्येकं कृच्छ्रमेकैकं चरित्वाऽऽज्याहुतीः शतम् ।
हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः " ॥

इत्याश्वलायनोक्तेः ।

अत्र प्रायश्चित्ते स्नानसमानकर्तृकत्वश्रवणाद्बटोरेव कर्तृत्वम् । प्रायश्चित्तोत्तरकालमेतानि समावर्तनेन सह कर्तव्यानीति प्रयोगपारिजाते । तत्र मूलं मृग्यम् । एतच्च प्रायश्चित्तं बुद्धिपूर्वविषयम् ।

यत्तु मनूक्तं—" वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे तु प्रायश्चित्तमभोजनम् " ।

इति तदबुद्धिपूर्वविषयम् ।

अग्निकार्यभिक्षालोपविषये स्मृत्यर्थसारे—

" स्नात्वाऽष्टोत्तरसहस्रं गायत्रीजपः कार्यः ।

भिक्षालोपेऽष्टोत्तरशतम् " इत्युक्तम् ।

एतच्च सकृल्लोपविषयम् । बौधायनोक्तं तु त्र्यादिषष्ठान्तलोपे ।

अत ऊर्ध्वं तु—" भैक्षाग्निकार्ये त्यक्त्वा तु सप्तरात्रमनातुरः ।
कामावकीर्ण इत्याभ्यां हुत्वा चाऽऽज्याहुतिद्वयम् ॥
उपस्थानं ततः कुर्यात्सं मा सिञ्चन्त्वनेन तु " ।

इति याज्ञवल्क्योक्तं द्रष्टव्यम् । एतच्च कार्यव्यासङ्गादिनाऽग्न्यादित्यागे ।

तदभावे तु—" अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् " इति मनूक्तम् ।

ब्रह्मचारिणो मधुमांसाशने प्रायश्चित्तमुक्तं शातातपेन—

" ब्रह्मचारी तु योऽश्नीयान्मधु मांसं तथैव च ।
प्राजापत्यं चरेत्कृच्छ्रं मौञ्जीहोमेन शुध्यति " इति ॥

मौञ्जीहोमः पुनरुपनयनम् ।

देवलः—" ब्रह्मचारी यदाऽश्नीयान्मधु मांसमकामतः ।
त्रिरात्रोपोषितः सम्यग्रात्रिमेकां जले वसेत् " इति ॥

अन्यच्च—" भिक्षाटनमकृत्वा यः सेवकान्नमुपाश्नुते ।
अस्नात्वा चैव यो भुङ्क्ते गायत्र्यष्टशतं जपेत् ॥

१ ह. 'यत्र्याऽष्ट' ।

सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च ।
ब्रह्मचारी तु योऽश्नीयात्त्रिरात्रेणैव शुध्यति " इति ॥

बृहद्यमस्तु—" मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः ।
त्रिरात्रमुपवासोऽत्र प्रायश्चित्तं विधीयते ॥
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति " इति ।

एतदज्ञानविषयम् ।

ज्ञानपूर्वके[1] तु स एवाऽऽह—

" व्रती कामाद्यदा भुङ्क्ते श्राद्धे सूतक एव वा ।
प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् " इति ॥

अनृतवदनप्रायश्चित्तमाह गर्गः—

" अनृतं यदि वै ब्रूयाद्द्विजो मोहादनापदि ।
त्रिरात्रमेकरात्रं वा ब्रह्मचर्यव्रतं चरेत् " इति ॥

शौचाकरणप्रायश्चित्तमापस्तम्ब आह—

" मूत्रोच्चारं द्विजः कृत्वा ह्यकृत्वा शौचमात्मनः ।
मोहाद्भुक्त्वा त्रिरात्रं तु यवान्पीत्वा विशुध्यति ॥
मूत्रं कृत्वा द्विजो मार्गे स्मृतिभ्रंशाज्जलं पिबेत् ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति " इति ॥

मूत्रपदं पुरीषादेरुपलक्षणम् ।

विण्मूत्रोत्सर्गकाले यदि कर्णे यज्ञोपवीतं प्रमादान्न धृतं तदा भरद्वाज आह—

" उपवीतमधृत्वा यो मलमूत्रे समुत्सृजेत् ।
उपवीतं तदुत्सृज्य पश्चादन्यन्नवं तदा " इति ॥

अधृत्वेत्यत्र कर्ण इति शेषः ।

" पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेत् "

इति स्मृत्यन्तरोक्तेः । तदेत्यनन्तरं धारयेदिति शेषः ।

स्मृतिसारे—" कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् ।
विण्मूत्रं तु गृही कुर्याद्यद्वा कर्णे समाहितः " इति ॥

एतच्च कर्णे निधानमेकवस्त्रविषयम्, यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा मूत्रपुरीषोत्सर्गं कुर्यादितिशङ्खोक्तेरिति माधवः ।

---

१ घ. पूर्वे तु ।

अनुदकमूत्रपुरीषकरणे सुमन्तुः—

" अनुदकमूत्रपुरीषकरणे सद्यः स्नानं
घृतकुशहिरण्योदकपानं च " इति।

घृतयुक्तं कुशस्त्रावितोदकं घृतयुक्तं हिरण्यस्त्रावितोदकं च पिबेदित्यर्थः। घृतकुशहिरण्योदकपानस्य प्रायश्चित्तार्थत्वाद्भोजननिवृत्तिः।

" पुरीषमूत्रोत्सर्गं तु कुर्यादनुदकं यदि।
एकाहं क्षपणं कृत्वा सचैलं स्नानमाचरेत् " ॥

इति जातूकर्ण्यवचनसंवादादयमर्थो लभ्यते। सचैलं स्नानं कृत्वैकाहं क्षपणं चरेदित्यन्वयः। क्षपणमुपोषणम्। अथवा पानशब्दस्य घृत उदके चान्वयः। तेन घृतप्राशनं पृथक्कर्तव्यं भवति।

यत्त्वाङ्गिरसोक्तम्—

" अनुदकमूत्रपुरीषकरणे सचैलं स्नानं व्याहृतिहोमश्च " इति।

तदकामतो द्रष्टव्यम्।

मरीचिः—" ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुतेऽथवा।
गायत्र्यष्टसहस्रेण प्राणायामेन शुध्यति " इति॥

सर्वथा जलाभावे वेगस्य च प्राप्तौ वेगधारणं निषेधति मनुः—

" देशं कालं समासाद्य अवस्थामात्मनस्तथा।
धर्मशौचेऽनुतिष्ठेत न कुर्याद्वेगधारणम् " इति॥

धर्मशौचेऽनुतिष्ठेतेत्यत्र प्रकृतिभावाभाव आर्षः।

## अथावकीर्णिप्रायश्चित्तम्।

तत्रेदं धर्मसूत्रम्—

" गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन
यजेत तस्य शूद्रः प्राश्नीयात् " इति।

यो ब्रह्मचारी स्त्रियमुपेयात्सोऽवकीर्णी गर्दभेन निर्ऋतिं यजेत पाकयज्ञेन स्थालीपाकविधानेन। तस्य गर्दभस्य सर्पिष्मद्धविरुच्छिष्टं शूद्रः प्राश्नीयात्। तेन ब्राह्मणं विद्यावन्तं परिवेवेष्टीत्यस्यापवाद इति व्याख्यातमुज्ज्वलाकृता।

वाधूलवैखानसावपि—

" यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमाल-
भेत भूमौ पशुपुरोडाशश्रपणम् " इति।

१ ह. 'यत्याऽष्ट'।

मनुरपि—" अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।
पाकयज्ञविधानेन यजेत निर्ऋतिं निशि " इति ॥

प्रायश्चित्तसूत्रेऽपि—

" यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेत भूमावेककपालं पशुपुरोडाशं श्रपयित्वाऽप्स्ववदानैश्चरन्ति नैर्ऋतः प्राजापत्यो वा रक्षोदेवत इत्येकेषां यमदेवत इत्येकेषाम् " इति ।

आहिताग्निर्ब्रह्मचर्यकाले स्त्रियमुपेयात्तस्यायं विधिः । आहिताग्न्यधिकारात् । अथवा प्रसिद्धब्रह्मचारिण एव ग्रहणं रूढेर्बलीयस्त्वात् ।

उक्तं च ब्रह्मचारिधर्मेषु—

" गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेत " इति ।

न चैवमस्याऽऽनर्थक्यं देवताविकल्पार्थत्वात् । न चाऽऽहिताग्न्यधिकारे वचनानुपपत्तिः । देवताभेदश्रौतप्रयोगविधानार्थत्वेनोपपत्तेः । तस्माद्ब्रह्मचर्यार्थत्वेऽपि न दोषः ।

तदुक्तं भरद्वाजेन—

" यो ब्रह्मचारी स्त्रियमुपेयादिति कस्यायं वाद
आहिताग्नेरित्येकेऽनाहिताग्नेरित्यपरे " इति ।

तत्र त्वाहिताग्नेर्व्रातपत्यादि प्रायश्चित्तं द्रष्टव्यम् ।

यथोक्तम्—" व्रत्येऽहनि मांसं नाश्नाति न स्त्रियमुपैति यदि दीक्षितोऽवकिरेत् " इत्यादि ।

भूमावित्यनेनाग्न्यायतनमध्ये प्रकृतितो हविःश्रपणं प्राप्तं तद्बाधित्वाऽनेनाग्न्यायतनाद्बहिःश्रपणं विधीयते। तेनाग्न्यायतनाद्बहिरेवैकं कपालमङ्गारोपरि संस्थाप्य तदुपर्यङ्गारं निधाय वेदेनाङ्गारानभ्यूहेत् । अथवाऽऽयतनमध्य एव भूमौ न भस्मनीत्येतदर्थम्। न च भूमाविति कपालबाधनार्थमिति वाच्यम्। एककपालपदवैयर्थ्यापत्तेः। एकस्मिन्कपाले संस्कृतः पुरोडाश एककपालस्तं तस्मिन्कपाले श्रपयेत्। श्रपयित्वाऽप्स्ववदानैर्वपापुरोडाशाङ्गावदानैश्चरेयुः । न चैकादशावदानान्यवद्यतीति श्रुत्याऽवदानशब्देनाङ्गानामेव बोधनेन कथमत्र तदितरपुरोडाशप्रचारेऽपामधिकरणत्वमिति वाच्यम् । श्रपणोत्तरभावित्वेन पुरोडाशप्रचारेऽप्यपामधिकरणत्वे बाधकाभावात् । न चैवं पुरोडाशप्रचार एवाप्स्वस्त्वङ्गप्रचारस्तु

१ घ. ङ. 'ताग्निरि' ।

लौकिकाग्नाविति वाच्यम् । अवदानैरितिबहुवचनवैयर्थ्यापत्तेः । न चैवं पुरोडाशाङ्गप्रचारावेवाप्स्वास्ताम् । वपायास्तु श्रपणपूर्वभावित्वाल्लौकिकाग्नावेव प्रचार इति वाच्यम् । पशुमालभ्य पुरोडाशं निर्वपतीतिश्रुतिविहितपक्षे वपाप्रचारस्यापि पशुपुरोडाशश्रपणानन्तरभावित्वसंभवात् । वस्तुतस्तु वपाया अवदानशब्देनाग्रहणादग्नावेव होमः । अस्ति चात्र साधकम् , यदि वपा हविरवदानं वा स्कन्देदिति वपायाः पृथग्ग्रहणं क्त्वाप्रत्ययस्वरसश्च । अप्स्विति वचनं प्रकृतिं प्राप्तस्याग्नौ प्रचारस्य बाधनार्थम् । प्रयाजादीनामप्स्वेव प्रचारः प्रधानसदेशत्वादङ्गानाम् । न चावभृथवद्यत्राऽऽपस्तत्र गच्छन्तीतिवचनाभावान्न गमननियमः । तेनोत्तरवेदिस्थानेऽपः संस्थाप्यापि कर्म भवति । तत्रावभृथ इव वेदेध्मादीनामर्थलुप्तानां निवृत्तिर्यथार्थं मन्त्राणामूहश्च द्रष्टव्यः । वपाया अग्नौ प्रचारपक्षेऽपि प्रयाजादीन्यप्स्वेव “ विप्रतिपिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ” इति जैमिनीयसूत्रात् । “ मुख्यत्वाद्भूयस्त्वम् ” इत्याचार्योक्तेश्च[1] । तथा च विरोधेऽनेकेषामनुग्रहो न्याय्य[2] इति सिध्यति । पञ्चदशरात्रेऽग्निष्टुत्प्रथममहस्तत्र नाम्नैकाहाग्निष्टुद्धर्मातिदेशादाग्नेयी सुब्रह्मण्या, ततो ज्योतिरादित्र्यह एकाहे ज्योतिरादिचोदकादैन्द्री । साऽवशिष्टैकादशस्वहःसु द्वादशाहातिदेशादैन्द्र्येव[3] । तत्रोपसत्कालीनसुब्रह्मण्यायां तत्रभूतायामनियमः । मुख्यत्वाद्वाऽग्निष्टुद्धर्मानुग्रह इति प्राप्ते भूयोऽनुग्रहायैन्द्रीति भाष्यकृत् । वार्तिककारस्तु[4]—“अन्यदेवत्यया[5]ऽन्यदेवतायाः संस्कारासिद्धेर्भेदेनाऽऽह्वानस्यैव युक्तत्वादतो नैतदुदाहरणं किंत्वग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधि मधु घृतमापो धानास्तत्संसृष्टं प्राजापत्यं पशुकाम इति । तत्राऽऽग्नेयस्य धानानां चाऽऽग्नेयविकारत्वादविरोधः । ऐन्द्रस्य दध्न ऐन्द्राग्नसांनाय्यविकारत्वाद्दर्शधर्मत्वम् । मधुघृतापां तूपांशुयाजविकारत्वात्पौर्णमासीधर्मकत्वम् । तत्र सहप्रयोगे वार्त्रघ्नवृधन्वन्मन्त्रयोराज्यभागयोरन्यतरानुष्ठानं मुख्यत्वादैन्द्रदध्नोस्तद्धर्मानुग्रह[7] इति प्राप्ते भूयसां मध्वादीनां वार्त्रघ्नानुग्रहाय तावेव कार्यौ[8]” इत्याह ।

न च “ अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि ” इत्येतदधिकरणस्य प्रवृत्तिः, तथा चैकस्य द्यावापृथिवीयैककपालपुरोडाशीयपुष्पितबर्हिषः सर्वोद्देशेन ग्रहणमिवात्र वैपरीत्यमस्त्विति वाच्यम् । एतस्य न्यायस्य परस्पराविरोध एव प्रवृत्तेः, प्रकृते विरोधस्यैव सत्त्वेनैतस्य न्यायस्यासं-[9]

१ ग घ. ङ. °श्च । वि° । २ घ. ङ. न्याय्यः । प° । ३ ग घ. ङ. °दशाहः° । ४ क. °कृत्तु ' अ° । ५ ग. घ. ङ. °नस्येव । ६ क. °नात्ततसं° । ७ क °दैन्द्रं द° । ८ क. °कया° । ९ क. °स्यानवतारात् । इत्थमयं न्यायः— आ° ।

भवात् । स च न्याय इत्थम्— आग्रयण ऐन्द्राग्नवैश्वदेवद्यावापृथिव्यानि हवींषि । तत्र द्यावापृथिव्ये वैश्वदेविकपर्वगतद्यावापृथिव्यविकारत्वात्पुष्पितं बर्हिः प्राप्तम् । इतरेषां तु बर्हिर्मात्रम् । तत्र मुख्यत्वाद्भूयस्त्वाच्च पुष्पितमेव बर्हिर्ग्राह्यमिति प्राप्ते पुष्पितबर्हिर्ग्रहणेऽप्यन्येषामवैगुण्यादपुष्पितग्रहणे द्यावापृथिव्यस्य वैगुण्यात्पुष्पितस्यैव नियमः । यथा शिष्यस्य कांस्यगुरूच्छिष्टभोजननियमानुरोधेन गुरोः कांस्यभोजननियमे न कश्चिद्विरोध इति सिद्धान्तः। प्रकृते तथात्वाभावान्नात्र कांस्यभोजिन्यायः । अवधिकरणकौ प्रचारौ द्वावग्न्यधिकरणक एक इत्यस्त्यवधिकरणकप्रचारस्यानेकत्वमिति । अथवा वपाप्रचारो नास्त्येवात्र ।

तथा च भरद्वाजः—"यो ब्रह्मचारी स्त्रियमुपेयात्स रौद्रं गर्दभमालभेत तस्यावदानैरप्सु प्रचरन्ति नास्य वपया प्रचरन्ति न पशुपुरोडाशो भवतीडान्तो भवति शंयुवन्तो वा नैर्ऋतः प्राजापत्यो वा" इति ।

सूत्रकृता निर्ऋतिप्रजापतिरक्षोयमान्यतमदेवताया एव विहितत्वाद्रुद्रदेवता नात्रेष्टा । एवं पशुपुरोडाशनिषेधोऽपि न, भूमावेककपालं पशुपुरोडाशं श्रपयित्वेति तस्य विहितत्वात् । अस्मिन्कर्मणि निर्ऋतिः प्रजापती रक्षांसि यम इत्येतासां देवतानां मध्येऽन्यतमा देवता । प्रायश्चित्तसूत्र आलभेतेतिप्रयोगाद्यागः प्राप्यते । निर्ऋतिदेवतत्वपक्षे धर्मसूत्रे पाकयज्ञस्य विधानात्पाकयज्ञविधिः । प्रायश्चित्तसूत्रविधानात्पशुपक्षोऽपि । प्रजापत्यादिदेवतात्वपक्षे पशुपक्ष एव । अयं च पाकयज्ञविधिर्लौकिकाग्नावेव । "पाकयज्ञविधौ लौकिकाग्नावकवकीर्णिप्रायश्चितम्" इति मानवात् । प्रायश्चित्तसूत्रोक्तरीत्या विध्यनुष्ठानेऽपि त्रीँल्लौकिकाग्नीन्संस्थाप्य तेष्वेव यागो न त्वाधानम्, निषादरथकारवदाचार्येणाऽऽधानस्याविधानात् । "अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्त[काल]त्वात्" इति जैमिनिसूत्रात् । "वाऽवकीर्णिनो गर्दभेज्या लौकिके" इति कात्यायनसूत्राच्च यो ब्रह्मचार्यवकिरेत्स गर्दभं पशुमालभेतेति यागोऽपि लौकिक एवाग्नौ । लौकिक इत्येकवचनं जातौ । एकस्मिन्नेवाग्नौ सर्वकार्याणीति केचित् । एतद्यागेन ब्रह्मचर्यभ्रंशसमाधानं विना विवाहो न संभवति । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेदितिवचनात् । कात्यायनसूत्रे वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अयं च निशि चतुष्पथे कर्तव्यः "अवकीर्णी तु काणेन" इत्युदाहृतमनुवचनात् । पाकयज्ञपक्षे निश्यनुष्ठानं न यागपक्षे, दिवाकीर्त्यो वषट्कार इत्याश्व-

१ ग. घ. ङ. °पि । प्राजा° । २ क. °र्वाग्निका° । ३ ग. घ. ङ. °वाहालभवान् । अ° । ४ क. °पक्षाने° । ५ घ. ङ. °कीर्त्यो व° ।

लायनसूत्रे रात्रौ यागनिषेधात् । न चैतदेव निशि कर्तव्यतायाः प्रापकमस्त्विति वाच्यम् । पाकयज्ञविधानेनेत्येतद्विरोधापत्तेः । निर्ऋते रक्षोधिपतित्वात् । निर्ऋतेर्देवतात्वपक्षे चाप्येवमेव । रक्षोदेवतात्वपक्षेऽपि तथा । रक्षसां रात्रिसंचारित्वात् । मनुवचने पाकयज्ञशब्दे साहचर्यायजिधातोः प्रयोगो गौणः । तत्रेति विहाय तस्येतिवचनेन पशुधर्मपक्षेऽपि शूद्रकर्तृकमेव प्राशनमिति बोध्यते । यदि पाकयज्ञतन्त्र एव शूद्रकर्तृकप्राशनमिष्टं भवेत्तदा तत्रेति पाकयज्ञतन्त्रकमेव कर्म निर्दिश्येत । अतः पाशुकतन्त्रपक्षेऽपि शूद्रकर्तृकमेव प्राशनम् ।

हारीतेनात्र विशेष उक्तः—

"स्त्रीष्ववकीर्णी निर्ऋत्यै चतुष्पथे गर्दभेन पशुना यजेत पाकयज्ञधर्मेण भूमौ पशुपुरोडाशश्रपणमप्स्ववदानैः प्रचर्य जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि काम कामाय स्वाहा कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि काम कामाय स्वाहेति" [ इति । ]

अवदानप्रचारोत्तरमेताभ्यां मन्त्राभ्यां होम उक्तः । कतिधाऽवकीर्णीत्यस्मिन्खण्डे तु, अमावास्यायां रात्रावग्निप्रणयनोपसमाधानपूर्वकं कामावकीर्णोऽस्मि कामाभिद्रुग्धोऽस्मीत्येताभ्यामाज्येनाऽऽहुतिद्वयं तदनन्तरं प्रयताञ्जलेरीषत्तिर्यग्भूतस्य सं मा सिञ्चन्त्वित्यनेन प्रणीताग्नेस्त्रिरभिमन्त्रणं वरदानं चोक्तम् ।

इत्यवकीर्णिप्रायश्चित्तम् ।

---

## अथ श्वदष्टप्रायश्चित्तम् ।

तत्र पराशरः—" ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पयः पिबेत् ।
गृहस्थस्तु द्विरात्रं वाऽप्येकाहं चाग्निहोत्रवान् ॥
नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् ।
स्यादेतत्त्रिगुणं वक्त्रे मस्तके तु चतुर्गुणम् " इति ॥

एतत्प्रायश्चित्तं नैष्ठिकेन सर्वं द्विगुणं कार्यम् ।

तथा च हारीतः—

" उपकुर्वंस्तु यः कुर्यात्कामतोऽकामतोऽपि वा ।
तदेव द्विगुणं कुर्याद्ब्रह्मचारी तु नैष्ठिकः " इति ॥

१ ख. 'शब्दसा' । २ घ. ङ. 'णः । तिविहायस्ये' । ३ ग. 'यस्ये' । ४ ङ. हारिते' । ५ क. 'के च च' । ६ क. 'न द्वि' ।

शातातपः—" आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न तस्यास्ति येन शुद्धो भवेत्तु सः " इति ॥

अस्मिन्वाक्ये पुनरितिश्रवणादभ्यासे प्रायश्चित्तं नास्त्येव तस्य किंतु सर्वदा सोऽशुचिरेवेति ।

---

## अथ काण्डव्रतलोपप्रायश्चित्तम् ।

कृतनित्यक्रियो ब्रह्मचारी प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम काण्डव्रतलोपजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रतिकाण्डव्रतं होमपूर्वकमेकैककृच्छ्रात्मकं प्रायश्चित्तमहमाचरिष्ये । अशक्तौ त्वमुकप्रत्याम्नायेनाहमाचरिष्य इति संकल्प्योल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय तत्र विण्नामानं[1] लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा काण्डव्रतलोपप्रायश्चित्तहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तं प्रसाधनीदेव्यन्तं वोक्त्वा प्रधानहोमे प्रतिकाण्डव्रतं सवितारं गायत्र्याऽष्टोत्तरसहस्रसंख्याभिरष्टोत्तरशतसंख्याभिर्वाऽऽज्याहुतिभिर्यक्ष्ये । अङ्गहोमे वरुणमित्यादि अग्निं स्विष्टकृतं हुतशेषाज्याहुत्या यक्ष्य इत्यादि वोक्त्वाऽन्वाधानोत्कीर्तितपक्षानुसारेण व्याहृतिहोमान्तं प्रसाधनीदेवीहोमान्तं वा कृत्वा प्रधानहोमं कुर्यात् । गायत्र्या विश्वामित्र ऋषिः । सविता देवता । गायत्री छन्दः । काण्डव्रतलोपप्रायश्चित्तप्रधानाज्यहोमे विनियोगः । "ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्स्वाहा " इति प्रतिकाण्डव्रतं गायत्र्या यथोक्तसंख्ययाऽऽहुतीर्जुहुयात् । सवित्र इदमिति त्यागः ।

ततः प्रत्येकं कृच्छ्रात्मकं प्रायश्चित्तं विदध्यात् । अशक्तौ गोदानाद्यन्यतमप्रत्याम्नायेन । तत इमं मे वरुणेत्यादि स्विष्टकृदादि वा होमशेषं समापयेत् । न त्रिवृदन्नहोमः । ततो ब्राह्मणभोजनं विधाय कर्मसाद्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् ।

आपूर्विकपक्षेण वा प्रयोगः ।

पूर्ववत्संकल्पप्रभृति ताः सर्वाः परिग्रहीष्यामीत्येतदन्तं कृत्वा प्रधानहोमे प्रतिकाण्डव्रतं सवितारं गायत्र्याऽष्टोत्तरसहस्रसंख्याभिरष्टोत्तरशतसंख्याभि-

[1] ग. विटनामा° ।

वाऽऽज्याहुतिभिर्यक्ष्य इत्युक्त्वाऽन्वाधानसमिधोऽभ्याधायाग्निं परिस्तीर्य यावदुपयुक्तानि पात्राण्यासाद्य पवित्रकरणादि पवित्रे अग्नावाधायेत्यन्तं कृत्वाऽदितेऽनुमन्यस्वेत्यादिभिरग्निं परिषिच्य तूष्णीमेकां समिधमभ्याधायान्वाधानोत्कीर्तितसंख्यया गायत्र्याऽऽहुतीर्हुत्वा प्रतिकाण्डव्रतं कृच्छ्रात्मकं प्रायश्चित्तं कृत्वा परिस्तरणानि विसृज्यादितेऽन्वमंस्था इत्यादिभिः परिषिच्य ब्राह्मणान्संभोज्य विष्णुं संस्मरेत् ।

ततः शुभे दिने काण्डव्रतोपाकरणं कृत्वा काण्डाध्ययने जाते काण्डव्रतोत्सर्जनं कृत्वा समावर्तनं कुर्यात् ।

इति काण्डव्रतलोपप्रायश्चित्तम् ।

## अथ यज्ञोपवीतनाशप्रायश्चित्तम् ।

यज्ञोपवीते त्रुटिते कटेरधस्ताद्गतेऽभ्यङ्गोदधिस्नानपितृमातृक्षयाहान्विना क्षालनार्थमपि कण्ठादुत्तारिते मूत्रपुरीषोत्सर्गकाले कर्णे यज्ञोपवीताधारणे रक्तश्लेष्मसुरामांसविण्मूत्रादिभिरुपहते तस्य त्यागं कृत्वा प्रायश्चित्तहोमं कृत्वा नूतनं यज्ञोपवीतं धारयेत् । स च यथा—प्रायश्चित्तहोमकर्ता त्रिवृत्सूत्रं वासो वा यज्ञोपवीतार्थे धृत्वा स्नात्वाऽहतवस्त्रपरिधानादि कृत्वा प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य यज्ञोपवीतनाशजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्तहोमं करिष्य इति संकल्प्य स्थण्डिलं गोमयेनोपलिप्योल्लेखनादिविधिना संस्कारं विधाय लौकिकमग्निं विध्नामानमग्निं प्रतिष्ठापयामीति प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा यज्ञोपवीतनाशप्रायश्चित्तहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तं प्रसाधनीदेव्यन्तं वोक्त्वा प्रधानहोमे गायत्र्या सवितारमष्टोत्तरसहस्रसंख्याभिरष्टोत्तरशतसंख्याभिर्वा घृताक्ततिलाहुतिभिर्यक्ष्य इत्युक्त्वाऽङ्गहोमे वरुणं द्वाभ्यामित्याद्यग्निं स्विष्टकृतं हुतशेषाहुत्या यक्ष्य इत्यादि वोक्त्वाऽन्वाधानोत्कीर्तनानुसारेण व्याहृतिहोमान्तं प्रसाधनीदेवीहोमान्तं वा कृत्वाऽऽज्यपर्यग्निकरणकाले तिलानामपि पर्यग्निकरणम् ।

ततो गायत्र्याः पूर्ववदृष्यादि स्मृत्वा यज्ञोपवीतनाशप्रायश्चित्ततिलहोमे विनियोग इति विनियोगं च स्मृत्वा विकनिष्ठा तु हंसी स्यादित्येवंरूपया हंसीमुद्रया, ऋज्व्यौ कनिष्ठातर्जन्यावितरे साङ्गुष्ठे मीलिते मृगीतिमृगीमुद्रया वा

घृताक्ततिलान्गायत्र्याऽष्टोत्तरसहस्रमष्टोत्तरशतं वा हुत्वाऽङ्गहोमादि स्विष्टकृदादि वा सर्वं होमशेषं समापयेत् । नात्र त्रिवृदन्नहोमः । कर्मणः संपूर्णतासिद्ध्ये गुरवे गां दत्त्वा ब्राह्मणभोजनं कृत्वा विष्णुं संस्मरेत् । अथवाऽऽपूर्विकतन्त्रेण होमः ।

शाखाविशेषेणोपवीतस्य क्षालनार्थं कण्ठादुत्तारणनिषेधापवादमाह देवलः—

" मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम् ।
नोद्धरेच्च ततः प्राज्ञो य इच्छेच्छ्रेय आत्मनः ॥
सकृच्चोत्तारणात्तस्य प्रायश्चित्ती भवेद्द्विजः ।
तैत्तिरीयाः कठाः काण्वाश्चरका वाजसेयिनः ॥
कण्ठादुत्तार्य सूत्रं तु कुर्युर्वै क्षालनं द्विजाः ।
बह्वृचाः सामगाश्चैव ये चान्ये याजुषाः स्मृताः ॥
कण्ठादुत्तार्य सूत्रं तु पुनरर्हन्ति संस्क्रियाम् ।
अभ्यङ्गे चोदधिस्नाने मातापित्रोः क्षयेऽहनि ॥
कण्ठादुत्तार्य सूत्रं तु कुर्युर्वै क्षालनं द्विजाः " इति ॥

आथर्वणानां तूत्तारणं कृताकृतमर्थात् । संस्क्रियां मन्त्रेणोपवीतान्तरधारणम् । अभ्यङ्ग इत्येतद्वाक्यचोदितविषयेष्वेवैषा व्यवस्था ज्ञेया ।

ततो नूतनयज्ञोपवीतधारणं कृत्वा द्विराचम्य संध्योपासनादि नित्यं कर्म कुर्यात् । गृहस्थाश्रमिभिर्वानप्रस्थैश्चेदमेव प्रायश्चित्तं कार्यम् ।

अत्र मूलं स्मृतिरत्नावल्याम्—

" उपवीतविनाशे तु गायत्र्या जुहुयात्तिलान् ।
अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा " इति ॥

हारीतस्तु मनोव्रातपतीभिश्चतस्र आज्याहुतीर्हुत्वा पुनः प्रतीयादित्याह । 'ॐ मनोज्योति० या इष्टा उप० घृतेन स्वाहा' इत्यनयैकाऽऽहुतिः । 'ॐ त्वमग्ने व्रत० यद्वो वयं प्र० व्रतानुबिभ्रद्व्रतपा अदाभ्यः० ' इत्येताभिस्तिसृभिर्व्रातपतीभिस्तिस्र आहुतयः । इत्येता आहुतीर्हुत्वा पुनर्नूतनं यज्ञोपवीतं समन्त्रं धारयेदित्यर्थः । एतच्चाशक्तस्य ज्ञेयम् । यज्ञोपवीते वामस्कन्धादवरोहिते कूर्परस्थानं गते मणिबन्धस्थानं गते वा तद्यज्ञोपवीतं पूर्वस्थाने निवेश्य यथाक्रमं त्रिवारं षड्वारं द्वादशवारं वा प्राणायामं कुर्यात् । वामहस्तव्यतीते तु तद्यज्ञोपवीतं पूर्ववद्विसृज्यान्यानि पूर्ववद्धारयेत् । (*कण्ठे यज्ञोपवीतान्तरसत्त्व एतत्प्रायश्चित्तं नेति

* धनुश्चिह्नान्तर्गतं क. पुस्तक एव ।

केचित्। विनाशस्य निमित्तत्वात्प्रायश्चित्तं भवत्येवेत्यन्ये।) यः कोपेन बलात्कारेण वा स्वधृतं यज्ञोपवीतं छिनत्ति चेत्पूर्ववन्नवतन्तुमात्रं धृत्वा नद्यादौ स्नात्वाऽन्यानि यज्ञोपवीतानि पूर्ववद्धृत्वा छिन्नं पूर्ववद्विसृजेत्। छेदनपापविशुद्ध्यर्थमष्टोत्तरसहस्रं गायत्रीं जपेत्। अत्र महापातकयुक्तस्तु तत्पातकप्रायश्चित्तकरणपर्यन्तं संस्कृतं यज्ञोपवीतं विहाय लौकिकं सूत्रं धारयेत्। ब्राह्मणब्रुवकानीनकुण्डगोलकव्रात्यकुष्ठ्यवकीर्णिनस्त्वसंस्कृतं यज्ञोपवीतं धारयेयुरित्याह्निकपारिजाते।

जीर्णस्य परित्यागे विशेषस्तत्रैव—

"जीर्णं सरिदब्धितटाकाद्यन्यतमोदके समुद्रं गच्छ स्वाहेतिमन्त्रेण प्रणवेन व्याहृतित्रयेण वा विसृजेत्" इति।

## अथ कमण्डलुभङ्गप्रायश्चित्तम्।

तत्रेदं बौधायनधर्मसूत्रम्—

"भग्ने कमण्डलौ व्याहृतिभिः शतं जुहुयाज्जपेद्वा भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति भिन्नमभिमन्त्र्य कपालानि संगृह्याप्सु निक्षिप्य सावित्रीं दशावरां जपित्वा पुनरेवान्यं गृह्णीयादेतत्ते वरुण पुनरेतु मामोम्" इति।

## अथ समावर्तनम्।

तत्रेदं गृह्यम्—"अधीत्य वेदᳲ स्नानम्" इति। वेदो मन्त्रब्राह्मणात्मकः। "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति सूत्रात्। कर्मविधानं ब्राह्मणम्। अर्थवादादीनां तु ब्राह्मणशेषत्वम्। "कर्मविधानं ब्राह्मणं तच्छेषोऽर्थवादो निन्दा प्रशंसा परकृतिः पुराकल्पश्च" इति सूत्रात्।

भद्रादिदशप्रश्नानामरण्येऽध्येतव्यत्वादारण्यक इति संज्ञा न तु पृथक्कश्चन वेदभागोऽयम्। स्नानशब्देन समावर्तनम्। धर्मसूत्रे विशेषः—"विद्यया स्नातीत्येके तथा व्रतेनाष्टाचत्वारिंशत्परिमाणेन विद्या व्रतेन च" इति वेदविद्या विद्या तया संपन्नः स्नानं कुर्यादित्येके मन्यन्ते। अष्टाचत्वारिंशद्ग्रहणं गृह्योक्तस्य चतुर्विंशतिरित्यादेरुपलक्षणम्। अष्टाचत्वारिंशदादिपरिमाणेन [व्र]तेन वा संपन्नः स्नायादसंपन्नोऽपि विद्यया। विद्या व्रतेन च, विद्येति 'सुपां सुलुक्' इत्यादिना तृतीयान्तम्। विद्यया व्रतेन चोभाभ्यां संपन्नः स्नायादिति चैके

मन्यन्ते । एवमधीत्य वेद॰ स्नानं तद्व्याख्यास्याम इत्यत्र वेदमित्युपलक्षणं व्रतस्य ।

अत्र याज्ञवल्क्यः—

" वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् " इति ॥

अत्र व्रतशब्देनाऽऽचार्यकुलवास्यश्नाति क्षारं लवणमित्यादयो ब्रह्मचारिधर्मा उच्यन्ते । तेषु हि कालपरिमाणस्य श्रुतत्वात् । दृश्यते च तेषु व्रतशब्दः । यथा व्रतेषु समर्थः स्याद्यानि वक्ष्याम इति । न तु वेदव्रतानि । तेषां तत्तत्प्रदेशाध्ययनशेषतया तदभावेऽभावाद्वेदं व्रतानि वेतिविकल्पानुपपत्तेः । अतः कालविशेषावच्छिन्नानि व्रतानि वेदमुभयं वा पारं नीत्वेत्यर्थ इति व्याख्यातमुज्ज्वलाकृता । " जातपुत्रः कृष्णकेशोऽग्नीनादधीत " इतिश्रुतिविरोधपरिहारायाष्टाचत्वारिंशतमिति पक्ष आधानानधिकारिणि पक्षान्तराणि त्वधिकारिणीति व्यवस्थां केचिद्वदन्तीत्यपि तेन मातृदत्तेन चोक्तम् ।

मनुः—" वेदानधीत्य वेदौ वा वेदं वाऽपि समाहितः ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् " इति ॥

एवं चाधीत्य वेद॰ स्नानमित्यत्र वेदमित्येकवचनमविवक्षितम् । एतच्च स्नानं गुरवे वरं दत्त्वा कार्यम् ।

तथा च याज्ञवल्क्यः—

" गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् " इति ॥

अत्रापि वेदमित्येकवचनमविवक्षितम् ।

वरस्वरूपे विशेषोऽत्र मनुनोक्तः—

" स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ।
क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमन्ततः ॥
धान्यं वासांसि शाकं वा गुरवे प्रीतिमावहन् " इति ।

आज्ञप्तः समावर्तनायानुज्ञातः । क्षेत्रं सस्यवत् । छत्रोपानद्द्रव्ययोः सहितयोरेवोपादानं द्वंद्वोपादानात् । वासांसि त्रीणि । एतेषां मध्ये यदेव गुरोः प्रियं तदेव दद्यादित्याशयः । गुरवे प्रीतिमावहन्नित्यनेन दानमन्तरेणैव गुरोः प्रीतौ केवलं तदनुज्ञयैव समावर्तनं कुर्यादित्यपि सूच्यते ।

अत एवोक्तं संग्रहे—

" तेनोक्तं च तथा कृत्वा स्नानं शिष्यः समाचरेत् ।
अलमर्थेन मे वत्स त्वद्गुणैरस्मि तोषितः ।
गृहान्गच्छानुजानामीत्यनुज्ञातोऽथवाऽऽचरेत् " इति ॥

तेनोक्तं गुरुणोक्तम् । एतदानं गुरुमीत्यर्थं न विद्यानिष्क्रयः । वेदविद्यार्हस्य मूल्यस्यासंभवात् । तथा च च्छन्दोगश्रुतिः—" यद्यप्यस्मादिळामद्भिः परिगृहीतामन्नेन पूर्णां दद्यादेतदेव ततो भूयः " इति । ईळा पृथिवी । एतद्विद्याग्रहणम् ।

तापनीयश्रुतिरपि—

" सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पते " इति ।

माधवीये हारीतोऽपि—

" एकमप्यक्षरं यस्तु गुरुः शिष्ये नियोजयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वाऽप्यनृणी भवेत् " इति ॥

आहिताग्निश्चेद्गुरुः " यद्यश्वं प्रतिगृह्णीयात्तदा निष्क्रयस्य षष्ठांशं द्वादशांशं वा ब्राह्मणाय दत्त्वा यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान्निर्वपेत् " इतिश्रुतिविहितामश्वप्रतिग्रहेष्टिं कुर्यात् ।

गृह्याग्निमांस्तु तत्स्थाने स्थालीपाकान्कुर्यात्—

" अश्वप्रतिग्रहं कृत्वा चरेच्चान्द्रायणत्रयम् ।
लक्षत्रयं वा गायत्र्या जपेद्विद्वान्समाहितः ॥
त्रिगुणं वाचयेद्वेदं शतं विप्रांश्च भोजयेत् "

इत्यरुणस्मृत्युक्तस्य शक्तौ सत्यां समुच्चयः । दातुरियमिष्टिरिति मीमांसकमतं तु न सत्याषाढसूत्रानुसारिणामिष्टम् । " ऋत्विजोऽश्वप्रतिग्रहे वारुणी " इति काम्येष्टिप्रकरण ऋत्विज एव तस्या विधानात् । ऋत्विज इति षष्ठ्येकवचनम् । एकत्वमत्राविवक्षितमुद्देश्यगतत्वात् । ग्रहं संमार्ष्टीतिवत् ।

वेदाध्ययनोत्तरं तदर्थमधिगम्यैव समावर्तनं कर्तव्यम् ।

" वेदान्वेदांस्तथा वेदौ वेदं वाऽपि समाहितः ।
अधीत्य चाधिगम्यार्थं ततः स्नायाद्द्विजोत्तमः " इति कौर्मोक्तेः ।

प्रथमं वेदानितिवचनं चतुष्ट्वाभिप्रायं, द्वितीयं त्रित्वाभिप्रायम् । अर्थमधिगम्यार्थं ज्ञात्वेत्यर्थः ।

१ ख. घ. ङ. °दिलाम° । २ ख. ङ. इला ।

उक्तश्च जैमिन्यादिभिः प्रथमसूत्र एवार्थज्ञानं विनाऽध्ययनमात्रेण समावर्तनाधिकाराभावः ।

एवं च विद्यास्नातकव्रतस्नातकयोरुभयोरपि स्नानात्पूर्वं वेदार्थज्ञानमावश्यकमिति सिद्धम् ।

तत्र स्नातकस्त्रिविधः । विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्च । अत्र व्रतशब्देनाक्षारलवणाशित्वादिरूपा ब्रह्मचारिधर्मा उच्यन्ते । एतत्कालस्तु "अष्टाचत्वारिंशद्वर्षाणि चतुर्विंशतिं द्वादश यावद्ग्रहणं वा" इति गृह्य उक्तः । "अधीत्य वेदꣳ स्नानम्" इत्यस्मिन्सूत्रे स्नानं व्याख्यास्याम इत्येतावता सिद्धेऽधीत्य वेदमितिवचनमध्ययनप्रधानं स्नानं न कालप्रधानमितिख्यापनार्थम् । तेनातिक्रान्तेऽपि व्रतकाले सति संभवेऽधीत्यैव स्नातव्यमिति । अत्यन्ताशक्तावेव व्रतमात्रेण स्नातव्यमिति । विद्यास्नानं विद्याव्रतस्नानं च प्रशस्तं व्रतमात्रस्नानं गर्हितमिति । ब्रह्मचर्यस्य विद्यार्थत्वाच्छ्रुतिविशेषाच्च पूजायां फलविशेष इति मातृदत्तः ।

गोभिलगृह्ये—"त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको
विद्याव्रतस्नातक इति तेषामुत्तमः श्रेष्ठः" इति ।

कामं तु याज्ञिकस्येतिसूत्रव्याख्यावसरे कर्कः— यज्ञं वेदेति याज्ञिकस्तस्य कामं स्नानं भवति षडङ्गमर्थतोऽनधिगम्यापीति । हरिहरोऽपि—साङ्गं वेदमधीत्यावबुध्य स्नायादित्येकः पक्षः । मन्त्रब्राह्मणात्मकं वेदमधीत्यावबुध्य स्नायादिति द्वितीयः । ग्रन्थमधीत्य यज्ञविद्यां चाभ्यस्य स्नायादिति तृतीयः । यज्ञविद्याविरहेण ग्रन्थमात्रेऽधीते न स्नायादिति निषेध इति चेति ।

## अथैतत्कालः ।

तत्रेदं गृह्यम्—"उदगयन आपूर्यमाणपक्षे रोहिण्यां मृगशिरसि
तिष्य उत्तरयोः फल्गुन्योर्हस्ते चित्रायां विशाखयोर्वैतेषु स्नायात्" इति ।

उदगयने मकरादिषु षट्सु राशिषु श्रविष्ठार्धमारभ्य सार्धचतुर्दशसु नक्षत्रेषु स्थित आदित्य आपूर्यमाणपक्षे यानि रोहिण्यादीनि विशाखान्तान्यनुक्रान्तानि नेतराणि तेषु स्नायात् । वाशब्दः स्नानस्य विकल्पार्थः स्नायान्न वा स्नायादिति । तेन यस्य कर्मस्वधिकारो नास्ति तस्य नैष्ठिकब्रह्मचर्यमेव वा स्यात् । अनुक्रमणादेव सिद्ध एतेष्वितिवचनं रोहिण्यादिष्वसंभवे तादृशेष्वन्येष्वपि पुण्येषु स्नायादिति व्याख्यातमेतन्मातृदत्तेन ।

बौधायनसूत्रे—"रोहिण्यां तिष्य उत्तरयोः फल्गुन्योर्हस्ते चित्रायामैन्द्रे विशाखयोर्वा स्नायात्" इति।

ऐन्द्रं ज्येष्ठा। दक्षिणायने विवाहेऽपि समावर्तनमुदगयन एव। मध्ये मातापित्रनुज्ञाव्यवधानस्य सूत्रकृतैवोक्तत्वात्तेनैवोदगयनस्य तस्य विहितत्वात्।

"वैश्वदेवं गृहस्थस्य प्रातरारम्भणं भवेत्।
स्नातकेनापि तत्कार्यं पृथक्पाको भवेद्यदि" इति।

वैश्वदेवप्रकरणे वक्ष्यमाणप्रयोगपारिजातधृतशौनकवचने गृहस्थस्नातकत्वरूपावस्थाद्वयप्रदर्शनस्य निरर्थकत्वापत्तेः। बहूनां स्नातकधर्माणां स्मृतिषु प्रदर्शनस्य स्वतन्त्रनक्षत्रादिकालविधानस्य च वैयर्थ्यापत्तेश्च।

"अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः"।

इति निषेधस्त्वविरागिणो विवाहनिवृत्तिनिषेधपरः। मातापित्रनुज्ञायां सत्यामसति विरागे विवाहः कर्तव्य एव न तु विवाहान्निवर्तेतेति। उक्तं चैतच्छ्रुत्या "आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" इत्यनया। आचार्यायाऽऽचार्यार्थं प्रियमिष्टं धनमाहृत्याऽऽनीय दत्त्वाऽऽचार्येण चानुज्ञातोऽनुरूपान्दारानाहृत्य प्रजासंतानं मा व्यवच्छेत्सीः प्रजासंततेर्विच्छित्तिर्न कर्तव्या। अनुत्पद्यमानेऽपि पुत्रे पुत्रकाम्यादिकर्मणा तदुत्पत्तौ यत्नः कर्तव्य इत्यभिप्राय इति विद्यारण्यश्रीपादैर्व्याख्याता। मातापित्रनुज्ञा तु "समावृत्त आचार्यकुलान्मातापितरौ बिभृयात्ताभ्यामनुज्ञातो भार्यामुपयच्छेत्" इत्यनेन सूत्रेणोक्ता। अत एतस्मात्सूत्राद्व्यवधानसिद्धेः समावर्तनविवाहयोरव्यवधानं दूरापास्तमेव।

पारिजाते श्रीधरः—

"वागीशादितिपौष्णसौम्यदिनकृन्मैत्रोत्तरारोहिणी-
गोविन्देषु शशाङ्कभानुगुरुविच्छुक्रांशहोरादिषु।
रिक्तां पर्व तथाऽष्टमीं प्रतिपदं मेषं च कीटं हरिं
हित्वा शुद्धियुतेऽष्टमेऽह्नि विमले कुर्यात्समावर्तनम्" इति।

वागीशः पुष्यनक्षत्रम्। अदितिः पुनर्वसू। पौष्णं रेवती। सौम्यं मृगशिरः। दिनकृद्धस्तः। मैत्रमनूराधाः। उत्तरा उत्तरात्रयम्। गोविन्दः श्रवणः। शशाङ्कश्चन्द्रः। विद्बुधः। अंशहोरा उक्तानामेव। रिक्ताश्चतुर्थीनवमीचतुर्दश्यः। पर्व पर्वद्वयम्। कीटो वृश्चिकः। हरिः सिंहः। शुद्धियुते ग्रहविशेषाक्रमणदोषशून्ये। अह्नि विमले गुरुशुक्रास्तादिदोषशून्ये।

---

१ क °स्य वि°। २ क. °रणस्थव°। ३ घ. ङ. °रूपव्यव°। ४ ग. घ. ङ. एव त°।

मदनरत्ने नारदः—

" अथोत्तरायणे जीवशुक्रयोर्दृश्यमानयोः ।
द्विजातीनां गुरोर्गेहान्निवृत्तानां यतात्मनाम् ॥
मित्रोत्तरादितीज्यान्त्यहरीन्दुरविधातृषु ।
मेष्वर्केन्दुज्ञार्यशुक्रवारलग्नांशकेषु च ॥
अथवा बीजनक्षत्रवारलग्नांशकेष्वपि ।
प्रतिपत्पर्वरिक्ताख्या अष्टमीं च दिनक्षयम् ॥
हित्वाऽन्यदिवसे कार्यं समावर्तनमण्डनम् " इति ॥

बीजनक्षत्राणि बीजावापनक्षत्राणि ।

वसिष्ठः—" स्नानं मध्याह्नकाले तु रोहिण्यां कारयेच्छुभम् ।
पूर्वाह्णे तदभावे च कुर्यात्स्नानं यथाविधि " इति ॥

इदं तु ब्रह्मचारिकर्तृकमेव । समावर्तनात्प्राक्कर्माण्याचार्यकर्तृकाणि यावदुक्तं ब्रह्मचारी करोति । समावर्तनं तु ब्रह्मचारिकर्तृकमेव । अधीत्य वेदं स्नानमितिसूत्रेऽधीत्येतिक्त्वाप्रत्ययेनाध्ययनस्नानयोः समानकर्तृकत्वस्योक्तत्वात् ।

## अथ प्रयोगः ।

ब्रह्मचारी साङ्गसार्थवेदाध्ययनव्रताभ्यां संपन्नः साङ्गसार्थवेदाध्ययनमात्रसंपन्नो वा वेदाध्ययनमात्रसंपन्नो वा व्रतमात्रसंपन्नो वा परिपालितब्रह्मचारिनियमः कृतकाण्डव्रतोपाकरणोत्सर्जनगोदानः कृताध्यायोपाकरणो गुरुं दक्षिणान्नादिना संतोष्य तेनानुज्ञात उदगयन आपूर्यमाणपक्षे रिक्तापर्वाष्टमीप्रतिपद्व्यतिरिक्ताद्वितीयाद्यन्यतमतिथौ भानुसोमबुधगुरुशुक्रान्यतमे वारे तदंशहोरायां रोहिणीमृगतिष्योत्तराफल्गुनीहस्तचित्राविशाखान्यतमे सूत्रविहिते नक्षत्रे तदसंभवे पुनर्वस्वनूराधाज्येष्ठाश्रवणोत्तराभाद्रपदारेवत्यन्यतमे शास्त्रान्तरोक्ते नक्षत्रे मेषवृश्चिकसिंहभिन्नलग्ने गुरुशुक्रास्तबाल्यवार्धक्यमलमासवक्रातिचारदिनक्षयादिदोषशून्ये दिवसे ज्योतिर्वित्प्रोक्ते सुमुहूर्ते आचार्यगृह उदकसमीपे वा गोष्ठे वा स्नानापरपर्यायं समावर्तनाख्यं कर्म कुर्यात् । यदा गोष्ठे तदा तृणवस्त्रादिभिर्गोष्ठं प्रच्छाद्य यथा सूर्यकिरणानामपि दर्शनं न भवति तथा सम्यक्कटादिना परिश्रित्य सूर्योदयात्प्रागेव तत्र प्रविश्य तत्रैव सर्वं कर्म कृत्वा रात्रौ बहिर्गन्तव्यम् । कृतनित्यक्रिय उभयकालेऽग्निकार्यक्रियापक्षे प्रातरग्निकार्यं कृत्वा प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम गृह-

स्थाश्रमाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्तनाख्यं कर्म करिष्य इति संकल्पं कुर्यात् ।

ततः पिता पुत्रसमावर्तनाङ्गभूतं गणपतिपूजनमित्यादिनान्दीश्राद्धान्तं कर्मोक्तरीत्या कुर्यात् । अत्र श्रीः प्रीयतामिति विशेषः । इन्द्रः प्रीयतामिति वा ।

अथवा नान्दीश्राद्धमात्रं पितृकर्तृकं गणपतिपूजनपुण्याहवाचनमातृकापूजनानि तु स्वयमेव कार्याणि । मातृकापूजनस्य नान्दीश्राद्धाङ्गत्वपक्षे तदपि पितृकर्तृकमेव । पितृसत्त्वेऽपि स्वयमेव वा गणपतिपूजनादि नान्दीश्राद्धान्तं कुर्यादिति केचित् ।

ततो ब्रह्मचार्येवोल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय तत्र पावकनामानं श्रोत्रियागारादाहृतं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा समावर्तनहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे—जातवेदसमग्निं पलाशसमिधा यक्ष्ये । अग्निं वायुं सूर्यं प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निमाज्याहुत्या यक्ष्ये । अङ्गहोमे वरुणमित्यादि । पात्रप्रयोगकाले लौकिकाग्नावुष्णीकृता अपः शीता अपः क्षुरमानडुहं शकृद्वपनार्थं कुशमौदुम्बरं प्रादेशमात्रं दन्तधावनार्थमार्द्रं काष्ठं येनकेनचिद्बन्धुजनेनाऽऽनीतं सुरभिद्रव्ययुतं केवलं वा चन्दनं येनकेनचिद्बन्धुजनेनाऽऽनीते अहते[2] वाससी चिह्नकरणेन लक्षितदक्षिणोत्तरभावे येनकेनचिद्बन्धुजनेनाऽऽनीते सूत्रप्रोते कुण्डले सूत्रप्रोतं सुवर्णाभिच्छादितं चान्दनं बादरं वा मणिमादर्शं छत्रं वैणवं दण्डमुपानहौ स्रजं त्रिककुत्संज्ञकपर्वतजातमञ्जनमभावे कज्जलं वेत्येतान्यासाद्य ग्रामप्रवेशार्थं रथाद्यन्यतमं वाहनमपि पात्रसमीपे यथावकाशं वा संस्थाप्य दर्व्यादीनि होमोपयुक्तानि पात्राणि पालाशीं समिधं चाऽऽसादयेत् । पलाशसमिदासादनात्पूर्वं वा ग्रामप्रवेशार्थरथाद्यन्यतमवाहनस्य पात्रसमीपे यथावकाशं वा संस्थापनम् ।

ततो ब्रह्मवरणादि । पात्रप्रोक्षणकाल उपक्लृप्तस्य रथाद्यन्यतमवाहनस्यापि प्रोक्षणं कार्यम् । ततो दर्वीनिष्टपनादिव्याहृतिहोमान्तं समानम् ।

ततो वैशेषिकप्रधानहोमः—'ॐ इम९ स्तोममर्हते जातवेदसे रथमिव संमहे मा मनीषया । भद्रा हि नः प्रमतिरस्य स९सद्यग्ने सख्ये मा रिषामा वयं तव स्वाहा' इत्यासादितां पालाशीं समिधमादधाति । जातवेदसेऽग्नय इदं० । सूत्रकारपठितत्वादत्र स्वाहाकारः । व्यस्तव्याहृतीनामग्निर्ऋषिः । समस्तव्याहृतीनां प्रजापतिर्ऋषिः । अग्निवायुसूर्यप्रजापतयः क्रमेण देवताः । गायत्र्युष्णिगनुष्टुब्बृ-

१ ग. °व ग° । २ ग. घ. ङ. °ते सू° ।

हत्यः क्रमेण च्छन्दांसि । समावर्तनवैशेषिकप्रधानाज्यहोमे विनियोगः । इति स्मृत्वा ताभिश्चतस्र आज्याहुतीर्जुहुयात् ।

ततः 'ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषं स्वाहा । अग्नय इदं० ' इति प्रधानाहुतीर्हुत्वा, इमं मे वरुणेत्यादित्रिहृद्न्नहोमं पुण्याहवाचनान्तं कृत्वा प्रजापतिः प्रीयतामिति वदेत् । अत्रात्रेतिवचनं विद्याव्रतस्नानविद्यास्नानयोर्जयादयो वैकल्पिका एव स्युः । व्रतमात्रस्नाने तु नित्या एवेत्येतदर्थम् ।

ततोऽग्ने व्रतपते व्रतमचारिषमित्यादीनां चतुर्णां मन्त्राणां विश्वे देवा ऋषयः । अग्निवायुसूर्यव्रतपतयः क्रमेण देवताः । यजूंषि । उपस्थाने विनियोगः । 'ॐ अग्ने व्रतपते व्रतमचारिषं० राधि ' इत्यग्निमुपतिष्ठते । ' ॐ वायो व्रतप० ' इति वायुम् । 'ॐ आदित्य व्रत० ' इत्यादित्यम् । 'ॐ व्रतानां व्रत०' इति व्रतपतिम् । इति चतुर्भिर्मन्त्रैर्मन्त्रोक्ता देवता उपस्थायोपनयने स्वीकृतानां ब्रह्मचर्याश्रमविहितव्रतानामुत्सर्गं कुर्यात् ।

उदु त्यं चित्रमिति द्वयोः सोम ऋषिः । आदित्यो देवता । प्रथमस्य गायत्री। द्वितीयस्य त्रिष्टुप् । आदित्योपस्थाने विनियोगः । 'ॐ उदु त्यं जातवेदसं० सूर्यम्' 'ॐ चित्रं देवानामुदगादनीकं० स्तस्थुषश्च' इति द्वाभ्यामादित्यमुपतिष्ठते । उदुत्तमं वरुण पाशमस्म०च्छ्रथायेतिमन्त्रस्य वामदेवो विश्वे देवा वा वरुण एकपदा स्वराड्जगती । उत्तरीयवासोनिधाने विनियोगः । 'ॐ उदुत्तमं वरुण पाशमस्म० च्छ्रथाय ' [ इति ] उत्तरीयं वासो निदधाति ।

ततोऽन्येनाहतेन महता वाससा शरीरं प्रावृत्य द्विराचम्यावाधममित्यस्य वामदेवो विश्वे देवा वा वरुण एकपदा स्वराड्जगती । अन्तरीयवासोनिधाने विनियोगः । 'ॐ अवाधमं वरुण पाशमस्म० च्छ्रथाय ' [ इति ] अन्तरीयं वासो निदधाति । अन्तरीयं वासो नामाधरीयं कौपीनाच्छादनं वासः । विमध्यममित्यस्य वामदेवो विश्वे देवा वा वरुण एकपदा स्वराड्जगती । मेखलानिधाने विनियोगः । 'ॐ विमध्यमं वरुणपाशमस्म० च्छ्रथाय ' [ इति ] मेखलां विस्रस्य निदधाति । अथा वयमादित्येत्यस्य वामदेवो विश्वे देवा वा वरुणो द्विपदा त्रिष्टुप् । दण्डनिधाने विनियोगः । ' ॐ अथा वयमा० स्याम ' [ इति ] दण्डं निदधाति ।

ततोऽजिनवासोमेखलादण्डानप्सु तूष्णीं प्रास्यान्तरीयंवासोऽर्थिने ब्रह्मचारिणे दद्यात् ।

ततोऽपरेणाग्निं प्राङ्मुख उपविश्य 'ॐ क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीः ' [ इति ] क्षुरं संमृशति । तं तूष्णीं वप्त्रे प्रदायाऽऽसादितासु शीतास्वप्स्वासादिता उष्णा अप आनीय 'ॐ शिवा नो भवथ सꣳस्पृशे' इति ता अपोऽभिमृशति । अभिमर्शन एवायं मन्त्रः । न तु मिश्रणे । सꣳस्पृश इति मन्त्रलिङ्गात् । आप उन्दन्त्वित्यस्य सोम आपो द्विपदा गायत्री । दक्षिणगोदानोन्दने विनियोगः । 'ॐ आप उन्दन्तु० वर्चसे ' इति दक्षिणं गोदानमुनत्ति । ओषध इत्यस्य सोम ओषधीरेकपदा गायत्री । दक्षिणगोदान ऊर्ध्वाग्रकुशनिधाने विनियोगः । 'ॐ ओषधे त्रायस्वैनम् ' [ इति ] दक्षिणगोदानप्रदेश आसादितं कुशमूर्ध्वाग्रं निदधाति । स्वधित इत्यस्य सोमः स्वधितिरेकपदा गायत्री । क्षुरनिधाने विनियोगः । 'ॐ स्वधिते मैनꣳ हिꣳसीः ' [ इति ] तदुपर्यासादितं क्षुरं निदधाति । देवश्रूरित्यस्य सोमो देवश्रूरेकपदा गायत्री । सकुशकेशवपने विनियोगः । 'ॐ देवश्रूरेतानि प्रवपे ' [ इति ] सकुशान्केशान्वपति । उन्दनादिवपनान्तं कर्म नापितस्य सामर्थ्यात् । यस्य कस्यचिन्मन्त्रविदो ब्राह्मणस्याऽऽचार्यस्य वा तथात्वे । नापितस्य मन्त्रपठनाधिकारस्तु दोग्धुः सांनाय्यदोहनादिष्विव वचनसामर्थ्यात् ।

ततो 'ॐ यत्क्षुरेण मर्चयता सुपेशसा वप्तर्वपसि केशश्मश्रुवर्चया मुखं मा न आयुः प्रमोषीः ' इति वप्तारं समीक्षते । ततो वप्ता श्मश्रूपपक्षकेशलोमनखानि क्रमेण शिखां विहाय वपति । वपनकर्ताऽत्र स्नानं कुर्यात् ।

ततः स्नातकस्य मित्रजनः कश्चिदासादितमानडुहं शकृदादाय तत्रोप्तानि श्मश्र्वादीनि निधाय, ' ॐ इदमहममुष्यामुष्यायणस्य पाप्मानमवगूहामि ' [ इति ] गोष्ठ उदुम्बरे दर्भस्तम्बे वा गर्तं कृत्वा तत्राऽऽनडुहेन शकृत्पिण्डेन सह तानि प्रक्षिप्य मृदा गर्तं प्रपूरयति । अमुष्येत्यस्य स्थाने षष्ठीविभक्त्येकवचनोत्तरशर्मशब्दान्तं व्यावहारिकं नाम ग्राह्यम् । आमुष्यायणस्येत्यस्य स्थाने तु षष्ठ्येकवचनान्तं गोत्रनाम । यथा—इदमहं देवदत्तशर्मणो वासिष्ठस्य पाप्मानमवगूहामीति ।

अथ स्नातकः करञ्जकल्काद्युद्वर्तनेन शरीरमलं दूरीकृत्य 'ॐ अन्नाद्याय व्यूहध्वं दीर्घायुत्वाय व्यूहध्वं ब्रह्मवर्चसाय व्यूहध्वं दीर्घायुरहमन्नादो ब्रह्मवर्चसी भूयासम् ' [ इति ] आसादितेनौदुम्बरेण काष्ठेन दन्ताञ्शोधयेत् । ततो द्वादश गण्डूषांस्तूष्णीं कुर्यात् । तत आचार्योऽन्यो वा, आपो हि ष्ठेति मन्त्रत्रयस्याग्निर्विश्वे देवा वाऽऽपो गायत्री । हिरण्यवर्णा इति मन्त्रचतुष्टयस्याग्निरापस्त्रिष्टुप् । पवमा-

नानुवाकमन्त्राणां प्रजापतिर्ऋषिः । पवमानसुवर्जनादयो लिङ्गोक्तास्तत्तन्मन्त्रदेवताः । गायत्र्यादीनि च्छन्दांसि । स्नापने विनियोगः । आपो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानः सुवर्जन इत्येतेनानुवाकेन चोष्णशीताभिरद्भिः स्नापयति । प्रेरणमात्रमाचार्यकर्तृकं मन्त्रोच्चारणपूर्वकं स्नानं तु स्नातककर्तृकमेव वा । तत्तन्मन्त्रसमुदायान्ते पवमानानुवाकान्ते वा स्नानम् । केचित्तु प्रतिमन्त्रं स्नानमिच्छन्ति । तन्न । होमव्यतिरिक्तसंख्यायुक्तकर्मविधौ 'एकमन्त्राणि कर्माणि' इति परिभाषाया अप्रवृत्तेः । पवमानानुवाके संख्यायुक्तत्वाभावेऽपि पवमानः सुवर्जन इति चैतेनानुवाकेनेत्यनेन कृत्स्नस्यानुवाकस्यैव करणत्वस्योक्तेर्न प्रत्येकं मन्त्राणां करणतेति द्रष्टव्यम् ।

ततो द्विराचम्य तूष्णीं लौकिकं वासः परिधाय द्विराचम्य कटिसूत्रं कौपीनं च विस्रस्य प्रज्ञातं निधायाऽऽसादितं चन्दनपिष्टं जलेनाभ्युक्ष्य तेन पाणी प्रलिप्य 'ॐ नमो ग्रहाय चाभिग्रहाय च नमः शाकजंजभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः' [ इति ] देवेभ्यः प्राचीनं नमस्काराञ्जलिं करोति ।

"अप्सरासु यो गन्धो गन्धर्वेषु च यद्यशः ।
दैव्यो यो मानुषो गन्धः स मामाविशतादिह" ॥

[ इति ] तेनाञ्जलिना मुखमारभ्यानुलोममात्मानं लिम्पति ।

तत आसादिते अहते वाससी जलेनाभ्युक्ष्य परिहितं पूर्वं वासः परित्यज्याऽऽसादितयोर्वाससोर्मध्य एकं वास आदाय प्रदक्षिणं संवेष्ट्य 'ॐ सोमस्य तनूरसि तनुवं मे पाहि स्वा मा तनूराविश शिवा मा तनूराविश' इति प्रदक्षिणं वेष्टितं वासो नीविकल्पनादिप्रकारेण परिदधाति । ततो द्विराचम्य तेनैव मन्त्रेणोत्तरीयसंज्ञकं वासः परिदधाति ।

ततो द्विराचम्य प्रज्ञातं निहितं कटिसूत्रं कौपीनं चाप्सु प्रक्षिपेत् । अत ऊर्ध्वं कटिसूत्रकौपीनधारणं न कार्यम् ।

अथापरेणाग्निं प्राङ्मुख उपविश्याऽऽसादितं चान्दनं बादरं वा सुवर्णाभिच्छादितं मणिमासादिते कुण्डले चाऽऽदाय दर्भेण प्रबध्याग्नौ धारयन्—

"ॐ आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिदम् । इदꣳ हिरण्यमायुषे वर्चसे जैत्रायाऽऽविशतां माꣳ स्वाहा । ॐ उच्चैर्वाजि पृतनासाहꣳ सभासाहं धनंजयम् । सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन्समाभृताः स्वाहा । ॐ शुनमहꣳ हिरण्यस्य पितुरिव नामाग्रभिषम् । तं मा हिर-

ण्यवर्चसं करोतु पुरुषु प्रियं ब्रह्मवर्चसिनं मा करोतु स्वाहा । ॐ प्रियं मा कुरु देवेषु प्रियं मा ब्रह्मणि कुरु । प्रियं विश्येषु शूद्रेषु प्रियं मा कुरु राजसु स्वाहा । ॐ इयमोषधे त्रायमाणा सहमाना सरस्वती । सा मा हिरण्यवर्चसं करोतु पुरुषु प्रियं ब्रह्मवर्चसिनं मा करोतु स्वाहा '

इति पूर्वावशेषितेनाऽऽज्येन दर्व्या पञ्चभिर्मन्त्रैस्तदुपर्यभिजुहोति । हिरण्यायेदमिति त्यागः । अन्त्यस्यौषध्या इदमिति वा त्यागः । नात्राग्नेः परिषेको मणिकुण्डलसंस्कारत्वात् ।

तत एतैरेव पञ्चभिर्मन्त्रैः स्वाहाकाररहितैः सर्वान्ते मणिकुण्डले च सहैव त्रिः प्रदक्षिणमुदपात्रे सम्यक्प्रक्षालयति सकृन्मन्त्रैर्द्विस्तूष्णीम् । ' ॐ विराजं च स्वराजं चाभिष्टीर्या च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा सꣳसृजामसि' [इति] दक्षिणे कर्णे दक्षिणं कुण्डलं प्रतिमुञ्चति । 'ॐ ऋतुभिष्ट्वाऽऽर्तवैरायुषे वर्चसे संवत्सरस्य धायसा तेन सन्नुगृह्णासि ' [ इति ] दक्षिणकर्णस्थं कुण्डलं यथा न पतति तथाऽपिदधाति । ' ॐ विराजं च स्वराजं चाभिष्टीर्या च नो गृहे । लक्ष्मी राष्ट्रस्य या मुखे तया मा सꣳसृजामसि ' [इति] वामे कर्ण उत्तरं कुण्डलं प्रतिमुञ्चति । 'ॐ ऋतुभिष्ट्वाऽऽर्तवैरायुषे वर्चसे संवत्सरस्य धायसा तेन सन्नुगृह्णासि ' [इति] सव्यकर्णस्थं कुण्डलं पूर्ववदपिदधाति । अत्र काण्डानुसमय एव ' संयुक्तानि त्वेकापवर्गाणि ' इतिसूत्रात् । 'ॐ इयमोषधे त्रायमाणा सहमाना सरस्वती । सा मा हिरण्यवर्चसं करोतु पुरुषु प्रियं ब्रह्मवर्चसिनं मा करोत्वपाशोऽसि ' इति ग्रीवायामभिहोमसंस्कृतं मणिं बध्नाति । ' ॐ शुभिके[1] शुभमारोह शोभयन्ती मुखं मम । मुखं च मम शोभय भूयाꣳसं च भगं कुरु । यामाहरज्जमदग्निः श्रद्धायै कामायास्यै इमां तां प्रतिमुञ्चेऽहं भगेन सह वर्चसा ' [ इति ] द्वाभ्यामासादितां स्रजं धारयति । 'ॐ यदाञ्जनं त्रैककुदं जातꣳ हिमवत उपरि । तेन वामाञ्जेऽहं भगेन सह वर्चसा मयि पर्वतपूरुषम् ' । इत्यासादितेनाञ्जनेन द्वाभ्यां हस्ताभ्यां युगपदक्षिणी अनक्ति । तेन वामिति द्विवचनलिङ्गात् । केचित्तु यदाञ्जनमितिमन्त्रेण दक्षिणेन हस्तेन सव्यमनक्ति । एतेनैव मन्त्रेण दक्षिणम् । सव्यस्याक्ष्णः पूर्वमञ्जनं ' सव्यꣳ हि पूर्वं मनुष्या आञ्जते ' इतिश्रुतिसिद्धमिति वदन्ति । तेषां द्विवचनलिङ्गविरोधः स्फुट एव। यन्मे मन इत्यस्य सोम आदर्शोऽनुष्टुप् । आदर्श आत्मावेक्षणे विनियोगः । 'ॐ यन्मे मनः परागतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसि ' इत्यात्मानमादर्शेऽवेक्षते । भानुवार आदर्शावेक्षणनिषेध एतस्य

१ घ. ङ. 'के शोभ' ।

वैधत्वान्न प्रवर्तते प्रयाणकालिकादर्शावेक्षणवत् । देवस्य त्वेत्यस्य मन्त्रस्य वामदेवः प्रजापतिर्वा सविता यजुः । वैणवदण्डप्रतिग्रहणे विनियोगः । 'ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ' इत्यासादितं वैणवं दण्डं प्रतिगृह्णाति । अर्थादन्यो यः कश्चन दण्डप्रदाता । 'ॐ इन्द्रस्य वज्रोऽस्यश्विनौ मा पातम् ' [ इति ] सकृन्मन्त्रमुक्त्वा तमूर्ध्वं दण्डं सोदकेन हस्तेन त्रिरुन्मार्ष्टि । उच्छब्देनैवोर्ध्वमार्जनासिद्धौ पुनरूर्ध्वग्रहणं दण्डविशेषणार्थम् । एवं चोर्ध्वं दण्डं धृत्वोर्ध्वं मार्ष्टीत्यर्थः सिद्धो भवति । सोदकेन हस्तेनोन्मार्जनं तु ' ॐ विष्णोर्मनसा पूते स्थ इत्यद्भिरुन्मार्ष्टि ' इत्येतत्सूत्रेऽद्भिरिति विधानं सर्वत्रोन्मार्जनमेवोदकैरनुमार्जनादिकं तु केवलेन हस्तेनेति वैजयन्तीकृतव्याख्यानात् । पवित्रयोरनुमार्जनं तु वचनादद्भिः ।

ततः 'ॐ वेगवेजयास्मद्विपनस्तस्करान्सरीसृपान्श्वापदान्रक्षाꣳसि पिशाचान्पौरुषेयाद्भयान्नो दण्ड रक्ष विश्वस्माद्भयाद्रक्ष सर्वतो जहि तस्करानननः सर्ववृक्षेषु जायसे त्वꣳ सपत्नहा जहि शत्रुगणान्सर्वान्समन्तं मघवानिव ' [ इति ] सकृन्मन्त्रमुक्त्वा शिरस उपरि प्रदक्षिणं दण्डं त्रिर्भ्रामयति । 'ॐ प्रतिष्ठे स्थो देवते मा मा संताप्तम् ' [ इति ] उपविष्ट एवोपानहौ युगपदध्यवरोहति । सकृदेव मन्त्रो द्विवचनलिङ्गात् । युगपदध्यवरोहणासंभवे मन्त्रावृत्तिरनायत्या । द्विवचनं तूपरवबहुत्ववद्यथाकथंचिन्नेयम् । अत्रापि सकृदेव वा मन्त्रः । ' ॐ प्रजापतेः शरणमसि ब्रह्मणश्छदिः ' इति च्छत्रं प्रतिगृह्णाति । अत्राप्यर्थादन्यो यः कश्चन प्रदाता । 'ॐ यो मे दण्डः परापतद्विहायसोऽधि भूम्याम् । इमं तं पुनराददेऽयमायुषे च व्रताय च ' इति दण्डं पुनरादत्ते यदि गृहीतो हस्तात्पतेत् । इदं च दण्डधारणं यावज्जीवं मधुपर्कसमाप्त्यन्तं वाऽऽवश्यकम् ।

अथोपक्लृप्तमन्येनाऽऽनीतं रथमश्वं हस्तिनं वाऽऽरुह्य ग्रामं प्रविशति ।

तत्र—'ॐ रथंतरमसि वामदेव्यमसि बृहदस्यङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसंचरन्तौ दूरेहेतिरिन्द्रियावान्पतत्री ते नोऽग्नयः पप्रयः पारयन्तु । अयं वामश्विना रथो मा दुःखे मा सुखे रिषत् । अरिष्टः स्वस्ति गच्छतु विविघ्नन्नभिदासतः । इह धृतिरिह विधृतिरिह रमताम् " इति रथारोहणमन्त्रः ।

" ॐ अश्वोऽसि हयोऽसि मयोऽस्यत्योऽसि नरोऽस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृमणा असि ययुर्नामासि " ।

इत्येकादशभिरश्वनामात्मकैर्मन्त्रैरश्वारोहणम् ।

"ॐ इन्द्रस्य त्वा वज्रेणाभ्युपविशामि वह कालं वह श्रियं माऽभिवह हस्त्यसि हस्तियशसमसि हस्तिवर्चसमसि हस्तियशसि(सी) हस्तिवर्चसी भूयासम्" । इतिमन्त्रेण हस्त्यारोहणम् ।

यदा गोष्ठे कर्म तदा रात्रिपर्यन्तं तत्रैव स्थित्वा रथाद्यन्यतमं वाहनमारुह्य ग्रामं प्रविशेत् । यदा तु गृहे कर्म तदा रथाद्यन्यतमं यानमारुह्य तदानीमेव यत्र पूजां करिष्यन्तो भवन्ति तत्र गच्छेत् । यदि तु गृह एव पूजाकर्ता तदा वाहनारोहणाभावः । सूर्यदर्शनप्रतिषेधो गोष्ठकरणपक्ष एव ।

ततः—'ॐ सश्स्रवन्तु दिशो मयि समागचछन्तु सूनृताः सर्वे कामा अभियन्तु नः प्रिया अभिस्रवन्तु नः प्रियाः'

इति सकृन्मन्त्रमुक्त्वा दिश उपतिष्ठते ।

ततो यत्र पूजां करिष्यन्तो भवन्ति तत्र गच्छति । गच्छन्नेव वा 'ॐ यशोऽसि यशोऽहं त्वयि भूयासममुकशर्मन्' [इति] यः पूजां करिष्यन्भवति तमाभिमुख्येन समीपं गच्छन्यानादवरुह्यानवरुह्य वा सम्यगीक्षते ।

## अथ मधुपर्कः ।

पूजकः समावर्तनदिने स्वगृहं प्रत्यागताय स्नातकाय शयनासनादिप्रदानावसस्थानं कल्पयित्वा कृतयानावरोहणं पूज्यं प्राङ्मुखमुपवेश्य नियतसंख्यदर्भमयं कूर्चं प्रकल्प्य पाद्यार्था अपो ह्मीयसि पात्रे संभृत्य महत्तरेण पात्रेणापिदध्यात् । एवमर्घ्यार्थानामाचमनार्थानां च पृथक्पात्रयोः संभरणमपिधानं च । नात्र कांस्यपात्रनियमः ।

ततो ह्मीयसि कांस्यपात्रे दध्यानीय मध्वानयति । ततो घृतमिति त्रिवृतं मधुपर्कं कृत्वा महत्तरेण पिधाय सूत्रेणाऽऽवेष्टयेत् । दधि मधु घृतमापः सक्तव इति पाङ्क्तो वा । अस्मिन्पक्षे दध्यादीनां मिश्रणे नास्ति क्रमः । घृतं त्वन्तत एवाभिघारणरूपत्वात् । पाङ्क्तपक्षेऽपि ह्सीयस्यानयनं वर्षीयसाऽपिधानं च कृत्वा सूत्रवेष्टनं कार्यम् । त्रिवृत्पाङ्क्तयोरसंभवे मधुसंभवे[3] मधुसंसृष्टो मधुपर्कः । पयो वा मधुसंसृष्टमभाव उदकमितिधर्मसूत्रोक्तप्रकारेण वा प्रकल्पयेत् ।

ततो गां वस्त्रं यज्ञोपवीतद्वयं यथाविभवमाभरणानि माल्यादीनि चोपक-

१ क. 'मनीयार्था' । ख. 'मनीयानां । २ ग. घ. ङ. वर्षीयसा । ३ क. ख. °संसृ° ।

ल्पयेत् । सति संभव उदीचीनप्रतिषीवणमेरकासनं बहुगुणमुत्तरदशवाससाऽऽच्छादितं पूज्यस्योपवेशनार्थं कल्पयति । एतदासनकल्पनं गृहस्य मध्ये गृहस्यैशानभागे प्रागग्रान्दर्भानास्तीर्य तेषु द्रव्याणामासादनम् । यावन्तः पूज्यास्तावन्त्यासनादीनि । प्रतिपात्रमेकैकः कूर्च आसादनार्थम् । पात्रप्रदानकाले पात्रस्याधस्तादुपरिष्टाच्च परिग्रहणार्थं द्वौ कूर्चौ । एतौ च सर्वपात्रार्थौ । अयं च बौधायनोक्तो विशेषः । वस्त्रकुण्डलस्रगादिदानमपि बौधायनीयमेव ।

पूजकः पूज्यस्य दक्षिण उदङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य, इमं स्नातकं मधुपर्केण पूजयिष्य इति संकल्पं कुर्यात् । उक्तकूर्चादिद्रव्यजातेन सहाऽऽदातुरभिप्रायानुकूलो भूत्वोच्चैर्भूतया वाचैकैकं प्राहेति प्रदाने विधिः । पूजकः—ॐ अर्घ इति त्रिः सकृद्वा पूज्यं प्राह । कुरुतेति पूज्यः । पूजकः ॐ कूर्च इति त्रिः सकृद्वा प्राह । पूज्यः—सुकूर्च इत्युक्त्वा हस्ताभ्यां प्रतिगृह्य "ॐ राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम्" इत्युदगग्रे कूर्चे प्राङ्मुख उपविशेत् । ततः पूजकः—ॐ पाद्यमिति त्रिः सकृद्वा प्राह । सुपाद्यमिति पूज्यः । ततः पूजकस्य दासो वा दासी वा[2] तदीयब्राह्मणो वा पूज्यस्य पादौ प्रक्षालयति । तत्र ब्राह्मणो दक्षिणं पादमग्रे प्रक्षाल्य सव्यं प्रक्षालयति । क्षत्रियवैश्ययोस्त्वनियमः । दासो दासी वा चेत्सव्यमेवाग्रे ततो दक्षिणम् । अत्र स्मार्तं द्विराचमनम् । योऽस्य पादौ प्रक्षालयतीत्यनेन प्रक्षालने कर्त्रनियमः प्रदर्श्यते । तेन ब्राह्मणकर्तृकमपि प्रक्षालनं भवति न तु शूद्रः शूद्रा वेति द्वयोरेव कर्तृत्वं नियतमिति सिद्धं भवति । प्रक्षालयितृहस्ताभिमर्शनविधानेनेदमप्यवगम्यते प्रक्षालनमन्यकर्तृकमेवेति । ततः पूजकः—'ॐ विराजो दोहोऽसि मयि दोहः पद्यायै विराजः' [ इति ]प्रक्षालयितुर्हस्तावभिमृशति । 'ॐ मयि तेज इन्द्रियं वीर्यमायुः कीर्तिर्वर्चो यशो बलम्' [ इति ]आत्मानं प्रत्यभिमृश्याप उपस्पृशेत् ।

ततः पूजकोऽर्घ्या अपो गन्धमाल्यवस्त्रयज्ञोपवीतद्वयालंकरणसहिता गृहीत्वा, ओमर्घ्यमिति त्रिः सकृद्वा प्राह । पूज्यः—स्वर्घ्यमित्युक्त्वा 'ॐ आ मा गन्यशसा सꣳसृज तेजसा वर्चसा पयसा च तं मा कुरु प्रियं प्रजानामधिपतिं पशूनाम्' [ इति ] गन्धमाल्यवस्त्रयज्ञोपवीतद्वयालंकरणसहितमञ्जलौ पूजकेन किंचिन्निनीयमानमर्घ्योदकं प्रतिगृह्णाति ।

तत आत्मानं गन्धमाल्यवस्त्रकुण्डलस्रगादिभिरलंकृत्यावशिष्टमर्घ्यजलं पूजकाय प्रदाय 'ॐ समुद्रं वः प्रहिणोमि० मत्पयः' [इति] तज्जलं पूजकेन निनीयमानमनुमन्त्रयते । गन्धादीनामर्घ्यजलेन सह दाने बौधायनसूत्रमूलिका मातृदत्तोक्तिः,

---

१ क. ख. °कस्तद्दासो । २ क. ख. वा पू° ।

रुद्रस्कन्धभाष्यकारोक्तिश्च मूलम्। ततः पूजकः–'ओमाचमनीयमिति त्रिः सकृद्वा प्राह । पूज्यः स्वाचमनीयमित्युक्त्वा, अमृतोपस्तरणमसीत्यस्य याज्ञिक्यो देवता उपनिषदो जलं यजुः । आचमने विनियोगः। 'ॐ अमृतोपस्तरणमसि' [ इति ] पूजकदत्तजलार्धेनाऽऽचामति। नात्र शुद्धाचमनम् । पूजकः–ॐ मधुपर्क इति त्रिः सकृद्वा प्राह । पूज्यः—सुमधुपर्क इत्युक्त्वा देवस्य त्वेत्यस्य प्रजापतिः सविता यजुः । मधुपर्कप्रतिग्रहणे विनियोगः । 'ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि' [ इति ] आकाशवताऽञ्जलिना प्रतिगृह्य 'ॐ पृथिव्यास्त्वा नाभौ सादयामीडायाः पदे' [ इति ] तं भूमौ प्रतिष्ठाप्य 'ॐ यन्मधुनो मधव्यं परममन्नाद्य॑ रूपं तेनाहं मधुनो मधव्येन परमेण रूपेण परमो मधव्योऽन्नादो भूयासम्' [ इति ] अङ्गुष्ठेनोपमध्यमयोपकनिष्ठिकया चाङ्गुल्या मधुपर्कमालोडयति सकृन्मन्त्रेण द्विस्तूष्णीम्। 'ॐ तेजसे त्वा श्रियै यशसे बलायान्नाद्याय प्राश्नामि' [ इति ] मन्त्रावृत्त्याऽङ्गुष्ठेनोपमध्यमयोपकनिष्ठिकया चाङ्गुल्या त्रिर्मधुपर्कं प्राश्नाति। हस्तं प्रक्षाल्य रातय उच्छिष्टं प्रयच्छति। तदभावे सर्वं प्राश्नीयात् । लोकविद्विष्टत्वादिदानीं सर्वस्यैव प्राशनम्।

ततोऽमृतापिधानमसीत्यस्य याज्ञिक्यो देवता उपनिषदो जलं यजुः। आचमने विनियोगः । 'ॐ अमृतापिधानमसि' [ इति ] सर्वेण पूर्वाचमनशिष्टजलेनाऽऽचामति। ततो मुखं हस्तं च प्रक्षाल्य स्मार्तमाचमनं लौकिकजलेन। ततः पूजकः–'ॐ गौरिति त्रिः सकृद्वा प्राह। पूज्यः–सुगौरित्युक्त्वा 'ॐ गौर्धेनुर्भव्या माता रुद्राणां दुहिता वसूना॑ स्वसाऽऽदित्यानाममृतस्य नाभिः। प्रणुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट। पिबतूदकं तृणान्यत्तु। ओमुत्सृजत' इति पठित्वा तामुत्सृजेत्। मन्त्रलिङ्गाद्गौरत्र रुयेव। तस्या हननपक्षे 'ॐ गौरस्यपहतपाप्माऽप पाप्मानं जहि मम चामुष्य च हतं मे द्विषन्त॑ हतो मे द्विषन्कुरुन' इति पठित्वा परिचारकैः संस्कृतं तन्मांसं भुञ्जीयात् । उत्सर्गपक्षेऽन्येनानिषिद्धेन मांसेन। कलौ गोवधस्य निषिद्धत्वादुत्सर्ग एव कर्तव्यः । अन्यमांसाशनमपि न भवति। तस्यापि कलौ निषिद्धत्वात् । मांसस्थाने माषसहितमन्नं देयम्। पूजको माषसहितमन्नं संस्कृत्य सिद्धेऽन्न ॐ भूतमिति त्रिः सकृद्वा प्राह। पूज्यः–'ॐ तत्सुभूतं विराडन्नं तन्मा क्षयि तन्मेऽशीय तन्म ऊर्जं धास्तत्सुभूतम्' इति पठित्वा ब्राह्मणान्भोजयतेति प्रत्याह। तत्र ब्राह्मणाश्चत्वारो नानागोत्राः। 'चतुरो नानागोत्रान्ब्राह्मणान्भोजयतेत्येव ब्रूयात्' इति बौधायनोक्तेः। ततः पूजको ब्राह्मणभुक्तशिष्टमन्नं स्नातकाय ददाति। पूज्यः—'ॐ द्यौस्ते ददातु पृथिवी प्रतिगृह्णातु पृथिवी

१ ग. घ. ङ. मानम्। २ घ. ङ. °पक°। ३ ग घ. ङ. °पक°

ते ददातु प्राणः प्रतिगृह्णातु प्राणस्त्वाऽश्नातु प्राणः पिबतु ' इति पूजकेन दत्तमन्नं प्रतिगृह्णाति ।

इन्द्राग्नी म इत्यस्य सोम इन्द्राग्न्यादयोऽनुष्टुप् । अन्नाशने विनियोगः । 'ॐ इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः । वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ' [ इति ] यावत्कामं प्राश्नाति । यदि पात्रे शेषो भवेत्तदा तं रातये प्रयच्छेन्निखनेद्वा । कलौ रातय उच्छिष्टदानस्य लोकगर्हितत्वान्निखननमेव ।

ततो मुखादिकं प्रक्षाल्य द्विवारमाचामेत् । अत्र वा गन्धादीनां दानम् । भुक्तवद्भ्यो वस्त्रयुगानि(णि) कुण्डलयुगानि स्रगलंकरणमिति च दद्यादेकधनं पष्ठौहीं च दद्यादित्येके । प्राङ्मधुपर्कादलंकरणमेके समामनन्तीति बौधायनोक्तम् । इदमुपलक्षणं गन्धादीनाम् । एकधनं मुख्यं धनम् । पष्ठौही चतुर्वर्षा प्रथमप्रसूता गौः । पूर्वत्र गन्धमाल्यादिदानप्रतिषेधमुक्त्वोक्तं देवत्रातेनापि, तान्युपरते कर्मणि दातव्यानीति । उपरते समाप्ते मधुपर्काख्ये कर्मणि सतीत्यर्थः । भोजनान्तो हि मधुपर्कः । अनेनैव प्रकारेणर्त्विगाचार्यश्वशुरवैवाह्यादिभ्यो मधुपर्कदानम् । यं रातिं मदधीनः स्यादिति यः कामयेत स स्वयं भुक्त्वाऽऽचम्य तस्य व्रतोच्छिष्टस्य(ष्टं) भुक्तवत आचान्तस्य रातेर्दक्षिणं हस्तं गृह्णाति ' ॐ यस्मिन्भूतं च भव्यं च सर्वे लोका इह श्रिताः । तेन त्वाऽहं प्रतिगृह्णामि त्वामहं ब्रह्मणा त्वामहं गृह्णाम्यसौ ' इति मन्त्रेण । अत्रासावित्यत्र रातेर्नाम्नो ग्रहणम् । इदं च हस्तग्रहणं काम्यं कामयेतेति वचनात् ।

ततः स्नातकः कल्पिते तस्मिन्नावसथे रात्रिश्चेत्स्थित्वा स्वगृहं गच्छेत् । यदा तु पिताऽध्यापयिता ग्रामाद्बहिर्नद्यादौ गृहाद्दूरस्थे गोष्ठे वा चेत्स्नानं तदा छत्रधारणान्तकर्मानन्तरं रथाद्यन्यतमं यानमारुह्य पितृगृहमागच्छेत् । पित्रतिरिक्तेऽध्यापयितरि तु तद्गृहे स्नानं कृत्वा रथाद्यन्यतमं यानमारुह्य पितृगृहं गन्तव्यम् । पित्राऽपि स्नातकस्य पुत्रस्य स्वगृहागमने मधुपर्कपूजा कार्या । पिता मधुपर्केणार्हयेदिति मनुवचनात् । एवमन्यैरपि स्नातकस्य मधुपर्कपूजा कार्या । यदिदं यानारोहणं दिशामुपस्थानं पूजकनिरीक्षणं च समन्त्रमुक्तं तत्समावर्तनाङ्गत्वात्स्नातकस्यैव भवति नर्त्विगादीनाम् । अत एवाऽऽचार्येण पूजकनिरीक्षणोत्तरं कर्मान्तराधिकारार्थोऽथशब्दः प्रयुक्तः ।

ततः स्नातको ब्राह्मणभोजनं भूयसीदक्षिणादानं च विधाय कर्मसाद्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् ।

# अथ मधुपर्कविषये किंचिदुच्यते।

मधुपर्को द्विविधः। गोसहितस्तद्रहितश्च। तत्र गोसहितो वेदाध्याय्याचार्यादीनाम्। तत्रेदं धर्मसूत्रम् 'गोमधुपर्कार्हो वेदाध्याय्याचार्य ऋत्विक्स्नातकः श्वशुरो राजा वा धर्मयुक्तः' इति। गौश्च मधुपर्कश्च गोमधुपर्कौ ताभ्यामर्हो योग्य इत्यर्थः। एतादृशे समासे मधुपर्कान्तर्गतगोरपेक्षयाऽधिका गौर्देया भवति। वेदाध्यायीत्याचार्यादिविशेषणम्। यद्याचार्यादयः कृत्स्नवेदाध्यायिनस्तदैव मधुपर्कादधिका गौर्देया नान्यदेति। एतेन ज्ञायते वेदैकदेशाध्यायिनोऽप्याचार्यादयः स्युस्तेऽपि केवलेन मधुपर्केण पूज्या एवेति।

अथवा गवा युक्तो मधुपर्को गोमधुपर्क इत्येवं समासः। मधुपर्कश्चात्र मुख्यवृत्त्या मधुपर्कप्रदानान्तः। अस्मिन्पक्षे मधुपर्कान्तर्गतगोरप्यभावः। अधिकगोदानाभावस्तु सुतराम्। अन्यच्च धर्मसूत्रे विशेषः—'आचार्यायर्त्विजे स्नातकाय श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च' इति। पूर्वोक्तविशेषणविशिष्टानामाचार्यादीनां संवत्सरोत्तरं प्राप्तानामेतेषां गोयुक्तमधुपर्केण पूजा कार्येत्यर्थः। अनेन सूत्रेणावधिप्रदर्शनं क्रियते। विद्यास्नातकविद्याव्रतस्नातकाभ्यामेव गौर्देया न केवलव्रतस्नातकाय। उत्तरसूत्रादिदं ज्ञायते—पूर्वसूत्रे धर्मोपदेष्टृत्वादिधर्मसंपत्तिप्रयुक्तो मधुपर्क इति। तत्र धर्मोपदेष्टुर्मधुपर्क उपनयनोत्तरमृत्विजो वरणोत्तरं स्नातकस्य समावर्तनान्ते श्वशुरस्य देवकोत्थापनान्ते राज्ञोऽभिषेकान्त इति द्रष्टव्यम्। प्रतिनिमित्तं नैमित्तिकमितिन्यायात्, ऋत्विजो वृत्वा मधुपर्कमाहरेदित्याश्वलायनसूत्रात्पुनः पुनर्यज्ञ इति च्छन्दोगसूत्राच्च प्रतियज्ञं संवत्सरोत्तरं देवभूतपितृभूतानामृत्विजां कर्मव्यतिरिक्तकाल उपस्थितिः संभवति न मनुष्यभूतानां कर्मव्यतिरिक्तकाल एतेषामृत्विक्त्वासंभवात्।

अन्यानपि मधुपर्कार्हानाह जाबालिः—

"विवाह्यमृत्विजं चैव श्रोत्रियं गृहमागतम्।
अर्हयेन्मधुपर्केण स्नातकं प्रियमेव च" इति॥

बौधायनोऽपि—"अथैतेऽर्घ्या ऋत्विक्श्वशुरपितृव्यमातुलाचार्या राजा स्नातकः प्रियागतोऽतिथिरिति संवत्सरं पर्यागतेभ्य एतेभ्य एव कुर्याद्विवाहे वरायाथर्त्विग्भ्यः कर्मणि कर्मणि ददाति" इति।

अर्घ्या अर्घ्यार्हा मधुपर्कपूजार्हा इति यावत्। पितृव्यमातुलविवाह्यप्रिया-

---

१ घ. ङ. प्रियो वरोऽति॰।

तिथीनां सूत्र इतिशब्देन संग्रहो द्रष्टव्यः। विवाह्यस्य तु केवलं मधुपर्क एव न तु गौरधिका।

ऋत्विग्भ्यो देयानां गवां संख्याविशेष उक्तो बौधायनगृह्ये—' नानामहर्त्विग्भ्यो गाः प्राहैकां होत्रकेभ्यः सर्वेभ्यो वैकां विभवात्' इति।

उत्सर्गपक्षे विशेष उक्तस्तेनैव—" तस्यामुत्सृष्टायां मेषमजं वाऽऽलभत आरण्येन वा मांसेन न त्वेवामांसोऽर्घः स्यादशक्तौ माषान्नम्' इति।

अन्यच्च तेनैवोक्तं— ' महयेदृत्विजमाचार्यं चाऽऽत्मानं वा एष महयति यः स्वमृत्विजमाचार्यं च महयति' इति।

महयति पूजयतीत्यर्थः।

# अथात्यातुरस्य समावर्तनानुकल्पः।

तत्राऽऽपस्तम्बः—' अथैतदपरं तूष्णीमेव तीर्थे स्नात्वा तूष्णीं समिधमादधाति' इति।

व्याख्यातमेतत्सुदर्शनेन—"अथापरमेतद्विधानमुच्यत इति शेषः। तीर्थे पुण्यनद्यादौ। समिधं पालाशीम्। एवकाराच्चास्मिन्विधौ नान्यत्किंचिदनुष्ठेयम्" इति।

प्रयोगस्तु—ब्रह्मचारिलिङ्गानि मेखलादीनि त्यक्त्वा तीर्थे तूष्णीं स्नात्वा वासोन्तरपरिधानादि कृत्वा श्रोत्रियागारादग्निमाहृत्य यत्र क्व चाग्निं विधिनोपसमाधाय तत्र प्रजापतिं मनसा ध्यायंस्तूष्णीमेव समिधमादधाति। केशश्मश्रुवपनादिकमन्यदप्यविरोधि तूष्णीमेव कर्तव्यमिति। अत्र क्रमः— संकल्प्य मेखलादीनि त्यक्त्वा वपनं ततस्तीर्थे स्नानमिति। परिधानादीत्यादिपदेन द्विराचमनं तिलकधारणं च। वपनादिकमित्यादिपदेन नखनिकृन्तनमिति।

समावर्तनस्य फलमाहाऽऽश्वलायनः—' महाभूतं स्नातको भवतीति विज्ञायते' इति। स्नातको हि महद्भूतं श्रूयते। कथं पुनः स्नातकस्य महत्त्वम्।

उच्यते—" देवैश्चापि मनुष्यैश्च तिर्यग्योनिभिरेव च।
गृहस्थः सेव्यते यस्मात्तस्माज्ज्येष्ठो गृहाश्रमी " इति स्मृतेः॥

" यः स्नातकः स भवति महाभूतम् " इति श्रुतिरपि।

स्मृत्यन्तरं च— " पृथिव्यादिपञ्चकवदुपकारान्करोति यत्।
देवा मनुष्याः पितरः सर्वे चैनं समाश्रिताः॥
विद्या विद्यार्थिनश्चापि शिष्याः शुश्रूषवस्तथा।
आहुर्हि वेदविज्ञानं पूर्वमन्वादयोऽपि च॥

स्नातकस्यैव माहात्म्यं महाभूतमयं यतः।
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
तथा गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः " इति ॥

इति संस्काररत्नमालायां समावर्तनसंस्कारप्रयोगः।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखया-
जिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां
सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमा-
लायां नवमं प्रकरणम् ॥ ९ ॥

अथ दशम प्रकरणम्।

## अथ संक्षेपेण स्नातकधर्माः।

तत्रेदं धर्मसूत्रम्—" माल्यालिप्तमुख उपलिप्तकेशश्मश्रुरक्तोऽभ्यक्तो वेष्टिन्यप-वेष्टिनी काञ्चुक्युपानही पादुकी " इति।

माली माल्यवान्। आलिप्तमुखश्चन्दनादिना। मुखग्रहणमुपलक्षणम्। ' मुखमग्रे ब्राह्मणोऽनुलिम्पेत् ' इत्याश्वलायनोक्तेः। सुगन्धिभिश्चन्दनादिभिर्द्र-व्यैरुपलिप्तानि संस्कृतानि केशश्मश्रूणि यस्य स उपलिप्तकेशश्मश्रुः। अक्तोऽ-ञ्जनेनाक्ष्णोः। अभ्यक्तस्तैलेनाङ्गेषु। वेष्टिनी वेष्टितशिराः। कटिप्रदेशो द्वितीयेन वाससा वेष्टितो यस्य सोऽपवेष्टिनी। कञ्चुकमेव काञ्चुकं तद्वान्का-ञ्चुकी। उपानद्वानुपानही। पादुके दारुमये पादरक्षणे तद्वान्पादुकी। एवं-भूतो भवेदित्यर्थ इति व्याख्यातमुज्ज्वलाकृता।

अत्र यत्पादुकारोहणमुक्तं तज्जीवत्पितृकस्य ज्येष्ठभ्रातृमतश्च निषिद्धम्।

" पादुके चोत्तरीयं च तर्जन्यां रौप्यधारणम्।
न जीवत्पितृकः कुर्याज्ज्येष्ठे भ्रातरि जीवति "

इति स्मृत्यन्तरवचनात्।

अन्यच्च धर्मसूत्रे—" सर्वान्रागान्वाससि वर्जयेत्कृष्णं च स्वाभा-विकमनूद्भासि वासो वसीताप्रकृष्टं च शक्तिविषये " इति।

सर्वान्कुसुम्भादीन्रागान्वाससि वर्जयेत्। न केनचिद्रक्तं वासो बिभृयात्।

स्वाभाविकं स्वभावतः कृष्णं कम्बलादि तदपि न वसीत । उद्भासनशीलमुद्भासि तदन्यदनूद्भासि । छान्दसो दीर्घः । एवंभूतं वासो वसीताप्रकृष्टं निकृष्टं जीर्णं मलवत्स्थूलं च तद्विपरीतमप्रकृष्टं, तादृशं च वासो वसीत शक्तिविषये शक्तौ सत्यामिति व्याख्यातमुज्ज्वलाकृता ।

अन्यच्च तत्रैव—" बाहुभ्यां च नदीतरम् " इति ।

पूर्वसूत्राद्वर्जयेदित्यनुवर्तते । तरं तरणं बाहुभ्यां नदीतरणं वर्जयेदित्यर्थः । बाहुभ्यामितिवचनात्प्लवादिना तरणे न दोष इति व्याख्यातं तेनैव ।

तथा—" न नक्तं स्नायान्न नग्नः स्नायात् " इति, तथा—" न नग्नां स्त्रियमीक्षेत " इति । एतच्च मैथुनादन्यत्र ज्ञेयम् ।

" अन्यत्र मैथुनान्न नग्नां स्त्रियमीक्षेत् " इत्याश्वलायनोक्तेः ।

तथा—" उपेतः स्त्रीणामुपेतस्य चोच्छिष्टं वर्जयेत् " इति ।

उपेतः कृतोपनयनः समावृत्तः स्त्रीणामुपेतस्य चोच्छिष्टं न भुञ्जीतेति व्याख्यातं तेनैव । बाहुभ्यां च नदीतरमितिगौतमसूत्रे नदीग्रहणं तडागाद्युपलक्षणार्थम् । बाहुग्रहणं तु विवक्षितमिति हरदत्तः ।

आश्वलायनः—" वर्षति न धावेन्न वृक्षमारोहेन्न कूपमवरोहेत् " इति ।

धर्मसूत्रे—" वत्सतन्तीं च नोपरि गच्छेत् " इति । वत्सतन्ती वत्सबन्धनरज्जुः । वत्सशब्दो गोजातेरुपलक्षणमिति व्याख्यातमुज्ज्वलाकृता । एवं गौतमोक्तिव्याख्यावसरे हरदत्तोऽपि ।

अन्यच्च—"अग्निं ब्राह्मणं चान्तरेण नातिक्रामेद्ब्राह्मणांश्च नाग्निमपश्च युगपद्धारयेदग्नीनां च संनिवापं वर्जयेदवचनात्प्रतिमुखमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ प्रदक्षिणी कुर्वीत पृष्ठतश्चाऽऽत्मनः पाणी न संश्लेषयेत् " इति ।

ब्राह्मणांश्चेत्यत्र चकारोऽन्तरेण नातिक्रामेदित्यनुकर्षणार्थः । वचनाभाव एकस्मिन्नग्नावग्न्यन्तरस्य संनिवापो निवपनं वर्जयेत् । प्रतिमुखमभिमुखमाह्रियमाणमग्निं भूमावप्रतिष्ठितमस्थापितं न प्रदक्षिणी कुर्वीत । आत्मनः स्वस्य पृष्ठतः पृष्ठे, चकाराच्छिरसि पाणी हस्तौ न संश्लेषयेत् । युगपन्न योजयेदित्यर्थः ।

देवलः—" अग्नौ न प्रक्षिपेदग्निमद्भिर्न शमयेत्सदा " इति ।

सदेतिवचनाद्गृहदाहादिके निमित्ते न दोष इति गम्यते ।

धर्मसूत्रे—" पदा पादस्य प्रक्षालनं वर्जयेत् " इति ।

तथा—“ नखैर्नखच्छेदनवादनस्फोटनानि ष्ठीवनानि चाकारणात् ” इति।

बृहन्नारदीये—“ न संहताभ्यां पाणिभ्यां कण्डूयेताऽऽत्मनः शिरः।
भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वादयेत्॥
शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ” इति।

शुष्कं फलशून्यम्। एवं विवादोऽपि वर्जनीयः।

स्मृत्यन्तरे—“ ष्ठीवनासृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत्।
पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत्॥
जलं पिबेन्नाञ्जलिना शयानं न प्रबोधयेत्।
नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत् ” इति॥

एनमग्निम्। जलमिति पेयमात्रोपलक्षणम्। नाञ्जलिना पिबेदिति गौतमेन पेयविशेषानुपादानादिति कश्चित्। तन्न। सामान्यस्यापि गौतमीयस्य विशेषेण याज्ञवल्कीयेनोपसंहर्तुं शक्यत्वात्। अतो जलमेवाञ्जलिना न पेयं न तु पानमात्रमिति।

शयानं श्रेष्ठं न प्रबोधयेत्।

“ नैकः स्वप्याच्छूद्रगृहे श्रेयांसं न प्रबोधयेत् ” इति मनूक्तेः।

अन्यच्च—“ नेन्द्रधनुरिति परस्मै प्रब्रूयान्न पततः संचक्षीत प्रेङ्खावन्तरेण नातिक्रामेदुद्यन्तमस्तं यन्तमादित्यं दर्शने वर्जयेत् ” इति।

पततस्तारादीनि ज्योतींषि न संचक्षीत न कथयेत्परस्मै।

अन्यच्च—“ अस्तमिते स्नानं पालाशमासनं पादुके दन्तप्रक्षालनमिति वर्जयेत् ” इति।

अन्यच्च—“ विषमारोहणावरोहणानि वर्जयेत् ” इति।

अन्यच्च—“ नावं च सांशयिकीं तृणच्छेदनलोष्टविमर्दननिष्ठीवनानि चाकारणात् ” इति। मज्जनमेतस्या भविष्यति किमित्येवं यद्विषय आपन्नः संशयः सा सांशयिकी। एतादृशीं नावमारोहणे वर्जयेत्।

अन्यच्च—“ न चोदके निरीक्षेत ” इति।

अङ्गिराः—“ भार्यया सह योऽश्नीयादुच्छिष्टं वा कदाचन।
न तस्य दोषमिच्छन्ति नित्यमेव मनीषिणः ” इति॥

इदं च विवाहविषयं दोषाल्पत्वविषयं वा।

“ न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ” इति॥

अत्र मतिर्नीतिशास्त्रादिविषया । धर्माद्युपदेशनिषेधस्य पृथगाम्नानात् । अत्र हरदत्तः— न शूद्रायोच्छिष्टं दद्यादित्यत्र गृहस्थशूद्राय नोच्छिष्टं दद्यादिति विवक्षितम् ।

" उच्छिष्टमन्नं दातव्यं शूद्रायागृहमेधिने ।
गृहस्थाय तु दातव्यमनुच्छिष्टं दिने दिने " ॥

इति व्याघ्रवचनादित्याह ।

शूद्रायोपदेशनिषेधोऽपि साक्षादुपदेशविषयः ।

" श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः " ।

इति ब्राह्मणद्वारकोपदेशस्य विहितत्वात् ।

वसिष्ठः—" स्नातकानां द्वितीयं स्यादन्तर्वासस्तथोत्तरम् " इति ।

एतद्धारणं नित्यम् । ' बहूनि चाऽऽयुष्कामस्य ' इति देवलवचनाद्बहून्यप्युपवीतानि धार्याणि ।

बहुत्वावधिमाह कश्यपः—

" त्रीणि चत्वारि पञ्चाष्टौ गृहिणः स्युर्दशापि वा " इति ।

अत्र त्रिप्रभृति दशपर्यन्तमधिकधारणे फलभूमा कल्प्यः ।

माधवीये कौर्मे—" यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् ।
छत्रं चोष्णीषममलं पादुके चाप्युपानहौ ॥
रौक्मे च कुण्डले वेदं कृत्तकेशनखः शुचिः ।
स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यं न धारयेत् ॥
शुक्लाम्बरधरो नित्यं सुगन्धप्रियदर्शनः ।
न जीर्णमलवद्वासा भवेत्तु विभवे सति ॥
न रक्तमुल्बणं चान्यधृतं वासो न कन्थिकाम् " इति ।

पादुके दारुमये पादरक्षणे । रौक्मे परिमण्डलाकृती कुण्डले । वेदो दर्भमुष्टिः । वेदमित्यनन्तरं बिभृयादिति शेषः । कृत्तं कर्तनेन ह्रस्वतां नीतं न तु वपनेन ' न समावृत्ता वपेरन् ' इति निषेधात् । केशग्रहणं श्मश्रूपलक्षणम् । ' कृत्तकेशनखश्मश्रुः ' इति मनूक्तेः । स्वाध्याये वेदाध्ययने नित्ययुक्तो भवेत् । बहिर्माल्यमित्यस्य माल्यं निर्माल्यं स्वशरीरादुद्धृतं चन्दनपुष्पादि पुनर्न धारयेत् । किंतु बहिस्त्यजेदित्यर्थः । उल्बणं शरीरपीडावहं बहुमूल्यं वा । अन्यधृतमन्येन परिहितम् । कन्थिका कन्था तां च न धारयेदित्यर्थः । असति बाधक एते धर्मा ब्रह्मचारिगृहस्थादिसाधारणा ज्ञेयाः ।

स्नातकेनापि वैश्वदेवः कार्यः।

“ वैश्वदेवं गृहस्थस्य प्रातरारम्भणं भवेत्।
स्नातकेनापि तत्कार्यं पृथक्पाको गृहे यदि ” ॥

इति प्रयोगपारिजाते शौनकोक्तेः। एवमन्येऽपि धर्मा धर्मसूत्रे गौतमसूत्रे स्मृतिषु चोक्तास्ततोऽवगन्तव्याः।

पुराणे—“ येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्सतां मार्गमेवं गच्छंस्तरिष्यति ॥
एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती ” इति।

एतेषामुल्लङ्घने ज्ञानतोऽज्ञानतो वा कृते गौतमाद्युक्तं त्र्यहमेकाहं वोपोषणं प्रायश्चित्तं ज्ञेयम्।

विवाहार्थं काम्यजप उक्त ऋग्विधाने—

“ सुपुम प्रजपेत्सूक्तमथ सम्यक्शिवालये।
अयुतं प्रजपेद्भार्यां षड्भिर्मासैर्लभेन्नरः ” इति ॥

प्रजापतिः स्त्रियां यश इत्यादीन्यसौ मे कामः समृध्यतामित्यन्तानि त्रयोविंशतिवाक्यानि विवाहार्थं जपेत्। त्रयोविंशतिसहस्रं जपः षड्भिर्मासैर्विवाहो भवति।

अथवा विश्वावसुगन्धर्वराजमन्त्रं जपेत्। तस्य संक्षेपेण जपप्रकारः।

अस्य श्रीगन्धर्वराजविश्वावसुमन्त्रस्य संमोहन ऋषिः। गायत्री छन्दः। श्रीगन्धर्वराजो विश्वावसुर्देवता। भार्यालाभार्थे जपे विनियोगः। अस्य श्रीगन्धर्वराजविश्वावसुमन्त्रस्य संमोहनाय ऋषये नम इति शिरसि। गायत्र्यै छन्दसे नम इति मुखे। श्रीगन्धर्वराजाय विश्वावसवे देवतायै नम इति हृदि। भार्यालाभार्थे जपे विनियोगाय नम इति सर्वाङ्गे। सप्रणवेन षड्दीर्घभाजा कामेन करषडङ्गन्यासौ।

अथ ध्यानम्—

हेमाम्भोरुहभूषिते रथवरे पुण्ड्रेक्षुभिः कल्पिते
कह्लारस्रजि रक्तपाणिकमलैः कन्याजनैः सेवितम्।
गन्धर्वाधिपतिं प्रसन्नहृदयं विश्वावसुं यः पुमा-
न्मन्त्रं तस्य जपेल्लभेत नियतं कन्यामसौ काङ्क्षिताम्।

विश्वावसुमित्येतदनन्तरं ध्यायेदिति शेषः। इति ध्यानम्।

“ तारं कामं गणेशं च धरण्याद्यं शिरोयुतम्।
सवह्निकं जलपतेर्बीजं तु शिरसा युतम् ॥

आस्ययुग्वह्निबीजं च जविश्वेति वसो तथा ।
ममाभिधरणीबीजं शिरोयुक्तं पितां तथा ।
कन्यां भार्यां प्रयच्छेति द्विठस्त्वन्ते प्रकीर्तितः " ॥

इतिवचनसिद्धं मन्त्रं ततो जपेत् । अन्तेऽपि कामबीजप्रणवपुटितश्चेच्छीघ्रफलप्रदः । जलाशयनिकटस्थवटच्छायायां प्रत्यङ्मुखश्चत्वारिंशत्सहस्रं जपेत् । तत्राऽऽदौ पुरश्चरणं पञ्चात्मकं त्र्यात्मकं वा कृत्वाऽनन्तरं तथैव प्रयोगं कुर्यात् । एतदर्थं विवाहगौर्यादिमन्त्रप्रयोगोऽपि द्रष्टव्यः ।

आग्नेये यजुर्विधाने—

" विश्वकर्मन्हविषेति सूचीं लौहां दशाङ्गुलाम् ।
कन्याया निखनेद्द्वारि साऽन्यस्मै न प्रदीयते " इति ॥

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्वेत्येका, ऋक् । अस्या अग्निर्ऋषिः । त्रिष्टुप्छन्दः । विश्वकर्मा देवता । चतुश्चत्वारिंशत्सहस्रं जपः ।

इति संस्काररत्नमालायां संक्षेपेण स्नातकधर्माः ।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां दशमं प्रकरणम् ॥ १० ॥

अथैकादशं प्रकरणम्

## अथ समावृत्तस्य केचन काम्यविधयः ।

योऽयममात्यमन्तेवासिनं कर्मकरं वा कामयेत नित्योऽनपक्रमणीयो मम स्यादिति स पूर्वाह्णे स्नातः शुद्धवस्त्रः कृत्स्नमहरनश्नन्ब्राह्मणेनैव संभाषमाणो निशायामष्टमे मुहूर्ते प्रदोषान्ते वा प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममामात्यस्यान्तेवासिनः कर्मकरस्य वाऽनपक्रमणीयत्वसिद्ध्यर्थं गृह्योक्तं कर्म करिष्य इति संकल्प्य यदुद्देश्यकमनपक्रमणीयत्वं तस्याऽऽवासं गत्वा जीवतः पशोः शृङ्ग उदकं गृहीत्वा 'ॐ परि त्वा गिरेरहमिदं परिभ्रातुः परिष्वसुः परि सर्वेभ्यो ज्ञातिभ्यः परिषीदः क्लेप्यासि शश्वत्परिकुपिलेन संक्रामेणाविच्छिदाकुलेन परिमीढोऽसि परिमीढोऽस्थूलेन ' इति मन्त्राभ्यां शृङ्गच्छिद्रेणोदकं प्रस्रावयन्नावसथं त्रिः प्रदक्षिणं परिक्रामति । सकृन्मन्त्राभ्यां

द्विस्तूष्णीम्। तज्जीवशृङ्गं गृहाद्बहिः केनाचिदप्यपरिगृहीते देशे गुप्तं निधापयति स्वयं वा निदधाति।

यस्यामात्यादय उच्छिष्टनिमित्तं द्रवेयुः सः—

'अनुपौह्वदनुपह्वयेन्निवर्तो योन्यवीवृधः। ऐन्द्रो वः परिक्रोशः परिक्रोशतु सर्वदा। यदिति मामिति मन्यायध्वं माया देवा अवत्तरम्। इन्द्रः पाशो नवः सिक्त्वा मह्यं पुनरुद्राजतु' [इति] तान्सर्वत आह्वयेत्।

ततः स्वागारं प्रविश्योल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय तत्र पावकनामानं लौकिकाग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वाऽमात्यस्यान्तेवासिनः कर्मकरस्य वाऽनपक्रमणीयत्वसिद्ध्यर्थं होमकर्मणि या यक्ष्यमाणा देवता तां परिग्रहीष्यामि। इन्द्रमाज्याहुत्या यक्ष्ये। एतां देवतां सद्यो यक्ष्य इत्युक्त्वा समिधोऽग्नावभ्याधायाग्निं परिस्तीर्याग्नेरुत्तरतो दर्भान्संस्तीर्य तत्र पात्राण्यासादयेत्। दर्वीं गर्तवत्फलकं वाऽऽज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भान्बर्हिराज्यं सं‍धर्कां प्रादेशमात्रीं समिधं चेत्यासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य दर्वीं निष्टप्य संमृज्य पुनर्निष्टप्य निदधाति। यदि तु फलकमासादितं न तु दर्वी तदा तस्यापि निष्टपनादि।

ततः संमार्गदर्भानभ्युक्ष्याग्नावनुप्रहृत्याऽऽज्यविलापनादि पवित्रे अग्नावाधायेत्यन्तं कृत्वाऽदितेऽनुमन्यस्वेत्यादिभिरग्निं परिषिच्याऽऽसादितां संधर्कां समिधं तूष्णीमग्नावभ्याधाय, आवर्तन वर्तयेत्यस्य सोम इन्द्रः पङ्क्तिः। अनपक्रमणीयत्वसिद्ध्यर्थं होमे विनियोगः। 'ॐ आवर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद। भूम्याश्चतस्रः प्रतिशस्ताभिरावर्तया पुनः स्वाहा' [इति] आसादितेन दर्वीफलकान्यतमेनैकामाज्याहुतिं जुहोति। इन्द्रायेदमिति त्यागः।

ततः परिस्तरणानि विसृज्य साङ्गतासिद्ध्यर्थं सर्वप्रायश्चित्तं हुत्वाऽदितेऽन्वमंस्था इत्याद्यैः परिषिच्य संस्थाजपेनोपस्थायाग्निं संपूज्य विष्णुं संस्मरेत्।

## अथाऽऽघारवत्तन्त्रेण प्रयोगः।

उल्लेखनादिप्राणायामान्तं कृत्वाऽनपक्रमणीयत्वसिद्ध्यर्थहोमकर्मणि या यक्ष्यमाणेत्यादि प्रसाधनीदेवीहोमान्तं व्याहृत्यन्तं वोक्त्वा प्रधानहोमे, इन्द्रमाज्याहुत्या यक्ष्य इत्युक्त्वाऽग्निं स्विष्टकृतं हुतशिष्टाज्याहुत्या यक्ष्य इत्यादि,

अङ्गहोमे वरुणमित्यादि वा प्रसाधनीदेवीहोमान्तं व्याहृतिहोमान्तं वाऽन्वाधानोत्कीर्तनानुसारेण कृत्वा सैध्रकी(क)समिदभ्याधानान्ते पूर्ववत्प्रधानाहुतिं हुत्वा स्विष्टकृदादि, इमं मे वरुणेत्यादि वा कर्मशेषं समापयेत् । न त्रिवृदन्नहोमः । न वाऽत्राऽऽघारवत्तन्त्रम् ।

## अथाऽऽग्निहोत्रिकतन्त्रेण प्रयोगः ।

उल्लेखनादिविधिना केवलेन धर्मसूत्रोक्तेन विधिनैव वा स्थण्डिलसंस्कारं विधाय लौकिकाग्निं तत्र प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वाऽग्निं परिस्तीर्योत्तरेणाग्निं दर्भान्संस्तीर्य तेषु स्रुक्स्रुवौ वा फलकस्रुवौ[1] वाऽऽज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भानाज्यं सैध्रकीं प्रादेशमात्रीं समिधं चाऽऽसाद्य पवित्रकरणादि पवित्रे अग्नावाधायेत्यन्तं कृत्वाऽग्निं तूष्णीं परिषिच्य स्रुचि दर्व्यां फलके वा चतुर्वारमाज्यं स्रुवेण गृहीत्वा सैध्रकीं समिधमाधाय, आवर्तन वर्तयेत्यस्य सोम इन्द्रः पङ्क्तिः । अनपक्रमणीयत्वसिद्ध्यर्थहोमे विनियोगः । ' ॐ आवर्तन वर्तय० रावर्तया पुनः स्वाहा ' इति जुहोति । पुनः सकृद्गृहीत्वा ' ॐ अग्नये स्विष्टकृते स्वाहा ' इति जुहोति । अग्नये स्विष्ट० ।

ततः स्थालीस्थमाज्यं पात्रान्तरे गृहीत्वाऽग्निहोत्रवत्त्रिः प्राश्य होमसाधनं दर्भैः प्रक्षालयति । ततः परिस्तरणानि विसृज्य विष्णुं संस्मरेत् ।

## अथ दारगुप्तिः ।

जारी[2] दारगुप्तिकर्म करिष्य इति संकल्प्य जारी स्थूला[3](ल)दृढा[4]चूर्णानि कारयित्वा तान्यादाय 'ॐ इन्द्राय यास्यशेफमलिकमन्येभ्यः पुरुषेभ्योऽन्यत्र मत्' इति मन्त्रेण सुप्ताया व्यभिचारिण्या योन्यामुपवपेत् । देशान्तरे जिगमिषुणैतत्कर्तव्यम् । देशान्तरादागत्य बभ्रुमूत्रेण योनिं प्रक्षालयेत् । उपगमनसमर्था योनिर्भवतीत्युपदिशन्त्याचार्याः । जारोऽस्यास्तीति जारी । दारगुप्तिर्दारेषु स्वस्त्रियां परपुरुषसंभवशुक्रासंभवरूपा गुप्तिस्तदर्थम् । दृढा गौलिकाख्यसरीसृपविशेषस्य नाम । या शतचरणा नाम । स्थूला(ल)दृढेत्यत्र स्थूला(ल)ढारिकेत्यपस्तम्बपाठः । सोऽप्येतदर्थक एव । सा च शतचरणा द्विविधा । ग्राम्याऽऽरण्या च । तयोरारण्या स्थूला ग्राम्या तु तन्वी । तन्व्या निवृत्त्यर्थं स्थूलेति विशेषणम् । चूर्णानीति बहुवचनाद्बह्व्यः । तासामश्मादिना महता प्रहारेण मार्यमा-

---

१ क. ख. °वौ दर्वीस्रुवौ वा । २ ग. घ. ङ. °री, आचम्य प्राणानायम्य दा° । ३ क. ख. °लाढारिकाचू° । ग. °लादृढचू° । ४ ङ. °ढाक्षूर्णा° ।

णानां चूर्णानि कारयित्वा सुप्ताया योनावुपवपेत्। एवं कृते परपुरुषस्य योनिरुपभोग्या न भवति। पुनरागत्य स्वोपभोगयोग्यत्वार्थं बभ्रुमूत्रेण कपिलागोमूत्रेण प्रक्षालयेत्। अनेनोपभोगयोग्या भवति।

स्पष्टं चैतदापस्तम्बेनोक्तम्—

"असंभवेप्सुः परेषां स्थूला(ल)दारिकाजीवचूर्णानि कारयित्वोत्तरया सुप्तायाः संबाध उपवपेत्सिद्ध्यर्थे बभ्रुमूत्रेण प्रक्षालयीत" इति।

असंभवेप्सुः परपुरुषशुक्रासंभवेप्सुर्जीवचूर्णानि जीवन्तीनां स्थूलदारिकाणां चूर्णान्यन्येन कारयित्वाऽवज्यामिव धन्वनेत्येतया सुप्ताया भार्यायाः संबाधे योनावुपवपेत्। स्वशुक्रसंभवसिद्ध्यर्थे बभ्रुमूत्रेण कपिलागोमूत्रेण प्रक्षालयीतेति व्याख्यातं तद्भाष्ये। अवज्यामित्यापस्तम्बानामेव। स्वसूत्रे मन्त्रस्य सत्त्वात्।

## अथ पण्यसिद्धिः।

महर्घविक्रय आशुविक्रयश्च पण्यसिद्धिः। पण्यसिद्ध्यर्थं कर्म करिष्य इति संकल्प्योल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय लौकिकाग्निस्थापनं तत्र कुर्यात्। औपासने होमक्रियापक्षे नोल्लेखनादिस्थापनान्तं कर्म।

ततः समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा पण्यसिद्ध्यर्थहोमकर्मणि या यक्ष्यमाणा देवतास्ताः परिग्रहीष्यामि। यद्वो देवाः प्रपणमिति मन्त्रेण देवान्सोममग्निमिन्द्रं बृहस्पतिमीशानं च सर्वहोमार्हपण्यद्रव्यैकदेशद्रव्याहुत्या यक्ष्ये। एता देवताः सद्यो यक्ष्य इत्युक्त्वा समिधोऽभ्याधायाग्निं परिस्तीर्याग्नेरुत्तरतो दर्भानास्तीर्य तेषु दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भान्बर्हिः पालाशीं समिधमाज्यं होमद्रव्यं चाऽऽसाद्य पवित्रकरणाद्याज्यसंस्कारान्तं कुर्यात्। आज्यपर्यग्निकरणकाले होमद्रव्यस्यापि पर्यग्निकरणम्। नात्र सैध्रकी(क)समिदभ्याधानमवचनात्।

ततो होमद्रव्यमभिघार्याग्नेः पश्चाद्बर्हिरास्तीर्य तत्र होमद्रव्यमासाद्यादितइत्यादिभिरग्निं परिषिच्य 'ॐ यद्वो देवाः प्रपणं चराम देवा धनेन धनमिच्छमानाः। तस्मिन्सोमो रुचमादधात्वग्निरिन्द्रो बृहस्पतिरीशानश्च स्वाहा' इति दर्व्या होमार्हपण्यद्रव्यैकदेशमुद्धृत्य तेनैकामाहुतिं जुहोति। देवेभ्य सोमायाग्नय इन्द्राय बृहस्पतय ईशानाय चेदं०।

१ क. ख. स्थलाढा°।

ततः परिस्तरणानि विसृज्य सर्वप्रायश्चित्तं हुत्वाऽदितेऽन्वमꣳस्था इत्यादिभिरग्निं परिषिच्य तं संपूज्य संस्थाजपेनोपस्थाय कर्मेश्वरायार्पयेत् ।

अथवा यावद्विक्रेतव्यं तावदपादाय विक्रयार्थं जिगमिषुरेतामाहुतिमाज्येन हुत्वा गच्छेत् । अस्मिन्पक्षेऽन्वाधाने सर्वहोमार्हपण्यद्रव्यैकदेशद्रव्याहुत्येत्येतस्य स्थान आज्याहुत्येति वदेत् । पण्यद्रव्यैकदेशद्रव्यस्य नाऽऽसादनपर्यग्निकरणे आज्यहोमपक्ष इति द्रष्टव्यम् । आपूर्विकतन्त्रेण वा प्रयोगोऽत्र । एतच्च वैश्यकर्म । आपदि पण्येन जीवतां विप्राणां क्षत्रियाणां च ।

## अथ क्रोधविनयनम् ।

तच्च बलवतः क्रुध्यतः क्रोधस्योपशमरूपम् । क्रोधविनयनाख्यं कर्म करिष्य इति संकल्प्य, "ॐ या त एषा रराट्या तनूर्मन्योर्मृद्धस्य नाशिनी । तां देवा ब्रह्मचारिणो विनयन्तु सुमेधसः । यत एतन्मुखे मतꣳ रराटमुदिव विध्यसि । अव ज्यामिव धन्विनो हृदो मन्युं तनोमि ते । अहद्यौश्च पृथिवी च विभे क्रोधं नयामसि गर्भमश्वतर्या इव " इति क्रुद्धं बलवन्तं पुरुषमभिमन्त्रयते ।

## अथ संवादाभिजयनम् ।

द्रव्यविषयो ज्ञानविषयो वा विवादः संवादस्तस्याभिजयनम् । अभिभूय प्रतिवादिनमात्मनो जयं य इच्छेत्स एतत्कर्म कुर्यात् । पराजितः पुरुषः प्रत्यासन्ने पराजयकाले कस्यांचिन्निशायां गृहमध्य उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य संवादाभिजयनाख्यं कर्म करिष्य इति संकल्प्योल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय लौकिकाग्निं तत्र प्रतिष्ठापयेत् । औपासने होमक्रियापक्षे नोल्लेखनादि स्थापनान्तम् ।

ततोऽग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा संवादाभिजयनहोमकर्मणि या यक्ष्यमाणा देवता इत्यादिव्याहृत्यन्तमुक्त्वा प्रधानहोमे, अग्निमवजिह्वेतिमन्त्रेणाऽऽज्याभ्यक्तकरवीरबीजत्रयात्मकद्रव्याहुत्या यक्ष्य इत्युक्त्वाऽङ्गहोमे वरुणमित्यादि अग्निं स्विष्टकृतं हुतशेषाज्याहुत्या यक्ष्य इत्यादि वाऽन्वाधानसमिदभ्याधानान्तं कृत्वाऽग्निं परिस्तीर्य ब्रह्मासनं कल्पयित्वाऽऽत्मन्यग्निं गृहीत्वोत्तरेणाग्निं दर्भान्संस्तीर्य तेषु दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भानाज्यमिध्मं बर्हिर्बीजत्रयं चेत्यासाद्य ब्रह्माणं दक्षिणत उपवेश्य पवित्रकरणादि

व्याहृतिहोमान्तं कुर्यात् । आज्यपर्यग्निकरणकाले बीजत्रयस्यापि पर्यग्निकरणमिति विशेषः ।

ततो व्याहृतिहोमान्त आसादितं करवीरबीजत्रयं संस्कृताज्येनाभ्यक्तं कृत्वा 'ॐ अव जिह्व निजिह्विकाव त्वा हविषा यजे यथाऽहमुत्तरो वदाम्यधरोवदसौ *वद स्वाहा' इति तेन बीजत्रयेण हस्तेनैकामाहुतिं जुहोति। अग्नय इदं न मम। असावित्यस्य स्थाने प्रथमया विभक्त्या वादिनो नाम्नो ग्रहणम्।

ततोऽङ्गहोमादि स्विष्टकृदादि वा होमशेषं समापयेत् । अत्राऽऽज्येनैव स्विष्टकृत् ।

ततः—'ॐ आ ते वाचमास्यादददे मनस्याꣳ हृदयादधि । अङ्गादङ्गात्ते वाचमाददे यत्र यत्र निहिता वाक्तां त आददे। रुद्रनीलशिखण्डवीरकर्मणि कर्मणीमं मे प्रतिसंवादिनं वृक्षमिवाशनिना जहि । अधोवदाधरोवदाधस्ताद्भूम्यावद अधोप्रतिरिव कूटेन निजस्य निहतो मया तत्सत्यं यदहं ब्रवीम्यधरो मत्पद्यस्वामुकशर्मन्'

इति वादिनमभिवीक्षमाणो जपति । अत्राप्यसौशब्दस्थाने वादिन एव नामग्रहणम् ।

'ॐ हिरण्यबाहुः सुभगा जिताक्ष्यलंकृता मध्ये देवानामासीनाऽर्थं मह्यमवोचत्स्वाहा'।

इति सभायां संभावितं पुरुषमासीनं क्वचित्प्रदेश उपस्पृशञ्जपति ।

'ॐ मम परे ममापरे ममेयं पृथिवी मही। ममाग्निश्चेन्द्रश्च दिव्यमर्थमसाधयन्निव'।

[इति] सभ्यान्पुरुषानभिवीक्षते। एवं कुर्वाणः प्रतिवादिनमभिजयत्येव।

---

## अथ नैमित्तिकानि कर्माणि ।

तत्रेदं गृह्यम्—'दर्शे चन्द्रमसं दृष्ट्वा' इत्यादि ।

सिनीवाल्याख्याममावास्यायाममावास्यासमीपवर्तिन्यां प्रतिपदि वा चन्द्रमसं दृष्ट्वा कर्मार्थं शुद्धोऽप्यप आचम्याञ्जलिनाऽपो धारयमाणः, आप्यायस्व सन्त इत्यनयोरग्निर्ऋषिः। सोमो देवता। प्रथमस्य गायत्री। द्वितीयस्य त्रिष्टुप्। नवो नवो यमादित्या इत्यनयोर्विश्वे देवा आदित्यास्त्रिष्टुप् । चन्द्रमस उपस्थाने विनियोगः। 'ॐ आप्यायस्व समेतु ते० संगथे' । 'ॐ सन्ते पयाꣳ-

---

* 'वदा' इति क. पुस्तकशोधितपाठः ।

सि० धिष्व '। ' ॐ नवो नवो भवति० दीर्घमायुः '। 'ॐ यमादित्या अंशु० स्य गोपाः ' इति चतसृभिश्चन्द्रमसमुपतिष्ठते।

मयि दक्षक्रतू इति मन्त्रस्य प्रजापतिर्दक्षक्रतू यजुः। जपे विनियोगः। 'ॐ मयि दक्षक्रतू ' इति जञ्जभ्यमानो जपति। इदं च पुरुषार्थं कर्मार्थं च । सर्वेषामेतद्भवति। श्रौतेऽपीदं कार्यम्।

" सिगसिनासि वज्रो नमस्ते अस्तु मा मा हिꣳसीः "

इत्यन्यस्योत्तरीयवाससः प्रान्तेनाधिक्षिप्तो जपति । पुनः पुनर्जपतीतिवचनं कर्मभेदबोधनार्थम्।

ततस्तस्य वाससस्तन्तुमाच्छिद्य मुखवातेन तूष्णीमेव प्रध्वंसयेत्।

" ॐ ये पक्षिणः प्रवदन्ति[1] बिभ्यतो निर्ऋतैः सह।
ते मा शिवेन शमेन तेजसोन्दन्तु वर्चसा "।

इति पक्षिणा तन्मूत्रेण पुरीषेण वोपरिक्षिप्तो जपति। तद्वस्त्रादिना प्रमृज्याद्भिस्तत्स्थानं प्रक्षालयीत।

"ॐ दिवो नु मा बृहतो अन्तरिक्षादपाꣳ स्तोको अभ्यपतच्छिवाय समिन्द्रियेण मनसाऽहमागां ब्रह्मणा गुप्तः सुकृता कृतेन "। इत्यविज्ञातेनोदकबिन्दुनोपरिक्षिप्तो जपति।

" ॐ यद्वृक्षाग्रादभ्यपतत्फलं यद्वाऽन्तरिक्षात्तदु वायुरेव। यत्रा वृक्षस्तनु वै यत्र वास आपो बाधन्तां निर्ऋतिं पराचैः "। इति यदि फलमविज्ञातमुपरि पतेत्तदा जपति।

" ॐ नमः पथिपदे[2] वातेषवे रुद्राय नमो रुद्राय पथिपदे[3] "।

इति चतुष्पथमवक्रम्य जपति।

" ॐ नमः पशुपदे वातेषवे रुद्राय नमो रुद्राय पशुपदे "।

इति शकृद्धतावक्रम्य जपति।

" नमः सर्पसृते वातेषवे रुद्राय नमो रुद्राय सर्पसृते "

इति सर्पाधिष्ठानलङ्घने जपति।

" ॐ नमोऽन्तरिक्षसदे वातेषवे रुद्राय नमो रुद्रायान्तरिक्षसदे "।

इति यदि मण्डलीभूतो वात आगच्छेत्तदा जपति।

" ॐ नमोऽप्सुषदे वातेषवे रुद्राय नमो रुद्रायाप्सुषदे "।

१ क. पतयन्ति। २ ख. ग. घ. ङ. पृथिविषदे। ३ ख. ग. घ. ङ. पृथिविषदे ।

इति नदीमुदकवतीमवगाह्य जपति।

"ॐ नमस्तत्सदे वातेषवे रुद्राय नमो रुद्राय तत्सदे"।

इति पूजनीयं संनिहितदेवताकं देशं यज्ञभूमिं वृक्षं पुराणं वाऽभिलक्षितमाक्रम्य जपति।

यदि सूर्योदयकाले स्वापं कुर्यात्तदा संपूर्णं तं दिवसमनश्नन्वाग्यतस्तिष्ठेत्। इदमेव प्रायश्चित्तम्। श्रान्तस्य व्याधितस्य च नेदं भवति।

यद्यस्तमयकाले स्वापं कुर्यात्तदा तां संपूर्णां रात्रिमनश्नन्वाग्यतस्तिष्ठेत्। अशक्तस्योभयत्रानशनमात्रं प्राणायामो वा। समाप्ते यज्ञे यूपं नोपस्पृशेत्। अनूबन्ध्याया अकरणेऽवभृथादारभ्य नोपस्पृशेत्। यदि स्पृशेदेष ते वायो, इति पठेत्। एतच्चैकयूपस्पर्शे। द्वयोर्यूपयोः स्पर्शे तु—एतौ ते वायू इति पठेत्। बहूनां यूपानां स्पर्शे तु—एते ते वायव इति पठेत्।

"चैत्यवृक्षश्चितिर्यूपश्चण्डालः सोमविक्रयी।

एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत्" इति पराशरोक्तेः।

स्नानमादौ कृत्वाऽनन्तरं पाठः कार्यः। ब्राह्मणग्रहणं क्षत्रियादीनामुपलक्षणम्।[1]

"अनिहूतं परिहूतं परिष्टुतꣳ शकुनैरुदितं च यत्।

मृगस्य शतमक्ष्णया तद्द्विपद्भ्यो भयामसि"॥

इतीष्टं देशं प्रत्यध्वानं गन्तुमारभमाणो जपति।

"ॐ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शꣳससि।

स्वस्ति नः शकुने अस्तु शिवो नः सुमना भव"॥

इत्यनिष्टं शकुनमुपलभ्य तद्दोषशमनार्थं जपति। साम गायसीतिलिङ्गाद्वाक्श्रवण एवेदमित्येके। अस्य स्तुत्यर्थत्वात्सर्वत्रेत्यन्ये।

यदेतद्भूतानीत्यस्य सोम एकसृको भूरिगनुष्टुप् जपे विनियोगः। "ॐ यदेतद्भूतान्यन्वाविश्य देवीं वाचं वदसि। द्विषतो नः परा वद तान्मृत्यो मृत्यवे नय"

इत्येकसृकं वाश्यमानं प्रति जपति। सृगालो मृगशब्दं कुर्वाण एकसृगित्युच्यते।

ततोऽग्ने अग्निना संवदस्वेत्यस्य सोमोऽग्निरेकपदा भूरिग्गायत्री भूरिगनुष्टुब्वा यजुर्वा। उल्मुकनिरसने विनियोगः "ॐ अग्ने अग्निना संवदस्व मृत्यो मृत्युना संवदस्व"। इत्यधस्तादुपरिष्टाद्वाऽऽदीप्तमुल्मुकं यत्र शब्दं करोति तां दिशं

---

१ ग. घ. ङ. °क्षियवैश्ययोरुप°। २ ख. ग. घ. ङ. भवाम°।

प्रतिनिरस्याप उपस्पृश्य, विभूरसीत्यनुवाकमन्त्राणां सोमो मन्त्रोक्ता देवता यजूंषि। एकसृकोपस्थाने विनियोगः।

"ॐ विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः १। ॐ वह्निरसि हव्यवाहनो रौ० २। ॐ श्वात्रोऽसि प्रचेता रौ० ३। ॐ तुथोऽसि विश्ववेदा रौ० ४। ॐ उशिगसि कवी रौ० ५। ॐ अङ्घारिरसि बंभारी रौ० ६। ॐ अवस्युरसि दुवस्वान्रौ० ७। ॐ शुन्ध्यूरसि मार्जालीयो रौ० ८। ॐ सम्राडसि कृशानू रौ० ९। ॐ परिषद्योऽसि पवमानो रौ० १०। ॐ प्रतक्काऽसि नभस्वान्रौ० ११। ॐ असंमृष्टोऽसि हव्यसूदो रौ० १२। ॐ ऋतधामाऽसि सुवर्ज्योती रौ० १३। ॐ ब्रह्मज्योतिरसि सुवर्धामा रौ० १४। ॐ अजोऽस्येकपाद्रौ० १५। ॐ अहिरसि बुध्नियो रौ० १६।"

एतैः षोडशभिर्मन्त्रैरेकसृकमुपतिष्ठते। उल्मुकाभावे लुप्यत एतत्।

यदीषित इत्यस्य सोम इन्द्राग्नी निचृत्त्रिष्टुप्। जपे विनियोगः—"ॐ यदीषितो यदि वा स्वकामी। भयेडको वदति वाचमेकाम्। तामिन्द्राग्नी ब्रह्मणा संविदानौ। शिवां[1] नो रात्रिं कृणुतं गृहेषु"। इति सालावृकीं शब्दं कुर्वाणां प्रति जपति।

आरण्यशुनी सालावृकी। जातिमात्रं विवक्षितं न स्त्रीत्वमित्येके।

प्रसार्य सक्थ्यावित्यस्य सोमः शकुनिर्गायत्री। जपे विनियोगः—"ॐ प्रसार्य सक्थ्यौ पतसि सव्यमक्षि निपेपि च। मेह कस्य च नाम मत्" इत्यनभिप्रेते शकुनिशब्दे जपति। शकुनिर्ध्वाङ्क्षः।

"ॐ हिरण्यपक्षः शकुनिर्देवानां वसतिंगमः। ग्रामं प्रदक्षिणं कृत्वा स्वस्ति नो वद कौशिक" इत्यनभिप्रेते पिङ्गलशब्दे जपति।

## अथाशुभस्वप्नदर्शननिमित्तको होमः।

अशुभस्वप्नदर्शननिमित्तं होमं करिष्य इति संकल्प्योल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय तत्र पावकनामानं लौकिकाग्निं प्रतिष्ठापयेत्। औपासने होमक्रियापक्षे नोल्लेखनादिस्थापनान्तं कर्म।

ततोऽग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वाऽशुभस्वप्नदर्शननिमित्तहोमकर्मणि या यक्ष्यमाणा देवतास्ताः सर्वाः परिग्रहीष्यामि। अग्निमग्नीन्वैश्वानरं दिवं चैकैकयाऽऽज्यमिश्रिततिलाहुत्या

---

१ ङ. शिवामस्मभ्यं कृ°।

यक्ष्ये। एता देवता सद्यो यक्ष्य इत्युक्त्वा समिधोऽभ्याधायाग्निं परिस्तीर्याग्नेरुत्तरतो दर्भान्संस्तीर्य तेषु दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भान्बर्हिरेकां समिधमाज्यं तिलांश्चाऽऽसादयेत्। हस्तेन होमपक्षे न दर्व्यासादनम्।

ततः पवित्रकरणादि पवित्रे अग्नावाधायेत्यन्तं कुर्यात्। आज्यपर्यग्निकरणकाले तिलानामपि पर्यग्निकरणम्। हस्तेन होमपक्षे दर्वीस्थाने दक्षिणं हस्तं सव्येनाऽऽज्यस्थालीं च सहैव निधाय प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भान्बर्हिरेकां समिधमाज्यं तिलांश्च दक्षिणहस्तेनैवाऽऽसादयेत्। सव्यहस्तेन कर्तुमशक्यत्वात्। पवित्रकरणादि पात्रप्रोक्षणान्तं कर्म दक्षिणहस्तेनैव। तत्राऽऽदौ दर्वीस्थले दक्षिणहस्तमुत्तानं निधाय सपवित्रेण सव्यहस्तेनान्येनाऽऽनीताभिः प्रोक्षणीपात्रस्थाभिरद्भिर्दक्षिणं हस्तं त्रिः प्रोक्ष्य सपवित्रेण दक्षिणहस्तेनाऽऽज्यस्थाल्यादिप्रोक्षणम्।

ततः सव्यहस्ते संमार्गदर्भान्गृहीत्वा दक्षिणं हस्तं संमार्गदर्भांश्च सहैव निष्टप्य सव्यहस्तेन जुहूवद्दर्भैर्दक्षिणं हस्तं संमृज्य पुनर्निष्टप्याग्नेः पश्चाद्दक्षिणं हस्तं संस्थाप्यैतेनैव संमार्गदर्भानग्नौ प्रहरति।

तत आज्यविलापनादि पवित्रे अग्नावाधायेत्यन्तं दक्षिणहस्तेनैव कृत्वा तिलान्संस्कृताज्येनाभ्यज्याग्नेः पश्चाद्बर्हिरास्तीर्य तत्र तिलान्निधायाग्निं परिषिच्य तूष्णीमेकां समिधमभ्याधाय दर्व्या घृताक्तांस्तिलान्सकृदुपहत्य,

पुनर्मामैत्विन्द्रियमित्यस्यारुणा अग्निरनुष्टुप्। अशुभस्वप्नदर्शननिमित्तकहोमे विनियोगः। "ॐ पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः। पुनर्ब्राह्मणमैतु मा पुनर्द्रविणमैतु मा स्वाहा" अग्नय इदं०। "ॐ अथैते धिष्णियासो अग्नयो यथास्थानं कल्पन्तामिहैव स्वाहा"। अग्निभ्य इदं न मम। "ॐ पुनर्म आत्मा पुनरायुरागात्पुनः प्राणः पुनराकूतमागात्। वैश्वानरो रश्मिभिर्वावृधानोऽन्तस्तिष्ठतु मे मनोऽमृतस्य केतुः स्वाहा" वैश्वानरायेदं न मम। "ॐ यदन्नमद्यते सायं न प्रातरवति क्षुधः। सर्वं तदस्मान्मा हिꣳसीर्न हि तद्ददृशे दिवा स्वाहा" दिव इदं न मम। इत्येतैर्मन्त्रैस्तिलैश्चतस्र आहुतीर्जुहुयात्। हस्तेन वा होमः।

ततः परिस्तरणानि विसृज्योत्तरपरिषेकं कृत्वा विष्णुं संस्मरेत्। आघारवत्तन्त्रेण वा होमोऽयम्। अत्र व्याहृतिहोमवारुणीहोमादि वैकल्पिकम्। न त्रिवृदन्नहोमः। अन्यत्समानम्।

अद्या नो देव सवितर्विश्वानि देव सवितरितिद्वाभ्यां सूर्योपस्थानमपि कार्यं

बौधायनोक्तेः। अनयोर्विश्वे देवा ऋषयः। सूर्यो देवता। गायत्री छन्दः। सूर्योपस्थाने विनियोगः। इत्यृष्यादि द्रष्टव्यम्।

## अथाद्भुतप्रायश्चित्तानि।

तत्र सूत्रम्—"कुप्त्वा कपोत उपाविक्षन्मध्वगार उपाविक्षद्गौर्गां धयेत्स्थूणा व्यरौक्षीद्वल्मीक उदैक्षीदित्येवंरूपाणि" इति।

कुप्त्वा कोपं कृत्वा। कपोत आरण्यपारावतः। उपाविक्षदध्यासितवानगार इति शेषः। मधुकरीभिर्मक्षिकाभिः क्रियमाणं मधु अगार उपाविक्षदुपविष्टमभवत्। गौर्वत्सादन्या गामधैषीत्पीतवती। स्थूणा व्यरौक्षीद्गृहोपरि रूढवती। वल्मीक उदैक्षीद्गृह उद्भूतमभवत्। इत्येवंरूपाणि, एवंप्रकाराण्यद्भुतानि। एतान्यन्यानि च यस्य गृहे भवन्ति स वक्ष्यमाणं कर्म कुर्यादित्यर्थः।

कर्ता पूर्वाह्णे स्नातः शुद्धवस्त्रोहः क्षान्तो ब्राह्मणेनैव संभाषमाणो गृहमध्य उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममागारे कपोतप्रवेशसूचितारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृह्योक्तं कर्म करिष्य इति संकल्प्य गृहमध्य एवोल्लेखनादिविधिना स्थण्डिलसंस्कारं विधाय तत्र वरदनामानं लौकिकाग्निं प्रतिष्ठापयेत्। औपासने होमक्रियापक्षे नोल्लेखनादिप्रतिष्ठापनान्तम्।

ततोऽग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा कपोतप्रवेशसूचितारिष्टपरिहारार्थे होमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वाऽऽज्यहोमे वरुणमित्यादि व्याहृतिहोमान्तं कृत्वा वारुणीहोमादि पूर्णपात्रदानान्तं कुर्यात्। अत्रैके जयाभ्यातानानित्यस्मिन्सूत्रेऽत्रेतिवचनमेवंरूपेषु महत्स्वद्भुतेष्वेव यथा स्युर्नाद्भुतेष्वल्पेष्वित्येतदर्थम्।

ततस्त्रिवृदन्नहोमं पुण्याहवाचनान्तं कुर्यात्। ममागारे मधूपवेशनसूचितारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृह्योक्तं कर्म करिष्ये। वत्सव्यतिरिक्तगोकृतगोस्तनपानसूचितारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृह्योक्तं कर्म करिष्ये। मम गृहे वल्मीकोद्भूतिसूचितारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृह्योक्तं कर्म करिष्य इति तत्तन्निमित्तानुसारेण संकल्पाः कार्याः।

गौर्गां धयेदित्येतस्मिन्नद्भुते विशेषः। "ॐ इन्द्राग्नी वः प्रस्थापयतामश्विनावभिरक्षताम्। बृहस्पतिर्वो गोपालः पूषा वः पुनरुद्राजतु" इति गाः प्रतिष्ठमाना अनुमन्त्रयते। पूषा गा इत्यस्य विश्वे देवाः पूषा गायत्री। गवानुमन्त्रणे विनियोगः।

---

१ क. °तानिष्ट°।

"ॐ पूषा गा अन्वेतु नः० नोतु नः" इत्यनेन मन्त्रेण वा प्रतिष्ठमानानां गवामनुमन्त्रणम्।

"ॐ इमा या गाव आगमन्नयक्ष्मा बहुसूवरीः। नद्य इव स्रवन्तु समुद्र इव निषिञ्चतु" इति गा आयतीः प्रतीक्षते।

"ॐ सꣳस्थाः स्थ सꣳस्था वो भूयास्थाच्युताः स्थ मा मा च्योढ्वं माऽहं भगवतीभ्यश्च्यौषीः" इत्यागत्यैकत्रावस्थिता गा अनुमन्त्रयते।

ऊर्जा वः पश्यामि सहस्रपोषमित्यनयोरग्निर्गा यजुः। गोष्ठगतगोप्रतीक्षणे विनियोगः। "ॐ ऊर्जा वः पश्याम्यू० रामदः" "ॐ सहस्रपोषं० यः श्रयन्ताम्" इति द्वाभ्यां गोष्ठगता गाः प्रतीक्षते।

अथवा सहस्रपोषं वः पुष्यासमित्येतावानेव मन्त्रो न तु श्रयन्तामित्येतदन्तः।

ततो गवां मध्य उल्लेखनादिविधिना संस्कृत आयतने पावकनामानं लौकिकाग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यायेत्। औपासने होमक्रियापक्षे नोल्लेखनादि प्रतिष्ठापनान्तम्।

ततः समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा वत्सव्यतिरिक्तगोकृतगोस्तनपानसूचितगवारिष्टपरिहारार्थहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वा प्रधानहोमे, जातवेदसं द्वाभ्यां पयआहुतिभ्यां यक्ष्ये। पावकं द्वाभ्यां पयआहुतिभ्यां यक्ष्ये। अङ्ग होमे वरुणमित्यादि पवित्राभ्याधानान्तं कर्म कुर्यात्। तत्राऽऽज्यपर्यग्निकरणकाले पयसोऽपि पर्यग्निकरणमिति विशेषः।

ततः परिधिपरिधानादिव्याहृतिहोमान्तं कर्म कुर्यात्। ततः प्रधानहोमः। उद्दीप्यस्व मा नो हिꣳसीदित्यनयोर्याज्ञिक्यो देवता उपनिषदो जातवेदा अनुष्टुप्। गोकृतगोस्तनपानसूचितगवारिष्टपरिहारार्थकर्मप्रधानपयोहोमे विनियोगः। "ॐ उद्दीप्यस्व जात० शो दिश स्वाहा" जातवेदस इदं न मम। "ॐ मा नो हिꣳसीज्जात० पातय स्वाहा" जातवेदस इदं न मम।

अपामिदं न्ययनं नमस्ते हरस इत्यनयोरग्निः पावको बृहती। गोकृतगोस्तनपानसूचितगवारिष्टपरिहारार्थकर्मप्रधानपयोहोमे विनियोगः। "ॐ अपामिदं न्य० वो भव स्वाहा" पावकायेदं न मम। "ॐ नमस्ते ह० भव स्वाहा" पावकायेदं न मम।

तत इमं मे वरुणेत्यादि । आज्येनैव स्विष्टकृत् । अथ(आज्य)शब्दाभावात्पयसेति केचित् । पूर्णपात्रदानान्तं समानम् । नात्र त्रिवृदन्नहोमः ।

ततोऽग्निं संपूज्य ब्राह्मणभोजनं भूयसीदक्षिणादानं च विधाय कर्मसाद्गुण्याय विष्णुं संस्मृत्य कर्मेश्वरायार्पयेत् । पूर्वं कर्म गौर्गां धयेदित्येतदद्भुतसूचितस्य गोस्वामिनोऽरिष्टस्य परिहाराय । इदं तु तत्सूचितगवानिष्टपरिहाराय विधीयते ।

यदि द्वावेव गावौ तदा मन्त्रेषूहः । इन्द्राग्नी वां बृहस्पतिर्वां गोपालः पूषा वां पुनरुदाजतु । पूषा गावौ । इमे ये गावावगमतामयक्ष्मे बहुसूवर्यौ सꣳस्थे स्थः सꣳस्थे वां भूयास्थोऽच्युते स्थो मा मा च्योषाथां माऽहं भगवतीभ्यां च्यौषीः । ऊर्जा वां पश्याम्यूर्जा मा पश्यतं० सहस्रपोषं वां पुष्यासमित्येवमूहः ।

अथवा बहुवचनान्ता एव मन्त्राः पूजार्थत्वात् । अत्रात्रग्रहणं बहूनां गवामनिष्टपरिहारार्थे होम एव जयादयः स्युर्न गोद्वयानिष्टपरिहारार्थ इत्येतदर्थम् ।

इति संस्काररत्नमालायां काम्यविध्यादि ।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायामेकादशं प्रकरणम् ॥ ११ ॥

अ । द्वादश प्रकरणम् ।

## अथ विवाहः ।

तत्रेदं गृह्यम्—

"समावृत्त आचार्यकुलान्मातापितरौ बिभृयात्ताभ्यामनुज्ञातो भार्यामुपयच्छेत्सजातां नग्निकां ब्रह्मचारिणीमसगोत्राम्" इति ।

उपनयनप्रभृति ब्रह्मचार्याचार्याधीनः सन्कृतविद्य आचार्यकुलात्समावृत्तः स्नातक इत्यर्थः । स मातापितरौ शुश्रूषयन्धान्याहरणादिना बिभृयात्पोषयेत् । मातापित्रधीनः स्यादित्यर्थः । स्नात इत्येतावत्येव वक्तव्ये समावृत्त आचार्यकुलादितिवचनं स्नातस्यापि विद्याया भूयःश्रुतार्थं पुनराचार्यकुल एव

संवसेन्न मातापित्रोर्भरणमितिख्यापनार्थम् । ताभ्यां मातापितृभ्यामनुज्ञातो भार्यामुपयच्छेत्स्त्री कुर्यात् । कीदृशीं सजातां सवर्णां समानाभिजनाम् । नग्निकां मैथुनार्हाम् । ब्रह्मचारिणीमकृतमैथुनाम् । समानं गोत्रं वरेण यस्याः सा सगोत्रा न सगोत्राऽसगोत्रा तामसगोत्राम् । सगोत्रत्वमसगोत्रत्वं च प्रवरकाण्डे वक्ष्यामः । ताभ्यामनुज्ञात इतिवचनमननुज्ञातस्य दारसंग्रहप्रतिषेधार्थम् । कृतदारस्यापि पितुरनुज्ञामन्तरेण नास्ति चोदितेषु कर्मसु प्रवृत्तिरिति व्याख्यातं मातृदत्तेन ।

माधवीये मनुः—" गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् " इति ॥

विवाहस्य फलं देवपित्रृणापाकरणम् । तथा च श्रुतिः—'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाँ जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी ' इति ।

बौधायनोऽपि—

" प्रजाकामस्योपदेशः प्रजननिर्वृत्ता समाख्येत्यश्विनावूचतुः—

' आयुषा तपसा युक्तः स्वाध्यायेज्यापरायणः ।
प्रजामुत्पादयेद्युक्तः स्वे स्वे वर्णे जितेन्द्रियः ।
ब्राह्मणस्यर्णसंयोगस्त्रिभिर्भवति जन्मतः ॥
तानि विमुच्याऽऽत्मवान्भवति विमुक्तोऽधर्मसंचयात् ।
स्वाध्यायेन ऋषीन्पूज्य सोमेन च पुरंदरम् ॥
प्रजया च पितॄन्सर्वाननृणो दिवि मोदते ।
पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्दमश्नुते ॥
अथ पुत्रस्य पौत्रेण नाकमेवाधिरोहयेत् ' इति ।

विज्ञायते च जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इत्येवमनृणसंयोगं वेदो दर्शयति बन्धनमृणमोक्षं प्रजायाश्चाऽऽयत्तं पितॄणां चानुकर्षशब्दश्च प्रजां दर्शयत्यनुत्सन्नप्रजावान्भवति यावदेनं प्रजाऽनुगृह्णीते तावदक्षय्यं लोकं जयति सत्पुत्रमुत्पाद्याऽऽत्मानं तारयति सप्तावरान्सप्त परान्षडन्यानात्मसप्तमान्सत्पुत्रमधीच्छाम इति यस्मात्प्रजासंतानमुत्पाद्य फलमवाप्नोति तस्मादात्मवान्प्रजामुत्पादयेदात्मनः फललाभाय तस्मात्सत्पुत्रं चोत्पा-

१ ग. 'वान्जा' ।

द्याऽऽत्मानमेवोत्पादयेदिति विज्ञायते चाऽऽत्मा वै पुत्रनामाऽसीत्येवं द्वितीय आत्मा जीवता द्रष्टव्यो यः पुत्रमुत्पादयति स तथा भवति तस्मान्नाऽऽत्मा क्वचिदक्षेत्रे समुत्स्रष्टव्य आत्मानमवमन्यते हि यथाऽऽत्मानमुत्पादयति स तथा भवति तस्मादादित एव क्षेत्रमन्विच्छेत्सवर्णं संस्कृतमुपदेशेन तस्मिन्दारे संयोगेन प्रजामुत्पादयेदौषधमन्त्रसंयोगेन च तस्योपदेसेन श्रुतिः सामान्येनोपदृश्यते सर्ववर्णेभ्यः फलवत्त्वात् " इति ।

प्रजेति समाख्याऽभिधा प्रजननिर्वृत्ता प्रजननेनैव निर्वृत्ता निष्पादिता । प्रजाया इति षष्ठ्यन्तमध्याहार्यम् । प्रजाया एवेदं हेतुगर्भं विशेषणम् । यतः प्रजा पुत्रादिरूपा प्रजननेनैव निष्पादिताऽत एव प्रजेति । प्रजायाः प्रजननसंबन्धं विनोत्पत्तेरभावात्तस्य च क्षेत्रं विना सर्वथैवासंभवादवश्यं विवाहः कर्तव्य इति फलितोऽर्थः । युक्तो विहितकाल एवोपगमनेन । जितेन्द्रिय इत्यनेन ऋतुकालिकासु रात्रिषु प्रतिरात्र्यनेकवारं गमनं व्यावर्त्यते परस्त्रीगमनं च । जन्मत उत्पत्तेरारभ्य तानि ऋणानि विमुच्य दूरीकृत्य । विमुक्तोऽधर्मसंचयादित्यत्राधर्मसंचयादिति पदच्छेदः । ऋणापाकरणे कृतेऽधर्मसमुदायाद्विमुक्तो भवति । तत आत्मवानात्मस्वरूपलाभवान्भवतीत्यर्थः । पूज्येत्यत्र समासाभावेऽपि क्त्वो ल्यबादेशश्छान्दसः । स्वाध्यायेन स्वाध्यायोऽध्ययनं तत्साधनेन ब्रह्मचर्येणेत्यर्थः । सोमेन सोमद्रव्यवता यागेन । पुरंदरशब्दस्तत्तत्कर्मसंबन्धिदेवतोपलक्षकः । पुरंदर इन्द्रः । इन्द्रस्य भूयिष्ठभाक्त्वेन देवताधिपतित्वेन च मुख्यत्वाद्ग्रहणम् । पितॄन्सर्वानित्यत्र सर्वग्रहणं देवपितॄणामपि ग्रहणार्थम् । एतेषां पूजनेनैतैः कर्मभिः संतर्पणेनानृणः सन्दिवि स्वर्गे मोदते हर्षयुक्तो भवति । लोकान्देवलोकान् । नाकः स्वर्गः । एतैस्त्रिभिः कर्मभिर्ऋणत्रयापाकरणं भवतीत्यत्र श्रुतिं दर्शयति—विज्ञायते च जायमानो वा इत्यादिना । एवमेवंप्रकारेणानृणसंयोगमनृणसंयोगत्वं, नान्य उपाय ऋणत्रयापाकरणेऽस्तीति वेद एव वा अनृण इत्यादिरूपो दर्शयति बोधयति । बन्धनमृणमोक्षमित्येतत्पूर्वं स्वस्येति शेषः । ऋणानपाकरणं बन्धनम् । ऋणमोक्षमृणापाकरणम् । एतद्द्वयं प्रजाया आयत्तं प्रजाया अधीनम् । प्रजायां सत्यामृणमोक्षस्तस्यामसत्यां बन्धनमित्येतत्प्रजाया अधीनमिति तदर्थः । प्रजाया इत्येतदनन्तरभूतश्चशब्दोऽवधारणार्थः । पितॄणां च पितॄणामपि । अनपाकृतर्णानां पितॄणामपि बन्धनमोक्षौ प्रजाया आयत्तौ भवत इत्यर्थः । प्रजायाश्चाऽऽयत्तमित्यनेन प्रजो-

---

१ क. °णं दैव° ।

त्पादनस्याधीनता दर्शिता । अनुकर्षशब्द एकांशभूतः शब्दः प्रजैकांशभूतः पुत्ररूपशब्दः प्रजां दर्शयति नतु केवलपुत्रमात्रं ब्रूते किंतु गौण्या वृत्त्या कन्यारूपां प्रजामपि ब्रूत इति । प्रजोत्पादने कृतेऽनुत्सन्नप्रजावान्भवति । प्रजोच्छेददोषो न भवतीति तात्पर्यार्थः । यावद्यावत्कालमेनं प्रजोत्पादकं प्रजाऽनुगृह्णीते तस्मिन्ननुग्रहं करोति तावत्कालमक्षय्यं लोकं जयति । बह्वी प्रजा जाता चेद्बहुकालमक्षय्यलोकजयः । स्वल्पा चेत्स्वल्पकालमक्षय्यलोकजय इत्यर्थः । पुत्रस्य समीचीनत्व एवाऽऽत्मनस्तारणं नान्यदेति सत्पदेन सूच्यते । केवलमात्मतारणमेव न, किं तु अन्येषामपि तारणमित्यस्मिन्नर्थे ब्रह्मवादिनां संमतिं दर्शयति सप्तावरानित्यादिनाऽधीच्छाम इत्यन्तेन । यतस्तरणं सत्पुत्राधीनमतस्तमेवाधीच्छाम इति ब्रह्मवादिन आहुरिति शेषः । उपसंहरति— यस्मात्प्रजासंतानमित्यादिना । यस्मात्प्रजासंतानमुत्पाद्य फलं यथोक्तं फलमाप्नोति तस्मात्प्रजामवश्यमुत्पादयेत् । संतानशब्दः संततिवाचकः । संतानशब्दस्य पर्यायतां दर्शयितुं संतानवचनम् । अथवा संतानशब्दः प्रजाबाहुल्यावश्यकत्वं द्योतयितुम् । एष्टव्या बहवः पुत्रा इत्यस्ति चात्र स्मृतिरपि । फलं यथोक्तम् । आत्मवान्बलवान् । फललाभाय यथोक्तफललाभाय । यस्माद्विज्ञायते च—आत्मा वै पुत्रनामाऽसीतिश्रुतिस्तस्मात्सत्पुत्रं चोत्पाद्याऽऽत्मानमेवोत्पादयेदित्यन्वयः । एवमेव[1] च जीवता पुरुषेण पुत्रो द्वितीयः स्वस्याऽऽत्मैव द्रष्टव्यः । यो यथा पुत्रमुत्पादयति स तथा भवति । सत्पुत्रोत्पादने सन्नेव भवति । असत्पुत्रोत्पादने त्वसन्नेव । अक्षेत्रे स्वीयक्षेत्रातिरिक्ते निषिद्धे बलात्कारेणोपभुक्ते च क्षेत्रे । अक्षेत्रे यः पुत्र उत्पाद्यते स आत्मावमान एव यस्मात्तस्मात्स्वक्षेत्रे यथोक्तकाल एवाऽऽत्मानमुत्पादयेत् । केवलमवमान एव न, किं तु निषिद्धक्षेत्रे पुत्रोत्पादने तद्रूपत्वमपीत्यर्थः । आदित आदौ विवाह एव क्षेत्रं भार्यामनुलक्षीकृत्यैवेच्छेत्प्रजोत्पादनाय । अनेन परीक्षा संगृहीता भवति । सवर्णे सजातीयम् । आदित इत्यस्य प्रथममित्यर्थः । सार्वविभक्तिकस्तसिः । तेन क्षत्रियवैश्यजातीययोः कन्ययोरपि भार्यात्वेन संग्रहः सिद्धो भवति । उपदेशने[2] विधिना विवाहविधिना संस्कृतं[3] क्षेत्रम् । दारशब्दः पुंलिङ्गे वर्तते । एकवचनं छान्दसम् । तस्मिन्दारे सवर्णे संस्कृते संयोगेन संबन्धेन[4] विधिपूर्वकमैथुनेन । यदि संयोगे सत्यपि प्रजोत्पादनं न भवति तदौषधसंयोगमन्त्रसंयोगावपि कर्तव्यौ । संयोगः प्रयोगः । तस्यौषधमन्त्रसंयोगस्योपदेशेन वैद्यकमन्त्रशास्त्रोपदेशेनैव, ज्ञानमिति शेषः । श्रुतिर्जायमानो वा

---

१ ग. एवं । २ क. °न शास्त्रेण सं° । ३ क. °स्कृतम् । ४ क. °न । य° ।

इत्यादिश्रुतिः सामान्येन समानानां भावः सामान्यं साधर्म्यं वेदाध्ययनवत्त्वरूपं तेन हेतुना सर्ववर्णेभ्यः सर्ववर्णार्थो दृश्यते। "ब्राह्मणः क्षत्रियो वैश्यो वाऽपाकुर्यादृणत्रयम्" इत्यादिस्मृतिष्विति शेषः।

यद्यपि जायमान इति श्रुतिर्ब्राह्मणत्वपुरस्कारेणैव[2] दृश्यते तथाऽपि[3] वेदाध्ययनवत्त्वरूपसाधर्म्यमादाय सर्ववर्णेभ्यो भवति। सर्वेषां फलवत्त्वात्फलेच्छावत्त्वात्। अथवा जायमान इति श्रुतिः केवलं सामान्ये ब्राह्मणत्वजातिमात्रसामान्ये नोपदृश्यते नैव प्रवर्तते। किंतु ब्रह्म वेदस्तदध्ययनवत्सु त्रिषु। कुतः सर्ववर्णेभ्यः फलेच्छावत्त्वादिति।

का परिणेयेत्याकाङ्क्षायामाह याज्ञवल्क्यः—

" अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्" इति।

लक्षण्यां बाह्याभ्यन्तरलक्षणैर्युक्ताम्। तान्यग्रे वक्ष्यन्ते। या दानेनोपभोगेन वा पुरुषान्तरपूर्विका न भवति साऽनन्यपूर्विका। अपुनर्भूरिति यावत्। मनोदत्ता वाचा दत्ताऽग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्त पुनर्भ्वः। तत्राऽऽद्यानां तिसृणामन्येन परिणयनं भवतीत्यग्रे वक्ष्यते। कान्तां वरस्य चक्षुर्मनसोरानन्दकारिणीम्। असपिण्डां सापिण्ड्यरहिताम्। तत्र चन्द्रिकापरार्कमेधातिथिमाधवप्रभृतयः—'एकस्यां पिण्डदानक्रियायां दातृत्वपिडभाक्त्वलेपभाक्त्वान्यतरसंबन्धेनान्वयः सापिण्ड्यम्' इत्याहुः।

तत्र मत्स्यपुराणम्—

" लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्त्वेषां सापिण्ड्यं साप्तपौरुषम्" इति॥

मार्कण्डेयवचनमपि—

" पिता पितामहश्चैव तथैव प्रपितामहः।
पिण्डसंबन्धिनस्त्वेते विज्ञेयाः पुरुषास्त्रयः॥
लेपसंबन्धिनश्चान्ये पितामहपितामहात्।
प्रभृत्युक्तास्त्रयस्तेषां यजमानस्तु सप्तमः॥
इत्येष मुनिभिः प्रोक्तः संबन्धः साप्तपौरुषः" इति।

---

१ क. 'त्वसामान्येन दृ'। २ ग. घ. 'रेण सामान्येन दृ'। ३ क. 'पि स'। ४ ङ. 'वर्णार्थो भ'।

अयमर्थः— सप्तानां पुरुषाणामेकपिण्डक्रियानुप्रवेशः सापिण्ड्ये हेतुः। तथा चैकस्य देवदत्तस्य स्वकीयैः पित्रादिभिः षड्भिः पुत्रादिभिः षड्भिश्च सह सापिण्ड्यम्।

नन्वेवं भ्रातृपितृव्यमातुलभागिनेयादिभिस्तद्भार्यादिभिश्च सह सापिण्ड्यं न स्यादिति चेत्। न। उद्देश्यदेवतैक्येन क्रियैक्यस्यात्र विवक्षितत्वात्। तथा च देवदत्तकर्तृकपिण्डक्रियायां ये देवतात्वेनानुप्रविशन्ति तेषां मध्ये यः कोऽपि भ्रातृपितृव्यमातुलादिकर्तृकपिण्डक्रियायामप्यनुप्रविशतीत्यस्ति तैः सह सापिण्ड्यम्। भार्याणामपि भर्तृकर्तृकपिण्डदानक्रियायां सहाधिकारित्वात्सापिण्ड्यसिद्धिः।

ननु सहाधिकारसिद्धावेिदं स्यात्तत्रैव किं मानमिति चेत्। न। पाणिग्रहणादि सहत्वं कर्मसु तथा पुण्यफलेषु चेति धर्मसूत्रवचनेन,

"तस्मात्साधारणो धर्मः श्रुतौ सर्वः सहोदितः"।

इति मनुवचनेनोद्वाहकाल एवानयोर्वचनेन द्रव्यसाधारण्यं प्रतिपादितम्। धर्मे चार्थे च कामे च नातिचरितव्येत्यनेन न ह्युभयसाधारणमेकेन त्यक्तुं शक्यते। तस्माद्द्रव्यसाधारण्यान्न भर्त्रा सह विभजेदिति विभागप्रतिषेधान्नास्ति भिन्नयोः कर्तृत्वमिति तन्त्ररत्नेन, सहत्वं कर्मस्विति सहग्रहणं न बलीवर्दवत्समानाधिकार इतिप्रदर्शनार्थम्। ततश्च भर्त्राऽसौ वक्तव्याऽहं दानादि वर्तयामि त्वमपि संकल्पं कुर्विति तयाऽपि तथैव कर्तव्यमन्यथा दोष इत्यपरार्केण, स्मृतिचन्द्रिकाहेमाद्रिमाधवादिभिश्च सहाधिकारस्य सिद्धान्तितत्वात्। न चैवमपि भगिनीपितृष्वस्रादिभिर्न स्यादिति शङ्क्यम्। अविभक्तभ्रातॄणां ज्येष्ठस्यैव कर्तृत्वेन कनिष्ठानां सापिण्ड्यसिद्ध्यर्थं योग्यताया इवात्रापि शरणीकर्तव्यत्वात्।

ननु—"यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम्"।

इतिवचनसिद्धगयाश्राद्धदेवतात्ववतां मित्रादीनाम्,

तथा—"सर्वाभावे तु नृपतिः कारयेत्तस्य रिक्थतः"।

इतिमार्कण्डेयपुराणाद्राज्ञोऽपि श्राद्धकर्तृत्वेन सापिण्ड्यापत्तिरिति चेत्सत्यम्। 'सप्तमात्पञ्चमादूर्ध्वं पितृतो मातृतस्तथा' इत्यादिवचनानुरोधेन पित्रादिसंबन्धिषु केषुचिदेव सपिण्डशब्दस्य योगरूढ्यङ्गीकारेणाऽऽपत्त्यभावात्। विज्ञानेश्वरमदनपारिजातकारप्रभृतयस्तु— एकशरीरावयवान्वयरूपं सापिण्ड्यमाहुः। भवन्ति हि एकस्य पितुरेकस्या मातुर्वा शरीरस्यावयवाः पुत्रपौत्रादिषु साक्षा-

त्परम्परया वा शुक्रशोणितादिरूपेणानुस्यताः । विधात्रवयवान्वयातिप्रसङ्गप-रिहारस्तु पूर्ववत्कर्तव्यः ।

" सप्तमात्पञ्चमादूर्ध्वं पितृतो मातृतस्तथा "

इत्येतस्य वचसो निष्कृष्टोऽर्थः शास्त्रान्तरवचनाज्ज्ञेयः—

" वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।
पञ्चमी चेत्तयोर्माता सापिण्ड्यं विनिवर्तते " इति ॥

यतः संतानभेदः स कूटस्थो मूलपुरुष इति यावत् । तमारभ्य वध्वा वरस्य वा तातः पिता सप्तमो यदि भवेत्तयोर्वधूवरयोर्यदि कूटस्थात्पञ्चमी माता भवेत्तदा सापिण्ड्यं निवृत्तं भवतीति । निर्गलितार्थस्तु पितृद्वारकसापिण्ड्य-विचारे सप्तमादूर्ध्वं सापिण्ड्यनिवृत्तिः । मातृद्वारकसापिण्ड्यविचारे तु पञ्च-मादूर्ध्वमिति ।

संगृहीतोऽयमर्थो विश्वरूपनिबन्धे—

" एवमुक्तप्रकारेण सप्तमात्पितृतस्तथा ।
ऊर्ध्वमेव विवाह्यत्वं पञ्चमान्मातृतस्तथा ॥
संतानो भिद्यते यस्मात्पूर्वजादुभयत्र च ।
तमादायैव गणयेद्वरं यावच्च कन्यकाम् " इति ॥

अत्रोदाहरणं यथा—कूटस्थो मूलपुरुषो देवदत्तः १ तत्पुत्रो ब्रह्मदत्तः २ तत्पुत्रो विष्णुदत्तः ३ तत्पुत्रः शिवदत्तः ४ तत्पुत्रो मित्रदत्तः ५ तत्पुत्रो हर-दत्तः ६ तत्पुत्रो यज्ञदत्तः ७ तत्पुत्रः श्रीदत्तोऽष्टम इति पितृद्वारकं सापिण्ड्यं वरविषये ।

मूलपुरुषो देवदत्त एव १ *तत्पुरुषो मातृदत्तः २ तत्पुरुषो रुद्र-दत्तः ३ तत्पुरुषो भानुदत्तः ४ तत्कन्या श्रीदेवी ५ तत्कन्या श्रीदत्तभक्ता । इति मातृद्वारकसापिण्ड्यं वधूविषये ।

अत्राष्टमः श्रीदत्तः षष्ठीं श्रीदत्तभक्तामुद्वहेत् । मूलपुरुषमारभ्य मध्ये कन्यासंततावप्येवमेव । वैपरीत्येऽप्येवम् ।

यत्तु वसिष्ठः— " पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा " इति ।

उद्वहेदिति शेषः ।

* ङ. पुस्तक इत आरभ्य वाक्यत्रये तत्पुरुषशब्दस्थाने तत्पुत्रशब्दो वर्तते ।

**यच्च विष्णुपुराणम्—**

" पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ।
गृहस्थ उद्वहेत्कन्यां न्याय्येन विधिना नृप " **इति** ॥

**तत्पञ्चमीं सप्तमीमतीत्येति व्याख्येयम् । सप्तमात्पञ्चमादूर्ध्वं, वध्वा वरस्य वा तात इत्यादिवचनानुरोधात् ।**

" पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।
क्रियापरा अपि हि ते विज्ञेयाः शूद्रतां गता " ॥

**इत्यपरार्के मरीचिवचनाच्च ।**

**यत्तु षट्त्रिंशन्मते—**

" तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः " **इति** ॥

**यदपि पैठीनसिः—**

" त्रीनतीत्य मातृतः पञ्चातीत्य पितृतः " **इति** ।

**यदपि स्मृत्यर्णवे वचनं—**

" कन्या चतुर्थी च वरश्च पञ्चमो वरश्चतुर्थो न तु पञ्चमीं वहेत् ।
पित्र्ये वहेत्पञ्चमषष्ठयोर्वा कन्या तृतीयाऽपि तथा चतुर्थी " **इति** ॥

**यदपि पराशरवचनं—**

" चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोऽपि वा ।
पराशरमते षष्ठीं पञ्चमो नतु पञ्चमीम् " **इति** ॥

**यान्यपि शाकलवचनानि—**

" चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमीं च वा ।
वहेत्संबन्धिनीं षष्ठीं पञ्चमो न तु पञ्चमीम् ॥
भवेतां पूर्वजात्पुत्रौ तयोरपि च संततिः ।
पञ्चमः पञ्चमीं कन्यां न तत्र वरयेद्द्विजः ॥
कन्ये द्वे पूर्वजात्स्यातां संततिः स्यात्तयोरपि ।
पञ्चमः पञ्चमीं तत्र वरः कन्यां समुद्वहेत् ॥
कन्यापुत्रौ तु संभूतौ पूर्वजात्संततिस्तयोः ।
यदि स्याद्वरयेत्तत्र पञ्चमः पञ्चमीमपि " **इति** ॥

१ ग. घ. ञ्चमोऽपि वा ।

" दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणां महाकुलात् ।
उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ।
पञ्चमीं तदभावे तु पितुः पक्षे त्वयं विधिः ॥
सप्तमीं च तथा षष्ठीं पञ्चमीं च तथैव ।
एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ॥
तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः " ॥

इति चतुर्विंशतिमते दशपुरुषविख्यातश्रोत्रियकुलविषय एव सप्तम्यादीनामप्युद्वाह्यत्वोक्तेस्तत्पराण्येतानि वचनान्यत्यन्तापद्विषयाणि वेति ज्ञेयम् ।

संबन्धविवेके शूलपाणिः—

" पञ्चमात्सप्तमाच्चार्वागपि त्रिगोत्रान्तरिता विवाह्या ।

' असंबन्धा भवेन्मातुः पिण्डेनैवोदकेन वा ।
सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या '

इति बृहन्मनूक्तेः ।

' संनिकर्षेऽपि कर्तव्यं त्रिगोत्रात्परतो यदि '

इति देवलोक्तेश्च " इति ।

अस्योदाहरणम्— मूलपुरुषो यज्ञदत्तः १ तत्पुत्रो विष्णुदत्तः २ तत्पुत्रो रुद्रदत्तः ३ तत्पुत्रो ब्रह्मदत्तः ४ तत्पुत्रो हरदत्तः ५ तत्पुत्रो मित्रदत्तः ६ तत्पुत्रः शिवदत्तः ७ तत्पुत्रः श्रीदत्तः ८ इति वरविषये ।

वधूविषये मूलपुरुषो यज्ञदत्तः १ तत्कन्या लक्ष्मी वासिष्ठा २ तत्कन्या सरस्वती नितुन्दगोत्रा ३ तत्कन्या गौरी कौण्डिन्या ४ तत्कन्या श्रीदत्तभक्ता ५ श्रीदत्तेनेयं विवाह्या । एतच्च दाक्षिणात्या न मन्यन्त इति नवीनाः ।

वस्तुतस्तु—" पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।
क्रियापरा अपि हि ते विज्ञेयाः शूद्रतां गताः "

इति निषेधवाक्यविरोधादिदमप्यापद्विषयमेवेति युक्तम् ।

चतुर्विंशतिमते—

" असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने " इति ॥

**विशेषः स्मृत्यन्तरे—**

" सापत्नमातुर्भगिनीं तत्सुतां च विवर्जयेत् ।
पितृव्यपत्नीभगिनीं तत्सुतां च विवर्जयेत् ॥
गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः ।
गुरोश्च कन्यां शिष्यस्तु नोद्वहेत कदाचन " इति ।

**अन्योऽपि विशेषः—**

" धात्रीपुत्रीं धात्रीभगिनीमिष्टपुत्रीमिष्टभगिनीमिष्टमातुलसुतां ज्येष्ठभ्रातृभार्याभगिनीं स्वभार्यासहोदरामिष्टपितृभगिनीमिष्टमातृभगिनीं पितृव्यपत्नीभगिनीं स्नुषाभगिनीं सापत्नमातृभगिनीं च नोद्वहेत् " इति ।

**गृह्यपरिशिष्टेऽपि**—अथ विवाह इत्युपक्रम्याविरुद्धसंबन्धामुपयच्छेतेत्युक्त्वा दंपत्योर्मिथः पितृमातृसाम्ये विरुद्धसंबन्धो यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति ।

**अस्यार्थः— यत्र दंपत्योर्वधूवरयोः पितृमातृसाम्यं वध्वा वरः पितृस्थानीयो भवति वरस्य वा वधूर्मातृस्थानीया भवति तादृशो विवाहो विरुद्धसंबन्धः । तत्र यथाक्रममुदाहरणद्वयम् । भार्यास्वसुर्दुहिता शालिकापुत्री, पितृव्यपत्नीस्वसा पितृव्यपत्नीभगिनी चेति । विरुद्धसंबन्धविषय उदाहरणान्तरमपि द्रष्टव्यम् ।**

**नारदः**—" प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् ।
न चैकजन्ययोः पुंसोरेकजन्ये तु कन्यके " इति ॥

**स्वस्य कन्या यस्य पुत्राय दत्ता तत्कन्यकायाः स्वपुत्रेण परिणयनं प्रत्युद्वाहः ।**

**सुमन्तुः**—" पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयान्यन्यथा संकरकारिणः स्युः " इति ।

**अत्र च यावद्वचनं वाचनिकमिति न्यायात्परिगणितेष्वेव सापिण्ड्यं न तु सप्तमादिपर्यन्तमिति केचित् ।**

**अन्ये तूद्देश्यतावच्छेदकानां पितृपत्नीत्वतद्भ्रातृत्वादीनां भेदेन वाक्यभेदात्तन्निवृत्त्यै लक्षणया सपत्नमातामहकुले चतुष्पुरुषं सापिण्ड्यमातिदेशिकं**

१ घ. ङ. °तृ । गा° ।

विधीयते । अतश्च मातुलादिदुहितृष्विव तत्पुत्रष्वेपि सापिण्ड्यात्कन्यायाः सापत्नमातुलपुत्रेण न विवाह इत्याहुः ।

मातुलकन्यापरिणयनं तु येषामाचारस्तेषामेवेतरः कुर्वन्दुष्यति ।

तथा च बौधायनः—"पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि दक्षिणतस्तान्यनुव्याख्यास्यामो यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमित्यथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहारः सायुधीयकं समुद्रयानमिति तत्रेतर इतरस्मिन्कुर्वन्दुष्यति तत्तद्देशप्रामाण्यात्" इति ।

इतरो दाक्षिणात्य इतरस्मिन्नुत्तरदेशे मातुलसंबन्धं कुर्वन्दुष्यति न स्वदेशे । तथेतर उदीच्य इतरस्मिन्दक्षिणदेश ऊर्णाविक्रयसीधुपानादिकं कुर्वन्दुष्यति न स्वदेशे । कुतः । देशप्रामाण्याद्देशनिबन्धनत्वादाचारप्रामाण्यस्येत्यर्थः ।

बृहस्पतिरपि—"उदूह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ॥
उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः ।
सजाताश्चापि गृह्णन्ति भ्रातृभार्यामभर्तृकाम् ॥
सर्वदेशेष्वनाचारो रथ्याताम्बूलचर्वणम्" इति ॥

देवलोऽपि—"यस्मिन्देशे त्वनाचारो न्यायदृष्टः सुकल्पितः ।
स तस्मिन्नेव कर्तव्यो नान्यदेशे स ईरितः ॥
यस्मिन्देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा ।
यो यत्र विहितो धर्मस्तं धर्मं न विचारयेत्" इति ॥

ननु शिष्टाचारप्रामाण्ये स्वदुहितृविवाहोऽपि प्रसज्येत प्रजापतेराचरणात् । तथा च श्रुतिः—"प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्" इति । मैवम् ।

"न देवचरितं चरेत्" इति न्यायात् ।

अत एव बौधायनः—

"अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् ।
नानुष्ठेयं मनुष्यैस्तु तदुक्तं धर्ममाचरेत्" इति ॥

प्रत्युत दोषोऽभिहितः शातातपेन—

"मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत्" इति ॥

सगोत्राविवाहे प्रायश्चित्तं स्मृत्यर्थसारे—

"इत्थं सगोत्रसंबंद्धविवाहविषये स्थिते।
यदि कश्चिज्ज्ञानतस्तां कन्यामूढ्वोपगच्छति॥
गुरुतल्पव्रताच्छुध्येद्गर्भस्तज्जोऽन्त्यतां व्रजेत्।
भोगतस्तां परित्यज्य पालयेज्जननीमिव॥
अज्ञानादैन्दवैः शुध्येत्त्रिभिर्गर्भस्तु क(का)श्यपः' इति॥

ऐन्दवानि चान्द्रायणानि। बहुवचनात्त्रीण्यधिकानि वा। क(का)श्यप इत्यत्र स गर्भः क(का)श्यपः कश्यपगोत्रो भवति। "सर्वाः काश्यप्यः प्रजाः" इति-श्रुतेरित्यर्थः।

एतदर्थमेव प्रवरज्ञानमावश्यकमित्युक्तं तेनैव—

"ज्ञातव्याः प्रवरा ब्रह्मसायुज्यश्रुतितोऽन्यथा।
गुरुतल्पमहादोषचण्डालोत्पत्तिशङ्कया" इति॥

तिथितत्त्वे बौधायनः—

"सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात्" इति॥

तस्यां प्रजोत्पादने प्रायश्चित्तमाह स एव—

"प्रजा जाता चेत्कृच्छ्राब्दपादं चरित्वा यन्म आत्मनो मिन्दाभू-त्पुनरग्निश्चक्षुरदादित्येताभ्यां जुहुयात्" इति॥

एतच्चाज्ञानतः पूर्वममत्येत्युपक्रमात्। ज्ञानोत्तरं भोगे तां परित्यजेत्। कृच्छ्राब्दपादस्यैन्दवानां च शक्ताशक्तत्वेन व्यवस्था द्रष्टव्या। मत्या तु गुरु-तल्पव्रताच्छुद्धिः।

सपिण्डायामपत्योत्पादने बृहद्यमः—

"सपिण्डापत्यदारेषु प्राणत्यागो विधीयते" इति।

अपत्ययुक्ता दारा अपत्यदाराः। सपिण्डाश्च ताश्च ताः (ते च ते) तेषु।

मण्डनोऽप्याह—"सगोत्रायां प्रजां जातां चण्डालेषु विनिक्षिपेत्।
गुरुतल्पव्रतं कृत्वा तां रक्षेज्जननीमिव॥
उदूह्याज्ञानतस्तुल्यगोत्रां चान्द्रायणं चरेत्।
परिणीतसगोत्रायामज्ञानाज्जनितः सुतः॥
क(का)श्यपो न तु चण्डालः पितुः कृच्छ्राब्दपादतः[३]।
मिन्दाहुती द्वे जुहुयाद्व्रतान्ते दीप्तपावके" इति॥

---

१ ख. ङ. °त्रादिवि°। २ ख. ग. ङ. °बन्धवि°। ३ ख.ङ. °ब्दभेदकः। मि°। ४ ग. घ. °दकः। मि°।

उदूह्याज्ञानत इत्युत्तरवाक्येऽज्ञानत इति श्रवणात्पूर्वत्र ज्ञानत इत्यर्थतः सिध्यति । परिणीतसगोत्रायामित्यस्मिन्वाक्येऽप्यज्ञानादित्युक्त्या ज्ञाने तु गर्भश्चण्डाल एव पितुः प्रायश्चित्तं नास्त्येव किं तु मृतप्राय एव स इति सूचितं भवति । यवीयसीं वयसा वपुषा च न्यूनाम् । तच्च न्यूनत्वं विवाहकालकथने वक्ष्यामः । अरोगिणीमचिकित्स्यरोगरहिताम् । भ्रातृमतीं ज्येष्ठः कनिष्ठो वा भ्राता विद्यते यस्याः सा ताम् । अनेन पुत्रिकाकरणशङ्का निरस्यते ।

अत एव मनुः—“ यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ” इति ॥

यस्याः पिता पुत्रिकाकरणाभिप्रायवानिति न ज्ञायेत तां नोपयच्छेत । यत्र तु नैवाऽऽशङ्का तामभ्रातृकामप्युपयच्छेतेत्यभिप्रायः । न विज्ञायेत वा पितेत्युक्तेर्वरेण सह संप्रतिपत्तिं विनाऽपि पितुः संकल्पमात्रात्कन्या पुत्रिका भवतीति गम्यते ।

अत एव गौतमः—

“ अभिसंधिमात्रात्पुत्रिकेत्येकेषां तत्संशयान्नोपयच्छेदभ्रातृकाम् ” इति ।

अभिसंधिर्गूढसंकल्पः ।

मनुरपि—“ अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ” इति ॥

वरेण सह संप्रतिपत्तौ पुत्रिकाकरणं स्पष्टमेव विज्ञायते ।

सा च संप्रतिपत्तिर्वसिष्ठेन दर्शिता—

“ अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ” इति ॥

अयं च तद्दानमन्त्रः । अस्याश्च पुत्रिकायाः स्वपित्रादिभिः सह सापिण्ड्यसगोत्रत्वानिवृत्तिः ।

अत एव लौगाक्षिः—

“ मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाः ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः ” इति ॥

तदेवं तात्पर्यम्—पुत्रिकां शङ्कमानः पुत्रार्थी भ्रातृमतीमेवोपयच्छेतेति । एतच्च कलौ निषिद्धं कलिवर्ज्ये पाठात् ।

असमानार्षगोत्रजामिति । समाने आर्षगोत्रे यस्य तज्जाता या न भवति

साऽसमानार्षगोत्रजा ताम्। ऋषेरिदमार्षं प्रवरः। असमानप्रवरजामसमानगोत्रजां चेत्यर्थः। यस्या वध्वा येन वरेण सह प्रवरैक्यं गोत्रैक्यं वा नास्ति सा वधूस्तेन सह विवाहमर्हति। क्वचिद्गोत्रभेदेऽपि प्रवरैक्यमस्ति। तद्यथा—वाधूलमौनमौकादीनां भिन्नगोत्राणां भार्गववैतहव्यसावे*दसेति प्रवरस्यैक्यात्। तत्र विवाहप्रसक्तौ तद्व्यवच्छेदायासमानार्षजामित्युक्तम्। क्वचित्प्रवरभेदेऽपि गोत्रैक्यम्। तद्यथा—आङ्गिरसाम्बरीषयौवनाश्वेति मांधात्राम्बरीषयौवनाश्वेत्यत्राऽऽङ्गिरसमांधातृप्रवरभेदेऽपि यौवनाश्वगोत्रमेकम्। अतस्तत्र विवाहो मा भूदित्यसमानगोत्रजामित्युक्तम्।

---

## अथ गोत्रप्रवरनिर्णयः।

तत्र बौधायनः—"विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः। अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः। सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते" इति।

अत्रापत्यपदं केवलपुत्रापत्यपरं न भवति किंतु पौत्रादिपरमपि। अत एव पाणिनिः—'अपत्यं पौत्रप्रभृतिगोत्रम्" इत्याह।

ननु केवलभृगुगणेषु यस्कादिषु केवलाङ्गिरोगणेषु हरितादिषु च सप्तर्ष्यपत्यत्वाभावाद्गोत्रत्वं न स्यादिति चेन्न।

"एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते।
तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणात्" ॥

इति बौधायनोक्तपर्युदासानुपपत्त्या तत्सिद्धेः। प्राप्तिसंभावनायां हि पर्युदासो भवति। यथा यजतिषु ये यजामहं करोतीति सामान्यवाक्यादनूयाजेषु ये यजामहप्राप्तिसंभावनायां नानूयाजेष्वित्यनेनानूयाजव्यतिरिक्तेष्वित्येवं पर्युदासः क्रियते तथाऽत्रापीति। सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमिति सूत्रं तु न लक्षणप्रदर्शकं किंतु अयोगव्यावृत्तिमात्रप्रदर्शकमिति न पूर्वोत्तरसूत्रविरोधः। अत एव विज्ञानेश्वरमाधवमदनपारिजातादिषु गोत्रं वंशपरम्पराप्रसिद्धमित्युक्तम्।

उक्तं च भट्टपादैरपि—समानेऽपि ब्राह्मण्ये कुण्डिनोऽत्रिरितिस्मरणलक्षणं

---

* अत्र क. पुस्तकटिप्पण्यां वेतसेति पाठः।

१ ग. °दतसे°।

गोत्रमिति । एवं च यत्राभियुक्तानां गोत्रत्वप्रसिद्धिस्तद्गोत्रमित्येव निर्दुष्टं गोत्रलक्षणं मन्त्रत्वादिवत्सिद्धं भवति । एतेन वसिष्ठादीनां गोत्रत्वानुपपत्तिः, अस्मदादीनां परम्परया तदपत्यत्वेन गोत्रत्वापत्तिश्च परिहृता भवति । यानधिकृत्य प्रवरा आम्नातास्तादृशा गणा ऊनपञ्चाशत् ।

तथा च बौधायनः—

" गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् " इति ॥

# अथ प्रवराः ।

तत्र प्रवरसूत्रस्य प्राचीनव्याख्यानानुपलम्भात्तद्व्याख्यानसहितं प्रवरसूत्रं प्रदर्श्यते । तत्र प्रतिज्ञासूत्रमिदं—' प्रवरान्व्याख्यास्यामः ' इति । एतच्च प्रतिज्ञानमग्रिमाणां भार्गवच्यावनाप्नवानौर्वजामदग्न्येत्यादीनां प्रवर इतिसंज्ञासिद्ध्यर्थम् । प्रव्रियन्तेऽग्नेर्विशेषणत्वेनोत्कीर्त्यन्त इति प्रवराः । तान्व्याख्यास्याम एकत्र संगृह्य कथयिष्यामः । अग्नेर्विशेषणत्वेनोत्कीर्तनं तु ' अग्ने महाꣳ असि ब्राह्मण भारत ' इत्यादीष्टिमन्त्रेषु प्रतिपादितम् । विवाह उत्कीर्तनं तु स्वविशेषणत्वेनैव । अन्यस्यासंभवात् । विवाह आर्षगोत्रोच्चारणं तु वाचनिकं, तच्च समप्रवरत्वसगोत्रत्वशङ्कानिवारणार्थमदृष्टार्थं च भवति । शान्त्यादिकर्मसु तु वाचनिकं कुत्रचित् । कुत्रचिदाचारप्राप्तम् ।

प्रवरणं कर्तव्यमित्यस्मिन्नर्थे श्रुतिं प्रदर्शयति—

' आर्षेयं वृणीते बन्धोरेव नैत्यथो संतत्या इति विज्ञायते ' इति ।

आर्षेयमृषेरपत्यमाहवनीयमग्निं यजमानेनोत्पादितत्वाद्यजमानस्यर्षिसंतानत्वात्तं वृणीते प्रार्थयते तद्गोत्रत्वायेति । एवं सति बन्धोरेव नैति पूर्वर्षिसंबन्धान्न च्यवते । अथो अपि च संतत्यै पूर्वेषां पूर्वजानामात्मनश्च संतानायेति विज्ञायते, श्रुतिरिति शेषः ।

देवैर्मनुष्यैश्चाऽऽर्षेयवरणं न कर्तव्यं किं तु ऋषिभिरेवेत्येतदर्थे श्रुतिं दर्शयति—

" न देवै[1]र्मनुष्यैरार्षेयं वृणीत ऋषिभिरेवाऽऽर्षेयं वृणीत इति विज्ञायते " इति ।

---

१ ङ. 'वैर्न मनु' ।

न देवैः प्रजापत्यादिभिरार्षेयं वृणीते न वा मनुष्यैर्विद्वद्भिर्देवदत्तादिभिरार्षेयं वृणीते किंतु ऋषिभिर्वसिष्ठादिभिर्मन्त्रदृग्भिरेवाऽऽर्षेयं वृणीत इति विज्ञायते श्रुतिरिति शेषः।

आर्षेयोच्चारणकर्तव्यताविषये श्रुतिं दर्शयति—

" आर्षेयमन्वाचष्ट ऋषिणा हि
देवाः पुरुषमनुबुध्यन्त इति विज्ञायते " इति।

आर्षेयमन्वाचष्टे। कस्मात्। ऋषिणा पूर्वजेन कीर्तितेन देवप्रसिद्धेन तदपत्यं पुरुषं देवा अनुबुध्यन्ते भोज्यान्नोऽयं तदपत्यत्वादिति जानन्ति हीत्यर्थः।

स्वस्याऽऽर्षेयवरणं परित्यज्यान्यस्याऽऽर्षेयवरणे दोष इत्येतदर्थे श्रुतिं दर्शयति—

" यो वा अन्यः सन्नन्यस्याऽऽर्षेयं वृणीते स वा
अस्य तदृषिरिष्टं वीतं वृङ्क्त इति विज्ञायते " इति।

यो वै यजमानोऽन्यगोत्रः सन्नन्यगोत्रस्याऽऽर्षेयेण प्रवृणीते स वै स एव ऋषिरस्य यजमानस्य तदिष्टं यागफलं वीतं ब्राह्मणतर्पणादिफलं वृङ्क्ते गृह्णातीत्यर्थः।

आर्षेयसंख्यानियमार्थिकां चतुर्वरणपञ्चातिप्रवरणनिषेधिकां च श्रुतिं दर्शयति—

" एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो
वृणीते न पञ्चाति प्रवृणीत इति विज्ञायते ' इति।

एकमार्षेयं वृणीते, एकमृषिं संकीर्त्य तदपत्यमग्निं वृणीते। तथा द्वौ वृणीते त्रीन्वृणीत इत्यत्रापि। चतुरो न वृणीते पञ्चातीत्य षडादीन्न वृणीत इत्यर्थः। आत्मीयानामृषीणां बहूनामनियमेन वरणप्राप्तौ सत्यामेकं वृणीत इत्यादयः संख्यानियमविधयः। न चतुरो वृणीते न पञ्चाति प्रवृणीत इत्येतद्द्व्यामुष्यायणविषयम्। द्व्यामुष्यायणस्य गोत्रद्वयस्यापि द्व्यार्षेये चतुर्णां वरणप्रसक्तिः। त्र्यार्षेयत्वे तु षण्णां पञ्चार्षेयत्वे द्व्यार्षेयादिसंनिपाते सप्तादीनामपि वरणप्रसक्तिः।

तन्निषेधार्थमुक्तं—' न चतुरो वृणीते न पञ्चाति प्रवृणीते ' इति। ' त्रीन्वृणीते मन्त्रकृतो वृणीते यथार्षि मन्त्रकृतो वृणीते ' इति श्रुतिमनुसृत्य प्रवृत्ते ' अत्र्यार्षेयस्य

हानं स्यादधिकारात्' इत्यस्मिन्नधिकरणे मीमांसकास्तु त्रीन्वृणीत इत्ययमेव विधिः। एकं वृणीते द्वौ वृणीत इत्युभयमवयुत्यानुवादः। अन्यथा वाक्यभेदापत्तेः। न च त्रीन्वृणीत इत्यत्रापि वाक्यभेदतादवस्थ्याद्विधित्वासंभव इति वाच्यम्। विशिष्टविधाने वाक्यभेदाभावेन विधित्वसंभवात्। स्तुत्यर्थोऽयमेकं वृणीत इत्यादिरनुवादः। एकवरणाद्विवरणे अप्रशस्ते अपि यदा कर्तव्ये तदा त्रिवरणस्य प्रशस्तस्य कर्तव्यत्वं किमु वक्तव्यमिति स्तुतिः। चतुर्निषेधपञ्चातिक्रमनिषेधाभ्यामपि त्रित्वमेव स्तूयते, न च तयोर्निषेधो विधातव्यः। प्रसक्त्यभावादेव तदप्रवृत्तेः। चतुरादयोऽत्यन्तविलम्बकारित्वादप्रशस्ताः। त्रित्वं तु न तथेति प्रशस्तम्। तस्मात्कर्मण्यधिकुर्वन्यजमानस्त्रीनेवोच्चारयेन्न न्यूनं नाप्यधिकमिति तात्पर्यार्थ इत्याहुः।

एकार्षेयादीनामपि मनुवत्पक्षाश्रयणेनाधिकार इति तन्त्ररत्ने। असमानार्षगोत्रजामिति याज्ञवल्क्योक्तमविवाहप्रयोजकं समानप्रवरत्वापरपर्यायं समानार्षत्वं द्विविधमेकप्रवरसाम्यं द्वित्रिप्रवरसाम्यं चेति। तत्राऽऽद्यं भृग्वङ्गिरोगणव्यतिरिक्तेषु। द्वितीयं भृग्वङ्गिरोगणेषु। तत्र पञ्चप्रवराणां त्रिप्रवरसाम्यं त्रिप्रवराणां द्विप्रवरसाम्यमविवाहप्रयोजकमिति मन्तव्यम्।

" पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् " इति वचनात्॥

शेषेष्वेकोऽपि प्रवरः समानश्चेत्तद्विवाहं वारयेदित्यर्थः।

## अथ प्रवरगणना।

### तत्राऽऽदौ भृगवः।

तत्र सूत्रम्—"भृगूनेवाग्रे व्याख्यास्यामो जामदग्न्या वत्सास्तेषां पञ्चार्षेयो भार्गवच्यावनाप्नवानौर्वजामदग्न्येति जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदिति त्र्यार्षेयमु हैके भार्गवौर्वजामदग्न्येति जमदग्निवदूर्ववद्भृगुवदित्येष एवाविकृतो जामाल्यैतिशायनविरोहितमाण्डव्यावटमण्डुबैदरेतवाहप्राचीनयोग्यानामथाऽऽर्ष्टिषेणानां पञ्चार्षेयो भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेत्यनूपवदार्ष्टिषेणवदप्नवानवच्च्यवनवद्भृगुवदिति त्र्यार्षेयमु हैके भार्गवार्ष्टिषेणानूपेत्यनूपवदार्ष्टिषेणवद्भृगुवदित्यथ वीतहव्या यास्कवाधूलमौनमौकरजतवाहास्तेषां त्र्यार्षेयो भार्गववैतहव्यसावेदसेति सवेदोवद्वीतहव्यवद्भृगुवदि-

१ क. ग. घ. 'व्यत्वे किं'।

> त्यथ वैन्याः पार्थास्तेषां त्र्यार्षेयो भार्गववैन्यपार्थेति पृथवद्वेनवद्भृगुवदित्यथ गार्त्समदाः शुनकास्तेषामेकार्षेयो गार्त्समदेति होता गृत्समदवदित्यध्वर्युरथ वाध्र्यश्वा मित्रयुवस्तेषामेकार्षेयो वाध्र्यश्वेति होता वध्र्यश्ववदित्यध्वर्युः " इति।

एवकार इतरेषां व्यावृत्त्यर्थः। अग्र आदौ व्याख्यास्यामो वक्ष्यामः प्राधान्यादिति शेषः। भृगोः प्राधान्यं तु 'महर्षीणां भृगुरहम्' इति भगवद्वाक्यान्मोक्षधर्मेषु भृगोर्वासुदेवांशताश्रवणादाधानमन्त्रेषु भृगूणामेवाऽऽदौ पार्थक्येन मन्त्रकथनाच्च।

अथवा, एवकारोऽग्रशब्देनान्वेति। अग्र आदावेव ये भृगुत्वं प्राप्ता भृगवस्तान्वक्ष्यामः, न द्व्यामुष्यायणत्वेन पश्चाद्भृगुत्वमापन्नानिति। द्व्यामुष्यायणानामुत्तरत्र वक्ष्यमाणत्वात्।

जामदग्न्या वत्सा इत्यत्र वत्सानां जामदग्न्या इति विशेषणमजामदग्न्यवत्सनिराकरणार्थं पञ्चावत्तित्वप्राप्त्यर्थं जामदग्न्याग्निप्राप्त्यर्थं च। तेषां जामदग्न्यवत्सानां पञ्चार्षेयः प्रवरः, भार्गवच्यावनाप्नवानौर्वजामदग्न्येति। अयं च होतुरमुतोऽर्वाञ्चो होतेतिवचनात्। अमुतो मूलभूतादृषेरारभ्यार्वाञ्चोऽर्वाग्जातान्मन्त्रदृशः। क्रमेण तदपत्यसंबन्धेन प्रार्थयते तमग्निमित्यर्थः। जमदग्निवदुर्ववदप्नवानवच्च्यवनवद्भृगुवदित्ययं प्रवरोऽध्वर्योरत ऊर्ध्वान्मन्त्रकृतोऽध्वर्युर्वृणीत इतिवचनात्। अतो यजमानादूर्ध्वान्मन्त्रदृग्भिरव्यवहितानां मूलभूतान्दृष्टक्रमेण संकीर्त्य तद्वत्तद्वदितिसादृश्यसंबन्धेनाग्निं वृणीते प्रार्थयत इत्यर्थः। एष एव प्रवरक्रमविशेषो होतुरध्वर्योश्चाऽऽध्यायपरिसमाप्तेः सर्वत्रोपदेष्टव्यः। त्र्यार्षेयमु हैके ब्रुवत इति शेषः। त्र्यार्षेयं प्रवरमेक आचार्या ब्रुवत इत्यर्थः। उ हेतिनिपातोऽवधारणार्थो वाक्यालंकारार्थो वा। तं प्रवरं दर्शयति—भार्गवौर्वजामदग्न्येति जमदग्निवदूर्ववद्भृगुवदितीति। एनमेव प्रवरमन्येष्वतिदिशति—एष एवाविकृतो जामाल्यैतिशायनेत्यादिना प्राचीनयोग्यानामित्यन्तेन सूत्रेण। एषोऽनन्तरोक्तः पञ्चार्षेयस्त्र्यार्षेयो वा जामाल्यादीनां नवानां भवतीत्यर्थः।

अथाऽऽर्ष्टिषेणानामित्यत्राथशब्दः पृथगयं गण इतिज्ञापनार्थः। एवं सर्वत्र। अन्यद्गतार्थम्। अथ वीतहव्या इत्यारभ्य पृथवद्वेनवद्भृगुवदित्यन्तं सूत्रं स्पष्टार्थम्।

१ ग. पृथुव॰।

चतुर्विधा हि शुनकाः। केचिच्छुनकादेवजाताः। केचिद्गृत्समदादेवजाताः। केचिद्भृगोरपत्यं गृत्समदस्ततो जाताः। केचिद्भृगोरपत्यं शुनगोत्रस्तदपत्यं गृत्समदस्ततो जाताः। तत्र गृत्समदादेव ये जातास्तेषामेवायं प्रवरो नान्येषामित्येतदर्थं गृत्समदद्दष्टाग्नीप्रापणार्थं च गार्त्समदा इति विशेषणम्। इतरेषां तु सूत्रान्तरोक्ताः प्रवरा ज्ञेयाः। तत्राऽऽद्यानां शौनकेत्येकार्षेयः प्रवरः। तृतीयानां भार्गवगार्त्समदेति द्व्यार्षेयः। चतुर्थानां भार्गवशौनहोत्रगार्त्समदेति त्र्यार्षेय इति। एकार्षेयेऽमुतोऽर्वाञ्चो होताऽत ऊर्ध्वान्मन्त्रकृतोऽध्वर्युर्वृणीत इत्यनयोर्विध्योर्व्यवस्थापकत्वाभावादव्यवस्थाप्राप्तौ होत्रध्वर्युग्रहणं तद्धितान्तो होतुः प्रवरो वत्प्रत्ययान्तोऽध्वर्योरित्येवं व्यवस्थेतिप्रदर्शनार्थम्। मित्रयुवां वाध्र्यश्वा इति विशेषणं वाध्र्यश्वद्दष्टाग्नीप्राप्त्यर्थम्। वाध्र्यश्वेति होता वध्र्यश्ववदित्यध्वर्युरित्यत्र होत्रध्वर्युग्रहणमुक्तव्यवस्थायास्तत्रैव प्राप्तिशङ्कानिरासार्थम्। इतीमे भृगवो व्याख्याताः।

उक्तानुभाषणस्येदं प्रयोजनमविद्यमानभृगुशब्दानामपि शुनकमित्रयुवां भृगुत्वं यथा स्यादिति। तेन भृगूणां त्वेति यथर्ष्याधाने भार्गवो होता भवतीत्यादौ चोपप्रवेशसिद्धिः। जामदग्न्यवत्सानां जामाल्यादीनां च परस्परमविवाहः। प्रवरैक्यात्सगोत्रत्वाच्च। एवमार्ष्टिषेणानामपि त्रिप्रवरसाम्यात्। यद्यपि त्रिप्रवरार्ष्टिषेणानां नान्यैः सह द्विप्रवरसाम्यं तथाऽपि पञ्चार्षेयसंगतमपि प्रवरसाम्यमेष्वविवाहप्रयोजकम्। वत्सा बिदा आर्ष्टिषेणा इत्येतेषामविवाह इति बौधायनोक्तेः। अजामदग्न्यवत्सार्ष्टिषेणाभ्यां सप्रवरत्वादविवाहः। वीतहव्यादीनां तु स्वं स्वं गणं हित्वा परस्परं पूर्वैश्च सह विवाहो भवत्येव, द्वित्रिप्रवरसाम्याभावात्।

इति भृगुगोत्रप्रवरकाण्डम्।

# अथ गौतमगोत्रप्रवरकाण्डम्।

तत्र सूत्रम्—"अथातोऽङ्गिरसामयास्या गौतमास्तेषां त्र्यार्षेय आङ्गिरसायास्यगौतमेति गोतमवदयास्यवदङ्गिरोवदित्यथौतथ्या गौतमास्तेषां त्र्यार्षेय आङ्गिरसौतथ्यगौतमेति गोतमवदुतथ्यवदङ्गिरोवदित्यथौशिजा गौतमास्तेषां त्र्यार्षेय आङ्गिरसौशिजकाक्षीवतेति कक्षीवद्वदुशिजवदङ्गिरोवदित्यथ वामदेवा गौतमास्तेषां त्र्यार्षेय आङ्गिरसवामदेवबार्हदुक्थेति बृहदुक्थवद्वामदेववदङ्गिरोवदिति" इति।

अत्रातःशब्दो हेत्वर्थे। यतो 'भृगूणां त्वाऽङ्गिरसां व्रतपते व्रतेनाऽऽदधामीति भृग्वङ्गिरसामादध्यात्' इति श्रुत्यैकस्मिन्नेव वाक्ये भृगुगोत्रिणामाधानमन्त्रं पूर्वमुक्त्वाऽनन्तरं गौतमादिगोत्रिणामाधानमन्त्र उक्तः। अतो हेतोरित्यर्थः। अङ्गिरसामिति निर्धारणे षष्ठी। अङ्गिरोगणानां मध्ये येऽयास्या गौतमा अङ्गिरसस्तेषां त्र्यार्षेयः प्रवरो भवतीत्यर्थः। अयास्या इति विशेषणमयास्य उद्गाता भवतीत्यत्र येऽयास्यगणपठितास्तेषामेव ग्रहणार्थम्। उतथ्या औशिजा वामदेवा इत्यादीनि गौतमविशेषणानि सांकर्यनिवारणार्थानि। अन्यत्स्पष्टम्। एषां सर्वेषां गौतमाङ्गिरसां परस्परमविवाहः। गौतमस्य त्रियमाणतया सत्तया वाऽनुवृत्तेः सगोत्रत्वात्प्रायेण द्वित्रिप्रवरसाम्याच्च।

इति गौतमगोत्रप्रवरकाण्डम्।

## अथ भरद्वाजगोत्रप्रवरकाण्डम्।

तत्र सूत्रम्—"अथ भरद्वाजानां त्र्यार्षेय आङ्गिरसबार्हस्पत्यभारद्वाजेति भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्येष एवाविकृतस्तुथ्याग्निवेश्यौर्जयानानां सर्वेषां च स्तम्भस्तम्बशब्दानामथर्क्षाणां पञ्चार्षेय आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति मतवचोवद्वन्दनवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदिति त्र्यार्षेयमु हैक आङ्गिरसवान्दनमातवचसेति मतवचोवद्वन्दनवदङ्गिरोवदित्यथ द्व्यामुष्यायणानां कुलानां यथा शौङ्गशैशिरयो भरद्वाजाः शुङ्गाः कताः शैशिरयस्तेषां पञ्चार्षेय आङ्गिरसबार्हस्पत्यभारद्वाजकात्याक्षिलेत्यक्षिलवत्कतवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदिति त्र्यार्षेयमु हैक आङ्गिरसकात्याक्षिलेत्यक्षिलवत्कतवदङ्गिरोवदित्यथ गर्गाणां त्र्यार्षेय आङ्गिरसगार्ग्यशैन्येति शिनिवद्गर्गवदङ्गिरोवदिति भारद्वाजमु हैकेऽङ्गिरसः स्थाने भारद्वाजगार्ग्यशैन्येति शिनिवद्गर्गवद्भरद्वाजवदित्यथ कपीनां त्र्यार्षेय आङ्गिरसमाहाय्यवौरुक्षय्येत्युरुक्षय्यवन्महय्युवदङ्गिरोवदिति तरस्वास्तिलो विदुः शालुः पतञ्जलिर्भूयसीर्देन्द्रकीजलन्द्धः कपेरष्टविधाः प्रजाः" इति।

तुथ्य आग्निवेश्य और्जयान एतेषां, स्तम्भशब्दो यन्नामसु वर्तते ते स्तम्भ-

१ ड. 'स्तुथ्याग्नि'। २ ग. 'सीर्द्वेन्द्व'। ३ क. ख. घ. तुरथ आ'।

शब्दाः । स्तम्बशब्दो यन्नामसु वर्तते ते स्तम्बशब्दाः । एतेषां चैषोऽनन्तरोक्तत्र्यार्षेय एव प्रवरो भवेदित्यर्थः । द्वाभ्यां गोत्राभ्यां व्यपदेशाद्व्यामुष्यायणानि कुलानि । यथा शौङ्गशैशिरय इति पुरातनं व्यामुष्यायणकुलम् । इदानींतनानां द्विगोत्राणां द्वयोरपि गोत्रयोरविवाहं वक्तुं दृष्टान्तत्वेनोदाहृतं शुङ्गा भरद्वाजाः कताः शैशिरयो विश्वामित्राः । भारद्वाजस्य शुङ्गस्य बीजाद्वैश्वामित्रस्य शैशिरेः क्षेत्र उत्पन्नाः शौङ्गशैशिरय इत्युच्यन्ते । तत्संततिजातानां पञ्चार्षेयः प्रवरो द्रष्टव्यः । आङ्गिरसबार्हस्पत्यभारद्वाजकात्याक्षिलेति होतुः । अक्षिलवत्कतवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्योः । त्र्यार्षेयमेके आङ्गिरसकात्याक्षिलेति होतुः । अक्षिलवत्कतवदङ्गिरोवदित्यध्वर्योः । अस्मिन्प्रवरे जनयितुः पूर्वः प्रवरः प्रतिग्रहीतुरपरो यथोक्तस्तथाऽन्येष्वपि पुत्रिकापुत्रदत्तकक्रीतकृत्रिमपुत्रादीनामपि द्वयोरपि गोत्रयोः प्रवरो ज्ञेयः । शौङ्गशैशिरीणां दृष्टान्तत्वेनोपादानात् । सर्वेषां द्व्यामुष्यायणानां गोत्रद्वयसंबन्धिवरणप्रसक्तौ व्यवस्थामाहाऽऽश्वलायनः—

"तेषामुभयतः प्रवृणीत एकमितरतो द्वावितरतो द्वौ वेतरतस्त्रीनितरतो न हि चतुर्णां प्रवरोऽस्ति न पञ्चानामतिप्रवरणम्" इति ।

एकमितरतो द्वावितरत इति त्र्यार्षेये द्वौ वेतरतस्त्रीनितरत इति पञ्चार्षेये । तत्र पूर्वं कस्य प्रवर इत्याकाङ्क्षायां कात्यायनलौगाक्षी आहतुः—

"पूर्वः प्रवर उत्पादयितुरुत्तरः प्रतिग्रहीतुः" इति ।

एवं वक्ष्यमाणेषु संकृत्यादिष्वपि द्रष्टव्यम् । गर्गाणां भरद्वाजत्वं पाक्षिकभरद्वाजवरणादेव सिद्धम् ।

यद्यपि कपीनां पाठः केवलाङ्गिरोगणमध्ये सर्वेषु सूत्रपुस्तकेषु दृश्यते तथाऽपि स नाऽऽदर्तव्यः । गोत्रप्रवरमञ्जरीप्रयोगपारिजातस्मृत्यर्थसारादिबहुग्रन्थविरोधाद्बहुस्मृतिपुराणसूत्रविरोधात्, भारद्वाजैः सह विवाहः केवलाङ्गिरोभिः सह विवाह इत्येतादृशस्य शिष्टाभिमताचारस्यान्यथात्वापत्तेश्च । अथवा द्वौ कपी ज्ञेयौ । एको भरद्वाजगणस्थः । अपरः केवलाङ्गिरोगणस्थः ।

तथाच मण्डनः—

"भारद्वाजप्रवरणे केचिदाहुः कपी पृथक्" इति ।

१ क. ङ. 'त्तरतः प्र' ।

## अथात्रिगोत्रप्रवरकाण्डम् ।

तत्र सूत्रम्—"अथात्रीणां त्र्यार्षेय आत्रेयार्चनानसश्यावाश्वेति श्यावाश्ववदर्चनानसवदत्रिवदित्यथ गविष्ठिराणां त्र्यार्षेय आत्रेयार्चनानसगाविष्ठिरेति गविष्ठिरवदर्चनानसवदत्रिवदित्येष एवाविकृतो वामरथ्यसुमङ्गलबीजवापानाम्" इति ।

गतार्थम् । अत्रीणां सर्वेषामविवाहः सगोत्रत्वात्समप्रवरत्वाच्च ।

इत्यत्रिगोत्रप्रवरकाण्डम् ।

---

## अथ विश्वामित्रगोत्रप्रवरकाण्डम् ।

तत्र सूत्रम्—"अथ विश्वामित्राणां देवराताश्चिकितकालवतमनुतन्तुबभ्रुयज्ञवल्कौलोन्त्येर्मरिबृहदग्निसांशित्यवारकितारकायणशालावतास्तेषां त्र्यार्षेयो वैश्वामित्रदैवरातौदलेत्युदलवद्देवरातवद्विश्वामित्रवदित्यथ श्रौमतकामकायनास्तेषां त्र्यार्षेयो वैश्वामित्रमाधुच्छन्दसधानंजयेति धनंजयवन्मधुच्छन्दोवद्विश्वामित्रवदित्यथाष्टकालोहितास्तेषां द्व्यार्षेयो वैश्वामित्राष्टकेत्यष्टकवद्विश्वामित्रवदित्यथ पूरणाः पारिधापयन्त्यस्तेषां द्व्यार्षेयो वैश्वामित्रपौरणेति पूरणवद्विश्वामित्रवदित्यथ कतास्तेषां त्र्यार्षेयो वैश्वामित्रकात्याक्षिलेत्यक्षिलवत्कतवद्विश्वामित्रवदित्यथाघमर्षणाः कुशिकास्तेषां त्र्यार्षेयो वैश्वामित्राघमर्षणकौशिकेति कुशिकवदघमर्षणवद्विश्वामित्रवदिति"[1] इति ।

गतार्थम् । विश्वामित्रगणानां परस्परमविवाहः सगोत्रत्वात्समप्रवरत्वाच्च ।

इति विश्वामित्रगोत्रप्रवरकाण्डम् ।

---

## अथ कश्यपगोत्रप्रवरकाण्डम् ।

तत्र सूत्रम्—" अथ कश्यपानां त्र्यार्षेयः काश्यपावत्सारनैध्रुवेति निध्रुववदवत्सारवत्कश्यपवदित्येष एवाविकृतो धौम्याभिषेण्यमाठराणामथ रेभाणां[2] त्र्यार्षेयः काश्यपावत्साररैभ्येति रेभवदवत्सारवत्कश्यपवदित्यथ शण्डिलानां द्व्यार्षेयो दैवलासितेत्यसितवद्देवलवदिति त्र्यार्षेयमु हैके काश्यपदैवलासितेत्यसितवद्देवलवत्कश्यपवदिति द्व्यार्षेयास्त्वेवं न्यायेन " इति ।

१ ङ. 'त्रदेवश्रवसदेवतरसेति देवतरसवद्देवश्रवोवद्विश्वामित्रवदित्यथाजामा' । २ ग. घ. रेभ्यव' ।

सर्वेऽपि आर्षेया एवमनेन प्रकारेण त्र्यार्षेया एव भवितुमर्हन्ति न शण्डिला एव। तस्मादष्टकानां लोहितानां च आर्षेयाणां त्र्यार्षेयत्वमेव द्रष्टव्यम्। आर्षेया एव सर्वे शण्डिला भवितुमर्हन्ति न त्र्यार्षेया इति केचिद्व्याचक्षते तदनुपपन्नम्। "अत्र्यार्षेयस्य हानं स्यादधिकारात्" इतिजैमिनीयन्यायविरोधात्। अन्यद्गतार्थम्। कश्यपानां परस्परमविवाहः। कश्यपस्य म्रियमाणतया सत्तया वाऽनुवृत्तेः सगोत्रत्वात्सप्रवरत्वाच्च।

इति कश्यपगोत्रप्रवरकाण्डम्।

## अथ वसिष्ठगोत्रप्रवरकाण्डम्।

तत्र सूत्रम्—"एकार्षेया वासिष्ठा अन्यत्रोपमन्युपराशरकुण्डिनेभ्यो वासिष्ठेति होता वसिष्ठवदित्यध्वर्युरथोपमन्यूनां त्र्यार्षेयो वासिष्ठैन्द्रप्रमदाभरद्वसो इत्याभरद्वसुवदिन्द्रप्रमदवद्वसिष्ठवदित्यथ पराशराणां त्र्यार्षेयो वासिष्ठशाक्त्यपाराशर्येति पराशरवच्छक्तिवद्वसिष्ठवदित्यथ कुण्डिनानां त्र्यार्षेयो वासिष्ठमैत्रावरुणकौण्डिन्येति कुण्डिनवन्मित्रावरुणवद्वसिष्ठवदित्यथ संकृतिपूतिमाषतण्डिनां त्र्यार्षेयः शाक्त्यसांकृत्यगौरिवीतेति गुरिवीतवत्संकृतिवच्छक्तिवदिति" इति।

उत्तरत्र विधानादेवोपमन्युप्रभृतीनां त्र्यार्षेयत्वे सिद्धेऽन्यत्रोपमन्युपराशरकुण्डिनेभ्य इति वचनं केवलं वसिष्ठभेदा न संकृत्यादयस्तेषां द्व्यामुष्यायणत्वादितिप्रदर्शनार्थम्। वासिष्ठमैत्रावरुणकौण्डिन्येत्यस्मिन्प्रवरे मित्रावरुणसंज्ञकौ कौचिदृषी मन्त्रदृशौ द्रष्टव्यौ न प्रसिद्धौ देवताविशेषौ। न देवैर्न मनुष्यैरार्षेयं वृणीत इति निषेधात्। तयोश्च मित्रावरुणयोः संहतयोरेवर्षित्वमत्र द्रष्टव्यं न प्रत्येकम्। न चतुरो वृणीत इति चतुर्णां वरणप्रतिषेधात्। मत्स्यपुराणे मित्रावरुणयोर्बदर्याश्रमे तपस्यतोरागतामुर्वशीं दृष्टवतोः शुक्रं स्कन्नं क्वचित्तोयपूर्णे कलशे गृहीतं ततो वसिष्ठो जातो वसिष्ठाच्च कुण्डिनो जात इति दृष्टत्वात्तयोः संहतयोरेवर्षित्वं पितृत्वं चेति द्रष्टव्यम्। एषां वासिष्ठानां परस्परमविवाहः सगोत्रत्वात्सप्रवरत्वाच्च। संकृत्यादीनां द्व्यामुष्यायणानां वसिष्ठत्वं तु वासिष्ठगणमध्ये पाठाद्वासिष्ठस्य शक्तेर्वरणाच्च।

इति वसिष्ठगोत्रप्रवरकाण्डम्।

## अथागस्त्यगोत्रप्रवरकाण्डम् ।

[तत्र सूत्रम्—]"अथागस्तीनामेकार्षेय आगस्त्येति होताऽगस्तिवदित्यध्वर्यु-स्त्र्यार्षेयमु हैक आगस्त्यदार्ढच्युतैध्मवाहेतीध्मवाहवदृढच्युत-वदगस्तिवदिति" इति ।

अगस्तीनां सर्वेषां परस्परमविवाहः सगोत्रत्वात्समप्रवरत्वाच्च ।

इत्यगस्तिगोत्रप्रवरकाण्डम् ।

---

## अथ क्षत्रियप्रवरकाण्डम् ।

[तत्र सूत्रम्—]"अथ क्षत्रियाणां त्र्यार्षेयो मानवैडपौरूरवसेति पुरूरवोवदि-डवन्मनुवदित्यथ यदि ह सार्षाः प्रवृणीरन्नेक एवैषां प्रवरो यद्यु वै पृथक्प्रवृणीरन्येषामु ह मन्त्रकृतो न स्युः सपुरोहित-प्रवरास्तेऽथ येषां स्युरपुरोहितप्रवरास्ते सपुरोहितप्रवरास्त्वेवं न्यायेनैकार्षेया विशो वात्सप्रेति होता वत्सप्रवदित्यध्वर्युः" इति ।

द्विविधाः क्षत्रियाः सार्षा अनार्षाश्च । तत्र यदि सार्षा आर्षेयवन्तो राजानः प्रवृणीरंस्तदैषां प्रवर उक्त एक एव भवति । यद्येते पृथगेव प्रवृणी-रन्पुरोहितप्रवरानेव प्रवृणीरन् । येषां राज्ञां मन्त्रकृत ऋषय आर्षेया इति यावत्, न स्युर्न भवेयुस्ते सपुरोहितप्रवरा ज्ञेयाः । येषां राज्ञां यदि मन्त्रकृतः स्युरपुरोहितप्रवरास्ते ज्ञेयाः । मन्त्रकृतो राजानः सपुरोहितप्रवरास्त्वेवमेतत्प्र-कारेण न्यायेन भवन्ति नान्यथा । कोऽसौ न्यायोऽभिमतः । उच्यते— सर्वेषां पुरोहितस्य विद्यमानत्वात्तेन च विना कर्मानधिकारात्पुर एनं हित-मेतत्सर्वं नयतीति पुरोहितशब्दव्युत्पत्तेः । आत्मीयप्रवरपक्षे सर्वेषां समानप्र-वरत्वादविवाहः प्रसज्येतेति न्यायः । अयमेव न्यायो वैश्यानामपि द्रष्टव्यः । ( * मन्त्रकृद्वतां[1] सर्वराज्ञामपुरोहितप्रवराणामपि विवाहमात्रे सपुरोहित[प्रवर]-त्वमेवेति फलितोऽर्थः । ) राजभ्योऽर्पितानां दत्तानां ब्राह्मणानां राज्ञां ये प्रवरास्त एव तेषाम् । एवं ब्राह्मणेभ्योऽर्पितानां राज्ञां ब्राह्मणानां ये प्रव-रास्ते तेषामिति ।

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तके—" एवं च विवाहे क्षत्रियाणां वैश्यानां च पौरो-हित्यप्रवरैक्यप्रयुक्त एव निषेधो न तु स्वप्रवरैक्यप्रयुक्त इति सिद्धम् । कर्मणि वरणादौ भवतु विकल्पः । उक्तसूत्रस्य कर्माधिकारे प्रवृत्तेः । सोऽपि व्यवस्थितः । एषां कुले यादृशं वरणमागतं तथैव कर्तुमुचितमिति विप्रेष्वपि व्यवस्थादर्शनात् " इति ग्रन्थो वर्तते ।

1 क. °कृता ।

तथा च सूत्रम्—" तथा ब्राह्मणाना१ राजार्पितानां राज्ञां वा
ब्राह्मणार्पितानाम् " इति ।

## अथानाज्ञातबन्धूनां गोत्रप्रवरकाण्डम् ।

तत्र सूत्रम्—' अथानाज्ञातबन्धोः पुरोहितप्रवरेणाऽऽचार्यप्रवरेण वा ' इति ।

न, आसम्यग्ज्ञातो बन्धुर्येन सोऽनाज्ञातबन्धुस्तस्यानाज्ञातबन्धोः । असंप्रज्ञातबन्धोरिति दर्शपूर्णमासप्रकरणस्थस्य प्रवरविधायकस्य सूत्रस्य पाठः । न सम्यक्प्रज्ञातो बन्धुर्येन सोऽसंप्रज्ञातबन्धुरिति तद्विग्रहः । अर्थस्तु स एव । तस्य पुरोहितस्य पूर्वोक्तस्य प्रवरेण धर्मोपदेष्टाऽऽचार्यस्तस्य वा प्रवरेण प्रवरणमित्यर्थः ।

ननु—" यो वा अन्यः सन्नन्यस्याऽऽर्षेयं वृणीते
स वा अस्य तदपिरिष्टं वीतं वृङ्क्ते " ।

इति निषेधस्य जागरूकत्वात्कथं पुरोहिताचार्यप्रवरप्रवरणमिति चेन्न । एतस्य प्रवरज्ञानसत्त्व एव प्रवृत्तेः ।

सार्ववर्णिकमार्षेयं दर्शयति—

' अथ ह ताण्डिन एकार्षेय२ सार्ववर्णिक२ समामनन्ति मानवेति होता मनुवदित्यध्वर्युर्मानव्यो हि प्रजा इति हि ब्राह्मणमिति हि ब्राह्मणम् ' इति ।

ताण्डिन आचार्या एकार्षेयं मानवेत्येवंरूपं प्रवरं सार्ववर्णिकं सर्वेषां वर्णानां ब्राह्मणादीनां समामनन्ति तत्र हेतुभूतां श्रुतिमुदाहरन्ति—'मानव्यो हि प्रजा इति हि ब्राह्मणम् ' इति । हि यस्मादेवं तैत्तिरीयशाखायां ब्राह्मणं प्रत्यक्षमेव पठ्यतेऽग्निचयन उखाप्रकरणे—' मानव्यो हि प्रजाः ' इति तस्मादित्यर्थः । द्विरुक्तिः प्रश्नसमाप्तिद्योतनार्था । एतत्सूत्रं वैशेषिकप्रवरनिषेधपरं न भवति किं तु सार्ववर्णिकप्रवरस्तुतिपरम् ।

नन्वेवं कृत्स्नमेकेषां प्रवरं प्रतिषिध्य मनुवदित्येतद्विदधातीत्येतत्सूत्रविरोध इति चेन्न । अत्र प्रतिषेधशब्देनाप्राशस्त्यस्यैवोक्तत्वात् । एवं च कृत्स्नवैशेषिकप्रवराणामप्राशस्त्य उक्ते सार्ववर्णिकस्यै प्रशस्तत्वमर्थात्सिद्धं भवति । वैशेषिकाः प्रवरा दुर्विज्ञेया बहुप्रयासलभ्याश्च तस्मान्न कार्याः । अयं तु लघुतरप्रयत्नलभ्यत्वात्कर्तव्य इत्येवं सार्ववर्णिकस्य प्रवरस्य प्रशस्तत्वम् । कथं पुन-

१ ग. घ. णानि° । २ ङ. °स्य प्रवरस्य प्र° ।

रयमभिप्रायो गम्यत इति चेत् । अन्यथा प्रवराध्यायानारम्भप्रसङ्गात् । आरभ्यते चायम् । अयं च प्रवरः श्रौतकर्मवरणाभिवादादिष्वेव न विवाहे । अन्यथा समानप्रवरत्वाद्विवाहाभावप्रसङ्गात् ।

पुरोहितगोत्रप्रवरयोराचार्यगोत्रप्रवरयोश्चाज्ञाने तु स्मृत्यन्तरे—

" आचार्यगोत्रप्रवरानभिज्ञस्तु द्विजः स्वयम् ।
दत्त्वाऽऽत्मानं तु कस्मैचित्तद्गोत्रप्रवरो भवेत् ' इति ।

अत्राऽऽचार्यग्रहणं पुरोहितोपलक्षणम् । आचार्यशब्देन निषेकादिक्रियाकर्ता द्विज इतिश्रवणाद्ब्राह्मणक्षत्रियवैश्यानां विधिः ।

यत्तु—' गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते '

इति तत्पुरोहिताचार्ययोर्गोत्राज्ञाने सत्येव विवाहातिरिक्तविषयम् ।

इति सूत्रोक्तः प्रवरनिर्णयः ।

---

## अथ स्मृत्यनुसारेण प्रवरास्तद्गणाश्च ।

तत्र भृगवो द्विविधाः । जामदग्न्याः केवलाश्च । जामदग्न्यौ द्वौ, वत्सबिदौ । केवलाः षट् । वत्सा वैन्या वीतहव्या आर्ष्टिषेणा वाध्र्यश्वा गार्त्समदा इति । तत्र द्विविधा अपि वत्सास्तन्त्रेणोच्यन्ते[1] । मार्कण्डेया माण्डूकेया माण्डव्याः कासेया आलेखना[2] दार्भायणाः शार्कराक्ष्या दैवतायना शौनकायना माधूकेयाः पार्षिकाः साकाः प्रौत्तायनाः[3] पैलाः पैङ्गलायना दार्ध्वेपकयो[4] घात्वकयो वैश्वानरयो वैहीनरयो वैरोहिता वाह्या ब्राघ्रा[5] गोष्ठायनार्ष्टिकयः काशकृत्स्ना वाद्भुतकाः कृतभागा ऐतिशायना ज्ञानायनाः पाणिनयो वाल्मीकिः[6] स्थौलपिण्डायनः सैवातवा जिह्वीतयः सावर्णिवाकायना वालायनाः सौकृतयो मण्डवः सौविष्वयो हस्ताग्रहः शौद्धकयः शौद्रिकयो[7] वैकर्णा द्रोणकजिह्य औरसयः कम्बलोदरयो वाकारकृतो वैहलयः साङ्ख्वाः कास्तम्बराः कारवास्तामसा विरूपाक्षा वृकाश्वा उच्चैर्मन्यवो द्वैमत्या आर्यायणाः पार्कायणाः[8] काहायना वानयश्चायनिनः[9] शार्ङ्गरवाश्चान्द्रमसा गाङ्ग्या नौधेया[10]

---

१ क. °च्यते । मा° । २ ख. घ. °लेस्वना । ग. °लेश्नना । ३ ङ. प्रत्तायनाः । ४ ख. ग. दास्वघ° । ङ. दाध्रे° । ५ ख. ग. वाघ्रा । ६ क. वाल्मिकिः । ७ ग. छ. शौर्द्रक° । ८ छ. पार्का-य° । ९ छ. वायन° । १० ङ. नोधेया ।

यो[1]ज्ञिया जाबालिर्बा[2]ह्मुमित्रायणा आपिशलयो वैश्वपुरयो लोहितायना उग्राक्षा मालायनाः शारद्वतायना रजतवा[3]हा वत्सा वा[4]त्सायनाः।

एतावन्तो बौधायनोक्ताः।

## अथ कात्यायनलौगाक्ष्युक्ताः।

नौ[5]लायना वागायना अनुमातकयो जैह्मतयो जीवन्तयः काम्बलोदरयो वैह्मायना रेखायनयः पा[6]र्षतयः पाणिलय उच्चयमानाः सात्यकर्णयः कालाकयस्तालकेशिन ऋतभागा आर्तभागा आ[7]जीहिता आतिथयः स्थौमाङ्गिरयः स्थौलाः सौरवा बर्हिपो देवमतयो गार्ग्यायणा गेह्मायना गोष्ठायना वैशम्पायना गा[8]लवाः सांकृतयो वाणकेया ऐतिकायना भ्राष्ट्रेया भा[9]स्त्रेया लाक्षेया लाकुचयो लालाटय आवय आङ्गावयः सै[10]ष्पिकयः सात्यकायना नैकर्षयः शाकल्याः पाकानुम[11]तयः क[12]निष्णयो जैह्माशिनय आश्मक्रमाः कौचहस्तय आनुलोमिनः क्रौ[13]श्चाश्वेक्षाः क्रौश्चाक्षयः सौर. ध्वजयो बौ[14]ध्यात्केया निरीणयो वासयः सादनाः स्यो[15]याः स्यन्दनयः कटेरणयो लवेरणयो यौगोलयो मौ[16]ध्योदा मात्स्या नौ[17]डायना वैरायणा वैन्या रौहित्यायनिः कृपानीलुः सावर्णिः पिकस्वरो विष्णुस्तौलकेशिर्जेहिनो वीतिनः फेनयास्तलिनः शिखापत्तिर्जलधिः सेनाजित्कृत्स्नः पैङ्गलायनिर्दिवःपतिर्ऋषभः सुतः पलतः पलवः कोपियज्ञो मित्रयज्ञ आमिलायना हापत्तिर्वैकर्णिनिर्भाल्लिकायनिर्लाक्ष्मणः शाल्यायनिर्माल्यायनिः कौटलिः सौक्तिः कोटरः साक्षी सान्द्रमणिर्नैकजिह्वो जिह्वाशून्यः केललेटिर्हिकश्वरिः सौ[18]रध्वजिर्नैमिश्यो लोष्टाक्षिर्गैरेवणिः पौ[19]र्णसैगन्धिः काशकृ[20]द्विलभृत्सौमदायनाः स्वै[21]ानुमतयो मण्डचित्राः शौक्रायणास्त्वाष्ट्रेयाः को[22]वहुण्डयः शौनायनाः शौ[23]कपौ[24]णयो व्रीहिमतयो मायामती राध्रेवाकिः कोशनो[25] मौद्गल्यः कौ[26]रवचः सांतपनायना गेह्वि-

१ ख. याज्ञिया। २ ड. °लिर्बहु°। ३ ड. °वा व°। ४ ड. वत्स्यायनाः। ५ ड. नलायना। ६ ड. पार्षित°। ७ ड. अजिहीता। ८ ड. गालवः। ९ ग. ड. भ्रास्त्रेयाः। १० ख. सैष्णिक°। ग. सैष्यक°। ड. सौष्पिक°। ११ ड. °तयो जैक°। १२ ग. °निष्ठयो। १३ ड. °श्वाश्वेक्षाः। १४ क. वास्यात्के°। ग. बाध्यात्केयाः। १५ ड. स्योपाः। १६ ड. मन्योदाः। १७ ड. °नारा°। १८ क. °रब्ध्वाजि°। ख. रब्धजि°। ग. °रवध्व°। १९ ड. पर्णसौसधिः। २० ग. ड. °कृद्विल°। २१ ड. स्वातुम°। २२ ड. कोबहु°। २३ ग. शाखपौ°। २४ ड. °पौणेयो। २५ ड. °नो माद्र°। २६ ख. वरघचः। ग. वरववचः।

भैंडिः किरुषः स्तन्वत औलन्धिर्वायर्गिरायणिः श्येनैयागतिर्नैकर्द्रियि[1][2]ः शौककर्णिर्निडायनः।

इत्येते वत्साः।

तत्र[3] ये जामजग्न्या वत्सास्तेषां पञ्च प्रवराः, भार्गवच्यावनाप्नवानौर्वजामदग्न्येति। त्रयो वा, भार्गवौर्वजामदग्न्येति।

ये त्वजामदग्न्या वत्सास्तेषां त्रयः, भार्गवच्यावनाप्नवानेति।

अथ जामदग्न्या[4] विदाः।

विदाः शैला अवटाः प्राचीनयोग्या अभयदानाः काण्डरथा वैनभृतः पुलस्त्य आर्कायणो नाड्रायणस्ताम्रायणः क्रौञ्चायणः कामलः पौलस्त्यो वेदभृदभयजातास्त्रैकायना भ्राजा[5] भ्रादन्त्याः त्रैकायना भृङ्गायनाः।

इति विदाः।

तेषां पञ्च प्रवराः। भार्गवच्यावनाप्नवानौर्ववैदेति। त्रयो वा, भार्गवौर्वजामदग्न्येति।

अजामदग्न्यविदानां भार्गवौर्वजामदग्न्येति त्रय इति कात्यायनः। वत्सानां भार्गवच्यावनाप्नवानेति त्रय इत्यपि तेनैवोक्तम्। पञ्चप्रवरेषु विदेषु जमदग्नेः सत्तयाऽनुवृत्तिः।

अथ वैन्याः।

वैन्याः पार्था वाष्कलाः शैताः[6]।

इति वैन्याः।

श्यैता इति केचित्। तेषां त्रयः, भार्गववैन्यपार्थेति।

---

अथ वीतहव्याः।

वीतहव्या यास्का[7] मौनो मौको वाधूलो वर्षपुष्पो भागलेपो भागविज्ञेयो दुर्दिनो भास्करो दैवजायनो वार्कलेयो माध्यमेया[8] वासयः कौशाम्बेयाः क्रौत्रिल्याः[9] सत्यकयाश्चित्रसेना भागुरिश्छपो माधूला मौसला जीवन्तायना अर्धलेखयो वृकाश्मकयो मदोकधो वारेया गैरिक्षितो[10] [11] दैर्घचित्ताः पञ्चालवाः पौष्पावता[12] गोदायनाश्चण्डमोदनो भागलिर्भागवित्तिः पिलिः खलिः काश्यपिः[13] समदा-

---

१ इ. °नपाग°। २ क. °नैकृट्रायि.। ३ ङ. °त्र जा°। ४ क. °दग्न्यवि°। ५ ङ. भ्राजः। ६ क. ख. ग श्यैता°। ७ ख. यस्काः। ८ माध्यमे°। ९ ङ. क्रौविलयाः। १० ङ. गौरिक्षिताः। ११ ङ. °ता दीर्घ°। १२ ख. ग. पौष्यव°। ङ. पौष्णाव°। १३ ङ. °श्यपिर्वालेपिः।

गपिः सौरिर्ज्वरिर्भार्गान्तपः[1] सानुस्त्वयो[2] मादायनाः शालंकायनास्ताकाः माव-रेयाः शार्कराक्षिः कौटिल्यो विलेभिर्वाह्वियो[3] हालेयो दीर्घचित्ताः[4]।

इति वीतहव्याः।

यस्का[5] इति केचित्। एतेषां त्रयः, भार्गववैतहव्यसावेदसेति।

---

अथाऽऽर्ष्टिषेणाः।

आर्ष्टिषेणा नैर्ऋथयो[6] ग्राम्यायणयः काणायनाश्चान्द्रायणाः पौटकलायनाः सिद्धाः सुमनायना गौराभिर्मृदङ्गीयो मार्गपथो नैकर्पिरापस्तम्बिर्वालिमः कार्द-मायनिर्गालेभिरनूपो वदायनिः कविराश्वभिः।

इत्यार्ष्टिषेणाः।

तेषां पञ्च प्रवराः।

भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति। त्रयो वा, भार्गवार्ष्टिषेणानूपेति। केचि-देष्वपि जमदग्नेः सत्तयाऽनुवृत्तिमाश्रित्य जामदग्न्यत्वमाहुः। तत्स्मृत्यर्थसा-रादिविरुद्धम्। पञ्चावत्तिता चैषामजामदग्न्यत्वेऽपि वाचनिकी। "वत्सा बिदा आर्ष्टिषेणाः" इत्युक्त्वा "एते पञ्चावत्तिनः" इति बौधायनवचनात्। अवि-वाहो वत्सबिदाभ्यां सहाऽऽर्ष्टिषेणानां[7] पाक्षिकात्रिप्रवरसाम्यात्।

वात्स्यानां त्रयः। भार्गवच्यावनाप्नवानेति। वत्सपुरोधसोः[9] पञ्च, भार्गव-च्यावनाप्नवानवात्सपौरोधसेति। वैजवनिमथितयोः पञ्च, भार्गवच्यावनाप्नवा-नवैजवनमथितेति[10]। एतेऽपि क्वचित्। एतेषां परस्परं पूर्वोक्तैश्चाविवाहः, प्रवर-साम्यात्।

---

अथ वाध्र्यश्वाः।

वाध्र्यश्वा रैष्ठ्यांनाः[11] सापिण्डिनाः[12] सुरभिनेया माल्या महावाल्यास्ताक्ष्या-यणाः कैतवायनाः खालायनाः शाकटायना मैत्रेयाः साचर्या[13] द्रौणायना रौक्थायना[14] आपिशला*[15] आटिकायना हंसजिह्वा रौप्यायणः[16][17] सात्यण्डिनः

---

* क. पुस्तकेऽत्र "आपिच्छला." इत्यपि बहिर्लिखितः पाठः।

---

१ ङ. °भार्गत°। २ ङ. °पः स्वानुस्वपो। ३ ग. °भिर्वाहेयो। ङ. °भिर्बह्वेयो। ४ ङ. दीर्धचित्तः। ५ ग. यास्कः। ६ ख. ग. °ऋषयो। ७ ङ. °वार्ष्टि°। ८ ख. ङ. सह पा°। ९ ख. ङ. °धसयोः प°। १० क. °नमाथि°। ११ क. रैष्ठ्याना.। १२ ङ. सापिण्डानाः। १३ क. साचार्या। १४ ङ रौस्थाय°। १५ क. आपिशलाः। १६ ङ. °यणा सा°। १७ ख. °ण सारा°।

पिण्डिकाक्षा मौदायनाः कापिशायनाः शाडेयाः साक्षिता मित्रयत आपिशायनाः पाटिकायना मित्रयुवो दिवोदासाः ।

इति वाध्र्यश्वाः ।

मित्रयुव इति केचित् । दिवोदासा इत्यन्ये । एषामेको वाध्र्यश्वेति । त्रयो वा, भार्गववाध्र्यश्वदैवोदासेति ।

गृत्स(गार्त्स?)मदानां गार्त्समदेत्येकः प्रवरः । वैन्यवीतहव्यवाध्र्यश्वगार्त्समदानां स्वस्वगणं हित्वा परस्परं पूर्वैश्च सह विवाहो भवत्येव । द्वित्रि(त्र)प्रवरसाम्याभावात् ।

तदुक्तं स्मृत्यर्थसारे—

" यस्का मित्रयुवो वैन्याः शुनकाः प्रवरैक्यतः ।
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परस्परम् " इति ॥

अत्र यस्का मित्रयुवः शुनका इत्येकपक्षाभिप्रायम् । प्रवरैक्यतः स्वगणं हित्वेति संबन्धः । क्वचित्त्वधिकं गणद्वयमुक्तम् । वेदविश्वज्योतिषां त्रयः, भार्गववैदवैश्वज्योतिषेति । शाठरमाठराणां त्रयः, भार्गवशाठरमाठरेति । अनयोः परस्परं पूर्वैश्च विवाहः ।

मण्डनोऽपि—" जमदग्निर्भरद्वाजो विश्वामित्रोऽत्रिगौतमौ ।
वसिष्ठः कश्यपोऽगस्तिरेषां येष्वनुवर्तनम् ॥
येषां तुल्यर्षिभूयस्त्वं नोद्वहन्ति मिथश्च ते " ॥

इति परिभाषामुक्त्वाऽऽह—

" भृगूणां वीतहव्यात्प्राग्विवाहो न परस्परम् ।
वीतहव्यादयः स्वं स्वं गणं हित्वा परावरैः ॥
विवाहं कुर्वते सर्वे तेभ्यः प्राक्पठिता अपि ।
लौगाक्षीणां दिवोदासा वीतहव्याः सधर्मिणः[3] " इति ॥

इति भृगवः ।

## अथाङ्गिरसः ।(२)

ते त्रिविधाः[4] । गौतमा भारद्वाजाः केवलाश्च । तत्र गौतमाङ्गिरसः सप्त ।

---

१ ख. छ. °ति । वीतहव्यवैन्यगार्त्समदवाध्र्यश्वानां । २ ग °ह° । माण्ड° । ३ ग. °र्मिणाम्" इ° । ४ ङ. त्रिधावि° ।

आयास्याः शरद्वन्तः(न्ताः?) कौमण्डा दीर्घतमसः कारेणुपालयो वामदेवा औशनसाश्च ।

आयास्याः श्रोणिवेधा[1] मूढरथाः सत्यकयो[2] वैदेहाः कौमारवत्यास्तौण्डद्भिर्दैवकिः सात्यमुग्निः कौबाह्या बौभ्या नौकरिः स्वस्तैषकिः कीलालपिः[3] कारुणपः कटोरयः[4] काशिवाजः साक्षीकः पार्थिवाः ।

इत्यायास्याः ।

तेषां त्रयः, आङ्गिरसायस्यगौतमेति ।

अथ शरद्वन्ताः ।

शरद्वन्ता आभिजिता रोहिण्याः क्षीरकरम्भाः सौमुचयः सौयामुना औपबिन्दवो रैहूगणा[5] गणपा भार्षण्याः[6] क्षौलेया नैकरयः करभोगिण्याः सैन्धवा गालवाः साङ्कराः सौमिनयः पौष्पिण्डवो[7] भावलाः[8] काण्डवाः कारोहाः काशवारयो मान्धर्था इपवो रोहितायना अङ्गारकाः क्रौलायनाः कास्तौर्ण्ययोऽरुणयः[9] पार्थिवा मौदहायनाः स्कान्दाः सरावाः कौटिल्या वासमूलयो वासपुष्पयो वासस्तेयो वासधूपयः काचाक्षयः क्षंया[10] वारणयाः[11] करेलय उतथ्या बोधयोनगाः सुगोमाक्षयः क्षीरषाष्टिकयो राद्धकर्णयः सौपुत्रयः सामलोमकयः पौष्कजितयो भागत्राश्चण्डाडकाः सुतपाः सुरैषिणो रौहिणायनयः क्रौष्टायनेय[12] आरुणायनयः सौदामनयः कासोषाः कौशल्या रौहिणेयाः काराधनयो मूलपो वासवः पुष्पवन्तो याविका रेचय औपमान्याः[13] छैटिकाः शौनरयः शौलापयः खरिका नैकर्षयस्तोदेया वाल्वोटाः ।

इति शरद्वन्ताः ।

तेषां त्रयः, आङ्गिरसगौतमशारद्वन्तेति ।

अथ कौमण्डाः ।

कौमण्डा मामन्थरेषणा[14] मांसुराक्षाः काष्ठरेखय आञ्जायना वाञ्जायनाः काक्षीवता औशिजा मासुरेखयो वाशियः ।

इति कौमण्डाः ।

---

१ ङ. °णिविधा । २ ख. ङ. °त्यकद्‌यो । ३ ङ. °लपः का° । ४ ग. कठोरयः । ङ. काटोरयः । ५ ख. रहग° । ग. राहूगणाः । ६ ङ. °षण्या नै° । ७ ख. पौष्पिण्डव. । ग. पौष्पण्डयो । ङ. पैषिप्पडयो । ८ ग. भावलाः । ङ. भागलाः । ९ ग. °स्तौक्षयो° । १० ङ. क्षमा । ११ ग. °णवः क° । ङ. °णयः क° । १२ ङ. °नयोऽरु° । १३ ङ. °पमन्याः । १४ ख. ङ. °रेस्वय ।

तेषां पञ्च, आङ्गिरसौतथ्यकाक्षीवतगौतमकौमण्डेति।

दीर्घतमसां पञ्च, आङ्गिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेति। त्रयो वा, आङ्गिरसौतथ्यदैर्घतमसेति।

[ अथ कारेणुपालयः। ]

कारेणुपालयो वास्तव्याः श्वेतीयाः पौञ्जिष्ठा औदजायना माधुक्षारा आजगन्धाः।

इति कारेणुपालयः।

तेषां त्रयः, आङ्गिरसगौतमकारेणुपालेति।

वामदेवानां त्रयः। आङ्गिरसवामदेव्यगौतमेति। अन्त्ययोर्व्यत्ययो वा। आङ्गिरसवामदेव्यवार्हदुक्थेति वा।

---

[ अथौशनसाः। ]

औशनसा दिश्याः प्रशस्ताः सुरूपाक्षा महोदरा विकंहताः सुबुध्या निहता गुहः।

इत्यौशनसाः।

तेषां त्रयः, आङ्गिरसगौतमौशनसेति।

अन्येऽपि। औतथ्यानां त्रयः, आङ्गिरसौतथ्यगौतमेति। औशिजानां त्रयः। आङ्गिरसौशिजकाक्षीवतेति।

आयास्यौशिजानां पञ्च। आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति। रहूगणानां त्रयः, आङ्गिरसराहूगणगौतमेति। सोमराजानां त्रयः, आङ्गिरससोमराज्यगौतमेति। बृहदुक्थानां त्रयः, आङ्गिरसबार्हदुक्थगौतमेति। कक्षीवतां पञ्च, आङ्गिरसौतथ्यगौतमौशिजकाक्षीवतेति। रायुवाणां त्रयः, आङ्गिरसरायुवगौतमेति। एषां सर्वेषां गौतमाङ्गिरसां परस्परमविवाहः। गौतमस्य त्रियमाणतया सत्तया वाऽनुवृत्तेः सगोत्रत्वात्प्रायेण द्वित्रि(त्र)प्रवरसाम्याच्च।

इति गौतमाः।

## अथ भ(भा?)रद्वाजाः।(३)

ते चत्वारः। भारद्वाजाः कपयो गर्गा रौक्षायणाश्च।

१ क. °ति। अया°। २ ग. °रः। भर°।

भ(भा)रद्वाजाः क्षाम्यायणा मेङ्गडा देवाश्वा इद्दहव्याः माग्वंशयो वाहच्छन्ना[1] वाह्योगा[2][3] वासीतायनास्तैदेहा आश्ला औक्षाः शूरयः पारिणद्धेयाः केशस्वेयाः शौद्रय[4] ऊरूढाः खारग्रीवय औपसयोतय आग्निवेश्याः शत्रा गौरिवायनाः खेलकः स्तनकर्णा ऋक्षा माणभिन्द्याः कद्रौदकाः सौज्वं[6]लापा वैलाः खौरडा देवयोनयो भरुण्डेया भन्दादयः[7] सौरंभराः शुङ्गा देवमाय इषुमत्ता औदमेघयः मावाहणेयाः कल्माषा राजस्तवयः संधोपकृतयः पराह्ररायो[8][9] वलभोकयो रुद्राङ्गपथाः शालद्रलयो वेदचेला नृत्यायना नृत्याः शौलालयः[10] शार्हलयः काक्षला बाष्कलाः सैह्यकेयाः कौडायनाः[11] कौण्डिन्या ब्रह्मस्तम्भा राजस्तम्भा अग्निस्तम्भा वायुस्तम्भाः सूर्यस्तम्भाः सोमस्तम्भा विष्णुस्तम्भा यमस्तम्भा इन्द्रस्तम्भा आपस्तम्भाः। ये चान्ये स्तम्भशब्दान्तास्तेऽपि। आरणाः सिन्धवः कौमुदगन्धयः शिखायना मात्रेयायणा भामाण्याः कुक्षाः कौकाक्षयस्तैदुन्दयो दार्भयः शामेया मत्स्यक्राथाः कारुणायनाः कारुपथयः करिपायः[12] कावल्या वालिशायनाः सौहयो वाराहयो विविपयः शिलामलयः पैलाः शालंकायनो[13] जैह्मलायनयः[14] साष्टकयो लौभायनय[15] औपस्तवयो[16] धौताश्वकयो जित्यद्रोणयो[17] बाह्यगच्छयो व्यष्टकथः स्वारग्रीवयो वाजपृष्ठयः मवाहयो दर्शादीकयस्तूर्णकर्णयः[18] काञ्चयो देवाङ्गरयो हारिकर्णयः सपौलयः सौगेया मालोहराः खगखलायनाः सौविष्टा हालोदराः[19] सात्यमुग्रयो लेखायनाः कारुणायनाश्वेला रुक्षाः किकायना वाललक्षा गौरिवाः[20] सौपथाः सौभराः सौबुद्धयो धौरकुलिका विकिराः[21] कुपिया मालाहलाः श्रीपथा अपिना निद्राङ्गवधाः शैखेया मौधुकवर्याः[22] काण्डण्या औवेया मैथुनमतयः कौरुलेत्रेयाः[23] खारणादयो[24] देवस्थानयः शालुहवो गोखपिङ्गलयो[25] गङ्गोदयोऽधिकारग्रीवयोऽयम्बकयो[26] मापायणाः शाक्राः काजाः सौविश्वाः[27] कमु-

१ ङ. °श्रा बाह्यो° । २ ख. °ह्योगाः कर्सा° । ३ ङ. °गा वसी° । ४ ग. ङ. शौद्रय । ५ ख. °रूढा रवार° । ङ. °रूढा रवारिग्री° । ६ ख °ज्वकापा । ७ ङ. भद्राद° । ८ ङ. °हरयो । ९ ङ. °यो बल° । १० ग. शालम्रयः । ङ. शाललयः । ११ ग. ङ. कौण्डाय° । १२ छ. °षायणाः का° । १३ ग. ङ. °यनयो जै° । १४ ङ. °यनः सा° । १५ ख. लाम्भाय° । १६ क. आयस्त° । १७ ख. °यो वाह्य° । १८ ङ. °शादिक° । १९ ख. ङ. °लोहराः । २० ख. °वाः सौभ° । २१ ङ विकाराः । २२ ङ. माधुक° । २३ ख. ङ. °त्रया रवार° । २४ ख. °यो व° । २५ ख. ङ. गोरवपि° । २६ ग. °म्बकायो । ङ. °म्बह्रयो । २७ ङ. °श्वाः काम° ।

कायनाः सिन्धवः सारावयो वाहयः । सामस्तम्बयः सोमस्तम्बयो ब्रह्मस्तम्बय आश्वला[1]यनो मार्कण्डेयः कुक्काः सौङ्गयः ।

इति[2] भारद्वाजाः ।

तेषां त्रयः, आङ्गिरसबार्हस्पत्यभारद्वाजेति ।

[ अथ कपयः । ]

कपयः स्वस्तितरवो बिन्दवो दण्डिनो दिक्ष्वशक्तयः पतञ्जलयो भूपसिनस्तैरेवयो वैतकय ऊर्ध्वा राजकेशिनः कलसिनः कण्वाः करीतपो वान्यायना आमावास्या[3]यनाः कात्यायनाः कपेतराः स्वेदतरा जलसिश्रयः [4]कुसीदे[5]रयः सौ[6]जिटयः सामवयः सलयः क्षण्याः सावस्थायनयः ।

इति कपयः ।

तेषां त्रयः । आङ्गि[7]रसामहय्यवौरुक्षय्येति । आङ्गि[8]रसामहय्यौरुक्षय्येति वा पाठः । आङ्गि[9]रसामहीयवौरुक्षयसेत्याश्वलायनपाठः ।

केचित्तु— आङ्गिरसबार्हस्पत्यभारद्वाजेति । आङ्गि[10]रसबार्हस्पत्यकापेयेति पक्षद्वयमाहुः ।

---

[ अथ गर्गाः । ]

गर्गाः साम्भरायणाः सस्वीनयो माधरायणा वाहुलयो भ्राष्ट्रकृतो भ्राष्ट्रधृतो भ्राष्ट्रविन्दवः [11]क्रोष्टकयः सौयामुना भ्राजिनाक्षयो होत्रापचयः सत्या[12]पंचर्या[13] वात्स्यतरायणाः साम्भादा वत्सचतुरायणाः काण्वायनाः सांख्यायनाः कानायनाः कैवलायनाः कौण्डायना भारमता पैशङ्गाः पैल्वकायना विश्वायवकायनाः क्रौलिनो मधुरावहाः [14]सांपरिवारा बालाकयः शालायनयः साहनयो माथु[15]रांचरा ऐन्द्रालयो लोपकृतो[16] वांसायनाः शारायणाः श्यामायना रामिनो(णो?) भाङ्गिनः कारिण आस्मिनः क्रीडिनो राचारता भालवि[17]द औपमर्कटाः कार्षायनाः कौञ्जपयः शालङ्कायनाः कोलास्त्राः श्यामाः ।

इति गर्गाः ।

---

१ ग. 'यना मा' । ङ. 'यनयो मा' । २ क. ति' । भर' । ३ क. ख. 'यनः क' । ४ क. कुशीदरयः । ५ ङ. 'देतर' । ६ क. 'जढयः । ७ ङ. 'रससा' । ८ ङ. 'रसपा' । ९ ङ. 'रससा' । १० ङ. 'रबा' । ११ क. क्रोष्ट्रकयः । ख. क्रोष्ट्रकयः । १२ ख. 'पश्चयो षा' । १३ ङ. 'या वत्पात' । १४ ङ. सांपारि' । १५ ङ. 'राचारा । १६ ख. 'तो वासा' । १७ ख. 'विद्य औ' ।

तेषां त्रयः। आङ्गिरसशैन्यगार्ग्येति। भारद्वाजगार्ग्यशैन्येति वा। सैन्येति क्वचित्पाठः। पञ्च वा प्रवराः, आङ्गिरसबार्हस्पत्यभारद्वाजशैन्यगार्ग्येति। आङ्गिरसशैन्यगार्ग्येति वा। तित्तिरः कपिभुवः खण्डिताः। इत्येतेषां गर्गाणां त्रयः, आङ्गिरसशैन्यगार्ग्येति। आङ्गिरसतैत्तिरकापिभुवेति वा।

---

[ अथ रौक्षायणाः ]

रौक्षायणाः कपिलाः शबलाः शिफिला विभिण्डयः कौथुमा अग्निजिह्वाः कर्णाः सुताः।

इति रौक्षायणाः।

तेषां पञ्च। आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातृवचसेति। त्रयो वा। आङ्गिरसवान्दनमातृवचसेति। आत्मभुवां पञ्च। आङ्गिरसबार्हस्पत्यभारद्वाजमा[1]त्रवरा[2]त्मभुवेति। अयं गणः क्वचित्। एषां भारद्वाजाङ्गिरसां परस्परमविवाहः। म्रियमाणतया सत्तया वा भरद्वाजानुवृत्तेः सगोत्रत्वात्प्रायेण द्विप्रवरसाम्याच्च।

इति भरद्वाजाः।

केवलाङ्गिरसः षट्, हरिताः कुत्साः कण्वा रथीतरा विष्णुवृद्धा मुद्गलाश्च।

[ अथ हरिताः। ]

हरिताः शङ्खदर्भयः सौभा[3]मादा नैयगवा मतायवा वालोदरा महोदरा नैमिश्रयो मिश्रोदकाः कौतपाः करीषवः कौलयः पौलयः पोटलयः पौटला मै[4]त्सा मांधातवो माण्डकारयः खाण्डायना माण्डमालयो[5] गवेरणयो मत्स्यमालयो गाणगारयो मद्रगारयः कुत्सा हंसा हस्तिवायसाः पैङ्गलाः पिङ्गाः पालाशिनो दा[6]दला हास्तिनः कौमारहारिता इलाः।

इति हरिताः।

तेषां त्रयः। आङ्गिरसाम्बरीषयौवनाश्वेति, मांधात्राम्बरीषयौवनाश्वेति वा।

कुत्सानां त्रयः। आङ्गिरसमांधात्रकौत्सेति।

१ ङ. 'मात्रव'। २ ङ. 'राभु'। ३ ङ. 'भागा नै'। ४ ङ. मत्स्या। ५ ग. 'थो गावे'। ६ ख. ङ. दांदला। ग. दान्दला।

[ अथ कण्वाः । ]

कण्वा औपमर्कटायनाः वाष्कलाः पौला हस्तिनो मौञ्जिभाजयो मौनिगन्धा[1] वीजिवाजयो वाजश्रवाश्वा[2] भारुण्डा [3]भेरुण्डा [4]रमण्यः सेना[5] मर्कटा गर्दभाः[6] प्राकासराः शाकटायना[7] गोदायनाः शानायना रामायणा शौवेरिणो[8] नारीणा आर्यादयश्चतुराः श्यामायनयः ।

इति कण्वाः ।

तेषां त्रयः । आङ्गिरसाजमीढकाण्वेति । आङ्गिरसघोरकाण्वेति वा ।

[ अथ रथीतराः । ]

रथीतरा हस्तिदाः सिकाह्वायना नैतिरक्षयो मैलयो भिलीभायनाः[9] सावहवा भैक्षवाहा[10] हेमगवा वैरूप्या विरूपा आङ्गुष्ठा अष्टादंष्ट्राः पृषदश्वाः ।

[11]इति रथीतराः ।

तेषां त्रयः । आङ्गिरसवैरूपपार्षदश्वेति । आङ्गिरसवैरूपराथीतरेति वा । अष्टादंष्ट्रवैरूपपार्षदश्वेति वा । अन्त्ययोर्व्यत्ययो वा ।

विष्णुवृद्धाः शठा मपणा मन्द्रणा भद्रणा भद्रयो[12] वादरायणा वात्सप्रायणा सात्यकयः सात्यकायना नितुन्दिनः स्तुत्या भारुण्या वैहोढा[13] देवस्थानयः क्षत्रिणाश्छत्रिणा होत्रीणाः[14] पुत्रिणा जतृणा वत्रिणाः कर्तृणाः शाम्बरायणा औपमीतय औपगवयः कुशमिवद्वत्सावनाः सावनार्या वाच्यायनिनः कौयम्भायनिनः[15] ।

इत्येते विष्णुवृद्धाः ।

तेषां त्रयः । आङ्गिरसपौरुकुत्स्य*त्रासदस्येति । त्रासदस्यवेति केचित् ।

मुद्गलाः सात्यमुग्रयो हिरण्यस्तम्बयो हंसजिह्वा देवजिह्वा आलवाला[16] विडालदयो[17]ऽग्न्यादयः सुनयश्छत्रहयास्तारणाः कार्यभासिता हिरण्याक्षा दीर्घजङ्घा हिरण्यगर्भा भिन्दयः ।

इति मुद्गलाः ।

---

* अत्र यकाररहितोऽपि पाठो वहिर्लिखितोऽस्ति क. पुस्तके ।

---

१ ग. ङ. °न्धा बीजि° । २ ङ. °श्रवसे भा° । ३ ङ. भरुडाः । ४ ङ. रमणाः । ग. रमण्याः । ५ ङ. सणाः । ६ ङ. गर्दभाः । ७ ख. °यना रा° । ८ ख. °रिणा ना° । ङ. °रिणा आ° । ९ ख. °यना भै° । १० ख. °क्षवीवा° । ११ ङ. इत्येते । १२ ख. ग. °यो वाद° । १३ ख. ङ. वैहोठा । १४ ग. ङ. होत्रिणाः । १५ ङ. कालम्भा° । १६ ग. °ला विडा° । १७ ङ. °दय आग्न्या° ।

तेषां त्रयः। आङ्गिरसभार्म्याश्वमौद्गल्येति, तार्क्ष्यभार्म्याश्वमौद्गल्येति वा। आङ्गिरसतार्क्ष्यमौद्गल्येति वा। एषां केवलाङ्गिरसां स्वं स्वं गणं हित्वा परस्परं पूर्वैरङ्गिरोभिश्च विवाह एव सगोत्रत्वाभावाद्द्वित्रि(त्र)प्रवरसाम्याभावाच्च। हरितकुत्सयोस्त्वविवाहः पाक्षिकद्विप्रवरसाम्याभावात्। हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामित्याश्वलायनेन सर्वप्रवरसाम्योक्तेश्च।

मण्डनः—" भरद्वाजात्पुराऽन्योन्यं न विवाहोऽङ्गिरोगणे।
आश्वलायनपाठे तु गौतमेषु स्थिता अपि॥
विवाहं गौतमैः कुर्युः पृषदश्वर्क्षवंशजाः।
बहुपाठानुसारेण भरद्वाजा हि ते स्मृताः॥
ऋक्षाः स्युः पृषदश्वाः स्यू रथीतरसगोत्रिणः।
उशिजा वामदेवाश्च तथा दीर्घतमादयः॥
गौतमा एव विज्ञेया उपवर्षादिपाठतः।
प्रीयते यैर्भरद्वाजो नोद्वहन्ति मिथश्च ते॥
कपिलोऽपि भरद्वाजो व्याडिवासिष्ठवाक्यतः।
भरद्वाजप्रवरणे केचिदाहुः कपी पृथक्॥
भरद्वाजोऽस्ति गर्गेष्वप्यापस्तम्बादिपाठतः।
विश्वामित्रैर्भरद्वाजैर्नोद्वाहः शुङ्गशैशिरैः॥
अन्येऽपि ये द्विगोत्रोत्थास्तेऽपि ताभ्यां न कुर्वते।
नान्योन्यं हरितः कुत्सः सर्वैरन्यैर्यथारुचि॥
शिष्टास्त्वङ्गिरसः स्वं स्वं गणं हित्वा परावरैः।
सर्वैरुद्वाहमर्हन्ति गोत्रप्रवरभेदतः " इति॥

इति केवलाङ्गिरसः।

## अथात्रयः।(४)

ते[1] च चत्वारः—अत्रयो गविष्ठिरा वाद्धुतका मुद्गलाश्च।

अत्रयो भूरयश्छान्दयश्छान्दोगेयाः पौष्पिका मोहलयः[2]सौपालगलाश्छागलास्तृणबिन्दवो भार्गतयो मालरुचो[3] व्यालयः सांव्ययोनयः[4] कामायनियो[5][6] दाक्षायणः स्वैदेहा गाथितपा औद्दालकयो द्रोणभावा गौरिग्रीवयो गाविष्ठिराः शैशुपालाः कृष्णात्रेया गौरात्रेया ऋक्षात्रेया[7] नीलात्रेयाः श्वेतात्रेयाः श्यामात्रेया

१ क. ख. ग. ते चत्वा°। २ ङ. °श्छात्रेयाः। ३ ङ. मालरूचो। ४ ख. °वव्ययः। ५ ङ. °व्यायनः का°। ६ कामर्या°। ७ ख. साक्षात्रेयाः।

महात्रेया गालेया वालेयाः शौभ्रेया वामरथ्याः श्वेतभावाः शौद्रेया गोपवनाः कालापचया नीलायना आनङ्गयो मानङ्गयो दौरङ्गयो सौरङ्गयो गौरङ्गयः पुष्पयः सौपुष्पयः साकेतायना भारद्वाजायना इन्द्रातिथयः शास्त्ररव आहायनाः पत्रनाशाः किकिदीवयः शौनककर्णयः सौश्रुतयो गौरग्रीवः कैरञ्जयो जैत्रायणाः श्वेकयो बाहुनेत्रा वाहमित्रा जानुकयः पनर्जनो भागमादनाः सांख्येयाः सारायणाः सौक्तचरा अर्धपथा गौधन्याः कालजिह्वा उद्दरग्रीवयो वैडालयः शाकलायना गौणीपथा बैलदा भैवपादा अर्घ्यायणा वादर्यायणा माङ्गला बाहुदन्तयो भागलेयोऽरुणात्रेया दत्तात्रेयाः शैस्वयः करायणा नीशायना दर्भ्या बुयादुला वामरथा वैश्वानकयः शौधूलकयो निकलाः।

इत्यत्रयः।

तेषां त्रयः, आत्रेयार्चनानसश्यावाश्वेति।

गविष्ठिरा दक्षयो भलन्दना और्णनाभयश्चन्द्रात्रेया वैजवापयो मौञ्जकेशाः पूर्वातिथयः श्यामपुष्पयः शिलंदलयो ब्रह्मपुष्पयो वाध्र्यपुष्पयः सौपुष्पयः कार्ष्णशायको हिरण्यपुष्पयः कालाक्षयः कालशीर्षयो ह्लक्षयो बलयो घृतयः पार्ष्णयः कटुकयो मैत्राण्याः शिरीषकाः।

इति गविष्ठिराः।

तेषां त्रयः। आत्रेयार्चनानसगाविष्ठिरेति। आत्रेयगाविष्ठिरपौर्वातिथेति वा।

वाद्भुतकानां त्रयः। आत्रेयार्चनानसवाद्भुतकेति।

मुद्गलाः शालिसंधय और्णवा बौधाक्षा वैतवाहाः शिरीषयः शालिमता गौरिता गौरकयो वाजवताः।

इति मुद्गलाः।

पूर्वातिथय इति केचित्।

तेषां त्रयः। आत्रेयार्चनानसपौर्वातिथेति। क्वचित्त्वन्ये पञ्चाऽऽम्नाताः। अतिथयो वामरथ्याः सुमङ्गला बीजवापा धनंजयाश्चेति। आद्यानां चतुर्णामात्रेयार्चनानसातिथेति। आत्रेयार्चनानसगाविष्ठिरेति वा। सुमङ्गलानामात्रेयसुमङ्गलश्यावाश्वेति वा। धनंजयानामात्रेयार्चनानसधानंजय्येति। वालेया

---

१ ङ. °रजयो। २ ख. °त्राणाः। ग. °त्रायिणाः। ३ ख. त्वाहमित्राः। ४ ङ. °ञ्जयो भा°। ५ ख. ङ वलदा। ६ ख °दा अ°। ७ ङ. भगपा°। ८ ख. °णा वाद°। ९ ख. °लेपोऽरु°। ग. °लेया अरु°। १० ख. °त्तात्रैयाः। ११ ङ °याः शौधू°। १२ ङ. °यो व्याध्र्य°। १३ ख. °यः का°। १४ ङ. प्लक्षयः। १५ क. ग. °ण्याः। इ°। १६ ङ. अर्णवाः। १७ क. °ति। केचि°। १८ ख. °लेयाः कौ°।

हालेयाः कौद्रेयाः शैद्रेया[1] वामरथ्या गोपवनाः । इत्यत्रेः पुत्रिकापुत्राः । तेषां त्रयः । आत्रेयवामरथ्यपौत्रिकेति । अत्रीणां सर्वेषामविवाहः सगोत्रत्वात्सप्रवरत्वाच्च ।

इत्यत्रयः ।

## अथ विश्वामित्राः ।(५)

ते दश, कुशिका लोहिता रोक्षकाः कामकायना अजाः कता धनंजया अघमर्षणाः पूरणा इन्द्रकौशिकाश्चेति ।

कुशिकाः पार्णजङ्घा वारक्या औद्लयो माणयो बृहदग्नय आलेपय[2] आद्यहय[3] आपद्मप्याः कामन्तका बद्धकथाश्चिकिताः कामकायनाः शालङ्कायनाः कास्यायना लौका[4] गौराः सौगन्तव्या यमदूता आनाभिन्नास्तारकायणाश्चौवला जाबालयो याज्ञवल्क्या वितण्डा नुवलयः सौशृतय औपगहनय उद्परयो भ्राष्टग्याः श्यामेयाश्चैत्रेयास्तालोचतरा मयूराः सार्मत्याश्चित्रतवयाः सातताय ना मनवस्तन्तवः सान्तवः पक्षा नालशब्दा बाभ्रव्याः कालापा उत्सरथो देवराता औलकय उलूका बाभ्रवाः शाला विशालाः कालवचाः सैन्धवायनाः सौरथयः कारीपयः संस्रत्या औलोप्याः पार्योदरयः क्षरयः पडर्लया गालवा वैकृतयो वैतण्डा वलशङ्कवः श्यामायनाः काला वालखिल्या धांजयः सोमेया आश्वलायना आवाहा उलूखला जैमिनयः सांकृतय औघेयाः साक्षयो वत्रा ईर्मवा वारकयः शालावताः ।

इति कुशिकाः ।

तेषां त्रयः । वैश्वामित्रदैवरातौदलेति ।

लोहिताः कृटुकयाश्चाक्रवर्णायनास्तन्तायना बाह्यकयोऽष्टकाः ।

इति लोहिताः । रोहिता इति केचित् । अष्टका वा । तेषां द्वौ वैश्वामित्राष्टकेति । त्रयो वा । वैश्वामित्राष्टकलौहितेति । अन्त्ययोर्व्यत्ययो वा । वैश्वामित्रमाधुच्छन्दसाष्टकेति वा । रौक्षकाः स्वोद्वहला रेवणाः । इति रौक्षकाः । रेवणा वा ।

तेषां त्रयः । वैश्वामित्ररौक्षरैवणेति[12] । वैश्वामित्रगाथिनरैवणेति[13] वा ।

---

१ ङ. शेश्रियाः । २ क. °लपय । ३ ग. °हयोऽपप्यण्याः का° । ४ ङ. लोकाः । ५ ङ. °राः सोम° । ६ ग. °मत्स्याश्चि° । ७ ग. ङ. बाभ्रवाः । ८ ङ. °लयो गा° । ९ ख. ग. ङ. वलश° । १० ङ. पाजयः । ११ ङ. °मेया आ° । १२ ख. °वमेति । ङ. °वनेति । १३ ङ. °नरैव° ।

कामकायना दैवश्रवसा दैवतरसाः श्रौमता ज्यामकायनाः ।

इति कामकायनाः । श्रौमता वा ।

तेषां त्रयः । वैश्वामित्रदैवश्रवसदैवतरसेति ।

अजा भार्गमित्रा माधुन्छन्दसाः । इत्यजाः ।

तेषां त्रयः । वैश्वामित्रमाधुच्छन्दसाजेति ।

कता औदुम्बरयः शैशिरयस्तैकायनाः स्तोकायनयस्ता[२]र्ष्यायनयः कात्यायनयः करीराभयो लावकयाः शालङ्कायना मौञ्जहायना[१] गाङ्गायनयः[३] कालयो वेदमानयो गो[४]दायनयो मोदायनयो वेदायनयो वैनायनयो[५] रामणयो रातकयो मौञ्जायनयः ।

इति कताः ।

तेषां त्रयः । वैश्वामित्रकात्यात्कीलेति, वैश्वामित्रकात्याक्षिलेति वा ।

धनंजयाः पार्थिवा बन्धुला मन्दकाः पाणिलाश्चैत्रेयाः परिकुरयः ।

इति धनंजयाः ।

तेषां त्रयः । वैश्वामित्रमाधुच्छन्दसधानंजय्येति । वैश्वामित्रमाधुच्छन्दसाघमर्षणेति वा ।

अघमर्षणानां त्रयः । वैश्वामित्राघमर्षणकौशिकेति ।

पूरणानां परिधापयन्तानां च द्वौ, वैश्वामित्रपौरणेति । त्रयो वा, वैश्वामित्रदैवरातपौरणेति ।

इन्द्रकु(कौ)शिकानां द्वौ । वैश्वामित्रैन्द्रकौशिकेति ।

क्वचिदन्येऽप्येकादशोक्ताः । आश्मरथ्याः साहुला गाथिना वैणवा हिरण्यरेतसः सुवर्णरेतसः कपोतरेतसः शालङ्कायना घृतकौशिकाः कथका रोहिणाश्चेति ।

आश्मरथ्या घोटमुखाः कामुकायनाः कामलायना बन्धुलाः पाणिनयो[६] नैतुलाङ्कुलयः कौशिकाः ।

इत्याश्मरथ्याः । कुशिका इति केचित् । अजा इत्यन्ये ।

तेषां त्रयः । वैश्वामित्राश्मरथ्यवाधूलेति[७] ।

---

१ ग. °ना देव° । २ ख. स्ताप्स्र्याय° । ग. °स्ताक्ष्र्याय° । ङ. °स्ताप्स्र्याय° । ३ ङ. °ना गङ्गा° । ४ ङ. गोदन° । ५ ङ. °यो रात° । ६ ङ. °यो नेतु° । ७ ख. ङ. वागुले° ।

साहुला माहुला राहुलाः काहुलाः फांगुला[1] औमिला औदलाः[2] शातातपाः कामलायनाः सातवत्रयो जातवयः ।

इति साहुलाः ।

तेषां त्रयः । वैश्वामित्रसाहुलमाहुलेति ।

गाथिना औद्दालकय उदवासा रौवश्वका आज्येद्रला रेणुवाः[3] ।

इति गाथिनाः । रेणुवा[4] इति केचित् । उदवेणव इत्यन्ये । हर्यश्वा इत्यपरे ।

तेषां त्रयः । वैश्वामित्रगाथिनरैणवेति । रेणुवेति क्वचित्पाठः ।

वैणवानां त्रयः । वैश्वामित्रगाथिनवैणवेति ।

हिरण्यरेतसां द्वौ । वैश्वामित्रहैरण्यरेतसेति ।

सुवर्णरेतसां द्वौ[5] । विश्वामित्रसौवर्णरेतसेति ।

कपोतरेतसां द्वौ । विश्वामित्रकापोतरेतसेति ।

शालङ्कायनाः[6] शालाक्षा लोहिताक्षा लोहिता जह्नवः ।

इति शालङ्कायनाः । कौशिका वा । जह्नवो वा । तेषां त्रयः । वैश्वामित्रशालङ्कायनकौशिकेति ।

घृतकौशिकानां द्वौ, विश्वामित्रघृतकौशिकेति ।

कथकाः क्रथका आहूयया[7] उदूणयाः ।

इति कथकाः ।

तेषां त्रयः । वैश्वामित्रकाथकक्राथकेति ।

रोहिणानां त्रयः । वैश्वामित्रमाधुच्छन्दसरौहिणेति ।

विश्वामित्रगणानां परस्परमविवाहः । सगोत्रत्वात्समप्रवरत्वाच्च ।

इति विश्वामित्राः ।

## अथ कश्यपाः । ( ६ )

ते त्रयः । निध्रुवा रेभाः[8] शण्डिलाश्च ।

निध्रुवाः कश्यपा अष्टाङ्गिरयो मण्टरा[9] ऐतिशायना[10] आशून्या वैशिमा धूम्रा धूम्रायणाः सौम्या धम्यायणाः सौवष्टक्षा राग्रायणाश्चैवकयः प्राचेयो हृद्रोगा आतपाः पाञ्चायनिका मेषान्तकयः सागसयो माघसरावयो वार्षकयः सैन्धवयः

---

१ क. फणुलाः । २ ड. ओदलाः । ३ ड॰ °णुवः । इ° । ४ ड. °णुव इ° । ५ ख. ग. द्वौ, वैश्वा° । ६ क. ख. ग. शायङ्का° । ७ ख. °हूयया । ८ ड॰ °भाः शाण्डि° । ९ ड. मण्डरा । १० ड. °रा एति° ।

सांयस्या असुरायणाश्छागलयाः[1] सौनयः स्थौलकेशयः पार्पकय औपान्या लाक्षायणाः क्रोष्ट्रवो जायनयः साद्रायणा रोहितायना मितकुम्भाः पिङ्गाक्षय[2] औदुलय आरमणाः पौलयो वैकर्णयः कौषीतकेया धूमलहाणयः सुरा गौगि-[3] रिवायना महाचक्रेयाः पैठीनस्याः पानस्या विपगणा दीक्षमाणयो[4] भालन्दनाः शाङ्खमित्रेया हरित्याजा मात्स्यारमणयः साविश्रवसो ( * वैशम्पायनाः खैर-ङ्कयः कासलय उल्कायनयो मार्जलायनाः कासकायना देवा होतारः सुच-क्रयः खरेना अयःस्थूणा[5] भागुरयाः पाथिकया गोमयना हिरण्यवाया अग्नयो देवयः सौर्या मुसलाँ[6] आविश्रेण्या उदलीमत्रिता वैकर्णयः स्थूलविन्दव आग्रा-यणा मौषकास्तैतिकायना औपप्रतिमा साराहरेयाः कौरङ्गाश्वैकेता[7] नृत्याः स्वैकयो भौर्वनाश्चैत्रगा आहूगायका देवयानाः सोमयागाः शैत्रुहयः[8] काचायना-श्चक्रधर्मिणो महाचक्रधर्मिणः श्रैपयणा हांकारयो[10] दाक्षपाणयो हास्तयो[11] दासयो वात्स्यपाणयो हस्तलायना आश्वत्रातायनाः कौसीरकाः खगादा आग्निशर्मा-यणाः कैकसेयाः काश्वहायना ) त्रिहायना हस्त्याः सानुश्रुता हरितायना मार्गगाः सोमभुवो ज्ञानराधाः श्यामाः पक्षा बभ्रवो[12] वाजिवाहायना[13] वाहका-यना भौमया गोष्ठायना वात्स्यायना[14] वौष्टायना नागशिरसः शौकया ज्ञान-हस्तयो भवनन्देयो[15] भावनन्दयः प्रतिश्रवाः[16] प्रातिथेयाः कौजालयः काण्ड-वायनः पैलमेलयः श्वाक्रायणाः कौपीतका मारीचाः कामेया नकयो वैणीवा[17] भिक्षयः।

इति निध्रुवाः ।

तेषां त्रयः। काश्यपावत्सारनैध्रुवेति। एष एव धौम्याभिपेण्यमाठंराणाम्। रेभाणां त्रयः। काश्यपावत्साररैभेति। रैभ्येति वा पाठः।

शाण्डिलाः कोहलाः पापर्का[18]स्तापिका औदमेघाः सौदानवाः सौचसाः[19] कारेयः कौकण्टयस्तैक्षिमाहेयो[20][21] महोडकयः कोशयो मौजायना भाणवेशाः

* एतच्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके पुनरग्रे वसिष्ठान्तर्गतपराशरेषु प्रमादात्पतितोऽस्ति। तत्राप्येतत्स्पर्शो करिष्यते।

---

१ ख. °यस्याश्छा° । २ ङ. पिङ्गाक्ष° । ३ ङ. गौरि° । ४ ङ. दाक्षमाणया । ५ क. °स्थूणो भा° । ६ ग. °ला अवि° । ७ ङ. °ता· मानृ° । ८ क. °वताश्वै° । ९ ङ. शुक्रहयः । १० ङ. हर्करयः। ११ क. °यो वा° । १२ ङ. °वो वोजि° । १३ ङ. °ना भौमनया गो° । १४ ङ. वाष्टाय° । १५ ङ. °न्दयः प्र° । १६ क. °तिस्रवाः । १७ ख. वैणवा । ग वेर्णीवा । १८ ङ. °का वापि° । १९ ङ. सावच° । २० ङ. °हयः कौश° । २१ ग. °यो माहो° ।

खार्वभार्यनो[1] गाङ्गायना वात्सभालयो गोभिला वेदायना वात्स्यायना बहूदरयो भागुरयः खादन्तीमुखा हिरण्यबाहवो नैदाहा[2] गोमूत्रा वाक्यशठा जानन्धरयो धन्वन्तरय एकखण्डा गर्दभीमुखा[3] आजवंशास्तृणबिन्दवः कोकिलाः पैप्पलादयो जलंधवा[4] गौशिला:[5] शत्रुगायना जीनाः पिप्पलाः शिजाः[6] केशिला मुञ्जमयूराः पैदानवाः कौवलयः कौरण्डजा[7] उत्तराः सुजातपूराश्वेरलाः सुकेतवः कुहका बर्हुमिण्डा[8] हैपुटा वैटायना[9] महाकोरलयः कुंहलासो[10] मंहता[11] धवलाः कराताः पर्यश्वा[12] भुजाजलयः परिवारिणः।

इति शण्डिलाः ।

तेषां द्वौ,[13] दैवलासितेति । त्रयो वा ।काश्यपदैवलासितेति। काश्यपावत्सारशाण्डिल्येति वा। अन्त्यस्थाने देवलो वा। असितो वा काश्यपासितदेवलेति वा। अन्त्ययोर्व्यत्ययो वा। शाण्डिल्यासितदैवलेति वा । शाण्डिलेति क्वचित्पाठः। असितदेवलशाण्डिल्येति वा।

कश्यपानां परस्परमविवाहः, कश्यपस्य म्रियमाणतया सत्तया वाऽनुवृत्तेः सगोत्रत्वात्सप्रवरत्वाच्च ।

इति कश्यपाः ।

## अथ वसिष्ठाः । (७)

ते चत्वारः । वसिष्ठाः कुण्डिना उपमन्यवः पराशराश्च ।

वसिष्ठा वैतालकवयो रकयः सारबला गौरिश्रवसा[14] आश्वलायनाः कपिष्ठलाः[15] शौचिवृक्षा व्याघ्रपादा बाह्यकायनो[16] गायनैया[17] नयाव्या जातूकर्ण्या रौभ्रामथाः[18] कौभोजयः कौलायनाः सुवाहा हारीताः[19] काण्डवृद्धयः सौपवत्सायना आलम्भायना लोमायनाः स्वस्त्याकर्षिताः पार्ष्णिकायनाः पार्णवल्का देवना[20] गौरव्या विश्वायना वाहकथयोऽवकितयो वस्त्वपाजयाः पूतिमाषाः सर्मवेला औपवना औपगवा वैष्णवाः । सात्वलायना औडुलोमा

१ ङ. °यना गा° । २ ङ. नैदेहा । ३ ङ. °खा अजावंशा° । ४ ङ. °लघवा । ५ ग. गैशिलाः । ६ ङ. शिञाः । ७ ग. कौदण्ड° । ८ ग. °हुपिण्डा । ९ ङ. चटायना । १० ङ. कुहला । ११ ख. महन्ता । १२ ग. पार्यश्वा । १३ ग. °द्वौ, देव° । १४ ग. °वत्सा आ° । १५ ग. कपिष्टलाः। १६ ख. °यना गा° । ङ. °यनयो गा° । १७ ङ. °नयो न° । १८ ग. °मथाः कौ°। १९ ग. हरिताः । ङ. हारिताः । २० ग. देवसा ।

गोपायना [1]धोवयो [2]योलिसया वाग्रयथा आयःस्थूणा ब्रह्मपुरेयाः स्वस्तिकाः पाण्डुलयो गोधिलयो मालोहवयो ब्रह्मवलयाः श्वौलयः पौहिश्रवसो याज्ञवल्क्या रावणेयो मौलयः कौलय औपलोना [3]आश्लायना मिथोवलयाश्चण्डालयो गौरिलयो व्यालोहयः स्यामुनाश्वाः सुपाचयो दासध्या [4]भ्रलिसथा आर्जुनाक्षयः ।

इति वसिष्ठाः ।

तेषामेकः । वासिष्ठेति । त्रयो वा वा[5]सिष्ठैन्द्रप्रमदाभरद्वस्विति ।

कुण्डिना लोहितायना गुग्गुलयोऽ[6]श्वत्था नैकर्णय औपवस्था आश्मरथा बाहवाः कौङ्कोल्याः साङ्गतिनः कापटवः [7]पैटका नवग्रामा हिरण्याक्षायणाः पैप्पलादयः सौगयोक्षिता माध्यंदिनाः सोमयक्षयः [8]सौस्थ्यो घृतयो [9]नैशृङ्गा लोभायना गोवना विधंकपयो मैत्रावरुणाः ।

इति कुण्डिनाः ।

तेषां त्रयः । वासिष्ठमैत्रावरुणकौण्डिन्येति ।

उपमन्यव औदलया माण्डलेखयः कापिञ्जला जालागतास्तपोलोकास्त्रै[10]वर्णाः पार्णागिरयः सादाक्षरा मौलालयो महाकण्वायना बालशिखा औद्वहनायना बलायना भागवित्तायनाः कुण्डोदरायणा लाक्ष्मणेया [11]बाह्यकेयो वार्कय आलवचाः कपिकेशाः [12]शौलालयः शाकधियो दाकायना वलेखला लम्बायना ब्रह्म[13]चर्याः शाकोहयाः सरावणाः कण्वायनाः कालाक्षा दशेरकाः कृष्णास्तरायणाः पालङ्कायना उद्वाहाः कौरव्याः [14]क्रौधिना मानेया ब्रह्मवलयो माशरावत्याः सांख्यायना गोरथाः सुहाकाः श्यामयो राथ्येया औपलेखयो गोपो[15]दनयः कौमाराः काण्डोदरयश्चक्रदर्भयः [16]कार[17]पूरयः कौल[18]मलयो व्याघ्रायणा रौक्षहेमयो [19]नौहुलयो बाहुलयः कालपायना भागुरायणाः शांकर्या [20]मुंचकायनाः पाथश्रवसो मारायणाः पादकायना[21]ः स्काम्भायना धातुहयो भागहयः कौरै[22]कशायनाः ।

इत्युपमन्यवः ।

---

१ ग. धोतवो । २ ग. याक्तिस° । ३ ख. आश्वाय° । ग. आश्वलाय° । ४ ङ. भ्रालिसया । ५ ग. °सिष्ठेन्द्र° । ६ ङ. °श्वत्थो नै° । ७ क. पेठका । ङ. पटको । ८ ग. सौरस्थो । ९ ङ. त्रैशृङ्गा । १० ग. °वर्ण्याः पा° । ११ ख. वाह्यकेयो । १२ ङ. शैलालयः । १३ ख. ङ. ब्रह्मचर्यः । १४ ङ. क्रोधिनो । १५ ङ. °दन्तयः । १६ ङ. कापुर° । १७ ग. °रपुर° । १८ ङ. °मयो । १९ ग. नाहल° । २० ङ. मुम्रका° । २१ ङ. °नाः स्कम्भा° । २२ ङ. °रद्दक° ।

तेषां त्रयः । वासिष्ठैन्द्रप्रमदाभरद्वसो[1], इति वस्विति वा । आभरद्वसव्येति क्वचित्पाठः । वासिष्ठाभरद्वस्वैन्द्रप्रमदेति[2] वा । आद्ययोर्व्यत्ययो वा ।

पराशराः काण्डूशया वाजयो वाजिमन्तयो भैमतायना गोवालयः प्रैगे[3]-हया वैकलयः प्लक्षयः कौकुचादयो हार्यश्वयः कैल्पाः[4] पनयो गोपयः* स्यातयो आरुणय आलुक्या वाजरयाः काच्छ्रायनाः कौमतयः कृष्णाजिनाः कापि-सुखाः स्वाप्यायनयः श्वेतपूपयः[5] पौष्करसादयो[6] गर्ग्यादयस्तार्णेयाः श्रौतुहयाः सहचोलयो जेनयाः पार्थेयाः कारुजायनाः कार्ष्णायनाः[7] शोकयो वार्ष्ण्यायनाः[8] कपिश्रोताः स्कम्भिन्या माण्डिकाः शानपातयाः पटिका वधिकास्तिलपूर्पयः[9] साल्वायनाः[10] क्षौमयो हर्यावयः शिवय इषीकहस्ताः ।

इति पराशराः ।

तेषां त्रयः । वासिष्ठशाक्त्यपाराशर्येति । एषां वसिष्ठानां परस्परमविवाहः, सगोत्रत्वात्सप्रवरत्वाच्च ।

इति वसिष्ठाः ।

## अथागस्त्याः( स्तयः ) । ( ८ )

त एकादश, अगस्तय[11] इध्मवाहाः साम्भवाहाः सोमवाहा यज्ञवाहा दर्भवाहाः सारवाहाः पूर्णमासाः पारणिनो हिमोदकाः पाणिकाश्च ।

अगस्तयः करम्भयः कौशल्याः सुमेधसो मयोभुवो गाधरायणाः फुलस्तयः पुलहाः ऋतवः कार्णाटा[12] महेन्द्राः[13] ।

इत्यगस्तयः ।

तेषामेकः[14] । आगस्त्येति । त्रयो वा[15] । आगस्त्यदार्ढच्युतैध्मवाहेति[16] । आग स्त्यमाहेन्द्रमायोभुवेति वा ।

इध्मवाहा विशालाद्याः स्फालायना[17] औपदहनयः कल्माषा दण्डयो लाव-

* एतदग्रे ख. पुस्तके कश्यपान्तर्गतनिध्रुवेषु धनुश्चिह्नान्तर्गतविद्यमानो ग्रन्थः पुनः प्रमादा-त्पतितोऽस्ति ।

१ ङ. °सिष्ठेन्द्र° । २ ङ. °द्वस्वि° । ३ ग. प्रोगेहया । ४ ग. कल्याः । ५ ङ. °पूरयः । ६ ग. पौष्णर° । ७ ङ. काष्ण्र्याय° । ८ क. वाष्ण्र्याय° । ङ. वाठ्याय° । ९ ङ. °काविलपूयय: । १० ङ. °यः शाल्वा° । ११ ग. अगस्त्ययः । १२ ग. रुर्णाटा । १३ ख. यहेद्राः । १४ ग. °कः । अग° १५ ग. ङ. वा । अग° । १६ ग. °ति । अग° । १७ ख. स्परालायना । ङ. स्पालायना ।

णयो लव्यारदण्डयो वैरणयो मुण्डोदरयः[1] सैवपथयः शालमातपा मौञ्जिलताः[2] पादोहता हारिग्रीवी रोहिष्या मौसलयः सैवगः साम्भरायणाः कैकर्णायना मार्गायणा[3] आचर्याः शालङ्कायनय उपकलमकायनयो वारिणयो यवात्यायनयः क्षौमिनयो लाशयः साकाक्षयस्तण्डयो लाज्यायनयो हृदोगयो[4] मादुराक्षयः पण्डोद्धनाः कुण्ड्याक्षय उपकूला[5] अर्बुदाः[6] शैवायुधाः परहता वैत्योरन्दय औकुला वैरण्डयो गोव्यादयो दामाः सौम्यानया[7] ब्राह्मण्याः पुत्रयो वासिषार्यणाः शारगरः[8] स्फोण्टावचनाः[9]।

इतीध्मवाहाः।

तेषां त्र्यः[10]। आगस्त्यदार्ढच्युतैध्मवाहेति दार्ढ्यैति[11] वा पाठः। एको वाऽऽ[12]गस्त्येति।

साम्भवाहानां साम्भवाहान्त्यौ पूर्वावेव। आगस्त्यदार्ढच्युतसाम्भवाहेति।

एवं सोमवाहादीनां चतुर्णां तत्तन्नामान्त्यौ पूर्वावेव।

पूर्णमासानां पारणिनां च त्रयः। आगस्त्यपौर्णिमासपारणेति।

हिमोदकाः। अक्राः शक्ताः शुक्ता हंसाः श्वासा हेमचर्चयः।

इति हिमोदकाः।

तेषां त्रयः। आगस्त्यहैमचर्चिहैमोदकेति।

पाणिका विमितेलयः[13]। मामितेकलयः। पिनामकाः[14]। नन्दयोनियः[15]। विलयः।

इति पाणिकाः।

तेषां त्रयः। आगस्त्यपैनामकपाणिकेति।

अगस्तीनां सर्वेषां परस्परमविवाहः, सगोत्रत्वात्सप्रवरत्वाच्च।

इत्यगस्तयः।

## अथ द्विगोत्राः।

### शौङ्गशैशिरयः संकृतयो लौगाक्षयश्च।

तत्र भरद्वाजाच्छुङ्गाद्वैश्वामित्रस्य शैशिरेः क्षेत्रे जातः शौङ्गशैशिरिनामा

१ ग. मुडोद°। ङ. मुदोद°। २ ग. मौजिल°। ३ क. ख मार्गीय°। ४ ङ. हृद्रोग°। ५ ङ. अपकूला। ६ ग. अम्बुदाः। ७ ग. सौम्यानयो। ८ ग. °यथाः शा°। ९ क. ख. स्फाण्ठायनाः। १० क: °यः। अग°। ११ ग. दार्ज्यैति। १२ ग. °वाऽग°। १३ ङ. विमलयः। १४ ङ. °नानकाः। १५ ङ. °विलयः।

तद्गोत्राणां पञ्च । आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति । आङ्गिरसबार्हस्पत्यभारद्वाजशौङ्गशैशिरेति वा । त्रयो वा, आङ्गिरसकात्यात्कीलेति । आद्यो भरद्वाजो वा । भारद्वाजकात्यात्कीलेति । कात्याक्षिलेति वा पाठः । एषां विश्वामित्रभरद्वाजाभ्यां नान्वयः ।

संकृतयः पूतिमाषास्तण्डयः[1] शम्बवो भैमगवाः सैपवना[2] जानकयः सैराधा रतव्या ऋषनयो वारायणयः सहयो गाङ्गयो लौक्षयस्ताला नागहया भिल्लातयो[3] विभीतकास्त्रैलयः परिभवा वैयाघ्रपद्याः श्रौतायनाश्चान्द्रायणा मल्लकाः शालायना आर्षण्या हारिनियाः पौला आग्रयः ।

इति संकृतयः ।

तेषां त्रयः[4] । शाक्त्यसांकृत्यगौरिवीतेति । अन्त्ययोर्व्यत्ययो वा[5] । शाक्त्यगौरिवीतसांकृत्येति । आङ्गिरसगौरिवीतसांकृत्येति वा । एषां संकृतीनां वसिष्ठत्वमस्ति, सत्याषाढापस्तम्बादिभिर्वसिष्ठगणमध्ये पाठात्[6] । वासिष्ठशक्तेः पाक्षिकवरणाच्च । तेनैषां सर्वैर्वासिष्ठैरहर्वासिष्ठैर्लोगाक्षिभिश्च सहाविवाहः, सगोत्रत्वात्किंचित्प्रवरसाम्याच्च । केवलाङ्गिरोभि[7]रप्यविवाहः । बौधायनेन केवलाङ्गिरोभिर्विश्वामित्रैर्वसिष्ठैश्च सह संकृतिभिरविवाह इत्युक्तम् । केचित्तु केवलाङ्गिरोगणैर्विवाह एव सगोत्रत्वाभावाद्वित्रि(त्र)प्रवरसाम्याभावाच्चेति वदन्ति । प्रयोगपारिजाते तु काश्यपैरप्येषामविवाह इत्युक्तं, तत्र हेतुश्चिन्त्य इति नव्याः ।

लौगाक्षयो दार्भायणा मैत्रवादयो द्रेहकालेयाः कापुटयः कैलयाः कंसपात्राश्चालकायनयो नित्यराः, तादय औदकयः कौनामयः सौतयः सैतिकयः छैभरा निशयः छैषिकयः सौसुखिकयः[11] सैरन्ध्रयो वोपणयः कालकयः सौरन्ध्रयो राजबाहवोऽनश्वयो मिगुरयो राजवन्नयः सैरयः स्विरोदवाहयो राजसवकयः सौरङ्ग्रयः[12] पिङ्गाक्षयः काकुलयः शाकुलयो रावफालयः सैकयः सौसुधयः[13] शैरद्वन्ता[14] औपपत्यकयः सौतपाः ।

इति लौगाक्षयः ।

तेषां त्रयः । काश्यपावत्सारवासिष्ठेति । काश्यपावत्सारासितेति वा ।

१ ङ. °माषस्त° । २ ङ. सैपवना । ३ क °यो विभी° । ४ ङ. °यः, शक्त्य° । ५ ङ. वा । शक्त्य° । ६ ङ. °त् । आङ्गिरसप्रवराच्च । ७ ङ. °रोगणैरवि° । ८ ङ. °वाश्च । प्र° । ९ ख. करुयाः । १० ग. °कयाः सौ° । ११ ङ. °खियः । १२ ख. ग. सौरन्ध्रयः । १३ ख. सासुत्र° । १४ ङ. शद्व° ।

वासिष्ठावत्सारकाश्यपेति वा। एतेऽहर्वसिष्ठाः। नक्तं कश्यपाः। एषां वसिष्ठकश्यपाभ्यां संकृतिभिश्चाविवाहः सगोत्रत्वात्कैश्चित्समप्रवरत्वादपि।

पारिजातधृतसंग्रहस्मृत्यर्थसारयोस्त्वन्ये षडुक्ताः। देवरातानां त्रयः। वैश्वामित्रदैवरातौदलेति। एषां जमदग्निविश्वामित्राभ्यामविवाहः।

" जमदग्निगणस्यापि विश्वामित्रगणस्य च।
न देवरातगोत्रेण विवाहः स्यात्परस्परम् " इति संग्रहोक्तेः॥

बौधायनादिभिर्जामदग्न्येषु देवरातस्यापठितत्वाज्जामदग्न्यत्वं चिन्त्यमिति केचित्।

अन्ये तु—" और्वस्यैवमृचीकस्य सत्यवत्यां महायशाः।
जमदग्निस्तपोवीर्यो जज्ञे ब्रह्मविदां वरः॥
मध्यमश्च शुनःशेपः शुनःपुच्छः कनिष्ठकः "।

इत्युक्त्वा—" देवैर्दत्तः शुनःशेपो विश्वामित्राय भार्गवः।
देवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभवत् "॥

इति हरिवंशे देवरातस्य जमदग्निसंबन्धकथनाज्जामदग्न्यत्वमुपपन्नमित्याहुः। धर्मप्रदीपे तु—" मातामहैः शुद्धजामदग्न्यैर्देवरातानां न विवाहः " इत्युक्तम्।

धनंजयानां वैश्वामित्रमाधुच्छन्दसधानंजयेति। एषामत्रिविश्वामित्राभ्यामविवाहः।

जातूकर्ण्यानां वासिष्ठात्रेयजातूकर्ण्येति। एषामत्रिवसिष्ठाभ्यामविवाहः।

वामरथ्यादीनां पूर्वोक्तानामत्रिपुत्रिकापुत्राणामत्रिवसिष्ठाभ्यामविवाहः। अत्रिविश्वामित्राभ्यामिति केचित्।

कपिलानां पञ्च। आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति। एषां विश्वामित्रैर्भारद्वाजाभ्यामविवाहः। न च कपिलस्य विश्वामित्रसंबन्धे मानाभावः। वैश्वामित्रं देवरातं प्रकृत्य तस्यैते कापिलेयबाभ्रवा इत्यैतरेयि(य)ब्राह्मणगतकापिलोक्तेर्लिङ्गविधया मानत्वात्। कपिलानां विश्वामित्रत्वाभावे कापिलानां वैश्वामित्रत्वानुपपत्तेः।

कतानां त्रयः। वैश्वामित्रकात्यात्कीलेति। एषां विश्वामित्रभारद्वाजाभ्यामविवाहः।

एवमिदानींतनानामपि दत्तकादीनामुत्पादकपालकयोः पित्रोर्गोत्रप्रवरा वर्ज्या इति प्रवरमञ्जर्यादयः।

---

१ ग. °त्रदेव°। २ ड. °तादीनां। ३ ग °त्रभर°। ४ ड. °विधाया।

**मण्डनः**—" आविश्वामित्रमात्रेया नोद्वहन्ति च ते मिथः ।
द्विगोत्रा वामरथ्याद्या अत्रेस्ते पुत्रिकासुताः ॥
विश्वामित्रैरत्रिभिश्च न विवाह्यो धनंजयः ।
यद्वा धनंजयौ भिन्नौ शब्दमात्रं न भिद्यते ॥
विश्वामित्राः कश्यपान्तास्तेषां नान्यसमन्वयः ।
कश्यपाः स्युर्वसिष्ठान्तास्तेऽन्योन्यमविवाहिनः ॥
वसिष्ठैः कश्यपैर्नास्ति लौगाक्षीणां विवाहिता ।
वसिष्ठाः स्युरगस्त्यान्ता नोपयच्छन्ति ते मिथः ॥
विश्वाद्यैराङ्गिरोभिश्च वसिष्ठैरप्यशेषतः ।
संकृतीनां द्विवंशत्वान्नास्ति वैवाहिकी क्रिया ॥
तथैव जातूकर्ण्यानां वसिष्ठैरत्रिभिः सह ।
तण्ड्यादिवर्जं सर्वैर्वा संकृतीनां विवाहिता ॥
नान्योन्यमप्यगस्तीनां राजादि[1] गुरुगोत्रतः ।
स्वगोत्राद्यनभिज्ञानां विप्राणामियमेव दिक् ॥
गुरुवंशा[2]विदन्यस्मै स्वं दत्त्वा तत्कुलो भवेत् ।
यद्वा स्वप्रवराज्ञाने जमदग्नीनुपाश्रयेत् ॥
गोत्रकार्येषु सर्वेषु किंतु नैवोद्वहेत्क्वचित् ।
मानवेति तु सर्वेषां यद्यपि प्रवरः समः ॥
तथाऽपि तेन साम्येन न विवाहो निषिध्यते ।
प्रवरे ये विकल्पाश्च ते चोद्वाह्या व्यवस्थिताः ॥
तया[3] व्यवस्थया चिन्त्यौ समानप्रवरेतरौ ।
ये स्वयं कल्पितं यक्षं कुमारा न स्मरन्ति हि ॥
तेषां तदनुसारेण सगोत्रत्वादिचिन्तनम् ।
सत्याषाढो वदत्येतदन्ये तुल्यविकल्पनम् ॥
आचार्यान्तरपाठानामीषद्भेदेऽप्यभिन्नता " इति ॥

इयं व्यवस्था क्षत्रियविषयिण्येव पूर्वत्र तस्यैवोपक्रमात् । अयमेव न्यायो वैश्यानामपि । गणसंदेहे त्वविवाह एव ।

इति प्रवरनिर्णयः ।

१ ङ. 'जादिगु' । २ ङ. 'वंशावि' । ३ ङ. तथा ।

## अथ मातृगोत्रनिर्णयः ।

तत्र स्मृतिवचनम्—

" मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् " इति ॥

अयं च मातृगोत्राविवाहनिषेधो गान्धर्वादिविवाहोढासुतानां सर्वेषामेव । ब्राह्मादिविवाहोढासुतानां सर्वेषां न, किंतु माध्यंदिनीयानामेव 'मातृगोत्रं माध्यंदिनीयानाम्' इति वचनात् । शिष्टाचारोऽप्येवमेव ।

केचित्त्वेतस्य वचनस्य निर्मूलत्वात्सर्वेषां मातृगोत्रवर्जनमित्याहुः । युक्तं तु शिष्टाचारसहकृतवचनान्माध्यंदिनीयानामेव तद्वर्जनम् ।

इति मातृगोत्रनिर्णयः ।

---

## अथ दत्तकस्य विवाहाद्युपयोगिगोत्रादिनिर्णयः ।

तत्र यद्यपि यश्च प्रतिग्रहीत्रा जातकर्मादिभिश्चूडादिभिर्वा संस्कृतः स एकगोत्रः ।

एतदभिप्रेत्यैव—" गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः " ।

इति शास्त्रमपि प्रवृत्तम् । एतदन्यस्तु प्रतिग्रहीत्रोपनयनमात्रसंस्कृतस्तदुत्तरं प्रतिगृहीतो वा देवरातवद्द्विगोत्र एवेति व्यवस्था निबन्धकारैरुक्ता, तथाऽप्येषा व्यवस्थाऽभिवादनश्राद्धादिगतगोत्रनिर्देशार्था । विवाहे तु दत्तकमात्रेण बीजिप्रतिग्रहीत्रोः पित्रोर्गोत्रप्रवरवर्जनं कार्यम् । प्रवरमञ्जर्यादिनिबन्धेषु तन्निषेधोक्तेरिति कौस्तुभे ।

दत्तकमीमांसाकारस्तु दत्तकमात्रे गोत्रद्वयवर्जनं न, किंतु द्व्यामुष्यायणे दत्तकविशेषे[1] [इत्याह] । तथाहि । द्विविधा दत्तकादयः । नित्यद्व्यामुष्याणा अनित्यद्व्यामुष्यायणाश्च । तत्र नित्यद्व्यामुष्यायणा नाम ये जनकप्रतिग्रहीतृभ्यामावयोरयं पुत्र इति संप्रतिपन्नाः । अनित्यद्व्यामुष्यायणास्तु ये चूडान्तैः संस्कारैर्जनकेन संस्कृता उपनयनादिभिश्च प्रतिग्रहीत्रा, तेषां गोत्रद्वयेनापि संस्कृतत्वाद्द्व्यामुष्यायणत्वं परं त्वनित्यम् । जातमात्रस्यैव परिग्रहे गोत्रद्वयेन संस्का+राभावात्तस्य परिग्रहीतृगोत्रमेव । तदिदं सर्वमभिप्रेत्याऽऽह सत्याषाढः—

---

* मातृगोत्राया विवाह इति विग्रहः । + आहेत्यधिकम् । अतिदिशतीत्यत्रातिदिशन्निति वा पाठ्यम् ।

---

१ क. °विषये । त° ।

" नित्यानां द्व्यामुष्यायणानां द्वयोः " इति सूत्रेण नित्यद्व्यामुष्यायणानां गोत्रद्वये प्रवरसंबन्धमुक्त्वा तमेवानित्येष्वतिदिशति, "दत्तकादीनां तद्द्व्यामुष्यायणवत् " इति सूत्रेण ।

व्याख्यातं चैतच्छबरस्वामिभिः—

" द्व्यामुष्यायणप्रसङ्गेनानित्यानाह दत्तकेति । तावदेव नोत्तरसंततौ । प्रथमेनैव संस्काराः परिग्रहीत्रा चेत्तदोत्तरस्य पूर्वत्वात्तेनैवोत्तरत्र, तथा पितृव्येण चैकार्षेयेण ये जातास्ते परिग्रहीतुरेव " इति ।

अस्य भाष्यस्यायमर्थः । यो गोत्रद्वयेन संस्कृतस्तस्यैव गोत्रद्वयसंबन्धो नोत्तरसंततेः । जनकगोत्रसंबन्धे किं कारणमित्याह—प्रथमेनेति । प्रथमो जनकस्तेनैव संस्कृतत्वात् । संस्काराश्च चौलान्ताः ।

" पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः " ॥

इति कालिकापुराणात् । व्याख्यातं चैतत्प्रागेव । अन्यस्यासाधारणीं पुत्रतां न याति किंतु द्व्यामुष्यायणो भवतीति । प्रथमेनासंस्कारे कथमित्यत आह । परिग्रहीत्रा चेदिति । परिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणे चौलादिसंस्कारकरणेऽपि वोत्तरस्य परिग्रहीतुरेव गोत्रम् । तत्र हेतुः पूर्वत्वात्संस्कारकरणे प्रथमत्वात् । द्व्यामुष्यायणसंततौ चापेक्षितगोत्रमाह—तेनैवेति । परिग्रहीतृगोत्रेणैवोत्तरसंततेर्गोत्रमुभयत्रापि । सगोत्रपरिग्रहमाह—तथेति । जनकपरिग्रहीत्रोरेकगोत्रत्वेऽपि परिग्रहीत्रैव व्यपदेशः परिग्रहसंस्कारकरणादिति ।

यत्तु—" गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः " इति,

तत्परिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणपक्षे वेदितव्यम् । ये त्वनित्यद्व्यामुष्यायणा दत्तकादयस्तेषां गोत्रद्वयम्,

" द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथा "

इति पारिजातस्मरणात् । गोत्रद्वये जनकगोत्रे परिग्रहीतृगोत्रे च ।

दत्तकादीनां च द्व्यामुष्यायणत्वे

" इदं नित्यानां द्व्यामुष्यायणानां दत्तकादीनां[3] द्व्यामुष्यायणवत् "

इति सत्याषाढवचनं प्रमाणम् । प्रवरमञ्जर्यामप्यनेनैवाभिप्रायेणोक्तम् । दत्तक्रीतकृत्रिमपुत्रिकापुत्रादीनां यथासंभवं गोत्रद्वयं समप्रवरमस्त्येवेति । एतावता

१ ग. ङ. 'सहेऽनि' । २ ग. ङ. भवेद्द' । ३ ख. 'दीनामनित्यानां दत्तकादीनां । ४ ग. 'य प्र' ।

द्विगोत्राणां गोत्रद्वयं सप्रवरं विवाहे वर्ज्यमित्याह। तत्र युक्तं ग्राह्यम्। न चेदानींतनसूत्रपुस्तक एतत्सूत्रस्यैवादर्शनात्कथमेतस्य सत्याषाढीयत्वमिति वाच्यम्। अतिप्रामाणिकेन मीमांसाभाष्यकृता शबरस्वामिना सत्याषाढयत्वेन धृत्वैव व्याख्यातत्वेनैतदनुरोधेनेदानींतनसूत्रपुस्तक एतत्सूत्रस्योच्छिन्नताया एव कल्पनात्। संकर्षकाण्डमुच्छिन्नमित्यभियुक्तप्रवादोऽप्यस्ति। द्विगोत्रस्य जनकपितृगोत्रवर्जनाविधेः क्वचिदपीदानीमनुपलम्भाद्यावद्विज्ञानं वर्जनम्।

इति दत्तकगोत्रनिर्णयः।

## अथ दत्तकसापिण्ड्यनिर्णयः।

गौतमः—"ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चम्याः" इति।

उक्तं च—"वसुदेवाङ्गजाता च कौन्तेयस्य विरुध्यते"।

इतिवार्तिकव्याख्यानावसरे न्यायसुधाकृता दत्तकविषयमेतदित्यङ्गीकृत्य कुन्त्या जनककुले साप्तपुरुषं सापिण्ड्यमिति। व्याख्यातं तद्विषयत्वेनैव सापिण्ड्यमीमांसायाम्। अतः कुलद्वयेऽपि साप्तपुरुषसापिण्ड्यं प्रतीयते। पैठीनसिस्तु—"त्रीन्मातृतः पञ्च पितृतः पुरुषानतीत्योद्वहेत्" इत्याह। व्याख्यातमेतदपरार्के– दत्तकादिपुत्राणां पितृपक्षतो निवृत्तपिण्डगोत्रार्षेयाणां प्रत्येतदुच्यते पञ्च पितृत इतीति। अतश्च प्रतिग्रहीतृपितृकुले साप्तपुरुषं सापिण्ड्यं प्रतीयते। प्रतिग्रहीतृमातापितृकुलयोस्त्रिपुरुषं सापिण्ड्यमिति प्राञ्चः।

अत्र व्यवस्थोक्ता सापिण्ड्यदीपिकायाम्— दत्तक्रीतादीनां जनकगोत्रेणोपनयने कृते जनककुले साप्तपुरुषं सापिण्ड्यम्। प्रतिग्रहीतृमातापितृकुले निर्वाप्यपिण्डलक्षणं त्रिपुरुषं सापिण्ड्यम्। प्रतिग्रहीतृगोत्रेणोपनयने तत्कुले साप्तपुरुषमिति।

उपनयनमात्रे कृते पाञ्चपुरुषम्। जातकर्माद्युपनयनान्ते कृते साप्तपुरुषमिति पैठीनसिवचःसाफल्याय व्याख्येयम्।

न केवलं दत्तकस्य परिणयनार्थमेवायं सापिण्ड्योपन्यासः, किंतु तत्संततेस्तत्पित्रादिकुलोत्पन्नैः सह संबन्धसंभवनिर्णयार्थमपि। अन्यथा पार्थसुभद्रयोरदत्तयोः संबन्धासंभवशङ्काया आचार्यकर्तृकोपन्यासस्य तदुपपत्त्यर्थं सुधाया गौतमीयोपन्यासस्यालग्नकतापत्तेः।

१ ग. °र्षणका°। २ ख. ग. °विधे क। ३ ग. °गुदेवा°।

यादृशस्य दत्तकस्य यथा सापिण्ड्यमुक्तं तत्संततेरपि तथैव तद्बोध्यम्। अत एव यन्मदनपारिजातेऽप्युक्तं दत्तपुत्र्याः सुतस्य मातुः प्रतिग्रहीतृपितृमातृकुले त्रिपुरुषं सापिण्ड्यम्। दत्तपुत्रसुतस्य स्वजनककुले पञ्चपुरुषमिति, तदपि पूर्वोक्तरीत्या दत्तकविशेषसंततिविषयत्वेन व्याख्येयम्।

इति कौस्तुभोक्तदत्तकसापिण्ड्यनिर्णयः।

---

## अथ प्रसङ्गाद्दत्तकस्याऽऽशौचनिर्णयः।

दत्तकपुत्रस्य जन्ममरणयोः पूर्वापरपित्रोस्त्रिरात्रं सपिण्डानामेकाहम् [आशौचम्]। यद्यसपिण्डः पुत्रीकृतः—

" बैजिकादभिसंबन्धादनुरुन्ध्यादघं त्र्यहम् " इति वचनात्,

" परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च।
भर्तृगात्रो त्रिरात्रं स्यादेकाहस्तु सपिण्डगः " ॥

इति माधवीये हारीतवचनाच्च। तादृशेन दत्तकेन पित्रादिमरणे त्रिरात्रं कार्यम्—

" दत्तकश्च स्वयं दत्तः कृत्रिमः क्रीत एव च।
सूतके मृतके चैव त्र्यहाशौचस्य भागिनः " ॥

इति शुद्धितत्त्वे ब्राह्मवचनात्।

सपिण्डस्य पुत्रीकरणे तु सपिण्डमरणादिनिमित्तं दत्तकस्य तन्मरणादिनिमित्तं सपिण्डानां दशरात्रमेव निर्विवादम्। सापिण्ड्यं च पूर्वोक्तरीत्या व्यवस्थितमाशौचहेतुः।

दत्तकपुत्रस्य जननमरणयोः पूर्वापरपित्रोस्त्रिरात्रं सपिण्डानामेकाहमिति कौस्तुभीयवाक्यस्यायमर्थः। दत्तकपुत्रस्येत्यत्र संस्कारानन्तरं गृहीतस्य दत्तकस्य पुत्रो दत्तकपुत्र इति तत्पुरुषेण पूर्वापरपित्रोर्जननाशौचस्य संशयनिवृत्तिर्भवतीत्यर्थः।

तथाऽऽह मरीचिः—

" सूतके मृतके चैव त्रिरात्रं परपूर्वयोः।
एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः " इति ॥

यदा तु पितुस्त्रिरात्रं तदा सपिण्डानामेकाहं इत्यर्थः।

---

१ ङ. 'स्य ज'। २ ङ. हारित'। ३ ङ. 'हमिल'।

" अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥
त्रिरात्रादिष्यते शुद्धिः " ।

इत्यस्यायमर्थः—अनौरसेष्वितीयमधिकरणसप्तमी । अनौरसेषु दत्तकादिषु सत्र जातेषूत्पन्नेषु पुत्रेषूत्पन्नबालकेषु सत्सु मृतेषु सत्सु च परः पूर्वः पतिर्यासां ताः परपूर्वास्तासु जारासक्तास्विति यावत् ।

तथा च प्रजापतिः—

" अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता " इति ॥

इत्याशौचनिर्णयः ।

## अथ जनकप्रतिग्रहीत्रुद्देश्यकदत्तककर्तृकपिण्डदाननिर्णयः ।

मनुः—" गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधाम् " इति ॥

एतच्च जनकस्य पुत्रसत्त्वे ।

प्रवरमञ्जर्यां कात्यायनलौगाक्षिभ्यां स्पष्टं चैतदुक्तम्—

" अथ ये दत्तकक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणाऽऽर्षेया जातास्ते द्व्यामुष्यायणा भवन्ति यथा शौङ्गशैशिरीणां यानि चान्यानि समुत्पन्नानि कुलानि भवन्ति " ।

इत्यादिना द्वयोः पित्रोः प्रवरानुक्त्वोक्तम्*—

" अथ यद्येषां स्वासु भार्यास्वपत्यं न स्याद्रिक्थं हरेयुः पिण्डं चैभ्यस्त्रिपुरुषं दद्युर्यद्युभयोर्न स्यादुभाभ्यामेव दद्युरेकस्मिञ्श्राद्धे पृथगुद्दिश्यैकपिण्डे द्वावनुकीर्तयेत्प्रतिग्रहीतारं चोत्पादयितारं चाऽऽतृतीयात्पुरुषात् " इति ।

हेमाद्रौ कार्ष्णाजिनिः—

" यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः ।
प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह ॥
द्वाभ्यां सह पितुः पुत्राः पौत्रास्त्वेकेन तत्समम् ।

---

* उक्तमित्यन्वयिकम् ।

१ क. ख. ग. पुत्रास ।

चतुर्थपूरुषे छन्दस्तस्मादेषा त्रिपूरुषा ॥
साधारणेषु कालेषु विशेषो नास्ति वर्गिणः " इति ।

अस्यार्थमाह हेमाद्रिः—दत्तकादयो जनकपालकयोः कुलप्रेतानां स्ववर्गीयैः सपिण्डनं कुर्युः । दत्तकानां पुत्र(त्रा)स्तु पितुर्दत्तकस्य पितृभ्यां जनकपालकाभ्यां स्वपितामहाभ्यां सपिण्डनं कुर्युः । तेषां पौत्राः स्वपितरं दत्तकेन पितामहेन तज्जनकेन च सपिण्डयेयुः । चतुर्थोऽपि तत्कुलस्थ एव, तेषां प्रपौत्रस्तु दत्तकस्य प्रपितामहस्य पालककुलस्थं चतुर्थं योजयेन्न वा । छन्द इच्छा । दर्शमहालयादौ तु द्वयोः पित्रोः पितामहयोः प्रपितामहयोर्वा श्राद्धं देयम् । तत्र द्वयोः पित्राद्योः पृथक्पिण्डदानं, द्वयोर्देशेनैको वेति । श्राद्धे गोत्रं तु पालकस्य, विवाहादौ तूभयोरित्यादि प्रवरदर्पणादिषु ज्ञेयम् ।

## अथ विवाहकालः ।

तत्र मदनरत्ने नारदः—

" युग्मेऽब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीडनम् ।
एतत्पुंसामयुग्मेऽब्दे व्यत्यये नाशकृत्तयोः " इति ।

पुंसां युग्मेऽब्दे स्त्रीणामयुग्मेऽब्द इत्येवंरूपे व्यत्यये । तयोर्वधूवरयोः पाणिपीडनं नाशकृद्भवतीत्यर्थः ।

पराशरमाधवीये स्मृत्यन्तरे तु—

" गर्भाधानाज्जन्मतो वा पञ्चमाब्दात्परं शुभम् ।
कुमारीवरणं दानं मेखलाबन्धनं तथा " इत्युक्तम् ।

पञ्चमाब्दात्परमिति । पञ्चमाब्दात्परं यदयु(यु)ग्मं वर्षं तत्र कुमारीवरणादि शुभं भवतीत्यर्थः । तेन युग्मेऽब्दे जन्मत इत्यनेन न विरोधः ।

बौधायनः—" दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् " इति ।

यत्तु मनुनोक्तम्—

" काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ।
न चैवैनां प्रयच्छेत गुणहीनाय कर्हिचित् " ।

इति तद्गुणवति संभवति गुणहीनाय न दद्यादित्येवंपरं न तु सर्वथा गुणहीननिषेधपरम् । नो चेदपि वा गुणहीनायेति बौधायनोक्तः कल्पो निर्विषयः

१ ग. कुले प्रे° । २ ङ. तत्रापि क° ।

स्यात्। ऋतुमत्यपि तिष्ठेदितिवचनमुक्तरीत्या न स्वार्थे तात्पर्यवत्। अतो नोपरुन्ध्याद्रजस्वलामित्यनेन न विरोधः।

अत एव वसिष्ठोऽपि—

"प्रयच्छेन्नग्निकां कन्यामृतुकालभयात्पिता।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति" इति।

कन्याशब्देन लज्जाद्यभिमानरहितवयोयुक्ता विवक्षिता।

तथा च माधवीये पुराणम्—

"यावन्न गूहतेऽङ्गानि कन्या पुरुषसंनिधौ।
योन्यादीन्नावगूहेत तावद्भवति कन्यका" इति।

अमरस्तु नग्निकाऽनागतार्तवेत्याह।

स्मृत्यन्तरे—"षडब्दमध्ये नोद्वाह्या कन्यका वत्सरद्वयम्।
सोमो भुङ्क्ते यतस्तद्वद्गन्धर्वश्च तथाऽनलः" इति।

एतन्मूलभूता श्रुतिरपि—

"सोमः प्रथमो विविदे" इत्यारभ्य "तृतीयोऽग्निष्टे पतिः" इत्यन्ता।

नन्वस्य विरोधो ब्रह्मपुराणे गौतमीमाहात्म्ये भानुतीर्थवर्णने विष्टिभानुसंवादे दृश्यते—

"चतुर्थाद्वत्सरादूर्ध्वं यावन्न दशमात्ययः।
तावद्विवाहः कन्यायाः पित्रा कार्यः प्रयत्नतः" इति।

सत्यम्। एतत्पुराणवाक्यं शूद्राविषयं न ब्राह्मण्यादिविषयमित्यविरोधः। सप्तमवर्षं विषमत्वान्नारदादिभिः स्त्रीविवाहे नाङ्गीकृतं तस्मात्सर्ववर्णानामविरुद्धमष्टमनवमदशमवर्षेषु ह्युद्वहनम्।

ननु नवमवर्षस्य ग्रहणं विरुद्धं युग्मेऽब्दे जन्मतः स्त्रीणामितिनारदवचनविरोधादिति चेत्सत्यम्। "नववर्षा तु रोहिणी" इति नववर्षाया रोहिण्याः "वैकुण्ठो रोहिणीं ददन्" इति वक्ष्यमाणमरीचिवचने *रोहिणीप्रदाने फलविशेषोक्त्या नवमवर्षस्यापि विवाहकालत्वेनोक्तत्वात्।

वयोविशेषेण दातुः फलविशेषमाह मरीचिः—

"गौरीं ददन्नाकपृष्ठे वैकुण्ठे रोहिणीं ददन्।
कन्यां ददन्ब्रह्मलोके रौरवे तु रजस्वलाम्" इति।

वसतीति शेषः।

* रोहिणीशब्दोऽधिकः।

**गौर्यादिशब्दार्थो यमेन दर्शितः—**

" अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला " इति ।

**संवर्तोऽपि—**" अष्टमे तु भवेद्गौरी नवमे नग्निका भवेत् ।
दशमे कन्यका प्रोक्ताऽत ऊर्ध्वं स्याद्रजस्वला " इति ॥

**देवलः—**" कुलशीलवयोवृत्तरूपाढ्यां नग्निकां शुभाम् ।
विधिना तु वरः कन्यामुद्वहेदात्मनः समाम् ॥
सप्ताब्दात्कन्यकानाम्नी शैशवी स्याच्छुभान्विता ।
तामष्टादशवर्षीयो विवहेद्विधिवत्पुमान् ॥
याऽष्टवर्षा भवेद्गौरी पुत्रपौत्रप्रवर्धिनी ।
पञ्चविंशतिवर्षीयस्तां कन्यामुद्वहेद्द्विजः ॥
रोहिणी नववर्षा स्याद्धनधान्यविवर्धिनी ।
तामुद्वहेत मतिमान्सर्वकामार्थसिद्धये ॥
ऊर्ध्वं दशाब्दाद्या कन्या प्राग्रजोदर्शनात्तु सा ।
गांधारी स्यात्समुद्वाह्या चिरं जीवितुमिच्छता " इति ॥

इति विवाहकालः ।

## अथ विवाहे मासादिनिर्णयः ।

**तत्र मासा उक्ता वात्स्येन—**

" माघमासे भवेद्व्यूढा कन्या सौभाग्यसंयुता ।
फाल्गुनोढा भवेत्साध्वी वैशाखे पुत्रिणी भवेत् ॥
धर्मयुक्ता भवेज्ज्येष्ठे धनिनी कार्तिके भवेत् ।
देवपूजारता नित्यं मासे स्यात्सोमदेवते " इति ॥

**धनिनी स्वातन्त्र्येण धनसंग्रहवती । नित्यमित्यनेन भर्त्रादिशुश्रूषाव्यावृत्तिः सूच्यते । सोमदेवतो मार्गशीर्षः ।**

**मदनरत्ने नारदः—**

" माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः ।
कार्तिको मार्गशीर्षश्च मध्यमावितरेऽधमाः ॥
न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् ।
विवाहदेवतानां च प्रतिष्ठां चोपनायनम् " इति ॥

अत्र यद्यपि शेषा निन्दितास्तथाऽपि भानोरार्द्राप्रवेशनादिति पुनःश्रुत्याऽऽपाढोऽभ्यनुज्ञात इति नवीनाः । अत्र च विधिनिषेधाः सौरमासाभिप्रायेण ।

यथोक्तं गर्गेण—

" सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः " इति ।

कश्यपेन चान्द्रमानमप्युक्तम्—

" उपवासव्रतोद्वाहयात्राक्षौरोपनायनम् ।
तिथिवर्षादिलिखितं चान्द्रमानेन गृह्यते " इति ॥

इतरे चैत्रापाढश्रावणभाद्रपदाश्विनपौषाः ।

ज्योतिष्प्रकाशे व्यासः—

" माघफाल्गुनवैशाखे येऽयूढा मार्गशीर्षके ।
ज्येष्ठे चाऽऽपाढमासे च सुभगा वित्तसंयुता ॥
श्रावणे वाऽपि पौषे वा कन्या भाद्रपदे तथा ।
चैत्राश्वयुक्कार्तिकेषु याति *वैधव्यतां ध्रुवम् " इति ॥

पृथ्वीचन्द्रोदये भरद्वाजः—

" माघफाल्गुनवैशाखज्येष्ठापाढमृगाभिधाः ।
पडेते पूजिता मासाश्चातुर्वर्ण्यस्य नित्यशः " इति ॥

अत्र विहितप्रतिषिद्धानामापाढादीनां व्यवस्थामाह मदनरत्ने वसिष्ठः—

" पौषेऽपि कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेपगतो यदा स्यात् ।
प्रशस्तमापाढकृतं विवाहं वदन्ति गर्गा मिथुनस्थितेऽर्के " इति ॥

देशाचाराद्व्यवस्था ।

आपस्तम्बः—" सर्वे ऋतवो विवाहस्य शैशिरौ मासौ
परिहाप्योत्तमं च नैदाघम् " इति ।

शैशिरौ मासौ माघफाल्गुनौ । नैदाघ उत्तमो मास आपाढः । एतद्वर्जं नव मासा मुख्यः काल इति सुदर्शनभाष्येऽर्डावल्लायां ब्रह्मविद्यातीर्थश्चोक्तम् ।

बौधायनसूत्रेऽपि—

" सर्वे मासा विवाहस्य शुचितपस्तपस्यवर्जमित्येके " इति ।

शुचिरापाढः । तपा माघः । तपस्यः फाल्गुनः । अत्र स्मृत्युक्तानां

---

* स्वार्थष्यन्तात्तल् ।

---

१ ख यदृच्यदा ।

मासानां सूत्रोक्तानां मासानां च परस्परविरोधाद्देशाचाराद्व्यवस्था । सूत्रे विहितानां श्रावणादीनां त्वासुरादिविषयत्वं द्रष्टव्यम् । देशाचाराद्व्यवस्था ।

चण्डेश्वरः—" मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयो व्रतम् ।
ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ॥
कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठपुत्रस्य कारयेत् " इति ।

" ज्येष्ठमास्याद्यपुत्रस्य शुभं वर्ज्यं स्त्रिया अपि " ।

इतिनिषेधो वधूवरयोरन्यतरज्येष्ठत्वे न प्रवर्तते ।

" ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते ।
तयोरन्यतरे ज्येष्ठे ज्येष्ठमासः प्रशस्यते ॥
द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकज्येष्ठं सुखावहम् ।
ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसंमतम् " इति मिहिरोक्तेः ॥

ज्येष्ठा कन्या ज्येष्ठो वरो ज्येष्ठमास इति ज्येष्ठत्रयम् । ज्येष्ठानक्षत्रेणापि ज्येष्ठत्रयम्, ज्येष्ठानक्षत्रं ज्येष्ठो मासो ज्येष्ठा कन्या वरो वा ज्येष्ठ इत्येवं वा ज्येष्ठत्रयम् । ज्येष्ठचतुष्टये ज्येष्ठत्रयस्य सद्भावान्निषेधप्रवृत्तिरस्त्येव । ज्येष्ठस्य वरस्य ज्येष्ठकन्यायाश्च ज्येष्ठमासे विवाहो न प्रशस्यते । तयोर्मध्येऽन्यतरज्येष्ठत्वे तु प्रशस्यत इत्यर्थः ।

नारदः—" जन्ममासे च जन्मर्क्षे न जन्मदिवसेऽपि च ।
आद्यगर्भसुतस्याथ दुहितुर्वा करग्रहः " इति ॥

करग्रहो विवाहः ।

आश्वलायनः—" उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः सार्वकालमेके विवाहम् " इति ।

कल्याणं ज्योतिःशास्त्राविरोधीति वृत्तिकृत् ।

ज्योतिर्निबन्धे—

" सार्वकालिकमिच्छन्ति विवाहं गौतमादयः " इति ।

एतच्च सार्वकालिकत्वमासुराद्यधर्म्यविवाहविषयमिति केचित् । आसन्नर्तुकालकन्याविषयमित्यन्ये ।

कात्यायनः—"उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात्" इति ।

नारदः—" शुक्लपक्षं प्रशंसन्ति विवाहे गौतमादयः " इति ।

अत्र शुक्लपक्षप्राशस्त्योक्त्याऽसंभवे कृष्णपक्षस्यापि ग्रहणमिति सूच्यते ।

सर्व ऋतवो विवाहस्येत्यापस्तम्बसूत्रव्याख्यावसरे सुदर्शनेनापि पूर्वपक्षनियमाभाव उक्तः।

तिथय उक्ता भरद्वाजेन—

" प्रतिपद्दुःखजननी द्वितीया प्रीतिवर्धिनी।
सौभाग्यदा तृतीया स्याच्चतुर्थी चार्थनाशिनी॥
पञ्चम्यां सुखवित्तानि षष्ठी विघ्नप्रदायिनी।
विद्याशीलसुखाप्तिः स्यात्सप्तम्यामफलाऽष्टमी॥
नवमी शोकफलदा आनन्दो दशमीदिने।
सुखदैकादशी ज्ञेया सफला द्वादशी स्मृता॥
मानपुत्रौ त्रयोदश्यां चतुर्दश्यां तु दुःखदः।

विवाह इति शेषः।

फलं बहुविधं पञ्चदश्यां चैव विशेषतः " इति।

पञ्चदशी पूर्णिमा।

" विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात्।
वैधव्यमाप्नोति तदाऽऽशु कन्या जीवेत्पतिश्चेदनपत्यता स्यात् "॥

इति ज्योतिर्निबन्धवचनादमाया विवाहदिवसान्तर्भावनिषेधे सिद्धे सुतरां तत्र विवाहनिषेधस्यापि सिद्धेः। चतुर्थीशब्दस्य ह्रस्वत्वमार्षम्। श्राद्धं तद्युक्तं दिनमिति विवाहमध्ये श्राद्धस्यैव निषेधो न तु तद्रहितत्तिथिमात्रस्य।

अन्यथा—" वृत्ते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्न तु दूषयेत्तम् "।

इति शास्त्रस्य निर्विषयत्वापत्तेः। तं विवाहविधिम्। दर्शदिनमिति स्वरूपेण तिथिनिषेधः। तथा सत्येव पृथगुपादानस्य सार्थक्यात्। अयमेव विषय उपनयनादिष्वपि ज्ञेयः " ये वा भद्रं दूषयन्ति स्वधाभिः " इति श्रुतौ सामान्यत उक्तेः। एतत्सर्वमतिसंकटे ज्ञेयम्।

ज्योतिर्निबन्धे प्रयोगचिन्तामणौ च लल्लः—

" अत्रापि कृष्णपक्षस्य दशमीमविवाहिकाम्।
वदन्त्यन्ये तु दशमीमुभयोरविवाहिकाम् " इति॥

अत्राप्युक्तासु तिथिष्वपि। अविवाहिकां विवाहानर्हाम्। उभयोः पक्षयोः। विहितप्रतिषिद्धत्वाद्दशम्या विकल्पः।

१ ङ. °क्ता भार°। २ ङ. विघ्नप्र°। ३ ख. ग. ङ. °त्तेः। द°। ४ ङ. °था च स°।

## अथ नक्षत्राणि ।

तत्र—" अह्नः पञ्चसु कालेषु प्रातः संगवे मध्यंदिनेऽपराह्णे सायं वैतेषु यत्कारी स्यात्पुण्याह एव कुरुते " इत्येतत्सूत्रव्याख्यानावसरे मातृदत्तः—

" पुण्यानि तिथिवारनक्षत्राणि कालज्ञानविहितान्युपादेयानि प्रदर्शनार्थत्वाच्चैतस्य विधानस्येति । नक्षत्रेष्वपि यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते । यत्पुण्यं नक्षत्रम् । तद्वट्कुर्वीतोपव्युपमित्यादिश्रुतेश्च देवनक्षत्राणि ज्योतिःशास्त्रविहितविवाहनक्षत्राविरोधीनि प्रशस्तानि द्रष्टव्यानि । देवस्य सवितुरिति प्रकृत्य—समानस्याह्नः पञ्च पुण्यानि नक्षत्राणीति श्रुतेष्वन्तरालेषु चतुरोऽश्लीलान्कालान्रात्रिं च वर्जयित्वा यत्कर्तव्यं कर्म तत्कर्तुं शीलं यस्य स यत्कारी सर्वाणि कर्माणि तेष्वेव कालेषु कर्तव्यानीत्यर्थः । स पुण्याह एव प्रशस्त एव दिने कुरुते । तत्र प्रागुदयादेका नाडिकोर्ध्वं चैका प्रातरित्युच्यते । प्राक्प्रथमाहश्चतुर्भागान्तादेका नाडिकोर्ध्वं चैका स संगवः । प्राग्द्वितीयाहश्चतुर्भागान्तादेका नाडिकोर्ध्वं चैका स मध्यंदिनः । प्राक्तृतीयाहश्चतुर्भागान्तादेका नाडिकोर्ध्वं चैका सोऽपराह्णः । प्रागस्तमयादेका नाडिकोर्ध्वं चैका स सायम् । अयं सर्वकर्मणां कालो न विवाहस्यैव । यत्कारीतिवचनाद्धोराणामेवायं विकल्प इति वाशब्दो ज्योतिर्ज्ञानप्रसिद्धकालविकल्पार्थः " इति व्याख्यातवान् ।

चतुर्थो भागश्चतुर्भागः । अह्नश्चतुर्भागोऽहश्चतुर्भागः । प्रथमश्चासावहश्चतुर्भागश्च प्रथमाहश्चतुर्भागः । प्रथमाहश्चतुर्भागस्यान्तः प्रथमाहश्चतुर्भागान्तः । तस्मात् । इत्येवं समासः । एवमग्रेऽपि ।

आपस्तम्बो विवाहं प्रकृत्याऽऽह—

" सर्वाणि पुण्योक्तानि नक्षत्राणि " इति ।

यानि ज्योतिषे पुण्योक्तानि शुभफलप्रदत्वेनोक्तानि नक्षत्राणि तानि ग्राह्याणि । नक्षत्रग्रहणस्य प्रदर्शनार्थत्वात्तिथ्यादीन्यपि पुण्योक्तानि सर्वाण्युपसंहर्तव्यानीति सुदर्शनेन व्याख्यातम् ।

आश्वलायनोऽपि—" कल्याणे नक्षत्रे " इति ।

---

१ क. ख. मध्याह्नेऽप° । २ ख. °न् । आप° । ग. °न् । बौधायनः । रोहिणी मृगशीर्षमुत्तराफल्गुनी स्वातीति विवाहस्य नक्षत्राणीति । चतु° । ङ. °न् । बौधायनः । रोहिणी मृगशीर्षमुत्तराफल्गुनी स्वातीति विवाहस्य नक्षत्राणीति ।·आपस्तम्बो विवाह प्रकृत्याऽऽह । सर्वाणि पुण्योक्तानि नक्षत्राणीति । चतु° । ३ ङ. °पि । यानि ।

छन्दोगसूत्रेऽपि—"पुण्यनक्षत्रे दारान्कुर्वीत" इति।

नक्षत्रग्रहणात्तिथ्याद्यपेक्षया नक्षत्रमावश्यकमिति तद्भाष्यम्।

तान्युक्तानि कात्यायनेन—

"त्रिपूत्तरादिषु स्वातौ मृगशिरसि रोहिण्यां वा" इति।

"उत्तराफल्गुनीहस्तचित्रा इति त्रीणि। उत्तराषाढाश्रवणधनिष्ठा इति त्रीणि" उत्तराप्रोष्ठपदारेवत्यश्विन्य इति त्रीणि इति हरिहरः।

पारिजाते बृहस्पतिरपि—

"सौम्यपैतृकहस्ताश्च मैत्रमूलाश्विवासवाः।
त्रीण्युत्तराणि पौष्णं च रोहिणी[1] च शुभप्रदाः॥
अन्याश्च सर्वा वर्ज्याः स्युस्ताराः पाणिग्रहे सदा" इति।

हेमाद्रावपि—"हस्तोत्तराणि वायव्यं मैत्रं मूलं च रेवती।
रोहिणी सौम्यपित्र्ये च शुभं पाणिग्रहे सदा" इति।

वसिष्ठोऽपि—"मूलोत्तरापैतृकपौष्णमैत्रप्राजेशचन्द्रार्कसमीरणेषु।
सदा प्रशस्तः खलु कन्यकाना पाणिग्रहो वेधविवर्जितेषु" इति।

उत्तरोत्तरात्रयम्। पैतृकं मघाः। पौष्णं रेवती[2]नक्षत्रम्। प्राजेशं रोहिणी। चन्द्रो मृगशिरः। अर्को हस्तः। समीरणः स्वाती।

आपस्त[3]म्बबौधायनौ—

"यां कामयेत दुहितरं प्रिया स्यादिति तां निष्टयायां दद्यात्प्रियैव भवति नेव तु पुनरागच्छतीति ब्राह्मणावेक्षो विधिः" इति।

इयं भर्तुः प्रिया स्यादिति यां दुहितरं पिता कामयेत तां निष्ठ्यायां स्वातौ वराय दद्यात्। सा तस्य प्रियैव भवति। नेव तु नैव च रोगदारिद्र्यादिना पीड्यमानाऽपि न पुनः पितृगेहमागच्छतीति स्वगृह एवास्याः सर्वेऽर्थाः संपद्यन्त इति ब्राह्मणावेक्षो विधिः। अत्रापि पूर्ववत्स्मार्तपुण्योक्तनक्षत्रैर्विकल्प इति सुदर्शनेन व्याख्यातम्।

इन्वकानिष्ठ्याशब्दप्रवृत्तिनिमित्तमा[4]हतुर्बौधायनापस्तम्बौ—

"इन्वकाशब्दो मृगशिरसि। निष्ठ्याशब्दः स्वातौ" इति।

१ ङ. °णीति शु°। २ ङ. °ती। प्रा°। ३ क. ख. °स्तम्बः—यां। ४ क. ख. °माहाऽऽपस्तम्बः—"इ°।

वासरादि ज्योतिर्निबन्धे—

" गुरुशुक्रेन्दुपुत्राणां दिनेषु परिणीयते ।
या कन्या सा भवेन्नित्यं भर्तुश्चित्तानुवर्तिनी ।
अर्कार्किभौमवाराणां दिनेषु कलहप्रिया ।
सापत्न्यं समवाप्नोति तुषारकरवासरे ।
क्षीणेन्दुः फलनाशाय स्त्रीविनाशाय भार्गवः ।
जीवः पुरुषनाशाय यदि पाणिग्रहो भवेत् " इति ।

जीवभार्गवावपि क्षीणौ निषिद्धौ परिज्ञेयौ । अत्र दिनेष्वित्यभिधानाद्रात्रावभ्यनुज्ञा गम्यते ।

तथा च स्मरन्ति—" न वारदोषाः प्रभवन्ति रात्रौ " इति मदनपारिजाते ।

निर्णयामृते स्मृत्यन्तरे—

" शनैश्चरदिने प्राप्ते यदा रिक्ता तिथिर्भवेत् ।
तस्मिन्विवाहिता कन्या पतिसंततिवर्धिनी " इति ।

नृसिंहः—" बुधशुक्रेन्दुजीवानां वारेषु शुभदं भवेत् ।
शुभानामंशकं श्रेष्ठं वर्गादि च विवाहके " इति ॥

ज्योतिर्निबन्धे गर्गः—

" स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् ।
तयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण भाषितम् ॥
जन्मत्रिदशमारिस्थः पूजया शुभदो गुरुः ।
विवाहेऽथ चतुर्थाष्टद्वादशस्थो मृतिप्रदः " इति ॥

ज्योतिर्निबन्धे[1]—

" विवाहे गर्भसंस्कारे स्त्रीणां विधुबलं भवेत् ।
इतरत्र तु भर्तुः स्यादिति विद्वत्प्रभाषितम् " इति ॥

मुहूर्तचिन्तामणावप्येवम् ।

ज्योतिःसागरे—

" कन्याचापे तथा सिंहे कर्के शुक्रो यदा भवेत् ।
न दोषः षष्ठशुक्रस्य पाणिग्रहे शुभावहः " इति ।

१ ख. ड. ज्योतिर्निब° ।

( विवाहे ग्रहबलम् )

ज्योतिर्निबन्धे—

" प्रायेण सर्वत्र विलोकयन्ति चान्द्रं बलं गोचरतो विशुद्धम् ।
लोके यतश्चन्द्रबलं प्रधानं शास्त्रेषु मुख्यं खलु लग्नमेव ॥
एकतस्तु ग्रहाः सर्वे एकतः शशलाञ्छनः ।
ततोऽधिकतरश्चन्द्रस्तस्माच्चन्द्रं परीक्षयेत् " इति ॥

ततस्तस्मात् ।

बृहस्पतिः—" झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयादिषु " इति ॥

लल्लः—" द्वादशदशमचतुर्थे जन्मनि षष्ठाष्टमे तृतीये च ।
प्राप्ते पाणिग्रहणे जीवे वैधव्यमाप्नोति " इति ॥

गर्गः—" सर्वत्रापि शुभं दद्याद्द्वादशाब्दात्परं गुरुः ।
पञ्चषष्ठाब्दयोरेव शुभगोचरता मता ॥
सप्तमात्पञ्चवर्षेषु स्वोच्चस्वर्क्षगतो यदि ।
अशुभोऽपि शुभं दद्याच्छुभदर्क्षेषु किं पुनः ॥
रजस्वलायाः कन्याया गुरुशुद्धिं न चिन्तयेत् ।
अष्टमेऽपि प्रकर्तव्यो विवाहस्त्रिगुणार्चनात् ॥
अर्कगुर्वोर्बलं गौर्या रोहिण्यर्कबला स्मृता ।
कन्या चन्द्रबला प्रोक्ता वृषली लग्नतोबला " इति ॥

मदनरत्ने गर्गः—

" चन्द्रताराबलं मुख्यं दंपत्योः पाणिपीडने ।
मुख्यं गुरुबलं वध्वा वरस्येष्टं रवेर्बलम् " इति ॥

विवाहे मुख्यकाले तयोर्बलालाभे पूजा कार्या ।

" विवाहे बलमावश्यं दंपत्योर्गुरुसूर्ययोः ।
चेत्पूजां यत्नतः कुर्याद्दुर्बलप्रदता तयोः " ।

इति तत्रैव नारदोक्तेः । चेदित्यस्य दुर्बलेत्यत्रान्वयः ।

गुरुपूजाप्रकारं तु शान्तिरत्नमालायां वक्ष्यामः । रवेरपि पूजा तत्रैव ।

लल्लः—" बृहस्पतौ शोभनगोचरस्थे विवाहमिच्छन्ति हि दाक्षिणात्याः ।
रवौ शुभस्थे प्रवदन्ति गौडा न गोचरा मालवके प्रमाणम्" इति ॥

ज्योतिर्निबन्धे वृद्धगार्ग्यः—

" मीने धनुषि सिंहे च स्थिते सप्ततुरंगमे ।
क्षौरमत्र न कर्तव्यं विवाहं गृहकर्म च " इति ॥

सप्ततुरंगमः सूर्यः ।

ज्योतिर्ग्रन्थे—" सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत् ।
सिंहस्थेऽपि मघासंस्थं गुरुं यत्नेन वर्जयेत् ॥
अन्यत्र सिंहभागे तु विवाहादि विधीयते " इति ।

लल्लः—" नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे ।
गण्डक्याः पश्चिमे तीरे मकरस्थो न दोषभाक् " इति ॥

पैराशरः—" गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ ।
मघास्थे सर्वदेशेषु तथा मीनगते रवौ " इति ॥

कालनिर्णये—" शान्तिकं पौष्टिकं यात्राप्रतिष्ठोद्वाहपूर्वकम् ।
न कुर्यात्सर्वमाङ्गल्यं सिंहस्थे च बृहस्पतौ " इति ।

माण्डव्यः—" इष्टापूर्तं च चौलादिसंस्कारा वास्तुकर्म च ।
अन्यानि शुभकर्माणि न कुर्यात्सिंहगे गुरौ " इति ।

ज्योतिर्निबन्धे—

" सिंहे गुरौ सिंहनवांशकोर्ध्वं गोदावरीदक्षिणकूलजातैः ।
उद्वाहकालात्ययदोषभीतैः कार्यो विवाहश्च्यवनो ब्रवीति " इति ।

ज्योतिःसंग्रहे—" मागधे गौडदेशे च सिन्धुदेशे च कोङ्कणे ।
व्रतं चूडां विवाहं च वर्जयेन्मकरे गुरौ " इति ।

मकरस्थतायां विवाहे विशेषो देवीपुराणे—

" मकरस्थो यदा जीवो वर्जयेत्पञ्चमांशकम् ।
शेषेष्वपि च भागेषु विवाहः शोभनो मतः " इति ।

एवं गुरोः सिंहस्थत्वेऽपि विवाहविषये विशेषमाह राजमार्तण्डः—

" सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः ।
सर्वदेशेष्वयं त्याज्यो दंपत्योर्निधनप्रदः " इति ।

---

१ ड. पाराशरः । २ क. ग. °पूर्वक° ।

सिंहांश इत्यत्र नवांशक्रमेण सिंहांशो बोध्यः।

अत एव—" सिंहेऽपि भगदैवत्ये गुरौ पुत्रवती भवेत् " इत्युक्तम्।

भगदैवत्यं पूर्वे फल्गुन्यौ। भगदैवत्यप्रथमपादस्य सिंहांशत्वेन परित्याज्यत्वात्तद्व्यतिरिक्तं भगदैवत्यं ग्राह्यम्।

तथा च माण्डव्यः—

" मघा(घ)ऋक्षं परित्यज्य यदा सिंहे गुरुर्भवेत्।
तत्राब्दे कन्यका चोढा सुभगा सुप्रिया भवेत् " इति।

अत्रैतैर्वचनैः सिंहस्थगुरौ मघानक्षत्रपरित्यागेन यत्परिणयनं प्रतिपादितं तन्माघ्यां पौर्णमास्यां तद्वर्षे मघानक्षत्राभावे बोध्यम्। अन्यथा सिंहे गुरौ परिणीतेतिवक्ष्यमाणवचनेन विरोधः स्यादिति।

तथा च ज्यौतिषे[2]—

" गुरौ हरिस्थे न विवाहमाहुर्हारीतगर्गप्रमुखा मुनीन्द्राः।
मघायुता स्याद्यदि नैव माघी तदा च कन्योद्वहनं वदन्ति " इति॥

तथा—" माघ्यां यदा[3] मघा न स्युः सिंहे गुरुरकारणम् " इति।

अकारणं विवाहेऽनिषेधक इत्यर्थः।

अत एव—" सिंहे गुरौ परिणीता पतिमात्मानमात्मजान्हन्ति।
क्रमशस्त्रिषु पित्रादिषु वसिष्ठगर्गादयः प्राहुः "

*इत्यादि राजमार्तण्डादौ मघादिनक्षत्रत्रयेऽपि विवाहे प्रोक्तो दोषोऽविरुद्धतयासंगच्छत इति विभावनीयम्।

अत्र च गोदावर्युत्तरतीरमारभ्य भागीरथीदक्षिणकूलं मर्यादीकृत्य यो गोदावरीभागीरथ्योरन्तरालवर्ती देशस्तत्रैव सिंहस्थो गुरुर्वर्ज्य इत्याह लल्लः—

" गोदावर्युत्तरतो यावद्भागीरथ्यास्त(थीत?)टं याम्यम्।
तत्र विवाहो नेष्टः सिंहस्थे देवपतिपूज्ये " इति॥

अर्थाद्गोदावरीदक्षिणतटे भागीरथ्युत्तरदेशे च विवाहे सिंहस्थगुरुदोषो नास्तीति।

तथा च वसिष्ठः—

" भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा।
विवाहो व्रतबन्धो वा सिंहस्थेज्ये न दुष्यति " इति॥

---

* क्रियाविशेषणम्।

१ क. ख. ग. °था मा°। २ ग. ड. ज्योतिषे। ३ क. ख. यदि।

कूलं तीरम् । इज्यो गुरुः ।

एवं मेषस्थे सूर्ये सिंहस्थगुरुदोषो नास्तीति दाक्षिणात्यसंग्रहे ज्योतिर्निबन्धे पठन्ति—

" मङ्गलानीह कुर्वन्ति सिंहस्थो वाक्पतिर्यदा ।
भानौ मेषगते सम्यगित्याहुः शौनकादयः " इति ॥

तथा नारदेन देशभेदेन समसप्तकदोषोऽपि विवाह उक्तः—

" समदृष्टिर्गुरोः शुक्रस्तन्मासे तु प्रयत्नतः ।
विवाहादि न कुर्वीत नर्मदातीर उत्तरे " इति ॥

शौनकः—" एकराशिगतौ सूर्यजीवौ स्यातां यदा पुनः ।
व्रतबन्धविवाहादि शुभकर्माखिलं त्यजेत् " इति ॥

एतच्चैकनक्षत्रावच्छेदेनैकराशिगतत्वे बोध्यम् ।

" एकराशिगतौ स्यातामेकर्क्षविषये यदि ।
गुर्वादित्यौ तदा त्याज्या यज्ञोद्वाहादिकाः क्रियाः "

इतिवचनैकवाक्यत्वात् ।

अत एव—" गुर्वादित्ये दशाहे तु व्रतोद्वाहादि वर्जयेत् "

इत्यनेन यत्कर्मवर्जनमुक्तं तद्भिन्ननक्षत्रविषयं बोध्यमिति । यदि चैकर्क्षघटितविशेषवचनसहकारेण मुन्यन्तरोक्तसामान्यवचनस्याप्येकस्यैव निषेधविधेः कल्पनालाघवात्तदेकवाक्यत्वानुरोधेन विशेषविधिपरत्वं कल्प्यते तदा विभिन्ननक्षत्रविषये तयोरेकराशिस्थत्वं बोध्यमिति नवीनाः ।

वात्स्यः—" गुरुभार्गवयोर्मौढ्ये बाल्ये वै वार्धकेऽपि च ।
व्रतोद्वाहप्रतिष्ठादि शुभं कर्म विवर्जयेत् " इति ॥

*ज्योतिर्वसिष्ठः—

" यात्रोद्वाहौ प्रतिष्ठां च गृहचूडाव्रतादिकम् ।
वर्जयेद्यत्नतश्चैव जीवे वक्रातिचारगे " इति ॥

कृत्यचिन्तामणौ—

" तथा मलिम्लुचे मासि सुराचार्येऽतिचारगे ।
वापीकूपतडागादिक्रियाः प्रागुदितास्त्यजेत् ॥

* अत्र क. पुस्तके टिप्पण्याम् " बृहस्पतिस्तु— यद्येकस्यापि मूढत्वे शुभकर्म न दोषकृत् । द्वयोर्मूढत्व एवोक्तं दोषद गुरुशुक्रयोः । द्विजन्मादिशुभे कार्ये शुक्रमौढ्य न दोषकृत् । त्रैवर्णिकानामेवोक्तं दोषद गुरुशुक्रयोः " इति ग्रन्थो वर्तते ।

अतिचारगते जीवे वक्रे चैव बृहस्पतौ।
कामिनी विधवा प्रोक्ता तस्मात्तौ परिवर्जयेत्" इति॥

तत्रैव—"अतिचारगतो जीवः पूर्वभं नैव गच्छति।
समचारेऽपि कर्माणि नैव तत्रैव संस्थिते" इति॥

तथा—"अतिचारगतो जीवस्तं राशिं नैति चेद्यदि।
लुप्तः संवत्सरो ज्ञेयो गर्हितः सर्वकर्मसु" इति॥

पूर्वराशिशेषमतिक्रम्य राश्यन्तरसंचारोऽतिचारस्तं प्राप्तो गुरुः पुनस्तं राशिं यदि नैति तदा लुप्तः संवत्सरः सर्वकर्मसु गर्हितो ज्ञेय इत्यर्थः।

अस्य सर्वराशिसाधारण्येन प्राप्तौ क्वचिदपवादमाह च्यवनः—

"यदि भवेदतिचारगतो गुरुर्न पुनरेति निजप्रथमस्थितिम्।
भवति लुप्तसमा झषकुम्भयोर्वृषभवृश्चिकयोर्यदि न स्थितः" इति।

मदनरत्नेऽपि—

"यदाऽतिचारं हि गुरुः करोति कुम्भालिसंस्थो वृषमीनसंस्थः।
नाऽऽयात्यसौ यद्यपि पूर्वराशिं शुभाय पाणिग्रहणं वसिष्ठः" इति।

दशमासभोगानन्तरमेकादशमासभोगानन्तरं वेतरेष्वप्यतिचारे लुप्ताब्ददोषो नास्ति।

तदुक्तं च्यवनेन—

"मासान्दशैकादश वा प्रभुज्य राशेर्यदा राशिमुपैति जीवः।
भुङ्क्ते न पूर्वं च पुनस्तथाऽपि न लुप्तसंवत्सरमाहुरार्याः" इति॥

अयं च लुप्ताब्ददोषो देशभेदेनैवात्रिमतेन।

तथा च स्मृतिसंग्रहे—

"लुप्ताब्ददोषोऽत्रिमतेन मध्ये सोमोद्भवायाः सुरनिम्नगायाः" इति।

सोमोद्भवा नर्मदा। सुरनिम्नगा गङ्गा।

वक्रातिचारयोरपवादमाह राजमार्तण्डः—

"वक्रातिचारगे जीवे वर्जयेत्तदनन्तरम्।
व्रतोद्वाहादिचूडायामष्टाविंशतिवासरान्" इति॥

वक्रातिचारयोरष्टाविंशतिवासरवर्जनमत्यन्तसंकटविषयकं बोध्यम्।

"प्राग्राशिगतजीवस्य चातिचारस्त्रिपक्षकः" इत्यनेन गुरोस्तादृशातिचारे पक्षत्रयपर्यन्तमेव तत्कर्मवर्जनस्योक्तत्वात्।

हारीतः—" अतिचारगते जीवे वृषेऽलौ मीनकुम्भयोः ।
यज्ञोद्वाहादिकं कुर्यात्तत्र कालो न लुप्यते " इति ॥

दीपिकायाम्—

" त्रिकोणजायाधनलाभराशौ वक्रातिचारेण गुरुः प्रयातः ।
यदा तदा प्राह शुभे विलग्ने हिताय पाणिग्रहणं वसिष्ठः " इति ॥

त्रिकोणेत्यादिकमर्थात्पाणिग्रहीतुरेव । त्रिकोणं नवमः पञ्चमश्च राशिः । जाया सप्तमराशिः । धनं द्वितीयो राशिः । लाभ एकादशो राशिः । तत्रेत्यर्थः ।

त्रयोदशदिनपक्षनिषेधमाह व्यासः—

" त्रयोदशदिने पक्षे विवाहादि न कारयेत् ।
गर्गादिमुनयः प्राहुः कृते मृत्युस्तदा भवेत् " इति ॥

आदिशब्देनोपयनादि । विवाहे दंपत्योः, आदिपदोपात्त उपनयन उपनेतुः, चौले शिशोः, इत्यादि द्रष्टव्यम् ।

क्षयपक्षः कदा पततीत्यपेक्षायां मदनरत्ने—

" पक्षस्य मध्ये द्वितिथी इते यदा तदा भवेद्रौरवकालयोगः[2] ।
पक्षे विनष्टे सकलं विनष्टमित्याहुराचार्यवराः समस्ताः ॥
त्रयोदशदिने पक्षे नूनं संहरते जगत् ।
अपि वर्षसहस्रेण कालयोगः प्रकीर्तितः " इति ॥

इते गते । ' पक्षस्य मध्ये द्वितिथी पतेतां तदा भवेद्रौरवकालयोगः ' इत्येवमपि कुत्रचित्पाठः । पतेतां क्षयं गच्छत इत्यर्थः ।

क्षयमासनिषेधो दीपिकायाम्—

" काम्यादिष्वखिलेषु कर्मसु परित्याज्यौ क्षयाख्योत्तरासंक्रान्ती " इति ।

पञ्चकनिषेधो व्यवस्था च ज्योतिर्निबन्धे—

" गततिथ्या युतं लग्नं नवभक्तावशेषकम् ।
त्रिपञ्चाद्रिखसंख्यं चेत्पञ्चकं न[3] तदा भवेत् ॥
एकावशेषे मृत्युः स्याद्द्वयोर्वह्निः प्रकीर्तितः ।
चतुर्षु तु भवेद्राजा षट्सु चोरः प्रकीर्तितः ॥
रोगोऽष्टसु समाख्यातः शेषं निष्पञ्चकं स्मृतम् ।
मृत्युं विवाहविच्छुक्रसंध्यासु परिवर्जयेत् ॥

---

१ इ. हारितः । २ ग. इ. °योरगः । प° । ३ इ. च ।

वह्निं परित्यजेद्धौमगृहारम्भदिनेषु तु।
राजानं स्वामिसेवेन्दुमन्दद्युषु परित्यजेत्॥
धराजगुरुयात्रासु चोरं तु परिवर्जयेत्।
रोगं परित्यजेदर्के रात्रौ मौञ्जीनिबन्धने॥
मृत्युः सर्वत्र वर्ज्यः स्यादिति केचिन्मनीषिणः।
वर्तमाना तिथिर्लग्नं हर्म्ययात्राव्रतेषु तु॥
अन्यत्रैता तिथिर्लग्नं मेषादीन्यपि केचन।
बलिष्ठं यदि लग्नं स्यात्तदैतद्दोषकृन्न हि" इति॥

**एतत्पञ्चकम्। ( *बलं तु लघुजातके— )**

"अधिपयुतो दृष्टो वा बुधजीवनिरीक्षितश्च यो राशिः।
स भवति बलवान्यदा युक्तो दृष्टोऽपि वा शेषैः" इति।

**अथ विस्तरेण चन्द्रसूर्ययोर्ग्रहणशुद्धिः कम्पादिप्रयुक्ता शुद्धिश्च विचार्यते। तत्र ग्रस्तेऽस्ते ग्रहणात्पूर्वं दिनत्रयं वर्ज्यम्। ग्रस्तेऽभ्युदिते तु ग्रहणात्परतो दिनत्रयं वर्ज्यम्। ग्रस्तास्तग्रस्तोदययोरभावेऽपि चन्द्रसूर्ययोः खण्डग्रासे पूर्वं त्रिदिनं पश्चात्त्रिदिनं च मिलित्वैकैकस्मिन्स्थले षड्दिनानि वर्ज्यानि। एतस्मिन्नेव विषये संपूर्णग्रासे तु पूर्वं सप्त दिनानि परस्ताच्च सप्त दिनानीति मिलित्वा चतुर्दश दिनानि वर्ज्यानि।**

**तथा च ज्योतिःसंग्रहे बृहस्पतिः—**

"ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा।
खण्डग्रासे त्रित्रिदिनं निःशेषे सप्त सप्त च" **इति।**

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ग. ङ. पुस्तकयोर्विद्यमानो ग्रन्थो यथा—"प्रकारान्तरेण पञ्चकं ज्योतिर्माधवीये—"तिथिवारं च नक्षत्रं लग्नं ध्रुवकमिश्रितम्। नवभिस्तु हरेद्भागं शेषं पञ्चकपञ्चकम्" इति। तिथयोऽत्र पक्षद्वयेऽपि तत्तत्प्रतिपदादय एव ग्राह्याः। न तु शुक्लप्रतिपदादय इत्यभियुक्ता ज्योतिर्विदः। नक्षत्राण्यश्विन्यादीनि। मेषादि लग्नम्। ध्रुवा एव ध्रुवकाः। स्वार्थे कप्रत्ययः। तत्र ध्रुवा उक्तास्तत्रैव—"त्रीण्यग्निवेदषट्सप्तऋतुबाणाग्निलोचनाः। इन्द्रियाष्टर्षयो ज्ञेया मेषादीनां ध्रुवाः क्रमात्" इति। अग्नित्रयः। वेदाश्चत्वारः। ऋतवः षट्। बाणाः पञ्च। लोचने द्वौ। इन्द्रियाणि पञ्च। ऋषयः सप्त। ध्रुवकमिश्रितं ध्रुवकसंयोजितम्। इदं लग्नविशेषणम्। शेषमेकद्व्यादिशेषं मृत्युवह्न्यादिपञ्चकं भवेदित्यर्थः। अत्रापि संकटे प्रकारान्तरमुक्तं तत्रैव—"दश राज्ञि तस्करेऽष्टौ मृत्यौ चत्वार ईरिताः। रोगे पञ्चदश प्रोक्ता वह्नौ द्वादश कीर्तिताः। एतैर्योगे पुनश्चैकादिशेषे सर्वथा त्यजेत्" इति। राजपञ्चके पूर्वोक्तप्रकारेणाऽऽगतेऽपि दशाङ्का योजनीयाः। योजनायां सत्यामपि पुनरपि पञ्चकमागतं चेत्सर्वथा त्यजेदित्यर्थः। एवं तस्करेऽष्टावित्यादिषु ज्ञेयम्। एतस्याप्यसंभवेऽतिसंकटे दानमुक्तं गालवसंहितायाम्—"अग्नौ चाऽऽज्यं चोरसंज्ञे सुवर्णं रोगे ताम्रं पार्थिवे रौप्यदानम्। तैलं देयं नैधने पञ्चके तु शुभं कुर्यात्कर्म चास्मिन्न दोषः" इति। लघुजातक एतदपवाद उक्तः" इति।

तथेति त्रिदिनमित्यर्थः ।

तथा कश्यपः—“ग्रस्तोदये परो दोषो ग्रस्तास्तेऽर्वाक्शशीनयोः ।
द्युनिशार्धे तूभयं तत्खण्डाखण्डव्यवस्थया ” इति ।

द्युनिशार्ध इत्यनेन दिवाखण्डे निशाखण्डे च सूर्यस्य चन्द्रस्य च ग्रस्तास्ताभ्युदययोरसंभवेनैव तयोरभावः सूचित इति । *उभयं तदित्यादि । दिनेषु खण्डग्रास एकैकस्मिन्स्थले पूर्वत्र परत्रापि दिनत्रये दिनत्रये दोषः, संपूर्णग्रासे तु पूर्वं परस्ताच्च सप्तदिनेषु सप्तदिनेषु दोष इत्युभयं तदित्येतदर्थो बोध्यः, बृहस्पतिवचनैकवाक्यत्वात् ।

अत एव—“ चन्द्रसूर्योपरागेषु त्र्यहं प्राक्तु शुभं त्यजेत् ।
सप्ताहमशुभं पश्चात्स्मृतं ग्रहणसूतकम् ”।

इति वचनेन यत्पूर्वं त्र्यहे शुभवर्जनमुक्तं तत्संकटविषयकं सर्वग्रासविषयकं च बोध्यम् । परत्र सप्तरात्रोत्कीर्तनात् । शक्तिविषये पूर्वार्धं खण्डग्रासविषयकम् । तद्विषय एव पूर्णग्रासविषयकं परार्धमिति । त्र्यहं प्रागशुभं त्यजेदितिपाठे प्राक्त्र्यहमशुभं भवति तस्मिन्नशुभे त्र्यहे त्यजेत् । किमित्याकाङ्क्षायां योग्यतया शुभमिति शेषः । त्र्यहं प्राक्तु शुभं त्यजेदितिपाठे त्वग्रिममशुभपदं त्र्यहमित्यत्राप्यन्वेति । शुभपदं त्वस्त्येवेति ज्ञेयम् ।

अत्र च कर्मभेदेन शक्तभेदेन च दिनमर्यादामाह भोजराजः—

“ अनिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने ।
सप्तरात्रं न कुर्वीत यात्रोद्वाहादि मङ्गलम् ॥
एकरात्रं परित्यज्य कुर्यात्पाणिग्रहं ग्रहे ।
प्रयाणे सप्तरात्रं तु त्रिरात्रं व्रतबन्धने ” इति ॥

त्रिविधेति । दिव्यभौमनाभसेत्यर्थः ।

अयं चोत्पातादौ सप्तरात्रनिषेधः स क्षत्रियवैश्यविषयकः ।

तथा च भृगुः—

“ कम्पादौ क्षत्रे वैश्ये च सप्ताहं ब्राह्मणे त्र्यहम् ।
शूद्रे त्वर्धदिनं प्रोक्तं सर्वकार्येषु वै भृगुः ” इति ॥

अनिष्ट इतिकीर्तनाच्छुभोत्पाते सप्तरात्रं न किं तु तत्रैकरात्रम्, शुभोत्पातप्रदुष्टं दिनमितिवचनात् ।

---

* एतद्वाक्यमधिकं प्रतीकग्रहणं वा ।

१ ग. ङ. शक्तिभे° । २ ङ. °धः क्ष° ।

तत्र शुभोत्पातो यथा वराहसंहितायाम्—

" चण्डाशनिमहीकम्पसंध्यानिर्घातनिस्वनाः ।
परिवेषरजोधूमरक्तार्कास्तमयोदयाः ॥
द्रुमेभ्योऽनुरसस्नेहमधुपुष्पफलोद्गमाः ।
गोपक्षिमदवृद्धिश्च शुभाय मधुमाधवे " इत्यादयः ॥

ग्रहे चन्द्रसूर्यग्रहणे। अत्र सप्तरात्रं सर्वग्रासे संकटविषयकं बोध्यम्।

अङ्गिराश्च ग्रासभेदेन वर्ज्यदिनमाह—

" सर्वग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम्।
त्र्यंशैकाङ्गुलतो ग्रासे दिनमेकं विवर्जयेत् " इति।

वसिष्ठः पुनराह—

" सर्वग्रासे दिनान्यष्टौ सर्वकार्येषु वर्जयेत्।
षड्दिनानि त्रिभागोने अर्धग्रासे चतुर्दिनम् ॥
चतुर्थांशे त्रिरात्रं स्याद्ग्रहणे चन्द्रसूर्ययोः " इति।

कार्यस्याऽऽवश्यकत्वे तु राहुदूषितस्थले वर्ज्यदिनमुहूर्ता उक्ता मुनिमतभेदेन ज्योतिर्निबन्धे—

" पञ्च दिनानि वसिष्ठस्त्रिदिनं गर्गश्च कौशिकस्त्वेकम्।
यवनाचार्यस्य मुहूर्तं पञ्च मुहूर्तानि दूषयति राहुः " इति।

अत्र ग्रहकाले भूकम्पादिसमाहारेऽधिकदिनानि वर्ज्यान्याह भोजराजः—

" ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे।
व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित् "इति।

व्रत इत्युपलक्षणं विवाहादीनाम्। अत्र ग्रहणसमये भूकम्पादीनां भूयसां समाहारे त्रयोदशाहमशुद्धं, तदल्पसमाहारे दशाहमिति बोध्यम्।

गर्गः—" दिग्दाहे दिनमेकं तु ग्रहे सप्त दिनानि च।
भूकम्पे च समुद्भूते त्र्यहाणि परिवर्जयेत् ॥
उल्कापाते च त्रिदिनं धूमे पञ्च दिनानि च।
वज्रपाते दिनं त्वेकं वर्जयेत्सर्वकर्मसु " इति ॥

अत्र चानिष्टे त्रिविधोत्पात इत्यनेन सप्त दिनानि वर्ज्यान्युक्तानि। गर्गेण तु दिग्दाहोत्पातवज्रपातयोरेकदिनवर्जनमुक्तम्। यत्र च पूर्वं मतभेदेन न्यूनाधिकमुक्तं तत्र विरोधस्तु तत्तत्कर्मणां सापेक्षनिरपेक्षत्वेन परिहरणीयः।

१ ड. °हणका°।

तथा च राजमार्तण्डः—

" उक्तानि प्रतिषिद्धानि पुनः संभावितानि च ।
सापेक्षनिरपेक्षाणि मीमांस्यानीह कोविदैः " इति ।

अस्यार्थः—उक्तानि सामान्यविधिना तत्काले कर्तव्यत्वेन प्रतिपादितानि तान्येव कर्माणि विशेषतो निषेधविधिना कालेयत्तादिना निषिद्धानि । अथ पुनरपि तान्येव तत्कालन्यूनकालेयत्तादिना संभावितानि कर्तव्यत्वेन प्रदिपादितानि । सापेक्षेत्यादि । सापेक्षाणि निरपेक्षाणि कालान्तरापेक्षाविशिष्टानि कालान्तरापेक्षाशून्यानीत्यर्थः । अपेक्षा चात्र कालान्तरकर्तव्ययोग्यतानिश्चयः । सोऽपि स्वसामर्थ्याधीनः । सामर्थ्यमप्यत्र कालान्तरतत्तत्कर्मौपयो[1]गिकसामग्रीसमवधानकर्तृयोग्यताबलवद्विघ्नोपस्थित्यभावयोरन्यतररूपं पर्यवसन्नम् । मीमांस्यानि विचारणीयानि, कालान्तरकर्तव्यत्वयोग्यतानिश्चयविषयत्वरूपसापेक्षत्वेन तादृशाभावरूपनिरपेक्षत्वेन च विचारणीयानीति यावत् । तथा च यदि कर्तव्यकर्मणां सापेक्षत्वेन ज्ञानं तदाऽधिकविषयनिषिद्धेतरस्मिन्दिने तेषामनुष्ठानं, यदि च निरपेक्षत्वेन ज्ञानं तदा स्वल्पविषयनिषिद्धेतरस्मिन् । अथ च व्यापकनिषिद्धमध्येऽनुष्ठानं कर्तव्यमिति तात्पर्यार्थः ।

तथाहि—" उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे
[3]चौलकर्मोपनयनगोदानविवाहाः ।

इत्याद्याश्वलायनगृह्याद्युक्तोपनयनादिकर्मणां यथाविधिविहितोत्तरायणे क्वचिदपि दिवसे त्रिविधोत्पाताद्यन्यतमत्वेऽपि तथाविधसामान्यतः प्राप्तौ पूर्वोक्तेन " अनिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने " इत्यादिना वचनेन तत्तत्कर्मणां सप्तदिनपर्यन्तं निषेधमुक्त्वा पुनः " एकरात्रं परित्यज्य " इत्यादिवाक्यान्तरेण मुनिना विवाहोपनयनयोरेकरात्रत्रिरात्रनिषेधमुखेनैकरात्राद्यतिरिक्तदिनानां सप्ताहाभ्यन्तरवर्तिनामप्यभ्यनुज्ञानं कृतं सापेक्षत्वनिरपेक्षत्वविचारेणैवेति । एवमन्यत्राप्यूह्यमिति दिक् ।

अद्भुतसागर एतदपवादः—

" अथ दिवसत्रयमध्ये मृदु पानीयं यदा भवति ।
उत्पातदोषशमनं तदैव शं प्राहुरा[चा]र्याः " इति ।

संबन्धतत्त्वे—" भूकम्पादेर्न दोषोऽस्ति वृद्धिश्राद्धे कृते सति " इति ।

---

१ क. ड. °त्कर्मौपयोगि° । २ ख. °र्मोपयिक° । ३ क. चौलोप° ।

देशभेदेन विवाहादिषु होलिकाष्टदिनवर्जनमप्युक्तं ज्योतिर्निबन्धे—

" इरावत्या विपाशायाः शतद्र्वास्तीरभूमिषु।
तथा त्रिपुष्करे देशे विवाहादिषु वर्जयेत्।
होलिकाप्राग्दिनान्यष्टौ शुभार्थं मतिमाञ्जनः " इति।

इरावत्यादिनद्यश्च पश्चिमदेशे प्रसिद्धाः। होलिका फाल्गुनपूर्णिमा, ततः प्राग्दिनाष्टकं वर्जयेदित्यर्थः।

तथाऽर्वाचीनग्रन्थस्थं पद्यमपि—

" विपाशेरावतीतीरे शतद्र्वाश्च त्रिपुष्करे।
विवाहादि शुभं नेष्टं होलिकाप्राग्दिनाष्टकम् " इति।

ज्योतिर्निबन्धे—" चूडाव्रतविवाहादि गृहारम्भप्रवेशनम्।
जनार्दने प्रसुप्ते तु न प्रकुर्वीत सर्वथा " इति॥

( *कालामृतसंग्रहे—अब्देषु क्षयवत्सरो न शुभकृत्पक्षोऽब्दसंधौ तथा
पञ्चाहानि तु मासयोर्दिवसयोर्नक्षत्रयोर्योगयोः॥
यामार्धं घटिकाद्वयं करणयोर्लग्नद्वये नाडिके
संध्यायां घटिकात्रयं तु घटिके त्याज्ये तु संधौ निशः॥ )

सर्वत्रामृतसिद्धियोगस्य ग्राह्यतायां विवाहादिषु कस्यचिन्निषेध उक्तो ज्योतिर्निबन्धे—

" विवाहे गुरुपुष्यौ च प्रयाणे शनिरोहिणी।
भौमाश्विन्यौ प्रवेशे च षण्मासान्मरणं ध्रुवम् " इति॥

ज्योतिष्प्रकाशे—" अर्वाक्षोडश नाड्यः संक्रान्तेः पुण्यदाः परतः।
उपनयनव्रतयात्रापरिणयनादौ विवर्ज्यास्ताः " इति॥

अत्र व्रतशब्देन वेदव्रतम्। आदिशब्देन सर्वं शुभकर्म गृह्यते।

नारदः—" भू१बाण५नव९हस्ता२श्च रस६दिग्१०द्वि२पर्वताः७।
वेदा४ वसु८शिवा११दित्या१२ घातचन्द्रो यथाक्रमम्॥
यात्रायां युद्धकार्येषु घातचन्द्रं विवर्जयेत्।
विवाहे सर्वमाङ्गल्ये चौलादौ व्रतबन्धने॥
घातचन्द्रो नैव चिन्त्य इति पाराशरोऽब्रवीत् " इति।

* धनुश्चिह्नान्तर्गतो ग्रन्थो ङ. पुस्तक एव।

# विवाहभेदाः ।

अथ विवाहभेदाः सविशेषा उच्यन्ते । तत्रेदं धर्मसूत्रम्—

"बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेद्ब्राह्मे विवाहे शक्तिविषयेणालंकृत्य दद्यादार्षे दुहितृमते मिथुनौ गावौ देयौ दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेन्मिथः कामान्सां(त्सां)वर्तेत स गान्धर्वो यथाशक्ति द्रव्याणि दत्त्वा वहेरन्स आसुरो दुहितृमतः प्रोथयित्वा वहेरन्स राक्षसः" इति ।

ब्रह्मणा सृष्टो ब्राह्मस्तस्मिन्विवाहे वरस्य बन्ध्वादीन्बुद्ध्वा परीक्ष्य प्रजां दुहितरं सहत्वकर्मभ्यः सह कर्तव्यानि यानि कर्माणि तेभ्यस्तानि कर्तुं प्रतिपादयेत् । शक्तिविषयेणेति विभक्तिप्रतिरूपकोऽयं निपातो यथाशक्तीत्यस्यार्थे द्रष्टव्यः । यथाशक्त्यलंकृत्य दद्यादित्येष ब्राह्मो विवाहः । प्रजासहत्वकर्मभ्य इतिपाठे प्रजार्थं सहत्वकर्मार्थं चेति ।

ऋषिभिर्दृष्टे विवाहे मिथुनौ गावौ देयौ स्त्रीगौः पुंगौश्च दुहितृमते देयौ, एष आर्षो विवाहः ।

देवैर्दृष्टे विवाहे यज्ञतन्त्रे वितत ऋत्विजे कर्म कुर्वते कन्यां दद्यादेष दैवो विवाहः ।

यत्र कन्यावरौ मिथो रहसि कामाद्रागात्परस्परं सांवर्तेत मिथुनी भवतः स गान्धर्वो विवाहः । समो दीर्घश्छान्दसः । अत्र संयोगादुत्तरकालं विवाहसंस्कारः कर्तव्यः ।

यत्र विवाहे कन्यावते यथाशक्ति द्रव्याणि दत्त्वा वहेरन्कन्यां स आसुरो विवाहः । कन्यायै गृहक्षेत्रादिदानेन विवाहो नाऽऽसुरः ।

प्रमथ्य यत्र वहेरन्स राक्षसो विवाहः ।

"हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत्स राक्षसः" इत्याश्वलायनः ।

अत्रापि विवाहसंस्कारः । द्वौ चापरौ विवाहौ शास्त्रान्तरेपूक्तौ ।

तत्राऽऽश्वलायनः—

"सह धर्मं चरत इति प्राजापत्यः सुप्तानां
प्रमत्तानां वाऽपहरेत्स पैशाचः" इति ।

ताविह पृथङ्नोक्तौ ब्राह्मराक्षसयोरन्तर्भावादिति व्याख्यातमुज्ज्वलाकृता ।

१ क. ग. प्रजास° ।

बन्धुशीलेत्यारभ्य प्रतिपादयेदित्यन्तं ब्राह्मार्षदैवविवाहेषु नियतमासुरे त्वनियतं तस्येच्छाधीनत्वात्। इतरेषु तु नैतत्। प्रतिपादनाभावेन परीक्षाया अप्यभावात्। अलंकृत्य दद्यादित्यत्र ददातिः प्रतिपादनार्थ एव। पूर्वत्र प्रतिपादयेदित्यस्यैवोपक्रान्तत्वात्। दुहितृमते मिथुनगोदानं विवाहहोमानन्तरम्।

तथा च बौधायनः—

"पूर्वं लाजाहुतिं हुत्वा गोमिथुनं कन्यावते दद्यात्" इति।

दैवे यज्ञ ऋत्विजे प्रतिपादयेदित्येतावतैव सिद्धौ तन्त्रग्रहणस्वरसान्महतः सौमिककर्मण एवात्र ग्रहणं नैष्ठिकपाशुकयोरिति। प्रतिपादयेदितिवचनादृत्विज इत्येकस्मा एव प्रतिपादनाच्च नेयं तन्त्रसंबन्धिदक्षिणा। ऋत्विज इत्यत्रासगोत्रासपिण्डो यः कश्चनर्त्विक्संप्रदानत्वेन ज्ञेयः।

एतच्च प्रतिपादनं प्रधानदक्षिणादानानन्तरम्।

तथा च बौधायनः—

"दक्षिणासु नीयमानास्वन्तर्वेद्यृत्विजे दद्यात्" इति।

अत्र प्रतिग्रहे मन्त्रविशेष उक्तो बौधायनेन—

"अथ यदि दक्षिणाभिः सह दत्ता स्यात्तां प्रतिगृह्णीयात्प्रजापतिः
स्त्रियामिति षड्भिरनुच्छन्दसम्" इति।

दक्षिणाभिः सह दत्तेति वचनमपि कन्याप्रतिपादनस्य यागदक्षिणात्वं नेत्यत्र लिङ्गम्। अयं च प्रतिग्रहमन्त्रविशेषोऽस्माकमप्यविरुद्धः। न च तान्त्रीणां दक्षिणानां दर्शयतीतिसूत्रविरोध इति वाच्यम्। एतस्य प्रतिग्रहमन्त्रविशेषस्य दक्षिणाप्रतिग्रहप्रकरणे सूत्रकारेणापठितस्य तान्त्रीणां दक्षिणानां दर्शयतीतिसूत्रविषयकत्वासंभवेन विरोधाभावात्। दीक्षितो न ददातीति निषेधो यज्ञतन्त्रे कन्याप्रतिपादने न प्रवर्तते विधानबलात्। प्रतिपादनं तु कृत्स्नेन कन्यादानोक्तविधिना कार्यम्। कन्याप्रतिपादनाङ्गभूतहिरण्यादिदानस्य तु ददातिविहितत्वान्निषेधोऽस्त्येव। (+पुण्याहवाचनादिकं कन्यावरणं वाग्दानं मधुपर्कश्च निवर्तते।) एतेषां षण्णां मन्त्राणां विश्वे देवा ऋषयः प्रजापत्यादयो देवता आद्याः पञ्चानुष्टुभ आपस्तत्सत्यमाभरन्निति गायत्री कन्याप्रतिग्रहे विनियोग इत्यृष्यादि द्रष्टव्यम्।

---

+ धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके नास्ति।

**आश्वलायनेन त्वष्टौ भेदा उक्ताः । आद्यानां चतुर्णां फलविशेषश्चोक्तः—**

" अलंकृत्य कन्यामुदकपूर्वां दद्यादेष **ब्राह्मो** विवाहस्तस्यां जातो द्वादशावरान्द्वादश परान्पुनात्युभयत ऋत्विजे वितते कर्मणि दद्यादलंकृत्य स **दैवो** दशावरान्दश परान्पुनात्युभयतः सह धर्मं चरत इति **प्राजापत्यो**ऽष्टावरानष्ट परान्पुनात्युभयतो गोमिथुनं दत्त्वोपयच्छेत स **आर्षः** सप्तावरान्सप्त परान्पुनात्युभयतो मिथः समयं कृत्वोपयच्छेत स **गान्धर्वो** धनेनोपतोष्योपयच्छेत स **आसुरः** सुप्तानां प्रमत्तानां वाऽपहरेत्स **पैशाचो** हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत्स **राक्षसः** " **इति ।**

**तत्राऽऽद्यास्त्रयः प्रशस्ताः । उक्तं च धर्मसूत्रे—**

" तेषां त्रय आद्याः प्रशस्ता यथा युक्तो
विवाहस्तथा युक्ताः प्रजा भवन्ति " **इति ।**

**तेष्वपि पूर्वः पूर्वः श्रेयानुत्तरेपूत्तरः पापीयानिति ।**

**आपस्तम्बोऽपि—**" पूर्वः पूर्वोऽतिशयेन प्रशस्तः " **इति ।**

**वर्णानुपूर्व्येण विवाहनियम उक्तः स्मृत्यन्तरे—**

" चत्वारो ब्राह्मणस्याऽऽद्याः शस्ता गान्धर्वराक्षसौ ।
राज्ञस्तथाऽऽसुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः " **इति ॥**

**अन्त्यः पैशाचः । गर्हितो न कस्यापि प्रशस्त इत्यर्थः ।**

**एतत्सर्वं बौधायनोऽप्याह—**

" **अष्टौ विवाहाः** श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने ददाति स **ब्राह्म** आच्छाद्यालंकृत्यैनया सह धर्मश्चर्यतामिति **प्राजापत्यः** पूर्वं लाजाहुतिं हुत्वा गोमिथुनं कन्यावते दद्यात्स **आर्षो** दक्षिणासु नीयमानास्वन्तर्वेद्यृत्विजे स **दैवः** सकामेन सकामायां मिथः संगमात्स **गान्धर्वो** धनेनोपतोष्याऽऽ**सुरः** प्रसह्य हरणाद्रा**क्षसः** सुप्तां मत्तां प्रमत्तां[1] वोपयच्छेदिति स **पैशाच**स्तेषां चत्वारः पूर्वे ब्राह्मणस्य तेष्वपि पूर्वः पूर्वः श्रेयानुत्तरेषामुत्तरः पापीयानत्रापि[2] षष्ठसप्तमौ क्षत्रियधर्मानुगतौ तत्प्रत्ययत्वात्क्षत्रियस्य पञ्चमाष्टमौ वैश्यशूद्राणामयन्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति कर्षणशुश्रूषाधिकृतत्वाद्गान्धर्वमप्येके प्रशंसन्ति सर्वेषां स्नेहानुगतत्वाद्यथा युक्तो विवाहस्तथा युक्ताः प्रजा भवन्तीति विज्ञायते " **इति ।**

**तत्प्रत्ययत्वात्तदधीनत्वात् । अयन्त्रितकलत्रा अनियतकलत्रा विधिविरहि-**

---

१ क. °त्तां वाप° । २ क. °पीयांस्तत्रा° ।

तपरिगृहीतकलत्रा इति यावत् । हिरण्यर्थे । कर्षणाधिकृता वैश्याः शुश्रूषाधिकृताः शूद्राः । पैशाचस्यान्त्यत्वं तु मनुवाक्यसिद्धम् ।

अन्यविवाहासंभवे ब्राह्मणादीनां पैशाचमप्यनुजानाति वत्सः—

" सर्वोपायैरसाध्या स्यात्सुकन्या पुरुषस्य या ।
चौर्येणापि विवाहेन सा विवाह्या रहःस्थिता " इति ॥

यत्तु—" आसुरवदार्षोऽपि पापीयान्क्रयक्रीतत्वाविशेषात् ।
अत एव कश्यपः—

" क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः " इति ॥

यमोऽपि—" कन्याविक्रयिणो मूर्खा रहःकिल्बिषकारिणः ।
पतन्ति नरके घोरे दहन्त्यासप्तमं कुलम् " इति ॥

एतच्चाऽऽत्मार्थं धनग्रहणे । कन्यार्थे तु न दोषः ।

यथाऽऽह मनुः—

" यासां नाऽऽददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं तत्कुमारीणामानृशंस्यं तु केवलम् " इति ॥

आनृशंस्यमपापित्वम् ।

मनुः—" ब्राह्मो दैवस्तथैवाऽऽर्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः " ॥

इत्यष्टौ भेदानुक्त्वा तेषां लक्षणान्यभिधाय तेष्वार्षस्य क्रयक्रीतत्वादधर्म्यत्वमित्यभिप्रेत्याऽऽह—

" पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ।
पैशाचश्चाऽऽसुरश्चैव न कर्तव्यौ कथंचन " इति ॥

ब्राह्मादीनामासुरान्तानां मध्ये ब्राह्मदैवप्राजापत्यास्त्रयो धर्म्याः क्रयाभावात् । आर्षासुरौ द्वावधर्म्यौ क्रयक्रीतत्वात्तयोरप्यासुरः पैशाचवदापद्यपि न कर्तव्यः " इति ।

तन्न । पञ्चानामितिवचनस्य मतान्तरोपन्यासपरत्वात् । कुत एतत् । यतः स्वयमेवोत्तरत्र गोमिथुनस्य शुल्कत्वं मतान्तरेणानूद्य निषेधति—

" आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् ।
अल्पो वाऽपि महान्वाऽपि क्रियते तावतेव सः " इति ।

---

१ क. ग. ड. °रण्यर्थे । २ ख. ग. ड. °नामपि व° ।

गोमिथुनं शुल्कमिति यत्केचिदाहुस्तन्मृषैव । नहि तस्य शुल्कत्वं संभवति। शुल्कं मूल्यमिति पर्यायौ। क्रयसाधनं हि मूल्यं देशकालाद्यपेक्षयाऽल्पं वा महद्वा भवति । प्रकृते तु परिमाणं नियतम् । अतः स आर्षस्तावतैव गोमिथुनेनैव संपद्यते न त्वन्यथाऽतः क्रयविक्रयत्वाभावाद्धर्म्य एवाऽऽर्षः।

अत एव देवलः—

" पूर्वे विवाहाश्चत्वारो धर्म्यास्तोयप्रदानिकाः ।
अशुल्का ब्राह्मणार्हाश्च तारयन्ति द्वयोः कुलम् " इति ॥

आर्षविवाहे नक्षत्रमाहाऽऽपस्तम्बः—

" मघाभिर्गावो गृह्यन्ते " इति ।

आर्षे दुहितृमते मिथुनौ गावौ देयाविति वचनादार्षे विवाहे वरेण दीयमानौ गावौ दुहितृमद्भिर्मघासु गृह्यन्ते। एतदुक्तं भवति। आर्षविवाहं मघास्वेव कुर्यात्, न ब्राह्मादिवन्नक्षत्रान्तरेऽपीति। फल्गुनीभ्यां व्यू(व्यु)ह्यत इति, तत्र वधूः फल्गुन्योरेव व्यू(व्यु)ह्यते नीयते स्वगृहान्नतु तां तत इति वचनाद्ब्राह्मादिवत्तदानीमेवेति सुदर्शनेन व्याख्यातम्।

दुर्विवाहे भोजनादिनिषेधस्तत्प्रायश्चित्तं चोक्तं पारिजाते—

" अधर्म्येषु विवाहेषु भोजनं चानुमोदनम् ।
ताम्बूलं वाहनं चैव वर्जयेत्सर्वथा द्विजः ॥
आसुरे तूपवासः स्याद्गान्धर्वे च त्रिरात्रकम् ।
राक्षसे चैव पैशाचे चरेच्चान्द्रायणं तथा " इति ॥

## प्रतिकूलनिर्णयः ।

अथ प्रतिकूलनिर्णयः स्मृत्यन्तरे—

" वधूवरार्थे घटिते सुनिश्चिते वरस्य गेहेऽप्यथ कन्यकायाः ।
म्रियेत कश्चिन्मनुजोऽथ नारी तदा न कुर्युः खलु मण्डनं ते " इति ॥

घटितं संबन्धः सुनिश्चितो वाचा निश्चितः। वाग्दानविधिना निश्चित इति गोविन्दार्णवे। इदं च सुशब्दाल्लभ्यते।

ज्योतिःसागरे—

" वाङ्निश्चये कृते पश्चात्पितरौ निधनं गतौ ।
तयोस्तत्प्रतिकूलं स्यान्नान्येषां तु कदाचन " इति ॥

---

१ ह. 'यक्रिय' ।

वृद्धवसिष्ठः—" वरवध्वोः पिता माता पितृव्यश्च सहोदरः।
एतेषां प्रतिकूलं स्यान्महाविघ्नप्रदं भवेत् ॥
पिता पितामहश्चैव माता चैव पितामही।
पितृव्यः स्त्री सुतो भ्राता भगिनी चाविवाहिता ॥
एभिरेव विपन्नैश्च प्रतिकूलं बुधैः स्मृतम्।
अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत्" इति ॥

( *चकारात्प्रपितामहः। द्वितीयचकारः प्रपितामहीसमुच्चयार्थः। )

माण्डव्यः—" वाग्दानानन्तरं माता पिता भ्राता विपद्यते।
विवाहो नैव कर्तव्यः स्ववंशहितमिच्छता" इति ॥

तेन तया वा सहेति शेषः। वरपक्षे प्रतिकूले[2] वरार्थं तां न स्वी कुर्यात्। वधूपक्षे प्रतिकूले तस्मै वराय न दद्यादिति विवाहो नैव कर्तव्य इत्यस्यार्थः। न तु विवाह एव न कर्तव्य इति।

संकटे प्रवृत्तिप्रकारमाह मेधातिथिः—

" वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः।
तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत् ॥
पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम्।
प्रवेशनिर्गमौ तद्वत्तथा मुण्डनमण्डने ॥
प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम्।
आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत्" इति ॥

स्मृतिरत्नावल्याम्—

" पितुरब्दमिहाऽऽशौचं तदर्धं मातुरेव च।
मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥
अन्येषां तु सपिण्डानामाशौचं माससंमितम्।
तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते" इति ॥

पित्रोरब्दमिहाऽऽशौचमिति क्वचित्पाठः। अत्र मातृपदं[3] साप-त्नमातृपरमिति केचित्[4]। एतन्मते पित्रोरब्दमित्ययमेव पाठोऽभिमत इति

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. ख. पुस्तकयोर्नास्ति।

१ ङ. वसिष्ठः। २ ङ. °ले तां वरार्थं न°। ३ ख. ग. ङ. °दं सप°। ४ ख. °त्। श्राद्ध-कौमुद्यां तु द्वयोरपीत्युक्तम्। अ°।

गम्यते । द्वयोरपीत्यन्ये । अविशेषादित्याशयः । एतन्मते पितुरब्दमित्येव पाठः । पित्रोरब्दमितिपाठे मुख्यमातुरब्दं सापत्नमातुरब्दार्धम् । पितुरब्दमिति-पाठ उभयोरप्यब्दार्धमेवेति भेदः ।

ज्योतिष्प्रकाशे—

" प्रतिकूलेऽपि कर्तव्यो विवाहो मासमन्तरा ।
शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेत्पुनः " इति ।

स्मृत्यन्तरे—" प्रतिकूले न कर्तव्यं लग्नं यावदृतुत्रयम् ।
प्रतिकूलेऽपि कर्तव्यं केऽप्याहुर्बहुसंप्लवे ।
प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ।
विवाहस्तु ततः पश्चात्तयोरेव विधीयते " इति ।

तयोर्निश्चितघटितयोर्वधूवरयोः । वध्वा वरालाभे वरस्य वध्वलाभे संकटे सति नान्यां वधूमन्यं वरं वा प्रेक्षेदि(ते)ति तात्पर्यार्थः ।

ज्योतिःसागरे—

" दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये ।
प्रौढायामपि कन्यायां नानुकूल्यं प्रतीक्ष्यते " इति ।

अन्यत्रापि—" दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च ।
उदासीनस्थितस्यापि प्रातिकूल्यं न विद्यते ।
संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना ।
शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ।
अकृत्वा शान्तिकं यस्तु निषिद्धे सति दारुणे ।
प्रकरोति शुभं कर्म विघ्नस्तस्य पदे पदे " इति ।

अस्मिन्वाक्ये सामान्यतः शुभं कर्मेतिश्रवणादुपनयनस्यापि विनायक-शान्तिपूर्वकमेवानुष्ठानमिति केचित् । अन्ये तु शुभकर्मशब्दो विवाह एवोप-संह्रियते तेन शान्तिपूर्वको विवाह एव भवति । उपनयनं तु नैव भवतीत्याहुः । उपनयनं तु शान्तिमन्तरेणापि भवतीति परे ।

वसिष्ठः—" प्रतिकूले तु संप्राप्ते विवाहं नैव कारयेत् ।
अन्ते दोषविनाशाय कुर्याच्छान्तिमिमां शुभाम् " इति ।

१ ग. ङ. °पीत्युक्तम् । अ° । २ ख. °यः । ज्यो° । ३ क. ग. प्रतीक्षते ।

स्मृतिचन्द्रिकायाम्—

" कृते वाङ्निश्चये पश्चान्मृत्यर्मर्त्यस्य गोत्रिणः।
तदा न मङ्गलं कार्यं नारीवैधव्यदं ध्रुवम् " इति।

अन्यत्रापि—" वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः।
तदोद्वाहो नैव कार्यः स्ववंशक्षयदो यतः " इति।

अत्र यद्यपि कश्चिदिति मृतिर्भवति कस्यचिदित्यविशेषेणोक्तं[1] तथाऽपि पितामह्यादीनामिव मातामह्यादीनामपि मरणस्य प्रतिकूलदोषनिमित्तत्वेन क्वचिदकीर्तनात्, अविवाहिताया भगिन्या इव विवाहिताया मरणस्य तथात्वानुक्तेः, मेधातिथिवाक्ये स्वगोत्रिणामिति चन्द्रिकावाक्ये मर्त्यस्य गोत्रिण इति च कीर्तनात्, वध्वा वरस्य वा सगोत्रसपिण्डेषु त्रिपुरुषान्तर्गते मर्त्ये मृते प्रतिकूलदोष इति मन्तव्यम्। स्त्री वरस्य द्वितीयादिविवाहसमये पूर्वोढा। सुतस्तस्यां पूर्वोत्पन्नः। एतत्पौत्रोपलक्षणम्। एवं पितृव्यग्रहणं तत्पुत्रस्य। एवं च वरमारभ्य जनकत्रिपुरुषी[3] जन्या त्रिपुरुषी कूटस्थमारभ्य संतानभेदे च त्रिपुरुष्यत्र बोद्धव्या। वधूवरयोः समानगृहे तन्मरणे कंचित्कालं प्रतीक्ष्यैव विवाह इति तदा न कुर्युरित्यादिशब्दैर्बोध्यते। तयोस्तत्प्रतिकूलं स्यादिति कालप्रतीक्षाशान्तिभ्यामसमाधेयो दोषो द्वयोर्युगपन्मरणज इत्याशयः। अत एवोक्तं नान्येषां तु कदाचनेति। अन्येषां सपिण्डानां तयोरप्येकैकमरणजस्तु समाधेय इत्याशयः।

वृद्धवसिष्ठवाक्ये चतुर्णां मरणस्य महाविघ्नप्रदत्वकथनं तत्र प्रतीक्षासहिता केवला वा विनायकशान्तिरितिकथनार्थम्। अत एव तद्विधिवाक्यशेषे शान्त्यकरणे पदे पद इति विघ्नस्य महत्त्वं प्रदर्शितम्। एभिरेव त्रिपक्षैरिति कालप्रतीक्षासहितायाः श्रीपूजनादिशान्तेर्निमित्तमेतन्मरणमेवेत्याशयः। अत एव माण्डव्यवाक्ये नैव कर्तव्यो निमित्तानन्तरमिति व्याख्येयम्। एवं वृद्धवसिष्ठवाक्यमपि।

प्रतीक्षा च सामान्यतः संवत्सरमृतुत्रयं मासमात्रं वेति पक्षत्रयं मेधातिथिवाक्यसहितस्मृत्यन्तरवाक्याद्बोद्धव्यम्। रत्नावलीवाक्य आशौचशब्देन प्रतिकूलकृतं विवाहानधिकारमात्रं प्रतीक्षातात्पर्यकं बोध्यम्।

महागुरुव्यतिरिक्तमरणकृतप्रतिकूलाभावे प्रथमाब्देऽपि सपिण्डीकरणमा-

१ क. ग. °दोषणो° । २ ख. °स्य । वधू° । ३ ग. °षी कू° ।

सिकापकर्षं कृत्वा विवाहो भवति। महागुरुमरणकृतप्रतिकूलाभावे तु वृद्धिनिमित्तमन्तरेण सपिण्डीकरणापकर्षे वृद्धिदैवपित्र्येष्वनधिकार एवेति द्रष्टव्यम्।

तत्र पितुर्मरणे संकटतारतम्येनानन्तरोक्तं पक्षत्रयम्। मातुर्मरणे संवत्सरार्धं मासमात्रं वेति पक्षद्वयम्। भार्यामरणे मासत्रयं मासमात्रं वेति। भ्रातृमरणे पुत्रमरणे च सार्धमासं मासमात्रं वेत्येवं पक्षद्वयम्। पितामहादिसपिण्डान्तरमरणे तु मासमेव प्रतीक्षेति व्यवस्था। यदि गुणवत्तरमातृमरण ऋतुत्रयप्रतीक्षया न परितोषस्तदा संवत्सरप्रतीक्षाऽपि कार्या।

एवं गुणवत्तरभार्यादिमरण ऋतुत्रयप्रतीक्षाऽपीत्याशयेन तयोरपि पक्षयोः सामान्यविध्युपपत्तिः।

पितृमातृपितृव्यसोदराणां चतुर्णां मरण उक्तव्यवस्थया प्रतीक्षान्ते विनायकशान्तिः। अन्यमरणे तदन्ते शान्त्यन्तरम्। एतच्च शान्तिद्वयं शान्तिरत्नमालायां वक्ष्यते।

यदा त्वतिसंकटवशेन सर्वत्र निमित्ते मासादिकप्रतीक्षाया असंभवस्तदा तन्मध्येऽपि[3] किंचित्कालं प्रतीक्ष्योक्तव्यवस्थयाऽल्पतरां शान्तिं कृत्वा गां दत्त्वा वाग्दानादि पुनश्चरेदिति ज्योतिष्प्रकाशवाक्यकृतो विशेषः। न तु क्वचिदपि प्रतिकूले पूर्वाशौचादिनिमित्तेन निवृत्ताशौचस्यापि सद्यो विवाहे प्रवृत्तिरुचिता। यथा सगोत्रसपिण्डे पुरुषत्रयपर्यन्तमेव प्रतिकूलस्य निषेधनिमित्तत्वम्। एवं प्रवेशमुण्डनयोर्निर्गममण्डननिषेधनिमित्तत्वमपि तेष्वेतावत्पर्यन्तमेवेति पुरुषत्रयेतिमेधातिथिवाक्यार्थः[6]। स्वगोत्रिणामाचतुर्थमित्यनुषङ्गलभ्यार्थसिद्ध्यै प्रेतकर्माण्यनिर्वर्त्येत्यस्य भिन्नार्थकस्यापि वाक्यस्यानन्तरं पाठः। कुले चतुष्पुरुषपर्यन्तं प्रेतोद्देशेन विहितानि कर्माण्यनिर्वर्त्यासमाप्याऽऽभ्युदयिकं नाऽऽचरेदित्यर्थः। प्रेतशब्दोद्देशविशिष्टानि कर्माणीत्येतादृशार्थस्तु सपिण्डीकरणोत्तरमासिकासंग्रहापत्तिग्रस्तत्वात्परित्यक्तः।

एतेषामुत्पत्तिवेलायां प्रेतोद्देशेन विहितानामपि तच्छब्दोद्देशरहिता पुनरावृत्तिः शाट्यायनिनोक्ता—

" सपिण्डीकरणादर्वागपकृष्य कृतानि तु।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् " इति॥

---

१ ग. 'कानामप'। २ ग. 'णां च पि'। ३ क. 'पि कंचि'। ४ ग. 'शमण्ड'। ५ ग. 'ममुण्ड'। ६ ग 'र्थः। सगो'।

वृद्ध्युत्तरनिषेधनादिति यद्यपि हेतुस्तथाऽपि सर्व्यं हि मनुष्याः प्रथममश्नत इतिवदप्राप्तप्रापकत्वाद्विधिः कल्पनीय इति नवीनाः।

कात्यायनः—" निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत्।
अयातयामं मरणं न भवेत्पुनरस्य तु " इति॥

वृद्धिकर्मोत्तरं मासिकानुष्ठाने मृतस्य मरणमयातयामं भवेत्। नूतनमिव भवेत्। तच्च माङ्गलिककर्मणः पूर्वं मृतस्य माङ्गलिककर्मोत्तरमापद्यमानमनुचितमिति भाव इति नवीनाः।

केचिन्नवीनाः—" भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः "

इति लघुहारीतवाक्ये भ्रातृशिष्याद्युक्तेर्न नान्दीश्राद्धेज्यदेवतामात्रपरोऽपकर्ष इति। अस्मिन्मते भ्रात्रादिमरणे तत्सपिण्डनमासिकानामपकर्षं विना न नान्दीश्राद्धमिति।

अन्ये नवीनास्तु यस्याऽऽभ्युदयिकश्राद्धान्तर्गतदेवताभूतस्य सपिण्डनं विना न तन्निर्वहति तस्यैवेह वाक्ये सपिण्डनं विधीयते, आकाङ्क्षितविधानात्। अन्यथा भिन्नजातीयगुरोरपि सपिण्डनं शिष्येण कार्यं स्यादित्याहुः। एतस्मिन्मते तु तद्विनाऽपि भवतीति भेदो द्रष्टव्यः।

सकलदाक्षिणात्यप्रभृत्यनेकशिष्टाचारसंवादान्नान्दीश्राद्धेज्यदेवतामात्रपरोऽपकर्ष इति द्वितीयमतमेव युक्तम्।

प्रेतकर्माण्यनिर्वर्त्येत्यत्र यद्यपि प्रेतकर्मभिः सहाऽऽभ्युदयिकक्रियाया मङ्गलापरपर्यायायाः समानकर्तृकत्वं प्रतीयते तथाऽपि तदसति कर्त्रन्तरे मुख्यं सति तु प्रेतकर्मसु प्रयोजककर्तृकतामादायोपपादनीयम्। इत्थमेव हि—" वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानीयो वा द्विर्लाजानावपति " इत्याश्वलायनसूत्रे वृत्तिकृदादिभिस्तु तदुपपाद्यते, विवाहहोम उपस्तरणस्य वरकर्तृकत्वं लाजावपनस्य भ्रात्रादिकर्तृकत्वं विच्छिन्नसंधानार्थे तु तस्मिँल्लाजहोमस्यापि वरकर्तृकत्वं वदद्भिः।

एवं नान्दीश्राद्धदेवतात्वसिद्ध्यर्थं सपिण्डीकरणापकर्षपरत्वेन पराभिमतवचनेऽपि समानकर्तृकत्वमित्थमेव स्वीकार्यम्।

---

१ क. ॰ति। एतस्मि॰। २ ख. ङ. ॰तन्म॰। ३ ख. ॰स्थानो वा। ४ क. ख. ॰र्तृत्वं। ५ क. ख. ॰ल्लाँजाहो॰।

तद्यथा शाट्यायनिः—

" प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा ।
अपकृष्यापि कुर्वीत कर्तुं नान्दीमुखं द्विजः " इति ॥

लघुहारीतोऽपि—" भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः " इति ॥

मृतस्य कन्यादाने हि तस्य ज्येष्ठकनिष्ठभ्रातरावधिकारिणौ कन्यायाः पितृपितामहभ्रात्रभावात्संभवतः ।

" पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः " इतियाज्ञवल्क्यवचनात् ।

तस्य सपिण्डीकरणे तु कनिष्ठस्यैवाधिकारो न ज्येष्ठस्य ।

" न पुत्रस्य पिता दद्यान्नानुजस्य तथाऽग्रजः ।
अपि स्नेहेन कुर्यातां सपिण्डीकरणं विना "

इति सपिण्डीकरणस्य तं प्रति विशिष्य निषेधात् । अतो ज्येष्ठस्य सपिण्डीकरणे प्रयोजककर्तृकत्वं कनिष्ठस्य मुख्यकर्तृकतामङ्गीकृत्यैवोक्तवचनयोः समानकर्तृकत्वमुपपादनीयम् । एवं चानयोर्वचनयोर्देवतात्वसिद्धिप्रयोजनासंकीर्तनाद्विधेयार्थैक्याच्च मूलैक्यलाघवानुरोधेन प्रेतकर्माण्यनिर्वर्त्येति कृष्णभट्टीप्रयोगोदाहृतवचनार्थपरत्वं स्वीकर्तुमुचितमिति कौस्तुभे ।

अन्यच्च तत्रैव । पितामहे प्रपितामहे वाऽकृतसपिण्डने सति पितरि मृत औचित्येन तयोः सपिण्डीकरणोत्तरं पितुः सपिण्डीकरणकर्तव्यतायां प्राप्तायामपि यदा तथाऽनुष्ठानेन पितुः सपिण्डीकरणकालातिक्रमो भवति तदा न्यायतः कालातिक्रमेण तथैव तत्कर्तव्यतायां प्राप्तायां वचनेनाकृतसपिण्डीकरणाभ्यामपि ताभ्यां पितुः सपिण्डीकरणं कर्तव्यतया विहितम् ।

यथाऽऽह कात्यायनः—

" असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्यादिति शातातपोऽब्रवीत् ॥
पापिष्ठमपि शुद्धेन शुद्धं पापकृताऽपि वा ।
पितामहेन पितरं संस्कुर्यादिति निश्चयः " इति ॥

असंस्कृतावकृतसपिण्डीकरणौ । पूर्वौ पितामहप्रपितामहौ । पापिष्ठमकृतसपिण्डनं पितरं शुद्धेन कृतसपिण्डनेन पापकृताऽकृतसपिण्डनेन वा पितामहेन सह शुद्धं निवृत्तप्रेतावस्थं कुर्यादित्यर्थः ।

एवं कृते दर्शश्राद्धमपि तादृशाभ्यां सह कर्तव्यमित्यपि तेनैवोक्तम्—

" पितुःसपिण्डतां कृत्वा कुर्यान्मासानुमासिकम् " इति।

एवं च दर्शश्राद्धविकृतित्वान्नान्दीश्राद्धेऽपि तादृशयोर्देवतात्वसंभवेऽपि माङ्गलिकविवाहाद्यनुरोधेन तयोः सपिण्डीकरणं कृत्वैव माङ्गलिकं कर्म कार्यं तयोश्चतुष्पुरुषान्तरगतत्वात्।

अत एव शुभागम एव सपिण्डीकरणापकर्षनिमित्तत्वेन कालादर्शे पठ्यते—

" एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासि वा।
षष्ठे वैकादशे वाऽब्दे संपूर्णे वा शुभागमे॥
सपिण्डीकरणस्येत्थमष्टौ कालाः प्रकीर्तिताः।
साग्नौ कर्तर्युभावाद्यौ प्रेते साग्नावनन्तरः॥
अनग्नेस्तु द्वितीयाद्याः सप्त कालाः प्रकीर्तिताः " इति॥

" अनन्तरस्त्रिपक्षः " इति " शुभस्य विवाहादेरागम उपस्थिते सति " इति च तत्रैव व्याख्याय मूलवाक्योदाहरणमित्थं कृतम्—

" महाभारते—' सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान् '।

इत्युपक्रम्य ' एकादशेऽपि वा मासि मङ्गले स्यादुपस्थिते ' इति " [इति।]

" अत्र च शुभमङ्गलशब्दाभ्यां विवाहाद्येवोक्तमिति प्रतीतेर्न नान्दीश्राद्धप्रतीति-[२]र्न सुतरां तद्देवतात्वस्य " इत्यपि तत्रैव।

सपिण्डनापकर्षे तत्पूर्वतनमासिकानामवशिष्टानामपि निवृत्तिः। तदुत्तरकर्तव्यमासिकानामप्यवशिष्टानां निवृत्तिर्वचनादिति द्रष्टव्यम्।

" प्रेतकर्माण्यनिर्वर्त्य " इति वाक्यात्,

" भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः "॥

इति वाक्याच्च चतुष्पुरुषपर्यन्तं यस्य कस्यापि सगोत्रसपिण्डस्य तत्पुत्रे प्रोषितेऽपि व्यवहितोऽपि सपिण्डः प्रेतस्य प्रेतश्राद्धसपिण्डीकरणमासिकानि कृत्वैव वृद्धिश्राद्धं कुर्यादित्यर्थः।

" प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा।
अपकृष्यापि कुर्वीत कर्तुं नान्दीमुखं द्विजः "॥

इति हेमाद्रिलिखितशाट्यायनिवचोऽप्येतदर्थकमेव, प्रेतकर्मणां यावतः पुरु-

---

१ क. व्यमपि। २ ख. र्नत°।

षान्प्रति नान्दीमुखानुरोधेनावश्यकर्तव्यता विहिता तान्प्रत्येवापकर्षविधावपि शब्दसामञ्जस्यात् । सपिण्डीकरणस्य सत्यपि प्रेतश्राद्धत्व आहिताग्न्यादिविषयत्वेन व्यवस्थापितत्रिपक्षादिकालबाधेनाप्यपकर्षसिद्ध्यर्थं पृथग्ग्रहणम् ।

" सपिण्डीकरणादर्वागपकृष्य कृतानि तु ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् "

इति शाट्यायनिवचोऽपि तावत्पुरुषविषयमेव पुनरपीत्युक्तेस्तान्प्रत्येव संभवादिति कौस्तुभे ।

ज्वरितस्य यावत्स्वास्थ्यं मङ्गलं न कार्यम् ।

तथा च गर्गः—" ज्वरस्योत्पादनं यस्य शुभं तस्य न कारयेत् ।
दोषनिर्गमनात्पश्चात्स्वस्थो धर्मं समाचरेत् " इति ॥

कस्यचित्कुलजस्य शरीरेऽतिदारुणज्वरोत्पत्तौ निश्चयोऽपि न कार्यः ।

तथा च स एव—

" केचिदूचुर्गृहस्थस्य कस्यचिद्दारुणो ज्वरः ।
तावन्मङ्गलकार्यस्य न कार्यो निश्चयो बुधैः " इति ।

इति प्रतिकूलविधिः ।

## अथ रजोदोषनिर्णयः ।

माधवीये—" प्रारम्भात्प्राग्विवाहस्य माता यदि रजस्वला ।
निवृत्तिस्तस्य कर्तव्या सहत्वश्रुतिचोदनात् " इति ॥

तस्य रजोदोषस्य निवृत्तिः कर्तव्या कर्मार्थे शुद्धिः प्रतीक्षणीयेत्यर्थः । विवाहारम्भात्प्राग्यदि माता रजस्वला भवेत्तदा तस्याः शुद्धौ सत्यामेव विवाहः कर्तव्यो न तु तां परित्यज्येति तात्पर्यार्थः । अत्र हेतुमाह— सहत्वश्रुतिचोदनादिति । यद्यप्यत्र सामान्यतो निवृत्तिस्तस्य कर्तव्येत्युक्त्या चतुर्थदिवसे रजोनिवृत्तौ सत्यां चतुर्थदिनेऽपि विवाहः कर्तव्य इति प्राप्तं तथाऽपि—

" दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति " ।

इति वचनेन पञ्चमदिन एव सर्वकर्माधिकारस्योक्तत्वात्तद्दिनमारभ्यैव विवाहेऽधिकारो न तु चतुर्थदिनमारभ्यापीति ज्ञेयम् ।

१ क. न च ।

**प्रारम्भशब्दार्थो विष्णुनोक्तः—**

" प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया " इति ॥

**नान्दीमुखं नान्दीश्राद्धम्। विवाहादावित्यादिपदेनोपनयनादि गृह्यते। पाकपरिक्रिया पाकारम्भः। पाकप्रोक्षणमिति केचित्।**

**" प्रारब्धे सूतकं न स्यात् " इतिवचने सूतकमिति मृतकस्याप्युपलक्षणम्।**

**मेधातिथिः—**" चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि।
भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ॥
वध्वा वरस्य वा माता भवेद्यदि रजस्वला।
तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ॥
उद्वाहव्रतचूडासु माता यदि रजस्वला।
तदा न मङ्गलं कार्यं शुद्धौ कार्यं शुभेप्सुभिः " इति ॥

**गर्गोऽपि—**" यस्योद्वाहादिमाङ्गल्ये माता यदि रजस्वला।
तदा न तत्प्रकर्तव्यमायुष्क्षयकरं यतः " इति ॥

**एतेषु वचनेष्वविशेषात्सापत्नमातुरपि ग्रहणम्।**

**बृहस्पतिः—**" वैधव्यं च विवाहे स्याज्जडत्वं व्रतबन्धने।
चूडायां च शिशोर्मृत्युर्विघ्नं यात्राप्रवेशयोः " इति ॥

**यदि विवाहादिप्रारम्भोत्तरं रजः, प्रारम्भात्प्रागपि रजसि सर्वथा मुहूर्तान्तरालाभो वा, तदा शान्तिं कृत्वाऽनन्तरं कर्म कार्यमेव।**

**यथोक्तं कपर्दिकारिकायाम्—**

" सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकम्।
प्राप्ते कर्मणि शुद्धा स्यादितरस्मिन्न शुध्यति ॥
अलाभे सुमुहूर्तस्य रजोदोष उपस्थिते।
श्रियं संपूज्य तत्कुर्यात्पाणिग्रहणमङ्गलम् ॥
हैमीं माषमितां पद्मां श्रीसूक्तविधिनाऽर्चयेत्।
प्रत्यृचं पायसं हुत्वाऽभिषिच्य शुभमाचरेत् " इति ॥

**श्लोकभेदेन प्राप्तपदोक्तारम्भस्य मुहूर्तान्तरालाभस्य च श्रवणान्न परस्परसापेक्षत्वमिति कौस्तुभे।**

---

१ क. ग. 'णमिति केचित्। बृ'।

सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकमितिवचनप्रतिपादिता शुद्धिश्चतुर्थदिवसविषयिणी द्रष्टव्या। अत्र शुद्धिशब्देनाधिकार उच्यते। तथा च—अधिकाराय गां दद्याद्धोमपूर्वकमित्यर्थो भवति। होमपूर्वकमिति विहितो होमः कुश्मा(ष्मा)ण्डैरेव, कपर्दिकारिकासु पूर्वत्र तस्यैवोपक्रमात्।

रजस्वलाविषये—

"दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति"।

इति वचनसिद्धस्य चतुर्थदिवसेऽनधिकारस्य बाधोऽनेन क्रियते।

सूतिकाविषये तु "विंशतिरात्रं पुत्रप्रसूर्मासेन स्त्रीजननी" इत्यनेन प्रतिपादितस्यानधिकारस्यात्र बाधः।

इयं वैधी शुद्धिः संकटविषये द्रष्टव्या।

रजोदर्शनादिसंभावनायां नान्दीश्राद्धस्यापकृष्यानुष्ठाने विधिः स्मृत्यन्तरे—

"एकविंशत्यहर्यज्ञे विवाहे दश वासराः।
त्रिषट्चौलोपनयने नान्दीश्राद्धं विधीयते" इति॥

चौले त्रयो वासरा उपनयने षड्वासरा इत्यर्थः।

इति रजोदोषनिर्णयः।

---

## अथ विवाह आशौचपाते निर्णयः।

याज्ञवल्क्यः—"दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते" इति॥

विष्णुः—"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम्" इति॥

प्रारम्भशब्दार्थस्तु प्रागेवोक्तः।

विवाहे सद्यः शौचं केषामित्यपेक्षायां ब्रह्मपुराणे सद्यःशौचं प्रकृत्य—

"दातुः प्रतिग्रहीतुश्च कन्यादाने च नो भवेत्।
विवाहयिष्णोः कन्याया लाजहोमादिकर्मणि" इति॥

अत्र दातृप्रतिग्रहीतृग्रहणं संस्कार्यसंस्कारकयोरुपलक्षणम्। चकाराद्दातृपत्नीकन्ययोर्ग्रहणम्।

---

१ क. ख. ङ. लाजाहो°।

( विवाह आशौचपाते निर्णयः )

आरम्भाभावेऽप्यग्रे मुहूर्तान्तरालाभे सामग्र्यां च कृतायां सूतकिनोऽप्यधिकारोपायमाह पारिजाते विष्णुः—

" अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद्घृतम्।
गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतकी " इति ॥

अनारब्धविशुद्ध्यर्थमित्यनेनैव सिद्धे ततः शुध्यतीति पुनर्वचनमतिसंकटे विवाहाद्युपयोगिपाकपरिवेषणादावपि शुद्धिज्ञापनार्थमिति नवीनाः। सूतकीति जननाशौचवन्तं प्रत्येवेदं प्रवर्तत इत्यपि केचिन्नवीनाः।

संग्रहे—" संकटे समनुप्राप्ते सूतके समुपस्थिते।
कूश्मा(ष्मा)ण्डीभिर्घृतं हुत्वा गां च दद्यात्पयस्विनीम् ॥
चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत्।
यदैव सूतकप्राप्तिस्तदैवाभ्युदयक्रिया " इति ॥

एवं शुद्धिपूर्वकविवाहाद्यनुष्ठाने तदङ्गत्वेन संकल्पितान्नभोजने न दोष इत्याह बृहस्पतिः—

" विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके।
पूर्वसंकल्पितान्नेषु न दोषः परिकीर्तितः " इति ॥

मृतकसूतकमध्ये विवाहाद्यनुष्ठान उक्तशुद्धिपूर्वकमारब्ध इति पूर्वार्धार्थः।

नान्दीश्राद्धोत्तरं सूतकादौ विवाहाद्यारम्भोत्तरमपि संकल्पितान्ने विशेषः षट्त्रिंशन्मते—

" विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः " इति ॥

परैरसगोत्रैः।

स्मृतिकौमुद्यामपि—

" विवाहोत्सवयज्ञेषु आरब्धे सूतकं यदि।
साङ्गं तत्कर्म कर्तव्यमन्नदानादिकं परैः " इति ॥

पूर्वसंकल्पितान्नभोजनसमये सूतकप्राप्तौ विशेषः षट्त्रिंशन्मते—

" भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः " इति ॥

भोक्तृभिर्भुक्तशेषस्त्याज्यः पक्वशेषः सूतकिभिर्भोक्तव्य इत्याशयः।

---

१ क. ग. ङ. कूस्माण्डै॰। २ ङ. ॰मारभेत्।

" भोजनार्थे तु संभुक्ते यदि कश्चिन्म्रियेत वै ।
सर्वं भुक्तोच्छिष्टशेषं परित्यज्य समाहिताः ॥
आचम्य परकीयेण तोयेन शुचयो द्विजाः " इति ब्रह्मपुराणात् ।

बहुन्नसंभरणसंपादिनां धारणाशक्तावाह विष्णुः—

" न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतसंभारयोः " इति ।

देवप्रतिष्ठाविवाहयोः पूर्वसंभृतसामग्रीकयोरुपक्रमात्प्रागपि तत्कर्तुराशौचं न भवतीत्यर्थः । एतदुक्तं भवति, यावति काले संभृतबहुसंभारधारणं कर्तुं शक्यते तावत्कालमध्ये प्रतिष्ठाविवाहाङ्गभूतं कालान्तरं यत्र न लभ्यते तद्विषय एवायं संकल्पात्प्रागाशौचाभाव इति ।

सिन्धुभट्टीये बौधायनः—

" स्थालीपाकात्पूर्वं षध्वा यदि मृतिः स्यात्तामन्वारभ्य स्थालीपाकं कृत्वौपासनाग्निना दाहयेद्वरस्य मातापित्रोर्यदि मृतिः स्यादुत्तरशेषं समाप्य पश्चात्पैतृमेधिकमाचरेदसावेव ज्येष्ठश्चेत्कङ्कणं कन्याहस्ते बद्ध्वा तद्विपरीतमाचरेत् " इति ।

इति विवाह आशौचनिर्णयः ।

## अथ समानक्रियाविचारः ।

सारावल्याम्—" एकोदरप्रसूतानामेकस्मिन्वत्सरे सदा ।
विवाहं नैव कुर्वन्ति कुर्वन्ति तु ततोऽन्यथा " इति ॥

ज्योतिर्विवरणे—" एकोदरयोर्वरयोरेकदिनोद्वाहतो भवेन्नाशः ।
नद्यन्तर एकदिने केऽप्याहुः संकटे च शुभम् " इति ।

शार्ङ्गधरीयेऽपि—" नद्यन्तरेऽपि शुभदं पृथुशैलरोधे " इति ।

स्मृत्यन्तरे—" विवाहस्त्वेकजातानामेकस्मिन्नुदये कुले ।
नाशं करोत्येकवर्षे स्यादेका विधवा तयोः " इति ।

उदयो लग्नम् ।

पारिजाते गर्गः—" भ्रातृयुग्मे स्वसृयुग्मे भ्रातृस्वस्रोश्च युग्मके ।
न जातु मङ्गलं कार्यमेकस्मिन्मण्डपेऽहनि " इति ।

---

१ ग. सर्वे । २ ङ. पूर्वे सं° । ३ क. ग. ङ. °योः सं° । ४ ग. °ति । शिशोभ° ।

भ्रातृयुग्मस्य स्वसृयुग्मस्य भ्रातृस्वसृयुग्मस्य चैकस्मिन्नहन्येकस्मिन्मण्डपे मण्डनं न कुर्यादित्यर्थः। एतच्च वचनं सारावलीवचनेन समानोदरविषयनिषेधस्य प्राप्तत्वात्तद्भिन्नविषयम्।

मदरत्ने नारदः—"एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः।
न समानक्रियां कुर्यान्मातृभेदे विधीयते" इति।

न समानक्रियामित्यनेन द्वयोश्चौले द्वयोर्व्रतबन्धौ द्वयोर्विवाहौ वा न कुर्यादिति बोध्यते। मातृभेदे विधीयत इत्येतेनैकस्य पुंसो विवाहद्वयमप्येकदिने निषिद्धं मातृभेदाभावात्।

अन्यच्च[1] ज्योतिर्ग्रन्थे—

"नैकस्मिन्वत्सरे कार्यौ गेहोद्वाहौ कथंचन" इति।

गेहशब्देन गेहारम्भः[2] प्रवेशश्च गृह्यते।

विशेषमाह स एव—"पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये।
न कार्यं व्रतमुद्वाहान्मङ्गले नाप्यमङ्गलम्।
विवाहश्चैव कन्यानां षण्मासाभ्यन्तरे यदि।
असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत्" इति।

मङ्गलं विवाहादि। अमङ्गलं श्राद्धादि।

ज्योतिर्निबन्धे—"मातृयज्ञक्रियापूर्वं ज्येष्ठं कृत्वा तु मङ्गलम्।
ऋतुत्रयं पुनर्यावन्न कुर्याल्लघुमङ्गलम्" इति।

ज्येष्ठमङ्गलं(ले) विवाहोपनयने। लघुमङ्गलं चौलादि। अनेन वचनेन समावर्तनमपि निषिध्यते तस्यापि लघुमङ्गलत्वादिति केचित्। अन्ये तु पित्रादिकर्तृकपुत्रादिसंस्कारपरं न तु स्वकर्तृकस्वसंस्कारपरम्। समावर्तनस्य स्वकर्तृकत्वान्नायं निषेधस्तत्रेति प्राहुः। अत्र प्रमाणाभावाच्चिन्त्यमेतत्। एवं च विवाहोत्तरमुपनयनोत्तरं वा, ऋतुत्रयादर्वाक्चौलं न कार्यमित्युक्तं भवति।

तथा च मदनरत्नेऽत्रिः—

"कुले ऋतुत्रयादर्वाङ्मण्डनान्न तु मुण्डनम्।
प्रवेशान्निर्गमं चैव न कुर्यान्मङ्गलत्रयम्।
पुत्रीपरिणयादूर्ध्वं पुत्रस्योद्वाहनक्रिया।
न दुष्टा स्यान्मातृभेदे गृहभेदेऽपि चैव हि" इति।

---

१ क. ख. ँच–" नै०। २ ङ. गृहारम्भः।

अत्र कुलं पुरुषत्रयपर्यन्तमेव ।

तथा च मेधातिथिः—

" पुरुषत्रयपर्यन्तं प्रतिकुलं स्वगोत्रिणाम् ।
प्रवेशनिर्गमौ तद्वत्तथा मुण्डनमण्डने " इति ।

मण्डनमुण्डनशब्दार्थः कात्यायनेनोक्तः—

" मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मण्डनम् ।
चौलं मुण्डनमित्युक्तं वर्जयेद्वरणात्परम् ।
मौञ्जी चोभयतः कार्या यतो मौञ्जी न मुण्डनम् " इति ।

चौलस्य मुण्डनप्रधानत्वादिति तदाशयः । मौञ्ज्यां मुण्डनमङ्गं न प्रधान-मिति मौञ्जी न मुण्डनमित्यस्याऽऽशयः । वरणात्परं कन्यावरयोर्वरणोत्तरं कन्यावरयोर्वरणप्रभृतीति यावत् ।

प्रवेशनिर्गमशब्दार्थः कात्यायनेनोक्तः—

" पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः " इति ।

संहितासारावल्याम्—

" न मण्डनान्मुण्डनमूर्ध्वमिष्टं न पुत्रयोर्मण्डनमेकवर्षे ।
न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुः प्रकुर्यात् " इति ।

मदनरत्ने वसिष्ठः—

" न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुः प्रकुर्यात् ।
न मण्डनाच्चापि हि मुण्डनं च गोत्रैकतायां यदि नाब्दभेदः ।
एकोदरभ्रातृविवाहकृत्यं स्वसुर्न पाणिग्रहणं विधेयम् ।
षण्मासमध्ये मुनयः समूचुर्न मुण्डनं मण्डनतोऽपि कार्यम् " इति ।

मिहिरः—" पुत्रोपनयनादूर्ध्वं षण्मासाभ्यन्तरं तथा ।
पुत्रोद्वाहं न कुर्वीत विवाहाद्व्रतबन्धनम् " इति ।

एतदपवादस्तत्रैव—

" ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् ।
तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते " इति ।

अत्र तुशब्देन विवाहभिन्नमेकोदरविषयं मङ्गलद्वयमब्दभेदेऽपि न भव-तीति ज्ञाप्यते ।

---

१. अ. ग. ङ. °त्रतुश° ।

सारावल्याम्—

" फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने ।
भेदादब्दस्य कुर्वीत नर्तुत्रयविलङ्घनम् " इति ।

संकटे गर्गः—" पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् ।
पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः " इति ।

परिणयो विवाहः ।

कपर्दिकारिकाऽपि—

" उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यन्तरस्योद्वहनं कदाऽपि ।
यावच्चतुर्थं दिनमत्र सर्वं समाप्य चान्योद्वहनं विदध्यात् " इति ।

अत्र चतुर्थदिने कश्यपः—

" मौञ्जीबन्धस्तथोद्वाहः षण्मासाभ्यन्तरेऽपि वा ।
पुत्र्युद्वाहं न कुर्वीत विभक्तानां न दोषकृत् " इति ।

अत्रोत्तरत्र पुत्र्युद्वाहं न कुर्वीतेति श्रवणात्पूर्वत्रोद्वाहः पुत्रस्य द्रष्टव्यः । अत्रै-वमर्थः—मौञ्जीबन्धस्तथोद्वाहः षण्मासाभ्यन्तरेऽपि कर्तव्यः, परं तु षण्मासाभ्यन्तरे पुत्रोद्वाहात्परं पुत्र्युद्वाहं न कुर्वीत, यदि विभक्ता भ्रातरस्तदा षण्मासाभ्यन्तरे पुत्रोद्वाहोत्तरं पुत्र्युद्वाहकरणे न दोष इति । एतच्चातिसंकटे द्रष्टव्यम् ।

यत्तु ज्योतिर्निबन्धे मेधातिथिः—

" पृथङ्मातृजयोः कार्यो विवाहस्त्वेकवासरे ।
एकस्मिन्मण्डपे कार्यः पृथग्वेदिकयोस्तथा ।
पुष्पपट्टिकयोः कार्यं दर्शनं न शिरस्थयोः ।
भगिनीभ्यामुभाभ्यां च यावत्सप्तपदी भवेत् " इति,

तत्कर्तृभेदाभिप्रायम् । कार्य इति कर्मप्रत्यये द्वाभ्यां त्रिभिरित्यन्वयसंभवात् । उदाहृतगर्गवाक्ययोः कपर्दिवाक्ये चैककर्तारं प्रति निषेधो ज्ञायते । कुर्यात्कुर्वीत न पिता विदध्यादितिशब्दैस्तथैव प्रतीतेः । अतश्च द्वाभ्यां कर्तृभ्यामेकस्मिन्नपि लग्न एकस्मिन्नपि गृहे भिन्नोदरयोर्विवाहः कार्यः । कर्तृभेदेनैव मण्डपप्रतिष्ठादिभेदः । एकः कर्ता तु दिनचतुष्टयेन पूर्वं विवाहं समाप्योत्तरं कुर्यात् । अतिसंकटे त्वेकस्मिन्नपि दिने मण्डपदेवताप्रतिष्ठाद्यभेदेऽपि गृहभेदेन वेति व्यवस्था बोध्या ।

तथा च वसिष्ठः—

" द्विशोभनं त्वेकगृहेऽपि नेष्टं शुभं तु पश्चान्नवभिर्दिनैस्तु ।
आवश्यकं शोभनमुत्सवो वा द्वारेऽथवाऽऽचार्यविभेदतो वा " इति ।

अत्रोत्तरार्धं भिन्नोदरसाधारणं ज्ञेयम् ।

चतुर्थदिनादर्वाग्विषये वसिष्ठः—

" एकलग्ने द्विलग्ने वा द्वे गृहे यत्र शोभने ।
तयोरेको विनष्टः स्याद्वर्धते न यथास्थितम् " इति ।

यत्र गृहे द्वे शोभने द्वौ विवाहावित्यर्थ इति चिन्तामणौ ।

अतिसंकट एकोदरयोरप्येकाहे कर्तव्यतोक्ता ज्योतिर्विवरणे—

" न प्रतिषिद्धं लग्नं संप्राप्ते संकटे महति ।
एकोदरसंभवयोरेकाहे भिन्नमण्डपे काले " इति ।

यमयोस्तु विशेषः स्मृत्यन्तरे—

" एकस्मिन्वत्सरे चैव वासरे मण्डपे तथा ।
कर्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोः " इति ।

गार्ग्यः— " एकस्मिन्वासरे प्राप्ते कुर्याद्यमलजातयोः ।
क्षौरं चैव विवाहं च मौञ्जीबन्धनमेव च " इति ।

एतच्चाभ्यनुज्ञापरं न तु नियमविधिरिति द्रष्टव्यम् ।

इति समानक्रियाविचारः ।

## अथ संक्षेपेण कन्यादातृनिर्णयः ।

तत्र याज्ञवल्क्यः—

" पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ।
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम् " इति ।

भ्राता कन्यायाः ।

स च संस्कृतः ।

" असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद्दत्त्वांऽशं तु तुरीयकम् " इति तेनैवोक्तत्वात् ।

---

१ क. ग. 'मलयो' ।

यज्जातीया कन्या तज्जातीयस्य पुत्रस्य यावान्भागस्तस्य चतुर्थमंशं प्रत्येकं भगिनीभ्यो दत्त्वा ताः संस्कर्तव्या इत्यर्थः। भगिन्यश्चेत्यत्र चकारो भ्रातृभिः पूर्वसंस्कृतैरित्यस्यानुवृत्त्यर्थः। पूर्वसंस्कृतैरित्यनेनानुपनीतस्य भ्रातुरधिकारो व्यावर्त्यते।

अत्र शूलपाणिः— पूर्वसंस्कृतैर्भ्रात्रादिभिः पितुरर्ध(र्थे) पैतृकादेव धनादसंस्कृता भ्रातरो जातकर्मादिसंस्कारैः संस्कार्याः। भगिन्योऽपि स्वाद्धनाच्चतुर्थभागं दत्त्वा तेनैव धनेन विवाहाख्यसंस्कारेण संस्कुर्यात्(स्कार्याः) [इति]।

बृहस्पतिना तु—

" समांशा मातरस्त्वेषां तुरीयांशाश्च कन्यकाः "।

इत्यनेन पितृधनाच्चतुर्थांशहरत्वमुक्तं तदपि संस्कारार्थमेव। चतुर्थांशेन विवाहासंभवे यावता धनेन संभवति तावद्देयम्।

यथा देवलः—

" कन्याभ्यश्च पितृद्रव्याद्देयं वैवाहिकं वसु।
अपुत्रकस्य कन्या वा धर्मजा पुत्रवद्धरेत् " इति ॥

स्ववित्तानुसारेणेत्याह विष्णुः—'अनूढानां तु कन्यानां स्ववित्तानुसारेण संस्कारं कुर्यात्' इति। सकुल्यो दायादः। दायादेष्वपि संनिहित एवाधिकारी। प्रकृतिस्थः पातित्योन्मादादिदोषरहितः। अत्र प्रकृतिस्थग्रहणादप्रकृतिस्थेन पित्रादिना कृतमप्यकृतमेव।

" स्वतन्त्रो यदि तत्कार्यं कुर्यादप्रकृतिं गतः।
तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः " ॥

इत्यपरार्के नारदवचनात्। पितृत्वादिना स्वतन्त्रोऽपि सन्नप्रकृतिस्थत्वेन हेतुना परतन्त्रो यदि भवति तदा तत्कृतं वाग्दानादिकार्यमकृतमेव वेदितव्यं यदि तस्मिन्वरे पतनीयदोषा अचिकित्स्यरोगा वा भवेयुः। वरे पतनीयदोषाद्यभावे तु तथैवोपरितनं कर्म प्रकृतिस्थः कुर्यात्। यदा त्वप्रकृतिस्थदत्ताया विवाहसंस्कारो निर्व्यूढस्तदा प्रधानकर्मणो निष्पन्नत्वेनाधिकारिमात्रवैकल्यात्तत्रापि न सर्वात्मना प्रत्यावर्तनीया कन्या।

एवं तर्ह्यनधिकारिणा कृतमप्यकृतमेवेत्येतद्विरुध्येतेति चेत्सत्यम्। तद्विरोध-

१ क. ग. ङ. इत्याह। स°। ख. इति शूलपाणिः। स°।

परिहाराय परिवेत्तृविवाह इव तां प्रत्याहृत्य पुनस्तस्मा एवाधिकारी दद्यात्। तत्र च पुनर्विवाहोऽपि परिवेत्तृविवाहवदेव ज्ञेय इति मदनपारिजाते। यदि तु सप्तपदीक्रमणान्तं जातं भवेत्तदाऽधिकारिदातृरूपाङ्गवैकल्येऽपि नाऽऽवृत्ति-र्विवाहस्य। अङ्गानुरोधेन प्रधानावृत्तेरन्याय्यत्वादिति केचित्।

नारदोऽपि दातॄनाह—

" पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमतः पितुः।
पितामहो मातुलश्च सकुल्या बान्धवास्तथा ॥
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते।
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः " इति ॥

अत्र पितृग्रहणं पितामहोपलक्षणम्। अत्र पित्रभावे पितामहस्तदभावे भ्राते-त्येवं क्रमो द्रष्टव्यः। उदाहृतयाज्ञवल्क्यवचोनुरोधात्। सकुल्या दायादा बान्धवा मातृपक्षीयाः स्वजातयो ब्राह्मणादयः। यस्य वर्णस्य या कन्या तज्जा-तीया अधिकारिण इत्यर्थः।

मदनपारिजाते कात्यायनः—

" स्वयमेवौरसीं दद्यात्पित्रभावे स्वबान्धवाः।
मातामहस्ततोऽन्यां हि माता वा धर्मजां सुताम् " इति।

ततोऽन्यामौरसीभिन्नाम्। धर्मजां नियोगात्क्षेत्रजां मातामहो माता मातुलो वा दद्यात्। तेनौरसीदाने पितृबन्धुषु सत्सु मातामहादीनां नाधिकारः।

अस्यापवादस्तत्रैव—

" दीर्घप्रवासयुक्तेषु पौगण्डेषु च बन्धुषु।
माता तु समये दद्यादौरसीमपि कन्यकाम् " इति ॥

पौगण्डो व्यवहाराद्यसमर्थः। समये रजोदर्शनोचितसमयात्पूर्वकाले।

मनुः—" यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत् " इति।

उक्तसकलाधिकार्यभावे स्वयं वरयेत्।

" गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम् " इतिवचनात्।

" पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम्।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः " ॥

इति भारते सावित्र्युपाख्याने पित्रनुज्ञयाऽपि स्वयंवरणमुक्तं तत्क्षात्रियाधि-कारत्वात्तद्विषयम्। गम्यं गमनार्हं सावर्ण्यादिगुणयुक्तमित्यर्थः।

अनाथायाः कन्याया धर्मार्थविवाहकरणं तत्फलं चोक्तं पुराणान्तरे—

" आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम्।
धर्म्येण विधिना दातुमसगोत्रोऽपि युज्यते॥
अनाथां कन्यकां दृष्ट्वा यो दद्यात्सदृशे वरे।
द्विगुणं फलमाप्नोति कन्यादाने यदीरितम् " इति॥

अतोऽन्यदीया कन्याऽन्येनापि धर्मार्थं देया।

कन्याया रजःप्राप्त्यनन्तरं दाने दोषमाह शाट्यायनिः—

" माता च जनकश्चैव ज्येष्ठो भ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् " इति॥

मरीचिरपि—" यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः।
असंभाष्यो ह्यपाङ्क्तेयः स उक्तो वृषलीपतिः " इति॥

हारीतोऽपि—" पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः " इति॥

असंस्कृताऽविवाहिता।

तत्र प्रायश्चित्तपूर्वकं विवाहमाह शौनकः—

" कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः।
पिता ऋतूत्स्वपुत्र्यास्तु गणयेदादितः सुधीः॥
दानावधि गृहे यत्नात्पालयेच्च रजोवतीम्।
दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि॥
दातव्यैकाऽपि यत्नेन दाने तस्या यथाविधि।
दद्याद्वा ब्राह्मणेष्वन्नमतिनिस्वः सदक्षिणम्॥
तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत्।
उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः॥
अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम्।
तामुद्वहन्वरश्चापि कूश्माण्डैर्जुहुयाद्घृतम् " इति॥

निष्कृतिमात्मनः कृत्वा कन्यां चर्तुमतीं शुद्धां कृत्वा वराय प्रतिपादयेदित्यन्वयः। स्वपुत्र्याः स्वकन्यायाः। तस्याः कन्याया दाने कर्तव्ये यथाविधि गोदानविधिना शक्तेन तदृतुसंख्या गावो दातव्याः। अशक्तेन त्ववश्यमेकाऽपि गौर्गोदानविधिना देयेत्यर्थः। उपोष्येति श्लोकेन दृष्टरजस्कक-

न्याया उपवासत्रयान्ते गव्यपयःपानपूर्वकं गोदानं विधीयते । अदृष्टरजसे कुमार्यै सरत्नभूषणदानेन विवाहयोग्यतोच्यते । तामुद्वहन्नित्यनेन वरस्य कूश्माण्डहोमेन तदुद्वाहयोग्यता प्रतिपाद्यते ।

कन्यया गोदानोत्तरं पादकृच्छ्रमपि कर्तव्यम् ।

" कन्यका तु विवाहात्प्राग्रजसा चेत्परिप्लुता ।
पादकृच्छ्रेण शुद्धा स्यात्पाणिग्रहणकर्मणि " ॥

इति हेमाद्रौ स्मृत्यन्तरोक्तेः ।

बौधायनस्तु—

" अथ यदि कन्योपसाद्यमाना वोह्यमाना वा रजस्वला स्यात्ता-मनुमन्त्रयते—पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ । पुमानिन्द्रश्च सूर्यश्च पुमांसं वर्धयत्वियमित्यथ द्वादशरात्रमलंकृत्य प्राशयेत्पञ्च-गव्यं ततः शुद्धा भवति " इत्याह ।

उपसाद्यमाना दात्रा दीयमाना । उह्यमाना वरेण पाणिग्रहणेन । वाशब्द-द्वयमुभयोः प्राधान्यं द्योतयितुम् ।

तस्या उपसाद्यमानाया उह्यमानाया वा पतने स एवाऽऽह—

" अथ यदि कन्योपसाद्यमाना वोह्यमाना वा पतेत्तामुत्थापयेदुद-स्थाद्देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागं मित्राय वरुणाय च " इति ।

होमकाले रजोदर्शने तु यज्ञपार्श्वः—

" विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
युञ्जानामाहुतिं हुत्वा ततस्तन्त्रं प्रवर्तयेत् " इति ॥

युञ्जानः प्रथमं मन इत्येकेनर्च्मन्त्रेण साध्याऽऽहुतिर्युञ्जानाहुतिस्तां हुत्वे-त्यर्थः ।

यदा तु दात्रभावेन रजोदर्शनं तदा विशेषमाह बौधायनः—

" त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥
अविद्यमाने सदृशे गुणहीनमपि श्रयेत् " इति ।

मनुरपि—" त्रीणि वर्षाण्युदीक्षेत नारी ऋतुमती सती।
ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम्॥
अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम्।
नैनः किंचिदवाप्नोति न च यं साऽधिगच्छति " इति।

अदीयमाना दात्रभावाद्दात्रुपेक्षणाच्च। सा यं भर्तारमधिगच्छति सोऽपि नैनोऽधिगच्छतीति माधवेन व्याख्यातम्।

यत्तु विष्णुवचनम्—

" ऋतुत्रयमपास्यैव कन्या कुर्यात्स्वयं वरम् " इति।

तद्गुणवद्वरलाभे वेदितव्यम्।

स्वयंवरणे विशेषमाह मनुः—

" अलंकारं नाऽऽददीत पितृदत्तं स्वयंवरा।
मातृदत्तं भ्रातृदत्तं स्तेयं स्याद्यदि तं हरेत् " इति॥

कन्यादानफलमाह स एव—

' नाग्निहोत्रादिभिस्तत्स्याद्रक्षातो ब्राह्मणस्य वा।
यत्कन्यां विधिवद्दत्त्वा फलमाप्नोति मानवः ' इति।

रक्षातो रक्षणेन।

सालंकारकन्यादाने फलविशेषमाह संवर्तः—

' कूकुदश्चाश्वमेधी च प्राणदाता भयेषु च।
समं यान्ति रथा एषां त्रयो वै नात्र संशयः ' इति।

कूकुदशब्दः—' सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः ' इति कोशात्सत्कारपूर्वकालंकारयुतकन्यादातरि रूढः। कूपद इति पाठेऽप्यर्थः स एव।

वैवाहिकप्रदानमुक्तं स्कन्दपुराणे—

' वैवाहिकप्रदानं हि यो ददाति दयापरः।
विमानेनार्कवर्णेन किङ्किणीजालमालिना।
महेन्द्रभवनं याति सेव्यते ह्यप्सरोगणैः ' इति।

वैवाहिकं विवाहोपयोगि द्रव्यवस्त्रालंकारादि। न चेदं फलश्रवणात्काम्यमेवेति वाच्यम्।

' वैवाहिकप्रदानं यो न करोति नराधमः।
पापीयान्स हि जायेत सर्वलोकविगर्हितः '

१ ग. कन्या। १

इत्यप्रदाने दोषश्रवणात् । अतो दर्शपूर्णमासवन्नित्यं काम्यं च ।

अन्यस्य धर्मार्थं विवाहकरणे फलमुक्तं महाभारते—

‘ ज्ञात्वा स्ववित्तसामर्थ्यमेकमुद्वाहयेद्द्विजम् ।
तेनाप्याप्नोति तत्स्थानं शिवभक्तो नरो ध्रुवम् ’ इति ।

अपरार्के दक्षोऽपि—

‘ मातापितृविहीनं तु संस्कारोद्वाहनादिभिः ।
यः स्थापयति तस्येह पुण्यसंख्यां न विद्यते ’ इति ।

कन्यागृहे भोजननिषेधो भविष्ये—

‘ अप्रजायां तु कन्यायां न भुञ्जीत कदाचन ।
दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचति ’ इति ।

न भुञ्जीतेत्यत्र कन्यागृह इति शेषः ।

अपरार्के आदित्य पुराणेऽपि—

‘ अप्रजायां तु कन्यां नाश्नीयात्कन्यकागृहे ।
ब्राह्मदेयां न वै कन्यां दत्त्वाऽश्नीयात्कदाचन ।
अथ भुञ्जीत मोहाच्चेत्स याति नरकं ध्रुवम् ’ इति ।

ब्राह्मविवाहविधिना दातुं योग्यां कन्यां दत्त्वा कदाऽपि तस्या गृहे नैवाश्नीयादित्यर्थः । अत्राप्यप्रजायामित्यनुषञ्जनीयम् ।

शाकलकारिकास्वपि—

‘ दुहित्रन्नं न भुञ्जीयाद्यावत्तस्या भवेत्सुतः ।
अन्यथा यस्तु भुञ्जीत दानं तस्य वृथा भवेत् ।
कन्यायास्त्वप्रसूताया यस्त्वन्नं भुञ्जते यदि ।
अघं स केवलं भुङ्क्ते प्राजापत्येन शुध्यति ’ इति ।

## अथ दत्तापहारः ।

तत्र याज्ञवल्क्यः—

‘ दत्तामपि हरेत्पूर्वं श्रेयांश्चेद्वर आव्रजेत् ’ इति ।

पूर्ववरापेक्षया श्रेयान्गुणैर्वरिष्ठो वर आव्रजेदागच्छेच्चेत्पूर्ववराय दत्तां वाचा दत्तामपि कन्यां हरेत् । तस्मै न दद्यादित्यर्थः ।

अत एव प्रतिश्रुत्यवसरे स्मर्यते शिष्टैः—

'अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते।
इमां कन्यां प्रदास्यामि देवाग्निद्विजसंनिधौ' इति।

दश दोषाः संग्रह उक्ताः—

'उन्मत्ता वृत्तिहीनाश्च तथाऽपस्मारदूषिताः।
दूरस्थाः कुष्ठिनो मूर्खा मोक्षमार्गानुसारिणः।
शूरा अवेद्या निवृत्ता दशदोषयुता वराः।
तथा षण्ढाश्च पतिताश्चक्षुःश्रोत्रविवर्जिताः।
वर्जनीयाः प्रयत्नेन कन्यादात्रा न संशयः' इति।

निवृत्ता विवाहात्।

यत्तु मनुवचनम्—

'एतत्तु न परे चक्रुर्नापरे जातु साधवः।
यदन्यस्याभ्यनुज्ञाय नरस्यान्यस्य दीयते' इति।

यच्च नारदवचनं—

'सकृदंशो निपतति सकृत्कन्या प्रदीयते' इति।

तद्दोषरहितवरविषयम्। दोषरहितवरतः कन्याया अपहारे दण्ड उक्तो याज्ञवल्क्येन—

'सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक्' इति।

तां कन्यां हरतश्चोरस्य यथा दण्डस्तथैव दण्ड इत्यर्थः।

नारदोऽपि— 'दत्तां न्यायेन यः कन्यां वराय न ददाति चेत्।
अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत्' इति।

अदुष्टश्चेदित्यनेन दुष्टाय न देयेति गम्यते।

उक्तं च गौतमेन—

'प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्' इति।

दुष्टेनापि यदि पाणिग्रहणं सप्तपद्यन्तं कृतं तदनन्तरं ततो नैव ग्राह्या।

अत एव नारदः—

'स्त्रीपुंसयोस्तु संबन्धाद्वरणं प्राग्विधीयते।
वरणाद्ग्रहणं पाणेः संबन्धोऽयं त्रिलक्षणः।

---

१ ढ. °ण्ड्यश्चोरदण्डव°।

तयोरनियतं प्रोक्तं वरणाद्दोषदर्शनात् ।
पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां निष्ठा च विज्ञेया विद्वद्भिः सप्तमे पदे ' इति ।

अस्यार्थः—स्त्रीपुंसयोः संबन्धः संभोगस्तस्मात्प्राग्वरणं तदनन्तरं पाणिग्रहणं च भवति । एवं संबन्धस्त्रिलक्षणः । वरणं पाणिग्रहणमुपभोगश्चेति त्रीणि लक्षणानि यस्य स संबन्धस्त्रिलक्षणः । स्त्रीपुंसयोरित्यत्राचतुरेति सूत्रेणाकारान्तता । गान्धर्वादिषु नायं क्रमः । तयोः स्त्रीपुंसयोः कन्यावरयोरिति यावत् । अनियतमनियमः, वृतोऽपि न परिणीयते वाग्दत्ताऽपि न दीयत इत्येवंरूपः । तत्र हेतुः—वरणाद्दोषदर्शनादिति । वरणादूर्ध्वं कन्यावरयोरन्योन्यं दोषदर्शनात् । अनेन विवाहादूर्ध्वं नानियम इत्युक्तं भवति । तत्र नियमे हेतुमाह पाणिग्रहणिका मन्त्रा इति । तैर्मन्त्रैरुत्पादितसंस्कारयोर्न परित्याग इत्यर्थः । पाणिग्रहणमन्त्रोत्पाद्यसंस्कारावधिमाह—तेषामिति ।

निष्ठा नियता स्थितिः ।

" वरणाद्ग्रहणं पाणेः संस्कारो ह्यग्निलक्षणः ।
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् " ।

इति पाठे तु पाणेर्ग्रहणं यत्सोऽग्निलक्षणः संस्कारः, अग्निचिह्नितो होमादिनिष्पाद्यः संस्कारः । तयोर्वरणपाणिग्रहणयोर्मध्ये वरणमेव दोषदर्शनादनियतं, न पाणिग्रहणं, तस्मादर्वाक्पातित्वानुपपत्तेरित्यर्थः ।

यमः—" नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतिः स्यात्सप्तमे पदे " इति ।

अनेन सप्तपद्याक्रमणात्प्राग्वरमरणे वैधव्यं नेति गम्यते ।

उक्तं च वसिष्ठेन—

" अद्भिर्वाचा च दत्तायां म्रियते यदि वै वरः ।
न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा " इति ॥

सा पितुरेव न प्रतिग्रहीतुरित्यर्थः । सा च देवराय प्रदेया । तदभावे तद्गोत्राय । तदभावेऽन्यस्मै । एतत्सर्वं देशाचारानुसारेण भवति ।

बलादपहृतायां तु विशेषमाहतुर्यमवसिष्ठौ—

" बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा " इति ॥

देवलः—" गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः।
कर्तव्यश्च त्रिभिर्वर्णैः समर्थेनाग्निसाक्षिकः " इति ॥

गान्धर्वादिविवाहेष्वनुष्ठितमपि विवाहहोमपूर्वतनं विधिं पुनः कृत्वाऽग्निसाध्यं विवाहहोमादिकं कर्तव्यमित्यर्थः। होमादिसप्तपद्यन्ता मन्त्रा विवक्षिताः। तत्रैव भार्यात्वोत्पत्तेरिति माधवः।

बहुभ्यो वाग्दाने कात्यायनोक्तो विशेषो द्रष्टव्यः—

" अनेकेभ्यो हि दत्तायामनुढायां तु यत्र वै।
वरागमश्च सर्वेषां लभेताऽऽदिवरस्तु ताम् " इति ॥

सर्वेषां गुणवतां वराणामागमे सत्याद्य एव वरस्तां कन्यां लभेतेत्यर्थः। आद्यवरव्यतिरिक्तानां सर्वेषामागमे यो दूरादागतः स तां लभेत।

तथा च चन्द्रिकायाम्—

" पश्चाद्दूरादागतो यः स हि प्रतिलभेत ताम् " इति।

पश्चादाद्यवरलाभासंभवनिर्णयानन्तरं दूरस्थो वरस्तां कन्यां प्रतिलभेतेत्यर्थः। आद्यस्य दोषवत्त्वे परस्य गुणवत्त्वे परस्मा एव देया—

" कुलशीलविहीनस्य पश्चाद्धि पतितस्य च।
अपस्मारिविधर्मस्य रोगिणां वेषधारिणाम् ॥
दत्तामपि हरेत्कन्यां सगोत्रोढां तथैव च " इति वसिष्ठोक्तेः।

" दत्तामपि हरेत्पूर्वं श्रेयांश्चेद्वर आव्रजेत् "।

इति याज्ञवल्क्योक्तेश्च। पश्चाद्वाग्दानोत्तरं पतितस्येत्यर्थः[1]। सगोत्रोढा समवरेणोढा।

वरणोत्तरं वरस्य देशान्तरगमने नारदः—

" प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत्।
त्रीनृतून्समतिक्रम्य सा चान्यं वरयेद्वरम् " इति ॥

प्रतिगृह्य वरयित्वेत्यर्थः।

शुल्कदातुर्देशान्तरगमने कात्यायनः—

" प्रदाय शुल्कं गच्छेद्यः कन्यायां स्त्रीधनं तथा।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः " इति ॥

शुल्कं कन्यामूल्यम्। स्त्रीधनं कन्याप्रीतये दत्तमलंकारद्रव्यादि।

१ ख ङ. 'र्थः। वर'।

**शुल्कदमरणे मनुवसिष्ठौ—**

" कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्याऽनुमन्यते " इति ॥

**याज्ञवल्क्यः—**" महादोषे तु विज्ञाते पूर्वं सप्तपदीविधेः ।
मरणं वा विजायेत देयाऽन्यस्मै न दोषभाक् ॥
बलादुद्वाहिता कन्या दातव्याऽन्यवराय च " इति ॥

**महादोषाः कारिकानिबन्धे—**

" अन्धो मूकः क्रियाहीनश्चापस्मारी नपुंसकः ।
दूरस्थः पतितः कुष्ठी दीर्घरोगी वरो न सन् " इति ॥

**दूरस्थोऽपि गुणवत्त्वेन बहुभिः परिज्ञातश्चेत्तदा न दूरस्थत्वं दोषः । तदुक्तं स्मृत्यन्तरे—**

" गुणवानिति विज्ञातो दूरस्थोऽपि हि सन्वरः " इति ।

**वसिष्ठः पाणिग्रहणोत्तरमप्यन्यस्मै देयेत्याह—**

" पाणिग्रहे कृते कन्या केवलं मन्त्रसंस्कृता ।
सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति " इति ॥

**एतच्च कलौ निषिद्धम्—**

" देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः ।
अक्षतायाश्च कन्यायाः पुनर्दानं परस्य च " ॥

**इति कलिवर्ज्यप्रकरणे बृहन्नारदीयवचनात् । परस्य परस्मा इत्यर्थः । वाग्दानोत्तरं कन्यादोषोपलम्भे गृहीताया अपि त्याग उक्तो मनुना—**

" विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् " इति ।

**विगर्हितां दुष्टाम् ।**

**नारदः—**" नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरम् ।
दोषे सति न दोषः स्यादन्योन्यं त्यजतोर्द्वयोः " इति ॥

**कन्यादोषास्तेनैव दर्शिताः—**

" दीर्घकुत्सितरोगार्ता व्यङ्गा संस्पृष्टमैथुना ।
धृष्टाऽन्याहितभावा च कन्या दुष्टा प्रकीर्तिता " इति ॥

**अन्यस्मिन्पुरुष आहितः कृतो भावोऽभिलाषो यया सा ।**

**अदुष्टात्यागे दोषमाह याज्ञवल्क्यः—**

" अदुष्टां च त्यजन्दण्ड्यो दूषयंस्तु मृषा शतम् " इति ।

यस्तु कन्यादोषमनभिधाय प्रयच्छति स राज्ञा दण्ड्य इत्याह नारदः—

" यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति।
तस्य कुर्यान्नृपो दण्डं पूर्वसाहसचोदितम् " इति॥

पणशतद्वयं सप्तत्यधिकं पूर्वसाहसम्।

यत्तु याज्ञवल्क्येनोक्तम्—

" अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् " इति।

तद्दोषभूयस्त्वाभिप्रायम्। उत्तमसाहसं साशीतिपणसाहस्रम्।

उक्तं च प्रायश्चित्तप्रकरणे तेनैव—

" साशीतिपणसाहस्रो दण्ड उत्तमसाहसम् " इति।

इति दत्तापहारनिर्णयः।

## अथ कुलपरीक्षा।

तत्राऽऽश्वलायनः—

" कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तात् " इति।

ये मातृतः पितृतश्च दशपुरुषं समनुष्ठितविद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो नाब्राह्मण्यं निनयेयुः पितृत इत्येक इत्यस्मिन्सूत्रे यथोक्तं तथाऽऽदौ कुलं परीक्षेतेत्यर्थः।

मनुः—" उत्तमैरुत्तमो नित्यं संबन्धानाचरेदिह।
निनीषुः कुलमुत्कर्षमपमानवतां त्यजेत् " इति॥

उत्तमलक्षणं तेनैवोक्तम्—

" विशुद्धाः कर्मभिश्चैव श्रुतिस्मृतिनिदर्शिनः।
अविप्लुतब्रह्मचर्या महाकुलसमन्विताः॥
संतुष्टाः सज्जनहिताः साधवस्तत्त्वदर्शिनः।
रागद्वेषामर्षलोभमानमोहविवर्जिताः॥
अक्रोधनाः सुप्रसादाः कार्याः संबन्धिनः सदा " इति।

वर्ज्यकुलान्युक्तानि देवलेन—

" अग्रजा येषु वंशेषु स्त्रीप्रजाप्रसवास्तथा।
पतिघ्न्यश्च स्त्रियो यत्र तानि यत्नेन वर्जयेत् " इति॥

अग्रजा इति स्त्री[प्रजा]प्रसवविशेषणम्। यत्र येषु कुलेषु, तानि कुलानि।

मनुरपि—“ महान्त्यपि समृद्धानि गोजाविधनधान्यतः ।
स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ॥
हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ।
क्षयामयापस्मारीणि श्वित्रिकुष्ठिकुलानि च ” इति ॥

हीनक्रियं विहितक्रियाविरहितम् । इदमुपलक्षणं निषिद्धवर्जनस्य । निष्पुरुषं पुंप्रसवरहितम् । निश्छन्दो वेदाध्ययनरहितम् । रोमशं प्ररूढरोमसर्वाङ्गम् । अर्शसमित्यादिपदैस्तत्तद्रोगवन्ति कुलान्युच्यन्ते ।

स्मृत्यन्तरे—“ कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणा ।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ” इति ॥

दारसंग्रहफलभूतसंततौ दोषानुवृत्तिपरिहारायैषा कुलपरीक्षा । “ कुलानुरूपाः प्रजाः संभवन्ति ” इति हारीतवचनात् ।

इति कुलपरीक्षा ।

## अथ कन्यालक्षणानि ।

तत्राऽऽपस्तंम्बबौधायनौ—
“ बन्धुशीललक्षणसंपन्नामरोगामुपयच्छेत ” इति ।

अत्र संपन्नामिति प्रत्येकमभिसंबध्यते । बन्धुसंपन्ना प्रशस्ताभिजना । शीलसंपन्नाऽऽस्तिक्यादिगुणान्विता । लक्षणसंपन्ना गूढगुल्फत्वादिलक्षणयुक्ता । अरोगा क्षयापस्मारकुष्ठाद्यचिकित्स्यरोगरहिता । एतादृशीं कन्यामुपयच्छेतोद्वहेदिति सुदर्शनेन व्याख्यातम् ।

प्रयोगपारिजाते शौनकोऽपि—
“ लब्धाभ्यनुज्ञो गुरुतो द्विजो लक्षणसंयुताम् ।
बुद्धिशीलगुणोपेतां कन्यकामन्यगोत्रजाम् ॥
आत्मनोऽवरवर्षां च विवहेद्विधिपूर्वकम् ” इति ।

१ क. ख. °स्तम्बः—' ध° ।

अवरवर्षामिति पदच्छेदः। अवरवर्षा न्यूनवर्षा। तत्र लक्षणानि द्विविधानि। बाह्यान्याभ्यन्तराणि च।

बाह्यलक्षणान्याह मनुः—

" अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्।
तनुलोमकेशदतीं मृद्वङ्गीं स्त्रियमुद्वहेत् " इति॥

लोमान्युरोगतानि तनूनि सूक्ष्माणि लोमानि, तनवः केशा दन्ताश्च यस्याः सा तनुलोमकेशदती।

शातातपः—" हंसगतिर्मेघवर्णा मधुपिङ्गललोचना।
तादृशीं वरयेत्कन्यां गृहस्थः सुखवृद्धये " इति॥

नारदोऽपि—" मृगाक्षी मृगगुह्या च मृगग्रीवा मृगोदरी।
हंसहस्तिगतिर्नारी राजपत्नी भविष्यति॥
मृदुभाषा च या नारी मृदुपादतला तथा।
नारी कुमुदवर्णाभा राजपत्नी भविष्यति " इति॥

एवमन्यान्यपि बहूनि लक्षणानि सामुद्रिकतिलकहस्तसंजीवनादिसामुद्रिकशास्त्रग्रन्थेषु द्रष्टव्यानि।

वर्जनीयकन्या आहाऽऽपस्तम्बः—

" सुप्तां रुदतीं निष्कातां वरणे परिवर्जयेद्दत्तां गुप्तां द्योतामृषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां सांकारिकां रतां[1] पालीं मित्रां स्वनुजां वर्षकारीं च वर्जयेन्नक्षत्रनामा नदीनामा वृक्षनामाश्च गर्हिताः सर्वाश्च रेफलकारोपान्त्या वरणे परिवर्जयेत् " इति।

बौधायनोऽधिकमाह—

" नक्षत्रनामानदीनामावृक्षनामापर्वतनामाप्रेष्यनामापक्षिनामापिशाचनामाश्च गर्हिताः " इति।

सुप्तां निद्रिताम्। रुदतीं रोदनकारिणीम्। निष्कान्तां मलिनां परिवर्जयेत्, अत्यन्तं वर्जयेत्। दत्तामन्यस्मै वाचा प्रतिश्रुतामुदकपूर्वं वा प्रतिपादिताम्। गुप्तामदर्शनार्थं कञ्चुकादिभिरावृताम्। रक्ष्यमाणां वा दौःशील्यादिशङ्कया। द्योतां पिङ्गलाक्षीं बभ्रुकेशीं वा विषमदृष्टिं वा। ऋषभामृषभप्रधानामृषभस्येव शरीरं गतिः ककुच्छीलं वा यस्याः [ताम्]। शरभां शीर्णदीप्तिं सर्वगात्रेषु

[1] क. ख. ग. रातां।

नीललोम्नीं वाऽरूपां वा निष्प्रभां वा । विनतां कुब्जिताङ्गीम् । विकटां विकटजङ्घां वा । मुण्डामपनीतकेशां वा । मण्डूषिकामल्पकायामरुणदन्तां वा मण्डूकत्वचं वा । केचित्तु वामनां दग्धाङ्गां वेति वदन्ति । सांकारिकां गर्भस्थायां यस्यां माता भर्त्रस्थिसंचयनं करोति तां कुलान्तरस्य दुहितृत्वं गतां वा । *रतां रमणशीलां कन्दुकादिक्रीडाप्रियामित्यर्थः । ऋतुस्नातामिति केचित् । पालीं वत्सक्षेत्रादिपालिकामित्यर्थः । मित्रां बहुमित्राम् । स्वनुजां शोभना अनुजा यस्याः । केचित्तु वरजन्मसंवत्सर एव पश्चाज्जातामिति वदन्ति । वर्षकारीं वराद्वर्षेणाधिकामत्यन्तं स्रवन्तीं वा । परिवर्जयेदित्यनुषङ्गे सत्यपि पुनर्वर्जयेदिति वचनं ब्राह्मादिषु सर्वेष्वासां प्रतिषेधार्थं दत्तेतरासामनिषेधार्थं वा । नक्षत्रनामैव नाम यासां ता नक्षत्रनामाः । एकस्य नामशब्दस्य लोप उष्ट्रमुखशब्दवत् । एवमुत्तरयोरपि विग्रहः । रोहिणी चित्रेत्येवमादयो नक्षत्रनामाः । गङ्गेत्येवमादयो नदीनामाः । शिंशुपेत्यादयो वृक्षनामाः । गर्हिता वर्जनीयाः । रेफो वा लकारो वा यासां नाम्न्युपान्त्य उपधेत्यर्थः । यथा गौरी शालेत्यादि । व्यक्तं शिष्टम् । अत्र चकारेण गर्हिता इत्यनुकर्षणादासां वर्जनीयत्वे सिद्धे वरणे परिवर्जयेदिति पुनर्वचनं व्यर्थं, न, सुग्रहत्वार्थम् । अथवा या एता रेफलकारोपान्त्या गौरी शालेत्यादयः । याश्च प्रकारान्तरेणापि रेफलकारोपान्त्याः स्मृत्यन्तरेणोक्ताः सगोत्रा समानप्रवरा पुंश्चलीति तास्ता वरणे परिवर्जयेदितिज्ञापनार्थमिति व्याख्यातं सुदर्शनेन । यद्यपि विग्रहे शोभना अनुजा यस्या इति सामान्यतः स्वनुजशब्दार्थो भाष्यकृता प्रदर्शितस्तथाऽप्यत्र स्वनुजशब्दः स्त्रीलिङ्गः सावधारण एव द्रष्टव्यः । तेन शोभना अनुजा भगिन्य एव इत्यर्थो निष्पद्यते । नातो यस्यास्तु न भवेद्भ्राता तां नोपयच्छेतेत्यनेन विरोधः ।

मनुरपि— “ नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम् ।
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ” इति ।

उद्वहेदिति शेषः । कपिलां रक्ततण्डुलवर्णाम् । पिङ्गलामग्निवर्णाम् । अन्त्यां म्लेच्छनाम्नीम् ।

---

* सर्वपुस्तकेषु रातामिति पाठः ।

१ ङ. ब्राह्मणादि° ।

आभ्यन्तरलक्षणान्यप्यापस्तम्बेनोक्तानि—

" शक्तिविषये द्रव्याणि प्रतिच्छन्नान्युपनिधाय ब्रूयादुपस्पृशेदिति नानाबीजानि संसृष्टानि वेद्याः पांसून्क्षेत्राल्लोष्टं शकृच्छ्मशानलोष्टमिति पूर्वेषामुपस्पर्शने यथालिङ्गमृद्धिरुत्तमं परिचक्षते " इति ।

शक्तिः सामर्थ्यम् । विषयोऽवकाशः । अस्यामृद्धिपरीक्षायां वरतत्पक्षीयाणां सामर्थ्यस्यावकाश(शे)संभवे सति यदीयकन्या तदीयाश्चेमां परीक्षामुपगच्छेयुरित्यर्थः । यत एवात्र शक्तिविषय इत्याह, अत एवेयमृद्धिपरीक्षा ज्यौतिषादिभिर्वैकल्पिकी न तु नित्या । द्रव्याणि वक्ष्यमाणानि मृत्पिण्डेषु प्रच्छन्नान्येकैकस्मिन्भाजने निधाय कन्यासमीपे च कृत्वा तां ब्रूयात्, एषां मृत्पिण्डानामेकमुपस्पृशेति । कानि तानीत्याह नानाबीजानि व्रीहियवादिबीजानि, संसृष्टानि एकस्मिन्पिण्डे प्रक्षिप्तानि, वेद्याः सौमिक्या आहृतान्पांसून्क्षेत्रात्सस्यसंपन्नादाहृतं लोष्टम् । अवशिष्टे प्रसिद्धे । पूर्वेषां चतुर्णामुपस्पर्शने यथायोग्यमृद्धिः । नानाबीजानामुपस्पर्शने प्रजासमृद्धिः । वेद्याः पांसूनामुपस्पर्शने यज्ञसमृद्धिः । क्षेत्रलोष्टस्पर्शने सस्यानां समृद्धिः । शकृत उपस्पर्शने पशूनां समृद्धिः । ऋद्धिनिश्चयाद्विवाहकर्तव्यतानिश्चय इत्यर्थः । उत्तमं श्मशानलोष्टं परिचक्षते गर्हन्ते शिष्टाः । जायापत्योरन्यतरस्य वा मरणलिङ्गत्वादित्यर्थ इति व्याख्यातं सुदर्शनेन ।

एतावत्कर्तुमशक्तं मत्वाऽऽहतुरापस्तम्बबौधायनौ—

" यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिर्नेतरदाद्रियेतेत्येके " इति ।

यस्यां कन्यायां वरस्य मनसश्चक्षुषोश्च निबन्धो नितरां बन्धनं, यस्यामासक्त्यतिशयान्मनश्चक्षुषी निबद्धे इव तिष्ठते इत्यर्थः । तस्यां जायायां सत्यामृद्धिर्धर्मादीनां, नेतरद्गुणदोषानुदर्शनमाद्रियेतेत्येक आचार्या ब्रुवत इति व्याख्यातं सुदर्शनेन । नेतरदाद्रियेतेत्ययं निषेधः सुप्तादिरेफलकारोपान्त्यान्तानामेव, न तु धर्मसूत्रोक्तानां सगोत्रसप्रवरसपिण्डानामपि । एतदर्थमेव धर्मसूत्रे सगोत्रादिविवाहनिषेधः कृतो न तु गृह्यसूत्रे । तथा च सगोत्रादिविवाहनिषेधोऽस्त्येव । एवं च यो निषेधः स्वसूत्रोक्तं सगोत्रादिविवाहनिषेधं बाधितुं नार्हति सूत्रान्तरोक्तं सगोत्रादिविवाहनिषेधमीक्षितुमपि नार्हति कुतस्तं बाधितुम् । अतः सत्याषाढादिसूत्रोक्तसगोत्रादिविवाहनिषेधबाधनशङ्कैव

---

१ क. ख. °त्याहाऽऽपस्तम्बः—४° य° ।

न । मातुश्च योनिसंबन्धेभ्य इति सत्याषाढापस्तम्बसूत्रयोश्चकारः समप्रवरपितृसपिण्डयोः समुच्चयार्थः । तेनैतयोरपि निषेधोऽस्त्येव ।

लक्षणान्यवश्यं परीक्षणीयान्यन्यथा दोष इत्युक्तं बौधायनेन—

"वर्जयेत्सर्वथा कन्या अशुभा लक्षणैश्च याः ।
भर्तुरायुर्हरन्त्येता आलस्यादपरीक्षिताः" [ इति ] ।

इति कन्यालक्षणानि ।

## अथ वरलक्षणानि ।

तत्राऽऽपस्तम्बः—"श्रुतवानिति" इति ।

श्रुतमध्ययनं तेन संपन्नः । विदुष एवोक्तकर्माधिकारात् । इत्येवंभूता वरसंपत् । एवंभूताय वराय दद्यादित्यर्थ इति सुदर्शनः ।

बौधायनः—"बन्धुशीललक्षणसंपन्नः श्रुतवानरोग इति" इति ।

आश्वलायनः—"बुद्धिमते कन्यां प्रयच्छेत्" इति ।

यमः—"कुलं च शीलं च वयश्च रूपं विद्यां च वित्तं च सनाथतां च ।
एतान्गुणान्सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम्" इति ।

नाथशब्देन पोषकाः पित्रादय उच्यन्ते ।

यत्तु चन्द्रिकायाम्—

"ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः ।
कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम्" इति ।

तत्कन्यादानादौ ब्राह्मणस्य कुलप्राधान्यप्रतिपादनपरं न तु लक्षणान्तरनिषेधपरम् ।

लैङ्गे—"दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने ।
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे" इति ।

अत्र ब्रह्मचारिण इत्यस्यायमर्थः—अस्खलितब्रह्मचर्येणैव प्रथमविवाहः कार्यः । ब्रह्मचर्ये स्खलिते यो ब्रह्मचारी स्त्रियमुपेयात्स गदर्भं पशुमालभेतेत्यादिना विहितं प्रायश्चित्तं कृत्वा कन्यामुद्वहेदिति ।

कात्यायनः—"उन्मत्ताः पतिताश्चैव कुष्ठिषण्ढस्वगोत्रजाः ।
चक्षुःश्रोत्रविहीनाश्च तथाऽपस्मारदूषिताः ।
अवेद्याश्चैव दूरस्था मोक्षमार्गानुसारिणः ।
शूरा निवृत्ताश्चैतेभ्यो न देया कन्यका बुधैः" इति ।

पराशरोऽपि—"कन्यां ददाति वृद्धाय नीचाय धनलिप्सया।
कुरूपाय कुशीलाय स प्रेतो जायते नरः" इति।

(* ब्रह्मवैवर्तेऽपि—

"वराय गुणहीनाय वृद्धाय ज्ञानिने तथा।
दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च।
अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च।
पङ्गुलायाङ्गहीनाय चान्धाय बधिराय च।
जडाय चैव मूकाय क्लीबायात्यन्तपापिने।
ब्रह्महत्यां लभेत्सोऽपि यः स्वकन्यां प्रयच्छति।
शान्ताय गुणिने चैव यूने च विदुषेऽपि च।
वैष्णवाय सुतां दत्त्वा दशवापीफलं लभेत्।
यः कन्यापालनं कृत्वा करोति विक्रयं यदि।
विपदा धनलोभेन कुम्भीपाकं स गच्छति।
कन्यामूत्रं पुरीषं च तत्र भक्षति पातकी।
कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश।
तदन्ते व्याधयोनौ च लभेज्जन्म सुनिश्चितम्।
विक्रीणाति मांसभारं वहत्येव दिवानिशम्" इति।

वृद्धपदमत्यशक्तपरतालक्षकम्। ज्ञानिपदं विवाहानिच्छुपरतालक्षकम्। पङ्गुलः पादहीनः। अत्यन्तपापिने महापातकयुक्तायेत्यर्थः। अपिशब्दात्प्रतिग्रहीतुरपि दोषः। वैष्णवाय विष्णुभक्ताय। विष्णुशब्दः शिवाद्युपलक्षकः। विपदा विपद्रूपहेतुना धनलोभेन चेत्यर्थः।)

याज्ञवल्क्यः—"एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः।
यत्नात्परीक्षितः पुंस्त्वे युवा धीमाञ्जनप्रियः" इति।

अत्र भ्रातृमत्त्वानन्यपूर्वत्वयवीयस्त्वरूपगुणत्रयभिन्नाः सर्वे गुणा अतिदिश्यन्ते। सवर्णः समानवर्णः। असपिण्डादिगुणातिदेशादुभयतःसापिण्ड्यनिवृत्तिरभिप्रेता। तेन वरनिरूपितं कन्यायां कन्यानिरूपितं च वरे पृथगेव सापिण्ड्यं न तु व्यासज्यवृत्ति उभयनिरूपितमेकमिति नवीनाः।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके नास्ति।

पुंस्त्वपरीक्षोक्ता नारदेन—

“ यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलम् ।
पुमान्स्याल्लक्षणैरेतैर्विपरीतस्तु षण्ढकः ” इति ।

बीजं रेतः । ह्लादि ध्वनिमत् । फेनिलं फेनवत् ।

परीक्षाकारणमपि तेनैवोक्तम्—

“ अपत्यार्थं स्त्रियः सृष्टाः स्त्रीक्षेत्रं बीजमर्हति ।
क्षेत्रं हि बीजिने देयं नाबीजी क्षेत्रमर्हति ” इति ।

सामुद्रिकशास्त्रे—

“ पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत् ।
आयुर्हीननराणां हि लक्षणैः किं प्रयोजनम् ” इति ।

एवमन्यान्यपि लक्षणानि सामुद्रिकतिलकादौ द्रष्टव्यानि ।

इति वरलक्षणम् ।

## अथ परिवित्त्यादिस्वरूपं तत्प्रायश्चित्तं च ।

तत्र मनुः—“ परिवित्तिः परिवेत्ता यया च परिविन्दति ।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ” इति ।

यया कन्यया परिविन्दति पुरुषः सा कन्याऽपि नरकं यातीत्यर्थः । दातृयाजकपञ्चमा इत्यत्र दाता च याजकश्च दातृयाजकौ तौ पञ्चमौ पञ्चसंख्यापूरकौ येषां परिवित्तिपरवेत्तृकन्यानां ते दातृयाजकपञ्चमा इति समासः । दाता च याजकाश्च दातृयाजकाः । ते पञ्चसंख्यापूरका येषामित्येवं वा समासः । याजक ऋत्विक् । अथवा याजकश्चासौ पञ्चमश्च याजकपञ्चमः । दाता च याजकपञ्चमश्च दातृयाजकपञ्चमौ तौ येषु ते दातृयाजकपञ्चमाः । दातृयाजकौ सर्वेऽपि ते पूर्वोपात्ताश्च नरकं यान्ति गच्छन्तीत्यर्थः ।

परिवित्त्यादिस्वरूपं तेनैवोक्तम्—

“ दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ” इति ॥

अत एव गर्गः—

“ सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम् ।
आवसथ्यं तथाऽऽधानं पतितस्त्वन्यथा भवेत् ” इति ॥

सोदर्ये ज्येष्ठेऽनूढे तिष्ठति सतीत्यर्थः।

तथा च *मनुः—

"अग्रजे ब्रह्मचर्यस्थे योऽनुजो दारसंग्रहम्।
कुरुते परिवेत्ता स परिवित्तिस्तु पूर्वजः" इति॥

पितृव्यपुत्रभिन्नोदरादीनां न दोष इत्याह शातातपः—

"पितृव्यपुत्रसापत्नपरनारीसुतेषु च।
ज्येष्ठेष्वपि च तिष्ठत्सु भ्रातॄणां तु कनीयसाम्।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने" इति।

सापत्नाः सापत्नमातृजाः। परनारीसुता व्यभिचारादुत्पन्ना दत्तकादयो वा।

गौतमोऽपि—"भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने" इति॥

इदमपि प्रथमविवाहाग्न्याधानादौ।

तथा च मण्डनः—

"दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम्।
अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम्॥
न कुर्याज्जनके ज्येष्ठे सोदरे वाऽप्यकुर्वति" इति।

अनुज्ञयाऽऽधानं भवतीत्याह सुमन्तुः—

"तिष्ठेद्भ्राता यदि ज्येष्ठ आधानं नैव चाऽऽश्रयेत्।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा" इति॥

आज्ञयाऽऽधानाद्येव भवति न विवाहः।

तदाह हारीतः—

"सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत्।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया" इति॥

दारैस्त्वित्यत्र तुशब्दोऽवधारणार्थः।

कन्याविषये गर्गः—

"एकमातृप्रसूतानां पुत्रिणीपरिवेदने।
दोषः स्यात्सर्ववर्णेषु न दोषो भिन्नमातृषु" इति॥

---

* अयं वृद्धमनुः स्यादित्यनुमीयते, एतदर्थकमनुवचनस्य पूर्वं लिखितत्वात्।

सोदर्यभ्रातृविषये कात्यायनः—

" देशान्तरस्थान्क्लीबांश्च शूद्रतुल्यान्सहोदरान् ।
वेश्यासक्तान्कुवृषणान्पतितानतिरोगिणः ॥
जडमूकान्धबधिरकुब्जवामनखेलकान् ।
अतिवृद्धानभार्यांश्च कृपिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुहकोन्मत्तरोगांश्च परिविन्दन्न दुष्यति " इति ॥

क्लीबाः स्त्रीसंभोगविषयेऽधृष्टाः । शूद्रतुल्याः शूद्रधर्मिणः । वेश्यासक्ता वेश्यास्वभिरताः । कुवृषणाः कुत्सितवृषणाः । पतिता ब्राह्मण्याच्युताः । अतिरोगाः क्षयापस्मारकुष्ठादयस्तद्वन्तः । जडादयो वामनान्ताः प्रसिद्धाः । खेलका भग्नपादाः । अतिवृद्धाः प्रसिद्धाः । अभार्या नैष्ठिकब्रह्मचारिणः । कामतोऽकारिणो विवाहादिच्छया निवृत्ताः । कुहकाः परवञ्चनाय वृथोद्योगपराः । कुहकपदस्थाने कुटिल इति क्वचित्पाठः । अत्र ये सर्वात्मना विवाहानधिकारिणः क्लीबादयस्तेषु सत्सु कालविशेषमन्तरेणापि परिवेदनान्न दोषः । ये तु कालान्तरे संभावितविवाहाधिकारा देशान्तरस्थविरक्तवेश्यातिसक्तशूद्रतुल्यकृपिसक्तराजपरतन्त्रधनवृद्धिप्रसक्तकामतोकारिकुहकतस्करास्तेषु सत्सु वक्ष्यमाणकालप्रतीक्षणं कृत्वा परिवेदनं कुर्वतां न दोषोऽस्तीति हेमाद्रिः ।

देशान्तरगतज्येष्ठसोदरविषये प्रतीक्षावधिमाह वसिष्ठः—

" द्वादशाष्टौ वा वर्षाणि ज्येष्ठभ्रातरमनिविष्टमप्रतीक्षमाणः
प्रायश्चित्ती भवति" इति ।

अत्र हेमाद्रिः—धर्मार्थमर्थार्थं वा देशान्तरगतस्य ज्येष्ठस्य द्वादशवर्षं प्रतीक्षा ।

तथा च स्मृतिः—

" द्वादशैव तु वर्षाणि ज्यायान्धर्मार्थयोगतः ।
न्याय्यः प्रतीक्षितुं भ्रात्रा श्रूयमाणः पुनः पुनः " इति ।

धर्मार्थयोगत इति विद्याया अप्युपलक्षणार्थम् । अत एव गौतमेन ' नष्टे भर्तरि ' इति प्रक्रम्य ' द्वादश वर्षाणि ब्राह्मणस्य विद्यासंबन्धेन ' इति भार्याया भर्तृप्रतीक्षणकालमुक्त्वाऽभिहितम्—' भ्रातरि चैवं ज्यायसि यवीयान्कन्याग्न्याधेयेष्टिषु ' इति ।

---

१ ङ °मप्र° ।

नष्टे भर्तरि कुत्र गत इत्यज्ञाते भर्तरि। अत्यन्तदूरदेशान्तरगत इति यावत्। विद्यासंबन्धेन विद्याग्रहणार्थं देशान्तरगते भर्तरि ब्राह्मणभार्यया द्वादश वर्षाणि प्रतीक्ष्य तत्क्रियादि कार्यम्। एवं ब्राह्मणः कनिष्ठो ज्येष्ठे भ्रातरि विद्याग्रहणार्थं देशान्तरगते द्वादश वर्षाणि प्रतीक्ष्य विवाहाग्न्याधानेष्टीः कुर्यात्। कार्यान्तरार्थं देशान्तरगमने तु दशाष्टौ वेति पक्षद्वयम्। अत्रेदं विवक्षितम्। देशान्तरगतस्य स्वाभिमतं कार्यं निर्वर्त्य प्रत्यागमनसंभावनानिवृत्तौ तदुत्तरकालं कनिष्ठेन दाराग्निहोत्रसंयोगे क्रियमाणे परिवेत्तृत्वरूपो दोषो न भवतीति। एवमेव विरक्तवेश्यातिसक्तादिष्वपि च कियन्तमपि कालं तथैवावस्थितेषु तत्स्वभावत्वावधारणेन विवाहसंभावनानिवृत्तौ तदुत्तरकालं कनिष्ठेन विवाहादौ क्रियमाणे न दोषः।

अनेनैवाभिप्रायेण सुमन्तुनाऽप्युक्तम्—

"व्यसनासक्तचित्तो वा नास्तिको वाऽथवाऽग्रजः।
कनीयान्धर्मकामस्तु आधानमथ कारयेत्" इति॥

आधानग्रहणं विवाहस्याप्युपलक्षणार्थम्। क्लीबादयस्तु स्वभावतः सर्वथा विवाहानर्हत्वात्कियन्तमपि कालं न प्रतीक्षणीयाः। द्वादशेति मुख्यः पक्षः। अष्टावित्यनुकल्पः।

गर्गोऽत्र विशेषमाह—

"प्रोषितं तु प्रतीक्षेत वर्षत्रयमपि त्वरन्।
प्रोषितं यद्यशृण्वानस्त्र्यब्दादन्ते समाचरेत्॥
आगते तु पुनस्तस्मिन्पादं वा शुद्धये चरेत्" इति॥

पादं पादकृच्छ्रम्[1]।

कार्ष्णाजिनिः—

"उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा।
राजयक्ष्मामयावी च न न्याय्यः स्यात्प्रतीक्षितुम्" इति॥

## अथैतत्प्रायश्चित्तम्।

तत्र वसिष्ठः—"परिवेत्ता च दाता च कृच्छ्रातिकृच्छ्रौ चरित्वा
तस्मै तां दत्त्वा पुनर्निविशेत्तां चैवोपयच्छेत" इति।

अत्रापरार्के कनिष्ठेनोढां ज्येष्ठ उद्वहेत्। अशास्त्रीयविवाहेन कनिष्ठनिरूपितभार्यात्वानुत्पत्तेर्ज्येष्ठोद्वाहयोग्यत्वात्। कनिष्ठस्त्वन्यामुद्वहेदिति।

---

१ ग. ङ. °मू। तथा च का°।

हारीतेन ज्येष्ठस्याब्दव्रतमुक्त्वाऽन्योद्वाह एवोक्तः—

" ज्येष्ठस्य समाप्तेऽब्दे तां कन्यां ज्येष्ठायोपपादयेयुः,
स तामनुमान्यान्यया निर्विशेदेवं धर्मो न लुप्यते " इति ।

तस्मात्परिवेत्ता कृच्छ्रातिकृच्छ्रोत्तरं स्वोढां ज्येष्ठाय ब्रह्मचार्याहृतभैक्षवद्गुरुपरिभवपरिहारार्थं निवेद्य तेनानुज्ञातां तामेवोद्वहेदिति वासिष्ठार्थः । अत्रैवं व्यवस्था । संनिधावकामतः कृच्छ्रातिकृच्छ्रौ याज्ञवल्कीयं व्रतचतुष्टयं च वर्णशक्त्याद्यपेक्षया योजनीयम् । कामतः संनिधौ कन्यापित्राद्यनुज्ञातोद्वाहे तु मानवं त्रैमासिकमिति ।

यत्तु सुमन्तुः—" परिवित्तिपरिवेत्तृकन्यादातृयाजकानां द्वादशरात्रं सक्तुप्राशनं ब्राह्मणतर्पणं च पुनर्भुवमाचक्षते न भूयश्चैनामभिगच्छेत् " इति तच्छूद्रपरम् ।

यत्तु यमः—" कृच्छ्रौ द्वयोः पारिवेद्ये कन्यायाः कृच्छ्र एव च ।
अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेत् " ॥

इति तदज्ञानतः क्षत्रियविषयम् । द्वयोः परिवेत्तृपरिवित्त्योः प्रत्येकं द्वौ कृच्छ्रौ ।

अग्रेदिधिषूस्वरूपं देवलेनोक्तम्—

" ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
या साऽग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता " इति ॥

एतत्प्रायश्चित्तमाह वसिष्ठः—

" अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निर्विशेत्तां चैवोपयच्छेद्दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत् " इति ।

अग्रेदिधिषूपतिः प्राजापत्यं चरित्वा तामेव ज्येष्ठां पश्चादन्येनोढामुद्वहेत् । दिधिषूपतिस्तु कृच्छ्रातिकृच्छ्रौ चरित्वा स्वोढां ज्येष्ठां कनीयस्याः पूर्वविवोढ्रे दत्त्वाऽन्यामुद्वहेदिति मिताक्षरायां कल्पतरौ च ।

व्याख्यान्तरमपि स्मृत्यसारे—

" कनिष्ठापतिर्द्वादशरात्रं कृत्वा तां स्वोढामेव ज्येष्ठोद्वाहे जात उद्वहेत् ।
ज्येष्ठापतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा स्वोढां कनिष्ठापतये ब्रह्मचार्याहृतभैक्षवन्निवेद्य तदनुज्ञातां तां ज्येष्ठामेवोद्वहेत् " इति ।

---

१ ग. ङ. कृत्वा ।

अपरार्के तु—अग्रेदिधिषूपतिस्थाने दिधिषूपतिरिति पठितम् । दिधिषूपतिस्थाने त्वग्रेदिधिषूपतिरिति । तथा च प्रायश्चित्तविकल्पः ।

इति परिवित्त्यादिस्वरूपं तत्प्रायश्चित्तं च ।

---

## अथ कूटानि ।

तत्र मत्कृताः श्लोकाः—

कूटान्विचार्यैव कृतो विवाहः शुभदो भवेत् ।
अन्यथाऽनिष्टकृद्यस्मादतस्तान्वक्ष्यतेऽ(न्ब्रूमहेऽ)धुना ॥ १ ॥
गजक्ष्मासंख्यकाः कूटा यद्यप्यृषिभिरीरिताः ।
तत्राप्यावश्यकाः कूटास्तैरेवाष्टौ प्रकीर्तिताः ॥ २ ॥

वर्णो वश्यं च नक्षत्रं योनिः खगगणौ तथा ।
राशिर्नाडीति कूटाः स्युर्वलिनोऽत्र यथोत्तरम् ॥ ३ ॥
गजक्ष्मोर्ध्वं गुणैकत्वं शुभकृत्स्याद्यथोत्तरम् ।
झषकर्कालयो विप्राः क्षत्रा अजमृगौ धनुः ॥ ४ ॥
वैश्या वृषाङ्गनानक्राः शूद्रा युग्मतुलाघटाः ।
वरो वर्णोत्तम इह भवेच्चेच्छुभदस्तथा ॥ ५ ॥
वर्णोत्तमा वरात्कन्या चेत्स्यादशुभदं तदा ।

नृराशेर्जलजा भक्ष्याः शेषा वश्या हरिं विना ॥ ६ ॥
सिंहस्य सर्वे वश्याः स्यू राशयो वृश्चिकं विना ।
नृराशेः कर्कमकरमीनसिंहा अरातयः ॥ ७ ॥
वश्यभक्ष्यादिकं सर्वं ज्ञेयं लोकप्रसिद्धितः ।

---

वधूभाद्वरभं गण्यं वरभात्कन्यकर्क्षकम् ॥ ८ ॥
कार्ये उभे नवहृते शेषा वह्नीषुपर्वताः ।
वसिष्ठात्रिप्रभृतिभिरनिष्टाः परिकीर्तिताः ॥ ९ ॥

---

अश्वेभमेषसर्पाहिश्वौत्वजाखुभुगुन्दुराः ।
उन्दुरो गौश्च महिषीपशुभुङ्महिषास्तथा ॥ १० ॥
व्याघ्रैणैणश्वकपयः सर्पार्यहिरिपू कपिः ।
सिंहाश्वसिंहा गौर्हस्तीत्यश्विभाद्योनयः स्मृताः ॥ ११

सोदर्यभ्रातृविषये कात्यायनः—

" देशान्तरस्थान्क्लीबांश्च शूद्रतुल्यान्सहोदरान् ।
वेश्यासक्तान्कुवृषणान्पतितानतिरोगिणः ॥
जडमूकान्धबधिरकुब्जवामनखेलकान् ।
अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुहकोन्मत्तरोगांश्च परिविन्दन्न दुष्यति " इति ॥

क्लीबाः स्त्रीसंभोगविषयेऽधृष्टाः । शूद्रतुल्याः शूद्रधर्मिणः । वेश्यासक्ता वेश्यास्वभिरताः । कुवृषणाः कुत्सितवृषणाः । पतिता ब्राह्मण्याच्च्युताः । अतिरोगाः क्षयापस्मारकुष्ठादयस्तद्वन्तः । जडादयो वामनान्ताः प्रसिद्धाः । खेलका भग्नपादाः । अतिवृद्धाः प्रसिद्धाः । अभार्या नैष्ठिकब्रह्मचारिणः । कामतोऽकारिणो विवाहादिच्छया निवृत्ताः । कुहकाः परवञ्चनाय वृथोद्योगपराः । कुहकपदस्थाने कुटिल इति क्वचित्पाठः । अत्र ये सर्वात्मना विवाहानधिकारिणः क्लीबादयस्तेषु सत्सु कालविशेषमन्तरेणापि परिवेदनान्न दोषः । ये तु कालान्तरे संभावितविवाहाधिकारा देशान्तरस्थविरक्तवेश्यातिसक्तशूद्रतुल्यकृषिसक्तराजपरतन्त्रधनवृद्धिप्रसक्तकामतोकारिकुहकतस्करास्तेषु सत्सु वक्ष्यमाणकालप्रतीक्षणं कृत्वा परिवेदनं कुर्वतां न दोषोऽस्तीति हेमाद्रिः ।

देशान्तरगतज्येष्ठसोदरविषये प्रतीक्षावधिमाह वसिष्ठः—

" द्वादशाष्टौ वा वर्षाणि ज्येष्ठभ्रातरमनिविष्टमप्रतीक्षमाणः
प्रायश्चित्ती भवति" इति ।

अत्र हेमाद्रिः—धर्मार्थमर्थार्थं वा देशान्तरगतस्य ज्येष्ठस्य द्वादशवर्षं प्रतीक्षा ।

तथा च स्मृतिः—

" द्वादशैव तु वर्षाणि ज्यायान्धर्मार्थयोगतः ।
न्याय्यः प्रतीक्षितुं भ्रात्रा श्रूयमाणः पुनः पुनः " इति ।

धर्मार्थयोगत इति विद्याया अप्युपलक्षणार्थम् । अत एव गौतमेन 'नष्टे भर्तरि' इति प्रक्रम्य 'द्वादश वर्षाणि ब्राह्मणस्य विद्यासंबन्धेन' इति भार्याया भर्तृप्रतीक्षणकालमुक्त्वाऽभिहितम्—'भ्रातरि चैवं ज्यायसि यवीयान्कन्याग्न्याधेयेष्टिषु' इति ।

१ ङ °मप्र° ।

नष्टे भर्तरि कुत्र गत इत्यज्ञाते भर्तरि। अत्यन्तदूरदेशान्तरगत इति यावत्। विद्यासंबन्धेन विद्याग्रहणार्थं देशान्तरगते भर्तरि ब्राह्मणभार्यया द्वादश वर्षाणि प्रतीक्ष्य तत्क्रियादि कार्यम्। एवं ब्राह्मणः कनिष्ठो ज्येष्ठे भ्रातरि विद्याग्रहणार्थं देशान्तरगते द्वादश वर्षाणि प्रतीक्ष्य विवाहाग्न्याधानेष्टीः कुर्यात्। कार्यान्तरार्थं देशान्तरगमने तु दशाष्टौ वेति पक्षद्वयम्। अत्रेदं विवक्षितम्। देशान्तरगतस्य स्वाभिमतं कार्यं निर्वर्त्य प्रत्यागमनसंभावनानिवृत्तौ तदुत्तरकालं कनिष्ठेन दाराग्निहोत्रसंयोगे क्रियमाणे परिवेत्तृत्वरूपो दोषो न भवतीति। एवमेव विरक्तवेश्यातिसक्तादिष्वपि च कियन्तमपि कालं तथैवावस्थितेषु तत्स्वभावत्वावधारणेन विवाहसंभावनानिवृत्तौ तदुत्तरकालं कनिष्ठेन विवाहादौ क्रियमाणे न दोषः।

अनेनैवाभिप्रायेण सुमन्तुनाऽप्युक्तम्—

" व्यसनासक्तचित्तो वा नास्तिको वाऽथवाऽग्रजः।
कनीयान्धर्मकामस्तु आधानमथ कारयेत् " इति॥

आधानग्रहणं विवाहस्याप्युपलक्षणार्थम्। क्लीबादयस्तु स्वभावतः सर्वथा विवाहानर्हत्वात्कियन्तमपि कालं न प्रतीक्षणीयाः। द्वादशेति मुख्यः पक्षः। अष्टावित्यनुकल्पः।

गर्गोऽत्र विशेषमाह—

" प्रोषितं तु प्रतीक्षेत वर्षत्रयमपि त्वरन्।
प्रोषितं यद्यशृण्वानस्त्र्यब्दादन्ते समाचरेत्॥
आगते तु पुनस्तस्मिन्पादं वा शुद्धये चरेत् " इति॥

पादं पादकृच्छ्रम्[1]।

कार्ष्णाजिनिः—

" उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव वा।
राजयक्ष्मामयावी च न न्याय्यः स्यात्प्रतीक्षितुम् " इति॥

## अथैतत्प्रायश्चित्तम्।

तत्र वसिष्ठः—" परिवेत्ता च दाता च कृच्छ्रातिकृच्छ्रौ चरित्वा
तस्मै तां दत्त्वा पुनर्निविशेत्तां चैवोपयच्छेत " इति।

अत्रापरार्के कनिष्ठेनोढां ज्येष्ठ उद्वहेत्। अशास्त्रीयविवाहेन कनिष्ठनिरूपितभार्यात्वानुत्पत्तेर्ज्येष्ठोद्वाहयोग्यत्वात्। कनिष्ठस्त्वन्यामुद्वहेदिति।

---

१ ग. ङ. °म्। तथा च का°।

हारीतेन ज्येष्ठस्याब्दव्रतमुक्त्वाऽन्योद्वाह एवोक्तः—

" ज्येष्ठस्य समाप्तेऽब्दे तां कन्यां ज्येष्ठायोपपादयेयुः,
स तामनुमान्यान्यया निर्विशेदेवं धर्मो न लुप्यते " इति ।

तस्मात्परिवेत्ता कृच्छ्रातिकृच्छ्रोत्तरं स्वोढां ज्येष्ठाय ब्रह्मचार्याहृतभैक्षवद्गुरुपरिभवपरिहारार्थं निवेद्य तेनानुज्ञातां तामेवोद्वहेदिति वासिष्ठार्थः। अत्रैवं व्यवस्था। संनिधावकामतः कृच्छ्रातिकृच्छ्रौ याज्ञवल्कीयं व्रतचतुष्टयं च वर्णशक्त्याद्यपेक्षया योजनीयम्। कामतः संनिधौ कन्यापित्राद्यनुज्ञातोद्वाहे तु मानवं त्रैमासिकमिति।

यत्तु सुमन्तुः—" परिवित्तिपरिवेत्तृकन्यादातृयाजकानां द्वादशरात्रं सक्तुप्राशनं ब्राह्मणतर्पणं च पुनर्भुवमाचक्षते न भूयश्चैनामभिगच्छेत् " इति तच्छूद्रपरम्।

यत्तु यमः—" कृच्छ्रौ द्वयोः पारिवेद्ये कन्यायाः कृच्छ्र एव च।
अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेत् " ॥

इति तदज्ञानतः क्षत्रियविषयम्। द्वयोः परिवेत्तृपरिवित्त्योः प्रत्येकं द्वौ कृच्छ्रौ।

अग्रेदिधिषूस्वरूपं देवलेनोक्तम्—

" ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा।
या साऽग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता " इति ॥

एतत्प्रायश्चित्तमाह वसिष्ठः—

" अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निर्विशेत्तां चैवोपयच्छेद्दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेत् " इति।

अग्रेदिधिषूपतिः प्राजापत्यं चरित्वा तामेव ज्येष्ठां पश्चादन्येनोढामुद्वहेत्। दिधिषूपतिस्तु कृच्छ्रातिकृच्छ्रौ चरित्वा स्वोढां ज्येष्ठां कनीयस्याः पूर्वविवोढ्रे दत्त्वाऽन्यामुद्वहेदिति मिताक्षरायां कल्पतरौ च।

व्याख्यान्तरमपि स्मृत्यर्थसारे—

" कनिष्ठापतिर्द्वादशरात्रं कृत्वा तां स्वोढामेव ज्येष्ठोद्वाहे जात उद्वहेत्।
ज्येष्ठापतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा स्वोढां कनिष्ठापतये ब्रह्मचार्याहृतभैक्षवन्निवेद्य तदनुज्ञातां तां ज्येष्ठामेवोद्वहेत् " इति।

---

[1] ग. ङ. कृत्वा।

अपरार्के तु—अग्रेदिधिषूपतिस्थाने दिधिषूपतिरिति पठितम् । दिधिषूपतिस्थाने त्वग्रेदिधिषूपतिरिति । तथा च प्रायश्चित्तविकल्पः ।

इति परिविच्यादिस्वरूपं तत्प्रायश्चित्तं च ।

## अथ कूटानि ।

तत्र मत्कृताः श्लोकाः—

कूटान्विचार्यैव कृतो विवाहः शुभदो भवेत् ।
अन्यथाऽनिष्टकृद्यस्मादतस्तान्वक्ष्यतेऽ(न्ब्रूमहेऽ)धुना ॥ १
गजक्ष्मासंख्यकाः कूटा यद्यप्यृषिभिरीरिताः ।
तत्राप्यावश्यकाः कूटास्तैरेवाष्टौ प्रकीर्तिताः ॥ २ ॥

---

वर्णो वश्यं च नक्षत्रं योनिः खगगणौ तथा ।
राशिर्नाडीति कूटाः स्युर्बलिनोऽत्र यथोत्तरम् ॥ ३ ॥
गजक्ष्मोर्ध्वं गुणैकत्वं शुभकृत्स्याद्यथोत्तरम् ।
झषकर्कालयो विप्राः क्षत्रा अजमृगौ धनुः ॥ ४ ॥
वैश्या वृषाङ्गनानक्राः शूद्रा युग्मतुलाघटाः ।
वरो वर्णोत्तम इह भवेच्चेच्छुभदस्तथा ॥ ५ ॥
वर्णोत्तमा वरात्कन्या चेत्स्यादशुभदं तदा ।

नृराशेर्जलजा भक्ष्याः शेषा वश्या हरिं विना ॥ ६ ॥
सिंहस्य सर्वे वश्याः स्यू राशयो वृश्चिकं विना ।
नृराशेः कर्कमकरमीनसिंहा अरातयः ॥ ७ ॥
वश्यभक्ष्यादिकं सर्वं ज्ञेयं लोकप्रसिद्धितः ।

---

वधूभाद्वरभं गण्यं वरभात्कन्यकर्क्षकम् ॥ ८ ॥
कार्ये उभे नवहृते शेषा वह्नीषुपर्वताः ।
वसिष्ठात्रिप्रभृतिभिरनिष्टाः परिकीर्तिताः ॥ ९ ॥

---

अश्वेभमेषसर्पाहिश्वौत्वजाखुभुगुन्दुराः ।
उन्दुरो गौश्च महिषीपशुभुङ्महिषास्तथा ॥ १० ॥
व्याघ्रैणैणश्वकपयः सर्पार्यहिरिपू कपिः ।
सिंहाश्वसिंहा गौर्हस्तीत्यश्विभाद्योनयः स्मृताः ॥ ११ ॥

क्रमादिभद्विसंख्याका वैरभावोऽधुनोच्यते ।
सिंहेभौ महिषाश्वौ चौतून्दुरौ श्वमृगौ तथा ॥ १२ ॥
कपिमेषौ च गोव्याघ्रौ नकुलाही मिथस्त्वरी ।
वरवध्वोरिदं वैरं विचार्यं सर्वथा बुधैः ॥ १३ ॥

भौमशुक्रबुधाब्जार्कबुधशुक्रकुजा गुरुः ।
शनिः शनिर्गुरुश्चेति मेषाद्राश्यधिपाः स्मृताः ॥ १४ ॥
कुजेन्द्विज्यारातयोऽरी शनिशुक्रौ समो बुधः ।
हिमांशोस्त्वर्कसौम्यौ च मित्रे शेषा ग्रहाः समाः ॥ १५ ॥
कुजस्य सुहृदो ज्ञेया हिमरश्म्यर्कसूरयः ।
शत्रुर्बुधः शुक्रशनी उदासीनौ प्रकीर्तितौ ॥ १६ ॥
बुधस्य मित्रे शुक्रार्कौ रजनीशोऽस्य वै रिपुः ।
बृहस्पतिशनिक्ष्माजा उदासीनाः प्रकीर्तिताः ॥ १७ ॥
सूरेर्मित्राणि दिनकृद्रजनीकृत्कुजाः स्मृताः ।
रिपू सौम्यसितौ ह्यस्य समः स्याद्दिनकृत्सुतः ॥ १८ ॥
कवेः सौम्यशनी मित्रे शत्रू शशिरवी स्मृतौ ।
उदासीनौ समाख्यातावङ्गारकबृहस्पती ॥ १९ ॥
शनेर्मित्रे शुक्रबुधौ द्वेष्टारोऽर्काब्जभूमिजाः ।
बृहस्पतिरुदासीनो मन्दचारस्य कीर्तितः ॥ २० ॥

अश्वयुङ्मृगसावित्रस्वातीपुष्याः पुनर्वसू ।
मैत्रश्रवणरेवत्य एता देवगणाः स्मृताः ॥ २१ ॥
भरणी रोहिणी चैव रौद्रं पूर्वात्रयं तथा ।
भानि त्रीण्युत्तराख्यानि(णि) मनुष्याः परिकीर्तिताः ॥ २२ ॥
ज्येष्ठामूलमघाश्लेषाविशाखात्वाष्ट्रवारुणाः ।
कृत्तिका च धनिष्ठा च राक्षसाः परिकीर्तिताः ॥ २३ ॥
स्वगणे तूत्तमं विद्यान्मध्यमं दैवमानुषम् ।
दैवासुरे तु कलहो मृत्युर्मानुषराक्षसे ॥ २४ ॥

भवेद्द्विव्ययके नैःस्वं षडष्टसु विपद्भवेत् ।
अनपत्यत्वमर्थाङ्के शेषे तु शुभदं भवेत् ॥ २५ ॥

शेषेऽप्यस्ति विशेषः सोऽधुना सर्व उदीर्यते ।
वेदभेदा एकभस्य ज्योतिर्विद्भिरुदीरिताः ॥ २६ ॥
भिन्नर्क्षमेकराशि स्यादेकर्क्षं भिन्नराशिकम् ।
एकराश्यृक्षभिन्नाङ्घ्रि त्वेकराश्यृक्षपादकम् ॥ २७ ॥
अन्त्यं तु निन्दितं ज्ञेयमवशिष्टं शुभं भवेत् ।
समभं सत्यृतुगजे वृषकर्काङ्गनादि चेत् ॥ २८ ॥
यदि स्यात्षष्ठसहितं तदैतच्छुभदं स्मृतम् ।
वृषस्तु समभस्तस्मात्षष्ठी भवति वै तुला ॥ २९ ॥
तया तु सहितं ग्राह्यं तत्पत्योर्मित्रभावतः ।
अष्टमे सन्नसमभं तत्पत्योररिभावतः ॥ ३० ॥
द्विर्द्वादशे तु समभं द्वितीयसहितं यदि ।
तदा भवेच्छोभनदं विपरीतमसत्स्मृतम् ॥ ३१ ॥
विषमोऽप्यङ्गनायुक्तः सिंहः श्रेष्ठः प्रकीर्तितः ।

ज्येष्ठा मूलं हस्त आर्द्रा शततारा पुनर्वसू ॥ ३२ ॥
पूर्वा भाद्रोत्तरा(र)फल्गुन्यश्विन्यौ नाडिकाऽऽदिमा ।
पुष्यो मृगशिरश्चित्राऽनूराधा भरणी तथा ॥ ३३ ॥
धनिष्ठाऽऽद्या तथाऽऽषाढा पूर्वा फाल्गुनिका तथा ।
उत्तरा भाद्रकाश्चेति मध्यमा नाडिका स्मृता ॥ ३४ ॥
कृत्तिका रोहिणी स्वाती मघाऽऽश्लेषाविशाखिके ।
अन्त्याऽऽषाढा वैष्णवं च रेवतीत्यन्त्यनाडिका ॥ ३५
एकनाड्यां विवाहश्चेत्तदा मरणमीरितम् ।
वध्वा भवेद्यद्यलाभो वर्णैर्विप्रादिभिस्तदा ॥ ३६ ॥
पार्श्वनाड्यां प्रकर्तव्यं गोदादक्षिणदेशके ।
सर्वथा मध्यमा नाडी वर्जनीया विचक्षणैः ॥ ३७ ॥
बाणनन्दं द्विव्ययं तु ग्रहमैत्र्या शुभं स्मृतम् ।
षड्भिर्वश्यादिभिः प्रोक्तं शुभदं तु षडष्टकम् ॥ ३८ ॥
यदा वधूर्नरगणा वरो रक्षोगणो भवेत् ।
तत्योः सत्कूटमैत्र्योस्तन्मेलनं शुभदं तदा ॥ ३९ ॥

१ ग. ङ. भवतु ।

यदा रक्षोगणा स्त्री स्यात्पुमान्नरगणस्तदा ।
शुभवश्यादिकैः षड्भिर्नृदूरमधुनोच्यते ॥ ४० ॥
स्त्रीभात्पुरुषनक्षत्रं समीपे स्यात्तदा न सत् ।
खेटोडुमैत्र्योः शुभकृदेतदेव प्रकीर्तितम् ॥ ४१ ॥
द्व्यर्के ताम्रं सुवर्णं च गौर्वृषश्च षडष्टके ।
बाणाङ्के रौप्यकांस्ये तु नाड्येकत्वे गवादिकम् ॥ ४२ ॥

नुः श्रैष्ठ्ये वर्णयोरैक्ये गुणस्तत्रैक उच्यते ।
पुरुषस्य कनिष्ठत्वे गुणाभावः समीरितः ॥ ४३ ॥
वश्यभक्ष्ये त्वर्धगुणो जात्या ज्ञेया तु भक्ष्यता ।
गुणद्वयं मिथो मैत्र्ये वैरभक्ष्ये गुणो नहि ॥ ४४ ॥
अरिवश्ये गुणस्त्वेको मनुष्याणामली रिपुः ।
लोकप्रसिद्धितः सिंहस्याप्येष रिपुरीरितः ॥ ४५ ॥
भवेदुभयतः सद्धं तदा ज्ञेयास्त्रयो गुणाः ।
एकतश्चेत्तदा त्र्यर्धं ताराभावे गुणो नहि ॥ ४६ ॥
योनिकूटेऽतिसुहृदोर्गुणाश्चत्वार ईरिताः ।
मित्रयोस्तु त्रयः प्रोक्ताः स्वभावे द्वौ गुणौ स्मृतौ ॥ ४७ ॥
समयोर्गुण एकः स्यान्महद्वै(हावै)रे गुणो नहि ।
सिंहेभयोर्महद्वैरं तथा बभ्रुद्विजिह्वयोः ॥ ४८ ॥
गोव्याघ्रयोर्मृगशुनोरोतून्दुरुकयोस्तथा ।
अजकप्योरश्वकाल्योः स्वभावगुणमीरितम् ॥ ४९ ॥
कदाचिदेकयोनिष्वप्यरित्वं स्यात्परस्परम् ।
गजयोः सिंहयोरोत्वोः शुनोर्मूषकयोरपि ॥ ५० ॥
एवमूह्यं मैत्र्यमपि लोकरीत्या विचक्षणैः ।
ऐकाधिपत्ये मैत्र्ये च मिथः पञ्च गुणा इह ॥ ५१ ॥
चत्वारः सममैत्रे स्युर्द्वयोः साम्ये गुणास्त्रयः ।
मित्रवैरे गुणश्चैकः समवैरे गुणार्धकम् ॥ ५२ ॥
परस्परं खेटवैरं गुणाभावं विनिर्दिशेत् ।
ना देवो मनुजा स्त्री स्यात्संग्राह्यास्तत्र षड्गुणाः ॥ ५३ ॥

१ ङ. °स्तथा । शु° । २ ग. शुभं व° । ३ ख. ग. ङ. °णैः । एका° ।

वैपरीत्ये पञ्च गुणा गणसाम्ये तु षड्गुणाः।
दैत्यो ना देवता स्त्री चेत्तत्रैको गुण ईरितः॥ ५४॥
अवशिष्टे गुणाभावो वसिष्ठाद्यैः प्रकीर्तितः।
दुष्कूटे चेद्योनिमैत्रं स्त्रीदूरं स्यात्तदाऽव्ययः॥ ५५॥
एतद्वयं न चेत्तत्र गुणाभावः प्रकीर्तितः।
अनयोर्मध्य एकं स्यात्तदैको गुण इष्यते॥ ५६॥
भैकपादे गुणाभावो ज्योतिर्विद्भिरिहोदितः।
सति नक्षत्रकूटे तु वरदूरं भयोनिजम्॥ ५७॥
वैरं च स्यात्तदा ज्ञेया गुणा रसमिता बुधैः।
नक्षत्रैक्ये भिन्नराशौ गुणाः पञ्च प्रकीर्तिताः॥ ५८॥
अवशिष्टे सुकूटे तु ग्राह्याः सप्त गुणा बुधैः।
नाडीभेदे गुणा अष्टावनुक्ते तु गुणो नहि॥
संक्षेपेण मयोक्तानि कूटान्यष्टौ यथामति॥ ५९॥

इति कूटानि।

## अथ जन्मराशिनामराश्योर्निर्णयः।

ज्योतिर्निबन्धे—" विवाहे सर्वमाङ्गल्ये यात्रादौ ग्रहगोचरे।
जन्मराशेः प्रधानत्वं नामराशिं न चिन्तयेत्।
देशे ग्रामे गृहे युद्धे सेवायां व्यवहारके।
नामराशेः प्रधानत्वं जन्मराशिं न चिन्तयेत्।
काकिण्यां वर्गशुद्धौ च दाने द्यूते ज्वरोदये।
मन्त्रे पुनर्भूवरणे नामराशेः प्रधानता " इति।

यदि वधूवरयोर्मध्य एकस्य जन्मर्क्षं ज्ञातमेकस्य न ज्ञातं तदा शुद्धिमेलनादिकं कथमवलोकनीयमित्याकाङ्क्षायां शार्ङ्गधरीये—
" विवाहघटनं चैव लग्नजं ग्रहजं बलम्।
नामर्क्षाच्चिन्तयेत्सर्वं जन्म न ज्ञायते यदि " इति।

नामाद्याक्षरसिद्धं यदृक्षं नक्षत्रं तस्मादित्यर्थः। नामाद्याक्षरेण नक्षत्रपरिज्ञानं तु वक्ष्यमाणावकहडाचक्रादिति ज्ञेयम्।

# अथ मण्डपादि ।

तत्र वसिष्ठः—"षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् ।
मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् ।
अष्टहस्तं तु रचयेन्मण्डपं वा द्विषट्करम्" इति ।

द्विषट्करो द्वादशकरः ।

अन्यत्रापि—"मङ्गलेषु च सर्वेषु मण्डपो गृहमानतः ।
कार्यः षोडशहस्तो वा न्यूनहस्तो दशावधिः ।
स्तम्भैश्चतुर्भिरेवात्र वेदिर्मध्ये प्रतिष्ठिता" इति ।

गृहमानत इत्यस्य महति गृहे महान्मण्डपः । अल्पे न्यून इत्यर्थः । दशावधिरिति न्यूनताया अवधिः । अतो वसिष्ठोक्तोऽष्टहस्तो मण्डपोऽत्यन्तापद्विषयः । दशहस्तं तु रचयेदित्यपि कुत्रचित्पाठः । अस्मिन्पाठे संनिहितवचनविरोधाभावः स्पष्ट एव । स्तम्भैश्चतुर्भिरित्यत्र युक्तेति शेषः । इदं च वेदिविशेषणम् । इयं च वेदिर्देवकस्थापनार्था ।

पारिजाते नारदः—

"हस्तोच्छ्रितां चतुर्हस्तैश्चतुरश्रां समन्ततः ।
स्तम्भैश्चतुर्भिः सुश्लक्ष्णां वामभागे च सद्मनि ।
समां चैव चतुर्दिक्षु सोपानैरतिशोभिताम् ।
प्रागुदक्प्रवणां रम्भास्तम्भैर्हस्तिशुकादिभिः ।
विचित्रेणाङ्कितैः कुम्भैर्विविधैस्तोरणाङ्कुरैः ।
शृङ्गारपुष्पनिकरैर्वर्णकैः समलंकृताम् ।
विप्राशीर्वचनैः पुण्यैस्त्रिभिर्दीपैर्मनोरमाम् ।
वादित्रगीतनृत्याद्यैर्हृदयानन्दिनीं शुभाम् ।
एवंविधामारुरुक्षेन्मिथुनं साग्निवेदिकाम्" इति ।

अत्र प्रमाणं संस्कार्यायाः कन्यायाः ।

"कन्याहस्तैः पञ्चभिः सप्तभिर्वा कार्या वेदिः कूर्मपृष्ठोन्नता सा ।
हर्म्ये रम्ये निर्गमाद्वामभागे जायापत्योराशिषैः स्तम्भयुक्ता" इति ।

आशिषैरिति च्छान्दसम् । एतेन वरप्रमाणस्यात्र कैश्चिद्ग्राह्यतोक्ता सा निरस्ता द्रष्टव्या । प्रागुदक्प्रवणा प्रागुदङ्निम्ना । सर्वेषां तृतीयान्तानां पदानां समलंकृतामित्यनेनान्वयः । धातुमयैः काष्ठमयैर्मार्तिकैर्वा हस्तिशुकादिभिः सम-

न्तास्तस्थापितैरलंकृतामित्यर्थः । विचित्रेण वर्णेनाङ्किताश्चिह्निताः कुम्भास्तैरलंकृतामित्यर्थः । शृङ्गारसंपादकानि मालतीप्रभृतिसुगन्धिपुष्पाणि तेषां निकराः समूहास्तैः शोभिताम् । वर्णकैर्नानावर्णैः शोभिताम् । पुण्यैर्विप्राशीर्वचनैरित्यनेन दंपत्योर्वेद्यारोहणकाले विप्रैराशिषो देया इति द्योत्यते । त्रिभिर्दीपैर्वेद्याः पुरोभागे स्थापितैर्मनोरमाम् । वादित्रगीतनृत्याद्यैर्हृदयानन्ददायिनी-*मित्यनेन दंपत्योर्वेद्यारोहणकाले वादित्रगीतनृत्यादिकं कारणीयमिति सूच्यते । साग्निवेदिकामित्यनेन दंपत्योर्वेद्यारोहणात्पूर्वं होमोपयोगिनामग्न्यादीनामुपकल्पनं वेद्यां कार्यमिति सूच्यते । एतच्च साग्नीत्यस्य वेदिकाया विशेषणत्वपक्षे । मिथुनस्य साग्नीति विशेषणं भिन्नं पदं वेदिकापदात् । एतस्मिन्पक्ष आरोहणसमयेऽग्नेर्वेदिकायामुपकल्पनं ज्ञेयम् । एवंविधामुक्तविशेषणविशिष्टां वेदिं मिथुनमारुरुक्षेत् । वध्वा सहैव वर आरोहणं कुर्यादित्यर्थः ।

केशवार्कोऽपि—

" वेदिकां विरचयेद्यथा तथा स्यादियं प्रविशतः प्रदक्षिणा ।
स्युर्जनाश्रययवोप्तिवर्णकाः षण्नवत्रिदिवसेषु नाग्रतः " इति ।

यवोप्तिरङ्कुरारोपणाख्यं कर्म । जनाश्रयो मण्डपः । ' मण्डपोऽस्त्री जनाश्रयः ' इत्यमरः ।

मण्डपादिनिर्माणे दिनान्याह नारदः—

" नवत्रिषष्ठो नववारकः शुभो न वर्णकेनापि विवाहमण्डपः " इति ।

नवमे तृतीये षष्ठे च दिवसे नववारको न शुभः । नववारकोऽङ्कुरारोपणम् । वर्णकेनानुकल्पतया विवाहमण्डपनिर्माणमपि नवमादिदिनेषु न शुभम् । मुख्यकल्पेन तन्निर्माणे त्वेतेषु दिनेषु सुतरां न कार्यमित्याशयः । विवाहार्थो मण्डपो वर्णकेनैव क्रियमाणो न शुभोऽन्यार्थस्तु वर्णकेनैव क्रियमाणोऽपि शुभ इति केचित् ।

दैवज्ञमनोहरः—

" चित्रा विशाखा शततारकाऽश्विनी ज्येष्ठाभरण्यौ शिवभाच्चतुष्टयम् ।
हित्वा प्रशस्तं फलतैलवेदिकाप्रदानकं कण्डनमण्डपादिकम् " इति ।

शिवभमार्द्रानक्षत्रं तदारभ्याऽऽश्लेषान्तं नक्षत्रचतुष्टयं हित्वेत्यर्थः ।

---

* एतद्व्याख्यानानुरोधेन पूर्वे श्लोकेऽपि नन्दिनीं शुभामित्यत्र नन्ददायिनीमित्येव पाठो द्रष्टव्यः ।

हेमाद्रौ व्यासः—

" कण्डनदलनयवारकमण्डपमृद्वेदिवर्णकान्यखिलम् ।
तत्संबन्धि गतागतमृक्षे वैवाहिके कुर्यात् " इति ।

यवारकं भाषया ' चिकसा ' इति ।

ज्योतिर्निबन्धे नारदः—

" कर्तव्यं मङ्गलेष्वादौ मङ्गलायाङ्कुरार्पणम् ।
नवमे सप्तमे वाऽपि पञ्चमे दिवसेऽपि वा ।
तृतीये बीजनक्षत्रे शुभवारे शुभोदये ।
सम्यग्गृहाण्यलंकृत्य वितानध्वजतोरणैः ।
सह वादित्रनृत्याद्यैर्गत्वा प्रागुत्तरां दिशम् ।
तत्र मृत्सिकताः श्लक्ष्णा गृहीत्वा पुनरागतः ।

मृत्सिकता मृत्पांसवः ।

मृन्मयेष्वथ पात्रेषु वैणवेष्वथ वा क्षिपेत् ।
अनेकबीजसंयुक्तां तोयपुष्पोपशोभिताम् " इति ।

ज्योतिर्निबन्धे विशेषः—

" यस्याङ्गं यददोऽङ्गिनो गदितभे कुर्यादिहेन्दोर्बलं नाऽऽलोक्यं
तु विवाहतस्त्र्य३रि६नवा९ह्नि प्राङ्न कुर्यादिदम् " इति ।

अस्यार्थः—यस्य कर्मणो यदङ्गम्, अद इदमङ्गिनो मुख्यस्य गदितभ उक्तनक्षत्रे कुर्यात् । इहास्मिन्नङ्गभूते कर्मणि, इन्दोश्चन्द्रस्य बलं नाऽऽलोक्यं न विचारणीयम् । तत्र विवाहे विशेषः । विवाहतो विवाहदिनात्प्राक्त्र्यरिनवाह्नि तृतीयषष्ठनवमेऽह्नि, इदमङ्गं विवाहाङ्गं न कुर्यात् ।

तत्र विवाहाङ्गं नवविधम् । तदुक्तं ज्योतिर्निबन्धे—

" दलनं कण्डनं चैव व्यञ्जनं मोदकानि च ।
यवारं मण्डपो वेदिः कुङ्कुमं वर्णकं तथा " इति ।

" कार्यं विवाहाङ्गमिदं विवाहभैर्युञ्जन्ति नात्रेन्दुबलाबलं बुधाः ।
षष्ठे तृतीये नवमेऽह्नि लग्नतः पूर्वं न वर्णो न यवारमण्डपौ" इति ।

शार्ङ्गधरीये—

" दलनकण्डनमण्डनवेदिकागृहसंमार्जनवारकमण्डपाः ।
करतलग्रहमध्यगतागतं तदखिलं विदधीत विवाहभे ।

---

' १ ङ. मण्डपेष्वा' ।

विवाहकृत्यं निखिलं विवाहभे विलोकयेन्नात्र बलं हिमद्युतेः।
नवत्रिषष्ठेऽह्नि विवाहपूर्वतो न वर्णको मण्डपतैलमङ्गलम्" इति।

---

दलनं गोधूमादेः पिष्टकरणम्। कण्डनं तण्डुलादेर्मुशलाघातादिना शोधनम्। व्यञ्जनं पर्पटादि। मोदकानि घृतपाचितान्नानि। यवारो(रं) यवारकः(कं) 'चिकसा' इति। वारक इत्यपि पाठः। वारको मङ्गलकलशः। मण्डपो जनाश्रयः। वेदिर्वधूवरयोरुपवेशनार्थं चत्वरम्। कुङ्कुमं गन्धादि। वर्णकं चूर्णगैरिकचित्रलेखनादि। अनेन मार्जनोपलेपनादिकमपि संग्राह्यम्। निखिलमनन्तरोक्तम्।

अथ कन्याया जन्मकालिकग्रहादिसूचितवैधव्यपरिहारोपायः कर्मविपाके—

" ब्राह्मणं साधुमामन्त्र्य संपूज्य विविधार्हणैः।
तस्मै दद्याद्विधानेन विष्णुमूर्तिं चतुर्भुजाम्॥
शुद्धवर्णां सुवर्णेन वित्तशक्त्याऽथवा कृताम्।
रुचिरां निर्मितां शङ्खगदाचक्राब्जसंयुताम्॥
दधानां वाससी पीते कुमुदोत्पलमालिनीम्।
सदक्षिणां च तां दद्यान्मन्त्रमेतमुदीरयेत्॥
यन्मया प्राचि जनुषि घ्नन्त्या(त्या) पतिसमागमम्।
विषोपविषशस्त्राद्यैर्हतो वाऽतिविरक्तया॥
प्राप्नुवन्त्या(त्या) महाघोरं यशःसौख्यधनापहम्।
वैधव्याद्यतिदुःखौघनाशाय सुखलब्धये॥
बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम्।
सुवर्णनिर्मितां शक्त्या तुभ्यं संप्रददे द्विज॥
अनघाऽद्याहमस्मीति त्रिवारं प्रजपेत्ततः।
एवमस्त्विति तस्योक्तिं गृहीत्वा स्वगृहं विशेत्" इति॥

सुवर्णशब्दोऽत्र जातिवाची। परिमाणं तु पलतदर्धतदर्धान्यतमं शक्त्या ज्ञेयम्।

## अथ प्रयोगः।

कन्या स्नानाचमने कृत्वा देशकालौ संकीर्त्य वैधव्यहरं महाविष्णुमूर्तिदानं करिष्य इति संकल्प्य गणेशं संपूज्य साधुं विनीतमध्ययनसंपन्नं ब्राह्मणमाहूय तमाचार्यत्वेन वृत्वा विविधैरुपचारैर्यथाविभवं संपूज्य तद्धस्तेनाग्न्यु-

त्तारणं प्राणप्रतिष्ठां षोडशोपचारैः पूजनं च कारयेत् । वस्त्रार्पणकाले पीते वाससी दापनीये । पुष्पार्पणकाले कुमुदोत्पलमालाऽपि दापनीया ।

पूजान्ते देवं प्रणम्य—

" यन्मया प्राचि जनुषि घ्नन्त्या(त्या) पतिसमागमम् ।
विषोपविषशस्त्राद्यैर्हतो वाऽतिविरक्तया ॥
प्राप्नुवन्त्या(त्या) महाघोरं यशःसौख्यधनापहम् ।
वैधव्याद्यतिदुःखौघनाशाय सुखलब्धये ॥
बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम् ।
सुवर्णनिर्मितां शक्त्या तुभ्यं संप्रददे द्विज " ॥

इति पठित्वा तां ब्राह्मणाय दद्यात् ।

ततः सुवर्णं दक्षिणां दत्त्वाऽनघाऽद्याहमस्मीति त्रिर्वदेत् । एवमस्त्वित्याचार्यस्त्रिवारं प्रतिब्रूयात् ।

ततो यथाशक्ति ब्राह्मणान्भोजयित्वा कर्मेश्वरायार्पयेत् । एवं कृते विवाहयोग्या भवति ।

इति वैधव्यहरप्रतिमादानविधिः ।

## अथ कुम्भविवाहः ।

अथवा वैधव्यपरिहाराय कुम्भविवाहः कार्यः । स चोक्तस्तत्रैव—

" विवाहात्पूर्वदिवसे चन्द्रताराबलान्विते ।
विवाहोक्ते तथा लग्ने कन्यां कुम्भेन चोद्वहेत् ॥
सूत्रेण वेष्टयेत्पश्चाद्दशतन्तुविधानतः ।
कुम्भमालंकृतं देहं तयोरेकान्तमन्दिरे ॥
ततः कुम्भं च निःसार्य प्रभज्य सलिलाशये ।
ततोऽभिषेचनं कुर्यात्पञ्चपल्लववारिभिः " इति ॥

आ समन्ताच्चन्दनपुष्पादिभिरलंकृतं कुम्भं कन्यादेहं च वेष्टयेदित्यन्वयः । तयोस्तदुभयसंबन्धिनि मन्दिरे ।

## अथ प्रयोगः ।

कन्याविवाहकर्ताऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्याः कन्याया वैधव्यहरं कुम्भविवाहं करिष्य इति संकल्प्य गणेशपूजनादिनान्दी-

श्राद्धान्तं कृत्वा वरुणविष्णुप्रतिमयोरग्न्युत्तारणं कृत्वा मही द्यौरित्यादिविधिना कुम्भस्थापनम्। तस्मिन्कुम्भे वरुणप्रतिमायां कृतप्राणप्रतिष्ठायां वरुणपूजनं च विधाय कृतप्राणप्रतिष्ठायां कलशे स्थापितायां विष्णुप्रतिमायां विष्णुं संपूज्य प्रार्थयेत्—

" वरुणाङ्गस्वरूपाय जीवनानां समाश्रय।
पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु॥
देहि विष्णो वरं देव कन्यां पालय दुःखतः " इति॥

ततो विष्णुरूपिणे कुम्भायेमां कन्यां श्रीरूपिणीं समर्पयामीति समर्प्य परि त्वेत्यादिभिर्वक्ष्यमाणैर्वेष्टनमन्त्रैरधस्तादुपरिष्टाच्च मन्त्रावृत्त्या कुम्भं कन्यां च परिवेष्ट्य कुम्भं निःसार्य सलिलाशये प्रभञ्जयित्वा(ज्य) पञ्चपल्लवैः शुद्धजलेन समुद्रज्येष्ठा इत्यादिमन्त्रैः कन्यामभिषिच्य ब्राह्मणान्भोजयेत्।

इति कुम्भविवाहविधिः।

## अथ वाग्दानविधिः।

कश्यपसंहितायाम्—

" अथातः संप्रवक्ष्यामि कन्यावरणमुत्तमम्।
सम्यक्तस्याः प्रदानं च पुत्रपौत्रप्रवर्धनम्॥
पञ्चाङ्गशुद्धिदिवसे चन्द्रताराबलान्विते।
विवाहोक्तेषु ऋक्षेषु कुजवर्जितवासरे॥
मासाद्यदिवसं रिक्तामष्टमीं नवमीं तथा।
त्यक्त्वाऽन्यदिवसे गन्धस्रक्तण्डुलफलादिभिः॥
सहवृद्धद्विजगणो वरयेत्कन्यकां सतीम्।
तथेति तत्पिता कन्यावरणोक्तर्क्षवासरे॥
कुर्यात्प्रदानं कन्यायाः स्वस्तिवाचनपूर्वकम्।
कुलशीलगुणोपेतां सुरूपाय वराय वै॥
ततस्तस्मै कन्यकां च शुक्लाम्बरविभूषणाम्।
दद्यान्मङ्गलघोषैश्च विप्राशीर्वचनैः सह॥
आदौ कृत्वा शचीपूजां पश्चात्सर्वं समाचरेत्।
सुवर्णां पद्मपत्राक्षीं दिव्यस्रग्वस्त्रशोभिताम्॥

१ ङ. °रणान्तं कृ° ।

सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ।
अनर्घ्यमणिमालाभिर्भासयन्तीं दिगन्तरम् ॥
विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ।
ध्यात्वा प्रणम्य तां देवीं कुमारीं(री) प्रार्थयेत्ततः ॥
देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।
विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे " इति ॥

नक्षत्राण्युक्तानि ज्योतिर्निबन्धे—

" विश्वर्क्षपूर्वात्रयकर्णयुग्माश्विन्यग्निमैत्रैश्च विवाहभैर्वा ।
प्रत्यङ्मुखस्तां वरयेत्कुमारीं फलादिभिः प्राग्वदनां सुवेषाम् " इति।

विश्वर्क्षमुत्तराषाढाः । पूर्वात्रयं पूर्वा(र्व)फल्गुनीपूर्वाषाढापूर्वा(र्व)प्रोष्ठपदाः । कर्णयुग्मं श्रवणं धनिष्ठाश्च । अग्निः कृत्तिकाः मैत्रमनुराधाः ।

स्मृत्यन्तरे—" कुर्याद्वैवाहिके मासि वाग्दानं द्विजसत्तमः ।
धिष्ण्ये वैवाहिके चैव मण्डपादि समाचरेत् " इति ॥

धिष्ण्यं नक्षत्रम् ।

वरस्यापि वरणमाह चण्डेश्वरः—

" उपवीतं फलं पुष्पं वासांसि विविधानि च ।
देयं वराय वरणे कन्यापित्रा द्विजेन वा " इति ॥

## अथ तत्प्रयोगः ।

ज्योतिर्विदादिष्टे शुभे मुहूर्ते वरपित्रादिरिष्टबन्धुवृद्धमान्यजनपुरन्ध्रीभिर्माङ्गलिकतूर्यघोषैश्च सहितः शकुनदर्शनपूर्वकं कन्यागृहमेत्य प्राङ्गण उपविशेत् ।

ततो वृद्धः कश्चित्कन्यापितरं प्रति ब्रूयात् । अस्य पुत्रो वरोऽस्ति तदर्थं भवत्कन्यां याचितुं सुहृद्भिः सहायमागतः । भवद्भिः स्वीयैः सह विचार्य कन्यापूजनार्थमेतेभ्योऽनुज्ञा देयेति ।

ततः कन्यापिता मान्यजनेष्टबन्ध्वाद्यनुज्ञां गृहीत्वा दत्ता मया पूजनार्थमनुज्ञेति तेभ्योऽनुज्ञां दद्यात् ।

ततः कन्यायाः पुरोहितादिश्चतुष्पादे शुभ्रवस्त्राच्छादिते पीठे " ॐ अनृक्षरा ऋजव० स्तु देवाः " " ॐ देवीं वाचमज० सुष्टुतैतु " इतिमन्त्राभ्यां प्राङ्मुखीं शुक्लवस्त्रां सालंकारां सुवेषां कन्यामुपवेशयेत् ।

---

१ ग. °षाढा । पू° । २ ग. ङ. कृत्तिका । ३ ङ. °मनूरा° । ४ ग. °राधा । स्मृ° । ५ क. शुभव° ।

ततो वरपिता कन्यायाः पुरोभागे प्रत्यङ्मुख उपविश्य कन्यापित्रादिसमीपे गणपत्यादिस्मरणपूर्वकममुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणे वराय, अमुकप्रवरान्वितामुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकपुत्रीममुकनाम्नीं कन्यां भार्यात्वाय वृणीमह इति कन्यापितरं प्रति वदेत् ।

दाता भार्येष्टबन्ध्वाद्यनुमतिं गृहीत्वा पूर्वोक्तमनूद्यानन्द्य वा वृणीध्वमिति वदेत् । एवं पुनर्द्विः । ततः प्रदास्यामीति दातोच्चैस्त्रिर्वदेत् ।

ततो वरपिता कन्याञ्जलिं कुङ्कुमगन्धेनानुलिप्येष्टबन्ध्वादिभ्यः प्रार्थयेत् । ते च महालक्ष्मीरियमिति ब्रूयुः ।

ततो वरपिता कन्याभालं चन्दनेनानुलिप्य स्वपक्षीयसुवासिनीभिर्नीराजनं कारयेत् ।

ततस्तण्डुलाक्षतांस्तस्या भाले संयोज्य युवं वस्त्राणीति वस्त्राणि दत्त्वाऽग्रे रेतश्चन्द्र९ हिरण्यमिति भूषणानि दद्यात् ।

ततो याः फलिनीरिति फलैः संपूज्य तस्या हस्ते फलताम्बूलादि दत्त्वा सुमुखश्चेत्यादिदेशकालसंकीर्तनान्ते कन्यापूजनं करिष्य इति संकल्पं कुर्यादिति शिष्टाः । नैव संकल्प इति तु युक्तम् ।

कन्यापितुस्तु कन्याया वाग्दानमहं करिष्य इति संकल्पः । नायमपि संकल्प इति तु युक्तम् ।

तत उभौ गणपतिपूजनं यथाचारं कलशे वरुणपूजनं च कुर्यातां विसर्जनं च । अत्राऽऽचारश्चेत्स्वस्तिवाचनमपि ।

ततो वरपिता कन्याया दक्षिणत उदङ्मुखो वामतः प्राङ्मुखो वोपविश्य कन्यां गन्धाक्षतपुष्पवस्त्रादिभिः पूजयेत् ।

ततः कन्यादाता वरपितरं प्राङ्मुखमुपवेश्य स्वयं तस्य पुरतः प्रत्यङ्मुख उपविश्य तं गन्धताम्बूलादिभिः पूजयेत् । स च दातारम् ।

ततो दाताऽऽचाराद्धरिद्राखण्डं गन्धाक्षतयुतानि पञ्च दृढानि पूगीफलानि च गृहीत्वाऽमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणे वराय,अमुकप्रवरान्वितामुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकस्य मम पुत्रीममुकनाम्नीं कन्यां ज्योतिर्विदादिष्टे मुहूर्ते दास्य इति वाचा संप्रदद इत्युक्त्वा,—

१ ङ. 'खण्डग' । •

" अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते ।
इमां कन्यां प्रदास्यामि देवाग्निद्विजसंनिधौ " ।

इति वरपित्रादिवस्त्रप्रान्ते निक्षिप्य नर्य प्रजामिति प्रतिष्ठापनमन्त्रेण वस्त्रप्रान्ते बद्ध्वा ग्रन्थिं चन्दनेन चर्चयेदित्याचारप्राप्तम् । पितामहकर्तृके वाग्दाने पौत्रीमित्यतः पूर्वमेव ममेति वदेत् । एवं सकुल्यत्वेन प्रपितामहकर्तृके प्रपौत्री-मित्यतः पूर्वं ममेति । भ्रात्रादिकर्तृके तु ममेति नैव कुत्रापि ।

ततो हरिद्राखण्डं गन्धाक्षतयुतानि पञ्च दृढपूगीफलानि च तथैव वरपित्रा-दिर्गृहीत्वाऽमुकप्रवरान्वितामुकगोत्रोत्पन्नामुकशर्मवरविषये भवन्तो निश्चिता[1] भवन्तु, इति कन्यापित्रादिवस्त्रप्रान्ते पूर्ववत्प्रक्षिप्य ग्रन्थिं चन्दनेन चर्चयेत् । ततो दाता—" वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया ।
कन्यावलोकनविधौ निश्चितस्त्वं[2] सुखी भव " ।

इति वरपितरं प्रति वदेत् ।

" वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया ।
वरावलोकनविधौ निश्चितस्त्वं[3] सुखी भव " ।

इति वरपिता कन्यापितरं प्रति वदेत् । पौत्रादिविवाहे पौत्रार्थं भ्रात्रर्थं मित्रार्थं सकुल्यार्थमित्युभयत्र यथायथमूहः । अथवा वरार्थं स्वीकृतेत्येव सर्वत्र ।

ततो ब्राह्मणाः शिवा आपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु । एतद्वः सत्यमस्त्विति वदेयुः ।

ततो दाता विवाहसौभाग्याद्यभिवृद्ध्यर्थं शचीपूजनं कारयेत् । संकल्पमप्य-त्रेच्छन्ति केचित् ।

" सुवर्णां पद्मपत्राक्षीं दिव्यस्रग्वस्त्रशोभिताम् ।
सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ।
अनर्घ्यमणिमालाभिर्भासयन्तीं दिगन्तरम् ।
विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् " ।

इतीन्द्राणीं ध्यात्वा सिततण्डुलपुञ्ज आवाहनाद्युपचारैः पूजनं वध्वा कारयेत् ।

ततः—" देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।
विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे " इति प्रार्थनां कारयेत् ।

---

१ ख. निश्चिन्ता । २ क. ख. ङ. °श्चिन्तस्त्वं । ३ क. ख. ङ. °श्चिन्तस्त्वं ।

ततः पुरन्ध्रीभिर्नीराजनादिमाङ्गलिकं कार्यम् । विप्राश्च गन्धताम्बूलादिभिः पूजिता आशीर्मन्त्रान्पठेयुः । ते च—ॐ समिद्धस्य श्रय० महते सौभगाय। ॐ वनस्पते शतवल्शो० य महते सौभगाय २ ॐ संदिव्ये नदी०ष्ट महते सौभगाय ३ ॐ नर्य प्रजां मे० छिताम्। ॐ तदस्तु मित्रा० सादनाय । ॐ गृहा वै प्रतिष्ठा सूक्तं तत्प्रति० " इति च पठेत् ।

इति वाग्दानप्रयोगः ।

## अथ वरस्य वधूगृहं प्रति गमनम् ।

तद्विधिः शौनकेनोक्तः—

" पुण्ये मुहूर्ते कुर्वीत विवाहं विधिवद्द्विजः ।
तत्राऽऽभ्युदयिकं श्राद्धं कुर्यात्स्वस्ति च वाचयेत् ।
अपरेद्युः कृतस्नानो धृतधौताम्बरो वरः ।
भूषितो गन्धमाल्याद्यैः शकुनेन समन्वितः ।
ब्राह्मणान्भोजयित्वाऽन्ते कृतपुण्याहवाचनः ।
कृतकौतुकबन्धश्च मित्रबन्ध्वादिसंयुतः ।
यानं यथार्हमारुह्य गन्तव्यं च वधूगृहम् ।
तस्य द्वाराद्बहिः स्थित्वा प्राङ्मुखोऽभिमुखागतैः ।

तस्य वधूगृहस्य ।

गृहीतपूर्णकुम्भादिपाणिभिर्वनिताजनैः ।
कृताभ्युद्गमनो गेहं प्रविशेत्सह बन्धुभिः " इति ।

आभ्युदयिकं श्राद्धं कुर्यात् । स्वस्ति वाचयेदित्यत्रान्तर्भावितो णिज्ज्ञेयः । अन्यथा नान्दीश्राद्धं पिता कुर्यादित्यनेन विरोधापत्तेः ।

नान्दीश्राद्धं पिता कुर्यादित्यत्र नान्दीश्राद्धग्रहणं स्वस्तिवाचनादेरुपलक्षणम् । तथैव शिष्टसमाचारात् । नान्दीश्राद्धमात्रं पितृकर्तृकं स्वस्तिवाचनं तु वरकर्तृकमेवेत्यस्मिन्मत आभ्युदयिकं श्राद्धं कुर्यादित्येकत्रैव णिज्ज्ञेयः । कृतपुण्याहवाचन इतिवचनाद्वधूगृहगमनकाले वरेण पञ्चवाक्यैः पुण्याहवाचनं कार्यमिति केचित् । अनुवादोऽयमित्यन्ये ।

इति वरस्य वधूगृहं प्रति गमनम् ।

# अथ गौरीहरपूजनविधिः ।

**संग्रहे**—"लग्नाहे मातृकाः पूज्याः पूज्या गौरी हरान्विता ।
पीठे वै तदलाभे तु सुश्लक्ष्णे तण्डुलान्विते ।
पङ्कजं कारयित्वा तु तत्र गौरीहरौ यजेत् ।
कलशैः कलशैः कार्याः पिधानोत्तरपङ्क्तिकाः ॥
दिशां चतुर्षु कोणेषु स्थापयेत्तण्डुलोपरि ।
प्रतिमां पलहेम्ना तु कुर्याद्गौरीहरौ ततः ॥

**तत्र**— पलद्वयेन रौप्येण कुर्यान्नन्दिनमग्रतः ।
अशक्तस्तु तदर्धेन पादेन शक्तितोऽथवा ॥
अलाभे कुङ्कुमाद्यैस्तु लेखयित्वा प्रपूजयेत् ।
ध्यात्वा मन्त्रेण देवौ द्वौ भक्त्या संपूजयेत्सुधीः ॥
सिंहासनस्थां देवेशीं सर्वालंकारसंयुताम् ।
पीताम्बरधरं देवं चन्द्रार्धकृतशेखरम् ॥
करेणाधः सुधापूर्णं कलशं दक्षिणेन तु ।
वरदं चाभयं वामेनाऽऽश्लिष्य च तनुप्रियाम् ॥
एवं ध्यात्वाऽऽपूज्य गौरीं पुण्यभाजस्तथा स्त्रियः ।
कन्यां समुद्वहेत्पश्चाद्यथोक्तविधिना ध्रुवम्" इति ॥

**पूजामन्त्रस्तत्रैव**—
"गौरीहरौ महेशानौ सर्वमङ्गलदायकौ ।
पूजां गृह्णीतां देवेशौ मङ्गलं कुरुतां सदा" इति ॥

**तथा**—"कन्यादेहप्रमाणेन सप्तविंशतितन्तुभिः ।
वर्तिकां दीपयेत्पश्चाद्व्रतसंपत्तिहेतवे ॥
भोजनीया ब्राह्मणाश्च सुवासिन्यः सुपूजिताः ।
दशाष्टौ पञ्च युग्मं वा हिरण्येनाथ तोषयेत्" इति ॥

**विवाहे वधूवरयोः सह भोजनमाह संग्रहकारः**—
"मात्रा सहोपनीतस्य विवाहे भार्यया सह ।
भुञ्जीतान्यत्र सह चेत्पातित्यं प्राप्नुयान्नरः" इति ॥

**हेमाद्रौ प्रायश्चित्तकाण्डे गालवोऽपि**—
"एकयानसमारोह एकपात्रे च भोजनम् ।
विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक् ॥
अन्यथा दोषमाप्नोति तत्र चान्द्रायणं चरेत्" इति ।

स्मृतिरत्नाकरे शाकलः—

" परिरक्षन्ब्रह्मचर्यं सह शय्यासनाशनैः ।
वध्वा सह वसेत्तत्र यावद्दिनचतुष्टयम् " इति ॥

संग्रहे—" एकासनं चैकशय्या एकपात्रे च भोजनम् ।
एकत्र मङ्गलं स्नानमेकवाहनरोहणम् ॥
कुर्वन्विवाह एतानि भवेद्विप्रो न दोषभाक् " इति ।

विप्रग्रहणं क्षत्रियवैश्ययोरुपलक्षणम् ।

अत्राहतवस्त्रे विशेषमाह कश्यपः—

" अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयंभुवा ।
शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा " इति ॥

# अथ लग्नघटीस्थापनम् ।

" प्रागुदक्प्रवणे देशे गोमयेनोपलेपिते ।
मृन्मयं कुण्डिकायुग्मं स्थापयेदव्रणं शुभम् ॥
कुङ्कुमाक्तेन सूत्रेण परिवेष्ट्य परस्परम् ।
स्वच्छेन वारिणा पूर्णं तण्डुलानामथोपरि ॥
निश्चले सलिले पश्चात्कुडिकायां जलोपरि ।
स्थापयेद्धटिकायन्त्रं सूर्यबिम्बानुदर्शनात् " इति ॥

घटिकालक्षणमाह वामनः—

" दशपलसिद्धकमले सुसूक्ष्मान्ते षडङ्गुलोच्छ्राये ।
द्वादशाङ्गुलपरिणाहे षष्ट्या पलैः पूरिता घटिका ॥
चतुरङ्गुलशलाकावृत्तं कुर्यात्सुवर्णपादेन ।
तत्परिमित्या छिद्रे तलस्थिते शोभना घटिका " इति ॥

सुसूक्ष्मोऽन्तो यस्य तत् । षोडशमाषपरिमितं सुवर्णं तस्य पादश्चतुर्थांशो माषचतुष्टयपरिमितः ।

नारदोऽपि—" षडङ्गुलमितोत्सेधं द्वादशाङ्गुलमायतम् ।
कुर्यात्कमलवत्ताम्रपात्रं तद्दशभिः पलैः ॥
माषत्रयत्र्यंशयुतस्वर्णवृत्तशलाकया ।
वेदाङ्गुलैः संमितया तया विद्धमतिस्फुटम् " इति ॥

" ताम्रपात्रे वारिपूर्णे मृत्पात्रेऽप्यथवा शुभे ।
मण्डलार्धोदयं वीक्ष्य रवेस्तत्र विनिक्षिपेत्" इति[च]। तत्र जले।
" मुख्यं त्वमसि यन्त्राणां ब्रह्मणा निर्मितं पुरा ।
भावाभावाय दंपत्योः कालसाधनकारणम् " ॥

इति घटिकापात्रनिक्षेपणमन्त्रः ।

इति घटिकास्थापनम् ।

---

## अथ घटीयन्त्रभ्रमणफलम् ।

ज्योतिर्निबन्धे—

" यद्रूपं प्रथमं करोति घटिका पूर्वादिदिक्षु क्रमा-
त्सौभाग्यं निधनं यशोविरहितं युक्तं च रोगैः क्रमात् ।
कन्या वल्लभतामुपैति नियतं या निश्चला सर्वदा
स्यात्साध्वी सुतवित्तबन्धुसहिता नन्दत्यलं भूतले " इति ॥

ग्रन्थान्तरे—" प्रार्थिता सा घटी तोये यां दिशं प्रति गच्छति ।
पूर्वाशादिफलं कुर्यात्स्थिता मध्ये धनप्रदा ॥
सौभाग्यं निधनं नार्या अपमृत्युरुजान्विता ।
भर्तुः प्रिया च वश्या च मान्या वित्तसुखान्विता " इति ॥

प्रार्थिता मुख्यं त्वमसि यन्त्राणामिति मन्त्रेण प्रार्थिता ।

अन्यच्च—" उत्तरेशानपूर्वासु घटी पूर्णा शुभप्रदा ।
दिक्षु शेषासु कन्याया मग्ना वैधव्यदायिनी " इति ॥

सप्तर्षिमते विवाहपटले—

प्रपूजयेद्दैवविदं स्वशक्त्या गन्धादिपुष्पाम्बरदक्षिणाभिः ।
संपूजिते दैवविदि प्रतुष्टे तुष्यन्ति सर्वा ग्रहदेवताश्च " इति ॥

दैवविल्लग्नप्रदाता ।

तल्लक्षणं व्यतिरेकेणाऽऽह संवर्तः—

" अन्धः श्वित्री च कुनखी हीनाङ्गः पङ्गुरेव च ।
लग्नप्रदो भवेद्यत्र कुलक्षयकरं हि तत् " इति ॥

यत्र लग्नप्रदाने । तल्लग्नप्रदानम् ।

लग्नकाललक्षणमुक्तं नारदेन—

" स्वस्थे नरे सुखासीने यावत्स्पन्दति लोचनम् ।
तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः ॥

तत्पराच्छतमो भागस्त्रुटिरित्यभिधीयते ।
त्रुटेः सहस्रभागो यो लग्नकालः स उच्यते ॥
देवोऽपि तं न जानाति किं पुनः प्राकृतो जनः ।
स कालोऽप्यन्यकालो वा पूर्वकर्मवशाद्भवेत् ॥
निमित्तमात्रं दैवज्ञस्तद्वशाच्च शुभाशुभम् " इति ।

**बृहस्पतिस्तु**—" शुभग्रहोदयर्क्षा वा शुभषड्वर्ग एव वा ।
वेदविज्ञानवाक्यं च महान्तः शुभदा गुणाः " इति ॥

**वेदविज्ञानवाक्यं चेत्येतद्द्वेधा व्याख्यातं पारिजाते—वेदस्य विज्ञानं येषां ते वेदविज्ञानाः, वेदवेदाङ्गतत्त्वज्ञानास्तेषां वाक्यम् । अथवा विजानन्तीति विज्ञानाः । ' कृत्यल्युटो बहुलम् ' इति निमित्तकर्तरि ल्युट् । वेदस्य विज्ञाना वेदविज्ञाना इति स एवार्थः । तेषां वाक्यं तु सुमुहूर्तमस्त्वित्येवंरूपमित्यर्थः । अपि च—वेदैर्विज्ञायत इति वेदविज्ञानो वेदवेद्यो लक्ष्मीपतिः । बहुलग्रहणात्कर्मणि ल्युट् । तस्य लक्ष्मीपतेश्चरणस्मरणरूपं वाक्यं तदेव लग्नमित्यादि । एतदुक्तं भवति ।**

**मुहूर्तकाले सुमुहूर्तमस्तु ।**

" तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि "

**इति चोक्त्वा मुहूर्तं दद्यादिति । गन्धादीत्यत्राऽऽदिशब्देनालंकारग्रहणम् । संकटे गोधूलिकलग्नप्रवृत्तिरुक्ता ज्योतिर्निबन्धे—**

" घटीलग्नं यदा नास्ति तदा गोधूलिकं शुभम् ।
शूद्रादीनां बुधाः प्राहुर्न द्विजानां कदाचन ॥
लग्नशुद्धिर्यदा न स्याद्यौवने समुपस्थिते ।
तदा वै सर्ववर्णानां लग्नं गोधूलिकं शुभम् " इति ॥

**प्रथमविवाहे नान्दीश्राद्धं पितृकर्तृकमेव—**

" नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः ।
अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् " इति ॥

**पित्रभावे पितामहाद्यन्यतमः । सर्वेषामभावे स्वयमेवेति निबन्धकृतः । रेणुकारिकासु[1] विशेषः—**

" उक्ते काले विवाहाङ्गं कुर्यान्नान्दीमुखं पिता ।
देशान्तरे विवाहश्चेत्तत्र गत्वा भवेदिदम् " इति ॥

---

१ ग. °णुकाका° ।

ग्रामान्तरे विवाहश्चेदित्यपि क्वचित्पाठः। नान्दीमुखमिति स्वस्तिवाचनमण्डपदेवतास्थापनाद्युपलक्षणम्। गृहप्रवेशस्थालीपाकादिकं तु स्वगृहं गत्वैव। इदानीं तु तत्रैव कुर्वन्ति तच्छिथिलम्।

---

## अथ विवाहप्रयोगः।

कन्यादाता सुमुहूर्ते गृहाङ्गण उक्तलक्षणं तोरणादियुक्तं मण्डपं कृत्वा तत्र वधूहस्तचतुष्टयपरिमाणां हस्तसप्तकहस्तपञ्चकान्यतरपरिमाणां वा समचतुरश्रां हस्तमात्रोच्छ्रायां सोपानयुतां सुश्लक्ष्णामुक्तलक्षणां वेदिं कुर्यात्। वरपित्रा तु स्वगृह उक्तलक्षणो मण्डप एव कार्यो न वेदिः।

ततो यथाकालं वैवाहिके ज्योतिर्विदादिष्टे शुभे मुहूर्ते कन्यापक्षीयपुरन्ध्र्यो वधूं सुगन्धितैलयवारकहरिद्रादिमङ्गलद्रव्यैरुद्वर्तनपूर्वकमुष्णोदकेन यथाचारं संस्नाप्य तच्छिष्टद्रव्यैरुद्वर्तनपूर्वकं तथैव वरं संस्नापयेयुरित्याचारः।

ततः कन्यादाता विवाहदिने तत्पूर्वदिने वा पूर्वाह्णे कृतमाङ्गलिकस्नानो धृतमाङ्गलिकवेष उपलिप्ते रङ्गवल्लिकायुक्ते प्राङ्गणे शुभ्रवस्त्राच्छादिते पीठासने प्राङ्मुख उपविश्य स्वस्य दक्षिणतः कृतमाङ्गलिकस्नानां धृतमाङ्गलिकवेषां पत्नीं तस्या दक्षिणतः कृतमाङ्गलिकस्नानां धृतमाङ्गलिकवेषां कन्यां चोपवेश्याऽऽचम्य प्राणानायम्येष्टदेवतागुर्वादीन्नमस्कृत्य देशकालौ संकीर्त्य ममास्या अमुकनाम्न्याः कन्याया ब्राह्मविवाहविधिना विवाहसंस्कारं करिष्य इति संकल्पं कुर्यात्। ममास्याः कन्याया भर्त्रा सह धर्मप्रजोत्पादनद्रव्यपरिग्रहेष्वधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं ब्राह्मविवाहविधिना विवाहसंस्कारं करिष्य इत्येवं वा संकल्पः। पितामहस्तु ममास्या अमुकनाम्न्याः पौत्र्या इत्येवं वदेत्। प्रपितामहस्तु प्रपौत्र्या इति। भ्रातृपितृव्यादयस्तु भगिन्या भ्रातृकन्याया इत्यादि संबन्धानुसारेण वदेत्। अथवा—अमुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्माऽहं मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादिकन्याप्रतिपादनकल्पोक्तफलावाप्तये मया परिकल्पितेन वरेणास्यां कन्यायामुत्पादयिष्यमाणसंतत्या द्वादशावरान्द्वादश परान्पुरुषान्पवित्रीकर्तुमात्मनश्च लक्ष्मीनारायणप्रीत्यर्थममुकनाम्न्या अस्याः कन्यायाः प्रतिपादनरूपं विवाहं करिष्य इत्येवं संकल्पः। अस्मिन्पक्षे कन्याप्रतिपादने संकल्पो न कार्यः। वरपिता तु—अस्यामुकशर्मणः पुत्रस्य विवाहसंस्कारं करिष्य इत्येवं संकल्पं कुर्यात्। अस्यामुकशर्मणः पुत्रस्य दैवपित्र्यर्णापाकरणसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विवाहसंस्कारं करिष्य इत्येवं संकल्पः। पितामहस्तु पौत्रस्येति वदेत्। प्रपितामहस्तु

प्रपौत्रस्येति। भ्रातृपितृव्यादिस्तु भ्रातुर्भ्रातृपुत्रस्येत्यादिसंबन्धानुसारेण। वस्तुतस्तु स्वस्य विवाहसंस्कारं करिष्य इत्येवं वरकर्तृक एव संकल्प इति युक्तम्। न च पितुः स्वस्तिवाचनाद्यङ्गकर्तृत्वात्संकल्पोऽपि तत्कर्तृक एवेति वाच्यम्। प्रधानानुष्ठातुर्वरस्यैव प्रधानसंकल्पकर्तृकताया उचितत्वात्। पाणिग्रहणं हि प्रधानम्। तच्च वरकर्तृकम्। अतो वरकर्तृक एवायम्।

" नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः "।

इतिवचनान्नान्दीश्राद्धमात्रं पितृकर्तृकम्। नान्दीश्राद्धशब्देन 'स्वस्तिवाचनमप्युपलक्ष्यत इति केचित्। स्वस्तिवाचनादीनां बहिर्भूतत्वपक्षे प्रधानसंकल्पो वाग्दानात्पूर्वं कन्यादानात्पूर्वं वा कन्यादात्रा कर्तव्यः। वरेण वधूगृहगमनात्पूर्वं कर्तव्यः। स्वस्तिवाचनादीनां बहिर्भूतत्वपक्षे कन्याविवाहं कर्तुमादौ पुण्याहवाचनमित्यादिसंकल्पः कन्यादात्रा कर्तव्यः। वरपित्रा तु मत्पुत्रविवाहार्थं पुण्याहवाचनमित्यादिसंकल्पः कार्यः। कन्याविवाहस्य वरपक्षसंपाद्यवैवाहिकसामग्रीदानसहितक्रियायां वरपक्षसंपाद्यवैवाहिकसामग्रीदानसहितं विवाहसंस्कारं करिष्य इति संकल्पे विशेषः।

ततो गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धमङ्कुरारोपणं ग्रहमखं मण्डपदेवताप्रतिष्ठापनं च कुर्यात्। वरपिताऽपि गणपतिपूजनादि कुर्यात्। अत्राग्निः प्रीयतामिति विशेषः। अथवाऽङ्कुरारोपणग्रहमखौ पूर्वं पृथगेव यथावकाशं कार्यौ। न तु नान्दीश्राद्धोत्तरकर्तव्यतानियमः।

तत उभावपि मण्डपदेवताप्रतिष्ठापनानन्तरं विवाहाङ्गदेवताकुलदेवताप्रीत्यर्थं यथाचारं द्विजसुवासिनीकुमारादीन्यथाकालं यथोपपन्नेनान्नेन भोजयेताम्। एवमन्येऽपि वृद्धपारम्पर्यागता उच्चावचा देशधर्मा ग्रामधर्माः कुलधर्माश्चात्र कर्तव्याः। एतच्च सूत्रकृता ज्ञापितमस्ति—' अत्र बीजान्यधिश्रयन्ति ' इत्यनेन सूत्रेण। आश्वलायनेन तु स्पष्टमेवोक्तम्—'अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात् ' इति। आपस्तम्बेनापि—' आवृतश्चाऽऽस्त्रीभ्यः प्रतीयेरन् ' इति*। आवृतः क्रिया वैवाहिक्यः। अविशेषात्समन्त्रका अमन्त्रकाश्च। ताः सर्वा आस्त्रीभ्यः सवर्णाभ्यः सकाशादवगम्य प्रतीयेरन्कुर्वीरन्विवोढारः। समन्त्रका ग्रहपूजादयः। अमन्त्रका इन्द्राणीपूजनादयः। ताश्च यथाजनपदं यथावर्णं यथाग्रामं यथाकुलं यथास्त्रीपुंसं व्यवस्थिता एव न सर्वाः समुच्चिता इति सुदर्शनेन व्याख्यातम्।

---

* अत्र ' उक्तम् ' इति शेषो ज्ञेयः।

शाङ्खायनः—" स्नातं कृतमङ्गलं वरमविधवाः सुभगा युवत्यः कुमार्यै वेश्म प्रतिपादयन्ति तासामप्रतिकूलः स्यादन्यत्राभक्ष्यपातकेभ्यः " इति ।

अविधवा इत्युपलक्षणम् । शिष्टद्विजा अपि ब्रह्मघोषपूर्वकं कन्यागृहे वरमानयन्ति । तासां स्त्रीणामप्रतिकूलोऽनुकूलो वरः स्यात्ता यद्यत्कारयन्ति कुलाचारमर्यादविरुद्धं तत्तु कुर्यात् । सर्वमेवोक्तं कुर्यादिति न, अभक्ष्यपातकेभ्योऽन्यत्र, अभक्ष्यभक्षणं येन च पातकं भवति तन्न कुर्यात् । काश्चन स्त्रियोऽस्मिन्नवसरे कार्मणादिकं कुर्वन्ति तद्व्यतिरिक्तं यद्यत्कारयन्ति तद्विधेयमिति तद्भाष्यम् ।

अन्यच्चाहाऽऽपस्तम्बः—" तथा मङ्गलानि " इति ।

शङ्खदुन्दुभिवीणावादित्रसंभववादनानि कुलस्त्रीगीतानि केशश्मश्र्वादिकल्पनाहताचित्रवासोधारणगन्धानुलेपनस्रग्धारणापदातिगमनचित्रध्वजादीनि शिष्टाचारप्रसिद्धानि मङ्गलानि विवाह उपसंहर्तव्यानीति सुदर्शनः ।

ततः कन्यादाताऽश्वादियानयुतः समङ्गलवादित्रघोषः स्वलंकृतः स्वेष्टबन्धुवृद्धमान्यजनपुरन्ध्र्यादिसहितः सपत्नीको वरगृहमागत्य प्राङ्मुखं वरमुपवेश्योदङ्मुखस्तस्य दक्षिणत उपविश्य पत्नीं स्वदक्षिणभागे तथैवोपवेशयित्वाऽऽचम्य प्राणानायम्योक्तरीत्या गणपतिं संपूज्य यथाचारं कलशं संस्थाप्य तत्र वरुणं संपूज्य द्वयोर्विसर्जनं कुर्यात् । कन्याविवाहाङ्गभूतं वरपूजनमहं करिष्ये, तदङ्गं गणपतिपूजनं वरुणपूजनं [च] करिष्य इति संकल्पं कुर्वन्ति तद्दूषितमेवोपनयनप्रकरणे ।

## अथ वरवरणम् ।

तत्र कन्यापितोदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे युग्मान्ब्राह्मणान्वरान्वरनिश्चयार्थं प्रहिणोति—

" ॐ प्र सु ग्मन्ता धियसानस्य सक्षणि वरेभिर्वराꣳ अभि षु प्रसीदतः ।
अस्माकमिन्द्र उभयं जुजोषति यत्सोम्यस्यान्धसो बुबोधति" इत्यनेन मन्त्रेण ।

ततो गच्छतस्ताननुमन्त्रयते—"ॐ अनृक्षरा ऋजवः सन्तु पन्था येभिः सखा० ममस्तु देवाः " इति । वरनिश्चयं कृत्वा तेष्वागतेषु यस्मिन्कस्मिंश्चिच्छुभे मुहूर्ते कन्यावरणात्पूर्वमनन्तरं वा यः कश्चिद्वृद्धः कन्यापक्षीयो वरपितरं प्रति ब्रूयात् । एतस्य कन्या वधूरस्ति तस्याः कन्यायास्त्वत्पुत्रं भर्तृत्वेन स्वीकर्तुं त्वत्समीपे

१ क. ड. 'र्थावि' ।

सुहृद्भिः सहायमागतो भवद्भिः स्वीयैः सह विचार्य वरपूजनार्थमनुज्ञैतेभ्यो देयेति।

ततो वरपिता पित्राद्यनुमत्या दत्ता मयाऽनुज्ञेति। ततः पुरोहितादिश्चतुष्पादे शुभ्रवस्त्राच्छादिते पीठासने—"ॐ अनृक्षरा० ॐ स्वस्ति न इन्द्रो०" इति मन्त्राभ्यां प्राङ्मुखं शुक्लवस्त्रं सालंकारं सुवेषं वरमुपवेशयेत्।

ततस्तमुपवीतफलपुष्पादिभूषणगन्धवासोभिर्यथाविभवं संपूजयेत्।

ततः कन्यापिता वरस्य पुरोभागे प्रत्यङ्मुख उपविश्य वरपित्रादिसमीपे गणपत्यादिस्मरणपूर्वकम्, अमुकप्रवरान्वितामुकगोत्रोत्पन्नाया अमुकप्रपौत्र्या अमुकपौत्र्या अमुकपुत्र्या अमुकनाम्न्यै कन्याया अमुकप्रवरान्वितामुकगोत्रोत्पन्नममुकप्रपौत्रममुकपौत्रममुकपुत्रममुकशर्माणं भर्तृत्वाय वृणीमह इत्युपवीतादिभिर्वृणुयात्।

वरपिता सर्वेषामनुमतिं गृहीत्वा पूर्वोक्तमनूद्यानन्नूद्य वा वृणीध्वमिति वदेत्। एवं पुनर्द्विः। बाढमिति सर्वानुमतिपूर्वकं वरपिताऽङ्गी कुर्यात्। वरणीयेयं कन्येति पित्रादिभिरनुज्ञायां दत्तायां स्वी करोमीति वरो ब्रूयात्। इदानीं सीमान्ते वरपूजनं यत्कुर्वन्ति तदेवेदम्। तत्रैवानया रीत्या वरवरणं कर्तव्यम्।

ततो वरस्य पादौ प्रक्षाल्य गन्धपुष्पाक्षतनीराजनवस्त्रादिभिर्यथाविभवं संपूज्य यथाचारं दुग्धादिप्राशनं तेन कारयित्वा नारिकेलफलं हस्ते दद्यादित्याचारप्राप्तम्।

ततो वरः कृतनित्यक्रियः स्वलंकृतः स्रग्वी दातृदत्तवस्त्रादिभूषित इष्टदेवताकुलदेवतागुर्वादीन्नमस्कृत्य मम वधूगृहगमनकर्मणः पुण्याहं भवन्तो ब्रुवन्त्वित्यादिभिः पुण्याहवाचनं कृत्वाऽकृत्वा वा यथाविभवमश्वाद्यन्यतमयानमारुह्य सितच्छत्रः स्वर्चितैः सुभूषितैर्ज्ञातिबान्धवैरियमेव सा येत्यादिमन्त्रपाठपरैर्ब्राह्मणैः पुरन्ध्रीभिर्जलकुम्भदर्पणकन्यापुष्पाक्षतदीपमालाध्वजलाजमङ्गलवादित्रघोषैर्नृत्यद्भिर्नर्तकादिभिश्च युतो वधूगृहं गत्वा द्वारदेशे प्राङ्मुखः स्थित्वा नीराजनपूर्णकुम्भहस्ताभिः पुरन्ध्रीभिः प्रत्युद्यताभिर्नीराजितोऽन्तर्गृहं प्रविश्य मण्डपमध्ये हरितेषु दर्भेषु संस्थापिते सोत्तरच्छदे चतुष्पादभद्रपीठे प्राङ्मुख उपविशेत्। अत्र शिष्टाः कन्यावरणं कन्यापूजनं वाग्दानं च कुर्वन्ति।

१ ग. °ता पुत्रा°।

## अथ मधुपर्कः ।

स च वरशाखया कर्तव्य इत्युक्तं गृह्यपरिशिष्टे—

" वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः ।
मधुपर्कः प्रदातव्यो ह्यन्यशाखेऽपि दातरि " इति ।

अत्र वर इत्यर्च्यस्योपलक्षणम् । जयन्तेन तु यजमानशाखयैव मधुपर्क उक्तः । वस्तुतस्तु सत्याषाढसूत्रानुसारिभिः सूत्रोक्त एव मधुपर्कः कार्य इति युक्तं प्रतिभाति । मधुपर्कप्रयोगस्तु समावर्तन उक्तः । आगतं कन्यार्थिनमिमं वरं मधुपर्केणार्हयिष्य इति संकल्पवाक्ये विशेषः । यदि तु गृह्यपरिशिष्टमेव शिष्टैराचारानुरोधात्स्वी क्रियते तदाऽऽश्वलायने वरे तच्छाखीयमधुपर्कविधेरपेक्षितत्वात्तत्प्रयोग उच्यते । तत्रायं क्रमः । पाद्यार्थमर्घ्यार्थे मन्त्रवत्त्रिराचमनजलार्थं शुद्ध्यर्थाचमनीयार्थं च पात्रचतुष्टयं मधुयुक्तदध्याख्यमधुपर्कसहितं कांस्यपात्रं पञ्चविंशतिदर्भैरधोमुखाग्रैर्वामावर्तेन यथा वेणी भवति तथाऽग्रे गुम्फितैरग्रे ग्रन्थियुतैर्विष्टरं च संपाद्याऽऽगतं कन्यार्थिनं स्नातकं वरं मधुपर्केणार्हयिष्य इति संकल्प्योपकल्पितं विष्टरं—विष्टरो विष्टरो विष्टर इति त्रिर्निवेद्य प्रतिगृह्यतामित्यासनार्थं वरहस्ते दद्यात् । वरः प्रतिगृह्णामीति प्रतिगृह्य,

अहं वर्ष्मेत्यस्य वामदेवो विष्टरोऽनुष्टुप् । विष्टरोपवेशने विनियोगः । 'ॐ अहं वर्ष्म सजातानां० भिदासति ' इत्युदगग्रे विष्टर उपविशेत् । विष्टरं मन्त्रेण पद्भ्यामाक्रम्य तूष्णीमुपविशेद्वा ।

ततोऽर्चकेन—पाद्यं पाद्यं पाद्यमिति त्रिर्निवेदितं पाद्यं वरः प्रतिगृह्णीयात् । सर्वत्र निवेदनानन्तरमर्चकः प्रतिगृह्यतामिति वदेत् । मधुपर्कप्रतिग्रहव्यतिरिक्तस्थले प्रतिगृह्णामीत्यर्च्यः ।

ततोऽर्चकस्तेनोदकेन वरस्य दक्षिणसव्यौ पादौ क्रमेण प्रक्षालयेत् । ततो वरो लौकिकजलेनाऽऽचम्य गन्धमाल्यफलादिसंयुक्तमर्घ्यमर्घ्यमर्घ्यमिति त्रिर्निवेदितमर्घ्यमञ्जलिना प्रतिगृह्य तूष्णीं निनयेत् ।

तत आचमनीयमाचमनीयमाचमनीयमित्यर्चकेन त्रिर्निवेदितमाचमनीयं प्रतिगृह्य तस्यैकदेशं गृहीत्वा, अमृतोपस्तरणमसीत्यस्य वामदेवो जलं यजुः । जलपाने विनियोगः । 'ॐ अमृतोपस्तरणमसि' इति पीत्वा लौकिकजलेनाऽऽचामेत् । मधुपर्को मधुपर्को मधुपर्क इत्यर्चको मधुपर्कं निवेद्य प्रतिगृह्यतामिति वदेत् ।

ततोऽर्च्यः—मित्रस्य त्वेत्यस्य वामदेवो मधुपर्को विराड्यजुर्वा । मधुपर्कावेक्षणे विनियोगः । 'ॐ मित्रस्य त्वा चक्षुषा प्रतीक्षे ' इत्यानीयमानं मधुपर्क-

मवेक्ष्य, देवस्य त्वेत्यस्य वामदेवः सविता यजुः। मधुपर्कप्रतिग्रहे विनियोगः। 'ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि' इत्यर्चकेन निवेदितं मधुपर्कमञ्जलिना प्रतिगृह्णीयात्।

ततः—मधु वाता इति तृचस्य राहुगणो गौतमो विश्वे देवा गायत्री। मधुपर्कावेक्षणे विनियोगः। 'ॐ मधु वाता ऋतायते० भवन्तु नः ३' इत्यञ्जलिगतमधुपर्कपात्रस्थं मधुपर्कमवेक्षेत।

ततस्तत्पात्रं सव्यहस्ते धृत्वाऽङ्गुष्ठानामिकाभ्यां मधुपर्कं त्रिः प्रदक्षिणमालोड्य, वसवस्त्वेत्यादीनां वामदेव ऋषिः। वसवो रुद्रा आदित्या विश्वे देवाश्च क्रमेण देवता यजूंषि। निमार्जने विनियोगः। 'ॐ वसवस्त्वा गायत्रेण च्छन्दसा भक्षयन्तु' [इति] पुरस्तान्निमार्ष्टि। 'ॐ रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा भक्षयन्तु' [इति] दक्षिणतः। अत्रोदकस्पर्शे विकल्पः। 'ॐ आदित्यास्त्वा जागतेन च्छन्दसा भक्षयन्तु' [इति] पश्चात्। ॐ विश्वे त्वा देवा आनुष्टुभेन च्छन्दसा भक्षयन्तु' [इति] उत्तरतः। ततः—भूतेभ्यस्त्वेत्यस्य वामदेवो मधुपर्को यजुः। मधुपर्कग्रहणे विनियोगः। 'ॐ भूतेभ्यस्त्वा' [इति] मध्यात्किंचित्किंचिद्गृहीत्वा तूष्णीं त्रिरूर्ध्वं क्षिपेत्। प्रतिग्रहणं मन्त्रावृत्तिः। तूष्णीं ग्रहणं समन्त्रं क्षेपणमिति वा। अस्मिन्पक्षे क्षेपणे विनियोग इति विनियोगवाक्ये विशेषः।

ततो मधुपर्कपात्रं भूमौ निधाय मधुपर्कैकदेशं गृहीत्वा, विराजो दोहोऽसीत्यादिमन्त्रत्रयस्य वामदेवो मधुपर्को यजुः। मधुपर्कप्राशने विनियोगः। 'ॐ विराजो दोहोऽसि' [इति] प्रथमं प्राश्य लौकिकजलेनाऽऽचम्य पुनस्तथैव गृहीत्वा 'ॐ विराजो दोहमशीय' [इति] द्वितीयं प्राश्य लौकिकजलेनाऽऽचम्य पुनस्तथैव गृहीत्वा 'ॐ मयि दोहः पद्यायै विराजः' [इति] तृतीयं प्राश्य लौकिकजलेनाऽऽचम्य मधुपर्कशेषमुदङ्मुखो ब्राह्मणाय प्रयच्छेत्। लोकविद्विष्टत्वादिदानीमप्स्वेव क्षिपेत्। ततः—अमृतापिधानमसीत्यस्य वामदेवो जलं यजुः। जलपाने विनियोगः। 'ॐ अमृतापिधानमसि' इति पूर्वाचमनशिष्टा अपः किंचित्पीत्वा लौकिकजलेनाऽऽचम्याऽऽचमनीयशेषं सर्वं गृहीत्वा, सत्यं यश इत्यस्य वामदेवो जलं यजुः। जलपाने विनियोगः। 'ॐ सत्यं यशः श्रीर्मयि श्रीः श्रयताम्' इति सर्वं पीत्वा लौकिकजलेन द्विवारमाचमनं कुर्यात्।

ततोऽर्चको गौर्गौर्गौरिति गां त्रिर्निवेदयेत्। ततः पूज्यः—माता रुद्राणामित्यस्य भार्गवो जमदग्निर्गौस्त्रिष्टुप्। गोरुत्सर्जनाङ्गभूते जपे विनियोगः। 'ॐ माता रुद्राणां दुहिता० प्र नु वोचं० धिष्ट' इति जपित्वा 'ओमुत्सृजत' इत्युक्त्वा विसृजेत्।

ततो दाता गन्धमाल्यवस्त्रयुग्मोपवीतयुग्माभरणादिभिर्यथाविभवं पूजयित्वा माषविकारभूतव्यञ्जनसहितान्नेन तं भोजयेत् ।

विष्टरलक्षणं परिशिष्टे—

" पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु विष्टरः ।
ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः ।
पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता " इति ।

पञ्चाशदर्धं पञ्चविंशतिः । तावत्संख्यैर्दर्भैर्विष्टरो भवतीत्यर्थः । केशा अग्राणि निर्माणकाल ऊर्ध्वानि यस्य । लम्बानि लम्बमानान्यधोमुखानि निर्माणकालेऽग्राणि यस्येति । मधुपर्के दध्यलाभे क्षीरम् । मध्वलाभे सर्पिर्गुडो वा । सर्वाभाव उदकमिति ज्ञेयम् ।

इत्याश्वलायनीयो मधुपर्कः ।

---

## अथ गौरीहरयोः पूजनम् ।

अथ कन्या स्नाता परिहिताहतवस्त्रा गृहान्तः पूजिते स्थाने विदिक्षु मृन्मयैस्त्रिभिस्त्रिभिः कलशैः पिधानोत्तरैः श्रेणीः कृत्वा समन्तात्सूत्रेणाऽऽवेष्ट्य तन्मध्ये सूत्रवेष्टितोपला(ल)सहितां दृषदं निधाय तदुपरि श्वेततण्डुलाक्षतपुञ्जे पङ्कजं कृत्वा तत्र पलाद्यन्यतममितां ब्राह्मणकृताग्न्युत्तारणसंस्कारप्राणप्रतिष्ठां हैमीं गौरीहरप्रतिमां स्थापयित्वा तदग्रे पलद्वयतदर्धतदर्धान्यतमपरिमितरजतनिर्मितं ब्राह्मणकृताग्न्युत्तारणसंस्कारप्राणप्रतिष्ठं नन्दिनं संस्थाप्य कुङ्कुमादिना भित्त्यादौ गौरीहरौ लेखयित्वा—

" सिंहासनस्थां देवेशीं सर्वालंकारसंयुताम् ।
पीताम्बरधरं देवं चन्द्रार्धकृतशेखरम् ।
करेणाधः सुधापूर्णं कलशं दक्षिणेन तु ।
वरदं चाभयं वामेनाऽऽश्लिष्य च तनुप्रियाम् " इति ध्यात्वा,

" गौरीहरौ महेशानौ सर्वमङ्गलदायकौ ।
पूजां गृह्णीतां देवेशौ मङ्गलं कुरुतां सदा "

इति मन्त्रेणाऽऽवाहनादिषोडशोपचारैः सौभाग्यादिकामनया पूजयित्वा नन्दिनं पूजयेत् । विसर्जनं तु विवाहान्त आचारात् । [1]

---

१ क. देशे ।

ततो देवेन्द्राणीं तत्रैव प्रतिमायामक्षतपुञ्जे वा पूजयित्वा,

" देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।
विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे "

इति संप्रार्थ्य सौभाग्यादि प्रार्थयमाना तत्रैव तिष्ठेत् ।

ततः कन्यापिता कन्यया दीपं प्रज्वलयित्वा(य्य) ब्राह्मणान्सुवासिनीश्च पूजयेत् । तेभ्यो दक्षिणां च दद्यात् ।

इति गौरीहरयोः पूजनम् ।

---

ततो ब्राह्मणाः स्वलंकृते मण्डपे वेश्मनि वा यथाचारं समङ्गलगीतनृत्यवादित्रादिघोषे क्रियमाणे पूर्वापरभागयोर्हस्तान्तरालं स्थलं विहाय प्रस्थपरिमितसिततण्डुलैर्द्वौ राशी कृत्वा मध्ये ज्योतिर्वित्कृतकुङ्कुमस्वस्तिकाङ्कितमन्तःपटं राश्योर्मध्य उत्तरदशं धारयेयुः ।

ततो बन्धुजनः पूर्वराशावश्मनि तण्डुलजीरकयुताञ्जलिकां प्रत्यङ्मुखीं वधूं पश्चिमराशौ पीठे तण्डुलजीरकयुताञ्जलिकं प्राङ्मुखं वरं चावस्थापयेत् ।

आश्वलायनो वरश्चेत्प्राङ्मुखी वधूः प्रत्यङ्मुखो वरः । इत आरभ्य यावदन्तःपटनिःसारणं द्विजा मन्त्रपाठं पुरन्ध्र्यो मङ्गलगीतानि कुर्युः ।

प्रस्थपरिमितत्वं तण्डुलानां यमेनोक्तम्—

" आरुह्य तण्डुलप्रस्थमीक्षेतप्रत्यमुखां(खीं) वधूम् " इति ।

ततो वधूवरौ मनसेष्टदेवतां ध्यायन्तौ समाहितौ तिष्ठेताम् । अस्मिन्नवसरेऽवकाशानुरोधेन ज्योतिर्विदो मङ्गलश्लोकान्पठेयुः ।

तत्र मत्कृताः षट्श्लोकाः—

देवो विघ्नविनाशनो गणपतिर्ध्यातश्च चिन्तापहृ-
घन्नत्या हृतविघ्नका अपि सुरा जाता हराजादयः ।
योऽत्राविघ्नसुसंज्ञया च कलशे संस्थापितो मण्डपे
सिद्ध्याश्लेषणहर्षितः स उभयोः कुर्यात्सदा मङ्गलम् ॥ १ ॥
वात्सल्यात्पितरौ कपोलयुगुलं स्वस्याऽऽगतौ चुम्बितुं
दृष्ट्वाऽऽकुञ्चितमास्यपद्ममलं सेषत्स्मितं सत्वरम् ।
अन्योन्यं शिवयोस्ततः सुवदने युक्ते अभूतां तयो-
रित्थंय्येन विनोदितौ स भगवान्कुर्यात्सदा मङ्गलम् ॥ २ ॥

---

१ क. ख. ग. प्रज्वाल° ।°

विघ्नेशो विबुधर्षिभिर्गणपतिर्दैतेयजोपद्रवा-
द्भीतैः प्रार्थित ईश्वरोऽपि कुतुकाद्धृत्वा वपुः शैशवम् ।
पार्वत्योकसि शैशवानि चरितान्यत्युत्कटान्याचर-
न्देवो हर्षयतीश्वरौ स भगवान्कुर्यात्सदा मङ्गलम् ॥ ३ ॥
योऽपर्णाङ्कसुतल्पके स्थित उभौ पीत्वा स्तनौ सत्वरं
शुण्डाग्रेण मुखेन चाऽऽशु युगपद्बालो विभुर्विघ्नराट् ।
स्मेरास्यः कुतुकाद्धिमाचलसुतोत्सङ्गाद्धरोत्सङ्गके
गच्छन्नाशु हरन्मनः स शिवयोः कुर्यात्सदा मङ्गलम् ॥ ४ ॥
यो देवस्य शिवस्य ताण्डवविधौ हर्षान्मदायाऽऽगतैः
कूजद्भिर्भ्रमरैर्युतं कममलं स्वीयं धुनानो विभुः ।
कुर्वन्वल्गु सुभाषणं स्खलदथो हास्यं तनोतीश्वरो
नाट्यं चैव मुदावहं स भगवान्कुर्यात्सदा मङ्गलम् ॥ ५॥
यो विघ्नोडुपनायनाभिधविधौ दत्तेऽद्रिपुत्र्या शुभे
पात्रे भिक्षितुमाहृतेषु विबुधैर्ब्रह्मारवीन्द्रादिभिः ।
नानोपायनकेषु तत्र सुरराड्दर्पं वि(व्य)पास्य क्रमा-
द्धर्मान्वर्णिन आचरत्यहरहः कुर्यात्सदा मङ्गलम् ॥ ६ ॥

श्रीमान्काश्यपगोत्रजोऽरुणरुचिर्यः सिंहराशीश्वरः
षट्त्र्याशास्थसुशोभनो गुरुकुजाब्जानां च मित्रं रविः ।
दैत्येभमन्दरिपुः कलिङ्गजननश्चाग्नीश्वरौ देवते
मध्ये वर्तुलगैन्द्रिकासुवदनः कुर्यात्सदा मङ्गलम् ॥ १ ॥
चन्द्रः कर्कटकप्रभुः सितरुचिश्चाऽऽत्रेयगोत्रोद्भव-
श्चाऽऽग्नेय्यां चतुरश्रगोऽप्पतिदिशास्यश्चाप्युमादैवतः ।
षट्सप्ताग्निदशैकशोभनफलो ज्ञारिः कुजार्कप्रियः
कालिन्दीतटदेशजो हिमकरः कुर्यात्सदा मङ्गलम् ॥ २ ॥
भौमो याम्यमुखोऽरुणो यमदिशि त्र्यस्रे स्थितोऽवन्तिजः
स्वामी वृश्चिकमेषयोः सुरगुरोरर्कस्य चेन्दोः प्रियः ।
ज्ञारिः षट्त्रिफलप्रदश्च वसुधास्कन्दौ क्रमाद्दैवते
भारद्वाजकुलोद्भवः क्षितिसुतः कुर्यात्सदा मङ्गलम् ॥ ३ ॥
ज्ञः पीतो मगधेश उत्तरमुखश्चाऽऽत्रेयगोत्रोद्भवो
बाणस्थोत्तरगः प्रियौ रविसितौ शत्रुः स वै शीतगोः ।

कन्यायुग्मपतिर्दशाष्टगचतुःषण्नेत्रगः शोभनो
विष्णू द्वावधिदैवते च शशिजः कुर्यात्सदा मङ्गलम् ॥ ४ ॥
जीवः सिन्धुपतिर्विधिः सुरपतिर्देवौ धनुर्मीनयोः
स्वामी त्वाङ्गिरसस्तथोत्तरमुखो दीर्घे स्थितश्चोत्तरे ।
सूर्येन्दुक्षितिजप्रियो बुधसितौ शत्रू च पीतप्रभो
बाणद्व्यद्रिषु चाङ्कके च शुभदः कुर्यात्सदा मङ्गलम् ॥ ५ ॥
शुक्रो भार्गवगोत्रजः सितरुचिः प्राचीमुखः पूर्वतः
पश्चास्ते वणिजो वृषस्य च पतिर्भोजाख्यदेशोद्भवः ।
इन्द्राणीन्द्रमुदैवतो ज्ञरविजौ राती अरातिः शशी
सूर्यः सप्तदशर्तुके च शुभदः कुर्यात्सदा मङ्गलम् ॥ ६ ॥
मन्दः कृष्णरुचिश्च वारुणिमुखः सौराष्ट्रजः काश्यपः
स्वामी वै मृगकुम्भयोर्भृगुबुधौ मित्रे रवीन्दू रिपू ।
स्थानं पश्चिमदिक्प्रजापतियमौ देवौ स्थितः कार्मुके
षट्त्रिस्थः शुभकृच्छनी रविसुतः कुर्यात्सदा मङ्गलम् ॥ ७ ॥
राहू राठिनपूर्भवोऽथ दितिजः कृष्णश्च शूर्पासनो
यः कालाहिसुदैवतो यमदिशावक्त्रश्च नीलप्रभः ।
रक्षोदिक्स्थकरालरुकुटिलहृत्पैठीनसेर्वंशजः
षट्त्रिस्थः शुभकृच्च बर्बरपतिः कुर्यात्सदा मङ्गलम् ॥ ८ ॥
केतुर्जैमिनिगोत्रजोऽनिलदिशासंस्थः कुजेन्दुप्रिय-
श्चित्रात्विड्ध्वजपीठगो यमदिशावक्त्रः करालास्यक्त्रः ।
ब्रह्मा चैव तु चित्रगुप्तसहितो यस्याधिदेवः कदः
षट्त्रिस्थश्च सुवेदिदेशजननः कुर्यात्सदा मङ्गलम् ॥ ९ ॥

**एवमन्यानपि मङ्गलश्लोकानवकाशानुरोधेन पठेयुः ।**

**ततः—**" तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि । ॐ प्रतिष्ठा "

**इति ज्योतिर्विदा पठिते विप्राः सद्योऽन्तःपटमुदगपसार्य वधूवराभ्यां परस्परं सुमुहूर्ते निरीक्षणं कारयेयुः ।**

**ततो वधूवराभ्यां परस्परमञ्जलिस्थतण्डुलजीरकावकिरणं कन्यापूर्वकं कारयेयुराचारात् ।**

**ततो द्विजा ऋक्च वेत्यादीनि खण्डानि प्रजापतिः सोमᳪ राजानमसृजते-**

त्यनुवाकं सिꣳहे व्याघ्र इत्यनुवाकमस्मे देवास इति चतुरो मन्त्रांश्च पठेयुः। तत्तदन्तेऽक्षतारोपणं चाऽऽचारात्।

---

## अथ कन्यादानम्।

अत्र रात्रावपि स्नानमाह वृद्धयाज्ञवल्क्यः—

"ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु वै।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते" इति॥

व्यासः—"महानिशा तु विज्ञेया मध्ययामद्वयं निशि।
तस्यां स्नानं न कुर्वीत काम्यनैमित्तिकादृते॥
प्रदोषे पश्चिमे यामे दिनवत्स्नानमाचरेत्" इति॥

मध्ययामयोस्तु विशेषमाहात्रिः—

"रात्रौ स्नानं यदि भवेत्पश्यन्नाग्निं समाचरेत्।
स्वर्णाङ्गुलिकरो विप्रो वह्निना वा विना चरेत्" इति॥

प्रयोगदर्पणे स्मृत्यन्तरे—

"कन्यादानं निशीथे चेद्दिवा भोजनमिष्यते।
काले स्नानं प्रकुर्वीत कन्यां दद्याद्वराय तु" इति॥

विवाहे प्रधानद्वयं कन्यादानं पाणिग्रहणं च। आद्यं कन्यापितरं प्रति। कन्यादानस्य प्राधान्यं तु—

"ब्राह्मे विवाहे शक्तिविषयेणालंकृत्य दद्यात्" इति धर्मसूत्रात्

"अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः"।

इत्याश्वलायनसूत्राच्च दानविवाहशब्दयोः सामानाधिकरण्यप्रतीतेः।

पाणिग्रहणस्य तु—

"पाणिग्रहणादिरग्निस्तमौपासनमित्याचक्षते" इति सूत्रात्

"पाणिग्रहणादधि गृहमेधिनोर्व्रतम्"।

इति धर्मसूत्राच्च प्राधान्यं ज्ञेयम्। चौलकर्मोपनयनगोदानविवाहकालानभिधाय तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादित्येतदाश्वलायनसूत्रमप्यत्र मानम्। अन्यथा तच्छब्देन परामृष्टाद्विवाहात्पूर्वमुक्तस्य होमस्यासंगत्यापत्तेः। न हि कन्यादानात्पुरस्तादेव ता आहुतयः सन्ति।

स्मृत्यर्थसारे वृद्धवसिष्ठः—

“ नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।
नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ” इति ॥

नान्दीमुखे प्रपितामहपूर्वकत्वं यच्छाखायां विहितं भवति तद्विषयं नास्मत्सूत्रविषयम्। अस्मत्सूत्रे तस्य विधानाभावाद्यज्ञतन्त्रचौण्डपाचार्यरामाण्डारादिभिरानुलोम्यस्यैवोक्तत्वाच्च ।

केचित्तु नान्दीमुख इति विवाहविशेषणम् । पित्रादिप्रयोजकत्वेन हर्षसंपादक इति तदर्थः । चस्त्वर्थ इत्याहुः ।

अनया रीत्या नान्दीमुखे प्रपितामहपूर्वकत्वस्याप्राप्तिरेव । अस्मिन्मते राक्षसादिविवाहस्य हर्षसंपादकत्वाभावान्न तत्र प्रपितामहपूर्वकत्वम् ।

व्यासः—“ भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा ।
उपोषितः सुतां दद्यादर्चिताय द्विजाय तु ” इति ॥

भुक्त्वेति मधुपर्काङ्गभोजनपरम् ।

मदनरत्न ऋष्यशृङ्गः—

“ वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् ।
नाम संकीर्तयेद्विद्वान्कन्यायाश्चैवमेव हि ॥
तिष्ठेत्पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत् ।
मधुपर्कार्चितायैनां तस्मै दद्यात्सदक्षिणाम् ॥
उदपात्रं ततो गृह्य मन्त्रेणैनां प्रदापयेत् ।
गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् ॥
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ।
भूमिं गां चैव दासीं च वासांसि च स्वशक्तितः ॥
महिषीं वाजिनश्चैव दद्यात्स्वर्णमणीनपि ।
ततः स्वगृह्यविधिना होमाद्यं कर्म कारयेत् ॥
यथाचारं प्रदेयानि मङ्गलं करकाणि च ” इति ॥

सर्वत्र पितृपूर्वकत्वस्यैव दृष्टत्वात्प्रपितामहपूर्वकत्वविधानम्। एवमेवेत्यनेन गोत्रोच्चारादिकं कन्यायामप्यतिदिश्यते। प्राङ्मुखो दाता, उदङ्मुखः प्रतिग्रहीतेतिदानपरिभाषाप्राप्तस्य बाधनार्थं तिष्ठेत्पूर्वमुख इत्यादिकम् । गृह्येत्यत्र समासाभावेऽपि क्त्वो ल्यबादेशश्छान्दसः। दापयेदित्यत्र स्वार्थे णिच् । मङ्गलं

मङ्गलसूत्रम् । करकाणि मृन्मयपात्राणि । चकारात्सौभाग्यद्रव्याणि सुवासिनीभ्यो देयानीत्यर्थः ।

प्रयोगदर्पणे स्मृत्यन्तरे—

" स्वार्षगोत्रे समुत्कीर्त्य वरस्यापि तथैव च ।
नाम संकीर्तयेद्विद्वान्प्रपितामहपूर्वकम् ॥
कन्यायाश्चैवमेवोक्त्वा मधुपर्कार्चिताय तु ।
स्वयं पूर्वमुखस्तिष्ठन्प्रत्यङ्मुखवराय तु ॥
कन्यां सदक्षिणां दद्याद्भूमिं वासांसि वाजिनः ।
महिषीं गां च दासीं च दद्यात्स्वर्णमणीनपि " इति ॥

स्मृत्यन्तरे तु—" तिष्ठेदुदङ्मुखो दाता प्राङ्मुखस्तु वरो भवेत् " इत्युक्तम् ।

नात्र प्रतिग्रहमन्त्रः । अयज्ञसंबन्धित्वात् । तत्रसंबन्धिदक्षिणानामेव प्रतिग्रहः समन्त्रको नान्यासामिति दर्शितं चास्ति सूत्रकृता—

" तान्त्रीणां दक्षिणानां दर्शयति " इत्यनेन । तन्त्रं यागः ।
" देवा वै वरुणमयाजयन् " इति श्रुतौ तस्यैवोपक्रमात् ।

मनवे तल्पमिति प्रतिग्रहमन्त्रस्तु वाजपेये दासीप्रतिग्रह उपयुज्यते । तन्त्रसंबन्धित्वात् । न तु दैवे विवाहेऽप्युपयुज्यतेऽतन्त्रसंबन्धित्वात् । अत्रापि प्रतिपादयेदितिवचनसत्त्वे यन्मातृदत्तेन दैवे दक्षिणाभिः सह दत्तायां मनवे तल्पमिति प्रतिग्रह इत्युक्तम्, तदुत्तरग्रन्थविरुद्धमिति प्रतिभाति । न ममेत्यपि न भवति । धर्मसूत्रे प्रतिपादयेदिति वचनात् । एवं च—ॐ स्वस्तीति ॐ तथेति वेत्युक्त्वा प्रतिगृह्णीयात् ।

## अथ प्रयोगः ।

कन्यादाता वरदत्तवस्त्राभरणादिरहितां स्वदेयवस्त्राभरणाद्यलंकृतां कृतपीतवस्त्रपरिधानां कन्यां वराय दद्यात् । अश्मानं निष्काश्य[1] पीठे कन्यामुपवेश्य वधूवरयोर्मध्यप्रदेशस्य दक्षिणत उदङ्मुख उपविश्य दक्षिणतः पत्नीमुपवेश्याऽऽचम्य पवित्रपाणिः प्राणानायम्य देशकालौ संकीर्त्यामुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्माऽहं मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादिकन्याप्रतिपादनकल्पोक्तफलावाप्तयेऽनेन वरेणास्यां कन्यायामुत्पादयि-

---

१ ग. निष्कास्य ।

ष्यमाणसंतत्या द्वादशावरान्द्वादश परान्पुरुषान्पवित्रीकर्तुमात्मनश्च लक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना कन्याप्रतिपादनं करिष्य इति संकल्पं कुर्यात्। यद्ययं संकल्पो विवाहारम्भे कृतस्तदा नात्र कार्यः।

ततः सपत्नीक उत्थायोदङ्मुख एव तिष्ठन्तीं प्रत्यङ्मुखीं कन्यां दक्षिणहस्ते धृत्वा—

"कन्यां कनकसंपन्नां कनकाभरणैर्युताम्।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया॥
विश्वंभरः सर्वभूताः साक्षिण्यः सर्वदेवताः।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च"॥

इति पठित्वा[1] कांस्याद्यन्यतमे तैजसे पात्रे[3] प्राङ्मुखेन तिष्ठता वरेण[4] गृहीते तिष्ठन्त्याः प्रत्यङ्मुख्याः[5] कन्याया दक्षिणे हस्ते हस्तद्वये वा सयवाक्षततुलसीपत्रकुशसहितमुदकं क्षिपंस्त्रयोदश वाक्यानि पठेत्। आश्वलायनो वरो दाता याजुषो विपरीतं वा तदा वध्वा हस्तोऽध उपरि वरहस्त इत्येवमाश्वलायनरीत्या वरहस्तोऽधो वधूहस्त उपरीत्येवं याजुषरीत्या वोपर्यधोभावो द्रष्टव्यः।

ततः कन्या तारयतु, पुण्यं वर्धतां, शिवा आपः सन्तु, सौमनस्यमस्तु, अक्षतं चारिष्टं चास्तु, दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु, तिथिकरणमुहूर्तनक्षत्रसंपदस्तु, यच्छ्रेयस्तदस्तु, यत्पापं तत्प्रतिहतमस्तु, पुण्याहं भवन्तो ब्रुवन्तु, स्वस्ति[6] भवन्तो ब्रुवन्तु, ऋद्धिं भवन्तो ब्रुवन्तु, श्रीरस्त्विति भवन्तो ब्रुवन्तु, इति।

ततोऽमुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्माऽहं मम समस्तपितॄणामित्यादि प्रीतय इत्यन्तं पूर्ववदुक्त्वाऽमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणे कन्यार्थिने श्रीधररूपिणे वराय, अमुकप्रवरान्वितामुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकस्य मम पुत्रीममुकनाम्नीं कन्यां वरार्थिनीं श्रीरूपिणीं यथाशक्त्यलंकृतां प्रजापतिदैवत्यां प्रजासहत्वकर्मभ्यस्तुभ्यमहं प्रतिपादय इत्युक्त्वा सयवाक्षततुलसीपत्रकुशयुतं जलं वरहस्ते क्षिपेत्। गान्धर्वराक्षसपैशाचेषु नैवं प्रतिपादनं तेषां दातृव्यापारनिरपेक्षत्वात्।

ततो वर ॐ स्वस्तीति ॐ तथेति वा प्रतिगृह्णीयात्। अत्र दातुर्न ममेति न भवति। एवं वरस्य प्रतिग्रहमन्त्रश्च न। एवं कन्या तारयत्वित्याद्यौ स्वस्ती-

---

१ ख. ङ. 'श्च श्रील°। २ क. °त्वाऽन्येन येनकेनचित्कांस्या°। ३ क. ग. °त्रे धृते प्रा°। ४ क. °ण तस्मिन्पात्रे गृ°। ५ ख. ङ. प्राङ्मुख्याः। ६ ग. ङ. स्वस्ति।

त्यन्तं वारद्वयं पुनः कार्यम् । पितामहस्तु दानं कुर्वन्पौत्रीमित्यतः पूर्वं ममेति वदेत् । सकुल्यत्वेन प्रपितामहः कुर्वन्प्रपौत्रीमित्यतः पूर्वं ममेति वदेत् । भ्रात्रादिर्दानं कुर्वन्पुरुषत्रयसंकीर्तनमेव कुर्यात् । ममेति न क्वापि वदेत् । जननी चेद्दानं कुर्यात्तदा[ऽमुक]गोत्राऽमुकनाम्न्यहमिति विकारः । भर्तृगोत्रमेवेत्थं सा वदेन्न गोत्रोत्पन्नेति । पितृगोत्रं नैव वदेत् । मातामहमातुलादिः संबन्ध्यन्यो वा यः कश्चिद्ब्राह्मणो गोत्रान्तरीयः कन्यादानं कुर्वन्स्वगोत्रं स्वविशेषणत्वेन संकीर्त्यामुकशर्मणः कन्यापितुः समस्तपितॄणां निरतिशयेत्यादि वदेत् । आत्मनश्चेत्यत्र कन्यापितुश्चेति । जननी चेद्दानकर्त्री तदा मद्भर्तुः समस्तपितॄणां निरतिशयेत्यादि वदेत् । आत्मनश्चेत्यत्र मद्भर्तुश्चेति । आत्मनश्चेति द्वितीयाबहुवचनान्तमिति कल्पे कन्यापितॄंश्चेति कन्यापितरं चेति वा । अत्र कन्याविशेषणत्वेन कन्यापितृगोत्रसंकीर्तनमेव कार्यम् । अमुकस्य प्रपौत्रीमित्यादिषु कन्यापित्रादिनामान्युच्चारणीयानि । मम वंशकुले जातेति वक्ष्यमाणे श्लोकेऽपि ममेत्येतस्य स्थाने कन्यापितृनामैव षष्ठ्यन्तं वदेच्च ।

यदि दत्तकः कन्याया दानं कुर्यात्तदा प्रतिगृहीतो येन तद्गोत्रमेव स्वस्य कन्यायाश्च विशेषणत्वेन वदेत् । प्रतिग्रहीतृपितृतत्पितृपितामहानां नामानि कीर्तयेत् । दत्तकन्यादानेऽपि स्वगोत्रस्यैव कन्याविशेषणत्वेन संकीर्तनम् । श्लोके जातेत्यत्र दत्तेति वदेत् । एवं दत्तकवराय कन्यादानेऽपि येन प्रतिगृहीतस्तदीयमेव गोत्रादि ।

ततः—" गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् ।
गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ।
कन्ये ममाग्रतो भूयाः कन्ये मे देवि पार्श्वयोः ।
कन्ये मे पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ।
मम वंशकुले जाता पालिता वत्सराष्टकम् ।
तुभ्यं विप्र मया दत्ता पुत्रपौत्रप्रवर्धिनी " इति कन्यां निवेदयेत् ।

न्यूनवार्षिक्यां तु गौरीमित्यस्य पदस्य लोपः । मया कन्यामिमां विप्र यथाशक्तिविभूषितामित्येव वा प्रयोगः । पालिता वर्षसप्तकं पालितेयं षडब्दकमित्यूहश्च यथायथम् । नववार्षिक्यां तु गौरीमितिपदे रोहिणीमित्यूहेत्, रोहिणीं कन्यामिमां विप्रेति पालिता नववर्षकमिति च । दशवार्षिक्यां तु गौरीरोहिणीपदस्थाने कन्यामित्यूहेत्, कन्यां कन्यामिमां विप्रेति पालिता

दशवर्षकमिति च। गौरीपदलोपः पूर्ववदत्रापि। अत्र वर्षं जन्मत एव। ततो धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयमिति श्रावयेत्। ततो वरो वाक्यार्थ-मङ्गी कुर्यान्नातिचरामीति।

ततो दाता कृतस्य कन्यादानकर्मणः साङ्गतासिद्ध्यर्थं यथाविभवकल्पित-मिदमग्निदैवत्यं हिरण्यं दक्षिणात्वेन तुभ्यमहं संप्रदद इति वरहस्ते दत्त्वा न ममेति वदेत्। वरस्तु सप्तदशकृत्वोऽपान्य,

देवस्य त्वेत्यस्य प्रजापतिः सविता यजुः। हिरण्यप्रतिग्रहे विनियोगः। 'ॐ देवस्य त्वा सवितुः० णेऽग्नये हिरण्यं ते० तु' इति प्रतिगृह्णीयात्। यज्ञियद-क्षिणाप्रतिग्रह एव सावित्रमन्त्रो नान्यत्रेत्येतत्कल्पे तु न सप्तदशकृत्वोऽपाननं तत्र प्रतिगृह्णामीत्येव प्रतिग्रहः।

ततो दाता जलपात्रभोजनपात्रगोमहिष्यश्वगजदासीदासभूशय्यालंकारादि यथाविभवं संकल्पपूर्वकं वराय दद्यात्।

तत्र दानमन्त्राः—

" परापवादपैशून्यादभक्ष्यस्य च भक्षणात्।
उत्पन्नं पापं दानेन ताम्रपात्रस्य नश्यतु "

इति ताम्रपात्रस्य जलपानार्थस्य।

" यानि कानि च पापानि कामोत्थानि कृतानि तु।
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा "।

इति कांस्यपात्रस्य भोजनाद्यर्थस्य।

" अगम्यागमनं चैव परदाराभिमर्शनम्।
रौप्यपात्रप्रदानेन तानि नश्यन्तु मे सदा "।

इति रौप्यपात्रस्य जलपानार्थस्य भोजनार्थस्य च।

" जन्मान्तरसहस्रेषु यत्कृतं पातकं मया।
स्वर्णपात्रप्रदानेन तानि नश्यन्तु मे सदा " इति स्वर्णपात्रस्य।

" यज्ञसाधनभूताया विश्वस्याघौघनाशिनी।
विश्वरूपधरो देवः प्रीयतामनया गवा " इति गोः।

" इन्द्रादिलोकपालानां या राज्यमहिषी प्रिया।
महिषासुरस्य जननी साऽस्तु मे सर्वकामदा " इति महिष्याः।

---

१ ग. °न्मतो गर्भतो वाऽपि। त°। ङ. °न्मतोगर्भतोऽपि वा। त°।

" महार्णवसमुत्पन्न उच्चैःश्रवस पुत्रक ।
सोपस्करस्त्वं विप्राय दत्तः शान्तिं प्रयच्छ मे " ।

**इति खलीनाद्युपस्करसहिताश्वस्य ।**

" सुप्रतीक गजेन्द्र त्वं सरस्वत्याऽभिषेचितम् ।
इन्द्रस्य वाहनं शश्वत्सर्वदेवैः सुपूजितम् ।
विप्र तुभ्यं ददामीमं तेन शान्तिं प्रयच्छ मे " **इति गजस्य ।**

" इयं दासी मया तुभ्यं श्रीवत्स प्रतिपादिता ।
सदा कर्मकरी ह्यद्या येथेष्टं भद्रमस्तु मे " **इति दास्याः ।**

" अयं दासो मया तुभ्यं श्रीवत्स प्रतिपादितः ।
सदा कर्मकरो ह्यद्यो मम शान्तिं प्रयच्छतु " **इति दासस्य ।**

" सर्वसस्याश्रया भूमिर्वराहेण समुद्धृता ।
अनन्तसस्यफलदा मम शान्तिं प्रयच्छतु " **इति भूमेः ॥**

" अनूनं शयनं नित्यमनूनां श्रियमुन्नतिम् ।
सौभाग्यं देहि मे नित्यं शय्यादानेन केशव " ॥

**इति सोपस्करायाः शय्यायाः ।**

" सौवर्णं हस्तवलयं रूपकान्तिसुखप्रदम् ।
विभूषणं प्रदास्यामि विभूषयतु मां सदा " ॥

**इति वलयादिभूषणानाम् ।**

" हिरण्यगर्भसंभूतं सौवर्णं चाङ्गुलीयकम् ।
सर्वप्रदं प्रयच्छामि प्रीतोऽस्तु कमलापतिः " **इत्यङ्गुलीयकस्य ।**

" क्षीरोदमथनोद्भूतं शुभदं कुण्डलद्वयम् ।
श्रिया सह समद्भूतं ददे श्रीः प्रीयतां मम " **इति कुण्डलयोः ॥**

" हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदं मम शान्तिं प्रयच्छतु " **इति हिरण्यस्य ॥**

" असुरेषु समुद्भूतं रजतं पितृवल्लभम् ।
तस्मादस्य प्रदानेन रुद्रः संप्रीयतां मम " **इति रजतस्य ।**

## अथैतेषां प्रतिग्रहमन्त्राः ।

'ॐ देवस्य त्वा स० णे रुद्राय गां तया०' **इति गोः । तृणं प्रदाय प्रतिग्रहः ।** 'ॐ देवस्य त्वा० णे प्रजापतये महिषीं तया०' **इति महिष्याः । यमाये महिषीमिति वा ।** देवस्य त्वा० णे वरुणायाश्वं तेना० ' **इत्यश्वस्य । तृणं प्रदाय प्रतिग्रहः ।**

( कन्यादानोत्तरं कर्तव्यम् )

'ॐ देवस्य त्वा० णे हिमवतो हस्तिनं तेना०' इति गजस्य। 'ॐ प्रजापतये दासीं तया०' इति दास्याः। 'ॐ प्रजापतये दासं तेना०' इति दासस्य। 'ॐ मनवे तल्पं तेना०' इति शय्यायाः। '० क्षिणेऽप्सरोभ्योऽलंकरणं तेना०' इत्यलंकरणानाम्। प्रत्यलंकरणं मन्त्रावृत्तिः। '०णेऽग्नये हिरण्यं तेना०' इति हिरण्यस्य। सर्वत्र सावित्रान्वाधी(?)। सर्वेषां प्रजापतिर्ऋषिः सविता देवता यजुश्छन्दः। प्रतिग्रहणे विनियोग इत्यृष्यादि। महिषीदासीदासप्रतिग्रहणमन्त्राणां तु वामदेव ऋषिर्ज्ञेयः। उत्तानस्त्वेत्यवशिष्टानामप्राणिद्रव्याणां प्रतिग्रहणम्। अत्रापि सावित्रान्वाधीस्त इति केचित्। एतस्य प्रजापतिर्ऋषिः। आङ्गीरसो देवता। यजुश्छन्दः। प्रतिग्रहे विनियोग इत्यृष्यादि द्रष्टव्यम्। प्रतिद्रव्यप्रतिग्रहं सप्तदशकृत्वोऽपाननम्। प्रतिगृह्णामीत्येव वा सर्वेषां प्रतिग्रहः। अस्मिन्पक्षे नापाननतृणप्रदाने। अत्रापि भवत इति केचित्।

ततः कन्यादाता कन्यादानकर्मणः साङ्गतासिद्ध्यर्थं यथाविभवं ब्राह्मणान्सुवासिनीश्च यथोपपन्नेनान्नेन भोजयित्वा भूयसीं ब्राह्मणेभ्यो गन्धादिपूजनपूर्वकं दत्त्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत्।

इति कन्यादानप्रयोगः।

अतः परं कर्तव्यमुक्तं स्मृतिसंग्रहे—

"अब्लिङ्गाभिर्ऋग्भिरपो युतं हेम्नाऽभिमन्त्र्य तत्
ताभिरासीनोऽभिषेकं दंपत्योर्द्विज आचरेत्॥
आ नः प्रजामित्येताभिर्ऋग्भिश्चतसृभिस्ततः।
समुद्रेति चतसृभिरापो हीति त्रिभिस्तथा॥
दुग्धाक्तं श्वेतसूत्रं च कृत्वा द्विगुणमेव तत्।
वरवध्वोः कण्ठदेशे कटिदेशे तथैव च॥
प्रदक्षिणं पञ्चवारं चतुर्वारमथापि वा।
ऐशानीं दिशमारभ्य अच्छिन्दन्वेष्टयेत्ततः॥
यत्सूत्रं कण्ठदेशस्थमधो निष्काशयेत्तु तत्।
रञ्जयित्वा कुङ्कुमेन कृष्णोर्णास्तुकया युतम्॥
दृढं तु रजनीखण्डं बद्ध्वा सूत्रेण तेन तु।
वधूवामप्रकोष्ठे तु बध्नीयात्सुदृढं वरः॥

---

१ क. °धीस्त। स°। २ ग. ङ. °आङ्गिर°।

नीललोहितमन्त्रेण रक्षणार्थमिदं स्मृतम् ।
यत्सूत्रं कटिदेशस्थमूर्ध्वं निष्काशयेत्तु तत् ॥
रञ्जयित्वा कुङ्कुमेन कृष्णोर्णास्तुकया युतम् ।
दृढं तु रजनीखण्डं बद्ध्वा सूत्रेण तेन तु ॥
वरदक्षप्रकोष्ठे तु बध्नीयात्सुदृढं वधूः ।
प्रोक्तो मन्त्रः स एवात्र तूष्णीं वा बन्धनं स्मृतम् ॥
तैजसे पात्र आनीते क्षीरे गव्यं घृतं ततः ।
किंचिदासिच्यान्यपात्रे शुक्लानार्द्राक्षतान्क्षिपेत् ॥
तण्डुलाञ्शालिसंभूतांस्तत्र द्विः क्षीरमानयेत् ।
वध्वञ्जलिस्थाञ्जलिना द्विः क्षीरेण वरस्ततः ॥
उपस्तीर्याक्षतान्दुग्धाभ्यक्तान्द्विस्तत्र निक्षिपेत् ।
अथाभिघार्य प्राग्वद्विः पयसेत्येवमेव तु ॥
दाताऽन्यो वा प्रकुर्वीताञ्जलावपि वरस्य तु ।
अञ्जल्योर्वरवध्वोस्तु निदध्यात्काञ्चनं द्विजः ॥
तदञ्जली युतौ कृत्वा वदेद्वाक्यचतुष्टयम् ।
कन्या पुण्यं तथा शान्तिस्तिथीति क्रमशः पठेत् ॥
भगो यज्ञः श्रियो धर्मः प्रजा यश इति क्रमात् ।
मन्त्रैः शिरसि कुर्यातामक्षतारोपणं ततः ॥
आद्यो वध्वाः परः पत्युर्वध्वाः स्यात्तु तृतीयकः ।
तुर्यः पत्युः पञ्चमस्तु वध्वा अन्त्यो नुरेव तु ॥
एवं त्रिवारं कुर्वीत विपरीतमदः पुनः ।
तूष्णीं च सप्तमं ज्ञेयं वरपूर्वमिदं स्मृतम् ॥
चतुर्वारमिदं कार्यमिति केचित्समूचिरे ।
भगो मे काम इत्यादीन्मन्त्रान्नेच्छन्ति केचन ॥
स्वशिरस्थं ततः पुष्पं समादाय ततो वरः ।
क्षीर आज्ये च संप्लाव्य वरस्तेन ललाटके ॥
वध्वाः कुर्वीत तिलकमेवं कुर्याद्वधूस्ततः ।
निक्षिपेतां पुष्पमाले कण्ठयोस्तु परस्परम् ॥
वस्त्रद्वयं कञ्चुकं च सूत्रं मङ्गलसंज्ञकम् ।
अर्पयेयुः सुवासिन्यो वध्वै तां च वधूं वरः ॥

कृतवस्त्रपरीधानां संस्मरन्निष्टदेवताम् ।
सूत्रेण मङ्गलाख्येन कण्ठदेशे विभूषयेत् ॥
माङ्गल्यतन्तुनेत्येष मन्त्रोऽत्र कथितो बुधैः ।
इतरैर्भूषणैः पश्चात्तत्तदङ्गेषु भूषयेत् ॥
वधूवरौ प्रकुर्यातां गणेशस्य तु पूजनम् ।
सौभाग्याद्यभिवृद्ध्यर्थं महालक्ष्म्यास्तथैव च ॥
पार्वत्याश्च तथा शच्याः पूजनं तु समाचरेत् ।
सौभाग्यार्थं वायनानि प्रदद्यात्सुसमाहिता ॥
दिनत्रयं प्रकुर्यातां व्रतस्याऽऽचरणं ततः " इति ।

## अथाभिषेकादिप्रयोगः ।

पुरोधाः—आपो हि ष्ठेति मन्त्रत्रयस्याग्निर्विश्वे देवा वाऽऽपो गायत्री। अबभिमन्त्रणे विनियोगः। "ॐ आपो हि ष्ठा मयोभुवः० चनः" इति स्वर्चितकलशस्थाः सुवर्णयुता अपोऽभिमन्त्र्य ताभिः सहिरण्यकुशदूर्वापल्लवाभिरभिषिञ्चेत् ।

आ नः प्रजामितिचतसृणां सूर्यासावित्री सूर्यासावित्री । आद्ये द्वे जगत्यौ। अन्त्ये द्वे अनुष्टुभौ। समुद्रज्येष्ठा इति चतसृणां वसिष्ठ आपस्त्रिष्टुप् । आपो हि ष्ठेति मन्त्रत्रयस्याग्निर्विश्वे देवा वाऽऽपो गायत्री। सर्वेषां वरवध्वोरभिषेके विनियोगः। " ॐ आ नः प्रजां जनयतु० वृपु "। " ॐ समुद्रज्येष्ठाः " " ॐ आपो हि ष्ठा० " इत्यभिषेकं कुर्यात्। वर एवाभिषेकं कुर्यादिति कश्चित्।

ततः पुरोधा दुग्धाक्तेन द्विगुणेन श्वेतसूत्रेण वधूवरयोः कण्ठदेश ऐशानीमारभ्य पञ्चवारं चतुर्वारं वा प्रदक्षिणं संवेष्ट्य वधूवरयोः कटिदेशे तथैव वेष्टयेत् ।

तत्रैते शिष्टस्वीकृता मन्त्राः—"ॐ परि त्वा गिर्वणो गिर इ० ध्वमध्वरम्" इति। "ॐ महीनां पयोऽसि वि० यै दुग्धम्" इति याजुषो मन्त्रोऽपि पठनीयः ।

ततः कण्ठदेशस्थं सूत्रमधो निष्काश्य कुङ्कुमाक्तं कृष्णोर्णास्तुकायुतं च कृत्वा तेन दृढं हरिद्राखण्डं बद्ध्वा तद्वधूवामप्रकोष्ठे वरो बध्नीयात्, नीललोहितमित्यस्य सूर्यासावित्री सूर्यासावित्र्यनुष्टुप्। हस्ते कङ्कणबन्धने विनियोगः। "ॐ नीललोहितं भ० बध्यते" इत्यनेन मन्त्रेण ।

ततः कटिदेशस्थं सूत्रमुपरि निष्काश्य कुङ्कुमाक्तं कृष्णोर्णास्तुकायुतं च

कृत्वा तेन दृढं हरिद्राखण्डं बद्ध्वा वरस्य दक्षिणप्रकोष्ठे वधूर्बध्नीयात्तेनैव मन्त्रेण तूष्णीं वा ।

अथ वधूवरौ परस्परमायुर्वर्धनकरमक्षतारोपणं कुर्याताम् । तद्यथा—तैजसे पात्र आनीते गव्ये क्षीरे किंचिद्घृतमासिच्य पात्रान्तर आर्द्राक्षतशुक्लशालितण्डुलानोप्य वरः क्षालिताञ्जलिः क्षालितवध्वञ्जलौ तेन घृतयुतक्षीरेण स्वहस्तद्वयाङ्गुलिभिर्द्विरुपस्तीर्य द्विवारं तथैव तण्डुलानोप्य तथैव क्षीरेण द्विरभिघारयेत् ।

ततो वराञ्जलावप्येवं दाताऽन्यो वा कुर्यात् । ततो दातैव तदञ्जल्योः सुवर्णं निधाय वराञ्जलिवध्वञ्जली संयुतौ कृत्वा कन्या तारयतु, पुण्यं वर्धतां, शान्तिः पुष्टिस्तुष्टिश्चास्तु, तिथिकरणमुहूर्तनक्षत्रसंपदस्तु, इति वाक्यानि पठेत्।[1]

ततो वधूः—'ॐ भगो मे कामः समृध्यताम्' इत्यञ्जलिस्थानक्षतान्वरमूर्धन्यारोपयेत् । 'ॐ यज्ञो मे कामः समृध्यताम् ' इति वरः स्वाञ्जलिस्थानक्षतान्वधूमूर्धनि । एवं द्वितीयं तृतीयं च । तत्र द्वितीये 'ॐ श्रियो मे कामः समृध्यताम् ' इति वध्वा मन्त्रः । 'ॐ धर्मो मे कामः समृध्यताम्' इति वरस्य । तृतीये तु 'ॐ प्रजा मे कामः समृध्यताम् ' इति वध्वा मन्त्रः । 'ॐ यशो मे कामः समृध्यताम् ' इति वरस्येति विशेषः ।

ततो वधूर्वराञ्जलिं द्विरुपस्तीर्य द्विस्तण्डुलैरापूर्य द्विरभिघारयेत् ।

ततो दाताऽन्यो वा पूर्ववद्वध्वञ्जलिमापूरयेत् । ततो दातैव पूर्ववद्धिरण्यं निधाय वध्वञ्जलिं वराञ्जलौ निधाय पूर्ववद्वाक्यानि पठेत् ।

ततो वरः—'ॐ यज्ञो मे कामः समृध्यताम् ' इति वधूमूर्धन्यञ्जलिस्थानक्षतानारोपयेत् ।

ततो वधूः—'ॐ भगो मे कामः समृध्यताम्' इति वरमूर्धन्यञ्जलिस्थानक्षतानारोपयेत् । एवं द्वितीयं तृतीयं च । तत्र द्वितीये धर्मो म इति वरस्य मन्त्रः । श्रियो म इति वध्वाः । तृतीये तु यशो म इति वरस्य । प्रजा म इति वध्वा इति विशेषः ।

अथ वरो वध्वञ्जलिं पूर्ववदापूर्य दात्राऽन्येन वा स्वाञ्जलावापूरिते वधूमूर्धन्यञ्जलिस्थानक्षतांस्तूष्णीमारोपयेत् । तूष्णीं वरमूर्धनि वधूः । एवं सप्तवारमक्षतारोपणं कार्यं चतुर्वारं वा । केचिद्भगो म इत्यादीन्मन्त्रान्नेच्छन्ति । अस्मिन्पक्षे तूष्णीमेव सप्तवारं चतुर्वारं वाऽक्षतारोपणं भवति ।

---

१ क. ग. 'तु, दक्षिणाः पान्तु, बहु देयं चास्तु, पु' ।

ततो वरः स्वशिरःस्थं पुष्पमादाय घृतयुतक्षीर आप्लाव्य तेन वध्वा ललाटे तिलकं कुर्यात्। एवं वधूरपि स्वशिरःस्थेन पुष्पेण वरललाटे तिलकम्।

ततो वधूः स्वकण्ठस्थां पुष्पमालां वरकण्ठे क्षिपेत्। वरः स्वकण्ठस्थां वधूकण्ठे।

ततो वरपक्षीयसुवासिन्यो वधूवरौ प्राङ्मुखावुपवेश्य नीराजनपूर्वकमाचारप्राप्तमष्टपुत्रीसंज्ञकं वस्त्रद्वयं सकञ्चुकं मङ्गलसूत्रं च वध्वै समर्प्य तयोरेकं परिधापयित्वाऽ(प्या)परमुत्तरीयं कारयेयुः। ततः कञ्चुकीं परिधापयेयुः।

ततो वरः—" माङ्गल्यतन्तुनाऽनेन भर्तृजीवनहेतुना।
कण्ठे बध्नामि सुभगे सा जीव शरदां शतम् " ॥

इतिमन्त्रेणेष्टदेवतां संस्मरंस्तत्सूत्रं वधूकण्ठे बध्नीयात्। आयुष्यं वर्चस्यमित्यादिमन्त्रैस्तां भूषयेच्च।

ततो हरिद्राखण्डयुतानि पञ्च पञ्च पूगीफलानि दद्यान्याचाराल्लड्डुकयुतानि पात्रे निधाय वधूवरावावाहनादिदक्षिणान्तैरुपचारैर्गणानां त्वाऽऽ तू न इन्द्रेति मन्त्राभ्यां विवाहव्रतरक्षणार्थं गणपतेः पूजां कुर्याताम्। अत्र ब्राह्मणेभ्यो गणपतिप्रीतये यथाविभवं दक्षिणा देया।

ततः पुरोधा विवाहव्रतरक्षकं गणपतिमनुस्मृत्य हरिद्राखण्डयुतौ साक्षतौ लड्डुकौ तयोर्वस्त्रप्रान्ते पृथक्पृथग्बध्नीयात्। वधूवरौ विवाहव्रतसमाप्त्यन्तं तद्ग्रन्थिद्वयं न विसृजेताम्।

ततः पुरोधाः—'ॐ नीललोहितं भवति कृत्यासक्तिर्व्यज्यते। एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते'। बृहत्सामेति मन्त्रेण च तयोरुत्तरीयान्तौ मिथो बध्नीयात्।

ततः सभार्यो दाता वृद्धाः पुरन्ध्यो ज्ञातयो बान्धवाश्च क्रमाद्यथाचारमाशीर्भिरार्द्राक्षतारोपणं कुर्युः।

ततो वधूः पात्रस्थसिततण्डुलपुञ्जत्रय उदक्संस्थं नाममन्त्रैर्महालक्ष्मीं पार्वतीं शचीं च क्रमेणाऽऽवाह्य दक्षिणान्तैरुपचारैः पूजयेत्। वरेणापि पूजनं कार्यमिति केचित्।

ततो वधूः सौभाग्याद्यभिवृद्धये महालक्ष्मीपार्वतीशचीप्रीत्यर्थं हरिद्राजीरकसौभाग्यद्रव्यपूरितवंशपात्रवायनदानानि सुवासिनीः संपूज्य ताभ्यो दद्यात्।

तत्र मन्त्राः—" लक्ष्मीप्रिया च लक्ष्मीदा लक्ष्मीव सुजनप्रिया।
सौभाग्यदा वरस्त्रीणां हरिद्रे श्रीः सदाऽस्तु मे "।

इति हरिद्रादानमन्त्रः।

" जरा नो जायते यस्मान्मण्डनं शुभकर्मसु ।
तस्माज्जीरकदानेन प्रीयतां गिरिजा मम ' इति जीरकदानमन्त्रः ।
" कञ्चुकीवस्त्रयुग्मैश्च तथा कर्णावतंसकैः ।
कण्ठसूत्रैश्च भूषाभिः प्रीयतां निमिनन्दिनी ' ।

इति सौभाग्यद्रव्ययुतशूर्पवायनदानमन्त्रः । एतानि सदक्षिणानि देयानि । ततो द्विजैराशिषो देयाः। 'ॐ नवो नवो भवति०' 'ॐ यथा ह तद्व०' 'मा नो अरातिर०' 'ॐ भद्रं कर्णेभिः० ४' (*'ॐ अभ्रातृघ्नीं वरुणापतिघ्नीं बृहस्पत इन्द्रापुत्रघ्नीं लक्ष्म्यन्तामस्यै सवितुः सवे' इति वरो वधूं समीक्षते । ' ॐ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ' इति वध्वेक्षमाणो वरो जपति । 'ॐ इदमहं या त्वयि पतिघ्न्यलक्ष्मीस्तां निर्दिशामि ' इति वधूं मुखे दर्भेण संमार्ष्टि । दर्भं निरस्याप उपस्पृश्य ' ॐ मित्रोऽसि' इति वधूं दक्षिणहस्ते गृह्णाति । 'ॐ एकमिषे विष्णुस्त्वाऽन्वेतु द्वे ऊर्जे० होत्राभ्यो विष्णुस्त्वाऽन्वेतु ' इति वधूं वेदिरूपदेवयजनमुदानयति । 'ॐ सखाऽसि सप्तपदा अभूम सख्यं ते गमेयꣳ सख्यान्मे मा योषꣳ सख्यान्मे मा योष्ठाः ' इति सप्तमं पदमुपसंगृह्य जपति ।

( + ततः सतूर्यघोषो वरो वध्वा सह वेद्यां प्राङ्मुख उपविशेत् । वधूस्ततो गौरीहरसमीपं गत्वोपविशेत् । ) निरीक्षणप्रभृति वायनदानान्तं शिष्टाः क्वचिद्देशे मध्यगृहे कुर्वन्ति । क्वचिन्मण्डपे । ' सूर्यभौमबृहस्पतिशनैश्चरवारेषु मध्यगृहे दंपत्योः परस्परं निरीक्षणं न भवति । सोमबुधशुक्रवारेषु मण्डपे न भवति । कालस्य तत्र निवासात् ' इति ज्योतिर्निबन्धोक्तमिदानीं शिष्टा न स्वी कुर्वन्तीत्यत्र हेतुं न विद्मः ।

अस्तु देशविशेषेण[1] वारविशेषेण वा निरीक्षणे विशेषः । तथाऽपि कन्यादानं तु मण्डप एव कर्तव्यं, प्रधानस्य कन्यादानस्य मण्डप एव करणस्य युक्तत्वात् । अन्यथा तन्निर्मितेः स्वकर्तृकप्रधानकर्मण्यसंबन्ध एव स्यादिति युक्तं चेद्ग्राह्यम् । )

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. ख. पुस्तकयोः ' ततः सतूर्यघोषो वरो वध्वा सह वेद्यां प्राङ्मुख उपविशेत् । वधूस्ततो गौरीहरसमीपं गत्वोपविशेत् ' इति ग्रन्थो वर्तते । ग. पुस्तके तु अभ्रातृघ्नीमित्यादिरुपसंगृह्य जपतीत्यन्तो ग्रन्थो नास्ति । + धनुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तके युक्तं चेद्ग्राह्यमित्यनन्तरं वर्तते ।

१ ग. ङ. 'ण वा नि' ।

# अथ विवाहहोमः ।

वर आचम्य प्राणानायम्य देशकालौ संकीर्त्य मत्प्रतिगृहीतवधूद्देश्यकभार्यात्वसिद्धिपूर्वकाग्नावौपासनत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं विवाहहोमं करिष्य इति संकल्पं कृत्वा स्थण्डिलोल्लेखनादि कृत्वा तत्र योजकनामानमग्निं प्रतिष्ठापयामीति मथितं वधूवरयोर्वेद्यारोहणात्पूर्वमेव सुवासिन्या श्रोत्रियागारादाहृत्य वेद्या उत्तरतोऽधोभागे स्थापितं लौकिकाग्निं वा प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा विवाहहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तमुक्त्वा प्रधानहोमे—अग्निं वरुणं चैकैकयाऽऽज्याहुत्या यक्ष्ये। अग्निं गार्हपत्यमेकयाऽऽज्याहुत्या यक्ष्ये । अग्निमेकयाऽऽज्याहुत्या यक्ष्ये । दिवं वायुमश्विनौ सवितारं बृहस्पतिं विश्वान्देवांश्चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निं द्वाभ्यामाज्याहुतिभ्यां यक्ष्ये । अङ्गहोमे वरुणं[1] द्वाभ्यामाज्याहुतिभ्यां यक्ष्ये । अग्निं वरुणं[2] चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निं वरुणं चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निमयसमेकयाऽऽज्याहुत्या यक्ष्ये । प्रजापतिमेकयाऽऽज्याहुत्या यक्ष्ये । लाजहोमे—अग्निं तिसृभिर्लाजाहुतिभिर्यक्ष्ये । अग्निं स्विष्टकृतमेकया हुतशेषाज्याहुत्या यक्ष्य इति वदेत् । यत्र यत्र सूत्रकृदथ सौविष्टकृतीं जुहोतीत्यथशब्दप्रयोगं करोति तत्र त[3]द्द्रव्येण स्विष्टकृत् । अन्यत्र त्वाज्येनेति । न ह्यत्राथशब्दः सूत्रकृता प्रयुक्तोऽस्ति । अतोऽत्राऽऽज्येनैव स्विष्टकृद्धोमः ।

ततो जयोपहोमे चित्तं चित्तिमित्यादि कामं गन्धर्वमाधीं[4]नप्सरसः, भुवनस्य पतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इत्यन्तमुक्त्वा, प्रायश्चित्तहोमे—अग्निं त्रिभिरित्यादि । पात्रासादने प्रादेशमात्रमश्मानं व्रीह्यादिबीजानि सपल्लवमुदकपूर्णं सुभूषितं कलशं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यं लाजांश्च युगपदेवाऽऽसादयेत् ।

ततो ब्रह्मोपवेशनादि । पात्रसंमार्गकाले वध्वञ्जलिसंमार्गार्थं कांश्चित्संमार्गदर्भानवशेषयेत् । आज्यपर्यग्निकरणकाले लाजानामपि तेन सह पर्यग्निकरणम् । परिधिपरिधानान्ते लाजान्दर्व्याऽभिघार्याऽऽज्याग्न्योर्मध्येनाऽऽनीयाऽऽज्यस्योत्तरतो बर्हिष्यासादयेत् ।

ततः " ॐ सुमङ्गलीरियं वधूरिमाꣳ समेत पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं

1 ख. ग. ङ. 'क्ष्ये ला' । 2 च. 'क्ष्ये ला' । 3 ङ. तत्तद्द्र' । 4 ख. ग. ङ. च. 'धीरप्स' ।

विपरेतन " इति वधूमीशानदेशतो बान्धवैः समानीयमानां सुमुहूर्ते समीक्षते। इत आरभ्य पाणिग्रहणान्तं कर्म सुमुहूर्त एव कर्तव्यं प्रधानत्वात्।

ततो वधूरग्नेरीशानदेश उपविश्य कर्माङ्गमाचमनं कृत्वाऽग्रेणाग्निं दक्षिणतो गत्वा पत्युर्दक्षिणतः प्राङ्मुख्युपविश्य दक्षिणेनैव हस्तेन पतिमन्वारभते। अपरेणाग्निं दक्षिणतो गमनमिति केचित्।

**अथ वरस्तदन्वारब्धः परिषेकादिव्याहृतिहोमान्तं कृत्वा प्रधानहोमं कुर्यात्।** 'ॐ अग्निरैतु प्रथमो देवतानाꣳ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयꣳ राजा वरुणोऽनुमन्यतां यथेयꣳ स्त्री पौत्रमघं नरोऽदात्स्वाहा' **अग्नये वरुणाय चेदं न मम।** 'ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियꣳ स्वाहा' **अग्नये गार्हपत्यायेदं न मम।** 'ॐ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु। मा त्वम्विके शूर आवधिष्ठा जीव पत्नी पतिलोके विराज प्रजां पश्यन्ती सुमनस्यमानाꣳ स्वाहा' **अग्नय इदं न मम।** 'ॐ द्यौस्ते पृष्ठꣳ रक्षतु वायुरूरू अश्विनौ च स्तनं धयतस्ते पुत्रान्सविताऽभिरक्षतु। आवाससः परिधानाद्बृहस्पतिर्विश्वे देवा अभिरक्षन्तु पश्चात्स्वाहा' **दिवे वायवेऽश्विभ्यां सवित्रे बृहस्पतये विश्वेभ्यो देवेभ्यश्चेदं न मम।** 'ॐ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाऽघम्। शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पापꣳ स्वाहा' **अग्नय इदं न मम।** 'ॐ देवकृतं ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः पिशाचान्। क्रव्यादो मृत्यूनधरान्पादयामि दीर्घमायुस्तव जीवन्तु पुत्राः स्वाहा' **अग्नय इदं न मम। इति षट्प्रधानाहुतीर्वारुणीजिह्वायां ज्वालामध्य एव वा हुत्वा, इमं मे वरुणेत्यादि षडाहुतीर्हुत्वोत्तरपरिधिसंधिमग्रेणाऽऽसादितमश्मानं निधाय,** 'ॐ आतिष्ठेममश्मानमश्मेव त्वꣳ स्थिरा भव। प्रमृणीहि दुरस्यून्सहस्व पृतनायतः' [ इति ] **तत्र दक्षिणपादोपक्रमेण वधूं प्राङ्मुखीमास्थापयति। ततोऽश्मानं निष्काशयेत्।**

१ ग. °ते। 'अभ्रातृघ्नीं वरुणापतिघ्नीं बृहस्पत इन्द्रापुत्रघ्नीं लक्ष्म्यन्तामस्यै सवितः सवे' इति वरोऽवेक्षते। 'अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः। वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे' इति वध्वेक्षमाणो वरो जपति। 'इदमहं या त्वयि पतिघ्न्यलक्ष्मीस्तां निर्दिशामि' इति वधूं मुखे दर्भेण संमार्ष्टि। दर्भं निरस्याप उपस्पृश्य 'मित्रोऽसि' इति वधूं दक्षिणहस्ते गृह्णाति। 'एकमिषे विष्णुस्त्वाऽन्वेतु द्वे ऊर्जे० होत्राभ्यो विष्णुस्त्वाऽन्वेतु' इति वधूं वेदिरूपदेवयजनमुदानयति। 'सखाऽसि सप्तपदा अभूम सख्यं ते गमेयꣳ सख्यान्मे मा योषꣳ सख्यान्मे मा योष्ठाः' इति सप्तमं पदमुपसंगृह्य जपति। इ°।

# अथ पाणिग्रहणम् ।

वरो ज्योतिर्विदादिष्टे सुमुहूर्तेऽपरेणाग्निं दर्भराशिद्वयं पूर्वापरमुदगग्रमास्तीर्य 'ॐ सरस्वति प्रेदमिव सुभगे वाजिनीवति । तां त्वा विश्वस्य भूतस्य प्रजायामस्यग्रतः । गृह्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसत् । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः' इति द्वाभ्यां पूर्वदर्भराशाववस्थितः प्रत्यङ्मुखो वरोऽपरदर्भराशाववस्थितायाः प्राङ्मुख्या भार्याया हस्तं गृह्णीयात् । अथवा पूर्वदर्भराशाववस्थितायाः प्रत्यङ्मुख्या भार्याया अपरदर्भराशाववस्थितः प्राङ्मुखो वरो हस्तं गृह्णीयात् ।

## अथ काम्यास्त्रयः पक्षाः ।

यदि कामयेत पुमांसं जनयेयमित्यङ्गुष्ठसहितमेव हस्तं गृह्णीयात् । न त्वित-राङ्गुलिग्रहणम् । यदि कामयेत स्त्रीरेव जनयेयमित्यङ्गुलिसहितमेव हस्तं गृह्णीयात् । न त्वङ्गुष्ठग्रहणम् । यदि कामयेतोभयं जनयेयमिति, अभीव लोमा-न्यङ्गुष्ठं सहाङ्गुलीभिर्गृह्णीयात् । इति काम्यास्त्रयः पक्षाः । तृतीयः पक्षो नित्योऽपि ।

ततस्तस्या भार्याया आत्मानमग्रेण स्थिताया दक्षिणमंसं धृत्वा प्रसव्यं स्वस्य दक्षिणतः प्रत्यङ्मुखी यथा स्यात्तथा प्रतिनिवर्त्य,

> " ॐ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । जीवसूर्वीरसूः स्योना शं न एधि द्विपदे शं चतुष्पदे । तां नः पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विस्रयातै यस्या-मुशन्तः प्रहरेम शेपम् । सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयोऽहं मनुष्यजाः । सोमोऽददाद्गन्धर्वाय गन्ध-र्वोऽग्नयेऽददात् । पशूꣳश्च मह्यं पुत्राꣳश्चाग्निर्ददात्यथो त्वाम् । अमूह-मस्मि सा त्वं द्यौरहं पृथिवीꣳ त्वम् । सामाहमृक्त्वं तावेहि संभवाव सह रेतो दधावहै । पुꣳसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेमां त्वमिन्द्र मीढ्वः सुपुत्राꣳ सुभगां कुरु । दशास्यां पुत्राना-धेहि पतिमेकादशं कुरु " ।

इति षड्भिर्मन्त्रैस्तामभिमन्त्रयते । अथवा तामुत्तरेण गत्वा प्रसव्यमावृत्य तस्या दक्षिणोंऽसैः स्वस्य समीपे यथा भवति तथा तस्याः पश्चाद्भागे प्राङ्मुखः स्थित्वा स्वस्य दक्षिणतः प्रत्यङ्मुखी यथा स्यात्तथा प्रतिनिवर्त्य,

अघोरचक्षुरित्यादिभिः षड्भिर्मन्त्रैरभिमन्त्रयेत् । प्रत्यङ्मुखी चेत्प्राङ्मुखी कार्या । अस्मिन्पक्ष उत्तरेण पश्चाद्भागे गमनं नास्ति ।

ततो भार्यां यथास्थानमुपवेश्य तदञ्जलिं प्रक्षाल्यावशेषितान्संमार्गदर्भान्गृहीत्वा वध्वञ्जलिं तैर्दर्भैरग्नौ निष्टप्य दर्वीवत्तैर्दर्भैर्वध्वञ्जलिं संमृज्य पुनर्निष्टप्य दर्भेष्वञ्जलिं निधाप्य संमार्गदर्भान्प्रोक्ष्याग्नौ प्रहृत्य संमृष्टं वध्वञ्जलिं सव्यहस्तेन धृत्वा दक्षिणहस्तेन तस्मिन्नञ्जलौ दर्व्याऽऽज्येनोपस्तीर्य " ॐ इमाँल्लाँजानावपामि समृद्धिकरणान्मम । तुभ्यं च संवननं तदग्निरनुमन्यतामयम् " इति मन्त्रावृत्त्या द्विवारं वर एव लाजानावपति । त्रिः पञ्चावत्तिनः ।

ततस्तूष्णीमभिघार्य शूर्पस्थान्प्रत्यज्य—"ॐ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा " [ इति ] आसीनायास्तस्या आसीन एव दर्वीस्थानीयाञ्जलिना कायतीर्थेनाग्नौ जुहोति । अग्नय इदं न मम । " निर्वपणसंस्रवणलाजहोमनित्यहोमान्कायतीर्थेन कुर्यात् " इति बौधायनोक्तेः कायतीर्थेन होमः । कनिष्ठयोर्मूलप्रदेशः कायं तीर्थं, " स्वल्पाङ्गुल्योर्मूले कायम् " इति कोशात् ।

मैत्रायणीयपरिशिष्टेऽपि—

" अङ्गुल्यग्रैर्न होतव्यं तथैवाञ्जलिभेदतः ।
अञ्जलेर्वामपार्श्वेन लाजहोमो विधीयते ॥
वामभागस्तु नारीणां देवभाग इति स्मृतः " इति ।

इदं च वरकर्तृकत्वम्,—" अथग्रहणं परिभाषार्थम् । आचारवति तन्त्रे सर्वत्रैवमवदानधर्मो भवति " इत्येतद्व्याख्यानुसारेण ।

" अथग्रहणमावपनेऽन्यकर्तृकत्वख्यापनार्थं, स च भ्राता भ्रातृस्थानीयो वा " इत्येतद्व्याख्यानुसारेण तु अत्र भ्रात्रादिः कर्ता ज्ञेयः । मन्त्रस्तु लिङ्गविरोधाद्वरस्यैव न भ्रात्रादेः ।

न चाऽऽवपामीत्येतद्विरुध्यत इति वाच्यम् । अन्तर्भावितण्यर्थस्य तत्र विवक्षितत्वेन विरोधाभावात् ।

ततः " ॐ उदायुषा स्वायुषोदोषधीना५ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृता५ अनु' इति भार्यामुत्थाप्य "ॐ विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः " इति स्वयमेव मन्त्रमुक्त्वा भार्यासहितः पात्रसहितमग्निं प्रदक्षिणं परिक्रामति । मन्त्रलिङ्गाद्वरस्य मन्त्रपठनम् ।

ततः पुनरुपस्तरणलाजावपनादि परिक्रमणान्तं द्वितीयं तृतीयं च। तृतीये शूर्पस्थानां प्रत्यञ्जनं नास्तीति विशेषः।

तत आज्येनैव स्विष्टकृतं हुत्वा जयादीञ्जुहुयात्। यथापुरस्तादितिवचनं जयहोमे राष्ट्रभृद्धोमे च मन्त्रविषये पक्षान्तरस्यापि सत्त्वादुपनयने यः परिगृहीतः पक्षः स एवात्रेतिज्ञापनार्थम्। उपनयने जयहोममन्त्रविषये यथापुरस्तात्पक्षद्वये पूर्व एव यथा प्रकार उक्तस्तथैवात्र कार्य इत्येतदर्थमेव वाऽत्र न तु पुरस्तात्स्विष्टकृत इत्यस्यापि प्राप्तिः। तृतीयं परिक्रम्येत्यनेन ल्यप्प्रत्ययेन स्विष्टकृति तृतीयपरिक्रमणाव्यवधानस्योक्तत्वेन स्विष्टकृत्पूर्वकालत्वस्य बाधितत्वात्। अत्रेतिवचनं विप्रस्यानिन्दितेषु विवाहेष्वेव यथा स्यादित्येतदर्थम्। एतेन तृतीयं परिक्रम्य जयादीन्हुत्वा स्विष्टकृद्धोम इति कारिकाकृदुक्तः क्रमः परास्तः।

ततः शुल्बप्रहरणादि संस्थाजपान्तं कर्म समापयेत्। नात्र त्रिवृदन्नहोमः।

ततोऽपरेणाग्निमाचारात्सप्ताक्षतपुञ्जान्प्राक्संस्थानुदक्संस्थान्वा कृत्वा दक्षिणं पादं प्रक्रम्य सव्येनानुप्रक्राम मा सव्येन दक्षिणमतिक्रामीः, इति भार्यां संशास्य तस्या दक्षिणं पादं प्रगृह्याप्रगृह्य वा सप्तस्वक्षतपुञ्जेषु यथाक्रमं भार्यया विष्णुक्रमान्क्रामयति स्वयमपि क्रामतीत्येके। मन्त्रवक्ता वर एव लिङ्गात्। 'ॐ एकमिषे विष्णुस्त्वाऽन्वेतु' इति प्रथमं विष्णुक्रमं क्रामयति। 'ॐ द्वे ऊर्जे विष्णुस्त्वाऽन्वेतु' इति द्वितीयम्। 'ॐ त्रीणि व्रताय विष्णुस्त्वाऽन्वेतु' इति तृतीयम्। 'ॐ चत्वारि मायोभवाय विष्णुस्त्वाऽन्वेतु' इति चतुर्थम्। 'ॐ पञ्च पशुभ्यो विष्णुस्त्वाऽन्वेतु' इति पञ्चमम्। 'ॐ षड्रायस्पोषाय विष्णुस्त्वाऽन्वेतु' इति षष्ठम्। 'ॐ सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वाऽन्वेतु' इति सप्तमम्।

ततः 'ॐ सखायौ सप्तपदा बभूव सख्यं ते गमेयꣳ सख्यात्ते मा योषꣳ सख्यान्मे मा योष्ठाः' इति तथैवावस्थापितपादायां भार्यायां वरो जपति।

ततोऽस्या दक्षिणं पादं स्वदक्षिणेन पादेनाऽऽक्रम्य दक्षिणेन हस्तेनास्या दक्षिणमंसमुपर्युपर्यन्ववमृश्य 'ॐ मम हृदये हृदयं ते अस्तु मम चित्तं चित्तेनान्वेहि मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यं मामेवानुसꣳरभस्व मयि चित्तानि सन्तु ते मयि सामीच्यमस्तु ते मह्यं वाचं नियच्छतात्' इति तस्या हृदयदेशमभिमृशति। 'ॐ प्राणानां ग्रन्थिरसि समाविस्रसः' इति तथैव नाभिदेशमभिमृशति।

ततस्तामपरेणाग्निं प्राङ्मुखीमुपवेश्य तस्याः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्नापो हि ष्ठेति मन्त्रत्रयस्याग्निर्विश्वे देवा वाऽऽपो गायत्री। हिरण्यवर्णा इति मन्त्रचतुष्टयस्याग्निरापस्त्रिष्टुप् । पवमानानुवाकस्य प्रजापतिर्ऋषिः । पवमानसुवर्जनादयो लिङ्गोक्ता देवताः। गायत्र्यादीनि च्छन्दांसि । सर्वेषां मार्जने विनियोगः। 'ॐ आपो हि ष्ठा० ३ हिरण्यवर्णाः० ४ पवमानः सुवर्ज० त्वा पुनातु' इति सकुशपल्लवेनाऽऽसादितकलशोदकेन सर्वान्ते तत्तन्मन्त्रसमुदायान्ते वा भार्यां मार्जयति। प्रतिमन्त्रमिति केचित्।

ततो वृद्धब्राह्मणा ज्ञातिबान्धवाः सुवासिन्यश्चाऽऽशीःपूर्वकं वधूमूर्धन्यासादितानि व्रीह्यादिबीजानि 'ॐ या जाता ओषधयः' इत्यादिभिर्मन्त्रैर्यथाचारमारोपयन्ति।

ततोऽग्नेः पश्चादुपविश्य विभूतिं धृत्वाऽग्निं संपूज्य कृतस्य विवाहहोमकर्मणः साङ्गतासिद्ध्यर्थमाचार्यादिभ्यः पूजनपूर्वकं दक्षिणां दत्त्वा यथाविभवं ब्राह्मणान्सुवासिनीश्च भोजयेत्।

ततोऽस्मे देवास इत्याद्या आशिषो द्विजा दद्युः। ततो वरः कर्मसाङ्गुण्याय विष्णुं संस्मरेत्।

इति विवाहहोमः।

ततो वधूवराविक्षुविकाराल्लँवणं चानश्नन्तौ वस्त्राभरणादिभिर्यथाविभवमात्मानमलंकुर्वाणौ वर्जितमैथुनावधःशायिनौ सह वसतः। एतच्च व्रतं पाणिग्रहणदिनमारभ्य ज्ञेयम्।

## अथ वधूप्रवेशः।

तत्र नारदः—" आरभ्योद्वाहदिवसात्षष्ठे वाऽप्यथवाऽष्टमे।
वधूप्रवेशः संपत्त्यै दशमे दिवसे दिने।
तथा मासे च वर्षे च तत ऊर्ध्वं न शोभनम्" इति।

वृद्धवसिष्ठोऽपि—

" षष्ठेऽष्टमे वा दशमे दिने वा विवाहमारभ्य वधूप्रवेशः।
पञ्चाङ्गसंशुद्धिदिनं विनाऽपि विधानसद्गोचरगेऽपि कार्यः" इति।

स्मृत्यन्तरे तु—

" वधूप्रवेशः प्रथमे तृतीये शुभप्रदः पञ्चमकेऽथवाऽह्नि।
द्वितीयके वाऽथ चतुर्थके वा षष्ठे वियोगामयदुःखदः स्यात्" इत्युक्तम्।

स्मृतिसागरे—

" वधूप्रवेशो न दिवा प्रशस्तो नवप्रवेशो न निशि प्रशस्तः।
रात्रौ दिवा स्यात्तु गृहप्रवेशः स कीर्तितः स्यात्त्रिविधः प्रवेशः " इति।

रात्रौ दिवा स्यादिति विशीर्णसज्जीकृतगृहप्रवेशविषयम्। रात्रौ दिवा स्यात्तु गृहप्रवेश इत्यनन्तरं कर्तव्य इति शेषः।

स्पष्टमेतदुक्तं ज्योतिर्निबन्धे—

" वधूप्रवेशस्तु निशि प्रशस्तो नवप्रवेशस्तु दिवा प्रशस्तः।
रात्रौ दिवा सज्जगृहप्रवेशः प्रोक्तो भरद्वाजमुनीन्द्रमुख्यैः " इति।

रत्नमालायाम्—

" हस्तेन्दुमैत्रश्रवणाश्वितिष्यपौष्णश्रविष्ठाश्च पुनर्वसू च।
श्रेष्ठानि धिष्ण्यानि कृतप्रयाणे त्यक्त्वा त्रिपञ्चादिमसप्ततारा[1]ः।
चित्राविशाखानिलसार्पयाम्यवायव्यपित्र्येश्वरदैवतानि।
यात्रास्वनिष्टान्यपराणि भानि स्मृतानि नेष्टानि न निन्दितानि " इति।

इन्दुर्मृगशिरः। धिष्ण्यानि नक्षत्राणि।

मुहूर्तसंग्रहे—"रेवतीहस्तमित्राश्विरोहिणीचान्द्रवासवा[2]ः।
त्रीण्युत्तराणि मूलं च वैष्णवं शततारकाः।
पैतृकं च तथा श्रेष्ठं प्रवेशनविधौ तथा।
रिक्ताः पर्वाष्टमी विष्टिर्वर्ज्याः शेषाः शुभावहाः॥
शुभांशे शुभवारेषु शुभदृष्टे शुभांशके।
निशि प्रवेशासंपत्तौ दिवा वा शोभनो भवेत् " इति॥

व्यवहारतत्त्वे—

" पौष्णात्कभाच्च श्रवणाच्च युग्मे हस्तत्रये मूलमघोत्तरासु।
पुष्ये च मैत्रे च वधूप्रवेशो रिक्तेतरे व्यर्ककुजे च शस्तः " इति॥

कभं रोहिणीनक्षत्रम्। व्यर्ककुजे रविभौमवारव्यतिरिक्तवारेष्वित्यर्थः।

स्मृत्यन्तरे—" दिनक्षयादिदोषेषु वध्वा वेशो गृहे न सत्(न्) " इति।

वेशः प्रवेशः।

---

१ क. ख. °ताराः ' इ° । २ ख. ग. ङ. च. °सराः । त्री° ।

दिनक्षयादिलक्षणमुक्तं श्रीपतिना—

" यश्चैकः स्पृशति *दिनत्रयं च वारो
देवज्ञैरवमदिनं तदुक्तमार्यैः ।
यः +स्पर्शाद्भवति तिथित्रयेण[2] चाह्नां
त्रिद्युस्पृक्स पुनरिदं द्वयं च नेष्टम् " इति ॥

युग्मदिने प्रवेशस्तु षोडशदिनमध्य एव ।

तदुक्तं तत्रैव—

" विवाहमारभ्य वधूप्रवेशो युग्मे तिथौ षोडशवासरान्तात् ।
तदूर्ध्वमासेषु च पञ्चमान्तात्ततः परस्तान्नियमो न चास्ति " इति ॥

तत्रापि विशेषमाह नारदः—

" समे वर्षे समे मासि यदि नारी गृहं व्रजेत् ।
आयुष्यं हरते भर्तुः सा नारी मृतिमाप्नुयात् " इति ।

अत्रापि वर्ज्यमासा उक्ता बृहस्पतिना—

" कुलीरकन्यकाकुम्भे दिनेशे न विशेद्गृहम् ।
ग्रामं वा नगरं वाऽपि पत्तनं वा नराधिप " इति ॥

ज्योतिष्प्रकाशे—

" पृष्ठस्थं दक्षिणस्थं वा भृगुं कृत्वा विशेत्सदा ।
पुरतो वामतश्चापि प्रतिशुक्रं न वै विशेत् ॥
निर्गमान्नवमे मासि तथैव नवमे दिने ।
रिक्तासु निन्द्ययोगेषु भानुभानुजवारयोः ॥
अग्रदक्षिणभागस्थे चन्द्रे शस्तं न वेशनम् " इति ।

नवमदिननवममासनिषेधस्य देशव्यवस्थोक्ता कालप्रदीपे—

" गव्यूतिहीने त्वथ नैव निर्गमान्मासे दिने वा नवमे पुनर्विशेत् " इति ।

गव्यूतिः क्रोशद्वयम् ।

प्रतिशुक्रापवादमाह लल्लः—

" स्वभु(भ)वनपुरप्रदेशे देशानां विप्लवे तथोद्वाहे ।
नववध्वा गृहगमने प्रतिशुक्रविचारणा नास्ति " इति ॥

---

* तिथित्रयमित्यर्थः । + स्पर्शी भवतीति क. पुस्तकशोधितपाठः ।

---

१ ख. या । २ ख. ग. ङ. च. °थित्रये° ।

भर्त्रा सह गमने प्रतिशुक्रदोषो न।

तदुक्तं भीमपराक्रमे—

" स्वामिना नीयमानायाः प्रतिशुक्रो न विद्यते " इति।

मत्स्यपुराणे—

" चतुःशालं चतुर्द्वारमलिन्दैः सर्वतोयुतम्।
नाम्ना तत्सर्वतोभद्रं न तत्र प्रतिशुक्रता॥
काश्यपेषु वसिष्ठेषु भृगवत्र्याङ्गिरसेषु च।
भारद्वाजेषु वात्स्येषु प्रतिशुक्रो न विद्यते " इति॥

ज्योतिःसागरे—

" पौष्णादिवह्निपादेषु यावत्तिष्ठति चन्द्रमाः।
तावच्छुक्रो भवेदन्धः संमुखं गमनं शुभम् " इति॥

तत्रैव वचनान्तरम्—

" रेवत्यादिमृगान्तेषु यावत्तिष्ठति चन्द्रमाः।
तावच्छुक्रो भवेदन्धः संमुखं गमनं शुभम् " इति॥

अत्र भृगुगुर्वस्तापवाद उक्तो माण्डव्येन—

" नित्ययाने गृहे जीर्णे प्राशनान्तेषु सप्तसु।
वधूप्रवेशमाङ्गल्ये न मौढ्यं भृगुजीवयोः " इति॥

भृगुः शुक्रः। जीवो गुरुः। आचारः पर[1]ं नास्ति।

ज्योतिष्प्रकाशे—

" वामे शुक्रे नवोढायाः सुखं हानिश्च दक्षिणे।
धनं धान्यं च पृष्ठस्थे सर्वनाशः पुरःस्थिते॥
नवोढायास्तु वैधव्यं यदुक्तं संमुखे भृगौ।
तदेवं विबुधैर्ज्ञेयं केवलं तु द्विरागमे॥
पूर्वतोऽभ्युदिते शुक्रे प्रयायाद्दक्षिणापरे।
पश्चादभ्युदिते चैव यायात्पूर्वोत्तरे दिशौ " इति॥

तथा भाद्रपदमारभ्य पूर्वादिदिक्षु प्रतिदिशं मासत्रयं कपाटं ज्ञेयम्। चैत्रमारभ्य पूर्वाद्यष्टदिक्षु मुख्यदिशि मासद्वयं विदिक्ष्वेकं मासं क्रमेण कण्टकं जानीयात्। एतद्द्वयं ग्रामान्तरे नववधूगमने वर्ज्यम्।

१ ग. ङ. च. 'र तु ना'।

ज्योतिर्निबन्धे—

" कविज्ञवारे स्वगृहाद्ध्रुवर्क्षे कान्ताप्रयाणं न कदाचिदेव ।
धनस्य नाशः कविवासरे स्यात्पुत्रस्य नाशो ध्रुवसौम्यवासरे " इति ॥

अन्यश्च[1]—" विवाहात्प्रथमे पौषे आषाढे वाऽधिमासके ।
भर्तुर्गृहे वसेन्नैव चैत्रे तातगृहे तथा " इति ॥

ज्योतिर्निबन्धे—" उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका
हन्यात्तज्जननीं क्षये निजतनुं ज्येष्ठे पतिज्येष्ठकम् ।
पौषे च श्वशुरं पतिं च मलिने चैत्रे स्वपित्रालये
तिष्ठन्ती पितरं निहन्ति न भयं तेषामभावे भवेत् " इति ।

जयन्तः—" मार्गशीर्षे तथा माघे माधवे ज्येष्ठसंज्ञके ।
सुप्रशस्तो भवेद्वेश्मप्रवेशो नवयोषिताम् " इति ॥

## अथ द्विरागमनम् ।

ऋक्षोच्चये—" माघफाल्गुनवैशाखे शुक्लपक्षे शुभे दिने ।
गुर्वादित्यविशुद्धौ स्यान्नित्यं पत्न्या द्विरागमः " इति ॥

बादरायणः—*" नीहारांशुदिनोत्तरादितिगुरुब्रह्मानुराधाश्विनी–
शक्रे भास्करवायुविष्णुवरुणत्वाष्ट्रे प्रशस्ते तिथौ ।
कुम्भाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे
देवेज्येनविदां दिने नववधूवेश्मप्रवेशः शुभः " इति ॥

देवेज्यो गुरुः । इनः सूर्यः । विद्बुधः ।

## अथ गृहप्रवेशप्रयोगः ।

विवाहहोमानन्तरं वधूबान्धवाः पितृगृहाज्ज्योतिर्विदादिष्टे सुमुहूर्ते तां भार्यां वरं च रथादियानेन वरगृहं ग्रामं वा नयेयुः । यदि ग्रामं प्रति गच्छतोर्दंपत्यो-र्मार्गे होमपात्रं शकटं वा भिद्येत तदाऽन्वारब्धायां वध्वामापूर्विकतन्त्रेणाऽऽघा-रतन्त्रेण वा ' ॐ यद्दते चिदभिश्रिषः, इडामग्ने पु० इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि' इति सप्ताहुतीर्जुहुयात् । आग्रस्येन्द्रो मघ-

* निबन्धशिरोमणौ कालविधाने—" नीराहांशुवसूत्तरादितिगुरुस्रष्टानुराधाश्विनीशुक्राहस्कर-वायुवारुणहरित्वाष्ट्रेषु शस्ते तिथौ । कुम्भाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे जीवार्कास्फु-जितां दिने नववधूवेश्मप्रवेशः शुभः " एतादृशः पाठः ।

[1] इ. च. अन्यश्च ।

वान्देवता। द्वितीयस्याग्निः। इतरेषां प्रसिद्धा देवताः। ततस्तस्य संधानं कृत्वा रज्ज्वादेर्ग्रन्थिं बद्ध्वा स्वस्तिपदवतो मन्त्राञ्जपेत्। 'ॐ अभिव्ययस्व खदिरस्य सारम्' इति संधाने मन्त्र उक्तः शाङ्खायनेन।'ॐ त्वष्टिदश्वं न वाजिनम्' इति ग्रन्थिबन्धने। स्वस्ति नो मिमीतामिति पञ्चर्चसूक्तजपोऽपि तेनोक्तः। विवाहाग्निं सर्वमेकस्मिन्पात्रे भस्मना सह निक्षिप्य जायापत्योः पृष्ठतो हरन्ति। अयं चाग्निर्विवाहहोममारभ्य यावज्जीवं धार्यः। सूत्रे नित्यग्रहणेनैव यावज्जीवं धारणे सिद्धे धार्य इति वचनं प्रयाणव्यतिरिक्तस्थले स्थलान्तरे केनचिन्निमित्तेनाग्नेर्नयनं चेत्प्रत्यक्षमेव नयनं न तु समारोप इत्येतदर्थम्। आपस्तम्बानामप्येवम्। प्रयाणे तु यदि प्रयायादव्याख्यातमात्मन्नरण्योर्वा समिधि वा समारोपणमितिसूत्रात्समारोप एव न तु प्रत्यक्षनयनम्। खण्डस्य क्षेपकत्वकल्पे शकटादिना प्रत्यक्षनयनमेव कार्यं समारोपोऽपि वा। समित्समारोपोऽत्र परं नास्त्येव। धारणं तु यज्ञियैः काष्ठैर्गोमयपिण्डैर्वा कार्यं न तु तुषैः।

तदुक्तं संग्रहे—

" धार्योऽग्निर्गोमयैः पिण्डैः काष्ठैर्वा यज्ञियैर्दृढैः।
सर्वथा न तुषैर्धार्य इति विद्वत्प्रभाषितम्" इति॥

पारिजाते—" न तुषैर्धारयेदग्निम्" इति।

स चेदनुगतस्तदा तदनन्तरमेव मथितव्यः। श्रोत्रियागाराद्वाऽऽहरणीयः। यदि पूर्वं मथितो भवति तदाऽवक्षाणेभ्योऽधिमथितव्यः। अवक्षाणं तदग्निस्थं किंचिद्दग्धं काष्ठम्। यद्यसमर्थान्यवक्षाणानि स्युस्तदा तद्भस्मनाऽरणी संस्पृश्य मथितव्यः। यद्याहृतस्तदाऽऽहरणीयः। प्रायश्चित्तसूत्रेऽवक्षाणानीति बहुवचनं यद्येकस्मादवक्षाणादग्निर्नोत्पद्यते तदाऽन्यस्मान्मथितव्यः। ततोऽप्यनागमने परस्मादिति न तु यावन्त्यवक्षाणानि तेभ्यो मथितव्य इति। सर्वेभ्योऽवक्षाणेभ्योऽनुत्पत्तावेवारणीमन्थनं न त्वेकावक्षाणमन्थनादनुत्पत्तावनन्तरमरणीमन्थनमिति। यद्यपि गृह्यसूत्र इदं नोक्तं तथाऽप्यविरुद्धत्वाद्ग्राह्यम्। अविरोधिनामपेक्षितश्रौतविधीनां प्राप्तिस्तु श्रौतसूत्रमध्ये गृह्याम्नानबलाल्लभ्यते।

'" अनुगतो मन्थ्यः श्रोत्रियागाराद्वाऽऽहार्य उपवासश्चानुगते भार्यायाः पत्युर्वा "

इत्यनुगमनप्रायश्चित्तसूत्रम्। चशब्दो मन्थनाहरणाभ्यामुपवाससमुच्चयार्थः। अनुगताधिकारे पुनरनुगतवचनं प्रागूर्ध्वं च विवाहपरिसमाप्तेरेतत्प्रायश्चित्तं भवेदित्येतदर्थम्। तस्मात्सर्वत्रानुगते मन्थनेनाऽऽहरणेन वोत्पाद्योपव-

१ क. च. 'याद्व्याख्या'।

स्तव्यमिति। नैतदस्ति। नित्यग्रहणादेव सिद्धत्वात्। इदं तर्हि प्रयोजनमनुगत इदमेव प्रायश्चित्तं स्यान्नान्यदिति। तेनास्त्यन्यदप्यन्यत्र प्रायश्चित्तमिति गम्यते। किं तत्, अपि वोत्तरया जुहुयान्नोपवसेदित्यापस्तम्बेनोक्तम्। उत्तराऽयाश्चाग्न इत्येषा। तत्रानभिशस्तीश्चेत्येतावान्विकार इति मातृदत्तो व्याख्यातवान्। एतद्भाष्यस्वरसान्नष्टापहारादिनाऽग्निविच्छेद उपवासाहुत्यात्मकमेव प्रायश्चित्तं न केवलमुपवास आहुतिर्वेति। अत्र भाष्ये—अनुगमनव्यतिरिक्तस्थल उपवासाहुत्यात्मकप्रायश्चित्तप्रदर्शनेनान्यस्याष्टादशाहुत्याद्यात्मकप्रायश्चित्तस्य क्षेपकत्वं प्रदर्शितमन्यथेदमपि प्रदर्शितं भवेत्। सर्वस्य प्रायश्चित्तातिरिक्तभागस्य क्षेपकत्वं नेति तु तस्मिन्गृह्याणि कर्माणि क्रियन्त इत्येतस्य पाणिग्रहणादिरग्निस्तमौपासनमित्याचक्षत इत्येतत्खण्डस्य प्रतीकप्रदर्शनाज्ज्ञायते। तस्यौपासनेनाऽऽहिताग्नित्वं पार्वणेन चरुणा दर्शपूर्णमासयाजित्वं चेति कश्चिदाचार्यो वक्ष्यतीति वैजयन्तीकृदुक्तिस्वरसात्तु सर्वस्य खण्डस्य क्षेपकता ज्ञायते। एवं च पुनःसंधानविधिरेव क्षेपकोऽन्यो न क्षेपक इति भाष्यकृद्ग्रन्थात्। वैजयतीकृद्ग्रन्थात्तु सर्वमपि खण्डं क्षेपकमिति। उभयग्रन्थतः पुनःसंधानविधेरेव क्षेपकत्वम्। एतत्सूरिभिर्निपुणतरं विभाव्य यद्युक्तं तद्ग्राह्यम्।

ततोऽन्यतरमग्निं गोमयोपलिप्ते संस्कृतायतने स्थापयित्वा पतिरुपवसेत्, भार्या वा। प्रोषिते पत्यौ भार्याया उपवासः। अहन्यनुगत आसायमुपवासः। रात्रावनुगत आप्रातरुपवासः। उपवासासामर्थ्यादावुपनयनप्रकरणोक्तमयाश्चेत्याहुत्यात्मकं प्रायश्चित्तं सर्वप्रायश्चित्तहोमश्च कर्तव्यः। दिवोपवासे सायमेव लुप्तहोमः कार्यः। रात्रावुपवासे प्रातरेव। उपवासमात्रमेव वा न तु होमः। आहुतिपक्षे तु प्रायश्चित्तहोमानन्तरमेव। यदि पतिः प्रोषितः स्वस्याश्चोपवासासामर्थ्यं तदा होमार्थमृत्विजं वृत्वा तेनायाश्चाग्न इत्याहुतिं हावयेत्। ऋत्विगभावे स्वयमेव जुहुयात्।

अथ वरः स्वगृहद्वारं प्राप्य दक्षिणं पादमग्रेऽतिहर देहलिं माऽधिष्ठा इति भार्यां संशास्ति। सा दक्षिणं पादमग्रे कृत्वा देहलीमनधिष्ठायैव गच्छति।

ततो गृहं प्रविश्य तत्पूर्वार्ध्यशालायामग्न्यायतनं परिकल्प्य तत्पश्चात्सभार्यः प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम विवा-

---

१ क. °न्विचार।

हाग्नेर्गृह्यत्वोत्पादनद्वारा··श्रीपरमेश्वरप्रीत्यर्थं गृहप्रवेशाख्यं कर्म करिष्य इति संकल्पं कुर्यात्। न वा संकल्पः।

ततो गणेशं संपूज्योद्धननादिसंस्कृत आयतने विवाहाग्निं तूष्णीं प्रतिष्ठाप्य प्रज्वलितं कुर्यात्।

ततोऽपरेणाग्निं लोहितमानडुहं चर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य

" ॐ इह गावो निषीदन्त्विहाश्वा इह पूरुषाः।
इहो सहस्रदक्षिणोऽपि पूषा निषीदतु "।

इति तस्मिञ्जायापती प्राङ्मुखावुदङ्मुखौ वोपविशतः। प्राङ्मुखत्वपक्षे पत्युर्दक्षिणतो भार्या। उदङ्मुखत्वपक्षे तस्य पृष्ठतो वामभागे वा। उभयोर्मन्त्रः। अत आरभ्य नक्षत्रोदयपर्यन्तं वाग्यतावासाते। आनडुहचर्माभावे तार्णतल्पो ग्राह्यः।

तथा चाऽऽश्वलायनस्मृतिः—

" गृहप्रवेशेऽनडुहश्चर्मास्तरणमिष्यते।
तस्याभावे तु तार्णस्य तल्पस्याऽऽस्तरणं भवेत् " इति।

तल्पोऽत्राऽऽसनम्। उदितेषु नक्षत्रेषु वध्वा सह प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य तया सहैव प्राङ्मुख उदङ्मुखो वा, देवीः षडुर्वीरित्यस्यार्धस्याग्निर्दिशस्त्रिष्टुप्। उपस्थाने विनियोगः। ' ॐ देवीः षडुर्वीरुरुणः कृणुत विश्वे देवास इह वीरयध्वम् ' इति दिश उपतिष्ठते। बहुवचनलिङ्गात्सकृन्मन्त्रः।

मा हास्म हीत्यस्य पादस्याग्निर्नक्षत्राणि त्रिष्टुप्। उपस्थाने विनियोगः। 'ॐ मा हास्म हि प्रजया मा तनूभिः ' इति नक्षत्राणि सकृन्मन्त्रमुक्त्वैवोपतिष्ठते। सर्वेषां नक्षत्राणामुपस्थानासंभवाद्यावन्ति दृष्टिगोचराणि भवन्ति तेषामुपस्थानम्। अशक्यत्वात्सकृन्मन्त्रः।

मारधामेत्यस्य पादात्मकस्य मन्त्रस्याग्निश्चन्द्रमास्त्रिष्टुप्। उपस्थाने विनियोगः। ' ॐ मारधाम द्विषते सोमराजन् ' इति चन्द्रमसम्।

" ॐ सप्तर्षयः प्रथमां कृत्तिकानामरुन्धतीं ये ध्रुवताᳲ ह निन्युः।
षट्कृत्तिकामुख्ययोगं वहन्तीयमस्माकं भ्राजत्वष्टमी "।

इति सप्तर्षीनरुन्धतीसहितानुपतिष्ठते। बहुवचनलिङ्गात्सकृन्मन्त्रः।

", ॐ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसि ध्रुवतस्थितं
त्वं नक्षत्राणा मेथ्यसि स मा पाहि पृतन्यतः।

नमो ब्रह्मणे ध्रुवायाच्युतायास्तु नमो ब्रह्मणः पुत्राय प्रजापतये नमो ब्रह्मणः पुत्रेभ्यो देवेभ्यस्त्रयस्त्रिꣳशेभ्यो नमो ब्रह्मणः पुत्रपौत्रेभ्योऽङ्गिरोभ्यो यस्त्वा ध्रुवमच्युतꣳ सुपुत्रꣳ सपौत्रं ब्रह्म वेद ध्रुवा अस्मिन्पुत्राः पौत्रा भवन्ति प्रेष्यान्तेवासिनो वसनं कम्बलानि कꣳसꣳ हिरण्यꣳ स्त्रियो राजानोऽन्नमभयमायुः कीर्तिर्वर्चो यशो बलं ब्रह्मवर्चसमन्नाद्यमित्येतानि मयि सर्वाणि ध्रुवाण्यच्युतानि सन्तु । ध्रुवं त्वा ब्रह्म वेद ध्रुवोऽहमस्मिँल्लोकेऽस्मिंश्च जनपदे भूयासमच्युतं त्वा ब्रह्म वेद माऽहमस्माल्लोकादस्माच्च जनपदाच्च्योषि द्विषन्मे भ्रातृव्योऽस्मादस्माल्लोकादस्माच्च जनपदाच्च्यवतामचेष्टं त्वा ब्रह्म वेद माऽहमस्माल्लोकादस्माच्च जनपदाच्चेष्टिषि द्विषन्मे भ्रातृव्योऽस्माल्लोकादस्माच्च जनपदाच्चेष्टतामव्यथमानं त्वा ब्रह्म वेद माऽहमस्माल्लोकादस्माच्च जनपदाद्व्यथिषि द्विषन्मे भ्रातृव्योऽस्माल्लोकादस्माच्च जनपदाद्व्यथतां नभ्यं त्वा सर्वस्य वेद नभ्यमहमस्य जनपदस्य भूयासं मध्यं त्वा सर्वस्य वेद मध्यमहमस्य जनपदस्य भूयासं तन्तिं त्वा सर्वस्य वेद तन्तिरहमस्य जनपदस्य भूयासं मेथीं त्वा सर्वस्य वेद मेथ्यहमस्य जनपदस्य भूयासं नाभिं त्वा सर्वस्य वेद नाभिरहमस्य जनपदस्य भूयासं यथा नाभिः प्राणानां विषूवानेवमहं विषूवानेकशतं तं पाप्मानमृच्छतु योऽस्मान्द्वेष्टि यं च वयं द्विष्मो भूयाꣳसि मामेकशतान्पुण्यान्यागच्छन्तु " इति ध्रुवमुपतिष्ठते ।

नक्षत्रादीनामभ्रादिप्रतिबन्धेनादर्शनेऽपि तस्यां तस्यां दिशि तं तमुपस्थेयपदार्थमनुलक्षीकृत्योपस्थानं कार्यम् ।

तत उपस्थानदेश एव मनस आह्लादकेन वचसा भार्यां संभाष्य पुनः शालां प्रविश्याऽऽस्तृतमानडुहं चर्माभ्युक्ष्य निरस्याप उपस्पृश्य भार्यया सहापरेणाग्निं प्राङ्मुख उपविशति ।

## अथ गृहप्रवेशस्थालीपाकः ।

वरः सभार्य आचम्य प्राणानायम्याग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा गृहप्रवेशाङ्गभूताग्नेयस्थालीपाकयागकर्मणि ये यक्ष्यमाणे देवते ते परिग्रहीष्यामि । अग्निमेकया चर्वाहुत्या यक्ष्ये । अग्निं

स्विष्टकृतमेकया हुतशेषचर्वाहुत्या यक्ष्ये । एते देवते सग्नो यक्ष्य इत्युक्त्वा व्याहृतिभिरग्नौ समिधोऽभ्याधायाग्निं परिस्तीर्योत्तरेणाग्निं दर्भानास्तीर्य तेषु शूर्पं कृष्णाजिनमुलूखलं मुसलं चरुस्थालीं मेक्षणं तण्डुलप्रस्कन्दनार्थं पात्रं दर्वीमाज्यस्थालीं प्रोक्षणीपात्रं हविरासादनार्थं दर्भानुपवेषं संमार्गदर्भानवज्वलनदर्भानाज्यं समिधं चाऽऽसादयेत्* ।

व्रीहीणां तत्प्रतिनिधित्वेन विहितानां सतुषाणामोषधीनां च सर्वथाऽभावेन सिद्धतण्डुलग्रहणे[1] पत्नी, अवहननकाले तण्डुलान्स्पृष्ट्वा कृष्णाजिनास्तरणादि त्रिष्फलीकरणान्तं कर्म मनसा क्रमेण विभावयेदङ्गत्वनिर्वाहाय । अथवा सर्वा बाह्याश्चेष्टा अपि कर्तव्याः । पूर्वकल्पे कृष्णाजिनोलूखलमुसलानां नाऽऽसादनं, द्वितीयकल्पे त्वस्त्येव कृष्णाजिनाद्यासादनम् ।

ततः पवित्रे कृत्वाऽपरेणाग्निं शूर्पं निधाय तस्मिन्पवित्रे निधाय तूष्णीं चतुरो मुष्टीन्निरू(रु)प्यैकब्राह्मणभोजनपर्याप्तान्व्रीहीनन्वोप्योत्तरेणाग्निं निरु[2]प्तव्रीहिमच्छूर्पं निधाय प्रोक्षणीः संस्कृत्य शूर्पस्थान्व्रीहीन्प्रोक्ष्य पात्राण्युत्तानानि कृत्वा प्रोक्षति ।

(+ऋषभं च मूल्यदाने मूल्यम् । ) ततः पत्न्य[3]ग्नेरुत्तरतः कृष्णाजिनं बहि†र्विशसनं त्रिरवधूय प्रत्यग्ग्रीवमुपरिष्टाल्लोम तदास्तीर्य तस्य भसत्प्रदेशमुपसमस्य* तत्रोलूखलं संस्थाप्य तस्मिन्व्रीहीनोप्याऽऽसीनेन मुसलेनावहत्योलूखलस्य पुरस्ताच्छूर्पं निधायोलूखलस्थांस्तण्डुलाञ्छूर्पे निक्षिप्य कृष्णाजिनस्योत्तरतस्त्रिर्निष्पूय तुषान्प्रध्वंसयित्वा(स्य) तांस्तुषान्दक्षिणहस्तेन कृष्णाजिनस्याधस्तादुपवपत्यनिरीक्षन्(माणा) ।

ततो दक्षिणहस्तेनैव निक्षिप्तांस्तुषान्निष्पीड्याप उपस्पृश्य +विविच्य प्रस्कन्दनार्थ आसादिते पात्रे प्रस्कन्दयित्वा(न्द्य) तानादायोलूखले प्रक्षिप्य त्रिष्फलीकृत्य त्रिष्फलीकरणानि कृष्णाजिनस्योत्तरतो निक्षिप्य तण्डुलान्प्रक्षाल्याग्नेः पश्चान्निवपति ।

* अत्र क. पुस्तके टिप्पण्यामग्रे लिखितो ग्रन्थो वर्तते—" मेक्षणादिस्थालीपाकविशिष्टपात्राणां द्वंद्वासादनादिविशेषविचारस्त्वायुर्वर्धापनप्रयोगे द्रष्टव्यः " इति । + धनुश्चिह्नान्तर्गतमधिकं क. ख. पुस्तकस्थम् । † क पुस्तकटिप्पण्याम्—" अलोमप्रदेशः " इति । * क. पुस्तकटिप्पण्याम्—" भसत्प्रदेशं गुदस्थानं प्रत्यक्संस्थमधस्तान्मांसभागेन सह मांसभागस्य यथा संधानं भवति तथा द्विगुणं कुर्यात् । " इति । + क. पुस्तकटिप्पण्याम्—" शोधयित्वा " इति ।

१ ख. च. °हणे, अ° । २ इ. निरु(रु)प्य व्री° । ३ ड. च. पत्न्याऽग्ने° ।

ततो वरः प्रक्षालितांस्तण्डुलांश्चरुस्थाल्यामोप्य मेक्षणेनाऽऽलोड्याग्नौ श्रपयित्वा दर्वीं मेक्षणं च संमृज्याऽऽज्यविलापनादिपवित्राभ्याधानान्तं कुर्यात् ।

तत्राऽऽज्येन सह चरोरपि पर्यग्निकरणं, चरुस्थाल्यां तण्डुलनिक्षेपात्पूर्वमेव वा दर्वीसंमार्गादिपवित्राभ्याधानान्तम् । अग्नेः पश्चाद्दर्भास्तरणपक्षे तदन्तं कृत्वा दर्भेष्वाज्यं निदध्यात् ।

यजिधातोः प्रयोगो यक्ष्य इत्येवंरूपांगूरणमात्रप्राप्त्यर्थ इत्येतस्मिन्कल्पे होमब्राह्मणपरिवेषणपर्याप्तान्व्रीहीन्गृहीत्वा पत्न्याऽवघातेन निष्पादितान्व्रीहितण्डुलान्सोदकायां स्थाल्यां निक्षिप्याग्नौ श्रपयति । नात्र निर्वापप्रोक्षणकृष्णाजिनावधूननादिश्रौतधर्माः । कृष्णाजिनासादनं कृताकृतम्[1] । आस्तरणाभावे पात्रेष्वासादनमपि न । पर्यग्निकरणं तु कर्तव्यमेव । तत आसादितान्दर्भानग्नेः पश्चादास्तीर्य तत्राऽऽज्यं निधाय शृतं चरुं दर्व्याऽऽज्येनाभिघार्योदगुद्वास्याग्नेः पश्चादास्तृते बर्हिष्याज्यस्योत्तरत आसाद्याग्निं परिषिच्य तूष्णीं सादितां समिधमाधाय मेक्षणेनोपहत्य प्रदीप्तेऽग्नौ जुहोति । 'ॐ अग्नये स्वाहा' इति भार्यान्वारब्धो जुहोति । अग्नय इदं न मम ।

पुनर्भूय उपहत्य 'ॐ अग्नये स्विष्टकृते स्वाहा' इति भार्यान्वारब्धोऽसंसक्तां पूर्वाहुत्योत्तरार्धपूर्वार्धे जुहोति । अग्नये स्विष्टकृत इदं न मम । अत्र यद्यप्यथशब्दो नास्ति तथाऽपि क्त्वाप्रत्ययाच्चरुणा स्विष्टकृद्धोमो भवति ।

ततो मेक्षणमग्नौ प्रक्षिपेत्[3] । न वा मेक्षणप्रक्षेपः ।

ततः परिस्तरणानि विसृज्य व्यस्तसमस्तव्याहृतिभिश्चतस्रः प्रायश्चित्ताहुतीर्हुत्वोत्तरं परिषेकं कृत्वा संस्थाजपेनाग्निमुपस्थाय तं संपूज्य ललाटे विभूतिं धृत्वा हविःशेषेण ब्राह्मणं विद्यावन्तं भोजयेत् । हविःशेषनाशे ब्राह्मणभोजनाभावः ।

ततः कृतस्य कर्मणः साङ्गतासिद्ध्य आचार्यायाऽऽसादितमृषभं तन्मूल्यं वा दत्त्वाऽन्येभ्यो भूयसीं च दत्त्वा यथाविभवं ब्राह्मणान्संभोज्य कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

पत्न्येव कर्त्री मुख्येतिकल्पे पत्नी वरादानार्थमृषभं तन्मूल्यं वा संपाद्य त्वमाग्नेयस्थालीपाकेन मां याजयेति तं प्रार्थयेत् ।

ततो वरोऽन्वाधानादिपात्रप्रोक्षणान्तं कुर्यात् ।

---

१ ड. 'पापूर' । २ ख. 'म् । प' । ३ ड. क्षिपेत् ।

ततः कृष्णाजिनावधूननादितण्डुलक्षालनान्तं पत्नी ।

ततः श्रपणादित्यागदानवर्जं[1] समाप्त्यन्तं कर्म वरः कुर्यात् । त्यागदाने पत्नी कुर्यात् ।

इति पत्न्या मुख्यकर्तृत्वपक्षे प्रयोगः ।

अथवा पात्रासादनान्ते कृष्णाजिनमास्तीर्या[2]नास्तीर्य वा पत्न्यवहननं कृत्वा त्रिष्फलीकृत्य फलीकरणान्युत्तरतो निरस्येत् ।

ततो वरो दर्वीसंमार्गादिपवित्राभ्याधानान्तं दर्भास्तरणपक्षे तदन्तं कृत्वा शृतं चरुं दर्व्याऽऽज्येनाभिघार्योदगुद्वास्याग्नेः पश्चाद्दर्भेषु दर्भास्तरणाभावपक्षे भूमावेव निधाय परिषेकादि समानम् ।

ततः पतिपुत्रवतीभिः सुवासिनीभिः कृतनीराजनौ दंपती द्विजेभ्य आशिषो गृहीत्वा मुदितौ तिष्ठेताम् ।

ततो महालक्ष्मीपूजनादिकमाचारप्राप्तं यद्यदस्ति तत्सर्वं पुरन्ध्रीभिः कारणीयम् ।

इति गृहप्रवेशस्थालीपाकप्रयोगः ।

## अथैतद्विषयकं सूत्रं व्याख्यायते ।

तत्र सूत्रमित्थम्—

"अथैनामाग्नेयेन स्थालीपाकेन याजयति पत्न्यवहन्ति श्रपयित्वाऽभिघार्योद्वास्याग्नये हुत्वाऽग्नये स्विष्टकृते जुहोति तेन ब्राह्मणं विद्यावन्तं परिवेवेष्टि योऽस्यापचितो भवति तस्मा ऋषभं ददाति" इति ।

अथेति प्रवेशानन्तरं पूर्वरात्रावेव क्रिया स्यादर्धरात्रोत्तरं मा भूदित्येतदर्थम्, यत्र दिगाद्युपस्थानानन्तरमाग्नेयेन स्थालीपाकेन यागं करोति तत्रैवैनां पत्नीं याजयति पत्न्यामन्वारब्धायां जुहोति नान्येषु स्थालीपाकेष्वित्येतदर्थं च । याजयतीत्येतदनन्तरं वर इति शेषः ।

• अथवैनां याजयतीति वचनादेवं ज्ञायते पत्न्येव यष्ट्री वरस्तु ऋत्विग्भूत इति । तेन त्यागदाने स्त्रीकर्तृके एव । अत एवास्येतीदमः प्रयोगः संगच्छते । न च तस्या भर्तृधनदानेऽधिकाराभावात्कथमेतदिति वाच्यम् । अनुज्ञया दानेऽप्यधिकारस्य सर्वतन्त्रसिद्धत्वात् । नन्वेनां याजयतीत्येव वक्तव्यं यत

[1] क. ग. ङ. च. °वर्ज्यं स° । [2] ख. ङ. °स्तीर्य नाऽऽस्तीर्° । ग. च. °स्तीर्य वा ।

उत्तरत्राग्नये हुत्वेति विधानादाग्नेयत्वं सिद्धं, स्थालीपाकेनेति त्ववहन्ति श्रपयित्वेति विधानात्सिद्धमतः किमर्थमिदमधिकमारभ्यत आग्नेयेन स्थालीपाकेनेति । उच्यते—आग्नेय एवात्र प्रधानदेवता नाग्निः स्विष्टकृदितिख्यापनार्थम् । तेन प्रथमदेवताहोमानन्तरं हविर्लोपे स्विष्टकृद्रूपद्वितीयदेवतार्थं न हविरुत्पत्तिः किं त्वाज्येनैव होम इति सिध्यति । उत्तरार्धपूर्वार्धेऽसंसक्तामितराभिराहुतिभिर्जुहोति प्रधानावदानतो ज्यायोऽवदानमित्येते धर्माश्च सिद्धा भवन्ति ।

स्थालीपाकेनेति वचनं सूत्रान्तरेऽग्निदेवतोद्देशेनास्मिन्स्थालीपाकयागकर्मण्याज्येनापि होम उक्तः स मा भूदित्येतदर्थम् ।

अथवा स्थालीपाकेनेत्येव विधायकं श्रपयित्वेति तु श्रपणाभिघारणयोरव्यवधानायानुवादः । तेन सुशृतावस्थातः पूर्वमेव पवित्रप्रहरणान्तं कर्मेति सिध्यति ।

चरुणेत्येतावतैव सिद्धे स्थालीपाकेनेति वचनं यत्र स्थालीपाकशब्देन विधानं तत्रैवाऽऽपूर्विकतन्त्रविधिरितिज्ञापनार्थम् । तेनान्यत्रार्थादाघारवत्तन्त्रं सिध्यति । प्रायश्चित्तेष्टिस्थानीयचरुहोमे त्वापूर्विकतन्त्रमेव । तत्रापि य आहिताग्नेः पुरोडाशास्तेऽनाहिताग्नेः स्थालीपाका इति शास्त्रान्तरेऽपि स्थालीपाकशब्देन विधानात् ।

अथवा स्थालीपाकेनैव यत्र होमो न द्रव्यान्तरेणापि तत्रैवाऽऽपूर्विकतन्त्रविधिरितिज्ञापनार्थम् । तेन चरुशब्देन विहिते केवलचरुहोमेऽप्यापूर्विकं तन्त्रमेव भवति ।

हुधातुं परित्यज्य यजिधातोः प्रयोगो यावदुपयुक्तश्रौतधर्मप्राप्त्यर्थः । तेन निर्वापादीनां कृष्णाजिनावधूननादीनामवहननधर्माणां प्राप्तिः सिद्धा भवति ।

अथवा यजिधातोः प्रयोगो यक्ष्य इत्येवंरूपागूरणमात्रप्राप्त्यर्थः ।

पत्न्यवहन्ति स्थालीपाकार्थान्व्रीहीन् । साऽवहन्तीति वक्तव्ये पत्न्यवहन्तीति वचनं पत्न्येव कृष्णाजिनावधूननादितण्डुलप्रक्षालननिनयनान्तं करोति न तु श्रौतवत्त्रिष्फलीकरणमात्रावघातमित्येतदर्थम् । श्रपणादिकं तु वरकर्तृकमेव न तु पत्नीकर्तृकम् । एतदर्थमेव पत्न्यवहत्येति ल्यप्प्रत्ययं परित्यज्य पत्न्यवहन्तीति प्रयोगः कृतः ।

---

१ ग. च. 'पाके या' ।

अथवा पत्न्यवहन्तीतिवचनमनन्तरोक्तेन ध्रुवाद्युपस्थानान्तेन विधिना या स्वीकृता सैव पत्नी, अन्यथा नेत्येतदर्थम्। तेनाऽऽसुरादिविवाहोढाया न यज्ञयुक्तत्वमिति सिद्धं भवति।

अस्ति चात्र स्मृतिः—

" क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः " इति।

" अधर्म्योढा तु या नारी न सा पत्न्यभिधीयते।
दैवे पित्र्ये न सा योग्या दासीवत्कवयो विदुः " इति।

अधर्म्योढाऽधर्म्येण विवाहेनोढा। स्विष्टकृतं जुहोतीति परित्यज्याग्नये स्विष्टकृते जुहोतीत्येवं वचनान्नाग्नेवात्र होमो न यदस्येत्यनेन। तेन स्थालीपाकशेषेण, ब्राह्मणं विद्यावन्तं श्रुताध्ययनसंपन्नं परिवेवेष्टि भोजयतीत्यर्थः। ब्राह्मणग्रहणं क्षत्रियवैश्यनिवृत्त्यर्थम्। परिवेवेष्टीतिवचनबलाद्धोमब्राह्मणभोजनपर्याप्तश्चरुः कार्यः।

अथैनां याजयतीति वचनमन्वारम्भसिद्ध्यर्थम्। अस्मिन्पक्षे वर एव त्यागदानकर्ता। योऽस्यापचितो भवति तस्मा ऋषभं ददातीति सूत्रमस्मिन्कल्प इत्थं व्याख्येयम्। योऽस्य स्थालीपाकयागस्य कर्तुरपचितस्तस्मा एतद्यागस्य कर्ता, ऋषभं ददाति न तु स्थालीपाकयागान्तराणां कर्ता।

अथवाऽस्येतिषष्ठ्या अयमिति विपरिणामः। योऽयं लोके विद्याभिजनसंपत्त्याऽपचितस्तस्मा अयमेतत्स्थालीपाककर्ता, ऋषभं ददातीति।

केचित्तु तेन ब्राह्मणमित्यादि योऽस्यापचितो भवति तस्मा ऋषभं ददातीत्येतदन्तं सूत्रमेकं कुर्वन्ति, तेषां मतेऽपचित एव भोजयितव्यः। तस्मा एव ऋषभो दातव्य इति।

यदा त्वतिसंकटे शास्त्रान्तरवशेन रात्रौ विवाहस्तत्राप्यर्धरात्रात्प्राक्चेत्तदाऽऽनडुहे चर्मण्युपविश्यानन्तरमेव दिगाद्युपस्थानादिस्थालीपाकान्तं सर्वं कर्म कार्यम्। यद्यर्धरात्रोत्तरं तदोपवेशनपूर्वकं दिगाद्युपस्थानादि कृत्वा श्वोभूत एव स्थालीपाकः कार्य इति द्रष्टव्यम्।

तदाहाऽऽश्वलायनः—

" अर्धरात्रे व्यतीते तु परेद्युः प्रातरेव हि।
गृहप्रवेशनीयः स्यादिति वेदविदो विदुः " इति।

ग्रामान्तरे वधूगृहं चेत्तदा तद्ग्रामं गत्वा तत्र स्वीयं गृहमस्ति चेत्तत्रैव मण्डपादि कार्यम् । अभावे स्वत्वसंपादनपूर्वकमन्यगृहे वा । अयं च स्थालीपाकः प्रयाणादिविधिपूर्वकः स्वगृह एव कर्तव्यः । न श्वशुरगृहान्यगृहयोः । शिष्टास्त्विदानीमेतयोरपि कुर्वन्ति ।

गृहप्रवेशस्थालीपाकोत्तरं प्रथमदर्शपूर्णमासस्थालीपाकानुष्ठानात्प्राक्समारोपो न कार्यः ।

चरुस्वरूपं सारसंग्रहे—

"अग्निर्गतोष्मा सुस्विन्नो ह्यदग्धोऽकठिनश्चरुः ।
न चातिशिथिलः पाच्यो न च वीतरसो भवेत्" इति ।

अयमेव सर्व[1]स्थालीपाकानां प्रकृतिः । दर्शपूर्णमासस्थालीपाकौ त्वेतद्विकृतिभूतावेव ।

इति गृहप्रवेशविधिः ।

## अथैरिणीपूजनं दानं च ।

मण्डपप्रतिष्ठादिनात्पाणिग्रहणदिनाद्वा चतुर्थे दिवसे रात्रौ तत्र भद्रादिसंभवे दि[2]ने वा शिष्टाचारप्राप्तं वरमात्रेऽभावे तत्समायै वा कन्यादात्रैरिण्याख्यवंशपात्रदानं कार्यम् ।

"सवस्त्रफलताम्बूलं दंपत्योर्वंशवर्धनम् ।
ऐरिण्याख्यं वंशपात्रं पक्वान्नैः परिपूरितम् ॥
करकै रुद्रसंख्यैस्तु सुवर्णेन समन्वितैः ।
एतावदैरिणीरूपं कर्तव्यं किल सूरिभिः" इति ।

रुद्रसंख्यैरेकादशसंख्यैः ।

एवं संपाद्य सभार्य आचम्य प्राणानायम्य विवाहसंपूर्णफलावाप्तये वरस्य तत्पितृमात्रादीनां तत्पक्षीयाणां च यथाविभवं गन्धपुष्पवस्त्रादिभिः पूजनं कुर्यात् । अत्रापि संकल्पं कुर्वन्ति । गणेशं संपूज्य वरतत्पितृमातृपक्षीयेभ्यो यथाविभवं गन्धपुष्पसमर्पणपूर्वकं पट्टपट्टीदुकूलवस्त्रादि दत्त्वा कृतकन्यादानसंपूर्णफलावाप्तिवंशाभिवृद्धिद्वारोमामहेश्वरप्रीत्यर्थमैरिणीपूजनं वरमात्रे तत्समायै वैरिण्याख्यवंशपात्रदानं च कुर्यात् ।

---

१ च. °र्वेकामस्था° । २ ख. ग. ङ. च. °ने शि° ।

( ऐरिणीपूजनं दानं च )

तद्यथा—" ऐरिणि[1] त्वमुमा देवी महेशो गिरिजापतिः ।
अतस्त्वां पूजयिष्यामि ऐरिणीं सर्वकामदाम् ॥
सवस्त्रां च सदीपां च शूर्पैः षोडशभिर्युताम् ।
वरमात्रे प्रदास्यामि कन्यादानस्य सिद्धये " ॥

इत्युक्त्वा तस्मिन्वंशपात्र उमामहेश्वरौ संपूज्य तद्वंशपात्रं वरमात्रे तत्समायै वा दद्यात् ।

तत्र मन्त्राः—" वंशो वंशकरः श्रेष्ठो वंशो वंशसमुद्भवः ।
अनेन वंशदानेन तुष्टो वृद्धिं करोतु मे ॥
वंशपात्रमिदं पुण्यं वंशजातिसमुद्भवम् ।
वंशानामुत्तमं दानमतः शान्तिं प्रयच्छ मे ॥
वंशपात्राणि सर्वाणि मया संपादितानि वै ।
उमाकान्ताय दत्तानि मम गोत्राभिवृद्धये ॥
वंशवृद्धिकरं दानं सौभाग्यादिसमन्वितम् ।
वस्त्रेणाऽऽच्छादितं पूर्णं फलहेमसमन्वितम् ॥
सर्वपापक्षयकरं नानाद्रव्यैस्तु पूरितम् ।
दानानामुत्तमं दानमतः शान्तिं प्रयच्छ मे " इति ।

ततः सदीपं वंशपात्रं वरतत्पितृमात्रादीनां शिरसि स्वयं धारयेत्, स्वस्ति नो मिमीतां स्वस्ति न इन्द्र इति द्वाभ्यां प्रतिमन्त्रम् ।

ततो दातैव कन्यां गृहीत्वा वरपित्राद्युत्सङ्गे पृथक्पृथगुपवेश्य प्रार्थयेत्—
" सप्तवर्षा त्वियं कन्या पुत्रवत्पालिता मया ।
इदानीं तव पुत्राय दत्ता स्नेहेन पाल्यताम् " इति ॥

षड्वार्षिक्यां तु षड्वत्सरा त्वियं कन्येत्यूहः । अष्टवार्षिक्यादिषु तु—अष्टवर्षा त्वियं कन्या नववर्षा त्वियं कन्या दशवर्षा त्वियं कन्येत्येवं यथायथम् ।

एवं पुत्रायेत्यत्रापि पौत्राय भ्रात्रे बान्धवाय मित्रायेति ।

वरमात्राद्युत्सङ्गे वधूमाता कन्यां तथैवोपवेश्य प्रार्थयेत् ।

ततो वरमात्रा वधूमात्रादितत्पक्षीयसुवासिनीभ्यः सकञ्चुकक्षुद्रवंशशूर्पवायनानि बध्वा दापनीयान्याचारात् । एवमन्यदपि यथाऽऽचारप्राप्तमस्ति तथा कार्यम् ।

---

१ ख. ग. ङ. च. ऐरिणी । २ कृ. °रस्य त° ।

ततो दाता कर्मसाङ्गुण्याय विष्णुं संस्मरेत्। एतच्च सर्वं सपत्नीकेनाभुक्त्वैव कार्यम् ।

एतदकरणे दोष इत्येतदर्थे वचनं पठन्ति—

" वंशदानं विना यस्तु मण्डपोद्वासनं यदि ।
अज्ञानात्कुरुते मूढो दंपत्योः क्षयमायुषः " इति ॥

वस्तुतस्तु महानिबन्धेष्वदर्शनादनाकरमिदम् ।

अन्यच्च शाकलकारिकासु—

" दंपत्योर्वाससी दत्त्वा पूजयेदैरिणीं ततः ।
वंशपात्रं तथा कन्यां वरमात्रे निवेदयेत् ॥
वंशदानं चतुर्थेऽह्नि कन्यादानाङ्गमिष्यते ।
रात्रौ कुर्यात्तृतीयेंऽशे कुयोगेऽपि न दुष्यति ॥
पातो वा वैधृतिर्वा स्याच्चतुर्थेऽहनि चेद्यदि ।
तत्रैवापररात्रे स्यादैरिणीपूजनादिकम् " इति ॥

चतुर्थेऽह्न्येव पातवैधृती स्यातां चेदपि तदा कार्यमेव नान्यत्रेत्येतत्तात्पर्यार्थः ।

वस्तुतस्तु प्राचीननवीनग्रन्थेष्वेतस्यादर्शनादनादरणीयम् ।

इत्यैरिणीपूजनं दानं च ।

## अथ चतुर्थीकर्म ।

तत्रेदं गृह्यम्—" चतुर्थ्यामपररात्रेऽग्निमुपसमाधाय प्रायश्चित्तिपर्यन्तं कृत्वा नव प्रायश्चित्तीर्जुहोतीत्यादि प्रायश्चित्तिपर्यन्तं कृत्वा स त्वं नो अग्ने, इत्येतदन्तं कृत्वाऽग्ने प्रायश्चित्त इत्येता नव प्रायश्चित्तीर्जुहोति" इति ।

मातृदत्तः—प्रायश्चित्तिपर्यन्तं कृत्वेति वचनं समस्तव्याहृतीनामनादिष्टप्रायश्चित्तित्वबोधनार्थम् । तेनानुक्ते प्रायश्चित्ते समस्तव्याहृतिभिर्होम इति सिध्यति। अत एव सर्वप्रायश्चित्तमिति संज्ञा । तेन समस्तव्याहृतिपर्यन्तमेव कृत्वा नव प्रायश्चित्तीः प्रधानीभूता आहुतीर्जुहुयात् । अत्र प्रायश्चित्तित्वबोधनं चतुर्थीकर्मणः प्रायश्चित्तकर्मत्वेन प्रायश्चित्तकर्ममध्य एव प्रायश्चित्तिसंज्ञाज्ञापनस्य युक्तत्वात्कृतम् । चतुर्थीकर्मणः प्रायश्चित्तकर्मत्वं तु—अग्ने प्रायश्चित्त इत्यादिमन्त्रलिङ्गाज्ज्ञेयम् । पूर्वव्याख्याने प्रसिद्धव्याहृतिहोमानन्तर्य-

परित्यागः, इमं म इत्यादीनां चतुर्णामेव प्रायश्चित्तसंज्ञेत्यत्र विनिगमकाभावः, अङ्गहोमस्य मध्ये प्रधानानुष्ठानस्याश्रुतस्य कल्पनं चेति दोषाः। अस्मदीयव्याख्याने तु नैते दोषाः। प्रत्युत शास्त्रान्तरप्रसिद्धाया याज्ञिकप्रसिद्धायाश्च स्वशास्त्रे समस्तव्याहृतिहोमस्य *सर्वप्रायश्चित्तित्वसंज्ञासिद्धिरधिकेति द्रष्टव्यमिति युक्तं प्रतिभाति।

## अथ प्रयोगः।

पाणिग्रहणदिनमारभ्य या चतुर्थी रात्रिस्तस्यां त्रिभागावशिष्टायां वरः सपत्नीकः स्नात्वा प्राङ्मुख उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य ममास्या भार्यायाः सोमगन्धर्वाग्न्युपभुक्तत्वदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं चतुर्थीहोमं करिष्य इति संकल्पं कुर्यात्। अयं च संकल्पो न चतुर्थीकर्मान्तो विवाह इत्येतस्मिन्कल्पे।

ततो गणेशं संपूज्य शिखिनामाऽयमग्निरित्यभिध्यायन्नग्निं प्रज्वाल्य चत्वारीति ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा चतुर्थीहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वाऽग्निं प्रायश्चित्तिं वायुं प्रायश्चित्तिमादित्यं प्रायश्चित्तिमादित्यं प्रायश्चित्तिं वायुं प्रायश्चित्तिमग्निं प्रायश्चित्तिमग्निं प्रायश्चित्तिं वायुं प्रायश्चित्तिमादित्यं प्रायश्चित्तिं चैकैकयाऽऽज्याहुत्या यक्ष्ये।

अङ्गहोमे वरुणं द्वाभ्यामित्यादि, अग्निं स्विष्टकृतमित्यादि वा समिदभ्याधानान्तं कुर्यात्।

मूर्ध्नि संस्रावहोमे—अग्निं वायुं सूर्यं प्रजापतिं च संस्रावाज्येनेति वदेदिति केचित्।

एतच्च स्विष्टकृतः पूर्वमङ्गहोमकरणपक्षे तत्पूर्वं वा द्रष्टव्यम्। पात्रासादने संपातावनयनार्थं पात्रमुदकुम्भं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यं चेत्यासाद्य ब्रह्मवरणादिव्याहृतिहोमान्तं कृत्वा नव प्रधानाहुतीर्जुहुयात्।

"ॐ अग्ने प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै घोरा तनूस्तामितो नाशय स्वाहा" अग्नये प्रायश्चित्तय इदं न मम।

---

* "सर्वप्रायश्चित्तिसंज्ञायाः सिद्धिः" इति पाठोऽत्र युक्ततरः।

" ॐ वायो प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै निन्दिता तनूस्तामितो नाशय स्वाहा " वायवे प्रायश्चित्तय इदं० ।

" ॐ आदित्य प्रायश्चित्ते त्वं प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामितो नाशय स्वाहा " आदित्याय प्रायश्चित्तय इदं० ।

एता एव पुनर्व्युत्क्रमेण—

" ॐ आदित्य प्रा० वायो० अग्ने प्रा० " ।

पुनः पूर्वानुक्रमेण—

" ॐ अग्ने प्रा० वायो प्रा० आदित्य प्रा० " ।

नवप्रधानाहुतीनां होमान्त आज्यबिन्दून्पूर्वासादिते संपातावनयार्थे पात्रे प्रक्षिपेत् । नवाहुतिहोमानन्तरं तत्संपाताज्यं दर्व्या भार्यया मूर्ध्नि जुहोति—

"ॐ भूर्भगं त्वयि जुहोमि स्वाहा " अग्नय इदं० । "ॐ भुवो यशस्त्वयि जुहोमि स्वाहा " वायव इदं० । "ॐ सुवः श्रियं त्वयि जुहोमि स्वाहा " सूर्यायेदं० । "ॐ भूर्भुवः सुवस्त्विर्षिं त्वयि जुहोमि स्वाहा " प्रजापतय इदं० ।

इत्याहुतिचतुष्टयं मूर्ध्नि हुत्वेमं म इत्यादि स्विष्टकृदादि वा संस्थाजपान्तं समानम् । नात्र त्रिवृदन्नहोमः ।

तत आसादितं जलपूर्णं कुम्भमग्नेः समीपे निधायोदकुम्भसहितं तं प्रदक्षिणीकृत्यापरेणाग्निं शयनस्थानं कल्पयित्वा परिश्रित्य तत्र प्राक्शिरस्कामुदक्शिरस्कां वा भार्यां शाययेत् । अत्र वाचनिकमुदक्शिरस्कं शयनम् ।

ततः—"ॐ अभि त्वा पञ्चशाखेन शिवेनाभिद्विपावता । सहस्रेण यशस्विना । हस्तेनाभिमृशामसि सुप्रजास्त्वाय " ।

[ इति ] तस्या योनिं दक्षिणेन हस्तेनाभिमृशति ।

" ॐ सं नाम्नः सꣳ हृदयानि सं नाभिः सं त्वचः सं त्वा कामस्य योक्त्रेण युञ्ज्यान्यविमोचनाय " इति संगमं करोति ।

" ॐ मामनुव्रता भव सहचर्या मया भव । या ते पतिघ्नी तनूर्जारघ्नीं त्वेतां करोमि शिवा त्वं मह्यमेधि क्षुरपविर्जारेभ्यः " ।

[ इति ] तां पर्यालिङ्गति ।

---

१ क. °मान्ते होमान्त ।

" मधु हे मध्विदं मधु जिह्वा मे मधुवादिनी ।
मुखे मे सारघं मधु दत्सु संव[न]नं कृतम् ॥
चाक्रवाकं संवननं यन्नदीभ्य उदाहृतम् ।
यद्युक्तो देवगन्धर्वस्तेन संवनिनौ स्वके " ॥

इति द्वाभ्यां तस्या मुखेन मुखं जुषति( ते )। इदमुपगमनमावश्यकं स्त्रीसंस्कारत्वात् ।

ततः कर्मणः साङ्गतासिद्ध्यर्थमाचार्याय दक्षिणां दत्त्वाऽन्येभ्यो भूयसीं दत्त्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

प्राचीनरीत्या प्रयोगे तु—अन्वाधाने व्याहृत्यनन्तरमङ्गहोमे वरुणं द्वाभ्यामाज्याहुतिभ्यां यक्ष्ये, अग्निं वरुणं चैकयाऽऽज्याहुत्या यक्ष्ये, अग्निं वरुणं चैकयाऽऽज्याहुत्या यक्ष्ये, इत्युक्त्वा प्रधानदेवतोल्लेखः । अनन्तरमयासमग्निमित्यादि । एतदनुसारेण होमः, इत्येतावान्विशेषो द्रष्टव्यः । अन्यत्समानम् ।

इति चतुर्थीकर्म ।

## अथ देवकमण्डपोद्वासनम् ।

तत्र देवकोत्थापनस्य कालः—

" समे च दिवसे कुर्याद्देवकोत्थापनं बुधः ।
षष्ठं च विषमं नेष्टं मुक्त्वा पञ्चमसप्तमौ " इति ।

समेषु षष्ठं विषमेषु पञ्चमसप्तमातिरिक्तं दिनं नात्रेष्टमित्यर्थः ।

दिवससंख्या ज्योतिर्निबन्धे—

" प्रतिष्ठादिनमारभ्य यावत्षोडश वासराः ।
देवकोत्थापनं कार्यमुद्वाहे च व्रते दश " इति ॥

उद्वाहे षोडशदिनानि, मौञ्जीबन्धे दश दिनानि काल इत्यर्थः । एतेषु दिवसेषु पञ्चमसप्तमातिरिक्तं विषमं दिनं समेषु षष्ठं दिनं च वर्जयित्वाऽवशिष्टेऽन्यतमदिवसे स्थापितदेवतानामुद्वासनं पुण्याहादिवाचनं चोपनयनवत्कुर्यात् ।

मण्डपविसर्जनं तु विवाहदिनमारभ्य यानि नवत्रिषष्ठदिनानि तानि वर्ज-

---

१ ग. ङ. च. चैकैक° । २ ग. च. चैकैक° । ३ च. °ण्याहृत्य° ।

यित्वेतरदिने कार्यम् । पुण्याहवाचनाभिषेकान्ते पुरोधास्तच्छाखादिकं वंशपात्रे निधाय तदुपरि प्रक्षिप्ताभिषेकजलं सकुटुम्बस्य कर्तुः शिरसि किंचित्किंचित्स्रावयेत् ।

"ॐ प्रति चेति च० रागच्छति" इति स्रावणकाले पठेत् । एवं पुनर्द्विः । एतच्चाऽऽचारात् ।

ततः कर्ता शिरसि बद्धाञ्जलिः, अस्मद्गोत्रे षट्सु षट्सु मासेसु शोभनानि सन्त्विति भवन्तो ब्रुवन्त्विति द्विजान्वदेत् । ते च त्वद्गोत्रे षट्सु षट्सु मासेषु शोभनानि सन्त्विति प्रतिब्रूयुः ।

ततो द्विजान्गन्धपुष्पफलताम्बूलदक्षिणाभिः संपूज्य तदाशिषो गृह्णीयात् । एवं वरपित्राऽपि देवकोत्थापनं कार्यम् ।

यत्तु मुहूर्तमार्तण्डटीकायां विवाहदिनमारभ्य नवत्रिषष्ठदिवसेषूद्वासनमपि[1] न कार्यमित्युक्तं तन्मण्डपस्य नतु देवकादेरिति द्रष्टव्यम् ।

इति मण्डपोद्वासनम् ।

## अथ विवाहनिमित्तेन वर्ज्यानि ।

तत्र मातृकास्थापनमारभ्य[2] मातृकोद्वासनपर्यन्तं कानिचिद्वर्ज्यानि कानिचित्तदुत्तरमपि वर्ज्यानि ।

तत्राऽऽद्यानि वृद्धमनुः—

"अपसव्यं स्वधा यात्रा शीताद्भिः स्नानमेव च ।
सपिण्डा नैव कुर्वीरन्यावन्मातृविसर्जनम्" इति ॥

अत्रापसव्यस्वधाशब्दाभ्यां तद्वत्कार्यं लक्ष्यते[3] । अपसव्यमित्यनेनैव सिद्धे स्वधाशब्दोपादानं स्वधा पितृभ्यः स्वाहेति पितृयज्ञसहचरितवैश्वदेवनिषेधार्थम् । आचारसंवादलाभात् ।

"प्रेतदाहो दधिस्नानं स्नानं[4] शीतेन वारिणा ।
वैश्वदेवः स्वधाकृत्यं ब्रह्मयज्ञ उपोषणम् ॥
वेदस्याध्ययनं चैव वेदस्याध्यापनं तथा ।
सीमातिक्रमणं नैव देवकोत्थापनावधि" ॥

इति धर्मप्रदीपवचनाच्च ।

---

१ क. °पि का° । २ क. °पि । त° । ३ ग. ङ. च. लभ्यते । ४ क. स्नातं ।

यद्यपि स्वधा पितृभ्य ऊर्ग्भवेतिस्वधाशब्दवत्पितृकर्मेष्ट्यादावपि वर्तते तथाऽपि तत्र निषेधो न प्रवर्तते श्रौतस्य प्राबल्यात् । एवमाहिताग्निकर्तृकपिण्डपितृयज्ञेऽपि ।

यद्यपि देवकोत्थापनावधिककर्मण्यमान्तर्भावस्यैव निषेधेन देवकोत्थापनस्यामादिवसात्प्रागेव जायमानत्वेन निषेधावसरो नास्ति तथाऽपि केनचित्प्रतिबन्धेन देवकोत्थापनमात्रं न जायते तदैतद्द्रष्टव्यम् ।

संग्रहे—" नित्यश्राद्धं चाध्ययनं स्नानं शीतेन वारिणा ।
प्रारब्धे मङ्गले नैव मण्डपोद्वासनावधि " इति ॥

नित्यश्राद्धं प्रात्यहिकं श्राद्धम् ।

गार्ग्यः—" नान्दीश्राद्धे कृते पश्चाद्यावन्मातृविसर्जनम् ।
दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च ॥
अपसव्यं स्वधाकारं नित्यश्राद्धं तथैव च ।
ब्रह्मयज्ञं चाध्ययनं नदीसीमाविलङ्घनम् ॥
उपवासं व्रतं चैव श्राद्धभोजनमेव च ।
नैव कुर्युः सपिण्डाश्च मण्डपोद्वासनावधि " इति ॥

( *संस्कारदर्पणे स्मृत्यन्तरे—

" मृत्पुण्ड्रं भस्मपुण्ड्रं च स्नानं शीतोदकेन च ।
नैव कुर्युः सपिण्डाश्च मण्डपोद्वासनावधि " इति ॥

वेदान्तश्रवणगीतापाठादिकमपि शिष्टा वर्जयन्ति । )

स्मृत्यन्तरे—" विवाहे मेखलाबन्धे वर्षमर्धं तदर्धकम् ।
गेहारम्भप्रवेशौ च वर्जयेत्सर्वदा बुधः " इति ॥

नात्र यथासंख्यमिति केचित् ।

बृहस्पतिः—" तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति " इति ॥

( +संग्रहे—" विवाहादिकमाङ्गल्ये प्रतिष्ठायां महोत्सवे ।
आसमाप्ति न गन्तव्यं सूतके मृतकेऽपि च " इति ॥ )

* धनुश्चिह्नान्तर्गतं क. पुस्तके नास्ति । + धनुश्चिह्नान्तर्गतं क. पुस्तके नास्ति ।

# अथ तदुत्तरं वर्ज्यानि ।

योगयाज्ञवल्क्यः—

" न स्नायादुत्सवेऽतीते माङ्गल्यं विनिवर्त्य च ।
अनुव्रज्य सुहृद्बन्धूनर्चयित्वेष्टदेवताम् " इति ॥

कार्ष्णाजिनिः—" विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् " इति ॥

व्रतमुपनयनम् ।

हेमाद्रौ ज्योतिष्पराशरः—

" विवाहे विहितान्मासांस्त्यजेयुर्द्वादशैव हि ।
सपिण्डाः पिण्डनिर्वापे मौञ्जीबन्धे षडेव हि " इति ॥

क्वचित्प्रतिप्रसवमाह स एव—

" महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं[1] सदा" इति ।

गयाश्राद्धपदं सर्वतीर्थश्राद्धोपलक्षणम् । क्षयाहग्रहणं नित्यानामष्टकादिश्राद्धानामुपलक्षणम् । नन्वेवं महालयेऽपि पिण्डनिर्वपण[2]सिद्धौ महालयग्रहणस्य व्यर्थत्वापत्तिः । अतः क्षयाहग्रहणमुपलक्षणमिति वक्तुमशक्यमिति चेन्न । महालये पिण्डदाननिषेधेन कालान्तरसद्भावात्कालान्तरे महालयानुष्ठानं स्यात्तन्मा भूत्किं तु स्वकाल एव सपिण्डको महालयः कर्तव्य इत्येवं तस्य सार्थक्यसंभवात् । सपिण्डीकरणग्रहणं नवश्राद्ध[3]षोडशश्राद्धोपलक्षणम् । मातापित्रोरिति क्षयाहविशेषणं हविरुभयत्ववदविवक्षितं तेन भ्रातृपितृव्यादिवार्षिकेऽपि पिण्डदानं कार्यमेव ।

बौधायनोऽपि—

" विवाहे चोपनयने चौले चैव यथाक्रमम् ।
वर्षमर्धं तदर्धं च नेत्येके तिलतर्पणम् " इति ।

एतत्प्रतिप्रसवस्तु तर्पणप्रकरणे वक्ष्यते ।

मदनरत्ने स्मृत्यन्तरे[4]—

" पिण्डान्सपिण्डा नो दद्युः प्रेतपिण्डं विनाऽत्र तु ।
पितृयज्ञे च यज्ञे च गयायां दद्युरेव ते " इति ।

---

१ ग. च. 'निर्वाप' । २ ग. 'निर्वाप' । ३ ङ. 'श्राद्धे षो' । ४ क. 'न्तरेऽपि—पि' ।

पितृयज्ञे पिण्डपितृयज्ञे। यज्ञे पित्र्येष्ट्यां सौमिके मखे च। ते सपिण्डाः।

सत्यव्रतः—"पित्रोरेव मृताहे तु गयायां च महालये।
क्वतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुतः" इति।

ज्योतिर्निबन्धे—"अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि।
माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनम्" इति।

एतच्च मासपर्यन्तम्,—
"विवाहादौ मासमेकं न धार्यं गोपिचन्दनम्"।

इति ज्योतिर्निबन्धवचनात्।

स्मृत्यन्तरे—"कृत्वा विवाहं व्रतबन्धनं च वर्षं तदर्धं न च तीर्थयात्राम्।
क्षौरं च पिण्डांस्तिलयुक्तकर्म न चैव कुर्युर्हि नराः सपिण्डाः" इति।

ज्योतिष्प्रदीपे—
"स्नानं सचैलं तिलमिश्रकर्म प्रेतानुयानं कलशप्रदानम्।
अपूर्वतीर्थामरदर्शनं च विवर्जयेन्मङ्गलतोऽब्दमेकम्।
मासषट्कं विवाहादौ व्रतप्रारम्भणे(णं) न च।
*व्रतस्योद्यापनं नैव नैव कुर्यादुपोषणम्।
जीर्णभाण्डादि न त्याज्यं गृहसंमार्जनं तथा।
ऊर्ध्वं विवाहात्पुत्रस्य तथा च व्रतबन्धनात्।
आत्मनो मुण्डनं नैव वर्षं वर्षार्धमेव च" इति।

पुत्रग्रहणेनात्र पुत्र्यपि गृह्यते। मुण्डनं क्षौरम्।

कर्तनं तु भवत्येव,
"मुण्डनस्य निषेधे तु कर्तनं वै विधीयते"।

इति स्मृत्यन्तरवचनात्।

(+स्मृतिरत्नाकरे संग्रहे—
"विवाहोपनयोर्ध्वं तु वर्षं वर्षार्धमेव च।
व्रतप्रारम्भणं नैव व्रतस्योद्यापनं तथा।
न कुर्यात्पिण्डनिर्वापं[1] न दद्योत्करकाणि[2] च।

---

* इदमर्धं क. ख. पुस्तकयोर्नास्ति। + धनुश्चिह्नान्तर्गतं क. ख. पुस्तकयोर्नास्ति।

---

१ ग. °निर्वाप°। २ ग. °द्यात्कार°।

देवोत्सवं तथा कृत्वा वर्षं वर्षार्धमेव च ।
मङ्गलात्परतो गेह[1]च्छादनं[2] चैव वर्जयेत् " इति[3] ।

विवाहाब्दे पुत्रस्य पुत्र्या वा विवाहकर्तुः[4] पित्रादेर्भार्या गर्भिणी चेत्तदा दोष उक्तः स्मृत्यन्तरे—

" उद्वाहाब्दे गर्भिणी चेत्स्वभार्या हानिर्मृत्युर्गर्भनाशो भ्रमश्च ।
तच्छान्त्यर्थं स्वर्णनिष्कत्रयेण कृत्वा मृत्योराकृतिं पूज्य दद्यात् " इति ।

पूज्येत्यत्र समासाभावेऽपि क्त्वो ल्यबादेशश्छान्दसः । दद्यादित्यत्र ब्राह्मणायेति शेषः । )

इति वर्ज्यानि ।

## अथ प्रसङ्गात्पुनर्विवाहः ।

तत्र विवाहे कृते पश्चाल्लग्नं पश्चाङ्गशुद्धिराहित्यादिना दुष्टमिति ज्ञातं चेत्तदा ज्योतिःशास्त्रोक्तकालविशेषे पुनर्विवाहं कुर्यात् ।

श्रीधरीये नृसिंहः—

" पुनर्विवाहं वक्ष्यामि दंपत्योः शुभवृद्धिदम् ।
लग्नेन्दुलग्नयोर्दोषे ग्रहताराादिसंभवे ॥
अन्येष्वशुभकालेषु दुष्टयोगादिसंभवे ।
विवाहे त्वथ दंपत्योराशौचादिसमुद्भवे ॥

अत्राऽऽशौचशब्देन[5] ग्रहणं ग्राह्यं तत्राप्याशौचस्य सत्त्वात् । भ्रान्त्यैतत् । आदिशब्देनोत्पाता गृह्यन्ते । गुर्वाशौचविषयं वा ।

तस्य दोषस्य शान्त्यर्थं पुनर्वैवाह्यमिष्यते ।
अयनं चोत्तरं श्रेष्ठं वर्धते तु विशेषतः ॥
आषाढमार्गशीर्षौ द्वौ वर्ज्यौ शेषाः शुभावहाः ।
विवाहोक्तर्क्षतिथ्यंशराशिवारादिवर्गकाः ॥
करणा योगसंज्ञानि ग्रहगोचरयोगकाः ।

१ ग. च. गेहं छाद° । २ ग. °नं नैव । ३ ग. °ति । वर्जये वि° । ४ ग. °र्तुः पुत्रा° । ५ क. ख. ग. °ब्देनात्र ग्र° ।

तस्मिन्विवाहसमये शुभदांश्च तथैव तु ॥
पूर्वाह्णे पूर्वरात्रे च विवाहः शुभदो भवेत्" इति * ।

इति पुनर्विवाहविषयः ।

---

## +अथ द्वितीयादिविवाहनिमित्तानि ।

तत्रेदं धर्मसूत्रम्—

"धर्मप्रजासंपन्ने दारे नान्यां कुर्वीतान्यतराभावे कार्या प्रागग्न्याधेयादाधाने सती कर्मभिः संबध्यते येषामेतदङ्गम्" इति ।

श्रौतेषु गार्ह्येषु स्मार्तेषु च कर्मसु श्रद्धा शक्तिश्च धर्मसंपत्तिः प्रजासंपत्तिः पुत्रवत्त्वमेवंभूते दारे सति नान्यां कुर्वीत, अन्यां नोद्वहेत् । अन्यामिति स्त्रीलिङ्गनिर्देशानुसारेण भार्यामित्यनुषज्यते । धर्मप्रजयोरन्यतराभावे कार्योद्वाह्या । तत्रापि प्रागग्न्याधेयान्नोर्ध्वमाधानात् । एतदर्थमेवेदं वचनम् । उभयसंपत्तौ न कार्येत्युक्तेऽन्यतराभावे कार्येत्यस्यांशस्य प्राप्तत्वात् । यदा चान्यतराभावे कार्या तदा का शङ्का । उभयाभावे कार्येत्यत्र प्रागग्न्याधेयादित्यत्र हेतुः । आधाने सतीत्यादिः । आधाने सती विद्यमाना कर्मभिः संबध्यतेऽधिक्रियते । कैर्येषामग्निहोत्रादीनामेतदाधानमङ्गमुपकारकं तैः । अत्र दारे सतीतिवचनान्मृते तस्मिन्प्रागूर्ध्वं चाऽऽधानात्सत्यामपि पुत्रसंपत्तौ धर्मसंपत्त्यर्थं दारपरिग्रहणं कर्तव्यमेव ।

तथा च मनुः—

"भार्यायै पूर्वमारिण्यै दत्त्वाऽग्नीनन्त्यकर्मणि ।
पुनर्दारक्रियां कुर्यात्पुनराधानमेव च" इति ॥

याज्ञवल्क्योऽपि—

"आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन्" इति ।

ननु प्रागग्न्याधानात्कर्मभिः संबध्यते गार्ह्यैः स्मार्तैश्च तत्किमुच्यत आधाने सती कर्मभिः संबध्यत इति । सत्यम् । अस्मादेव हेतुनिर्देशादनुमीयते प्राग-

---

* अत्र क. पुस्तकटिप्पण्याम्—"अयं च पुनर्विवाहः पूर्वोढयोर्वधूवरयोः । अत्र पुनर्विवाहे वाग्दानं नास्ति । अग्नेः सिद्धत्वाद्धोमोऽपि नास्ति । दानं पाणिग्रहणं चाऽऽवर्तत इति संस्कारद्योते" । इति ग्रन्थो वर्तते । + एतदुपरि क. पुस्तकटिप्पण्याम्—"अथ स्त्रीणां प्रथमपल्लवधारणम् । तदुक्तं ज्योतिषे—हस्तादिपञ्चमृगपूषभदस्रभेषु विष्णुद्वये बुधदिने गुरुशुक्रवारे । स्त्रीणां शुभं प्रथमपल्लवधारणं स्यात्पाणिग्रहोक्तसमये खलु पीतवस्त्रैः" इति ग्रन्थो वर्तते ।

---

१ ग. °विशेषः । अ° । २ च. °द्वा सक्ति° । ३ क. °दा वाऽन्य° ।

ग्न्याधानात्सत्यामपि धर्मसंपत्तौ प्रजासंपत्तौ च रागान्धस्य कदाचिद्दारग्रहणे नातीव दोष इति । यद्याहिताग्नेर्भार्या कर्मसु श्रद्दधाना शक्ता वा न भवति पुत्राश्च मृता अनुत्पन्ना वा तदा कर्तव्य एव विवाह इति व्याख्यातमुज्ज्वलाकृता ।

रत्यर्थे विवाहान्तरे विशेषः—

" एकामुत्क्रम्य कामार्थमन्यां वोढुं य इच्छति ।
समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरां वहेत् " इति ॥

याज्ञवल्क्यः—" आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियै " इति ॥

सधनो धनतृतीयांशम्, अधनोऽशनाच्छादनात्मकं भरणं दाप्य इत्यर्थः । या त्वेतावता भरणेनापरितुष्टा गृहान्निर्गच्छेत्तां प्रत्याह मनुः—

" अधिविन्ना तु या नारी निर्गच्छेद्रोषिता गृहात् ।
सा सद्यः संनिरोद्धव्या त्याज्या न कुलसंनिधौ " इति ॥

अधिवेदनीयोक्ता[1] याज्ञवल्क्येन—

" सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥
अधिविन्नाऽपि भर्तव्या महदेनोऽन्यथा भवेत् " इति ।

अधिवेदनं भार्यान्तरपरिग्रहः । सुरापी मद्यपी । सुरापानेऽधिवेदनमात्रं न किंतु त्यागोऽपि, " तथा महति पातके " इति त्यागहेतुत्वेन तस्य स्मृतावभिधानात् ।

" पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् " इति वचनाच्च ।

अत एव मनुः—

" मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत् ।
व्याधिता चाधिवेत्तव्या हिंसार्थघ्नी च सर्वदा " इति ॥

व्याधिता दीर्घरोगिणी । असत्यवृत्तेति पदच्छेदः ।

ब्रह्मपुराणे—" धर्मे विघ्नकरीं भार्यामसतीं चातिकोपनाम् ।
त्यजेद्धर्मस्य रक्षार्थं तथैवाप्रियवादिनीम् " इति ।

त्यजेदधिविन्देत् । न तु भोगं परित्यजेदिति माधवः ।

---

१ क. ख. ङ. 'वेदिनी' ।

अधिवेदने प्रतीक्षाकालं मनुराह—

" वन्ध्याऽष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी " इति॥

संग्रहे तु—" अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् " इत्युक्तम्॥

कात्यायनः—" सदारोऽन्यान्पुनर्दारानुद्वोढुं कारणान्तरात्।
यदीच्छेदग्निमान्कुर्वन्क होमोऽस्य विधीयते॥
स्वाग्नावेव भवेद्धोमो लौकिके न कदाचन " इति।

मण्डनोऽपि—" आद्यायां विद्यमानायां द्वितीयामुद्वहेद्यदि।
तदा वैवाहिकं कर्म कुर्यादावसथेऽग्निमान् " इति॥

सुदर्शनभाष्ये तु द्वितीयविवाहहोमो लौकिक इत्युक्तम्। एतच्चासंभवे, ग्रामान्तरे विवाहे गृह्याग्नेस्तत्राभावाल्लौकिकाग्नावेव विवाहहोमः।

मृतपत्नीकस्य द्वितीयादिविवाहे कालविशेष उक्तो ज्योतिर्निबन्धे—

" प्रमदामृतिवासरादितः पुनरुद्वाहविधिर्वरस्य च।
विषमे परिवत्सरे शुभो युगुले चापि मृतिप्रदो भवेत् " इति॥

चस्त्वर्थे। अपिरेवकारार्थकः।

तृतीयमानुषीविवाहस्य निषेध उक्तः संग्रहे—

" तृतीयां मानुषीं चैव चतुर्थीं यः समुद्वहेत्।
धनधान्यादिनाशः स्याद्विधवा साऽथ वा भवेत् " इति॥

मात्स्ये—" पुत्रपौत्रादिसंपन्नः कुटुम्बी साग्निको नरः।
उद्वहेद्(द्र)तिसिद्ध्यर्थं तृतीयां न कदाचन॥
मोहादज्ञानतो वाऽपि यदि गच्छेत मानुषीम्।
नश्यत्येव न संदेहो गर्गस्य वचनं यथा " इति॥

तृतीयमर्कविवाहं कृत्वैव चतुर्थादिषु मानुषीविवाहः कार्यः—

" चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् " इति ब्रह्मपुराणात्।

(*ब्राह्मे—" आदित्यदिवसे वाऽपि हस्तर्क्षे वा शनैश्चरे।
शुभे दिने च पूर्वाह्णे कुर्यादर्कविवाहकम्॥

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख. पुस्तकयोः।

१ ग. च. युगले।

ग्रामात्प्राच्यामुदीच्यां वा सुपुष्पफलसंयुतम् ।
परीक्ष्य यत्नतोऽधस्तात्स्थण्डिलादि यथाविधि ॥
अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत्पुरा ।
अर्कसंनिधिमागत्य तत्र स्वस्त्यादि वाचयेत् ॥
नान्दीश्राद्धं हिरण्येन अष्टवर्गान्प्रपूजयेत् ।
पूजयेन्मधुपर्केण वरं दाता तु शक्तितः ॥
यज्ञोपवीतं[1] वस्त्रं च हस्तकर्णादिभूषणम् ।
स्वशाखोक्तेन मार्गेण मधुपर्केण पूजयेत् " इति ॥

स्वशाखोक्तेन दातृशाखोक्तेन ।

" मण्डपो मातृका देवास्त्रयः पितृगणास्तथा ।
गणेशदुर्गाक्षेत्रेशाः[2] कुलदेव्यष्टवर्गकाः " ॥

इति स्मृतिदर्पण उक्ता अष्टवर्गाः ।)

## अथ तस्य प्रयोगः ।

कर्ताऽऽदित्यवारे हस्तनक्षत्रे शनिवासरे वा यस्मिन्कस्मिंश्चिच्छुभदिने वा पूर्वाह्णे ग्रामात्प्राच्यामुदीच्यां वा दिशि विद्यमानं सुपुष्पफलशाखाढ्यं सैल्लक्षण[3]मेकमर्कं परीक्ष्य स्नात्वाऽलंकृतोऽहतवासा आरक्तगन्धादिभूषितोऽर्कसंनिधिमागत्य तं संस्नाप्य वाससा संवेष्ट्या[4]ऽऽरक्तगन्धादिभिर्भूषयित्वाऽर्ककन्यादानार्थमेकं विप्रमाचार्यत्वेन परिकल्प्यार्कसमीप एव मधुपर्कपर्यन्तं स यथा दृष्टिगोचरो न भवेत्तथोपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम तृतीयमानुषीविवाहसूचितदोषनिरसनपूर्वकतृतीयमानुषीविवाहाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं स्वस्य तृतीयमर्कविवाहं[5] करिष्य इति संकल्प्य तदङ्गं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं हिरण्येन नान्दीश्राद्धं च विधायार्कस्योत्तरतो होमार्थं स्थण्डिलमुपकल्पयेत् ।

ततो दाता वरेणोपकल्पितया मधुपर्कसामग्र्योष्णीषादिभिर्हस्तकर्णादिभिर्भूषणैश्चार्कप्रतिग्रहीतारं पूजयेत्[6] । प्रतिग्रहीतृशाखया मधुपर्कः स्वशाखया वा ।

ततः प्रतिग्रहीता—

" त्रिलोकवासिन्सप्ताश्व च्छायया सहितो रवे ।
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु "

---

१ ग. °वीतव° । २ ङ. च. °क्षेत्रज्ञाः कु° । ३ ङ. सलक्ष° । ४ क. ग., °ससाऽऽवे° । ५ ङ. च. °नं ना° । ६ ङ. च. °त् । दातृशाखयैवात्र मधुपर्कः । त° ।

इत्यर्कस्य पुरतस्तिष्ठन्सूर्यं संप्रार्थ्य श्वेतवस्त्रेण कार्पासतन्तुभिश्च तं संवेष्ट्य, आ सत्येनेत्यस्य विश्वे देवाः सविता त्रिष्टुप्। पूजायां विनियोगः—"ॐ आ सत्येन रजसा० विपश्यन्" इति च्छायया सहितं रविं तत्राऽऽवाह्यैतेनैव मन्त्रेणाऽऽसनाद्याचमनीयान्तानुपचारान्समर्प्य, आ सत्येनेत्यस्य विश्वे देवाः सविता त्रिष्टुप्। आपो हि ष्ठेति मन्त्रत्रयस्याग्निर्विश्वे देवा वाऽऽपो गायत्री। अभिषेके विनियोगः—

"ॐ आ सत्येन रजसा० विपश्यन्" "ॐ आपो हि ष्ठा०" इति।

सर्वान्तेऽभिषिच्याऽऽ सत्येनेत्येतेनैव मन्त्रेण वस्त्रोपवीतमाल्यगन्धपुष्पधूपदीपैः संपूज्य गुडौदनं निवेद्य ताम्बूलादि समर्पयेत्।

" मम प्रीतिकरा येयं मया सृष्टा पुरातनी।
अर्कजा ब्रह्मणा सृष्टा साऽस्माकं प्रतिरक्षतु "

इत्यर्कं प्रदक्षिणी कुर्वन्पठित्वा—

" नमस्ते मङ्गले देवि नमः सवितुरात्मजे।
त्राहि मां कृपया देवि पत्नी त्वं म इहाऽऽगता।
अर्क त्वं ब्रह्मणा सृष्टः सर्व प्राणिहिताय च।
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः।
तृतीयोद्वाहजं पापं मृत्युं चाऽऽशु विनाशय।
आयुर्देहि यशो देहि प्रजां देहि पशूनपि।
देहि मेऽर्क श्रियं पुष्टिं स्वस्थानेऽर्क स्थिरो भव "।

इति पुनः प्रदक्षिणां कुर्यात्।

ततोऽर्ककन्यावरणम्। प्रतिग्रहीतृपक्षीया अमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्राय[3] काश्यपगोत्रामादित्यस्य प्रपौत्रीं सवितुः पौत्रीमर्कस्य पुत्रीमिमामर्ककन्यां वृणीमह इति वदेयुः। वृणीध्वमित्याचार्यः प्रतिवदेत्। एवं पुनर्द्विः।

ततो वरः सुमुहूर्ते "ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः०" "ॐ अष्टौ देवा वसवः सोम्यासः०" इति मन्त्रौ पठन्नर्कं निरीक्षेत(त)।

तत आचार्यप्रमुखैराशीर्घोषवद्भिर्द्विजैर्युतोऽर्ककन्यादानार्थं कल्पितमाचार्यं स्वसमीप आहूयोपविश्य तस्मात्तां विधिवत्प्रतिगृह्णीयात्।

---

१ क. ख. 'य" इ°। २ ग. 'हि कामाङ्श्रियं। ३ च. °त्रायामुकशर्मणे वराय का°।

स विधिर्यथा—

आचार्यः संकल्पपूर्वकं पूर्ववन्नामगोत्रादिकमुच्चार्येमामर्कनाम्नीं कन्यां तृतीयमानुषीविवाहसूचितदोषनिरसनपूर्वकतृतीयमानुषीविवाहाधिकारसिद्धये तुभ्यमहं संप्रदद इति दद्यात् ।

प्रतिग्रहीता प्रतिगृह्णामीति प्रतिगृह्णीयात् । एवं पुनर्द्विः ।

तत आचार्यः प्रतिग्रहीतारं प्रार्थयेत्—

" अर्ककन्यामिमां विप्र यथाशक्तिविभूषिताम् ।
अमुकगोत्रायामुकशर्मणे तुभ्यं दत्तां विप्र समाश्रय " इति ।

ततः प्रतिग्रहीता तूष्णीमेव विवाहवत्कङ्कणबन्धनपूर्वकमङ्गल्यक्षतारोपणं कृत्वा यावत्पञ्चवृत्तं सूत्रं तावदासत्येनेतिमन्त्रेण गायत्र्या वाऽर्कं संवेष्टयेत् । एतस्यर्ष्यादिकं पूर्ववत् । संवेष्टने विनियोग इति विनियोगे विशेषः । गायत्र्या ऋष्यादिकं तु[1] संध्याप्रकरण उक्तम् । संवेष्टने विनियोग इति विनियोगवाक्यम् । तूष्णीमेव संवेष्ट्य जपेदिति वा । अस्मिन्कल्पे जपे विनियोग इति विनियोगवाक्ये विशेषः ।

ततस्तत्सूत्रं पुनः पञ्चधा कृत्वाऽर्कस्य वामस्कन्धे—बृहत्सामेत्यस्य मन्त्रस्य विश्वे देवा इन्द्रो जगती । अर्कस्कन्धे सूत्रबन्धने तदुपरि भस्मप्रक्षेपणे च विनियोग इति स्मृत्वा, ' ॐ बृहत्साम० रक्ष ' इति बद्ध्वैतेनैव तस्मिन्सूत्रे भस्म प्रक्षिपेत् ।

ततस्तां नीराज्य(नीराजयित्वा) यथाविभवं भूषणैर्भूषयेत् ।

ततोऽर्कस्य प्रागादिदिक्षु क्रमेण मही द्यौरिति भूमिं स्पृष्ट्वा, ओषधय इति तण्डुलपुञ्जान्कृत्वा, आजिघ्रेति कलशान्संस्थाप्य, तथैवाऽऽग्नेयादिदिक्षु संस्थापयेत् ।

ततः स्थापितानष्टौ कलशान्प्रत्येकं वस्त्रसूत्राभ्यां वेष्टयित्वेमं मे गङ्ग इति हरिद्रागन्धयुक्तशीतलजलेनाऽऽपूर्य तेषु प्रत्येकं गन्धादिकं तत्तन्मन्त्रैर्निक्षिप्य पूर्णपात्रैरपिदधाति, सर्वत्र मन्त्रावृत्तिः ।

ततस्तेषु नाममन्त्रेणैव महाविष्णुमावाह्याऽऽसनाद्यैरुपचारैः पूजयेत्[2] ।

ततोऽर्कस्योत्तरत उपकल्पितस्य स्थण्डिलस्य पश्चादुपविश्यार्कं संस्पृशन्स्थण्डिलस्यो[3]द्धननोल्लेखनादिविधिना संस्कारं विधाय तत्र योजकनामानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणाया-

१ क. 'योगे विशेषः । तू' । २ च. संपूजयेत् । ३ ग. ङ. च. 'स्योल्ले' ।

मान्तं कृत्वाऽर्कविवाहहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तं *प्रसाधनी-देव्यन्तं वोक्त्वा प्रधानहोमे बृहस्पतिमग्निमग्निं वायुं सूर्यं प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वा। अङ्गहोमे वरुणं द्वाभ्यामित्यादि अग्निं स्विष्टकृतं हुतशेषाज्याहुत्या यक्ष्य इत्यादि वा व्याहृतिहोमान्तं प्रसाधनीदेवीहोमान्तं वाऽन्वाधानोत्कीर्तितपक्षानुसारेण कुर्यात्।

ततः प्रधानहोमः। सं गोभिरित्यस्याङ्गिरा बृहस्पतिस्त्रिष्टुप्। अर्कविवाह-प्रधानाज्यहोमे विनियोगः—

"ॐ सं गोभिराङ्गिरसो नक्षमाणो भग इवेदर्यमणं निनाय।
जने मित्रो न दंपती अनक्ति बृहस्पते वाजयाशूँरिवाऽऽजौ स्वाहा"।

बृहस्पतय इदं०।

यस्मै त्वेत्यस्य वामदेवोऽग्निस्त्रिष्टुप्। अर्कविवाहप्रधानाज्यहोमे विनियोगः–

"ॐ यस्मै त्वा काम कामाय वयं सम्राड्यजामहे।
तमस्मभ्यं कामं दत्त्वाऽथेदं त्वं घृतं पिब स्वाहा" अग्नय इदं०।

व्यस्तसमस्तव्याहृतीनां विश्वामित्रो जमदग्निर्भरद्वाजो भृगुरिति क्रमेण ऋषयः। अग्निर्वायुः सूर्यः प्रजापतिरिति क्रमेण देवताः। गायत्र्युष्णिगनुष्टुब्बृहतीति क्रमेण च्छन्दांसि। अर्कविवाहप्रधानाज्यहोमे विनियोगः—

'ॐ भूः स्वाहा' अग्नय इदं०। 'ॐ भुवः स्वाहा' वायव इदं०। 'ॐ स्वः स्वाहा'। सूर्यायेदं०। 'ॐ भूर्भुवः स्वः स्वाहा'। प्रजापतय इदं०।

ततोऽन्वाधानोत्कीर्तितपक्षानुसारेणाङ्गहोमादि स्विष्टकृदादि वा सर्वं होमशेषं समापयेत्। नात्र त्रिवृदन्नहोमः।

ततोऽर्कं प्रदक्षिणीकृत्य—

" मया कृतमिदं कर्म स्थावरेषु जरायुणा।
अर्कापत्यानि नो देहि तत्सर्वं क्षन्तुमर्हसि "॥

इति तं संप्रार्थ्य, शं नो वात इति शान्तिं पठित्वा गोयुग्ममाचार्याय दत्त्वे-तरेभ्योऽपि विप्रेभ्यो यथाशक्ति दक्षिणां दद्यात्।

तत आचार्यः स्थापितकुम्भस्थाभिरद्भिः सार्कं प्रतिग्रहीतारमभिषिञ्चेत्।

ततः प्रतिग्रहीता तानि वासांसि त्यक्त्वाऽन्यानि धारयेत्। त्यक्तानि वासांस्याचार्यस्य।

---

* अत्र क. पुस्तकटिप्पण्याम्—" आश्वलायनानां चक्षुष्यभावः " इति वर्तते।

---

१ च. °मभि।

ततः पञ्चमदिवसे पूर्ववदर्कं संपूज्य विसृज्याग्निं संपूज्य पुण्याहादि वाचयित्वा ब्राह्मणान्संभोज्य भूयसीं दत्त्वाऽर्कभूषणवस्त्रादि ब्राह्मणाय दत्त्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत्।

ततो मानुषीं विधिनोद्वहेत्। अयं च[1] बाह्वृचो होमविधिरिदानीं बौधायनोक्तहोमविधेरनुपलम्भादुक्तः।

अयं चार्कविवाहः काश्यपगोत्रिणो न भवति गोत्रैक्यादिति केचित्। अत्र गोत्रैक्यं न दोषायेत्यन्ये। काश्यपगोत्रो वरः स्वगोत्राविरुद्धगोत्रिणमाचार्यं परिकल्प्य तस्मादर्कं प्रतिगृह्णीयात्। आचार्यस्तु सूर्येण दत्तां विभाव्य वरणादौ काश्यपगोत्रस्थाने स्वगोत्रं कन्याविशेषणत्वेन संकीर्त्याऽऽदित्यसवित्रर्कशब्दस्थाने स्वपितामहपित्रोः स्वस्य च क्रमेण नामानि संकीर्तयेत्। एवंरीत्यैव काश्यपगोत्रवरस्यार्कविवाहो निर्वाह्यो[2] भवतीति युक्तं चेत्स्वीकार्यं सूरिभिः।

इत्यर्कविवाहः।

---

# अथाग्निद्वयसंसर्गविधिः।

तत्रेदं बौधायनसूत्रम्—

“ अथ यदि गृहस्थः सदारो द्वितीयां भार्यां विन्देत[3] कथं तत्र कुर्यादिति ज्येष्ठभार्याविवाहहोमो यदि दूरे लौकिकाग्नौ यस्मिन्काले विन्दतोऽग्नी[4] ततो द्वादशाहं त्रयोदशाहं वोभावपि परिचरेदपराग्निमुपसमाधाय संपरिस्तीर्याऽऽज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा द्वितीयायां भार्यायामन्वारब्धायां जुहोति नमस्त ऋषे गदा० एवाब्रह्मन्तवेदस्तु स्वाहेत्यथायं ते योनिर्ऋत्विय इति तं समिधि समारोपयेत्। पूर्वाग्निमुपसमाधायाऽऽजुह्वान उद्बुध्यस्वेति द्वाभ्यां तां समिधमाधाय संपरिस्तीर्य स्रुचि चतुर्गृहीतं गृहीत्वा द्वयोर्भार्ययोरन्वारब्धयोस्तदभिमृशति यो ब्रह्मा ब्रह्मण इत्येतेन सूक्तेन जुहोति चैतेन तत आऽग्निमुखात्कृत्वा पक्वाज्जुहोति समितᳪ संकल्पेथां[5]मिति पुरोनुवाक्यामनूच्याग्ने पुरीष्येति याज्यया जुहोत्यथाऽऽहुतीर्जुहोति पुरीष्यस्त्वमित्याऽन्तादनुवाकस्य स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानादथाग्रेणाग्निं दर्भस्तम्बे हुतशेषं निदधाति ब्रह्म

---

१ क. ग. ङ. च बह्वृ॰। २ ग. निर्बाधो। ३ ग. विन्दते। ४ क. ॰तोऽग्नीं त॰। ५ च. ॰थाᳪसंप्रियमि॰।

जज्ञानं पिता विराजामिति द्वाभ्यामेवमनुष्ठानतन्त्रता परिसिध्यतीत्याह भगवान्बौधायनः ” इति ।

## अथ प्रयोगः ।

कर्ता द्वितीयविवाहहोमकाले वेद्यां स्थण्डिलं कृत्वोल्लेखनादिसंस्कारान्विधाय तत्र पूर्वभार्याया गृह्याग्निं योजकनामानमग्निं प्रतिष्ठापयामीति प्रतिष्ठाप्य तत्र द्वितीयविवाहहोमः कार्यः । प्रतिगृहीतायां वध्वां भार्यात्वसिद्धिद्वारेत्येतावानेवोल्लेखः । गृह्याग्नेरसांनिध्याल्लौकिकाग्नौ क्रियायां तु [न] भवत्येतस्याप्युल्लेखः । यस्मिन्काले द्वावप्यग्नी संनिहितौ भवतस्तत आरभ्य द्वादशाहं त्रयोदशाहं वोभावप्यग्नी होमादिभिः पृथक्परिचरेत् ।

ततस्तदग्रिमे दिने प्रातर्होमद्वयानन्तरमग्निद्वयसंसर्गं कुर्यात् । इदं च परिचरणं द्वादशाहमध्ये त्रयोदशाहमध्ये वा स्थालीपाकस्याप्राप्तौ ज्ञेयम् । यदि त्वन्वारम्भणस्थालीपाकः कर्तव्यो भवति तदा तं कृत्वैव कार्यः ।

ततः प्राङ्मुखः पत्नीभ्यां सहोपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम गृह्याग्निसाध्यानां कर्मणां तन्त्रेणानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गृह्याग्निद्वयसंसर्गमहं करिष्य इति संकल्प्य तदङ्गं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च विदध्यात् । इन्द्राद्यंः प्रीयन्तामिति तत्र विशेषः ।

ततः स्थण्डिलद्वयमुदक्संस्थं कृत्वा स्वं स्वमग्निं पत्नीभ्यामानीतं स्थण्डिलयोरुत्तरतः पृथङ्निधाय दक्षिणस्थण्डिलस्योल्लेखनादिसंस्कारं विधाय तत्र द्वितीयविवाहाग्निं संस्थाप्य प्रज्वाल्य परिस्तीर्योत्तरतो दर्भान्संस्तीर्य स्रुवं दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भानाज्यं समिधं चाऽऽसाद्य पवित्रकरणाद्याज्यसंस्कारान्तं कृत्वाऽऽसादितां समिधमभ्याधाय स्रुवेण दर्व्यां चतुर्गृहीतं[1] गृहीत्वा[2] द्वितीयभार्यान्वारब्धो नमस्त ऋषे गदेत्यस्य सोम इन्द्रो बृहती । होमे विनियोगः । ‘ॐ नमस्त ऋषे०न्तवेदस्तु स्वाहा’ इति जुहोति । इन्द्रायेदं० ।

ततः खादिर्या(रा)द्यन्यतमसमिधं शुद्धोदकेन प्रोक्ष्य तस्यां समिधि द्वितीयभार्यान्वारब्धः, अयं ते योनिरित्यस्याग्निरग्निरनुष्टुप् । समारोपणे[3] विनियोगः । ‘ॐ अयं ते०रयिम्’ इति तं समारोपयेत् ।

ततस्तां समिधं द्वितीयभार्याहस्ते दत्त्वोत्तरस्थण्डिलस्योद्धननादि कृत्वा तत्र

---

१ क. °हीत्वा । २ ग. °तं चतुर्गृही° । ३ क. ख. °रोपे वि° ।

प्रथमविवाहाग्निं संस्थाप्य प्रज्वलयित्वा[1](प्रज्वाल्य), आजुह्वान इत्यस्याग्निरग्नि-स्त्रिष्टुप्। उद्बुध्यस्वाग्न इत्यस्याग्निरग्निस्त्रिष्टुप्। समारूढाग्निकसमिदभ्याधाने विनियोगः—'ॐ आजुह्वानः सु प्र०सीदत' 'ॐ उद्बुध्यस्वा०तन्तुमेतम्' इति समा-रूढाग्निकां समिधमभ्याधाय परिस्तीर्य परिषिच्यालंकृत्य पूर्वसंस्कृतादाज्यादन्य-मा(दा)ज्यं संस्कृतं तस्मात्पूर्वाज्याद्वा स्रुवेण दर्व्या चतुर्गृहीतं गृहीत्वा—यो ब्रह्मा ब्रह्मण इत्यष्टर्चेनाऽऽयुष्यकल्पपठितेन घृतसूक्तेन पत्नीभ्यामन्वारब्धस्त-दाज्यमभिमृशति।

"ॐ यो ब्रह्मा ब्रह्मण उज्जभार प्राणेश्वरः कृत्तिवासाः पिनाकी।
ईशानो देवः स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन ॥ १ ॥
विभ्राजमानः सरिरस्य मध्याद्रोचमानो घर्मरुचिर्य आगात्।
स मृत्युपाशादपनुद्य घोरादिहाऽऽयुषे नो घृतमत्तु देवः ॥ २ ॥
ब्रह्मज्योतिर्ब्रह्मपत्नीषु गर्भं यमादधात्पुरुरूपं जयन्तम्।
सुवर्णरम्भं गृहकर्ममर्चन्तमायुषे वर्धयामो घृतेन ॥ ३ ॥
श्रियं लक्ष्मीमम्बिकामौपलाङ्गां षष्ठीं च यामिन्द्रसेनेत्युदाहुः।
तां विद्यां ब्रह्मयोनिꣳ सरूपामिहाऽऽयुषे तर्पयामो घृतेन ॥ ४ ॥
दाक्षायण्यः सर्वयोन्यः सयोन्यः सहस्रशो विश्वरूपा विरूपाः।
ससूनवः सपतयः सयूथ्या आयुषे नो घृतमिदं जुषन्ताम् ॥ ५ ॥
दिव्या गणा बहुरूपाः पुराणा आयुश्छिदो नः प्रमथन्तु वीरान्।
तेभ्यो जुहोमि बहुधा घृतेन मा नः प्रजाꣳ रीरिषो मोत वीरान् ॥ ६ ॥
एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः।
यमप्येति भुवनꣳ सांपराये स नो हविर्घृतमिहाऽऽयुषेऽत्तु देवः ॥ ७ ॥
वसून्रुद्रानादित्यान्मरुतोऽथ साध्यानृभून्यक्षान्गन्धर्वांश्च पितॄꣳश्च विश्वान्।
भृगून्सर्पांश्चाङ्गिरसोऽथ सर्वान्घृतꣳ हुत्वा स्वायुष्याह्वयाम शश्वत्" ॥ ८ ॥

इत्यभिमृश्यैतेनैव सूक्तेन प्रत्यृचं स्वाहान्ते तदाज्यं जुहोति। ब्रह्मण इदं० १। देवायेदं० २। ज्योतिष इदं० ३। विद्याया इदं० ४। दाक्षायणीभ्य इदं० ५। दिव्येभ्यो गणेभ्य इदं० ६। देवायेदं० ७। वसुभ्यो रुद्रेभ्य आदित्येभ्यो मरुद्भ्यः साध्येभ्य ऋभुभ्यो यक्षेभ्यो गन्धर्वेभ्यः पितृभ्यो भृगुभ्यः सर्पेभ्योऽङ्गिरोभ्य इदमिति क्रमेण त्यागः।

पूर्वत्र समन्त्रकपरिषेकेऽत्रोत्तरः परिषेकः कार्यः।

१ ग. प्रज्वालयित्वा।

ततश्चत्वारि शृङ्गेति ध्यात्वा समित्त्रयमादाय अग्न एहीत्यादि प्राणायामान्तं कृत्वा गृह्याग्निद्वयसंसर्गहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तं प्रसाधनीदेव्यन्तं वोक्त्वा, प्रधानहोमे—अग्निं पुरोनुवाक्यायाज्याभ्यामेकया चर्वाहुत्या यक्ष्ये । अग्निं जातवेदसौ पृथिव्यादीनग्निं वैश्वानरं चैकैकयाऽऽज्याहुत्या यक्ष्ये । निर्ऋतिं पञ्चभिराज्याहुतिभिर्यक्ष्ये । उदकस्पर्शः । इन्द्रमेकयाऽऽज्याहुत्या यक्ष्ये । भूमिकर्षकरूपाग्निं षड्भिराज्याहुतिभिर्यक्ष्ये । कामदुघं सीतां चैकैकयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वा, अन्वाधानोत्कीर्तितपक्षानुसारेणाङ्गहोमे वरुणं द्वाभ्यामित्यादि, अग्निं स्विष्टकृतं हुतशेषचर्वाहुत्या यक्ष्य इत्यादि वा, आत्मन्यग्निग्रहणान्तं कृत्वोत्तरेणाग्निं दर्भान्संस्तीर्य तत्र स्रुवं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रं चरुस्थालीं मेक्षणं शूर्पं कृष्णाजिनमुलूखलं मुसलमुपवेषं संमार्गदर्भानिध्मं बर्हिरवज्वलनदर्भानाज्यं चाऽऽसादयेत् ।

ततो ब्रह्मवरणादि । चरुकल्पेन चरुं श्रपयित्वा स्रुवदर्व्यौ संमृज्याऽऽज्यसंस्कारं कुर्यात् । तत्र पर्यग्निकरणकाले चरुणा सहाऽऽज्यं पर्यग्नि कुर्यात् ।

ततः परिधीन्परिधाय शृतं चरुमभिघार्योदगुद्वास्य बर्हिषि निधाय परिषेकादिव्याहृतिहोमान्तं प्रसाधनीदेवीहोमान्तं वाऽन्वाधानोत्कीर्तनानुसारेण कृत्वा प्रधानहोमं कुर्यात् । दर्व्यामुपस्तीर्य मेक्षणेन मध्यात्पूर्वार्धाच्च चरोरङ्गुलपर्वमात्रमवदाय, पञ्चावत्ती चेत्पश्चार्धात्तृतीयमवदाय, स्रुवेणावत्तमभिघार्य शेषं प्रत्यज्य पत्नीभ्यामन्वारब्धः,

समितमित्यनयोरग्निर्ऋषिः । अग्निर्देवता । गृह्याग्निद्वयसंसर्गप्रधानचरुहोमे विनियोगः । 'ॐ समित९ संकल्पे० न्याकरम् ' । 'ॐ अग्ने पु० धेहि स्वाहा ' इति पुरोनुवाक्यायाज्याभ्यां जुहोति । अग्नय इदं० ।

अथवैकश्रुत्येन प्रथमामृचमुक्त्वा त्रिमात्रं प्रणवं संयोज्य तेन सहैकश्रुत्येन द्वितीयामृचमुक्त्वाऽन्त्यं स्वरं प्लावयित्वा स्वाहाकारेण जुहुयात् ।

यथा—' ॐ समित९ संक० स्यमानौ । इषमूर्जमभिसं० त्तान्याकरो३मग्ने पुरी० त्वं नः । इषमूर्जं यजमानाय धेही३ स्वाहा " इति ।

पञ्चावत्तिनस्तु—

" जामदग्न्या वत्सविदा आर्ष्टिषेणास्तथैव च ।
भार्गवाश्च्यावना और्वाः पञ्चावत्तिन ईरिताः " इति ॥

पुरीष्यस्त्वमित्यादीनामष्टादशानां मन्त्राणामग्निर्ऋषिः । प्रथमस्याग्निर्दे-

१ ख. ग. ङ. च. प्रोक्षणं । २ क. °त्कीर्तितपक्षानु° । ३ क. ख. ग. च. °त्सविदा । ४ ग. ङ. °र्गवच्याव° । ५ च. °वाच्याव° ।

वता, द्वितीयस्य जातवेदसौ, तृतीयस्य पृथिव्यादयः, चतुर्थस्याग्निवैश्वानरः, पञ्चमादीनां पञ्चानां निर्ऋतिः, दशमस्येन्द्रः, एकादशादीनां षण्णां भूमिकर्षकरूपोऽग्निः, सप्तदशस्य कामधुक्, अष्टादशस्य सीता । प्रथमस्यानुष्टुप् । द्वितीयस्य पञ्चपदा पाङ्क्तिः । तृतीयस्य त्रिष्टुप् । चतुर्थस्यानुष्टुप् । पञ्चमादीनां षण्णां त्रिष्टुप् । द्वादशत्रयोदशयोर्गायत्री । चतुर्दशस्य त्रिष्टुप् । पञ्चदशस्य पञ्चपदा पङ्क्तिः । षोडशस्य त्रिष्टुप् । सप्तदशस्य विराडनुष्टुप् । अष्टादशस्य त्रिष्टुप् । गृह्याग्निद्वयसंसर्गप्रधानाज्यहोमे विनियोगः—

" ॐ पुरीष्यस्त्व० सदः स्वाहा " अग्नय इदं० ।
" ॐ भव तं नः० मद्य नः स्वाहा " जातवेदोभ्यामिदं० ।
" ॐ मातेव पुत्रं० मुञ्चन्तु स्वाहा " पृथिव्यादिभ्य इदं० ।
" ॐ यदस्य पारे० वैश्वानर स्वाहा " अग्नये वैश्वानरायेदं० ।
" ॐ नमः सुते नि० रोहयेम९ स्वाहा " निर्ऋतय इदं० ।
" ॐ यत्ते देवी० प्रमुक्तः स्वाहा " निर्ऋतय इदं० ।
" ॐ यस्यास्ते अस्याः क्रूर० विश्वतः स्वाहा " निर्ऋतय इदं० ।
" ॐ असुन्वन्तम० तुभ्यमस्तु स्वाहा " निर्ऋतय इदं० ।
" ॐ देवीम० विचष्टे स्वाहा " निर्ऋतय इदं न मम ।

पञ्चसूदकस्पर्शः ।

" ॐ निवेशनः संगमनो० पथीना९ स्वाहा " इन्द्रायेदं० ।
" ॐ संवरत्रा दधातन० मक्षित९ स्वाहा " भूमिकर्षकरूपायाग्नय इदं० ।
" ॐ निष्कृताहावम वट९० अक्षित९ स्वाहा " भूमिकर्षकरूपायाग्नय इदं० ।
" ॐ सीरा युञ्जन्ति० सुम्नया स्वाहा " भूमिकर्षकरूपायाग्नय इदं० ।
" ॐ युनक्त सीरा० मायात्स्वाहा " भूमिकर्षकरूपायाग्नय इदं० ।
" ॐ लाङ्गलं पवीरव९० वाहन९ स्वाहा " भूमिकर्षकरूपायाग्नय इदं० ।
" ॐ शुनं नः फाला० मस्मासु धत्त९ स्वाहा " भूमिकर्षकरूपायाग्नय इदं० ।
" ॐ कामं कामदुघे धुक्ष्व० प्रजाभ्यः स्वाहा " कामदुह इदं० ।
" ॐ घृतेन सीता मधुना समक्ता० म्याववृत्स्व स्वाहा " सीताया इदं० ।

ततो दर्व्यामुपस्तीर्य मेक्षणेनैव चरोरुत्तरार्धादङ्गुष्ठपर्वतोऽधिकमवदाय, पञ्चावत्ती चेद्द्विरवदाय द्विरभिघार्य न हविः प्रत्यभिघारयति—" ॐ यदस्य कर्मणोऽत्यरीरिच० समर्धयित्रे स्वाहा " इत्यैशान्यां जुहोति । अग्नये स्विष्टकृत इदं न मम ।

ततो मेक्षणमनुप्रहृत्य संस्रावेणाभिजुहोति। न वा मेक्षणप्रहरणम्। अयं चावदानधर्मो भाष्यकृदभिमतः। अन्येषां मते तु न। अवदानधर्माभावे स्रुवासादनं नास्ति।

ततः शुल्बप्रहरणादि समानम्। अत्र दक्षिणा धेनुः। दक्षिणादानोत्तरमग्रेणाग्निं दर्भस्तम्बं निधाय, ब्रह्म जज्ञानं पिता विराजामित्यनयोर्मन्त्रयोर्विश्वे देवा ब्रह्म त्रिष्टुप्। हुतशेषस्थापने विनियोगः—'ॐ ब्रह्म जज्ञानं प्रथमं० विवः' 'ॐ पिता विराजा० वर्धयन्तः' इति द्वाभ्यां तत्र हुतशेषं संस्थापयेत्।

ततोऽग्निं संपूज्य भस्म धृत्वा भूयसीं दत्त्वा यथाविभवं ब्राह्मणान्संभोज्य कर्मसाद्गुण्याय विष्णुं स्मरेत्।

अत्र केचित्पृथगौपासनाग्निधारणहोमादिष्वशक्तस्यायं विधिः, शक्तस्य तु पृथगेव धारणादीति वदन्ति तन्न। अदृष्टकार्येषु शास्त्रं विनेच्छया पक्षान्तरस्वीकारस्यायुक्तत्वात्। तदा पृथग्धारणपुरःसरहोमादिबोधकशास्त्रस्याभावात्। शास्त्राभावेऽपीच्छया शास्त्रविरुद्धपक्षाश्रयणे दोषदर्शनात्।

तथा च संग्रहे—

"बौधायनादिभिः प्रोक्तं विधानं धर्मनिर्णये।
तदन्यथा हेतुवादैः कुर्वन्गच्छत्यधोगतिम्॥
आयुषा च प्रहीयेत गुर्वधिक्षेपदोषतः" इति।

तथा च व्रतं समाप्य द्वादशाहं त्रयोदशाहं वा पृथगग्निधारणं तत्र होमं च कुर्यात्। अन्यतरस्या मरणदशायां तु, औपासनाग्निं विभज्यैकं भागं तदीय एवायमग्निरिति विभाव्य तेन भागेन तां संस्कुर्यात्। विद्यमानभार्याग्निभाग एवौपासनादि चरेत्। आत्मार्थमौपासनाग्न्येकदेशधारणमिति पक्षे तत्राप्येवमेवौपासनहोमादि।

इति संस्काररत्नमालायामर्कविवाहाग्निद्वयसंसर्गप्रयोगः।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां द्वादशं प्रकरणम्॥ १२॥

---

१ च. 'मं कु'।

अथ त्रयोदशं प्रकरणम् ।

# अथौपासनहोमः ।

तत्रेदं सूत्रम्—" नित्यᳪ सायं प्रातर्व्रीहिभिर्यवैर्वा हस्तेनैते आहुती जुहोत्यग्नये स्वाहा प्रजापतये स्वाहेति सौरीं पूर्वां प्रातरेके समामनन्ति " इति ।

नित्यं सदा प्रत्यहं सायंप्रातर्व्रीहिभिर्यवैर्वा हस्तेनैव वक्ष्यमाणे आहुती जुहोति । के ते । अग्नये स्वाहा प्रजापतये स्वाहेति । प्रातर्होमे सूर्यदेवत्यां सूर्याय स्वाहेत्येवंरूपां पूर्वामग्नये स्वाहेत्याहुतिस्थान एक आचार्या वदन्तीति । नित्यग्रहणमत ऊर्ध्वं पर्वशब्दयोरननुवृत्त्यर्थं तेन गृहप्रवेशनीयात्प्रागपि होमः प्रात्यहिकत्वरूपनित्यता च सिध्यति । अन्यथा गृहप्रवेशनीयोत्तरमुपादानान्नियमेन गृहप्रवेशनीयोत्तरभावित्वं पर्वस्वेव क्रिया च स्यात् । अथवा नित्यग्रहणं यावज्जीविकत्वार्थम्, अग्निहोत्रदर्शनात्सायंप्रातर्होमयोर्जीर्णस्य वा विरमणमित्येतदपि स्यात्तन्मा भूदिति । एतेनेदमपि ज्ञायतेऽग्निहोत्रकालोऽस्यापि कालः । अग्निहोत्रद्रव्यसंस्कारवद्द्रव्यसंस्कारः । सायमारम्भो न प्रातः । उद्धरणकालश्चास्य प्रादुष्करणकाल इति ।

उक्तं च बह्वृचैः—

" तस्याग्निहोत्रेण प्रादुष्करणहोमकालौ व्याख्यातौ " इति ।

अस्मिन्पक्षेऽत ऊर्ध्वमित्यधिकारात्प्राग्गृहप्रवेशनीयान्नास्ति होमः । य एव विवाहापरिसमाप्ततारूपो हेतुः स्थालीपाकाभावे सायंप्रातर्होमाभावेऽपि स एवेति । एतेन ज्ञायते गृहप्रवेशनीयान्तो विवाहः संगमार्थं चतुर्थीहोम इति । हस्तग्रहणं दर्वीनिवृत्त्यर्थम् । एते इतिवचनमाहुत्योर्नियमार्थं तेन द्रव्यस्यानियमादग्निहोत्रद्रव्याणां दशानामेकं स्यात् ।

तदुक्तं बह्वृचैः—" हौम्यं[1] तु मांसवर्जं कामं[2] तु व्रीहियवतिलैः " इति ।

योग्यतयैवाऽऽहुतिसंप्रत्यये सिद्ध आहुतिवचनं नियमार्थम्, आहुती एव केवले स्यातां नेतरत्तन्त्रमिति । अस्मिन्कल्पे परिस्तरणपरिषेकयोरपि निवृत्तिः । हस्ताग्रेणापि कदाचिद्धोमः स्यात्स मा भूत्, किंतु जुहूवद्धस्तोत्तरपार्श्वेनैव होमो नियत इतिज्ञापनार्थं चेति ।

---

१ ग. होम्या । च. सौम्यं । २ ङ. च काम्यं ।

अग्निहोत्रोद्धरणकालः श्रौतसूत्रे—

" अधिवृक्षसूर्ये सायमग्निहोत्रायोषसि प्रातरग्निहोत्राय " इति।

पूर्वसूत्रादुद्धरतीत्यनुकृष्यते। कालद्वयसंबन्धेन नामद्वयमिदम्। प्रधानस्य साङ्गस्य कालात्पूर्वतन एव कालेऽनुदितेऽनस्तमिते चोद्धरणमित्यर्थः। वृक्षानधिकृत्य सूर्यो वर्तते नाधस्तान्नोपरिष्टात्स कालोऽधिवृक्षसूर्यः। तत्र सायमग्निहोत्रार्थमुद्धरणम्। एवमुषसि प्रातरग्निहोत्रार्थम्। सूर्यशब्देन किरणा लक्षणयोच्यन्ते। उदयोत्तरं होमपक्षेऽप्युषस्येवोद्धरणम्। एवं सायमस्तोत्तरं होमपक्षेऽप्यधिवृक्षसूर्य एवेति ज्ञेयम्।

वैखानसस्तु—

" सायमधिवृक्षसूर्येऽर्धास्तमिते वा प्रातरुषसि प्रागुदयाद्वा " इत्याह।

कात्यायनस्त्वनस्तमितानुदितयोरित्याह। असंभवे तदपि ग्राह्यम्। एतच्च सूत्रं यः प्रधानस्य कालः सोऽङ्गानामितिपरिभाषाबाधनाय।

होमकालोऽपि श्रौतसूत्रे—

" प्रथमास्तमिते सायमग्निहोत्रं जुहोति नक्षत्रं दृष्ट्वा प्रदोषे वोषसि प्रातरग्निहोत्रं पुरोदयमुदिते वा यर्हि वाक्प्रवदेत्तर्हि होतव्यमित्येकेषाम् " इति।

पूर्वसूत्रेणोद्धरणकाल उक्तस्ततोऽन्यो होमकालोऽनेन दर्शितः। तेन ज्ञायते मध्ये विरामे संध्योपास्तावपि न दोषः। प्रथमास्तमयो नाम सूर्यादर्शनाव्यवहितोत्तरः कालस्तत्र नक्षत्रदर्शने वा घटिकाद्वयात्मकरजनीमुखरूपे प्रदोषे वा सायमग्निहोत्रं जुहोति। त्रिविधोऽपि सायंकाल एव। तथा प्रातःकालोऽपि घटिकाद्वयं पूर्वमुदयात्, उदयाव्यवहितपूर्वकाले वोदिते वेति त्रिधा। तत्र प्रातरग्निहोत्रम्। यदा वाक्पक्षिणां प्रकटा भवेत्तदा प्रातरग्निहोत्रं होतव्यमित्येके शाखिन इति वैजयन्तीकृता व्याख्यातम्। ( *' अनुदितहोमिभिरर्घ्यं दत्त्वा सूर्योदयात्पूर्वं हुत्वा गायत्री जपितव्या। उदितहोमिभिस्तु जपित्वा होतव्यम् ' इति आचाररत्ने पृथ्वीचन्द्रः। )

उद्धरणे दुहितृस्नुषयोरपि कर्तृत्वमुक्तं कात्यायनेन—

" दुहित्रा स्नुषया वाऽपि विहारो न विरुध्यते " इति।

एतच्च होमकर्तुरुद्धरणासंभवे ज्ञेयम्। विहारो विहरणमुद्धरणमिति यावत्।

उदितादिषु कालेषु होममाह मनुः—

" उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्तते होम इतीयं वैदिकी श्रुतिः " इति॥

---

* धनुश्चिह्नान्तर्गतं क. ख. पुस्तकयोर्नास्ति।

एतेषां स्वरूपमुक्तं कात्यायनेन—

" रेखामात्रस्तु दृश्येत रश्मिभिस्तु दिवाकरः ।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत् ॥
रात्रेः षोडशके भागे ग्रहनक्षत्रभूषिते ।
कालं त्वनुदितं ज्ञात्वा तत्र होमं समाचरेत् ॥
तथा प्रभातसमये नष्टे नक्षत्रमण्डले ।
रविर्यावन्न दृश्येत समयाध्युषितः स तु " इति ॥

उदितस्योत्तरावधिश्चन्द्रिकायां कात्यायनेनोक्तः—

" हस्तादूर्ध्वं रविर्यावद्गिरिं भित्त्वा न गच्छति ।
तावद्धोमविधिः पुण्यो नान्योऽस्त्युदितहोमिनाम् " इति ।

अस्तमितस्वरूपमप्युक्तं तेनैव—

" यावत्सम्यङ्न भाव्यन्ते नभस्यृक्षाणि सर्वतः ।
लोहितत्वं च नापैति तावत्सायं तु हूयते " इति ।

गौणकालमाहतुर्वैखानसाश्वलायनौ—

" प्रदोषान्तो होमकाल[1]ः सायं संगवान्तः प्रातः " इति ।

प्रदोषो रात्रेः पूर्वश्चतुर्थो भागः सोऽन्तो यस्य । केषांचिन्मते पञ्चम(मी)षष्ठ्यौ नाडिके प्रदोषशब्देनोच्येते । तदन्तो वा होमकालः । संगवः पञ्चधाविभक्तस्याह्नो द्वितीयो भागः । दिवसस्य द्वितीयो याम इति देवत्रातोक्तिस्तु भागाभिप्रायेण । एतच्च सूत्रं गौणकालविधानपरम् । प्रदोषसंगवयोर्गौणकालयोरनापद्यपि होमे नैतत्प्रायश्चित्तम् । सर्वप्रायश्चित्तं तु भवत्येव ।

गृह्यपरिशिष्टेऽपि—' प्रदोषान्तो होमकालः सायं संगवान्तः
प्रातर्नात्र तन्त्रमिष्यते ' इति ।

प्रदोषसंगवयोः स्वरूपमाहाऽऽश्वलायनः—

" पश्चादस्तमयात्कालो यो भवेत्रिमुहूर्तकः ।
स सायं होमकालश्च प्रदोषान्त उदाहृतः ।
यस्तु षण्नाडिकः कालः पश्चादेवोदयाद्रवेः ।
स होमकालो विप्राणां संगवान्त इति स्मृतः " इति ।

---

१ ख. ग. ङ. च. ॰लः सं॰ ।

एतद्गौणकालातिक्रमप्रायश्चित्तमाह स एव—

" तमतिनीय चतुर्गृहीतमाज्यं जुहुयाद्यदि सायं
दोषावस्तर्नमः स्वाहा यदि प्रातः प्रातर्वस्तर्नमः स्वाहा " इति।

यत्तु माविलगृह्यम्—

" अथ यदि गृह्येऽग्नौ सायंप्रातर्होमयोर्हव्यं होतारं नाधिगच्छेत्कथं कुर्या[1]-
दासायमाहुतेः प्रातराहुतिर्नात्येत्याप्रातराहुतेः सायमाहुतिः " इति।

यत्तु बौधायनवचनम्—

" आसायं कर्मणः प्रातराप्रातः सायं कर्मण आहुतिर्नातिपद्येत पार्वणं पार्व-
णान्तरात् " इति।

यच्च निदानसूत्रम्—

" सर्वमहः प्रातराहुतेः स्थानं सर्वा रात्रिः सायमाहुतेः पूर्णः पक्षो दर्शस्य
कृष्णः पक्षः पूर्णमासस्य " इति।

तद्ग्रामभ्रंशादिमहापत्तिविषयम्।

प्रथमौपासनहोमे विशेषमाह शौनकः—

" यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति।
उपक्रम्योत्तरस्याह्नः सायं परिचरेदमुम् " इति।

सुदर्शनभाष्ये तु यदि रात्रौ नवनाडिकामध्येऽग्न्युत्पत्तिस्तदा तदैव होमा-
रम्भः। तदुत्तरं चेत्परदिने सायमारम्भ इत्युक्तम्।

## अथ होमद्रव्याणि।

तत्र व्रीहयो यवा वा मुख्याः। " नित्यꣳ सायंप्रातर्व्रीहिभिर्यवैर्वा हस्तेनैते
आहुती जुहोति " इति गृह्योक्तत्वात्।

चन्द्रिकायां स्मृत्यन्तरे—

" हविस्तु त्रिविधं प्रोक्तं कृतं चैव कृताकृतम्।
अकृतं च क्रमादेषां लक्षणं सम्यगुच्यते।
कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम्।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः " इति।

अकृतं प्रक्षाल्य होतव्यम्। तथा च च्छान्दोग्यगृह्यम्—' अकृतं[2] चेत्प्रक्षाल्य
जुहुयात् ' इति।

---

१ ग. °र्यादित्यासा°। ङ. च. °र्यायत्त्वासा°। २ ख. ग. ङ. च. कृतं।

**स्मृत्यन्तरे**—" शालिश्यामाकनीवारा व्रीहिगोधूमयावकाः ।
एतेषां तण्डुला होम्या यावनालाः प्रियंगवः " इति ।

**स्मृत्यन्तरे**—" नीवाराः शालयश्चापि गोधूमा व्रीहयो यवाः ।
स्वरूपेणैव होम्याः स्युः स्वरूपेणैव ते तिलाः " इति ।

**गृह्यपरिशिष्टे**—' पयो दधि सर्पिर्यवागूरोदनस्तण्डुलाः सोमस्तैलमापो व्रीहयो यवास्तिला इति होम्यानि ' इति[१] ( + **तण्डुला नीवारश्यामाकयावनालानां, व्रीहियवगोधूमप्रियंगवः स्वरूपेणापि होम्याः, तिलाः स्वरूपेणैव, तैलं च *तिलजर्तिलातसीकुसुम्भानामिति । ) यावनालाः** ' जोंधळा ' **इति हेमाद्रिः ।**

**स्मृतिभास्करे**—

" यवाभावे तु गोधूमास्ततो वेणुयवादयः ।
छन्दोगवचनाच्चैव जुहुयाद्धविरत्यये ॥
फलं वा यज्ञवृक्षस्य तत्पत्रमथवा जलम् " इति ।

**व्रीहियवौ वर्जयित्वा सर्वाण्यनुकल्पद्रव्याणि । तत्राऽऽदौ व्रीहियवयोर्मध्ये यद्द्रव्यं प्रथमप्रयोगे गृहीतं तदेव सर्वेषु प्रयोगेषु ग्राह्यम् । तदलाभे प्रतिनिधिरेव ग्राह्यो न तु विहितं द्रव्यान्तरमिति प्रतिनिधिप्रकरणेऽभियुक्तैरुक्तत्वात् ।**
" परिगृहीतविषये प्रक्रमात्तु नियम्यते " **इति सूत्रं प्रमाणम् ।**

**अभियुक्तोदाहृतं वचनमपि**—

" रूपं कालोऽनुनिर्वापो देवताश्रपणं तथा ।
आदौ ये विधृताः पक्षास्त एव स्युः सदैव हि " इति ॥

**रूपं रूपवद्द्रव्यमित्यर्थः । क्वचिद्द्रव्यमित्येव पाठः । आग्रयणे द्यावापृथिव्य एककपाल आज्यं वेति । वायव्यं पयो यवागूर्वेत्यादीनि रूपोदाहरणानीति केचित् । रूपं दाक्षायणदर्शपूर्णमासस्वरूपादीत्यन्ये । रूपं क्रियारूपम् । अग्निष्ट इत्यद्भिरभिमृशति सकृत्त्रिर्वेत्यादि, इति परे । प्रथममते—व्रीहिभिर्यवैर्वेत्यादीनि स्मार्तान्युदाहरणानि । द्वितीयमते—आपूर्विकत्वाघारवत्त्वादि । तृतीयमते तु बहून्येतादृशान्युदाहरणानि । पश्चिज्यासंवत्सरे प्राङ्ष्याद्वृत्तिमुखयोर्वेत्यादीनि श्रौतानि कालोदाहरणानि । उभौ कालौ सायं सायं वेत्यादीनि**

---

+ धनुश्चिह्नान्तर्गतं न समीचीनार्थकम् । * जर्तिला आरण्यकृष्णतिलाः । अतसी जवस, कुसुम्भः कर्डी, इति भाषया प्रसिद्धा ।

---

१ क. °पेणैव हो° ।

स्मार्तानि । सद्यस्काला पौर्णमासी व्यहकाला वोदितेऽनुदिते वा जुहोतीत्युभयोदाहरणानि । अनुनिर्वापोदाहरणं तु श्रौतमेव । पौर्णमासानन्तरं वैमृधानुनिर्वाप्यपक्षोऽङ्गीकृतश्चेत्कर्तव्य एवेति । उपांशुयाजदेवता विष्णुः प्रजापतिरग्नीषोमौ वा सांनाय्यमैन्द्रं माहेन्द्रं वा निरूढः पशुरैन्द्राग्नः सौर्यः प्राजापत्यो वेत्येवमादीनि श्रौतानि देवतोदाहरणानि । अग्नये स्वाहा सूर्याय स्वाहेति वेत्येवमादीनि स्मार्तानि । आग्रयण इन्द्राग्नी अग्नीन्द्रौ वेति तूभयोदाहरणम् । श्रपणोदाहरणं तु श्रौतमेव । हविःश्रपणमाहवनीये गार्हपत्ये वेति । एवमादिविकल्पस्थले यः पक्षः पूर्वमङ्गीकृतः स एवाऽऽन्तं स्वीकार्य इत्यर्थः ।

अत्र केचित्—इदमुपलक्षणम् । तेन व्याहृतीभिर्वाऽन्वादधातीत्यादिषु विकल्पस्थलेषु सर्वेष्वपि नियमः सिध्यतीत्याहुः । अस्मिन्मते स्मार्तोदाहरणं जयाभ्यातानराष्ट्रभृदुपहोमादिकं ज्ञेयम् ।

अन्ये तु प्रमाणाभावेनोपलक्षणपरतामन्याय्यां मन्यमानः परिगणितेष्वेवायं नियमो नान्यत्रेति वदन्ति । सायंहोमद्रव्येणैव प्रातर्होमः । एकफलकत्वात् ।

मण्डनोऽपि—" सायंहोमे तु यद्द्रव्यं तदेव प्रातरिष्यते " इति ।

एवं कर्तृनियमोऽपि सर्वथासंभवे यजमानं विना ।

तथा च गदाधरभाष्ये—

" श्रौताग्निमथवा स्मार्तं सायंप्रातर्हुनेद्द्विजः ।
एक एवेति बहवो जुहुयुर्लौकिको भवेत् " [ इति । ]

मदनरत्ने—" एक एव हुनेदग्निं सायंप्रातर्द्विजोत्तमः ।
सायमन्यः प्रातरन्यो जुहुयाल्लौकिको भवेत् " [ इति ॥ ]

स्मृतिसारे—" सायं प्रातश्च जुहुयादेक एव हुताशनम् ।
यदन्यो जुहुयात्प्रातः स वृथाऽग्निर्भवेद्ध्रुवम् ॥
सायं प्रातश्च जुहुयादाहुतीनां चतुष्टयम् ।
एक एवाग्निहोत्रं च स्मार्ताग्निं च विशेषतः " [ इति । ]

गदाधरभाष्ये[1] स्मृतिसंग्रहे—

" यजमानं विना नान्यो जुहुयात्प्रातराहुतिम् " इति ।

१ क. °ष्ये—'य'।

**एतदतिक्रमे समस्तव्याहृतिभिः प्रणवेन चाऽऽज्याहुतिर्होतव्या—**

" कपालनाशने चैव ऋत्विग्द्रव्यविपर्यये ।
पवित्रनाशे वेदे च यत्किंचित्पात्रभेदने ॥
आज्याहुतिश्च होतव्या व्याहृत्या प्रणवेन च " इति ॥

**ऋत्विजां च विपर्यय इति व्याहृत्या प्रणवेन चेत्येवं पाठद्वयाङ्गीकारे द्रव्य-विपर्यये समस्तव्याहृतिहोममात्रम् । व्याहृत्या प्रणवेन वेतिपाठाङ्गीकारेऽपि समस्तव्याहृतिहोम एवात्र नियतः ।** ' अयं च द्रव्यकर्तृनियमः समुदायसंकल्पपक्ष एव ' **इति प्रयोगार्णवे । प्रातर्होमे यजमाने कर्तरि नायं नियम इति केचित् ।**

**होमद्रव्यस्य संस्कार उक्तो बौधायनगृह्ये—**

" होमद्रव्यमवद्योत्य दर्भाग्रे प्रत्यस्य पर्यग्नि कृत्वाऽग्नेः
पश्चात्कूर्चे निदध्यात् " इति ।

**होमात्पूर्वं समिदाधानमवश्यं कर्तव्यम् ।** " नासमित्के जुहुयाद्यदसमित्के जुहुयादहुतमेव तद्भवति " **इति श्रुतौ** " नासमित्के जुहुयाद्यदसमित्के जुहुयाद्यथा ह्यजिह्वेऽन्नं दद्यात्तादृक्तत्तस्मात्समिद्वत्येव होतव्यम् " **इति बौधायनगृह्ये च दोष-श्रवणात् । अनन्तरमपि समिदाधानं पाक्षिकमुक्तं छन्दोगपरिशिष्टे—**" उपरि-ष्टादपि समिन्धनमेके " **इति । एक इतिवचनात्पाक्षिकत्वम् ।**

**अवदानप्रमाणमुक्तं स्मृत्यर्थसारे—**

" प्रस्थधान्यं चतुःषष्टेराहुतेः परिकीर्तितम् ।
तिलानां च तदर्धं तु तण्डुला व्रीहयः समाः " इति ॥

**प्रस्थपरिमितधान्यस्य चतुःषष्ट्यंश इत्यर्थः ।**

**प्रस्थलक्षणं संग्रहे—**

" पलं च कुडवः प्रस्थ आढको द्रोण एव च ।
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः " इति ॥

**पललक्षणमपि तत्रैव—**

" पलद्वयं तु प्रसृतं मुष्टिरेकपलं स्मृतम् " इति ।

**बौधायनस्तु—**

" व्रीहीणां वा यवानां वा शतमाहुतिरिष्यते " **इत्याह ।**

**शतसंख्यधान्यस्यैकाऽऽहुतिरित्यर्थः ।**

**उत्तराहुतिस्तु किंचिदधिका कार्या श्रौतभक्तत्वादस्य ।**

अगस्त्यः—"द्रवद्रव्यस्य मानं स्याद्धारा गोकर्णदीर्घिका" इति।

छन्दोगपरिशिष्टे—

"धान्याहुतिर्द्वादशपर्वपूरिका घृतादिना चेत्स्रुववक्त्रपूरिका।
दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तत्र पावके"इति॥

द्वादशपर्वपूरकद्रव्यासंभवे टोडरानन्दे शङ्खः—

"आर्द्रामलकमात्रा वै ग्राह्या(सा) इन्दुव्रते स्मृताः।
तथैवाऽऽहुतयोऽग्नौ च शौचार्थे या च मृत्तिका" इति॥

होमे विशेषः संग्रहे—

"अङ्गुल्यग्रैर्न होतव्यमकृत्वाऽङ्गुलिभेदनम्।
अङ्गुल्युत्तरपार्श्वेन होतव्यमिति तु स्मृतिः" इति॥

बौधायनोऽपि—

"निर्वपणसंस्रवणलाजहोमनित्यहोमान्कायतीर्थेन कुर्यात्" इति।

नित्यहोम औपासनादिः।

गोभिलीये विशेषः—

"न मुक्तकेशो जुहुयान्नानिपातितजानुकः।
अनिपातितजानोस्तु राक्षसैर्ह्रियते हविः" इति॥

एतच्च सर्वहोमविषयम्।

आचाररत्ने याज्ञवल्क्यः—

"हुत्वाऽग्निसूर्यदैवत्याञ्जपेन्मन्त्रान्समाहितः" इति।

स्मृतिप्रदीपे तु—

"उपतिष्ठेदग्निसूर्यौ तत्तन्मन्त्रैः समाहितः" इत्युपस्थानमुक्तम्।

तेन विकल्पः। सायंहोमेऽग्निदैवत्यमन्त्रजपोऽग्निदैवत्यैरुपस्थानं वेत्येतदन्यतरत्कार्यम्। प्रातर्होमे तु सूर्यदैवत्यमन्त्रजपः सूर्यदैवत्यैरुपस्थानं वेत्येतदन्यतरदिति। अस्मिन्होमे कर्ता स्वयमेव। आचार्येणान्येषामविधानादाश्वलायनेन स्पष्टतया स्वस्यैव मुख्यकर्तृत्वाभिधानाच्च। अशक्तावसांनिध्ये कार्यान्तरासक्तौ वा, ऋत्विगादयः।

तथा च दक्षः—"ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः।
एतैरेव हुतं यत्तु तद्धुतं स्वयमेव तु" इति॥

पुत्रस्थाने पत्नीत्यपि पाठः। स चाऽऽश्वलायनानामनुकूलः। "स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा" इति तत्सूत्रात्। न सत्याषाढसूत्रानुसा-

रिणामनुकूलः "न स्त्री जुहुयान्नानुपेतः" इति धर्मसूत्रे निषेधात् । अत एव कुमारीकर्तृकहोमोऽपि न । अयं च निषेधो द्विजनियमार्थ इति व्याख्यातारः। विट्पतिर्जामाता ।

माधवीये होतृतारतम्यमुक्तम्—

"अन्यैः शतहुताद्धोमादेकः शिष्यहुतो वरम् ।
पुत्रैः शतहुताद्धोमादेको ह्यात्महुतो वरम्" इति ॥

कात्यायनः—"नातिवृद्धो भवेद्धोता नाल्पविद्यो न बालिशः ।
नाऽऽर्तो नासंस्कृतश्चैव अग्निहोत्रादिकर्मसु ॥
नरकं हि पतन्त्येते जुह्वतः स च यस्य तत् ।
तस्माद्वैतानकुशलो होता स्याद्वेदपारगः" इति ॥

वैतान इत्युपलक्षणं स्मार्तकर्मणः ।

गोपालः—"अल्पविद्यैरविद्यैर्वा हुते पत्न्या हुतेऽपि वा ।
जुहुयादग्निहोत्रं च लौकिकाग्नावनापदि ॥
विहृत्य तान्व्यात्हृतिभिः कार्ये पूर्णाहुतीष्टिके" इति ॥

पूर्णाहुतीष्ट्योरत्र समुच्चय इति व्याख्याकृत् । इष्टिरत्र तन्तुमती । बौधायनोक्तेः । स्मार्ते तु, इष्टिस्थाने चरुः । एतच्चानापद्विषयम् । आपदि तु ब्राह्मणमात्रस्याऽऽर्त्विज्यार्थं वरणेऽनादिष्टप्रायश्चित्तेषु आज्यस्थाल्याः स्रुवेणोपहत्य जुहोति प्रजापतये स्वाहा हिरण्यगर्भाय स्वाहा भृगूणां पतये स्वाहाऽङ्गिरसां पतये स्वाहेति सर्वप्रायश्चित्तं च । भृगूणां पतये स्वाहाऽङ्गिरसां तपसे स्वाहेत्येवमपि पाठः । कार्यव्यासक्तावपि पर्वणि तु स्वयमेव 'पर्वणि यजमानः स्वयमग्निहोत्रं जुहोति' इति पर्वणि स्वकर्तृकत्वनियमात् । यद्यपीदं श्रौतं तथाऽपि श्रौतमध्ये स्मार्ताम्नानबलात्स्मार्तेऽपि लभ्यते । न चैवं वपनमपि पर्वणि प्राप्नोतीति वाच्यम् । 'यज्वनः पर्वणोः क्षौरम्' इति वचने यज्वग्रहणेनाऽऽहिताग्नेरेव पर्वणि क्षौरं न स्मार्ताग्निमत इत्येतादृशार्थस्यैव बोधनात् । यदि त्वशक्तिरसांनिध्यं वा तदाऽन्यो जुहुयादेव न तु सर्वथा लोपो नित्यत्वात् ।

शक्तौ सांनिध्ये वा पर्वणि स्वयमजुह्वतः प्रायश्चित्तं बृहस्पतिराह—

"आहिताग्निरुपस्थानं न कुर्याद्यस्तु पर्वणि ।
ऋतौ न गच्छेद्भार्यां वा सोऽपि कृच्छ्रार्धमाचरेत्" इति ॥

१ ख. ग. ङ. ल. एवैवं कु° । २ ग. ङ. च. पतये ।

अत्रोपस्थानग्रहणं होमोपलक्षणम् । ऋत्विगादिभिरयं होमो दंपत्योः संनिधाने सत्येव कार्यः । अभावेऽन्यतरसंनिधाने । उभयोरप्यसंनिधाने हुतमप्यहुतं भवति ।

तदुक्तं स्मृत्यर्थसारे—

" असमक्षं तु होतव्यं दंपत्योर्नर्त्विगादिभिः ।
द्वयोरप्यसमक्षं चेद्भवेद्धुतमनर्थकम् " इति ॥

स्मृत्यन्तरे[1]—" संनिधौ यजमानः स्यादुद्देशत्यागकारकः ।
तदभावे तु पत्नी स्यादुद्देशत्यागकारिणी ॥
*तदभावे तु पुत्रः स्यादुद्देशत्यागकारकः " इति ।

यजमानस्योन्मादे पत्न्यां चर्तुमत्यां प्रसूतायां वा नानुज्ञा पत्न्याः ।

" असंनिधौ तु पत्न्याः स्यादध्वर्युस्तदनुज्ञया ।
उन्मादे प्रसवे चर्तौ कुर्वीतानुज्ञया विना " ॥

इति मदनपारिजाते स्मृतेः । एतस्मादेव वचनाज्ज्ञायत ऋत्विगादीनां होमार्थमनुज्ञापेक्षाऽस्तीति ।

अस्ति च स्पष्टं कौर्मे वचनम्—

" ऋत्विक्पुत्रोऽथवा पत्नी शिष्यो वाऽपि सहोदरः ।
प्राप्यानुज्ञां विशेषेण जुहुयात्तु यथाविधि " इति ॥

विशेषेणेति वचनं ममाऽऽवश्यकं कार्यं किंचिदस्ति मम काचिदापदस्ति त्वया होमः कार्य इति विशेषतोऽनुज्ञापेक्षणार्थम् ।

अन्यच्च स्मृत्यर्थसारे—

" नोपवासी प्रवासे स्यात्पत्नी धारयते व्रतम् ।
सर्वथा यजमानो[2] हि त्यजेत्तद्दिङ्मुखः शुचिः " इति ॥

तद्दिङ्मुखो यस्यां दिश्यग्नयो भवन्ति तद्दिगभिमुख इत्यर्थः ।

ऋत्विग्लक्षणमाहाऽऽश्वलायनः—

" ऋत्विजो वृणीतेऽन्यूनानतिरिक्ताङ्गान्ये मातृतः पितृतश्चेति यथोक्तं पुरस्ताद्यून ऋत्विजो वृणीत इत्येके " इति ।

* इदमर्धं क. ख. पुस्तकस्थम् ।

१ ग. ङ. च. आचाररत्ने स्मृत्यर्थसारे । २ ङ. ॰नोऽपि त्य॰ ।

लाट्यायनद्राह्यायणावपि—

" ऋत्विगार्षेयोऽनूचानः साधुचरणो वाग्ग्म्यन्यूनाङ्गोऽनतिरिक्ताङ्गो द्वयसतोऽ(मोऽ)नतिकृष्णोऽनतिश्वेतः " इति ।

प्रमाणे द्वयं द्वयं समं यस्य स द्वयसत(म) इत्यग्निस्वामिधन्विभ्यां व्याख्यातम् ।

वाधूलोऽपि—" आर्षेयं वृणीते यः स्वानृषीञ्जानाति " इति ।

एतेनाप्रज्ञातबान्धवानां निवृत्तिः ।

बौधायनोऽपि—

" अथर्त्विजां वरणं विज्ञायते ब्राह्मणा ऋत्विजो योनिगोत्रश्रुतवृत्तसंपन्ना अविगुणाङ्गा अत्रिकिणिनो न परि[1]खातिक्रान्ता नान्तगा नान्तजा नाननूचाना न हालेयवालेयपुत्रिकापुत्रपरक्षेत्रसहोढकानीनानुजावरद्विप्रवराः " इति ।

तथा—" योनिवृत्तविद्याः प्रमाणमित्येक इति तांश्चेद्वृणीताव्यापन्नाङ्गानेव वृणीत " इति ।

योनिः परिशुद्धयोनिः । गोत्रं सद्वंशः । श्रुतमध्ययनम् । वृत्तमाचारः । तैः संपन्ना युक्ताः । अविगुणाङ्गा अव्यापन्नाङ्गाः । अत्रिकिणिनः, त्रयः किणा येषां ते त्रिकिणिनः । किणा आघातादिना देहगतानि चिह्नानि । अत्रत्यत्रिकिणशब्देन मल्लयुद्धसंनाहार्थास्फोटनज्याघातभारादिवहनैरुत्पन्नाः किणा विवक्षिताः । एतादृशकिणत्रयमध्य एकेनापि किणेन युक्ता न भवेयुरित्यर्थः । इदमुपलक्षणम् । अविहितकार्येषु भूयोभ्यासजनितचिह्नयुक्ता न भवेयुरिति बोध्यम् । न परिघा(खा) तिक्रान्ताः परिघा(खा) मर्यादा समुद्रवेला तामतिक्रान्ताः समुद्रयायिनो न भवेयुरित्यर्थः । नान्तगाः । अन्तं देशं प्रत्यन्तदेशं म्लेच्छदेशमिति यावत् । तं गच्छन्तीत्यन्तगास्ते न भवेयुः । अन्तवर्णं गच्छन्ति शूद्रस्त्रियं गच्छन्तीति यावत् । ते न भवेयुरित्यन्ये । अन्तामित्युपलक्षणम् । अगम्यां स्त्रियं ये गच्छन्ति तेऽपि न भवेयुरिति द्रष्टव्यम् । नान्तजाः । अन्तजाः पूर्वोक्तदेशजातास्ते न भवेयुः । शूद्रस्त्रियामुत्पन्ना न भवेयुरित्यन्ये । नाननूचाना अननूचाना अश्रोत्रियास्ते न वरणीयाः । हलेन कृषिं कृत्वा ये जीवन्ति ते हालेयाः । वालमूर्णाप्रकीर्णकादिकं विक्रीय ये जीवन्ति ते वालेयाः ।

---

१ ग. 'रिघाति' ।

कन्यादानसमये—

" अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति "

इत्यभिसंधानेन दत्तायां पुत्रिकायां जाताः पुत्रिकापुत्राः। परक्षेत्रे जारेणोत्पन्नाः परक्षेत्राः। विवाहसमय एव गर्भस्थत्वेन मात्रा सह दत्तः सहोढः। कन्यायामविवाहितायां जातः कानीनः। अनुजस्य गुणभूतो ज्येष्ठोऽनुजावरः। एकस्मिन्गोत्र उत्पन्नोऽपरस्मिन्गोत्रे दत्तो द्विप्रवरः। एतान्हालेयादीनृत्विक्त्वेन न वृणीत इत्यर्थः। योनिः परिशुद्धयोनिः। वृत्तमाचारः। विद्या वैदिकविद्या च प्रमाणं वरणप्रयोजकमित्येक आचार्या वदन्तीत्यर्थः। तान्योनिवृत्तविद्यासंपन्नान्यदि वृणीत तदाऽव्यापन्नाङ्गानेव वृणीतेत्यर्थ इति व्याख्यातं भाष्यकृता।

धर्मसूत्रेऽपि—" नाननूचानमृत्विजं वृणीते न पणमानम् " इति।

साङ्गस्य वेदस्याध्येता प्रवक्ता चानूचानः। नानूचानोऽननूचानः। एतादृशमृत्विजं न वृणीते। नाप्येतावद्देयमिति परिभाषमाणमिति व्याख्यातमुज्ज्वलाकृता। धर्मसूत्रे वचनमौपासनहोमपार्वणस्थालीपाकवैश्वदेवादिषु ऋत्विक्कर्तृकताऽपि पक्षेऽस्तीति प्रदर्शयितुम्।

आपस्तम्बोऽपि—

" ब्राह्मणानार्षेयानृत्विजो वृणीते यूनः स्थविरान्वाऽनूचानानूर्ध्ववाचोऽनङ्गहीनान् ' इति।

ब्राह्मणानामार्त्विज्यमित्यनेनैव सिद्धे पुनर्ब्राह्मणवचनमादरार्थम्। अथवा तस्माद्राजपेययाज्यार्त्विजीन इति श्रुतेः क्षत्रियस्यापि वाजपेययाजिनः प्राप्तिरत्र शङ्किता निरस्यते। बालवृद्धयोः प्रायः क्रियासु पाटवं न स्यादिति युवस्थविरग्रहणम्। ऊर्ध्ववाचः पटुस्थानकरणा इति रुद्रदत्तः। ब्राह्मणवचनमापद्यपि क्षत्रियादिनिवृत्त्यर्थमिति मीमांसकाः।

" द्विजोत्तमानामार्त्विज्यं न तु क्षत्रियवैश्ययोः।
ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः " इति मिश्राः।

रामायणेऽपि—" क्षत्रियो याजको यस्य चण्डालः स विशेषतः।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः " इति।

एतेन क्षत्रियादिवृत्त्युपजीविनोऽपि निराकृता इति नवीनाः। गर्भिणीरजस्वलापतिवरणं न कर्तव्यम्।

तथा च प्रायश्चित्तदर्पणे स्मृतिः—

" रजस्वलाऽङ्गना यस्य गर्भिणी वा यदा भवेत् ।
न यज्ञे वरणे योग्यो गालवो मुनिरब्रवीत् " इति ।

यज्ञशब्देनाऽऽधानादिकर्माणि गृह्यन्ते । एतच्च स्मार्तकर्मोपलक्षणम् ।

रुद्रस्कन्धभाष्ये—

" रजस्वलायां भार्यायामार्त्विज्यं श्राद्धभोजनम् ।
यात्रामम्बुनिधिस्नानं वर्जयेत्तत्पतिः सदा ।

गर्गः— क्षुरकर्म तथाऽऽर्त्विज्यं यात्राम(चा)भ्यङ्गमेव च ।
देवतार्चां(र्चा) परगृहे सागरस्नानमेव च ।
श्राद्धभुक्तिं च(क्तिश्च) वर्ज्यं स्याद्यदि पत्नी रजस्वला ।

शाट्यायनिः— रजस्वलापतिर्यात्रामार्त्विज्यं श्राद्धभोजनम् ।
सिन्धुस्नानं तथाऽभ्यङ्गं क्षुरकर्म च वर्जयेत् ।

तत्र ऋत्विजस्त्रिविधा देवभूताः पितृभूता मनुष्यभूताश्च । तत्र स्वेनैव कर्मणि कर्मणि वृतास्ते देवभूताः । ये तु पूर्वैर्वृता एव कर्मणि प्रवर्तन्ते ते पितृभूताः । ये तु स्वेनैव सर्वकर्मार्थं सकृदेव वृतास्ते मनुष्यभूताः " इति ।

तत्रेदानीं मनुष्यभूता एवर्त्विजः । आशौचं तु पितृभूतदेवभूतानामेवर्त्विजां न मनुष्यभूतानामिति द्रष्टव्यम् । होमे पत्न्या अपि सांनिध्यमपेक्षितम् । 'पत्युर्नो यज्ञसंयोगे' इति पाणिनिस्मृत्या पत्नीशब्दस्य यज्ञसंयोग एवोत्पन्नत्वात् । 'असमक्षं तु होतव्यं दंपत्योर्नर्त्विगादिभिः' इतिवचनाच्च ।

असंनिधाने सर्वप्रायश्चित्तं होतव्यम् । अनालम्भुका चेन्न दोषः । प्रवसति यजमाने यदाऽनालम्भुका तदा तया गृहान्तरान्तरितया न स्थातव्यं किं त्वौपासनाग्निगृहसमीपे बहिरेवेत्यग्निहोत्रहोमप्रायश्चित्तप्रकरणे व्याख्यातारः ।

श्रौतस्मार्तहोमयोः पूर्वापरभावे पक्षद्वयमाह भरद्वाजः—

" होमं वैतानिकं कृत्वा स्मार्तं कुर्याद्विचक्षणः ।
स्मृतीनां वेदमूलत्वात्स्मार्तं केचित्पुरा विदुः " इति ।

उ(औ)पासनप्रशंसा भरद्वाजसूत्रे—

" यथैश्वर्यबलादीश्वराः स्वान्देहान्परित्यज्यान्येषां देहान्प्रविश्य पुनरात्मदेहान्प्रत्यागच्छन्ति, न च तेन दुर्ज्ञायते, औपासनेऽग्नयो विनि(निवि)ष्टा औपासनौ(नो) यजमाने,तस्मादौपासनान्न प्रमदितव्यं यथ ऋषभ ऋष-

भार्यां वत्सं जनयत्येवमौपासनेऽग्निहोत्रं व्यापन्नं भूयो जनयति, औपासनस्यैवैषा संततिर्यदग्निहोत्रं तद् तथा न कुर्यान्न विद्यत औपासनाग्निहोत्रयोर्विवेचनमुभयं जुहुयादौपासनमग्निहोत्रं चाथापि विज्ञायते सप्त पाकयज्ञसंस्था औपासने चतुर्दशाग्निहोत्रे " [ इति ] ।

औपासनहोमं प्रशंसत्यङ्गिराः—

" यद्दद्यात्काञ्चनं मेरुं पृथिवीं च ससागराम् ।
तत्सायंप्रातर्होमस्य तुल्यं भवति वा न वा " इति ।

अकरणे प्रत्यवायमाह गर्गः —

" कृतदारो न तिष्ठेत क्षणमप्यग्निना विना ।
तिष्ठेत चेद्द्विजो व्रात्यस्तथा च पतितो भवेत् ।
यथा स्नानं यथा संध्या वेदस्याध्ययनं यथा ।
तथैवौपासनं कार्यं न स्थितिस्तद्वियोगतः ।
यो हि हित्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ।
यत्र नाश्नन्ति वै देवाः पितरोऽतिथयस्तथा ।
वृथापाकः स विज्ञेयो न तस्याद्यात्कथंचन ।
वृथापाकस्य भुञ्जानः प्रायश्चित्तं समाचरेत् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति " इति ।

प्रतिप्रसवमाह स एव—

" पितृपाकोपजीवी च भ्रातृपाकोपजीवकः ।
ज्ञानाध्ययननिष्ठो वा न दुष्येताग्निना विना " इति ।

बौधायनेन विधुरस्य विवाहासामर्थ्येऽनाश्रमित्वदोषपरिहारायोपाय उक्तः—

" अथातो मृतपत्नीकस्य विवाहासमर्थस्य होमविधिं व्याख्यास्यामः प्रणवेन लौकिकाग्निं परिगृह्यान्वग्निरुषसामग्रमख्यदित्यानीय पृष्टो दिवीति प्रतिष्ठाप्य तत्सवितुस्त्वा सवितुरद्या नो देव सवितर्विश्वानि देव सवितरिति चतसृभिश्चतस्रः समिधोऽभ्याधायाग्निमलंकृत्यौपासनं जुहुयादेवमहरहः काले प्रणवादिहोमान्तं कुर्यादाविवाहादासंन्यासादामरणादनाश्रमदोषो नास्तीत्याह भगवान्बौधायनः " इति ।

१ ख. ग ङ. न. 'सनोऽग्नि' ।

शाकलेन तु पार्वणस्थालीपाकाग्रयणकर्मणोरपि क्रियोक्ता—

" स्थालीपाकद्वयं कुर्यात्तथैवाऽऽग्रयणं च हि ।
कुर्यादित्याहुराचार्यास्तस्मिन्नेव हुताशने " इति ।

भारद्वाजीयपितृमेधसूत्रेऽपि—

" दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयं कुर्याद्दर्शपूर्णमासावाग्रयणं च शेषाणि कर्माणि न भवन्ति " इति ।

अर्धाधानिनाऽपि दर्शपूर्णमासस्थालीपाकौपासनहोमा न कर्तव्या इति केचित् । कर्तव्या इत्यन्ये ।

## अथ प्रयोगः ।

पाणिग्रहणोत्तरं गृहप्रवेशनीयात्प्रागनन्तरं वा यावज्जीवमस्तमितनक्षत्रदर्शन-प्रदोषान्यतमे मुख्यकाले चतुर्धा विभक्ताया रात्रेराद्यभागात्मके गौणकाले वा सायंहोमः । प्रातर्होमस्तूषःपुरोदयोदितपक्षिवाक्प्रवदनकालान्यतमे मुख्य-काले पञ्चधा विभक्तदिवसस्य प्रथमभागद्वयात्मके गौणकाले वा । मुख्यकाल एव प्रथमारम्भ इति केचित् । गौणकालेऽपीत्यन्ये । वस्तुतस्तु गौणकालो विशे-षतो विहित एव ग्राह्यः । अन्यथा तृतीयादिषु प्रथमपार्वणस्थालीपाकानुष्ठाना-पत्तेः । न ह्यत्र गौणकालस्य विशेषतो विधानं किं तु स्वकालादुत्तरो गौण इति सामान्यतो विधानम् । औपासनहोमादौ त्वस्ति विशेषतो गौणकालस्य विधानम्—

" प्रदोषान्तो होमकालः सायं संगवान्तः प्रातः " इति ।

अतः प्रथमौपासनहोमः प्रदोपसंगवात्मके विहिते गौणकालेऽपि भवति । सुदर्शनेनाप्येतदभिप्रेत्यैवेत्थमुक्तम्—यदि नव नाड्यो नातीताः स्युस्तदा प्रथ-मौपासनारम्भ इति । सायमेवोपक्रमः । सायंप्रातरेकमेव द्रव्यमेक एव कर्ता । पर्वणि स्वयमेव जुहुयात् ।

सपत्नीकः कर्ताऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्री-त्यर्थं सत्यधिकारे यावज्जीवं सायंप्रातरौपासनहोमौ होष्यामीति संकल्पं कुर्यात् । अग्निहोत्रहोमारम्भोत्तरमर्धाधानिनाऽप्यौपासनहोमो न कार्य इत्येतन्मतमेव मया स्वी क्रियत इति निश्चिते तु अग्निहोत्रहोमारम्भपूर्वतनकालपर्यन्तं सायं-प्रातरौपासनहोमौ होष्यामीति संकल्पे विशेषः । वस्तुतः करणपक्ष एव युक्तः ।

ततो गणेशं संपूज्य पुण्याहादि वाचयित्वाऽग्निसूर्यप्रजापतयः प्रीयन्तामिति

---

१ ख. ग. ङ. च. °लः सं° ।

वदेत्। प्रातरप्यग्नेर्देवतात्वपक्षेऽग्निप्रजापती प्रीयेतामित्यूहः। एतदन्तं प्रथमप्रयोग एव न तु प्रतिप्रयोगम्।

ततः पुनराचमनप्राणायामदेशकालसंकीर्तनानि कृत्वा श्रीपरमेश्वरप्रीत्यर्थं सायंप्रातरौपासनहोमौ होष्यामि। इदानीं सायमौपासनहोमं व्रीहिभिर्होष्यामीति संकल्पं कुर्यात्। यवैरिति यवपक्षे। अथवा सायमौपासनहोमं व्रीहिभिर्यवैर्वा होष्यामि प्रातरौपासनहोमं व्रीहिभिर्यवैर्वा होष्यामीति भिन्नौ संकल्पौ। अस्मिन्पक्षे न द्रव्यैक्यकर्त्रैक्यनियमः। उभयपक्षेऽपि संकल्पवाक्ये द्रव्योल्लेखो न वा कर्तव्यः।

ततश्चत्वारि शृङ्गेति ध्यात्वाऽग्निं परिस्तीर्य होमद्रव्यमग्नेरुत्तरतो निधाय तदुपरि प्रागग्रां प्रादेशमात्रीमेकां समिधं द्वे वा प्रागग्रे प्रादेशमात्र्यौ समिधौ निधाय दक्षिणेन हस्तेनौपासनाग्नौ प्रज्वलितैर्दर्भैरवाचीनज्वालैरुपरि ज्वलयित्वा ज्वलितान्दर्भान्सव्यहस्ते गृहीत्वा दक्षिणेन दर्भाग्रे अङ्गुष्ठपर्वमात्रे तस्मिन्प्रक्षिप्य प्रज्वलितान्दर्भान्दक्षिणेन हस्तेन बहिर्निरस्याप उपस्पृश्यान्यान्दर्भानादायौपासनाग्नौ प्रज्वलितैः पर्यग्नि कृत्वा तानपि दर्भान्बहिर्निरस्याप उपस्पृश्याग्नेः पश्चात्कूर्चे होमद्रव्यं निदधाति। न वा दर्भाग्रप्रत्यसनं सूत्रान्तरीयत्वात्। अस्मिन्पक्ष उपरिज्वलनोत्तरं सव्यहस्ते ग्रहणं न। श्रौतभक्तत्वात्पर्यग्निकरणं तु भवत्येव। एवं कूर्चे निधानं च। ततः पूर्वपरिषेकं कुर्यात्। ततो विवाहहोम उक्तेन प्रकारेण दक्षिणं हस्तं संमृज्य यस्त्वा हृदेत्यग्निमभ्यर्च्य तूष्णीं होमद्रव्योपरिस्थां समिधं प्रागग्रामग्नावाधाय द्वादशपर्वपरिमितं होमद्रव्यं संस्पृष्टाङ्गुलिदक्षिणहस्ततले गृहीत्वाऽग्नये स्वाहेति ज्वलन्त्यां समिधि मूलाद्‍व्यङ्गुलपरिमितं प्रदेशं त्यक्त्वोत्तरपार्श्वेन जुहोति। अग्नय इदं न मम।

ततः पूर्वाहुतितोऽधिकमवशेषितं होमद्रव्यं सर्वमादाय प्रजापतिं मनसा ध्यायन्प्रजापतये स्वाहेति मनसा मन्त्रमुच्चारयन्पूर्वाहुतितो व्यङ्गुलपरिमितं प्रदेशं त्यक्त्वोत्तरपार्श्वेनैव जुहोति। प्रजापतय इदं न मम। द्रवद्रव्यहोमे तु दर्व्या स्रुवेण वा होमः।

[1]ततो द्वितीयां समिधमादध्यात्। न वा द्वितीयसमिदाधानम्। अस्मिन्पक्षे पर्यग्निकरणकाल एकैव समित्।

ततः परिस्तरणान्यग्नेरुत्तरतो विसृज्योत्तरपरिषेकं कुर्यात्। न वा परिस्तरणपूर्वपरिषेकपरिस्तरणविसर्गोत्तरपरिषेकाः।

---

१ ख. ग. ङ. च. ततो।

ततोऽग्निर्मूर्धेत्यादिमन्त्रत्रयस्याग्निर्ऋषिरग्निर्देवता । गायत्री छन्दः । प्रजापत इत्यस्य विश्वे देवा ऋषयः । प्रजापतिर्देवता । त्रिष्टुप्छन्दः । उपस्थाने विनियोगः । 'ॐ अग्निर्मूर्धा दि० त्वामग्ने० अयमग्निः० ' इति त्रिभिर्मन्त्रैरग्निमुपस्थाय 'ॐ प्रजापते न० ' इति प्रजापतिमुपतिष्ठते । (* जप एव वा । अस्मिन्पक्षे जपे विनियोग इति विनियोगवाक्ये विशेषः । ) ततः संस्थाजपं कृत्वाऽग्निं संपूज्य भस्म धृत्वा श्रद्धां मेधामिति संप्रार्थ्य नमस्कृत्यानेन सायमौपासनहोमेन श्रीपरमेश्वरः प्रीयतामिति कर्मेश्वरायार्पयेत् । प्रातरौपासनहोमे तु प्रातरौपासनहोमं व्रीहिभिर्होष्यामीति संकल्पः । यवैरिति यवपक्षे । अग्नये स्वाहा सूर्याय स्वाहेति वेति पूर्वाहुतौ देवताविकल्पः । अग्नेर्देवतात्वपक्षे सायंहोमवदेवोपस्थानम् । सूर्यस्य देवतात्वपक्षे तु—उद्वयमुदु त्यं चित्रमिति मन्त्रत्रयस्य सोम ऋषिः । सूर्यो देवता । प्रथमस्यानुष्टुप् । द्वितीयस्य गायत्री । तृतीयस्य त्रिष्टुप् । उपस्थाने विनियोगः । 'ॐ उद्वयं० उदु त्यं० चित्रं० ' इति त्रिभिर्मन्त्रैः सूर्योपस्थानं कृत्वा प्रजापत्युपस्थानादि समानम् । तत्र प्रातरौपासनहोमेन श्रीपरमेश्वरः प्रीयतामितीश्वरार्पणवाक्ये विशेषः । पयोहोमे तु पयोधिश्रपणार्थं बहिरङ्गारनिरूहणं कृत्वा तत्राधिश्रित्य स्रुवपरिमितजलप्रत्यसनं कार्यमेव स्वसूत्रोक्तत्वात् । श्रौतभक्तत्वादत्र प्राप्तिः । दधिसोमतण्डुलानां तु अङ्गारेष्वधिश्रयणं प्रतिषेकश्च न । 'यदन्यदधिश्रयणात्प्रतिषेकाच्च तद्ध्नस्तण्डुलाना५ सोमस्य च क्रियते ' इति वचनात् । दध्यत्र लौकिकम् । तण्डुलास्तु व्रीहीणां तत्रैव सार्वजनीनप्रसिद्धेः । सोमस्य रस एव न वल्ली । पूतीकास्तु यागार्थ एव प्रतिनिधिर्वाचनिको न सर्वत्र । एतेषु दर्भाग्रद्वयप्रत्यसने विकल्पो व्रीहियववत् । यवाग्वां तु पूर्वं प्रतिषेकः पश्चादवेक्षणम् ' प्रतिषेकं यवागूं श्रपयति ' इति सूत्रव्याख्यावसरे वैजयन्तीकारोक्तेः । एवमेवौदने । यवागूशब्देन शिथिल ओदन उच्यते । तण्डुलवद्यवगोधूमप्रियंगुव्रीहितिलेषु । तैले दर्भाग्रद्वयप्रत्यसने विकल्पः । आज्ये तु दर्भाग्रद्वयप्रत्यसनं नियतमिति द्रष्टव्यम् । स्वस्यासामर्थ्येऽस्मिन्नौपासनहोम ऋत्विजं त्वामहं वृण इति होमार्थमृत्विजं वृत्वा तेन कारयेत् । त्यागस्तु स्वकर्तृक एव पत्न्या वा । पत्न्या अनधिकारे तु तदनुज्ञाभावेऽप्यृत्विजो वेति द्रष्टव्यम् । अत्र मध्ये प्रायश्चित्तहोमः पतति चेत्तदा होमस्थाने होममन्त्रजप एव । अनाज्यवति कर्मणि जपः । आज्यवति होम इति व्याख्या-

* धनुश्चिह्नान्तर्गतं क. ख. पुस्तकयोरेव ।

तृभिरुक्तत्वात् । दीक्षायां गृहीतायां न दीक्षितो जुहोतीति निषेधात्क्रतुसमाप्तिपर्यन्तं न होमः ।

इत्यौपासनहोमः ।

---

## अथ प्रसङ्गात्समस्यहोमः ।

तत्र प्रजापतिः—

" सायंप्रातस्तनौ होमावुभौ सायं समस्य तु ।
आपन्नो जहुयात्तत्र समिदेकाऽथवा द्वयम् ॥
सायंहोमस्य मुख्यत्वात्तदीयं तन्त्रमिष्यते ।
चतस्र आहुतीः कुर्यात्तत्र द्वे सायमाहुती ॥
द्वे प्रातराहुती सायंहोमे चैका समिद्यदि ।
समित्कृता द्वितीया चेत्सा भवेत्प्रातराहुतौ ॥
द्विः सायंहोमवन्मृज्याद्विः प्रातर्होमवत्स्रुचम्[1] ।
उपस्थानं सकृत्कार्यं शेषं प्रकृतिवद्भवेत् ॥
केचिद्द्वे आहुती हुत्वा संवेश्यैव निमील्य वा ।
विच्छिद्यैवं[2] तु तौ होमौ कुर्याद्द्वे आहुती ततः ॥
गुर्वापदि समस्यन्ते प्रातः सर्वे कदाचन ।
यावन्तोऽत्र समस्यन्ते सर्वे सायमुपक्रमाः ॥
प्रातःकालापवर्गाश्च न तु प्रातरुपक्रमाः " इति ।

## अथ पक्षहोमविधिः ।

तत्र मण्डनस्मृत्यर्थसारौ—

" आमयाव्यार्तिमानापद्गतो वाऽध्वगतोऽपि वा ।
राष्ट्रभङ्गे धनाभावे गुरुगेहे वसन्नपि ॥
अन्येष्वेवंप्रकारेषु निमित्तेष्वागतेषु च ।
समासमग्निहोत्राणां यथासंभवमाचरेत् ॥
निमित्तानामिहैतेषां निर्दिश्यैकं यदुच्यते ।
तत्सर्वेषु निमित्तेषु जानीयात्प्रतिपादितम् ॥
पक्षहोमानशेषान्वा शेषहोमानथापि वा " इति ।

---

१ ङ. च. °त्स्रुवम् । २ ख. ग. ङ. च. °वं तन्तुहो° ।

अग्निहोत्राणामित्यनेनाग्निहोत्रहोमतुल्यत्वादौपासनहोमानामपि ग्रहणम् । ' य आहिताग्नेर्धर्मः स्यात्स औपासनिकस्य तु ' इत्युक्तेः । अशेषान्पक्षत्यादीन्पक्षान्तावधिकान् । शेषान्यत्किंचित्पूर्वावधिकान् ।

यत्तु—" तृतीयायां चतुर्थ्यां वा पञ्चम्यां वा परत्र च ।
तदादीनां तदन्तानां होमानां शेषसंज्ञिता " ॥

इति त्रिकाण्डीवचनात्तृतीयाया एव पूर्वावधित्वं न तु द्वितीयाया इति वदन्ति तत्पामरप्रतारणमात्रम् । एतस्य वचनस्य त्रिकाण्ड्यामनुपलम्भात् ।

मरीचिः—" शरीरापद्भवेद्यत्र भयार्तश्च प्रजायते ।
यथाऽन्यास्वपि चाऽऽपत्सु पक्षहोमो विधीयते ॥
हुतेषु पक्षहोमेषु मध्ये तस्मान्निवर्तते ।
होमं पुनः प्रकुर्याच्चेन्न चासौ दोषकृद्भवेत् " इति ॥

चेदित्यनेन विकल्पः सूच्यते । पक्षहोमग्रहणं शेषहोमोपलक्षणमित्याचाररत्ने ।

बौधायनोऽपि—" अथाऽऽपद्यग्निहोत्राणां समासो राष्ट्रविभ्रमे व्याधिपीडायामध्वगमनप्रसङ्गे गुरुकुलवासापेक्षायां मातृपितृकलत्रपुत्राद्यत्यये बलवतो निरोधादौ देशकालद्रव्यानुपपत्तौ चात्यन्तापत्सु " इति ।

अग्निहोत्राणामग्निहोत्रसंबन्धिनां होमानाम् । राष्ट्रविभ्रमो राष्ट्रविक्षोभः । विशिष्ट आधिर्व्याधिर्मानसं दुःखं, पीडा बाह्यं दुखम् । अत्ययो नाशः । बलवतो निरोधो बलवत्कर्तृको निरोधः । बलवति निरोधादाविति पाठे बलवत्त्वविशेषणं निरोधादीनां द्रष्टव्यम् ।

मण्डनोऽपि—" आपदेवावधिस्तत्र न पक्षगणनावधिः " इति ।

आलस्यादिना समस्यहोमे दोषमाह गोपालः—

" नैतज्जामितया कार्यं न रागान्न च लोभतः ।
नैतच्छक्तिं दधानस्तु कुर्याच्छ्रद्धालुरापदि ॥
अनापद्याचरन्निष्ट्या तन्तुमत्या यजेत सः " इति ।

जामिताऽऽलस्यम् । शक्तिमाञ्जामितया रागेण लोभेन वा नैतत्समस्यहोमविधिमनुतिष्ठेत् । आपदि त्वनुतिष्ठेदेव । अनापदि यद्यनुतिष्ठेत्तदा तन्तुमत्येष्ट्या यजेदित्यर्थः ।

अत्र तन्तुमतीष्टिस्थाने तान्तुमतः स्थालीपाकः।

"य आहिताग्नेः पुरोडाशास्तेऽनाहिताग्नेश्चरवः"।

इति शास्त्रान्तरात्।

यज्ञपार्श्वे तु—"अनातुरोऽप्रवासी च निश्चिन्तो निरुपद्रवः।
पक्षहोमं तु यो दद्यात्स चरेत्पतितव्रतम्" इति॥

पूर्वं प्रायश्चित्तमनभ्यासविषयम्। यज्ञपार्श्वोक्तं त्वभ्यासविषयमिति व्यवस्था। समुच्चय इति केचित्। एवं संततं पक्षत्रयं न कर्तव्यम्।

तथा च मण्डनः—

"तृतीयेऽनन्तरे पक्षे समासं न समाचरेत्" इति।

तथा—"कृच्छ्रेणापि विनिर्वृत्य तत्र होमान्दिने दिने।
पक्षान्तरे पुनः कामं पक्षहोमादिमाचरेत्" इति॥

सर्वथैतदसंभवे स एवाऽऽह—

"आपच्चेदनुवर्तेत यावज्जीवं कथंचन।
यावज्जीवमविच्छिन्नान्पक्षहोमान्समाचरेत्" इति॥

यत्तु चन्द्रिकायां—

"यदि पक्षहोमेन पक्षत्रयमतीयात्पुनराधानम्" इति तदनापत्तिपरम्।

विशेषः स्मृतिभास्करे—

"सर्वथौपवसथ्याहे सायं होमः पृथग्भवेत्।
तथैव यजनीयेऽह्नि प्रातर्होमो भवेत्पृथक्" इति॥

मण्डने:[1]—"पर्वोपवासशून्यं चेत्प्राप्तं केनापि हेतुना।
तदा तत्सायंहोमोऽपि पूर्वैः सह समस्यते" इति॥

## अथ प्रयोगः।

आपन्निमित्तं प्रतिपत्सायंकालमारभ्य चतुर्दशीसायंकालपर्यन्तममुकसंख्याकान्सायमौपासनहोमानापन्निमित्तं द्वितीयाप्रातःकालमारभ्य पौर्णमासीप्रातःकालपर्यन्तममुकसंख्याकान्प्रातरौपासनहोमांश्चापकृष्य तन्त्रेण होष्यामि। तत्रेदानीमापन्निमित्तं प्रतिपत्सायंहोममारभ्य चतुर्दशीसायंकालपर्यन्तममुकसंख्याकान्सायमौपासनहोमांस्तन्त्रेण व्रीहिभिर्यवैर्वा होष्यामीति, सायम्।

१ ख. ग. ङ. च. °नः–'पूर्वो'।

आपन्निमित्तं द्वितीयाप्रातःकालमारभ्यामुकपर्वप्रातःकालपर्यन्तममुकसंख्याकान्प्रातरौपासनहोमांस्तन्त्रेण व्रीहिभिर्यवैर्वा होष्यामीति प्रातः । भिन्नसंकल्पपक्षे तत्रेदानीमित्यन्तं नास्ति । शेषहोमविधौ तु अमुकदिनसायंकालमारभ्य चतुर्दशीसायंकालपर्यन्तममुकसंख्यान्सायमौपासनहोमांस्तन्त्रेण व्रीहिभिर्यवैर्वा होष्यामीति सायम् । अमुकदिनप्रातःकालमारभ्यामुकपर्वप्रातःकालपर्यन्तममुकसंख्याकान्प्रातरौपासनहोमांस्तन्त्रेण व्रीहिभिर्यवैर्वा होष्यामीति प्रातः । अथवाऽऽरभ्येत्यन्तं न कुत्रापि वदेत् । यदा तु केनचिन्निमित्तेन भाविपर्वण्यन्वाधानाभावनिश्चयस्तदा तत्सायंहोमस्यापि पूर्वैः सह समास इति केचित् । एवमप्यापत्तिर्न गच्छेच्चेत्पुनः पक्षान्तरेऽपि तथैव कुर्यात् । तृतीये पक्ष आपत्तौ सत्यामपि न पक्षहोमसमासः । किंतु शेषहोमसमास एव । एवं शेषसमस्ययोरपि । यदि कदाचित्पक्ष[1]होमद्वयानन्तरमत्यावश्यकतया गमनप्रसक्तिस्तदा द्व्याहिकत्र्याहिकसमस्यहोमौ प्रतिपद्दिने कृत्वा ग्रामान्तरं गत्वा शेषहोमाः कार्या इति केचित् । यदि सायंपक्षहोमानन्तरमेव शेषहोमानन्तरमेव वा तस्यामेव रात्रौ प्रातःकालादर्वागेव महदा(हा)पत्तिस्तदा तत्काल एव निमीलनेन दिनव्यवधानं भावयित्वाऽग्नीन्पुनः प्रातःकालवद्विहृत्य प्रातर्होमाः समस्य कार्याः । सायं महत्यापत्तिश्चेत्सायमेव कालद्वयहोमान्कुर्यात् । महदा(हा)पत्तिनिमित्तममुकदिनसायंकालमारभ्य चतुर्दशीसायंकालपर्यन्तममुकसंख्याकान्सायंहोमानमुकदिनप्रातःकालमारभ्यामुकपर्वप्रातःकालपर्यन्तममुकसंख्याकान्प्रातर्होमांश्च सायमेव समासेनामुकद्रव्येण होष्यामीति संकल्प्य यथोक्तविधिपूर्वकं सायंकालिकमाहुतिद्वयं हुत्वा कंचित्कालं विरम्य निमील्यानन्तरमेव प्रातःकालिकमाहुतिद्वयं होतव्यम् । अग्नेर्देवतात्वपक्षे संप्रतिपन्नदेवताकत्वेऽपि निमीलनधर्मेण व्यवधानात्पृथगेवाऽऽहुतिद्वयम् । प्रातर्महत्यामापत्तौ तु महदा(हा)पत्तिनिमित्तममुकप्रातःकालपर्यन्तममुकसंख्याकान्प्रातर्होमानमुकदिनसायंकालमारभ्य चतुर्दशीसायंकालपर्यन्तममुकसंख्याकान्सायंहोमांश्च प्रातरेव समासेनामुकद्रव्येण होष्यामीति संकल्प्य यथोक्तविधिपूर्वकं प्रातःकालिकमाहुतिद्वयं पूर्वं हुत्वा कंचित्कालं विरम्य सायंकालिकमाहुतिद्वयं होतव्यम् । अत्रापि विरामेण व्यवधानात्पृथगेव प्रातराहुतिद्वयम्[2] । यदा तु दीर्घकाल महत्तरापत्तिसंभावना तदा यावज्जीवमविच्छिन्नान्पक्षहोमान्कुर्यात् । सर्वत्राऽऽपत्त्यवसानमेवावधिर्न पक्षगणनावधिः । पक्षहोमे शेषहोमे वा कृते यद्यन्तराल आपन्निवर्तेत तदा प्राग्घुतानां वैकल्पिकी कर्तव्यता ।

---

१ ङ. घ. °क्षद्वयहोमान° । २ क. ङ. च. °मेऽप्यव° । ख. ग. °मेऽप्यंव्य° ।

पक्षहोमादौ कृते सत्युदयास्तमययोः प्रादुष्करणाभावेऽपि न प्रायश्चित्तं तस्य होमार्थत्वादिति वृद्धाः।

इति संस्काररत्नमालायामौपासनहोमपक्षहोमशेषहोमप्रयोगः।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां त्रयोदशं प्रकरणम् ॥ १३ ॥

अथ चतुर्दशं प्रकरणम्।

## अथ पार्वणस्थालीपाकं वक्तुमादौ पर्वनिर्णय उच्यते।

तत्र तयोः क्रमः श्रौतसूत्रे—'पूर्वा पौर्णमास्युत्तराऽमावास्या' इति।

सर्वत्र दर्शपूर्णमासौ निर्दिष्टौ दर्शपूर्वौ, तत्र पाठक्रमेणैवोभयोरनुष्ठाने प्राप्त इदं सूत्रमारभ्यते। 'अल्पाच्तरम्' इति दर्शशब्दस्य पूर्वनिपातेऽपि पूर्वा पौर्णमास्येवेत्यर्थः। श्रुतावप्यारम्भणीयाप्रकरणे सारस्वतहोमार्थवादे 'य एनयोरनुलोमं च' इत्यादिना 'तत्प्रतिलोमम्' इत्यन्तेनानुलोमप्रतिलोमयोः स्वरूपं प्रदर्श्य 'यत्पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावालभेत' इत्यादिना पूर्णमासस्य पूर्वा[न]नुष्ठाने दोषमभिधाय तद्दोषपरिहाराय सारस्वतहोमविधिरिति कृत्वा पूर्वा पौर्णमास्युत्तराऽमावास्येत्येव क्रमः प्रदर्शितः। अत्रानुमन्त्रणसूक्तवाकदेवतायाज्यादीनि बहूनि लिङ्गान्यपि। पार्वणस्थालीपाकयोरप्येवमेव।

तदुक्तं शौनकबौधायनाभ्याम्—

"पौर्णमासी तु संप्राप्ता या विवाहादनन्तरम्।
तदोपक्रम्य कुर्वीत स्थालीपाकं तु पर्वसु।
तत्र यद्यप्यमावास्या विवाहानन्तरं पतेत्।
तथाऽपि पौर्णमास्यादिस्थालीपाकक्रिया स्मृता" इति।

स्मृत्यन्तरमपि—

"चतुर्थीहोमतः पूर्वं प्राप्यते यदि पूर्णिमा।
तत्रैव यागः कर्तव्यो ह्यन्वाधानपुरःसरः" इति।

तत्र विवाहहोमानन्तरं स्थालीपाकारम्भात्पूर्वमधिमासादिकं चेत्तत्रापि

कर्तव्यतोक्ता संग्रहे—

" पार्वणेष्टिं चाऽऽग्रयणं संध्योपासनकर्म च ।
अग्निहोत्रं पाकयज्ञानन्यान्यपि मलिम्लुचे ।
कुर्यान्नित्यानि कर्माणि न प्रारम्भ इति स्थितिः ' इति ।

स्मृत्यन्तरेऽपि—" मलिम्लुचे मासि पौषे नान्वारम्भणमिष्यते ।
गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा " इति ।

एतद्वचनद्वयमालस्यादिना स्वकालानुपक्रान्तस्थालीपाकादिमारम्भविषयम्। कालप्राप्तस्याऽऽरम्भे न दोषः ।

तथा च गर्गः—

" नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् ।
अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे " इति ।

नामकर्मग्रहणं नित्यनैमित्तिकस्मार्तकर्मोपलक्षणम् । दर्शेष्टिग्रहणं नित्यनैमित्तिकश्रौतकर्मोपलक्षणमिति प्रयोगपारिजातहेमाद्र्यादयः ।

मण्डनस्तु—" आधानानन्तरं पौर्णमासी चेन्मलमासगा ।
तस्यामारम्भणीयादि न कुर्वीत कदाचन " इत्याह ॥

' नित्यमत ऊर्ध्वं पर्वस्वाग्नेयेन स्थालीपाकेन यजते[1] ' इति सूत्रेण पौर्णमास्यमावास्यात्मकेषु पर्वस्वाग्नेयस्थालीपाकानुष्ठानमुक्तम् । तत्र तयोः पौर्णमास्यमावास्ययोः स्वरूपं गोभिल आह—

" यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी, यः परमः संनिकर्षः साऽमावास्या " इति ।

दर्शशब्दो दृश्यते योगिभिरेव चन्द्रमा यत्रेति व्युत्पत्त्या मनुष्यैर्न दृश्यते चन्द्रमा यत्रेति विपरीतलक्षणया वाऽमावास्याया एव वाचकः । ' दर्शः सूर्येन्दुसंगमः ' इतिकोशात् । सूर्येन्द्वोः संगमो यत्रेत्यर्थः ।

तत्र पूर्णिमानिर्वचनं मत्स्यब्रह्माण्डपुराणयोः—

" कलाक्षये व्यतिक्रान्ते दिवा पूर्णौ परस्परम् ।
चन्द्रादित्यौ पराह्णे तु पूर्णत्वात्पूर्णिमा स्मृता " इति ॥

पराह्णे सूर्यास्तमयकाले यथाऽऽदित्यः संपूर्णमण्डलः सन्नस्तमेति तथोत्तरक्षणे चन्द्रः संपूर्णमण्डलः सन्नुदेतीतिदृष्टान्तदार्ष्टान्तिकभावविवक्षया चन्द्रादित्ययोरुपन्यासः ।

१ ग. यजेत ।

अमावास्यानिर्वचनं मत्स्यवायुब्रह्माण्डपुराणेषु—

" अमा वसेतामृक्षेषु यदा चन्द्रदिवाकरौ ।
एषा पञ्चदशी रात्रिरमावास्या ततस्तु सा " इति ॥

अमा सहेत्यर्थः ।

श्रुतौ तु निर्वचनान्तरमुक्तम्—

" अमा वै नोऽद्य वसु वसतीतीन्द्रो हि देवानां
वसु तदमावास्याया अमावास्यत्वम् " इति ।

ते च पौर्णमास्यमावास्ये प्रत्येकं द्विविधे अनुमती राका च सिनीवाली कुहूश्चेति ।

एतत्स्वरूपं कठशाखायामैतरेयब्राह्मणे च—

" या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राका या
पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूः " इति ।

एतासां लक्षणमुक्तं बृहद्वसिष्ठेन—

" राका संपूर्णचन्द्रा स्यात्कलोनाऽनुमतिः स्मृता ।
पौर्णमासी दिवा दृष्टे शशिन्यनुमतिः स्मृता ॥
रात्रिदृष्टे पुनस्तस्मिन्सैव राकेति कीर्तिता ।
दृष्टचन्द्राममावास्यां सिनीवालीं प्रचक्षते ॥
एतामेव कुहूमाहुर्नष्टचन्द्रां महर्षयः " इति ॥

तत्र कुहूभिन्नानां तिसृणां लघ्वक्षरोच्चारणपरिमितः कालः संधिरित्युच्यते। कुह्वास्त्वक्षरद्वयपरिमितः ।

तथा च हेमाद्रौ भगवतीपुराणम्—

" अनुमत्याश्च राकायाः सिनीवाल्याः कुहूं विना ।
एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृता " इति ॥

लवस्वरूपं माधवीये स्मृत्यन्तरे—

" लघ्वक्षरचतुर्भागस्त्रुटिरित्यभिधीयते ।
त्रुटिद्वयं लवः प्रोक्तो निमेषस्तु लवद्वयम् " इति ॥

तथा च लवद्वयं लघ्वक्षरं भवति । लघ्वक्षरोच्चारणपरिमिते काले एकः पर्वणो भागो द्वितीयः प्रतिपदस्तदुभयं मिलितं संधिर्भवति । कुहूप्रतिपदोः संधिस्तु 'कुहू' इत्यक्षरद्वयपरिमितः ।

तथा च मत्स्यब्रह्माण्डपुराणयोः—

“ कुह्विति कोकिलेनोक्ते यावान्कालः समाप्यते ।
तत्कालसंज्ञिता चैषा अमावास्या कुहूः स्मृता ” इति ॥

इति संधिस्वरूपे ज्ञाते संधौ यजेतेतिश्रुतेः संधौ यागः प्राप्तस्तस्य चातिसूक्ष्मत्वेन कर्मानुष्ठानायोग्यत्वात्संधिशब्दः संधिपार्श्वद्वयं लक्षयति । तथा च संधिपार्श्वद्वये संधौ यजेतेतिश्रुतिर्यागं विधत्ते । अत एव श्रुत्यन्तरम्—‘ संधिमभितो यजेत ’ इति ।

हेमाद्रौ बौधायनोऽपि—

“ सूक्ष्मत्वात्संधिकालस्य संधेर्विषय उच्यते ।
सामीप्यं विषयं प्राहुः पर्वणाथ परेण च ” इति ॥

अत्र पूर्वपरशब्दाभ्यां क्रमेण संधेः पूर्वं पर्वदिनं परं प्रतिपद्दिनं च क्रमेणाभिधीयते ।

तत्र कृत्स्नस्य पर्वणः प्रतिपदश्च ग्रहणे प्राप्ते नियममाह वृद्धशातातपः—

“ पर्वणो यश्चतुर्थोऽश आद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः ” इति ॥

यागकालविवेकमाह गोभिलः—

“ आवर्तने यदा संधिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ” इति ॥

तथा—“ पर्वप्रतिपदोः संधिरर्वागावर्तनाद्यदि ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ” इति ॥

लौगाक्षिः—“ पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ” इति ॥

स्मृत्यन्तरेऽपि—

“ आवर्तने यदा संधिस्ततः पूर्वमथापि वा ।
तस्मिन्नहनि यष्टव्यं परतश्चेत्परेऽहनि ॥
आवर्तनात्परः संधिर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येव पर्वद्वयविनिर्णयः ” इति ॥

तथा—“ अपराह्णेऽथ वा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते ” इति ॥

पूर्वाह्ण आवर्तने वा संधौ तस्मिन्नेवाहनि यागः । पूर्वेद्युरन्वाधानादि । आव-

तेनाहूर्ध्वं संधौ तु तस्मिन्नहन्यन्वाधानादि परेद्युर्याग इति निष्कृष्टोऽर्थः। आवर्तनशब्देनाह्नो मध्यतनसंधिरूपः काल उच्यते।

" आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः।
मध्याह्नस्तु तयोः संधिर्यदावर्तनमुच्यते " ॥

इति मदनरत्नोदाहृतवचनात्।

तयोः पूर्वाह्णापराह्णयोः। स च संधिर्मुहूर्तपरिमित इति केचित्। निशीथन्यायेनेत्येतेषामाशयः।

श्रौतसूत्रेऽपि पर्वनिर्णय उक्तः—

" पूर्वां पौर्णमासीमुपवसेत्संपूर्णां वा पूर्वाममावास्यां यदहर्वा न दृश्यते " इति।

अथैतस्य सूत्रस्य स्मृतिपर्वनिर्णयानुरोधेनार्थो वर्ण्यते। पूर्वां चतुर्दशीयुक्तामुपवसेद्यदि परेद्युरसंपूर्णेत्यग्रिमसूत्रपर्यालोचनयाऽर्थात्सिध्यति। संपूर्णां वेति। यस्याः साम्येन विहितया प्रतिपदा संयुक्तामित्यर्थात्स्यात्। द्वेधा विभक्तस्य दिवसस्य प्रथमार्धव्यापित्वेन स्थितामित्यर्थः। तथाचा(च) संपूर्णा चेत्परा। इतरथा पूर्वेत्यर्थादवगम्यते। अत्रैवावान्तरभेदेन सद्यस्कालो ज्ञेयः। एवं पूर्वाममावास्यामित्यत्रापि समानम्। यदहर्वा न दृश्यत इत्यत्रापि पूर्वयुक्ता यस्मिन्दिने [न] दृश्यतेऽमावास्या तत्र संपूर्णाममावास्यामित्याकृष्य योज्यं पूर्ववत्। अत्रोपवासशब्देन नाशनाभावः। दंपती अश्नीत इत्यनेन विरोधात्। किंतूपवासशब्देन जायापत्योरेकवारं भोजनमुच्यते। धर्मे वक्ष्यमाणत्वात्।

अथवा—" उपावृत्तस्तु पापेभ्यो यस्तु वासो गुणैः सह।
उपवासः स विज्ञेयः " ॥

इति स्मृतिसिद्ध उपवासशब्दार्थो ग्राह्य इति वैजयन्तीकृता व्याख्यातम्।

तत्र ' पर्वणो यश्चतुर्थांशः ' इत्यनेन वचनेन पर्वणश्चतुर्थोऽशः प्रतिपदस्त्रयोंऽशाश्च यागकालत्वेन विहिताः। तत्र यद्यावर्तने ततः पुरा वा संधिर्भवति तदा पर्वणश्चतुर्थांशो यागकालः। उषःकाले संधौ प्रतिपदः प्रथमांशो यागकालः। निशीथसंधौ द्वितीयांशः, रात्रिप्रारम्भे संधौ तृतीयांश इति।

[1]नन्वनेन न्यायेनापराह्णे संधौ प्रतिपच्चतुर्थांशस्यापि यागकालत्वं स्यादिति चेन्न।

" न यष्टव्यं चतुर्थेऽशे यागैः प्रतिपदः क्वचित्।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी " ॥

---

१ क. ग. पूर्वायु॰।

इति चतुर्थांशे यागस्य निषेधात्। एतादृशे विषये याग एव लुप्येतेति चेन्मैवम्।

वृद्धशातातपेन प्रतिप्रसवाभिधानात्—

" संधिर्यत्रापराह्णे स्याद्यागं प्रातः परेऽहनि।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न लुष्यति " इति॥

एवं तर्हि प्रतिषेधो निर्विषयः स्यादिति चेन्मैवम्। सद्यस्कालविषये चरितार्थत्वात्।

तं च विषयं दर्शयति कात्यायनः—

" संधिश्चेत्संगवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः " इति॥

संगवावर्तनयोरन्तरा पौर्णमासीप्रतिपदोः संधौ सति पूर्वोदाहृतैर्वचनैः संधिदिनात्पूर्वेद्युरन्वाधानादिकं प्राप्तं तच्च सद्यस्कालवाक्येन संधिदिन उत्कृष्यते। ' सद्यो वा सर्वं करोति सद्यस्कालायाम् ' इत्येतत्सूत्रमप्यत्रानुकूलं ज्ञेयम्। वैजयन्तीकारैस्तथैव व्याख्यानात्। तत्र सद्यस्कालविधिरन्वयरूपः। प्रतिपच्चतुर्थांशनिषेधो व्यतिरेकरूपः। एवं च सति निषेधवाक्यं सावकाशं भवति। अयमेव न्यायोऽमावास्यायामपि। परं तु सद्यस्कालता तत्र नास्ति। संधिश्चेदित्यस्मिन्वाक्ये पौर्णमास्या एव ग्रहणात्। चन्द्रदर्शनदिने यागनिषेधस्त्वावर्तनात्पूर्वं तस्मिन्वा संधौ सति द्रष्टव्यः। एतच्च यथाश्रुतमाधवग्रन्थाद्वैजयन्तीकारग्रन्थाच्च द्रष्टव्यम्। हेमाद्रिस्तु—" अपराह्णसंधावपि परदिने प्रतिपच्चतुर्थांशे चन्द्रोदये च सति द्वितीयादिष्वत्यन्तक्षये सति पूर्वेद्युर्यागः " इत्याह। आवर्तने तत्पूर्वं वा संधौ भ्रमाद्यदि यागो न कृतः किंतु शुक्लप्रतिपदि कृतस्तदा प्रायश्चित्तमाह कात्यायनः—

" यजनीयेऽह्नि सोमश्चेद्वारुण्यां यदि दृश्यते।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये " इति॥

संधिकल्पनप्रकारस्तु माधवेनोक्तः—

" वृद्धिः प्रतिपदो याऽस्ति तदर्धं पर्वणि क्षिपेत्।
क्षयस्यार्धं तथा क्षिप्त्वा संधिर्निर्णीयतां सदा " इति॥

कात्यायनोऽपि—

" परेऽह्नि घटिका न्यूनास्तथैवाभ्यधिकाश्च याः।
कृत्वा तदर्धं पूर्वस्मिन्ह्रासवृद्धी प्रकल्पयेत् " इति॥

यदा पूर्वेद्युरमावास्या यावद्धटिका परेद्युः प्रतिपदपि तावद्धटिका तत्र यर्थास्थित एव संधिर्ज्ञेयः। यदा तु प्रतिपदः क्षयः पर्वणो वृद्धिस्तदा वृद्ध्यर्धं प्रतिपदि संयोज्य संधिर्ज्ञेयः। यदा तु पर्वणः क्षयः प्रतिपदो वृद्धिस्तदा वृद्ध्यर्धं पर्वणि प्रक्षिप्य संधिं कल्पयेत्। तत्र ह्रासवृद्धिसमीकरणेनाऽऽवर्तने तत्पूर्वं वा यदि संधिस्तदा तस्मिन्नहन्येव यागः। परतः संधिश्चेत्परेऽहनि याग इति।

पर्वमध्य इष्टिसमापननिषेध उक्तो मनुना—

" प्रतिपद्यप्रविष्टायां यदि त्विष्टिः समाप्यते।
पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः " इति ॥

विशेषो निर्णयप्रदीपे गोभिलेनोक्तः—

" आवर्तनेऽथवा तत्प्राग्यदि पर्व समाप्यते।
तैत्रं पूर्वाह्ण एव स्यात्संधेरूर्ध्वं द्विजाशनम् " इति ॥

एतस्माद्वचनाज्ज्ञायते। आवर्तनादूर्ध्वं संधौ नैतत्। तथा च पूर्वमेव द्विजाशनं भवति। गृह्याग्नेर्नायं नियम इति मदनपारिजाते।

अथ स्थालीपाकविषये गृह्यसूत्रम्—

" नित्यमत ऊर्ध्वं पर्वस्वाग्नेयेन स्थालीपाकेन यजते " इति।

अतो गृहप्रवेशस्थालीपाकादूर्ध्वमनन्तरं नित्यं पर्वसु आग्नेयेन स्थालीपाकेन यजते। अत ऊर्ध्वमितिवचनं दीर्घत्वादध्वनोऽन्यथा वा प्रागागतेऽपि पर्वणि स्थालीपाको मा भूदिति। एतेनेदमपि ज्ञातं भवति प्रागपि चतुर्थीहोमादागते पर्वणि तु भवेदेवेति। अन्तरेणापि नित्यत्वे सिद्धे नित्यमितिवचनं यावज्जीवार्थं द्वात्रिंशद्वर्षाणि कृत्वोत्सर्गो मा भूदिति। कः प्रसङ्ग उत्सर्गस्येति चेत्। दर्शपूर्णमासभक्तत्वादस्य[द्वा]त्रिंशद्वर्षता यावज्जीविकतया विकल्पत इत्याशङ्क्येत। एतच्च प्रज्ञापयति पर्वण्युपोष्य प्रतिपदि क्रियां पौर्णमास्यामारम्भं च।

तदुक्तं बह्वृचैः—

" तस्य दर्शपूर्णमासाभ्यामुपवास इध्माबर्हिषोश्च संनहनम् " इति।

धर्मेषु चैतदेव वक्ष्यति—

" पर्वसु चोभयोरुपवासः " इति प्रकृत्य " श्वोभूते स्थालीपाकः " इति।

१ ख. ग. ङ. च. 'थावस्थि'। २ ग. ङ. च. तत्र।

नित्यमत ऊर्ध्वमेवं पर्वस्वित्येतावतैव सिद्ध आग्नेयेन स्थालीपाकेन यजत इति वचनमाग्नेयेन स्थालीपाकेन यजत एव नर्षभदानमितिनियमार्थम् ।

अथेतिकर्तव्यता धर्मसूत्रे—

" पर्वसु चोभयोरुपवास औपवस्तमेव कालान्तरे भोजनं तृप्तिश्चान्नस्य यच्चैनयोः प्रियं स्यात्तदेतस्मिन्नहनि भुञ्जीयातामधश्च शयीयातां मैथुन- वर्जनं च श्वोभूते स्थालीपाकः " इति ।

पक्षसंधिः पर्व । इह तद्युक्तमहर्गृह्यते । तेषु पर्वसूभयोर्दंपत्योरुपवासो भोजनलोपः । कालयोर्भोजनमित्येतत्पूर्वतनसूत्रात्—

" सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् " इति श्रुतेश्चाविशेषेणोभयोरपि कालयोर्भोजनप्राप्तावाह—औपवस्तमिति । यत्कालान्तर एककाले भोजनं तदप्यौपवस्तमेवोपवास एव । तदपि दिवा न रात्रौ । श्रौते तथा दर्शनात् । " नैतां रात्रिमश्नाति " इति । चकारोऽनुक्तसमुच्चयार्थः । पर्वसु यदेककाले भोजनं तत्र यावत्तृप्त्यन्नं भुञ्जीयाताम् । धान्यव्यञ्जनादिषु मांसलवणादि- वर्जं यदेनयोर्दंपत्योर्मनसः प्रियं स्यात्तदेतस्मिन्नहनि पर्वदिने भुञ्जीयाताम् अधो भूमौ न खट्वादौ । मैथुनवर्जनमप्येतस्मिन्नहनि कुर्याताम् । श्वोभूते द्विती- येऽहनि पात्रासादनमारभ्य स्थालीपाकः कार्य इति व्याख्यातमुज्ज्वलाकृता । पात्रासादनमारभ्येत्यनेन पात्रासादनपूर्वतनं कर्म पूर्वस्मिन्नहनि कर्तव्यमिति बोध्यते । छान्दोग्यगोभिलगृह्ये विशेषः—

"न प्रवसन्नुपवसेदित्याहुः पत्न्या व्रतं भवतीति यथा कामयेत तथा कुर्यात्" इति ।

एतदप्यशक्तौ स्वीकार्यम् । पर्वणि वर्ज्यान्पदार्थानाह भरद्वाजः—

" विवर्जयेद्वक्ष्यमाणः स्त्रीतैलामिषवृक्षजम् ।
कलहं विक्रयं चैव प्रहासं बहुभाषणम् ॥
तौर्यत्रिकं वृथाशय्यां परान्नमनृतं तथा " इति ॥

आमिषं मांसं माषादिकं च । वृक्षजो निर्यासः । स च श्वेतोऽप्यत्र निषिद्धः । ' य एव लोहितो यो वा व्रश्चनान्निर्येषति तस्य नाऽऽश्यं काममन्यस्य ' इति श्रुतिस्तु व्रतातिरिक्ताशने श्वेतनिर्यासाभ्यनुज्ञापरा । तौर्यत्रिकं वाद्यम् । अनृतवदनस्य सामान्यतो निषेधे सिद्धे पुनर्निषेधः कर्माङ्गत्वार्थः । तेन श्रौतं प्रायश्चित्तमत्र कार्यम् ।

जाबालिः—" शाकं मांसं मसूरं च चणकान्कोद्रवांस्तथा ।
माषान्मधु परान्नं च वर्जयेदौपवस्तके " इति ॥

मधुशब्देनात्र क्षौद्रं गृह्यते।

मद्यस्य तु—" न मद्यं ब्राह्मणः पिबेत् " इत्यनेनैव निषेधसिद्धेः। औपवस्तकं पर्वदिनम्।

कात्यायनोऽपि—

" लवणं मधु मांसं च क्षारा येन च हूयते।
औपवस्ते न भुञ्जीत धान्यं रात्रौ न किंचन " इति॥

क्षारशब्देन यस्य भक्षणे लालोत्पद्यते तद्द्रव्यमुच्यते। येन हूयत इत्यनेन यागसाधनत्वेन स्वीकृतं द्रव्यमपि न भक्षणीयमित्युक्तं भवति।

वाधूलबौधायनवैखानसाः—

" सर्वमेवैतदहः कोशीधान्यं वर्जयेदन्यत्र तिलेभ्यः " इति।

तिलवन्मुद्गानामपि ग्राह्यत्वमुक्तं कात्यायनेन—

तिलमुद्गादृते शैब्यं सस्ये गोधूमकोद्रवौ।
चणकं देवधान्यं च सर्वशाकं तथेक्षवम्॥
सर्जिक्षारं यवक्षारं टङ्कणक्षारमेव च।
व्रतस्थो वर्जयेन्नित्यं सामुद्रं लवणं तथा " इति॥

अत्र सामुद्रस्योपादानात्सैन्धवमानसादेरनिषेधः प्रतीयते। तस्य हविष्यत्वात्।

तथा चोक्तम्—

" मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम्।
अक्षारं लवणं चैव प्रकृत्या हविरुच्यते " इति॥

अक्षारलवणं सैन्धवमिति सर्वनिबन्धकाराः।

ब्रह्मपुराणेऽपि—

" सैन्धवं लवणं चैव यच्च मानससंभवम्।
पवित्रे परमे ह्येते प्रत्यक्षमपि सर्पिषा " इति॥

छन्दोगपरिशिष्टे कात्यायनः—

" पूर्णमास्याममायां च अधःस्वापो विधीयते।
अनाहिताग्नेरप्येष पश्चादग्नेर्विधीयते " इति॥

बौधायनः—" पर्वसु न चाधीयीत न स्त्रियमुपेयात्पर्वसु
रक्षःपिशाचान्यभिचारवन्ति भवन्ति " इति।

सूत्रे—“ पौर्णमास्यां प्रातराशे जायापती सर्पिर्मिश्रमश्नीतो यदन्यन्मा-
षेभ्यश्च न सुहितौ स्यातां प्राग्वत्सापाकरणादमावास्यायां
कामं सुहितौ स्याताम् ” इति ।

सुहितौ तृप्तौ । पौर्णमास्यां न सुहितौ स्याताममावास्यायां तु सुहितावपि स्यातामितीत्थं यो विशेषः स न स्थालीपाके । तृप्तिश्चान्नस्येत्यविशेषेणोक्तत्वात् । सर्पिर्मिश्रितमेवाशनं कर्तुमशक्तेन दधिमिश्रितं वाऽप्यशितव्यम् । दध्ना पयसा वेत्यापस्तम्बवचनात् । अयं च रागप्राप्त एव नित्येऽशने सर्पिरादिनियमः क्रत्वर्थो विधीयते । अशनं तु पुरुषार्थमेव । तेनासामर्थ्यादिना यद्यशनं कर्तुं न शक्यते तदा नियमानुग्रहार्थमशनं न कर्तव्यमिति पितृभूतिः ।

भर्तृस्वाम्यप्याह—

“ अशनं क्षुत्प्रतिघातार्थं, तस्यास्मिन्काले नियमः सत्यामिच्छायामतो
नाऽऽवर्तेत इष्टिबहुत्वे ” इति ।

बह्वीनां पत्नीनाममुख्याऽनालम्भुका चेत्तदा यागः कर्तव्य एव । ज्येष्ठा चेदनालम्भुका तदा न यागः कर्तव्यः ।

तदुक्तं हेमाद्रौ गौतमेन—

“ यजनीयेऽह्नि संप्राप्ते यस्य भार्या रजस्वला ।
यागं तत्र प्रकुर्वीत ज्येष्ठा चैन्नेवमाचरेत् ” इति ॥

वसिष्ठोऽपि—“ बह्वीनामपि पत्नीनां ज्येष्ठा चेद्रजसाऽन्विता ।
नापरुध्य प्रकुर्वीत यजनं हि विचक्षणः ” इति ॥

कनिष्ठामपरुध्य यागः कर्तव्य इति त्वर्थात्सिद्धं भवति ।

अस्ति च पाद्मं वचनम्—

“ बह्वीनामेकपत्नीनां कनिष्ठा रजसाऽन्विता ।
अपरुध्यापि कुर्वीत यजनं विधिपूर्वकम् ” इति ॥

ज्येष्ठातोऽन्याः सर्वा अपि कनिष्ठशब्देन ग्राह्याः । न त्वन्तिमैव ।

अत एव—“ बह्वीनामपि पत्नीनाममुख्या रजसान्विता ।
अपरुध्यापि कुर्वीत यजनं विधिपूर्वकम् ” ॥

इति स्मृत्यन्तरेऽमुख्येत्युक्तम् ।

ज्येष्ठपत्न्या मुख्यत्वं तु पाद्म उक्तम्—

“ ज्येष्ठा पत्नी तु मुख्या स्याद्यज्ञे दानेऽर्चने गृहे ।
तया कर्माणि कुर्वंस्तु यथोक्तफलभाग्भवेत् ” इति ॥

कौर्मेऽपि—" ज्येष्ठपत्न्या विरहितं कृतं यत्तु जनाधिप।
तत्सर्वं विफलं याति गजभुक्तकपित्थवत् " इति ॥

वसिष्ठोऽपि—" ज्येष्ठया सह कर्माणि कुर्याद्यत्नेन भूपते।
तया सह कृतं कर्म सफलं जायते नृणाम् " इति।

ज्येष्ठपत्न्या राहित्येन कर्मकरणे यो दोष उक्तः स तस्या विद्यमानत्वे द्रष्टव्यः। ज्येष्ठायां मृतायां विद्यमानासु या ज्येष्ठा सा मुख्यत्वेन द्रष्टव्या। एवं च विद्यमानज्येष्ठाव्यतिरिक्ताः पत्नीरपरुध्यापि यागः कर्तव्य इति सिद्धं भवति। एतेन बह्वीनां पत्नीनामेकाऽप्यृतुमती चेन्न यागः कार्य इति परास्तम्।

एतच्च प्रथमप्रयोगव्यतिरिक्ते—

" प्रक्रान्तमग्निहोत्रादि कर्म यच्छ्रुतिचोदितम्।
आर्तवाभिप्लुतां नारीं विहाय कुरुते द्विजः "

इति कात्यायनवचने प्रक्रान्तमिति श्रवणात्।

" ज्येष्ठा वाऽथ कनिष्ठा वा पत्नी यदि रजस्वला।
प्रथमे चेत्प्रयोगे स्यान्नोपरोधस्तदा मतः "

इति स्मृत्यन्तरेऽभिधानाच्च।

प्रक्रान्तमारब्धमेकवारमनुष्ठितमिति व्याख्यातारः। ये तु प्रारब्धं संकल्पादिना प्रक्रान्तमित्यर्थं वदन्ति तन्मते संकल्पोत्तरं प्रथमप्रयोगेऽप्युपरोध इति द्रष्टव्यम्।

## अथ प्रयोगः।

कर्ता शुक्लचतुर्दश्यां प्रातरौपासनहोमानन्तरमौपासनाग्नेः पश्चात्सपत्नीक उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य सत्यधिकारे यावज्जीवं दर्शपूर्णमासस्थालीपाकाभ्यां यक्ष्य इति संकल्पं कुर्यात्। दर्शपूर्णमासेष्ट्यारम्भोत्तरं न पार्वणस्थालीपाकावित्येतन्मतमेव स्वी क्रियत इति निश्चिते सति सत्यधिकारे दर्शपूर्णमासेष्ट्यारम्भपूर्वतनकालपर्यन्तं दर्शपूर्णमासस्थालीपाकाभ्यां यक्ष्य इति संकल्पे विशेषः।

ततो गणपतिपूजनादिनान्दीश्राद्धान्तं कुर्यात्। अत्राग्निः प्रीयतामिति विशेषः। अथवा प्रधानसंकल्पात्पूर्वमेव गणपतिपूजनपुण्याहादिवाचनमातृकापूजननान्दीश्राद्धानि कृत्वाऽनन्तरं प्रधानसंकल्पः कार्यः।

तत आरम्भार्थं चतुर्होतृसारस्वतहोमावन्वारम्भणस्थालीपाकं [1] कुर्यात्।

१ ग. स्याश्चाप°।

यद्यपि चतुर्होतृहोमादिकं गृह्ये नोक्तं तथाऽपि दर्शपूर्णमासस्थालीपाकयोर्दर्शपूर्णमासेष्टिन्यायसाम्यात्केषांचिद्दर्शपूर्णमासधर्माणां मातृदत्तेनोक्तत्वात्तदुपलक्षणेन चैतेषामप्यत्र प्राप्तिः। शिष्टाचारश्चाप्यत्रास्ति।

आचम्य प्राणानायम्य देशकालौ संकीर्त्य दर्शपूर्णमासस्थालीपाकावारभमाणश्चतुर्होतारं सग्रहं होष्यामीति संकल्प्योत्तरेणाग्निं दर्भान्संस्तीर्य तेषु स्रुचं दर्वीं वा स्रुवमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भानाज्यं समिधं चाऽऽसाद्य पवित्रकरणादि पवित्रे अग्नावाधायेत्यन्तं कृत्वाऽग्निं परिस्तीर्य तूष्णीं परिषिञ्चेत्। न वा परिस्तरणपरिषेकौ।

ततोऽग्निमलंकृत्य स्रुचि दर्व्यां वा सकृद्गृहीत्वाऽऽसादितां समिधमभ्याधाय, पृथिवी होतेत्यस्य चतुर्होतृमन्त्रस्य वाचस्पते वाचो वीर्येणेतिग्रहसंज्ञकमन्त्रसहितस्य प्रजापतिर्वाचस्पतिर्ब्रह्मा यजुः। होमे विनियोगः। 'ॐ पृथीवी होता० बृहस्पतिरुपवक्ता' इति मनसोक्त्वा 'ॐ वाचस्पते वाचो० मिन्द्रियाय स्वाहा' इत्यग्नेर्दक्षिणतस्तिष्ठञ्जुहोति। वाचस्पतये ब्रह्मण इदं न मम।

ततः परिस्तरणसत्त्वे तान्युत्तरे विसृजेत्। ऋष्यादिस्मरणे विकल्पः। ततः सारस्वतहोमौ दर्शपूर्णमासस्थालीपाकावारभमाणः सारस्वतौ होमौ होष्यामीति संकल्प्योत्तरेणाग्निं दर्भान्संस्तीर्य तेषु स्रुचं दर्वीं वा स्रुवमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भान्समिद्द्वयमाज्यं चाऽऽसाद्य पवित्रकरणादि पवित्रे अग्नावाधायेत्यन्तं कृत्वाऽग्निं परिस्तीर्य तूष्णीं परिषिञ्चेत्। न वा परिस्तरणपरिषेकौ।

ततोऽग्निमलंकृत्य स्रुवेण स्रुचि दर्व्यां वाऽष्टवारं द्विर्वा गृहीत्वाऽऽसादितं समिद्द्वयमग्नावभ्याधाय, पूर्णा पश्चादित्यस्य सोमः पूर्णमासस्त्रिष्टुप्। होमे विनियोगः। 'ॐ पूर्णा प० मादयन्ताꣳ स्वाहा' इत्यर्धाज्येनाग्नेर्दक्षिणतस्तिष्ठञ्जुहोति। पूर्णमासायेदं न मम।

यत्ते देवा अदधुरित्यस्य सोमोऽमावास्या त्रिष्टुप्। होमे विनियोगः। 'ॐ यत्ते देवा अ० सुवीरꣳ स्वाहा' इत्यवशिष्टेनाऽऽज्येन तथैव जुहोति। अमावास्याया इदं न मम। ऋष्यादिस्मरणे विकल्पः। परिस्तरणसत्त्वे तान्युत्तरे विसृजेत्।

## अथान्वारम्भणस्थालीपाकप्रयोगः।

दर्शपूर्णमासस्थालीपाकावारभमाणोऽन्वारम्भणस्थालीपाकं करिष्य इति

संकल्प्याग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वाऽन्वारम्भणस्थालीपाककर्मणि या यक्ष्यमाणा देवतास्ताः सर्वाः परिग्रहीष्यामि। अग्नाविष्णू एकया चर्वाहुत्या यक्ष्ये। सरस्वतीमेकया चर्वाहुत्या यक्ष्ये। सरस्वन्तमेकया चर्वाहुत्या यक्ष्ये। अग्निं भगिनमेकया चर्वाहुत्या यक्ष्ये। वैशेषिकजयोपहोमे—चित्तं चित्तिमित्यादि प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्य इत्यन्तमुक्त्वा, स्विष्टकृद्धोमे—अग्निं स्विष्टकृतं हुतशेषेण यक्ष्य इत्यादि समिदभ्याधानान्तं कृत्वाऽग्निं परिस्तीर्योत्तरेणाग्निं दर्भान्संस्तीर्य तेषु स्रुवं दर्वीमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं हविरासादनार्थान्दर्भाञ्शूर्पं कृष्णाजिनमुलूखलं मुसलं चरुस्थालीचतुष्टयं मेक्षणचतुष्टयं संमार्गदर्भानवज्वलनदर्भानाज्यं समिधं चाऽऽसादयेत्।

"समोप्य व्युद्धारं जुहुयात्" इत्याश्वलायनसूत्राच्छूलगवे चरुत्रयस्य पयसि स्थालीपाकं श्रपयित्वेत्येकत्रैव श्रपणदर्शनाच्चैकैव वा चरुस्थाली, एकमेव मेक्षणमुद्धरणार्थं पात्रचतुष्टयमेकमेव वा महदिति पात्रासादने विशेषः।

ततोऽग्नेः पश्चात्स्वस्य पुरतः शूर्पं निधाय तस्मिन्पवित्रे संस्थाप्य दक्षिणहस्तेन प्रतिदैवतं तूष्णीं चतुरश्चतुरो मुष्टींस्तां तां देवतामभिध्यायन्निरुप्यान्वावापं कृत्वाऽग्नेरुत्तरतो हविः संस्थाप्य प्रोक्षणीः संस्कृत्य पवित्रेण पाणिना हविस्त्रिः प्रोक्ष्य पात्राण्युत्तानानि कृत्वा त्रिः सर्वाभिः प्रोक्षति।

तत पत्न्यग्नेरुत्तरतः कृष्णाजिनावधूननादि फलीकरणान्तमाग्नेयस्थालीपाकवत्कुर्यात्।

ततो होमकर्ता निरुप्तहविषः समं भागचतुष्टयं कृत्वाऽयमग्नाविष्णुभ्यामयं सरस्वत्यै, अयं सरस्वतेऽयमग्नये भगिने, इति क्रमेणाभिमृश्य चतसृषु स्थालीषूदकमानीय तत्र क्रमेण भागचतुष्टयमोप्याग्नौ स्थालीरधिश्रयति। यद्येकैव स्थाल्यासादिता स्यात्तदा तस्यामेव श्रपणपर्याप्तमुदकमानीय सर्वं हविस्तस्यामोप्याग्नावधिश्रयति। न वा निर्वापादि किंतु पत्न्याऽवघातमात्रं कारणीयम्। पर्यग्निकरणं तु कर्तव्यमेवेति पक्षान्तरम्।

ततः स्रुवं दर्वीं मेक्षणं च संमृज्याऽऽज्यसंस्कारं कुर्यात्। तत्र हविषा सहाऽऽज्यस्य पर्यग्निकरणमिति विशेषः।

तत आसादितान्दर्भानग्नेः पश्चादास्तीर्य तत्राऽऽज्यं निधाय शृतांश्चरून्क्रमेणाभिघार्योत्तरत उद्वास्याग्नेः पश्चादुदक्संस्थं बर्हिष्यासादयति। एकत्र

१ ख. ग. ङ. च. ततः प्र'। २ ख. ग. ङ. च. 'द्वास्योद'।

श्रपणपक्ष एकस्यैव चरोः सत्त्वात्तमेकवारमेवाभिघार्याऽऽसादितेषु चतुर्षूद्धरणपात्रेषूपस्तीर्य तेषु तं समश उद्धृत्य, अयमग्नाविष्णुभ्याम् । अयं सरस्वत्यै । अयं सरस्वते । अयमग्नये भगिने, इति क्रमेणोदक्संस्थमिदानीं देवता निर्दिशेत् । यदा तूद्धरणपात्रमेकमेवाऽऽसादितं तदैकस्मिन्नेव पात्रे देशभेदेनोपस्तरणमुद्धरणं च ।

ततोऽदितेऽनुमन्यस्वेत्यादिभिः परिषिच्य तूष्णीं समिधमाधाय प्रधानहोमं कुर्यात् । प्रथमेन धृष्ट्याकारमेक्षणेन प्रथमचरोरुपहत्याग्राविष्णुभ्यां स्वाहेति जुहोति । अग्नाविष्णुभ्यामिदं न मम ।

ततो द्वितीयेन मेक्षणेन द्वितीयचरोरुपहत्य सरस्वत्यै स्वाहेति प्रथमाहुतेः पुरस्ताज्जुहोति । सरस्वत्या इदं न मम ।

ततस्तृतीयेन मेक्षणेन तृतीयचरोरुपहत्य सरस्वते स्वाहेति द्वितीयाहुतेः पुरस्ताज्जुहोति । सरस्वत इदं न मम ।

ततश्चतुर्थेन मेक्षणेन चतुर्थचरोरुपहत्याग्नये भगिने स्वाहेति तृतीयाहुतेः पुरस्ताज्जुहोति । अग्नये भगिन इदं न मम । एकस्थालीपक्ष एकस्यैव मेक्षणस्याऽऽसादितत्वात्तेनैव ग्रहणम् ।

ततो दर्व्या वैशेषिकजयोपहोमं कुर्यात् । तत्र विशेषः । स्रुवेण दर्व्यां द्वादशगृहीतं गृहीत्वा द्वादश जयाञ्जुहोति । ते च सामान्यप्रयोग उक्ताः । पुनः सकृद्गृहीत्वा 'ॐ प्रजापतिर्ज० भूव स्वाहा' इति जुहोति । प्रजापतय इदं न मम ।

ततस्तेन तेन मेक्षणेन तस्य तस्य चरोरुत्तरार्धात्सकृदुपहत्याग्नये स्विष्टकृते स्वाहेतीशान्यामसंसक्तामितराभिराहुतिभिर्जुहोति । अग्नये स्विष्टकृत इदं न मम । एकं मेक्षणं चेत्तेनैव ग्रहणम् । ततो मेक्षणप्रहरणं कृताकृतम् ।

ततः परिस्तरणानि विसृज्य समस्तव्याहृतीभिः प्रायश्चित्तहोमं कृत्वोत्तरपरिषेकं कृत्वा संस्थाजपेनोपस्थायाग्निं संपूज्य भस्म धृत्वाऽऽचार्याय मिथुनौ गावौ दक्षिणां दत्त्वाऽन्येभ्यो भूयसीं दत्त्वा ब्राह्मणान्भोजयित्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

एते च चतुर्होतृहोमसारस्वतहोमान्वारम्भणस्थालीपाकाः कृताकृताः । सूत्रेऽनुक्तत्वात् ।

इत्यन्वारम्भणस्थालीपाकप्रयोगः ।

# अथ पार्वणस्थालीपाकयोः प्रयोगः ।

अन्वाधानदिनेऽनाहिताग्निरौपासनहोमानन्तरमाहिताग्निश्चोपवसथीयदिवसकर्मसमाप्त्यनन्तरं सपत्नीक आचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं सत्यधिकारे यावज्जीवं दर्शपूर्णमासस्थालीपाकाभ्यां यक्ष्य इति संकल्पं कुर्यात् । दर्शपूर्णमासेष्ट्यारम्भोत्तरं पार्वणस्थालीपाकौ न कार्यावित्येतन्मतमेव स्वी क्रियत इति निश्चिते सति दर्शपूर्णमासेष्ट्यारम्भपूर्वतनकालपर्यन्तं दर्शपूर्णमासस्थालीपाकाभ्यां यक्ष्य इति संकल्पे विशेषः । वस्तुतस्तु करणपक्ष एव युक्तः ।

ततो गणेशं संपूज्य पुण्याहादि वाचयित्वाऽग्निः प्रीयतामिति वदेत् । एतदन्तं प्रथमप्रयोग एव न तु प्रतिप्रयोगम् ।

ततः पुनराचमनप्राणायामदेशकालसंकीर्तनानि कृत्वा श्रीपरमेश्वरप्रीत्यर्थं दर्शपूर्णमासस्थालीपाकाभ्यां यक्ष्ये । तत्रेदानीं पूर्णमासस्थालीपाकेन श्वो यष्टाह इति संकल्पं कुर्यात् । सद्यःपक्षे सद्यो यक्ष्य इति । दर्शे तु दर्शस्थालीपाकेन श्वो यष्टाह इत्येतावानेव संकल्पः । दर्शस्थालीपाकस्तु ग्र्यहकाल एव । पूर्णमासस्थालीपाकेन यष्टाहे दर्शस्थालीपाकेन यष्टाह इति भिन्नौ वा संकल्पौ ।

एवं संकल्प्याग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा पूर्णमासस्थालीपाकयागकर्मणि ये यक्ष्यमाणे देवते ते परिग्रहीष्यामि । अग्निमेकया चर्वाहुत्या यक्ष्ये । अग्निं स्विष्टकृतमेकया हुतशेषाहुत्या यक्ष्ये । एते देवते श्वो यष्टाह इत्युक्त्वा व्याहृतिभिरन्वाधानसमिधोऽभ्यादध्यात् । सद्यःपक्षे सद्यो यक्ष्य इति । एवं दर्शे । तत्र दर्शस्थालीपाकयागकर्मणीति विशेषः ।

ततोऽग्निं परिस्तीर्य पात्रासादनाद्यर्थदर्भांश्छित्त्वा मुष्टिं बद्ध्वौपासनाग्नेरुपरि यथा न पतति तथा निदधाति । श्रौते दृष्टत्वात्सायंहोमोत्तरं वा परिस्तरणम् । अस्मिन्दिने दंपती माषमांसलवणक्षारादिवर्जं सर्पिर्मिश्रमशक्तौ दधिमिश्रं पयोमिश्रं वा येन धान्येन यक्ष्यमाणस्तद्धान्यवर्जं चाश्नीतः । अशक्तावेतदप्यश्नीतः ।

ततः श्वोभूते प्रातरौपासनहोमानन्तरं श्रौताग्निमांश्चेदिष्ट्युत्तरमुत्तरेणाग्निं दर्भानास्तीर्य तेषु दर्वीमाज्यस्थालीं प्रोक्षणीपात्रं तण्डुलप्रस्कन्दनार्थं पात्रं शूर्पं

---

१ क. 'भांन्संस्ती' ।

कृष्णाजिनमुलूखलं मुसलं चरुस्थालीं मेक्षणमुपवेषं हविरासादनार्थं दर्भान्सं-
मार्गदर्भानवज्वलनदर्भानाज्यं समिधमित्यासाद्य पवित्रे कृत्वाऽपरेणाग्निं शूर्पं
निधाय तस्मिन्पवित्रे निधाय तूष्णीं चतुरो मुष्टीन्निरुप्योत्तरेणाग्निं व्रीहिमच्छूर्पं
निधाय प्रोक्षणीः संस्कृत्य शूर्पस्थान्व्रीहीन्प्रोक्ष्य पात्राण्युत्तानानि कृत्वा
प्रोक्षति ।

ततः पत्न्यग्नेरुत्तरतः कृष्णाजिनं बहिर्विशसनं त्रिरवधूय प्रत्यग्ग्रीवमुपरि-
ष्टाल्लोम तदास्तीर्य तस्य भसत्प्रदेशमुपसमस्य तत्रोलूखलं संस्थाप्य तस्मिन्व्री-
हीनोप्याऽऽसीनैव मुसलेनावहत्योलूखलस्य पुरस्ताच्छूर्पं निधायोलूखलस्थां-
स्तण्डुलाञ्छूर्पे निक्षिप्य कृष्णाजिनस्योत्तरतस्त्रिर्निष्पूय तुषान्प्रध्वंसयित्वा (स्य)
तांस्तुषान्दक्षिणहस्तेन कृष्णाजिनस्याधस्तान्निक्षिपत्यनिरीक्षन्( माणा ) ।
ततो दक्षिणहस्तेनैव निक्षिप्तांस्तुषान्निपीड्याप उपस्पृश्य तण्डुलान्वि-
विच्य प्रस्कन्दनार्थं आसादिते पात्रे प्रस्कन्दयित्वा(न्य) तानादायोलूखले
प्रक्षिप्य त्रिष्फलीकृत्य फलीकरणानि कृष्णाजिनस्योत्तरतो निक्षिप्य तण्डुला-
न्प्रक्षाल्याग्नेः पश्चात्प्रक्षालनोदकं निनयति ।

ततः कर्ता प्रक्षालितांस्तण्डुलांश्चरुस्थाल्यामोप्य मेक्षणेनाऽऽलोड्य श्रप-
यित्वा दर्वीं मेक्षणं च संमृज्याऽऽज्यविलापनादि पवित्राभ्याधानान्तं कुर्यात् ।
तत्राऽऽज्येन सह चरोरपि पर्यग्निकरणम् ।

तत आसादितान्दर्भानग्नेः पश्चादास्तीर्य तत्राऽऽज्यं निधाय शृतं चरुं
दर्व्याऽऽज्येनाभिघार्योदगुद्वास्याग्नेः पश्चादास्तृते बर्हिष्याज्यस्योत्तरत आसा-
द्याग्निं परिषिञ्चेत् । अथवा पात्रासादनान्ते कृष्णाजिनमास्तीर्यानास्तीर्य
वा पत्न्याऽवहननमात्रं कारयित्वा त्रिष्फलीकृत्य फलीकरणान्युत्तरतो
निरस्येत् ।

ततो दर्वीसंमार्गादि पवित्राभ्याधानान्तं दर्भास्तरणपक्षे तदपि कृत्वा शृतं
चरुं दर्व्याऽऽज्येनाभिघार्योदगुद्वास्याग्नेः पश्चाद्दर्भेषु दर्भास्तरणाभावपक्षे भूमा-
वेव निधायाग्निं परिषिञ्चेत् । एतत्प्रयोगद्वयं सर्वेषु स्थालीपाकेषु ज्ञेयम् ।

ततस्तूष्णीं सादितां समिधमाधाय मेक्षणेनोपहत्य प्रदीप्तेऽग्नौ जुहोति ।
'ॐ अग्नये स्वाहा' इति भार्यान्वारब्धो जुहोति । अग्नय इदं न मम । पुनर्भूय
उपहत्य, 'ॐ अग्नये स्विष्टकृते स्वाहा' इति भार्यान्वारब्धोऽसंसक्तां पूर्वाहुत्या-

१ ख. ग. ङ. च. °तां स्वयमेव व्रीहीन्प्रक्षाल्य चरु° ।

त्तरार्धपूर्वार्धे जुहोति। अग्नये स्विष्टकृत इदं न मम। अन्वारम्भो न वा। ततो मेक्षणमग्नौ प्रक्षिपेत्। न वा प्रक्षेपः।

ततः परिस्तरणानि विसृज्य व्यस्तसमस्तव्याहृतिभिश्चतस्रः प्रायश्चित्ताहुतीर्हुत्वोत्तरं परिषेकं कृत्वा संस्थाजपेनाग्निमुपस्थाय तं संपूज्य ललाटे विभूतिं धृत्वा भूयसीं दक्षिणां ब्राह्मणेभ्यो दत्त्वा ब्राह्मणान्संभोज्य विष्णुं संस्मरेत्। नात्रर्षभदानम्। समिदभ्याधानादिः प्रयोगः प्रदर्शितप्रयोगप्रकारद्वयेऽपि समानः। "आग्नेयेन स्थालीपाकेन यजते" इति पुनर्वचनाज्ज्ञापकात्। "अत ऊर्ध्वं दक्षिणावर्जमुपोषिताभ्यां पर्वसु कार्यः" इत्यापस्तम्बोक्तेश्च। एवमेव दर्शे। अत्र संकल्पात्पूर्वं चेत्स्त्रीरजस्वला तदा द्वितीयादिनिषिद्धव्यतिरिक्तपञ्चमादिदिवसे त्र्यहकालं सद्यस्कालं वाऽन्तरितं पौर्णमासस्थालीपाकं कुर्यात्। प्रथमदर्शपूर्णमासस्थालीपाकयोराशौच आरम्भो न भवति। न चासगोत्रेण कारणीयावेताविति वाच्यम्। प्रथमप्रयोगे मुख्यद्रव्यालाभेनानारम्भ इव मुख्यकर्तुरधिकाराभाववशेनानारम्भस्यैव युक्तत्वात्। दर्शस्थालीपाकस्त्वन्तरितोऽपि त्र्यहकाल एव कार्यः। अनेकभार्यस्य विद्यमानासु भार्यासु मध्ये ज्येष्ठा चेद्भार्या संकल्पात्पूर्वं रजस्वला तदा स्थालीपाकः पञ्चमादिदिवसेष्वेव कार्यः। संकल्पोत्तरं रजस्वला चेत्तदा तां गृहान्तरे संस्थाप्य स्थालीपाकः स्वकाल एव कर्तव्यः। प्रथमे प्रयोगे तु संकल्पादुत्तरमपि सर्वासामसर्वासां वा पत्नीनां रजोदर्शने दर्शपूर्णमासौ नैव भवत इति केचित्। भवत इत्यन्ये।

यदि विवाहोत्तरं दर्शपूर्णमासस्थालीपाकयोरनुष्ठानं न कृतमनन्तरमग्निविच्छेदः, बहुकालोत्तरं पुनः संधानं यदा क्रियते तदा दर्शपूर्णमासस्थालीपाकयोरारम्भकाले रजोदोषप्रसक्तिः। यदा वा दशवार्षिक्यादिवधूलाभे विवाहकालेऽपि रजोदोषप्रसक्तिस्तत्र प्रथमारम्भो न भवति। एवमाग्रयणस्थालीपाकादिष्वपि।

यदि स्वकाले दर्शपूर्णमासस्थालीपाकावनारब्धौ तदा विभ्रष्टेष्टिदेवतोद्देशेन स्थालीपाकाञ्श्रपयेत्। श्रपणकाले प्रथमतृतीयचर्वोरुपरि गतं मण्डमादायैन्द्रे चरौ प्रक्षिपेत्।

तत आपूर्विकतन्त्रेणैवाऽऽज्यसंस्कारादि परिषेकान्तं कृत्वा तूष्णीं समिधमाधाय, 'ॐ अग्नये स्वाहा। ॐ इन्द्राय स्वाहा। ॐ सोमाय स्वाहा' इत्याहुतित्रयं हुत्वा स्विष्टकृदाद्युत्तरं तन्त्रमापूर्विकधर्मेण कुर्यात्।

प्रथमे दर्शस्थालीपाकेऽतिपन्न आगामिदर्शे विभ्रष्टस्थालीपाकं कृत्वा स्वकाले स्थालीपाकं कुर्यादित्येके ।

विभ्रष्टस्थालीपाकं कृत्वा गौणकालेऽपि प्रथमदर्शस्थालीपाकानुष्ठानमित्यन्ये ।

पथिकृद्वैश्वानरावेव कुर्यान्न तु विभ्रष्टस्थालीपाकमित्यपरे ।

मम तु पौर्णमासस्थालीपाकारम्भेण दर्शस्थालीपाकस्याऽऽरब्धत्वान्न विभ्रष्टस्थालीपाक इति युक्तं प्रतिभाति । अन्यथा पृथगन्वारम्भणस्थालीपाकोऽप्यारम्भनिमित्तः स्यादिति ।

पिण्डपितृयज्ञारम्भात्पूर्वं यदि पत्नी रजस्वला तदाऽग्रिमदर्शे ससहोतारं हुत्वा पिण्डपितृयज्ञ आरब्धव्य इति शतद्रूयीव्याख्यायाम् । एवमाशौचेऽपि ।

इति दर्शपूर्णमासस्थालीपाकप्रयोगः ।

## अथाऽऽग्रयणम् ।

तच्च यद्यपि गृह्ये नोक्तं तथाऽपि "चतुःशरावमोदनं पक्त्वाऽऽग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो हुत्वा तद्ब्राह्मणं भोजयति" इतिश्रौतसूत्रोक्तानुकल्पाश्रितगृह्योक्तसामान्यस्थालीपाकविधिना कर्तव्य ए(मे)व । आचारात् । सूत्रकारेणानुक्तत्वात्कृताकृतः(म्) । करणपक्षे प्रतिसंवत्सरं श्रौताग्रयणारम्भपर्यन्तं कर्तव्य ए(मे)व न तु तदनन्तरम् । अकरणपक्षे नवान्नभक्षणे दोषोऽपि नास्ति । विधानाभावात् । आचारानुरोधात्करणं वरम् ।

तस्य कालः श्रौतसूत्रे—

"यदीष्ट्या यदि पशुना यदि सोमेन तैरमावास्यायां पौर्णमास्यां वैव यजेत" इति।

अत्रामावास्यापौर्णमासीशब्दाभ्यां तदुत्तरवर्तिन्योः प्रतिपदोरपि ग्रहणमिति वैजयन्तीकारः । एतत्समानार्थक आपस्तम्बसूत्रे रामाण्डारस्त्वमावास्यापौर्णमासीशब्दाभ्यां तदन्त्यक्षणो गृह्यते, तेन तद्वत्यहोरात्रे भवतीत्याह ।

माधवोऽपि—"इष्ट्यादिविकृतिः सर्वा पर्वण्येवेति निर्णयः" इति ।

अत्र देवनक्षत्राणि रेवतीं चाऽऽह बौधायनः—

"अपि वा देवनक्षत्रे रेवत्यां वाऽऽग्रयणेष्टिं कुर्वीत" इति ।

देवनक्षत्रे कर्मकर्तव्यताविषये श्रुतिरपि—

"यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुते" इति ।

रेवतीनक्षत्रे कर्मकर्तव्यताविषयेऽप्यस्ति श्रुतिः—

"तस्माद्रेवत्यां पशूनां कुर्वीत। यत्किंचार्वाचीनꣳ सोमात्प्रैव भवति" इति।

देवनक्षत्राणि कानीत्यपेक्षायां तत्रैवोक्तम्—

"कृत्तिकाः प्रथमम्। विशाखे उत्तमम्। तानि देवनक्षत्राणि" इति।

एतानि नक्षत्राण्यापूर्यमाणपक्षान्तर्वर्तीन्येव ग्राह्याणि न तु कृष्णपक्षान्तर्वर्तीन्यपि। तेन शुक्लपक्षान्तर्वर्तिनक्षत्रेष्वेव विकृतिर्भवति। तत्र पर्वणः संपूर्णत्वेऽपराह्णसंधौ वा तद्दिने प्रकृतिप्रधानानुष्ठानाभावाद्विकृतिं कृत्वा प्रकृतेरुपक्रमः कार्यः। यदीष्ट्येतिवाक्यविहितकाललाभादिति मीमांसकानां याज्ञिकानां च संप्रतिपन्नमेव। पूर्वाह्णसंधौ त्वौदयिकपर्वणः प्रकृत्यवरुद्धत्वात्पूर्वपर्वण्येवोपदिष्टपर्वकालत्वानुरोधेनातिदेशप्राप्तं प्रातःकालं त्र्यहकालतावद्बाधित्वा विकृत्यनुष्ठानं युक्तमिति मीमांसकाः।

याज्ञिकास्तु— आवर्तनतत्पूर्वसंध्योः प्रकृत्यनुष्ठानानन्तरं संधिदिन एव विकृत्यनुष्ठानं कर्तव्यमिति वदन्तीति कालतत्त्वविवेचने।

आग्रयणे विशेषः श्रुतावुक्त आग्रयणेष्टिं प्रकृत्य—

"यस्मिन्कालेऽमावास्या सपद्येत तयेष्ट्वाऽथैतया यजेत यदि
पौर्णमासी स्यात्तयेष्ट्वाऽथ पौर्णमास्या यजेत" इति।

आवर्तनात्पूर्वमिति शेषः। संपद्येत प्राप्नुयात्। तयाऽमावास्यया। एतयाऽऽग्रयणेष्ट्या। यदि पौर्णमास्यावर्तनकालात्पूर्वं प्राप्नुयात्तयाऽऽग्रयणेष्ट्येष्ट्वा पौर्णमास्या यजेतेति।

मण्डनोऽपि—

"आवर्तनात्प्राग्यदि पर्वसंधिः कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः।
तदैव यागः परतो यदि स्यात्तस्मिन्विकृत्याः प्रकृतेः परेद्युः" इति॥

अस्यार्थः—आवर्तनात्पूर्वं यदि पर्वसंधिस्तस्मिन्संधिदिने प्रथमतः प्रकृतिं कृत्वा पश्चाद्विकृतिं कुर्यात्। यदा त्वावर्तनात्परः संधिस्तदा संधिदिने विकृतिरेव भवति प्रकृतिस्तु परेद्युरेवेति। धूर्तस्वामिकपर्दिस्वाम्यादयोऽप्येवमाहुः।

तत्राऽऽग्रयणं त्रिविधं व्रीह्याग्रहणं यवाग्रयणं श्यामाकाग्रयणं चेति।

तत्र सूत्रम्—"व्रीहीणामग्रपाकस्य यजने तथा श्यामाकानां
यवानामग्रपाकस्य यजते" इति।

अग्रपाकस्तत्कालपाकः।

---

१ क. ख. ङ. च. भवन्ति।

एतेषां काला वैखानसापस्तम्बभरद्वाजैरुक्ताः—

" शरदि व्रीहिभिर्वसन्ते यवैर्वर्षासु श्यामाकैः " इति ।

तत्र यवाग्रयणं कृताकृतम् । तदुक्तं वैजयन्त्यां वाड्वृच्ये[1]—'यवाग्रयणं कृताकृतम्' इति । एतच्च नवान्नाशनाधिकारार्थम् ।

तथा च सूत्रम्—

" आग्रयणेष्टिं व्याख्यास्यामस्तया नानिष्ट्वा नवाना-
मोषधीनां फलान्यश्नाति ग्राम्याणामारण्यानां च " इति ।

तयाऽऽग्रयणेष्ट्याऽनिष्ट्वा नवानां ग्राम्याणामारण्यानां चौषधीनां फलानि नाश्नातीत्यर्थः ।

एतत्सर्वं मण्डनेन स्पष्टमुक्तम्—

" श्यामाकान्वैणवान्व्रीहीन्यवान्वाऽऽग्रयणात्पुरा ।
न भुञ्जीतेति विस्पष्टं यज्ञपार्श्वे निरूपितम् ॥
कोशीधान्यानि शाकानि वृक्षादीनां फलानि च ।
अनिष्ट्वाऽऽग्रयणेनापि काममेतानि भक्षयेत् ॥
कोशीधान्येषु वा किंचिदभोज्यमवगम्यते ।
भरद्वाजादिसिद्धान्तान्मुद्गमाषतिलान्यपि ॥
नवेषु च नवान्नानि नाद्यादाग्रयणात्पुरा ।
व्रीहिश्यामाकनीवारान्यवान्वेणुयवानपि ॥
शालीन्मुद्गांश्च गोधूमान्कङ्गूनिति विवर्जयेत् ।
अन्यानि काममश्नीयादिति गर्गेण भाषितम् ॥
हरिमन्थकलायानां फलं नाश्नन्ति केचन ।
यानि चान्यानि भक्ष्याणि प्रोक्तानि समनन्तरम् ॥
तान्यप्यपक्वावस्थायामश्नीयात्कामतः[2] सुधीः ।
अपक्वधान्यमात्रोपलक्षणं हरिता यवाः " इति ॥

संकर्षकाण्डस्य भाष्यकारेण वर्णितम्—

" धान्यान्तरं यवप्रख्यं भारद्वाजीयभाष्यकृत् ।
अब्रवीद्धरितयवं न पुनर्हीतरं यवम् ॥
तेन तद्वर्जमन्यानि फलान्यपि न भक्षयेत् " इति ।

---

१ ग. ङ. च. षड्वृच्ये । २ ख. ग. ङ. च. °यात्कर्मतः ।

हरितमन्थाश्चणकाः। कलायाः सतीनाः। एतासामोषधीनां फलं चणककलायरूपं केचनाऽऽचार्या नाश्नन्तीत्यर्थः । आग्रयणात्पूर्वं नवान्नाशननिषेध उभयोः समः।

तथा च मण्डनः—

" नवाशननिषेधोऽयं दंपत्योरुभयोः समः " इति।

नवस्वरूपमप्युक्तं तेनैव—

" नवस्यावध्यपेक्षत्वादधुनाऽवधिरुच्यते।
कियद्दूरे पुराणत्वं नवत्वं कियदन्तिके॥
सस्यानामवधिर्ज्ये(र्ज्यै)ष्ठी पौर्णमासी प्रसिद्धितः।
आश्विनी पौर्णमासी तु भवेदत्रोत्तरावधिः॥
तादृश्योरुभयोः पौर्णमास्योर्मध्ये यदुद्भवेत्।
धान्यं तन्नवमित्याहुस्तत्कालाग्रयणं प्रति॥
तदेव च पुराणं स्यादूर्ध्वं स्वाग्रयणेष्टितः।
यथाऽऽग्रयणशास्त्रेषु नवत्वं तदपेक्षणे॥
ये कालास्तस्य बुद्धिस्थाः स्वान्योन्यावधयो मताः।
प्रावृट्कालात्परं पक्कं शरद्याग्रयणेन च॥
ऊर्ध्वं वसन्तान्निष्पन्नं प्रावृडाग्रयणेन च।
यस्मिन्नाग्रयणं कुर्याद्दतौ तदृतुसंभवम्॥
धान्यं तन्नवमित्याहुरधः पक्कं पुरातनम् " इति।

इदं चार्धाधानिन आहिताग्नेरपि न भवति। श्रौतेनैव सिद्धेः।

मण्डनोऽपि—" इति ब्रुवद्भिः संकर्षकाण्डिभिर्न्यायसाम्यतः।
अर्धादिदमपि प्रोक्तमर्धाधाने कृते सति।
श्रौताग्रयणमेवास्य न स्मार्ताग्रयणं भवेत् " इति।

स्वस्य करणाशक्तौ कृताग्रयणेन ऋत्विजा कारणीयः।

तदाह मण्डनः—

" अकृताग्रयणो नास्य ऋत्विगाग्रयणे भवेत्।
अग्निमानिति शङ्खेन धर्मशास्त्रे निरूपितम् " इति।

१ च. °तः। तथा°।

नवान्नाशनाकरणेऽपि करणपक्ष इदं कार्यमेव ।

" प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ।
कर्तव्याऽऽग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ।
एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विजः " इति याज्ञवल्क्योक्तेः ।

तत्र प्रथमाग्रयणं तु पर्वण्येव । द्वितीयादौ त्वनियमः ।

## अथ प्रयोगः ।

उक्तकाले प्रातरौपासनं हुत्वाऽग्नेः पश्चात्सपत्नीक उपविश्याऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मम सपत्नीकस्य नवानां व्रीह्यादिधान्यानां प्राशनाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं व्रीह्याग्रयणस्थालीपाकं करिष्य इति संकल्पं कुर्यात् । यदि तु केनापि निमित्तेन नवान्नप्राशनं न करोति तदा श्रीपरमेश्वरप्रीत्यर्थं व्रीह्याग्रयणस्थालीपाकं करिष्य इत्येवं संकल्पः । यदि तु यस्मिन्वर्षे यस्य धान्यस्यानुत्पत्तिस्तदा तस्मिन्वर्षे तदीयाग्रयणस्य लोपः । प्रथमाग्रयणं गुरुशुक्रास्तमलमासादिषु न भवति । द्वितीयादिप्रयोगेष्वपि शुद्ध-काललाभेऽस्तादौ न कार्यम् ।

ततो गणेशं संपूज्य पुण्याहादिवाचनं मातृकापूजनं नान्दीश्राद्धं च कुर्यात् । तत्रेन्द्राग्न्यादयः प्रीयन्तामिति वदेदिति प्रथमे प्रयोगे विशेषः ।

ततोऽग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणाया-मान्तं कृत्वाऽऽग्रयणस्थालीपाककर्मणि या यक्ष्यमाणा देवतास्ताः सर्वाः परि-ग्रहीष्यामि । इन्द्राग्नी विश्वान्देवान्द्यावापृथिव्यौ चैकैकया नवव्रीहिकचर्वा-हुत्या यक्ष्ये[1] । स्विष्टकृद्धोमे—अग्निं स्विष्टकृतं हुतशेषचर्वाहुत्या यक्ष्ये । एता देवताः सद्यो यक्ष्य इत्युक्त्वा व्याहृतिभिरन्वाधानसमिदभ्याधानं कुर्यात् । पुरस्तात्स्विष्टकृतोऽज्यानीहोम इत्यस्मिन्पक्षेऽन्वाधाने प्रधानदेवतोल्लेखान-न्तरमज्यानीहोमदेवतोल्लेखः कार्यः । स यथा । अज्यानीहोमे—इन्द्रमाज्या-हुत्या यक्ष्ये । द्यावापृथिव्यावाज्याहुत्या यक्ष्ये । ग्रीष्मं हेमन्तं वसन्तं शरदं वर्षाश्चाऽऽज्याहुत्या यक्ष्ये । इदुवत्सरं परिवत्सरं संवत्सरं चाऽऽज्याहुत्या यक्ष्ये । देवान्पितुं चाऽऽज्याहुत्या यक्ष्य इत्युक्त्वाऽग्निं स्विष्टकृतं हुतशेष-चर्वाहुत्या यक्ष्य इत्यादि समिदभ्याधानान्तं कुर्यात् ।

ततोऽग्निं परिस्तीर्येत्यादि । पात्रासादने दर्वीमाज्यस्थालीं प्रोक्षणीपात्र-मुपवेषं चतुःशरावपरिमितचरुश्रपणपर्याप्तां चरुस्थालीं मेक्षणं निर्वापार्थमेकं

१ क. °क्ष्ये । अ° ।

शरावं संमार्गदर्भानवज्वलनदर्भानाज्यं समिधं चेत्यासादयेत् । मेक्षणप्रहरण-पक्षे शरावासादनोत्तरं मेक्षणासादनम् ।

ततः पवित्रे कृत्वाऽग्नेः पश्चाच्छूर्पं निधाय तस्मिन्पवित्रे प्रागग्रे संस्थाप्याऽऽसादितं शरावमादाय व्रीहिभिः पूरयित्वा तेन शूर्पे सर्वा देवता अभिध्यायन्निर्वपति । एवं पुनस्त्रिवारम् ।

तत उत्तरेणाग्निं निरुप्तव्रीहिमच्छूर्पं निधायाज्यानीहोमं कुर्यात् । स यथा । उत्तरेणाग्निं दर्भान्संस्तीर्य तेषु स्रुचं स्रुवमाज्यस्थालीं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भान्होमपर्याप्तमाज्यं पञ्च समिधश्चाऽऽसाद्य पूर्वकृते एव पवित्रे गृहीत्वा प्रोक्षणीः संस्कृत्याज्यानीहोमार्थानि पात्राण्युत्तानानि कृत्वा प्रोक्ष्य स्रुवस्रुचोर्निष्टपनादि पुनराहारमाज्यं त्रिरुत्पूयेत्येतदन्तं कृत्वा पवित्रे प्रज्ञाते निदध्यात् । अन्यकरणपक्षेऽस्त्येव प्रहरणं नाग्नेः परिस्तरणं पूर्वकृतपरिस्तरणेनैव सिद्धेः ।

ततस्तूष्णीं परिषिच्य स्रुचि स्रुवेण पञ्च गृहीत्वा पञ्च समिधोऽभ्याधाय शतायुधायेत्यादीनां पञ्चानां मन्त्राणामग्निर्ऋषिः । प्रथमस्येन्द्रो देवता । द्वितीयस्य द्यावापृथिव्यौ । तृतीयस्य ग्रीष्मो हेमन्तो वसन्तः शरद्वर्षाश्च । चतुर्थस्येदुवत्सरः परिवत्सरः संवत्सरश्च । पञ्चमस्य देवाः पितुश्च । सर्वेषां जगती छन्दः । होमे विनियोगः । इत्यृष्यादि स्मरेत् । न वर्ष्यादिस्मरणमत्र । 'ॐ शतायुधाय० विश्वा स्वाहा' । इन्द्रायेदं न मम । 'ॐ ये चत्वारः० सर्वे स्वाहा' द्यावापृथिवीभ्यामिदं न मम । 'ॐ ग्रीष्मो हेमन्त० स्याम स्वाहा' । ग्रीष्माय हेमन्ताय वसन्ताय शरदे वर्षाभ्यश्चेदं न मम । 'ॐ इदुवत्सराय० हताः स्याम स्वाहा' इदुवत्सराय परिवत्सराय संवत्सराय चेदं न मम । 'ॐ भद्रान्नः श्रेयः० स्योनः स्वाहा' । देवभ्यः पितवे चेदं न मम । इति पञ्चाज्यानीरग्नेर्दक्षिणतस्तिष्ठन्हुत्वा स्थालीपाकपात्रतः प्रोक्षणीपात्रमादाय प्रोक्षणीः संस्कृत्य हविष्प्रोक्षणादि चतुःशरावपरिमितचरुश्रपणान्तं कुर्यात् ।

ततश्चर्वभिघारणादि बर्हिष्यासादनान्तं कृत्वाऽदित इत्यादिभिरग्निं परिषिच्याऽऽसादितामेकां समिधमभ्यादध्यात् ।

ततो मेक्षणेन चरोरुपहत्य 'ॐ इन्द्राग्निभ्याᳬ स्वाहा' इति जुहोति । इन्द्राग्निभ्यामिदं न मम ।

ततः पुनस्तथैवोपहत्य 'ॐ विश्वेभ्यो देवेभ्यः स्वाहा' इति जुहोति । विश्वेभ्यो देवेभ्य इदं न मम[1] । पुनस्तथैवोपहत्य 'ॐ द्यावापृथिवीभ्याᳬ स्वाहा' इति

१ ङ. च. °म । ततः पु° ।

। द्यावापृथिवीभ्यामिदं न मम । अत्र वाऽज्यानीहोमः । अस्मिन्पक्षे नाऽऽज्यसंस्कारः । संस्कृताज्यस्य सत्त्वात् । प्रत्याहुतिसमिदभ्याधानं भवत्येव । इध्मस्याभावात् । अज्यानीहोमस्याकरणमेव वा ।

ततो मेक्षणेनोत्तरार्धाद्धूय उपहत्य 'ॐ अग्नये स्विष्टकृते स्वाहा' इतीशान्यामितराहुतिभिरसंस्पृष्टां जुहोति । अग्नये स्विष्टकृत इदं न मम । ततो मेक्षणमनुप्रहरेन्न वा प्रहरणम् ।

ततः परिस्तरणानि विसृज्य दर्व्या व्यस्तसमस्तव्याहृतिभिश्चतस्रः प्रायश्चित्ताहुतीर्हुत्वाऽदितेऽन्वमꣳस्था इत्यादिभिरुत्तरपरिषेकं कृत्वा संस्थाजपेनाग्निमुपस्थायाग्निं संपूज्य भस्म धृत्वाऽऽचार्याय दक्षिणां दत्त्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

ततो हुतशेषमिश्रितेन सव्यञ्जनेन नवान्नेन ब्राह्मणान्संभोज्य स्वयं प्राणाहुतिभ्यः प्राक् ,

भद्रान्न इति मन्त्रस्य विश्वे देवाः पितुस्त्रिष्टुप् । नवव्रीह्यन्नाशने विनियोगः । 'ॐ भद्रान्नः श्रेय० स्योनः' इति मन्त्रमुक्त्वा प्राणाहुत्यादिविधिना नवान्नमिष्टबन्ध्वादियुतो भुञ्जीत । हुतशेषमिश्रान्नस्य भुक्तस्य वमने भक्षितेडाभागवमनप्रायश्चित्तमेव कार्यम् ।

तच्चाऽऽधानदीपिकायाम्—

"इडाभागे भक्षिते तु वमनं वै भवेद्यदा ।
आभिर्गीर्भिरिमं मन्त्रं दशवारं जपेत्तदा ॥
स्नानं कृत्वा मार्जनं च तस्य दोषप्रशान्तये" इति ॥

पूर्वं स्नानं शुद्ध्यर्थं तूष्णीं कृत्वाऽऽभिर्गीर्भिरिति मन्त्रेण पुनः स्नानं मार्जनं च कृत्वा दशवारमाभिरितिमन्त्रजपः कार्यः ।

"अनेन मार्जनं कृत्वा तस्य दोषप्रशान्तये" इति पाठे तु—आभिरिति मन्त्रेण मार्जनं कृत्वैतस्यैव मन्त्रस्य दशवारं जपः कार्य इति प्रयोगो द्रष्टव्यः । पूर्वं स्नानं त्वर्थसिद्धम् । अयमेव पाठो युक्तः ।

इति व्रीह्याग्रयणस्थालीपाकः ।

## अथ यवाग्रयणम् ।

तच्च वसन्ते । तत्र यवाग्रयणस्थालीपाकं करिष्य इति संकल्पवाक्यम् । नूत-

नयवमयश्चरुः। 'एतमु त्यं मधुना संयुतं यवम्' इति 'भद्रान्नः श्रेयः' इत्यस्य स्थाने मन्त्र इति विशेषः। अन्यत्समानम्।

एतमु त्यमित्यस्य मन्त्रस्य विश्वे देवा यवान्नं जगती। नूतनयवान्नप्राशने विनियोग इति ऋष्यादिकं ज्ञेयम्। एतच्च यवाग्रयणं कृताकृतम्।

---

## अथ श्यामाकाग्रयणम्।

श्यामाकाग्रयणस्थालीपाकं करिष्य इति संकल्पवाक्यम्। नूतनश्यामाकमयश्चरुः। सोमो देवता। स्विष्टकृद्द्वितीयम्।

अग्निः प्रथमः प्राश्नात्वित्यस्य मन्त्रस्य विश्वे देवाः श्यामाकान्नमनुष्टुप्। नूतनश्यामाकान्नाशने वियोगः। 'ॐ अग्निः प्रथमः प्रा० चर्षणिः' इति नूतनश्यामाकान्नाशनमन्त्र इति विशेषः। समानमन्यत्।

अथवा श्यामाकाग्रयणसिद्ध्यर्थं पार्वणस्थालीपाके वा श्यामाकतृणमयं बर्हिः कर्तव्यम्। अथवा नूतनश्यामाकान्गवे दत्त्वा तस्याः क्षीरेण सायंप्रातरौपासनहोमौ होतव्यौ। तेनैव तत्सिद्धिः। व्रीह्याग्रयणस्थालीपाककरणाशक्तौ नवैर्व्रीहिभिरेव पार्वणस्थालीपाकौ कार्यौ। अथवा नवान्व्रीहीन्गवे दत्त्वा तस्याः क्षीरेण सायंप्रातरौपासनहोमौ होतव्यौ।

अनुकल्पान्तरमप्याह मण्डनः—

" गृह्ये बौधायनेनोक्तं नवेष्टिश्चेन्न संभवेत्।
ब्राह्मणे भोजनं दद्यात्कुर्याद्वा वैश्वदेविकम् " इति ॥

इदं च सूत्रोक्तानुकल्पासंभवे ज्ञेयम्। इदं चाऽऽग्रयणं मलमासास्तादिषु न भवति। शुद्धकालस्य संभवात्। पुरातनधान्याभावे त्वत्रापि भवति। यदि दैवान्मानुषाद्वा प्रतिबन्धाच्छरत्काल आग्रयणं न जायेत तदा हेमन्ते शिशिरे वाऽतीतमाग्रयणं कुर्यात्।

इत्याग्रयणस्थालीपाकः।

---

## अथ गर्भाधानम्।

तत्राऽऽदौ प्रथमरजोदर्शने मासपक्षादीनां फलमुच्यते।

तत्र मासफलं विधानमालायां वाराहे—

" आद्यर्तौ विधवा नारी चैत्रमासे भवेद्ध्रुवम्।
वैशाखे बहुपुत्रा स्याज्ज्येष्ठे रोगातुरा भवेत् ॥

आषाढे त्वनपत्या स्याच्छ्रावणे धनिनी भवेत् ।
भाद्रे तु दुर्भगा क्लीबा ह्याश्विने च तपस्विनी ॥
कार्तिके विधवा बाला मार्गशीर्षे बहुप्रजा ।
पौषे स्यात्पुंश्चली नारी माघे पुत्रसुखान्विता ॥
फाल्गुने सुखसंपन्ना प्रथमर्तौ फलं स्मृतम् " इति ।

पक्षफलं स्मृतिचन्द्रिकायाम्—

" शुक्लपक्षे सुशीला स्यात्कृष्णे सा कुलटा भवेत् ।
कृष्णस्य दशमी यावन्मध्यमं फलमादिशेत् ॥
एकादश्यादिषु फलमधमं परिकीर्तितम् " इति ।

तिथिफलमपि तत्रैव—

" वैधव्यदा हि प्रतिपद्द्वितीया पुत्रवर्धिनी ।
सौभाग्यदा तृतीया च चतुर्थी सुखनाशिनी ॥
पञ्चमी सुखदा चैव षष्ठी संततिनाशिनी ।
सप्तमी धननाशाय पुत्रसौभाग्यदाऽष्टमी ॥
नवमी क्लेशदा स्त्रीणां दशमी च सुखप्रदा ।
एकादश्यर्थनाशाय द्वादशी रतिवर्धिनी ॥
त्रयोदशी तु शुभदा दुर्भगा च चतुर्दशी ।
पौर्णमासी त्वमावास्या दुःखरोगविवर्धिनी " इति ॥

ज्योतिर्ग्रन्थान्तरे तु—

" आद्यर्तौ सुभगा नारी प्रतिपत्सु रजस्वला " इति । तथा—" सप्तमी धनवर्धिनी " इति । तथा—" अष्टम्यां राक्षसी नारी " इति । तथा—" एकादश्यां सुखान्विता । द्वादश्यां दुर्भगा नारी " इति । तथा—" पौर्णमास्यां सुपुत्रिणी " इति प्रतिपदादिद्वादश्यन्ततिथिषु विपरीतफलमुक्तम् ।

अत्र प्रतिपत्पूर्णिमासमीपस्थैव ग्राह्या । " वैधव्यदा हि प्रतिपत् " इत्यत्र त्वमासमीपस्था प्रतिपद्ग्राह्या । तस्याश्चन्द्रक्षयाविशेषेणामातुल्यत्वात् । सप्तमीनिषेधे कृष्णा ग्राह्या । एवमष्टम्येकादशीद्वादशीष्वपि ज्ञेयम् । पौर्णमासीनिषेधस्तु पौर्णमासीपूर्वार्धपरः । तस्य भद्रारूपत्वात् । विधिस्त्वितरांश इति ज्ञेयम् ।

---

१ ख. ग. ङ. च. सुतान्वि° । २ ग. ङ. च °रः । यदि भद्रा न जायेत दर्शे स्याच्चौरिका ध्रुवमितिवचनात् । वि° ।

वारफलं विधानमालायां वाराहे—

" आदित्ये विधवा नारी सोमे चैव मृतप्रजा।
आत्मनो घातिनी भौमे बुधे कन्याप्रसूर्भवेत् ॥
गुरौ पुत्रवती नारी कन्यापुत्रप्रसूर्भृगौ।
पौंश्चल्यकारिणी मन्दे भर्तुरग्रे म्रियेत सा " इति ॥

सा रजोवती। नारदीये तु—

" रुग्णा पतिव्रता दुःखी पुत्रिणी भोगभागिनी।
पतिप्रिया क्लेशभागी सूर्यवारादिषु क्रमात् " इत्युक्तम्।

मृतप्रजेति कृष्णपक्षसोमवारविषयम्। पतिव्रतेति शुक्लसोमवारविषयम्। नातो विरोधः।

नक्षत्रफलं वाराहे—

" अश्विनी सुखदा स्त्रीणां भरणी कामवर्धिनी।
कृत्तिका दैन्यदा ज्ञेया रोहिणी सुखदा भवेत्।
मृगस्तु काममोगाय सुखदं रुद्रदैवतम्।
अदित्यृक्षं सुखं दद्याद्गुरुभं सुखवर्धनम्।
आश्लेषाः सुखनाशाय मघा वैधव्यदाः स्मृताः।
पूर्वा फल्गुनिका पुत्रकन्यासुखविवर्धिनी।
उत्तरा ह्यर्थनाशाय हस्तः पुत्रप्रवर्धनः।
चित्रा चित्रतनुं नारीं कुरुते नात्र संशयः।
स्वाती शुभाय नारीणां विशाखा सुखनाशिनी।
अनूराधाऽर्थभोगाय ज्येष्ठा भर्तृवियोगदा।
शुभं वाऽप्यशुभं मूलं पूर्वाषाढाऽर्थनाशिनी।
सुखदा चोत्तराषाढा श्रवणः सुखवर्धनः।
धनिष्ठापञ्चकं स्त्रीणां प्रथमर्तौ सुखप्रदम् " इति।

रत्नमालायां तु—

" करादिपञ्चोत्तरमूलपूषविष्णुत्रयाश्वीज्यविधीन्दुभेषु।
आद्यं रजः सौख्यसुतायुरर्थं सौभाग्यवृद्धिं कुरुतेऽङ्गनानाम्।
पूर्वात्रये याम्यभुजंगधिष्ण्ये वैधव्यमस्या विदधीत नूनम्।
मघेशयोः शोकमथादितेर्भे वन्ध्या तथैन्द्रेऽप्यनले दरिद्रिणी " इत्युक्तम्।

करादिपञ्चकं हस्तचित्रास्वातीविशाखानूराधानक्षत्राणि । उत्तरशब्देनो-त्तरात्रयम्[1] । ईश आर्द्रा । ऐन्द्रं ज्येष्ठा । अनलः कृत्तिका[2] ।

ग्रन्थान्तरे विशेषः—

" आद्यंशे दस्रमघामूलानां सर्पशक्रपौष्णानाम् ।
चरमे यदि पुष्पवती कुलटा वन्ध्या मृतप्रजा भवति " इति ।

दस्रावश्विनी । सर्प आश्लेषाः । शक्रो ज्येष्ठा । पौष्णं रेवती । अत्र केषु-चिन्नक्षत्रेषु परस्परं फलविरोधोऽस्ति स शुक्लकृष्णपक्षान्तर्गतत्वेन व्यवस्थाप-नीयः । शुभं फलं शुक्लपक्षान्तर्गतनक्षत्रविषयं, निषिद्धं फलं कृष्णपक्षान्तर्गत-नक्षत्रविषयम् । इति नक्षत्रफलम् ।

## अथ योगफलम् ।

ज्योतिर्निबन्धे वसिष्ठः—

" आद्यतौ दुर्भगा नारी विष्कम्भे चेद्रजस्वला ।
वन्ध्या स्यादतिगण्डे च शूले शूलवती भवेत् ।
गण्डे तु पुंश्चली नारी व्याघाते चाऽऽत्मघातिनी ।
वज्रे च स्वैरिणी प्रोक्ता पाते च पतिघातिनी ।
परिघे मृतवन्ध्या च वैधृतौ पतिमारिणी ।
शेषाः शुभावहा योगा यथानामफलप्रदाः " इति ।

ग्रन्थान्तरे विशेषः—

" अमासंक्रान्तिविष्ट्यादौ व्यतीपाते च वैधृतौ ।
परिघस्य तु पूर्वार्धे षट्षड्गण्डातिगण्डयोः ।
व्याघाते नव शूले च नाड्यः पञ्चर्तुदर्शने " इति ।

वर्जनीया इति शेषः ।

एतेषां फलानि तत्रैव—

" वैधव्यमर्थहानिं च सुतनाशं महद्भयम् ।
वैधव्यं शत्रुवृद्धिं च दारिद्र्यं क्षीणजीवनम् ।
तेजोहानिं दुर्भगत्वमेषु पुष्पवती क्रमात् " इति ।

इति योगफलम् ।

१ क. ङ. 'त्तराश' । २ ङ. च. कृत्तिकाः ।

## अथ करणफलम्।

" बवे पुष्पवती नारी वन्ध्या वा विधवा भवेत्।
बालवे पुत्रिणी नारी कौलवे प्रमदा भवेत्।
तैतिले संमतवती गरे नारी विनश्यति।
नष्टप्रजा वणिक्संज्ञे विष्ट्यां धनविवर्जिता।
शकुने(नौ) च चतुष्पादे नारी वैधव्यमाप्नुयात्।
नागे न रमते नारी किंस्तुघ्ने विधवा भवेत् " इति।

इति करणफलम्।

## अथ लग्नफलम्।

ज्योतिर्निबन्धे वसिष्ठः—

" व्यभिचारवती मेषे वृषभे परभोगिनी।
मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी॥
पुत्राढ्या सिंहराशौ स्यात्कन्यायां श्रीमती तथा।
विचक्षणा तुलायां तु वृश्चिके तु पतिव्रता॥
दुश्चारिणी धनुष्पूर्वे परे चैव पतिव्रता।
मकरे मानहीना च कुम्भे निर्धनवन्ध्यता॥
मीने विलक्षणे लग्ने ग्रहसंस्था विवाहवत् " इति॥

धनुषः पूर्वभागे दुश्चारिणी परभागे पतिव्रतेत्यर्थः। ग्रहसंस्था ग्रहपूजा विवाहवत्। शक्त्या द्वित्रिगुणा भवतीत्यर्थः।

ज्योतिर्निबन्धे वाराहे तु—

" आत्मघ्नी भ्रूणहा मेषे वृषे पुत्रवती भवेत्।
द्वंद्वे कन्या प्रसूर्नारी मृतापत्या च कर्कटे॥
सिंहे वैधव्यमाप्नोति कन्यायां स्त्रीप्रसूर्भवेत्।
तुलायां बहुपुत्राढ्या दुष्टकर्मरताऽलिनि॥
चापे पुत्रधनाढ्या स्यान्मृगे दुश्चारिणी भवेत्।
सकृत्प्रजावती कुम्भे मीने चाल्पप्रजा भवेत् " इत्युक्तम्॥

अलिर्वृश्चिकः। अलिनीत्यार्षप्रयोगः। अत्रापि शुक्लकृष्णपक्षान्तर्गतत्वेन पूर्ववद्व्यवस्था ज्ञेया। इति लग्नफलम्।

---

१ ङ. च. 'ति। अथ तिथिनक्षत्रादिसंधिफलम् ' दुर्भगा सर्वसंधिषु ' इति। अथ लग्न°।
२ ग. कर्के च।

## अथर्तुदर्शनलग्ने सप्तमस्थानस्थितग्रहाणां फलानि ।

नारसिंहीये—" लग्नस्य सप्तमस्थाने सूर्यो वैधव्यकारकः ।
चन्द्रः सत्पुत्रदो ज्ञेयः सौभाग्यं च लभेद्ध्रुवम् ॥
पुत्रहानिकरो भौमो बुधः सत्पुत्रदो भवेत् ।
बृहस्पतिर्धनायुष्यं शुक्रः सापत्नकारकः ॥
शनैश्चरे तु वन्ध्या स्याद्राहौ तु मरणं ध्रुवम् " इति ।

इत्यृतुदर्शनलग्ने सप्तमस्थानस्थितग्रहाणां फलानि ।

## अथ वेलाफलम् ।

तत्रैव—" प्रातकाले रजः स्त्रीणां प्रथमं शोकवर्धनम् ।
संगवे सुखसंतत्यै मध्याह्ने धनसंतती ।
अपराह्ने धनावाप्तिः सायाह्ने मध्यमं फलम् ।
पूर्वरात्रे सुखायालं मध्यरात्रे धनक्षयः ॥
पररात्रेऽर्थनाशश्च प्रथमर्तौ फलं स्मृतम् ।
महद्भयं संध्ययोः स्यादर्थहानिस्तथैव च " इति ॥

अन्यत्र तु—" लाभं चैव तु पूर्वाह्णे मध्याह्ने मध्यमं फलम् ।
अपराह्णे तु वैधव्यं पूर्वरात्रे शुभं भवेत् ॥
मध्यरात्रे मध्यमं स्यात्पररात्रे शुभान्यकम् " इत्युक्तम् ॥

शुभान्यकमशुभम्[1] । इति वेलाफलम् ।

## अथ ग्रहणफलम् ।

भार्गवः—" प्रसूतिर्यदि जायेत ग्रहणे चन्द्रसूर्ययोः ।
संक्रान्तौ च तदा स्त्रीणामादौ च ऋतुदर्शने ।
इत्थं संजायते यस्तु तस्य मृत्युर्न संशयः ।
व्याधिः पीडा च दारिद्र्यं शोकश्च कलहो भवेत् " इति ॥

यस्य प्रसूतिस्तस्य यस्य स्त्रिया ऋतुदर्शनं तस्य चेत्यर्थः । एतन्निमित्तकशान्तिस्तु शान्तिरत्नमालायां वक्ष्यते । इति ग्रहणफलम् ।

## अथ द्रष्टृफलम् ।

" पुरंध्र्या दृश्यते यत्तु रजः स्त्रीणां सुखाय तत् ।
विशस्तया तु यद्दृष्टं रजो वैधव्यदं स्मृतम् ॥

---

१ ग. ङ. च. °म् । अत्रापि शुक्लपक्षकृष्णपक्षपरत्वेन व्यवस्था द्रष्टव्या ।'इ' ।

रजः पश्यति चेत्कन्या पुमान्वा तत्सुखं भवेत्।
स्वयं दृष्टं तथा स्त्रीणामात्मघाताय कल्पते" इति ॥

पुरंध्री सौभाग्यवती स्त्री। विशस्ता विधवा। इति द्रष्टृफलम्।

## अथ प्रष्टृफलम्।

"माता पृच्छति चेद्व्यर्थं पिता पृच्छति चेत्सुखम्।
श्यालो दारिद्र्यमाप्नोति स्वसा चेदायुषः सुखम्॥
पितृष्वसा धनं याति सोदरा[1] विपुलं धनम्।
प्रष्टा भ्राताऽऽयुषः क्षैण्यमित्येवं लभतेऽङ्गना" इति ॥

श्यालः पृच्छति चेत्तदा रजोवती दारिद्र्यमाप्नोतीत्यर्थः। पितृष्वसा पितृभगिनी पृच्छति चेत्तदा धनं याति धनं प्राप्नोतीत्यर्थः।

## अथ परिहितवस्त्रफलम्।

"सुभगा श्वेतवस्त्रा स्यान्नववस्त्रा पतिव्रता।
दुर्भगा जीर्णवस्त्रा स्यात्सुभगा क्षौमवस्त्रिणी॥
लोहिते तु भवेद्वन्ध्या चित्रवर्णे तु पुत्रिणी।
कृष्णे तु विधवा नारी रजस्येतत्तु लक्षणम्" इति[2] ॥

इति परिहितवस्त्रफलम्।

## अथ रजःफलम्।

"प्रथमर्तौ फलं स्त्रीणामुच्यते रजसोऽधुना।
सुभगा पुत्रसंयुक्ता शुक्लवर्णे तथाऽऽर्तवे॥
शशशोणितसंकाशे यद्वाऽलक्तकसंनिभे।
पुत्रकन्याप्रसूतिः स्यान्नीले तु स्यान्मृतप्रजा॥
कर्पूरे म्रियते सद्यः पिङ्गले च मृतप्रजा।
कृष्णे तु विधवा नारी रजस्येवं विनिर्दिशेत्॥
शोणिते बिन्दुमात्रे तु स्वैरिणी त्वल्पशोणिते।
वरा मध्यस्रवा स्यात्तु दुर्भगा बहुशोणिता॥
रक्ते रक्ते भवेत्पुत्रः कृष्णे च मृतपुत्रिका।
पिच्छलाभे भवेद्वन्ध्या काकवन्ध्या च पाण्डुरे॥
पीते च स्वैरिणी प्रोक्ता सुभगा गुञ्जवर्णके।
सिन्दूराभे भवेत्कन्या रजःशोणितलक्षणम्" इति[3] ॥

---

१ ख. ङ. च. सोदरी। २ क. ख. ग. ति। अन्यच्च ग्रन्थान्तरे—प्र°। ३ ङ. च. ति। इ°।

रक्ते लोहिते रक्ते रक्तवर्णे सतीत्यर्थः[1]। इति रजःफलम्।

## अथोत्पातफलम्।

" संध्यासूपप्लवे विद्यामशुभं प्रथमार्तवम् " इति।

इत्युत्पातफलम्[2]।

## अथ बिन्दुसंख्याफलम्।

" प्राप्नोति बिन्दुनैकेन सौभाग्यं तु रजोवती।
द्विबिन्दुना भवेद्भोगो भवेद्रोगस्त्रिबिन्दुभिः॥
दारिद्र्यमधिकेषु स्याद्रजस्येतत्तु लक्षणम् " इति।

इति बिन्दुफलम्।

## अथ कार्यकरणसमयफलम्।

देवरातः—" संमार्जनीकाष्ठतृणाग्निशूर्पान्हस्ते दधाना कुलटा तदा स्यात्।
तल्पोपभोगे तपसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात् " इति।

ग्रन्थान्तरे—" शुष्ककाष्ठतुषैः शूर्पमार्जन्याद्यशुभैर्युतम्[3]।
देशे शुभे यथा[4] दृष्टे तथा स्यात्प्रथमार्तवे॥
भुक्तौ तल्पे च याने च तपनीये च धार्मिके।
शुभोपकरणैर्युक्ते शुभैर्लग्नग्रहैर्युते॥
शुभं स्यादनुकूलर्क्षे राशौ स्यात्खगसंयुता " इति॥

इति कार्यकरणसमयफलम्।

## अथ स्थानफलम्।

ज्योतिर्निबन्धे—

" गृहमध्ये सुखावाप्तिर्गृहद्वारे वियोगता।
शय्योत्था सुखदा भूयाद्धनं चापत्यसंततिः॥
पितुर्गृहे रजो दैन्यं विदधाति पितुः कुले।
देवस्थाने पितुः स्थाने निन्द्यस्थानेऽन्यवेश्मनि॥
मार्गे भर्तृवियोगं च वैन्ध्यागारे[5] मृतप्रजा " इति।

देवस्थानं देवालयम्(यः)। पितृस्थानं श्मशानम्। निन्द्यस्थानं कुत्सितस्थानम्। अन्यवेश्म भर्तृगृहादन्यद्गृहम्। इति स्थानफलम्।

---

१ क. ख. ग. °र्थः। अ°। २ क. ख. ग. °म्। इति परिहितवस्त्रादिफलम्। अ°। ३ क. ग. °र्यताम्। ४ ङ. यदा। ५ ङ. बन्धागारे।

तिथ्यादिफलेषूत्तरोत्तरं विशेषमाह देवरातः—

" तिथिरेकगुणा प्रोक्ता नक्षत्रं च चतुर्गुणम् ।
वारस्तु षड्गुणो ज्ञेयो मासश्चाष्टगुणः स्मृतः ॥
वस्त्रं दशगुणं विद्याद्दर्शनं च ततोऽधिकम् ।
अशुभं चेद्रजः स्त्रीणां प्रथमर्तौ हि दृश्यते ॥
विधानं तत्र कर्तव्यमरिष्टघ्नं विशेषतः " इति ।

विधानं शान्तिः[1] । सा च शान्तिरत्नमालायां वक्ष्यते ।

## अथ सर्वर्तुनियमाः ।

तत्रेदं गृह्यम्—

" त्रिरात्रं मलवद्वाससा ब्राह्मणव्याख्यातानि व्रतानि चरति " इति ।

मलवद्यद्वस्त्रं तेन सहिता व्रतं चरतीत्यर्थः । अथवा मलवद्वाससा[2] रजस्वला मलवद्वाससेति तृतीया प्रथमार्थे । मलवद्वासा इति पाठस्तु युक्त एव । " तस्मा न्मलवद्वाससा न संवदेत " इत्यादीनि ब्राह्मणोक्तानि व्रतानि चरतीत्यर्थः । मलः, रजो विद्यते यस्मिंस्तन्मलवत् । एतेनैव ज्ञायत एकवस्त्रैव[3] रजस्वला स्नानपर्यन्तं भवेदिति । श्रुतौ पर्णेन पानस्यैव निषेधनात्पर्णे भोजनस्य निषेधो नास्तीत्यवगम्यते । एतन्मूलमग्रे प्रदर्शयिष्यते । तच्च पलाशादियज्ञियवृक्षव्य-तिरिक्तमाचाराज्ज्ञेयम् ।

( * स्मृतिमञ्जर्याम्—

" तस्मादुदक्यया सार्धमेकगेहे न संविशेत् ।
प्रतिग्रहं च संवादमस्या अन्नं च वर्जयेत् ॥
रजस्वलां पतिर्गच्छेच्चण्डालो जायते सुतः ।
अरण्ये तां यदा गच्छेत्तज्जः स्तेनस्तदा भवेत् ॥
पराङ्मुखीं तां गच्छेच्चेत्तज्जो(ज्जा) ह्रीतमुखी भवेत् ।
पराङ्मुख्या उदक्याया जातः सोऽप्यपगल्भकः ॥
आर्तवे यदि सा स्नाति तज्जातोऽप्सु मरिष्यति ।
तैलेनाभ्यञ्जनं कुर्यात्कुष्ठरोगी प्रजायते ॥

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थो ङ. च. पुस्तकयोः, वसिष्ठोऽपीत्यारभ्य-—तिरो रात्रीर्व्रतं चरेदितीत्यन्तग्रन्थादनन्तरं वर्तते ।

1 क. ग. शान्तिः, र° । 2 क. ग. °द्वासा । 3 क. ग. पुनः ।

आर्तवे प्रलिखेद्भूमिमल्पायुर्जायते खलः ।
नेत्रयोरञ्जनं कुर्यात्काणो वाऽन्धः प्रजायते ॥
दन्तानां धावनं कुर्याज्जायते श्यावदन्तकः ।
नखानां कृन्तनं कुर्यात्कुनखी जायते सुतः ॥
रज्ज्वादिकच्छेदनं चेत्कुर्यात्क्लीबः प्रजायते ।
तन्तुभिः सृजते रज्जुमुद्बन्धनमृतो भवेत् ॥
ऋतौ पात्रेऽन्नमश्नीयादुन्मादी जायते सुतः ।
खर्वे शरावे भुञ्जीत वामनोऽसौ प्रजायते" इति ॥
"ऋतौ पात्रेऽपः साऽश्नीयादुन्मादी जायते सुतः ।
खर्वपात्रेऽपः साऽश्नीयाद्वामनोऽसौ प्रजायते"

इत्यपि क्वचित्पाठः । अयमेव पाठः श्रुत्यनुगुणत्वाद्युक्तः ।

एतस्माद्ब्राह्मणवाक्यात्सौभाग्यवत्या रजस्वलाया एव स्नानप्रलेखनदन्तधावननखनिकृन्तनतृणादिच्छेदनरज्जुसर्गपर्णसाधनकपानखर्वपात्रसाधनकपानरूपा धर्मा निषिद्धाः । न विधवाया रजस्वलायास्तत्र प्रजोत्पत्तेरेवाभावेन प्रजागतदोषाणामसंभवात् ।

अभ्यङ्गादिकं तु विधवात्वेनैव निषिद्धमिति यद्यपि प्राप्तं तथाऽपि—

" विधवाया रजोवत्या अपि स्नानादयो नहि "

इति स्मृतिदर्पणस्थगालववचनात्तस्या अपि स्नानादयो धर्मा निषिद्धा एवेति ज्ञेयम् । आदिशब्देन प्रलेखनादि ।

भोजनकुतूहले भावप्रकाशे—

" आर्तवस्रावदिवसाद्भवेत्सा ब्रह्मचारिणी ।
शयीत दर्भशय्यायां पश्येदपि पतिं न च ।
करे शरावे पर्णे वा हविष्यं त्र्यहमाचरेत् ।
अश्रुपातं नखच्छेदमभ्यङ्गमनुलेपनम् ।
नेत्रयोरञ्जनं स्नानं दिवास्वापं प्रधावनम् ।
अत्युच्चशब्दश्रवणं हसनं बहुभाषणम् ।
आयासं भूमिखननं प्रवासं च विवर्जयेत् " इति । )

---

१ ख, ङ. च. °तः । ऋतौ रज्ज्वादिकच्छेदं कुर्या° । २ क. ग. प्रद्दासं ।

वसिष्ठोऽपि—

" त्रिरात्रं रजस्वलाऽशुचिर्भवति सा नाञ्ज्यान्नाभ्यञ्ज्यान्नाप्सु स्नायादधः शयीत न दिवा स्वप्यान्नाग्निं स्पृशेन्न रज्जुं सृजेन्न दन्तान्धावयेन्न मांसमश्नीयान्न ग्रहान्निरीक्षेत न हसेन्नाश्लीलं किंचिदाचरेदखर्वेण पिबेदञ्जलिना वा पिबेल्लौहेनाऽऽयसेन वा विज्ञायते " इति।

अशुचिरिति पदच्छेदः। नाप्सु स्नायात्। नैमित्तिके स्नाने प्राप्ते निमज्जनरूपं स्नानं नैव कुर्यात्।

अत एव पराशरः—

" स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् "

इत्युद्धृतोदकेन स्नानमाह। अखर्वेण महतेत्यर्थः। लौहेन ताम्रेण।

दक्षः—" अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम्।
न कुर्यात्सार्तवा नारी ग्रहाणामीक्षणं तथा।
दिवानिद्रां च ताम्बूलं तालवृन्तादिबन्धनम्।
एवमुक्तप्रकारेण तिस्रो रात्रीर्व्रतं चरेत् " इति।

( * अत्र नित्यस्नानं निषिध्यते। )

गर्गः—" आहारं गोरसानां च पुष्पालंकारधारणम्।
अञ्जनं कङ्कतं गन्धान्पीठशय्याधिरोहणम्।
अग्निसंस्पर्शनं चैव वर्जयेत्सा दिनत्रयम् " इति।

कङ्कतं केशप्रसाधनम्। पीठं च शय्या च पीठशय्ये तयोरधिरोहणमिति विग्रहः। अत्र पीठशय्ययोर्ग्रहणात्सोपानारोहणे निषेधो न। सा रजस्वला।

स्मृत्यन्तरे—" भूमौ कार्ष्णायसे पाणौ शरावे दग्ध एव वा।
रजस्वला तु भुञ्जीत लौहेन तु जलं पिबेत् " इति।

अत्रिः—" वर्जयेन्मधु मांसं च पात्रे खर्वे च भोजनम्।
गन्धमाल्यं दिवास्वापं ताम्बूलं चाऽऽस्यशोधनम्।
दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत् " इति।

अखर्वमह्रस्वं पात्रम्। आस्यशोधनं मुखशोधनम्।

" गन्धमाल्यं दिवास्वापं ताम्बूलं कांस्यभाजनम् "[1]।

---

* धनुश्चिह्नान्तर्गतं ङ. च. पुस्तकयोर्नास्ति।

1 क. 'स्यभोज'।

इति देवरातवचनपाठः । कांस्यभाजननिषेधेन सौवर्णराजताद्यभ्यनुज्ञा गम्यते ।

विश्वप्रकाशे—" दिवास्वापमलंकारं क्रीडां शिल्पक्रियां तथा ।
गृहकर्म च ताम्बूलमध्वानं रात्रिभोजनम् ।
ज्योतिषां दर्शनं स्पर्शं परपुंसां च दर्शनम् ।
हसनं जल्पनं चैव वर्जयेच्च रजस्वला " इति ।

जल्पनं बहुभाषणम् ।

## अथ प्रयोगपारिजातकृतरजस्वलाविशेषधर्म-प्रयोगः प्रदर्श्यते ।

तैलाभ्यङ्गं दन्तधावनं नखकृन्तनं नेत्राञ्जनं तन्तुना रज्ज्वादिकरणं तच्छेदनं तालवृन्तादिबन्धनं मुक्ताफलरत्नानां मालाकरणं भुवि लेखनमल्पशरावपर्णपात्रभोजनं मधुघृतक्षारदधिचन्दनं(भक्षणं) गन्धपुष्पभूषणं(ण)धौतवस्त्रधारणं ताम्बूलसेवनं ग्रहेक्षणं दिवास्वापं चाकुर्वती शौचादिशोधनं स्नानमग्निस्पर्शनमन्यरजस्वलाशूद्रान्त्यजश्वकुक्कुटादिस्पर्शनं चाकुर्वती कांस्यपात्रे विशालमृन्मयपात्रे वा क्षीरदधिघृतवर्जितमन्नं भुञ्जाना गमनागमनकाले पादुके उपानहौ वा धृत्वाऽगच्छन्ती लौहेनाऽऽयसेन पात्रेणाञ्जलिना वा जलं पिबन्ती स्नानदिवसे षष्टिमृत्तिकाभिः शौचं दन्तधावनपूर्वकं संगवे स्नानं कृत्वा पतिमुखमिष्टदेवतां वाऽवलोकयेत्, इति ।

अल्पशब्दस्य शरावपर्णशब्दयोरन्वयः । तेनाल्पपर्णस्य निषेधो न तु महतः कदल्यादिपर्णस्येति ।

प्रथमर्तौ विशेषः प्रयोगपारिजाते स्मृतिचन्द्रिकायाम्—

" उद्वाहिताङ्गनायाश्च प्रथमे त्वार्तवे ततः ।
अक्षतैरासनं कृत्वा तस्मिंस्तामुपवेशयेत् ॥
हरिद्रागन्धपुष्पादीन्दद्युस्ताम्बूलकं स्रजम् ।
आशिषो वाचयेयुस्ताः पतिपुत्रवती भव ॥
दीपैर्नीराजनं कुर्यात्सदीपे वासयेद्गृहे ।
अपूपाल्लँवणं मुद्गगुडमिश्रं तथा हविः ॥
दद्याद्ब्राह्मणपुत्रीभ्यस्ताभ्यो दद्यात्तु भोजनम् " इति ।

---

१ क. स्यभोज । २ ग. ङ. च. मुद्गान्गुड ।

# अथ रजोदोषावधिः ।

मदनपारिजाते मरीचिः—

" शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति " इति ॥

उपगमनार्हा भवतीति पूर्वार्धः । इदं च रजोनिवृत्तौ ज्ञेयम् । " गम्या निवृत्ते रजसि नानिवृत्ते कथंचन " इत्यापस्तम्बवचनात् । उत्तरार्धं तु कर्मानधिकारं प्रतिपादयति । यद्यपि मरीचिवचनेन सर्वेषु श्रौतेषु स्मार्तेषु दैवपित्र्यकर्मसु चतुर्थदिवसे रजोनिवृत्तौ सत्यामपि कर्मानर्हत्वं प्रतिपादितं तथाऽपि

" रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला " ।

इति मनुवाक्ये मदनपारिजातेन साध्वी गर्भाधानादिविहितकर्मयोग्येत्यादिपदोपादानेन प्रधानानुरोधेन तदधिकारसंपत्त्यर्थशान्तावप्यधिकारस्य प्रदर्शितत्वात्, एवं श्रौतेषु दर्शादिषु चतुर्थेऽहन्यपि शुद्धिः ।

" चतुर्थेऽहनि गोमूत्रमिश्राभिरद्भिः स्नाता प्रक्षालितानि
तान्येव वासोयोक्त्रजालानि पुनर्मन्त्रैर्धारयेत् " ।

इति सोमप्रकरणे बौधायनवचनात्, यदा त्रिरात्रेणेतिवचनाद्रजस्वलायाः स्नानदिवसेऽपि श्रौतकर्माणि कर्तव्यान्येव न तु पञ्चमेऽहन्येवेति नियम इति भाष्यकारोक्तेश्च रजोनिवृत्तावेव चतुर्थेऽहन्यधिकार इति प्रायश्चित्तचन्द्रिकायाम् । एवमुदाहृतमदनपारिजातग्रन्थ आदिपदमुपनयनादेरपि ग्राहकं, तत्रापि वक्ष्यमाणश्रीसूक्तहोमपूर्वकाभिषेकेण चतुर्थेऽहन्यधिकारसंभवात् । एतच्चान्यदिनाननुकूलतायाम् । तदनुकूलतायां तु शान्तिपूर्वकमेतत्पञ्चमेऽहन्येवेति बोध्यम् ।

इति रजोदोषावधिः ।

# अथ स्नानविधिः ।

स्मृत्यर्थसारे—" ब्राह्मणी रजस्वला चतुर्थेऽह्नि षष्टिपलमृत्तिकाभिः शौचं कुर्यात् । क्षत्रियादिस्त्रियः पादन्यूनमृत्तिकाभिर्विधवा द्विगुणमृत्तिकाभिस्ततो मलं प्रक्षाल्य दन्तधावनपूर्वकं सचैलं संगवे स्नायात् " इति ।

अत्रिः—" रजस्वला चतुर्थेऽह्नि मृत्तिकाषष्टिभिः पृथक् ।
शौचं कृत्वा यथान्यायं दन्तानां धावनं तथा ॥
कृत्वा तु संगवेऽतीते सचैलं स्नानमाचरेत् ।
भस्मगोमयमृद्भिश्च सर्वैरन्यतमेन वा ॥

स्नात्वांऽशुकं परिच्छाद्य गन्धपुष्पैरलंकृता ।
आचम्य पुष्पैरादित्यमर्चयित्वा यथोचितम् ॥
ऐन्द्रं वरं प्रभो मह्यमिदानीं दातुमर्हसि ।
इत्युक्त्वाऽऽथैन्द्रभावेन प्रार्थयेत्तु स्वकं पतिम् ॥
ऋतुस्नाता तु या नारी यं स्नेहान्नरमीक्षते ।
तादृशं जनयेत्पुत्रं पतिमेव निरीक्षयेत् " इति ॥

**कात्यायनः**–" न निषेव्यमुदक्याभिः स्नानं माल्यानुलेपनम् ।
हस्ते वा मृन्मये पात्रे दिवैव लघुभोजनम् ॥
हविष्यं मधुरं चान्नं कटुतिक्तादिवर्जितम् ।
एकान्ते प्राक्शिरा भूमावास्तृतायां शयीत सा ॥
चतुर्थे दिवसे स्नायादातुरा कोष्णवारिणा ।
चतुर्थे दिवसे स्नात्वा भक्त्याऽऽदित्यं समीक्षते ॥
भर्तारं देवरं वाऽपि श्वशुरं नान्यमीक्षयेत् " इति ।

**स्मृत्यन्तरे तु—**

" चतुर्थेऽहनि कुर्वीत स्नानमभ्युदिते रवौ "

**इत्युदयानन्तरमेव स्नानमुक्तम् । तेन विकल्पः । सूर्योदयात्पूर्वं स्नानाचरणं तु दुराचार एव ।**

**रजस्वलायां नैमित्तिकस्नानप्रकारमाह व्यासः—**

" स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥
सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथंचन ।
न वस्त्रपीडनं कुर्यान्नान्यद्वासो विधारयेत् " इति ॥

**ज्वरादिपीडिताया रजस्वलायाः शुद्धिप्रकारमाहोशना[1]—**

" ज्वराभिभूता या नारी रजसा च परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा ॥

१ ङ. च. °हो पराशरः—आतुरे स्नानमु(उ)त्पन्ने दशकृत्वो ह्यनातुरः । स्नात्वा स्नात्वा स्पृशेदेनं ततः शुध्येत्स आतुर इति । तत्र प्रतिस्नानमातुरस्य वासो विपरिवर्तनीयम् । तदाहात्रिः—आतुरे स्नानमु(उ)त्पन्ने दशकृत्वो ह्यनातुरः । वासोभिर्दशभिश्चैव परिधाय यथाक्रमम् । दद्यात्तु शक्तितो दानं पुण्याहेन विशुध्यतीति । उश° । एतादृश एव ग. पुस्तके पाठः । परं तु आहो पराशर इतिस्थाने, आह पराशर इति वर्तते ।

चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचैलाऽवगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥
दशद्वादशकृत्वो वा ह्याच(चा)मेच्च पुनः पुनः ।
अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा ॥
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुध्यति ।
आतुराणां च सर्वेषामेवं शुद्धिर्विधीयते " इति ॥

इति स्नानविधिः ।

## अथ प्रसङ्गाद्रजोदर्शनमध्ये पारणाप्राप्तौ विचारः ।

तत्र ऋष्यशृङ्गः—

" संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् " इति ।

द्वादशीव्रतमित्युपलक्षणम् ।

" प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।
न तत्रापि व्रतस्य स्यादुपरोधः कदाचन " इति सत्यव्रतोक्तेः ।

सत्यव्रतवचनस्यायमर्थः—नवरात्रमासोपवासादिदीर्घकालसाध्यकाम्यव्रतवती नारी मध्ये रजः पश्यति तदोपवासादि कुर्यादेव तद्दिनसाध्यपूजादिकं तु पञ्चमेऽहनि कुर्यात् ।

" पञ्चमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्मणि "

इति वचनादतिक्रान्तपूजादानादि पञ्चमेऽहनि कुर्यादिति माधवोक्तेः ।

हेमाद्रिस्तु—" गर्भिणी सूतकी चैव कुमारी वाऽथ रोहिणी ।
यदाऽशुद्धा तदाऽन्येन कारयेत्प्रयता सती "

इति पाद्ममेवं व्याचख्यौ—लिङ्गस्याविवक्षितत्वात्पुमान्वा स्त्री वाऽशुद्धावुपवासपूजादियुक्ते व्रते स्वयमुपोष्य पूजाद्यन्येन कारयेदिति । तिथ्यादिनियतकालशेषविहितेष्वेवम् । अन्येषु तु कोकिलादिव्रतेषु पञ्चमेऽहनीत्यादि । किंचैकादश्यादौ पर्क्षेपाशौचपाते मासान्ते पारणापत्तिर्मासोपवासान्ते पर्क्षेपाशौचपाते जीवनासंभवश्च ।

यत्तु—" नियमस्था यदा नारी प्रपश्येदन्तरा रजः ।
उपोष्य चतुरो(तस्रो) रात्रीः स्नात्वा शेषं चरेद्व्रतम् "

---

१ क. °क्षधाशौ° । २ क. °क्षधाशौ° ।

इत्यङ्गिरसो वचनम् । यच्च हारीतवचनं—

" नियमस्था यदा नारी रजः पश्येत्कथंचन ।
त्रिरात्रं तु क्षपेदूर्ध्वं व्रतशेषं समापयेत् "

इति तद्विधवोपवासविषयं, तासां तत्र भोजननिषेधादिति केचित् ।

अन्ये तु सत्यव्रतवचने दीर्घतपसामितिविशेषणोपादानाद्द्वादशीव्रतव्यतिरिक्तसकलैकाहोपवासविषयोऽयं निषेधः । त्रिरात्रनवरात्रादिदीर्घव्रतेषु तु रजोमध्य एव पारणेत्याहुः ।

अपरे तु दीर्घतपःशब्देनैकाहोपवासस्यापि ग्रहणं, नक्ताद्यपेक्षयैतस्यापि दीर्घत्वात् । तेनैकाहोपवासस्यापि रजोमध्य एव पारणेत्याहुः ।

आशौचमध्ये तु सर्वाऽपि पारणा भवति ।

" काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके ।
तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् "

इति माधवीये कौर्मोक्तेः ।

" व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् " इति विष्णूक्तेश्च ॥

रुद्रयामले—" सूतके पारणं कुर्यान्नवम्यां होमपूर्वकम् ।
तदन्ते भोजयेद्विप्रान्दानं दद्याच्च शक्तितः " इति ॥

नवम्यामिति व्रतान्तरोपलक्षणम् । तदन्ते सूतकान्ते । प्रारम्भस्तु विवाहप्रकरण उक्तः—' प्रारम्भो वरणं यज्ञे ' इतिवचनेन ।

इति पारणाविचारः ।

## अथ स्नानानन्तरमपि रजःस्रावे शुद्धिविचारः ।

प्रयोगपारिजाते बृहस्पतिः—

" रागजं रोगजं चैव द्रव्यजं कालजं तथा ।
यद्रागरोगद्रव्योत्थं तद्रक्तं प्राह भार्गवः ॥
कालजं तु रजःसंज्ञं तस्मात्तत्रैव साऽशुचिः " इति ।

अशुचिरिति पदच्छेदः । तत्रैव कालजे रजस्येव सा स्त्री त्रिरात्रमशुचिर्भवतीत्यर्थः ।

एतेषां लक्षणानि स एवाऽऽह—

" अर्वाक्प्रसूतेरुत्पन्नं मेदो वन्ध्याङ्गनासु यत् ।
तद्रागजमिति प्रोक्तं मज्जामेदसमुद्भवम् ॥

पित्तादिदोषवैषम्यादसकृद्यत्प्रवर्तते ।
तद्रोगजं समुद्दिष्टमथ द्रव्यजमुच्यते ॥
भवेद्यद्धातुवैषम्यहेतुद्रव्योपभोगजम् ।
तद्द्रव्यजं समुद्दिष्टमथ कालजमुच्यते ॥
आरभ्य चाऽऽर्तवदिनादेकविंशतिवासरे ।
मासादूर्ध्वं रजो यत्स्यात्तत्कालजमुदाहृतम् ॥
रजस्वला यदा नारी पुनरेव रजस्वला ।
सा विंशतिदिनादूर्ध्वं त्रिरात्रमशुचिर्भवेत् " इति ॥

स्मृत्यर्थसारे विशेषः—

" सप्तदशदिनमध्ये पुना रजोदर्शने स्नानमात्रम् । अष्टादश एकरात्रम् । ऊनविंशे व्यहं, विंशतिप्रभृति त्रिरात्रम् " इति ।

एतच्च यस्या विंशतिदिनोत्तरमेव प्रायशो रजोदर्शनं तद्विषयम् ।

कश्यपः—" रजस्वला यदा नारी पुनरेव रजस्वला ।
अष्टादशाहात्प्राग्वाऽपि अशुचिः स्यात्त्रिरात्रकम् ॥
एकादशे त्वहोरात्रं द्विरात्रं द्वादशेऽहनि ।
ऊर्ध्वं त्रिरात्रं विज्ञेयमिति कौण्डिन्यभाषितम् " इति ॥

एतच्च वचनं यस्या यौवनावस्थाभेदेन षोडशदिनात्प्रागेव प्राचुर्येण रजोदर्शनं तद्विषयम् ।

स्मृत्यर्थसारेऽपि—

" त्रयोदशादिनादूर्ध्वं प्रायो रजोवतीनामेकादशदिनादर्वागशुचित्वं नास्ति। एकादशदिन एकरात्रं, द्वादशे द्विरात्रमूर्ध्वं त्रिरात्रम् " इति।

प्रयोगपारिजातेऽप्येवम् । इदमपि षोडशर्तुर्निशाः स्त्रीणामितिवचनात्स्नानदिवसात्परं ज्ञेयम् ।

रोगजे रजसि नाशुचितेत्याह बृहस्पतिः—

" रोगेण यद्रजः स्त्रीणामन्वहं हि प्रवर्तते ।
नाशुचिः स्यात्ततस्तेन यतो वैकारिकं मतम् " इति ॥

विकाराज्जातं वैकारिकम् । रोगेणेति वचनं रागजद्रव्यजयोरुपलक्षणम् । अन्वहमिति श्रवणान्मध्ये व्यवधाने यदि प्रायो विंशतिदिनोत्तरमेव सा रजोवती तदा विंशतिप्रभृति त्रिरात्रमूनविंशे व्यहम्, अष्टादश एकरात्रं सप्तदशदिनपर्यन्तं

स्नानमात्रमिति पूर्वोक्तव्यवस्थाऽत्र ज्ञेया । यदि तु षोडशदिनात्प्रागेव प्राचुर्येण रजोवती तदा त्वेकादश एकरात्रं द्वादशे द्विरात्रं त्रयोदशप्रभृति त्रिरात्रमित्येषां व्यवस्था । यदि तु कदाचित्प्रथमरजोदर्शनमारभ्यैवान्वहं रजोदर्शनं तदाऽप्येष एव प्रकारः ।

रोगजे रजस्यपि कर्माधिकारस्तु रजोनिवृत्तावेव—

" साध्वाचारा न तावत्स्यात्स्नाताऽपि स्त्री रजस्वला ।
यावत्प्रवर्तमानं हि रजो नैव निवर्तते " ॥

इति श्राद्धहेमाद्रौ शङ्खोक्तेः ।

सूतिकाया रजोदर्शने विशेषमाह प्रजापतिः—

" प्रसूतिका तु या नारी स्नानतो विंशतेः परम् ।
आर्तवी रजसा प्रोक्ता प्राक्तु नैमित्तिकं रजः ॥
तत्तु नैमित्तिके न स्यादाशौचमिति सूरयः " इति ॥

बृहस्पतिः—" निःसंदेहं परिज्ञाते आर्तवेऽशुद्धिकारणम् ।
संदेहमात्रे शुद्धिः स्यादित्युवाच प्रजापतिः " इति ॥

पूर्वत्राशुद्धिरिति पदच्छेदः ।

(*यमः—" व्यसनात्कार्यकरणान्निद्राविस्मरणादपि ।
रजःस्रावमविज्ञाय सा शुचिः पूर्वकर्मसु ॥
ज्ञाताज्ञातेषु दोषेषु अनुक्तेष्वशुभेषु च ।
पुण्याहवाचनं कुर्याद्विप्राणामनुशासनात् " इति ॥)

## अथ रजोदर्शनदिनव्यवस्था ।

तत्र कश्यपः—" अर्धरात्रादार्धरात्रं दिनं स्यात्सूतकादिषु " इति ।

आर्धरात्रमर्धरात्रपर्यन्तमित्यर्थः । आदिपदेन ऋतुर्गृह्यते ।

याज्ञवल्क्यस्तु—

" रात्रिं कुर्यात्त्रिभागां तु द्वौ भागौ पूर्वगामिनौ ।
उत्तमोंऽशः प्रभातेन युज्यते ऋतुसूतके " इत्याह ।

अत्र संध्यभाव आर्षः । रात्रौ रजसि जननादौ च रात्रिं त्रिभागां कृत्वाऽऽद्यभागद्वये चेत्पूर्वदिनं ग्राह्यम् । परतश्चेदुत्तरं दिनमित्यर्थः ।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तके नास्ति ।

---

१ ङ. च. प्रायेण ।

स्मृत्यन्तरे तु—

" रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः " इत्युक्तम् ।

पूर्वरात्रेरन्त्यार्धमारभ्योत्तररात्रेः पूर्वार्धपर्यन्तं दिनं, त्रिधा विभक्ताया रात्रेस्तृतीयभागमारभ्योत्तररात्रेराद्यभागद्वयपर्यन्तं दिनं, सूर्योदयमारभ्य सूर्योदयपर्यन्तं दिनमित्येवं पक्षत्रयं सिद्धम् ।

तच्च देशाद्यवस्थितं ज्ञेयम्—

" त्रयाणामपि पक्षाणां व्यवस्था देशभेदतः " इति संग्रहोक्तेः ।

इति रजोदर्शनदिनव्यवस्था ।

## अथ प्रसङ्गादन्योन्यस्पर्शे श्वशूद्रादिस्पर्शने च शुद्धिप्रकारः ।

तत्र स्मृतिमञ्जर्यां वृद्धवसिष्ठः—

" उदक्ये द्वे तु संस्पृष्टे सवर्णे चैकभर्तृके ।
तयोः स्नानं मिथःस्पर्शे पञ्चगव्यं ततः पिबेत् ॥
सवर्णयोनिसंबन्धे सगोत्रे च रजस्वले ।
मिथः स्पृष्टे त्वमत्या तु स्नानमात्रेण शुध्यतः ॥
मत्या त्वभु(भु)क्तिरेकाहं पञ्चगव्याशनं ततः ।
उदक्ययोर्यदाऽन्योन्यमसंबन्धसवर्णयोः ॥
स्पर्शे त्वमत्या स्नात्वा च तस्मिन्नाद्याच्छुचिर्भवेत् ।
मत्या तु नाद्यादाशुद्धेर्भुक्ता चेत्प्रतिवासरम् ॥
उपोषणं तदा केचिदाहुस्तद्दिनसंख्यया ।
उपोषणे न शक्ता चेत्समं दानं समाचरेत् " इति ॥

रूप्यमाषदानमुपवासमत्याज्ञाय इति शूलपाणिः । नाद्यान्न भुञ्जीयात् ।

अत्र पञ्चगव्याशनमप्युक्तं कश्यपेन—

" रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि ।
एकरात्रं निराहारा पञ्चगव्येन शुध्यति " इति ॥

एतच्चाकामतः ।

" स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मण्या ब्राह्मणी तथा ।
तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुध्यति " ॥

इति पराशरोक्तं तु कामतः ।

सपत्न्योरेकगोत्रयोश्च स्पर्शे वसिष्ठः—

" स्पृष्टे रजस्वलेऽन्योन्यं सगोत्रे चैकभर्तृके ।
कामादकामतो वाऽपि सद्यः स्नानेन शुध्यति(तः) " इति ॥

रजस्वलेऽन्योन्यमित्यत्र प्रकृतिभावाभाव आर्षः ।

असवर्णास्पर्शे पराशरः—

" स्पृष्टे रजस्वलेऽन्योन्यं ब्राह्मणी क्षत्रिया तथा ।
त्रिरात्रेण विशुद्धिः स्याद्व्यासस्य वचनं यथा ॥
रजस्वला तु संस्पृष्टा वैश्या च ब्राह्मणी[1] च या ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥
रजस्वला तु संस्पृष्टा शूद्रा च ब्राह्मणी[2] च या ।
षड्रात्रेण विशुद्धिः स्याद्ब्राह्मण्या(ण्याः) कामकारतः ॥
अज्ञानतश्चरेदर्धं ब्राह्मणी सर्वजातिषु " इति ॥

अत्र यथा ब्राह्मणीरजस्वलयोः स्पर्श उपवासः पञ्चगव्याशनं च तथाऽन्यासामपि सवर्णरजस्वलास्पर्शे तदेव । यथा ब्राह्मण्याः क्षत्रियास्पर्शे त्रिरात्रं तथा क्षत्रियाया वैश्यास्पर्शे वैश्यायाः शूद्रास्पर्शे ।

तथा च भवदेवनिबन्धे स्मृतिः—

" रजस्वला तु या नारी अन्योन्यमुपसंस्पृशेत् ।
सवर्णा पञ्चगव्येन त्रिरात्रमसवर्णका " इति ॥

पञ्चगव्येनोपवाससहितेनेति भवदेवः ।

तथा च शातातपः—

" रजस्वले उभे नार्यावन्योन्यं स्पृशतो यदि ।
सवर्णे तु निराहारे पञ्चगव्याशनं ततः " इति ॥

यत्तु वृद्धवसिष्ठः[3]—

" स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा ।
अर्धकृच्छ्रं चरेत्पूर्वा पादकृच्छ्रं त्वनन्तरा ॥

पूर्वा ब्राह्मण्यनन्तरा क्षत्रिया ।

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यजा तथा ।
पादहीनं चरेत्पूर्वा पादकृच्छ्रं त्वनन्तरा ॥

---

१ ख. °णी तथा । प° । २ ख. °णी तथा । ष° । ३ ख. ग. बृहद्वसिष्ठः ।

पूर्वा ब्राह्मण्यनन्तरा वैश्या।

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजा तथा।
कृच्छ्रमेकं चरेत्पूर्वा शूद्रा दानेन शुध्यति, इति* ॥

दानं पादकृच्छ्रसमम्।

स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया शूद्रजा तथा।
उपवासैस्त्रिभिः पूर्वा अहोरात्रेण तूत्तरा ॥

पूर्वा क्षत्रिया। उत्तरा शूद्रा।

स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया वैश्यजा तथा।
त्रिरात्राच्छुध्यते पूर्वा अहोरात्रेण तूत्तरा ॥

पूर्वा क्षत्रियोत्तरा वैश्या।

" स्पृष्ट्वा रजस्वलाऽन्योन्यं वैश्या शूद्रा तथैव च।
त्रिरात्राच्छुध्यते पूर्वा अहोरात्रेण तूत्तरा " [इति] ॥

पूर्वा वैश्या। उत्तरा शूद्रा।

एतच्च कामतः स्पर्शे।

' वर्णानां कामतः स्पर्शे विधिरेष सनातनः '।

इति वाक्यशेषात्।

पतितचण्डालादिस्पर्शे प्रायश्चित्तमाहतुर्बृहस्पतिवृद्धवसिष्ठौ—

" पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
प्रथमेऽह्नि त्रिरात्रं स्याद्द्वितीये द्व्यहमेव तु।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमेव तु " इति ॥

तान्यहानि रजस्वलाव्रतवन्ति अहानि व्यतिक्रम्योपवासेनेति शेषः। अत्र सर्वत्र पञ्चगव्यप्राशनमपि कर्तव्यमिति भवदेवः।

यत्तु बौधायनवचनं—

" रजस्वला तु संस्पृष्टा चण्डालान्त्यश्ववायसैः।
तावत्तिष्ठेन्निराहारा यावत्कालेन शुध्यति " ॥

इति, तदशक्ताया अकामे वा।

* अयमितिशब्दोऽनपेक्षितः।

यत्तु शातातपः—

" उदक्या सूतिका वाऽपि शवान्त्यं संस्पृशेद्यदि ।
त्रिरात्रेणैव शुध्येतेत्याह वार्ष्यायणिर्मुनिः " इति ।

तथा स्मृत्यन्तरम्—

" चण्डाल(लं)श्वपचैर्वाऽ(चं वाऽ)पि आत्रेयीं(यी) स्पृशते यदि ।
त्रिरात्रोपोषिता भूत्वा पञ्चगव्येन शुध्यति " इति ॥

तथा कात्यायनः—

" चण्डालेन तु संस्पृष्टा कदाचित्स्त्री रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
त्रिरात्रमुपवासः स्यात्पञ्चगव्येन शोधनम् " ।

इति, तदेतत्प्रथमदिनविषयम् ।

उपवासासमर्थायां त्वङ्गिराः—

" चण्डालः श्वपचो वाऽपि यद्यात्रेयीं स्पृशेद्यदि(त्तदा ) ।
अकालकृच्छ्रैर्वर्तेत पञ्चगव्येन शुध्यति " इति ॥

पञ्चगव्यपानं तु स्नानानन्तरं ज्ञेयम् ।

चण्डालेन सहैकवृक्षाद्यारोहणे पराशरः—

" एकवृक्षसमारूढा चण्डालेन रजस्वला ।
अहोरात्रोषिता भूत्वा पञ्चगव्येन शुध्यति " इति ॥

श्वादिस्पर्शे विशेषमाह यमः—

" रजस्वला तु संस्पृष्टा शुना जम्बूकवायसैः ।
निराहारा भवेत्तावद्यावत्कालेन शुध्यति " इति ॥

एतदकामतः ।

कामतस्तु रजस्वलानुवृत्तौ बृहस्पतिः—

" शुना चोच्छिष्टयाऽशूद्रा संस्पृष्टा त्र्यहमाचरेत् ।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् " इति ॥

प्रथमद्वितीयदिने श्वादिस्पर्शे त्र्यहं, तृतीये दिनेऽहोरात्रं, परतश्चतुर्थेऽह्नि नक्तमित्यर्थः । अत्रापि तान्यहानि व्यतिक्रम्येति योज्यम् ।

बौधायनः—" रजस्वला तु संस्पृष्टा ग्राम्यकुक्कुटसूकरैः ।
श्वभिः स्नात्वा पिबेत्तावद्यावच्चन्द्रस्य दर्शनम् " इति ॥

---

१ च. जम्बुक' ।

चन्द्रदर्शनं नक्तमित्यर्थः। एतदशक्तायाश्चतुर्थदिनविषयं वा। रजकादिस्पर्शे तु श्वस्पर्शसमानमेव, तयोः समानत्वादिति शूलपाणिः।

यत्तु प्रचेताः—

" रजस्वला तु संस्पृष्टा शुना चण्डालरासभैः।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति "॥

इति, तत्कामतोऽभ्यासे। भोजनकाले श्वान्त्यजादिस्पर्शे तु बौधायनः—

" रजस्वला तु भुञ्जाना श्वान्त्यजादीन्स्पृशेद्यदि।
गोमूत्रयावकाहारा षड्रात्रेण विशुध्यति॥
अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वाऽथ भोजनम् " इति॥

स्मृत्यन्तरे—" पुष्पिणी संस्पृशेन्मोहादशुद्धं वा नरं क्वचित्।
स्नानादर्वाङ्न भुञ्जीत भुक्त्वा कृच्छ्रं समाचरेत्॥
स्पृष्ट्वोदक्या पञ्चनखान्द्विशफैकशफान्पशून्।
अण्डजानि च सर्वाणि नाद्यादास्नानवासरात् " इति॥

उच्छिष्टयोः परस्परं स्पर्शे त्वत्रिः—

" उच्छिष्टोच्छिष्टसंस्पृष्टा कदाचित्स्त्री रजस्वला।
कृच्छ्रेण शुध्यते पूर्वा शूद्रा दानेन शुध्यति " इति॥

दानं पादकृच्छ्रसमम्। अत्र पूर्वाशब्देन ब्राह्मणक्षत्रियवैश्यस्त्रियोऽभिधीयन्ते। तेन रजस्वलयोः समानजातीययोर्ब्राह्मणीक्षत्रियावैश्यानां परस्परं स्पर्शे प्राजापत्यम्। असमानजातीययोः स्पर्शे त्वेकैकवृद्धिरूहनीया। तादृशशूद्रयोः परस्परं स्पर्शे तूपवाससहितप्राजापत्याम्नायदानेन शुद्धिः। एतच्च कामतः। अकामतस्तदर्धम्।

शूलपाणिस्तु—

" उच्छिष्टेन तु संस्पृष्टा कदाचित्स्त्री रजस्वला।
कृच्छ्रेण तु विशुध्येत शूद्रा दानेन शुध्यति "॥

इति पपाठ। उच्छिष्टेन चण्डालादिनेत्यर्थः। अत्रापि दानं पादकृच्छ्रसमम्। एषु रजस्वलात्वमेव निमित्तम्। अतो न क्षत्रियावैश्ययोर्ब्राह्मण्यादि(णी)भ्यो विशेष इत्यपि शूलपाणिः।

उच्छिष्टद्विजसंस्पर्शे तु मार्कण्डेयः—

" द्विजान्कथंचिदुच्छिष्टान्संस्पृशेच्चेद्रजस्वला।
अधोच्छिष्टे त्वहोरात्रमूर्ध्वोच्छिष्टे त्र्यहं क्षिपेत् " इति॥

अधोच्छिष्ट इत्यत्र संधिरार्षः । अधोच्छिष्टक्षत्रियादिस्पर्शे ब्राह्मण्या अधिकं कल्प्यम् । एवं हीनाया उच्छिष्टोत्तमस्पर्शे न्यूनम् ।

भोजनकाले रजस्वलान्तरं दृष्ट्वा पुनर्भोजने त्वापस्तम्बः—

" उदक्या यदि वा भुङ्क्ते दृष्ट्वाऽन्यां तु रजस्वलाम् ।
आस्नानकालं नाश्नीयात्पञ्चगव्यं ततः पिबेत् " इति ॥

एतच्च कामत इति शूलपाणिः ।

भोजनकाले चण्डालदर्शने त्वत्रिः—

" रजस्वला तु भुञ्जाना चण्डालं यदि पश्यति ।
उपवासत्रयं कुर्यात्प्राजापत्यं तु कामतः " इति ॥

रजस्वलाया आशौचिस्पर्शे शातातपः—

" आर्तवाभिप्लुता नारी स्पृशेच्चेच्छवसूतकम् ।
ऊर्ध्वं त्रिरात्रात्स्नानात्तां त्रिरात्रमुपवासयेत् " इति ॥

अत्रिः—" आर्तवाभिप्लुता नारी मृतसूतकिनं स्पृशेत् ।
अभुक्त्वा च चरेत्कृच्छ्रं भुक्त्वा तु त्र्यहमेव तु " इति ॥

आशौचिस्पर्शे स्नानात्प्राग्रजोदर्शने मार्कण्डेयः—

" मृतसूतकिसंस्पर्शे ऋतुं दृष्ट्वा कथं भवेत् ।
आस्नानकालं नाश्नीयाद्भुक्त्वा चान्द्रायणं चरेत् " इति ॥

आस्नानकालपर्यन्तं चतुर्थदिनपर्यन्तम् ।

मदनरत्ने स्मृत्यन्तरे—

" अप्रायत्ये समुत्पन्ने मलवद्वसना यदि ।
अभिषेकेण +मुक्तिः स्याद्दिनत्रयमभोजनम् " इति ॥

अभिषेकेण मुक्तिः सद्यः स्नानेन भोजनम् । इदमशक्ताया बालापत्याविषयं वा । शक्तायास्तु त्रिरात्रमुपवासः ।

बन्धुमरणश्रवणादौ व्यासः—

" मलवद्वसनायास्तु अप्रायत्यं भवेद्यदि ।
अभिषेकेण शुद्धिः स्यादभुक्तिश्च दिनत्रयम् " इति ॥

अत्रापि पूर्ववद्व्यवस्था । दिनत्रयमित्यवशिष्टकालोपलक्षणम् । अप्रायत्यं बन्धुमरणादिना ।

---

+ मुक्तिरित्यत्र भुक्तिरित्यपि पाठः संभवेत् ।

पश्वादिस्पर्शे कश्यपः—

" स्पृष्ट्वोदक्या पञ्चनखान्द्विशफैकशफान्पशून् ।
अण्डजानि च सर्वाणि अनशः स्नानवासरात् " इति ॥

अनशोऽनशनम् ।

श्वादिदंशे पुलस्त्यः—

" रजस्वला यदा दष्टा शुना जम्बूकरासभैः ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥
ऊर्ध्वं तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं तथा ।
चतुर्गुणं स्मृतं मूर्ध्नि दंशेऽन्यत्राशुचिर्भवेत् " इति ॥

अन्यत्र रजस्वलावस्थाया इति शेषः । यत्र यत्र स्नानं दिनत्रयमध्ये विहितं तत्र पूर्वोक्तेन नैमित्तिकस्नानप्रकारेण कर्तव्यम् ।

इति रजस्वलायाः शुद्धिविचारः ।

## अथ प्रसङ्गाद्रजस्वलास्पृष्टचेतनाचेतनानां शुद्धिप्रकारः ।

तत्र चेतनानां सचैलं स्नानम् । अचेतनानां पीठादीनां प्रक्षालनम् ।

रजस्वलास्पृष्टचेतनस्पर्शे आचमनम् ।

" नरो रजस्वलास्पृष्टः सचैलं स्नानमाचरेत् ।
अचेतनांस्तया स्पृष्टान्क्षालयेच्छुद्धवारिणा ॥
उदक्यास्पृष्टसंस्पर्शे शुद्धिराचमनेन हि " ॥

इति स्मृत्यन्तरोक्तेः । उदक्या रजस्वला । एतच्चाकामतः ।

कामतस्तु—" दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति " ॥

इति मनूक्तं स्नानमेव तस्यापि ।

तृतीयस्याप्याचमनमाह संवर्तः—

" तत्स्पर्शिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते ।
ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा " इति ॥

एतदप्यकामतः । कामतस्तु स्नानमेव ।

तथा च गौतमः—

" चण्डालसूतिकोदक्याशवस्पर्शिनस्तत्स्पर्श्युपस्पर्शने सचैलस्नानाच्छुध्येत् " इति ।

एवं चतुर्थस्यापि ।

" उपस्पृश्याशुचिस्पृष्टं तृतीयं चापि मानवः ।
हस्तौ पादौ च तोयेन प्रक्षाल्याऽऽचम्य शुध्यति " इति देवलोक्तेः ।

अपिशब्दात्पञ्चमादीनामपि ग्रहणम् ।

अशुद्धस्योदक्यादिस्पर्शे तु स एवाऽऽह—

" अशुद्धः स्वयमप्येतानशुद्धांस्तु यदि स्पृशेत् ।
स शुध्यत्युपवासेन तथा कृच्छ्रेण वा पुनः " इति ॥

स्मृत्यर्थसारे—" परिवेषणे रजोदृष्टौ तत्स्पृष्टान्नस्य त्यागः । अन्नाधारे चण्डालसूतिकोदक्यादिस्पृष्टे रजकादिस्पृष्टे च जले निक्षिप्याग्निमर्कं वा स्पृशेत् " इति ।

इति रजस्वलास्पृष्टचेतनाचेतनानां शुद्धिप्रकारः ।

## अथ प्रसङ्गात्संक्षेपेण स्त्रीधर्माः ।

तत्र मनुः—"बाल्ययौवनवत्या वा वृद्धया वाऽपि योषिता ।
न स्वातन्त्र्येण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥
पित्रा भर्त्रा सुतेनापि नेच्छेद्विरहमात्मनः ।
एषा हि विरहेण स्त्री गर्हिता स्यात्कुलद्वये ॥
सदा प्रतिष्ठया भाव्यं गृहकार्येषु दक्षया ।
संस्कृतोपस्करतया व्यये चामुक्तहस्तया " इति ॥

मनुः—" पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रो रक्षति वार्धक्ये न स्वातन्त्र्यं क्वचित्स्त्रियाः ॥
सूक्ष्मेभ्योऽपि प्रमादेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः " इति ॥

भारते—" यानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वापोऽन्यगेहे वासश्च स्त्रीणां वै दूषणानि षट् ॥
नैता रूपं परीप्सन्ते नाऽऽशङ्का वयसि स्थितिः ।
सुरूपं वा कुरूपं वा पुमानित्येव भुञ्जते ॥
शय्यासनमलंकारं कामं क्रोधं तथाऽऽर्जवम् ।
द्रोहभावं कुकार्यं च स्त्रीभ्यो मनुरकल्पयत् ॥
न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् " इति ।

स्त्रीणां दोषा अप्युक्ताः पुराणे—

" अनृतं साहसं माया मूर्खत्वमतिलोभता।
अशुचित्वं निर्दयत्वं स्त्रीणां दोषाः स्वभावजाः " इति ॥

याज्ञवल्क्यः[1]—" संस्कृतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी।
कुर्याच्छ्वशुरयोः पादसेवनं भर्तृतत्परा ॥
स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः।
आ शुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः " इति ॥

महापातकादिदूषितो भर्ता यावत्पर्यन्तं शुद्धो[2] न भवति तावत्पर्यन्तं संगमार्थं भर्त्राऽऽहूताऽपि न तद्वचोऽङ्गी कुर्यादेवं भोजने, इति तात्पर्यार्थः।

मनुः—" विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः।
उपचार्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥

पूजनीय इति शेषः।

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम्।
शुश्रूषयति भर्तारं तेन स्वर्गे महीयते ॥
पत्यौ जीवति या नारी उपोष्य व्रतचारिणी।
आयुष्यं हरते भर्तुर्नरकं चाधिगच्छति " इति ॥

अयं चोपवासनिषेधो मासोपवासधारणापारणादिव्रतोपवासपरो न तु गौर्यादिव्रतकुलधर्मोपवासपर इति निबन्धकाराः। युक्तं चैतत्। अन्यथा हरितालिकादिसौभाग्यकारकव्रतकुलधर्मोपवासाचरणोच्छेदापत्तेः।

याज्ञवल्क्यः—" स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत्।
स्ववाक्यं श्रावयेन्नापि यावत्स्नाता न शुध्यति ॥
सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य कस्यचित्।
अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥
हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा।
कूर्पासकं च ताम्बूलं माङ्गल्याभरणं शुभम् ॥

कूर्पासकं तालवृन्तादि।

केशसंस्कारकबरीं करकर्णविभूषणम्।
भर्तुरायुष्यमिच्छन्ती दूषयेन्न क्वचित्सती ॥

---

१ ख. ग. ङ. च. 'वल्क्योऽपि—सं'। २ ग. 'द्धो भ'।

भर्तृविद्वेषिणीं नारीं न संभाषेत कर्हिचित् ।
नैकाकिनी क्वचिद्गच्छेन्न नग्ना स्नाति वै क्वचित् ॥
नोलूखले न मुसले न वर्धन्यां दृषद्यपि ।
न यन्त्रके न देहल्यां सा स्त्री चोपविशेत्क्वचित् ॥
उक्ता प्रत्युत्तरं दद्यान्नारी क्रोधेन संयुता ।
सा शुनी जायते ग्रामे शृगाली निर्जने वने ॥
अतिवादो न कर्तव्यः कलहं दूरतस्त्यजेत् ।
गुरूणां संनिधौ क्वापि न ब्रूयान्न च वै हसेत् ॥
ताडिता ताडितुं चेच्छेत्सा व्याघ्री द्विपदंशिका[1] ।
भर्तारं या समुत्सृज्य मिष्टमश्नाति केवलम् ॥
ग्रामे सा सूकरी वा स्याच्छार्दूली वा पुरीषभुक् " इति ।

योगी—" क्रीडाशरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका " इति ॥

देवलः—" पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया ।
इह कीर्तिमवाप्नोति प्रेत्य चाप्युत्तमां गतिम् " इति ॥

स्मृत्यन्तरे—" तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् ।
शंकरादपि विष्णोर्वा पतिरेवाधिकः स्त्रियाः " इति ॥

स्कान्दे—" प्रातःकाले तु या नारी दद्यादर्घ्यं विवस्वते ।
सप्तजन्मनि वैधव्यं सा नारी नैव पश्यति ॥
कृत्वा तु मण्डलं बाह्ये सूर्यं तत्राक्षतादिभिः ।
पूजयेत्सततं या वै तस्यास्तुष्यन्ति देवताः ॥
प्रातःकाले तु या नारी शुचिर्भूत्वा समाहिता ।
पूजयेद्द्वारदेशं तु सर्वान्कामान्समश्नुते ॥
न ददाति यदा नारी ज्येष्ठायै प्रत्यहं बलिम् ।
भोज्यान्नेन यथाशक्ति सा प्रेत्य नरकं व्रजेत् ॥
अवश्यमेव नारीभिर्ज्येष्ठाया बलिकर्मणा ।
प्रीणनं प्रत्यहं कार्यं पुत्रपौत्रधनेप्सुभिः " इति ॥

भारते—" अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
वनिताः केशशूलिन्यो भविष्यन्ति कलौ युगे " इति ॥

---

१ क. ख. च. °घ्री द्वीप° ।

अस्यार्थमाह परशुरामः—

"अष्टमन्नं शिवो वेदः शूलं विक्रय एव तु।
केशश्च भगमित्याहुर्वेदतत्त्वार्थदर्शिनः" इति॥

भविष्यन्ति कलौ युग इत्यनेन निन्द्यत्वप्रदर्शने तात्पर्यम्।
एवं च स्त्रीभिर्व्यभिचारो वर्ज्य इति प्रकृतार्थः।

"भर्ता देवो गुरुर्भर्ता धर्मतीर्थव्रतानि च।
तस्मात्सर्वं परित्यज्य पतिमेकं समर्चयेत्।
पत्यौ भुङ्क्ते(क्ते) तु या भुङ्क्ते ह्यासीना चापि चाऽऽसिते।
विनिद्रिते विनिद्राति सा स्त्री ज्ञेया पतिव्रता॥
आर्ताऽऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशा।
नम्रीभूता या मनसा सा स्त्री ज्ञेया पतिव्रता" इति॥

शङ्खः—"प्रेम्णा न त्वरितं व्रजेन्न परपुरुषं संभाषेत न हास्यं कुर्यादागुल्फाद्वासः परिदध्यान्न स्तनावनावृतौ कुर्यान्न भर्तारं तद्बन्धून्वा द्विष्यान्न गणिकाधूर्तादिभिः सहैकत्र तिष्ठेत्" इति।

अनावृतावनाच्छन्नौ।

स्मृत्यन्तरे—"भुङ्क्ते भुक्ते तु या पत्यौ तस्मिंस्तिष्ठति तिष्ठति।
निद्रिते च विनिद्राति प्रथमं परिबुध्यते॥
अनलंकृतमात्मानं पत्युर्नो दर्शयेत्कचित्।
कार्यार्थं प्रोषिते पत्यौ स्यादलंकारवर्जिता॥
न च तन्नाम गृह्णीयात्तस्याऽऽयुष्यविवृद्धये।
आक्रुष्टाऽपि न चाऽऽक्रोशेत्ताडिताऽपि प्रसीदति॥
इदं कुरु कृतं स्वामिन्मन्यतामिति वक्ति च।

इदं कुर्विति पत्योक्ते स्वामिन्कृतमेव मन्यतामिति या वक्ति सा पतिव्रतेत्यर्थः।

आहूता गृहकर्माणि त्यक्त्वाऽऽगच्छति सत्वरम्॥

आगच्छतीति पदच्छेदः।

पूजोपकरणं सर्वमप्सु संशोधयेत्स्वयम्।
उदकं पत्रपुष्पादि पूजार्थं संभरेत्स्वयम्॥
सेवेत भर्तुरुच्छिष्टं पिष्टमन्नफलादिकम्।
महाप्रसाद इत्युक्त्वा पतिदत्तं प्रतीच्छति" इति॥

स्त्रीशूद्रद्विजबन्धूनां वेदश्रवणेऽनधिकारः ।

तथा च पुराणम्—

" स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यातं कृपया मुनिना कृतम् " इति ॥

द्विजाच्छूद्रायां जातो द्विजबन्धुः । यदीयश्रवणेऽनधिकारे किमु वक्तव्यं पठनानधिकारे ।

सूतसंहितायाम्—

" अन्ये च ब्राह्मणा विष्णो राजानश्च तथैव च ।
वैश्याश्च तारतम्येन ज्ञानाभ्यासेऽधिकारिणः ॥
द्विजस्त्रीणामपि श्रौतज्ञानाभ्यासेऽधिकारिता ।
शूद्राणां च विरक्तानां तथा स्त्रीणां महामुने ॥
सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः " इति ॥

सिद्धान्तः स्मृत्यर्थः ।

रामायणेऽपि—

" पठन्द्विजो वागृषभत्वमीयात्सुक्षत्रियो भूपतितां समीयात् ।
वणिग्जनः पुण्यफलत्वमीयाच्छृण्वंस्तु शूद्रोऽपि महत्त्वमीयात् " इति ॥

इदमपि विप्रद्वारैव ।

तदुक्तं भविष्ये—

" देवार्चां पुरतः कृत्वा ब्राह्मणांश्च नृपोत्तम ।
श्रोतव्यमेव शूद्रेण तथाऽन्यैश्च द्विजातिभिः " इति ॥

स्मृत्यन्तरेऽपि—

" श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः " इति ।

पुराणश्रवणविधानादेव तदन्तर्गतवैदिकमन्त्रश्रवणेऽपि न दोषः ।

तदुक्तं वार्तिके—

" तानेव वैदिकान्मन्त्रान्भारतादिनिवेशितान् ।
विहाय मन्त्रनियमं लोकबुद्ध्या प्रयुञ्जते " इति ॥

यद(द्य)प्यदृष्टहेतुत्वं न वैदिकत्वं विनाऽस्ति तेन स्तोत्रादेरपि वेदे सत्त्वं कल्प्यते तथाऽपि वचनाद्दोषाभावः । एवं च शूद्रस्य विप्रद्वारेण पुराणश्रवणेन ज्ञानमिति ।

---

१ क. °वं सिद्धं शू° ।

ः )

नन्वेवं श्रवणविधौ श्रावयेच्चतुरो वर्णानित्युक्तेर्द्विजानामपि मन्त्रश्रवणमेव स्यान्न पाठ इति चेत् ।

अत्र ब्रूमः—" अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च ।
निषेकादिश्मशानान्ताः " ॥

इत्यादिवचनेभ्योऽध्ययनस्यैव कर्माङ्गत्वम् ।

श्रवणं तु फलविशेषार्थम् ।

" य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किंचित्सोऽमुत्रेह च मानवः " ॥

इत्यादौ चण्डीपाठादौ च फलश्रुतेः ।

" य इदं श्रावयेद्विद्वान्द्विजान्पर्वसु पर्वसु ।
अश्वमेधफलं तस्य तद्भवाननुमन्यताम् " इति याज्ञवल्क्योक्तेश्च ।

पुराणाध्ययनश्रवणयोर्विधानेऽप्यध्ययनं ज्ञानद्वारा कर्मार्थत्वाद्दृष्टार्थं श्रवणं त्वदृष्टार्थमेव । शूद्राणां तु विपरीतं श्रवणं ज्ञानद्वारा कर्मार्थत्वाद्दृष्टार्थं फलार्थत्वाददृष्टार्थं च ।

अध्ययनं तु नास्त्येव ।

" श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन " इति वचनात् ।

" सुगतिमियाच्छ्रवणात्तु शूद्रजातिः " इति हरिवंशोक्तेश्च ।

एतेन पुराणविष्णुसहस्रनामचण्डीस्तोत्रादिपाठेऽधिकारोऽप्यपास्तः ।

यत्तु सहस्रनामप्रतिपादके स्तोत्रे—

" वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् " ॥

इति वचनं तदपि श्रवणपरमेव । आहुश्च श्रीमच्छंकराचार्या एतद्व्याख्याने—' शूद्रः सुखमवाप्नुयात् ' इत्यत्र शूद्रः श्रवणेनैवेति ।

गणपतिसहस्रनामप्रतिपादके स्तोत्रे तु—

" सकृत्पाठेन संसिद्धः स्त्रीशूद्रपतितैरपि ।
सहस्रनाममन्त्रोऽयं जपितव्यः शुभाप्तये " ॥

इति वचनादधिकारः । एवमन्यत्रापि । किं बहुना शूद्रकर्तृकस्नानदानश्राद्धादौ द्विजस्यैव पौराणमन्त्रपाठः । शूद्रस्य तु श्रवणमात्रम् । स्त्रीणामनुपनीतानां शूद्राणां च स्थापनेऽधिकारो न ।

" स्त्रीणामनुपनीतानां शूद्राणां च नरेश्वर ।
स्थापने नाधिकारोऽस्ति विष्णोर्वा शंकरस्य वा " ॥

इति वचनादिति केचित् ।

विष्ण्वादिप्रतिष्ठायां शूद्रस्य विकल्प इत्यन्ये । पूजा च स्पर्शरहिता । शिवपञ्चाक्षरादयो मन्त्रा नमोन्ता ज्ञेयाः । एतन्मूलं शूद्रप्रकाशकमलाकरादौ द्रष्टव्यम् ।

अत्र यानि शूद्रपराणि वाक्यानि तानि स्त्रीपराण्यपि ज्ञेयानि ।

" स्त्री शूद्राश्च सधर्माणः " इतिवचनात् ।

इति संक्षेपेण स्त्रीधर्माः ।

## अथ गर्भाधानकालः ।

तत्रेदं धर्मसूत्रम्—

" ऋतौ च संनिपातो दारेणानुव्रतम् " इति ।

रजोदर्शनदिनमारभ्य षोडशाहोरात्रपरिमित ऋतुः । तत्र संनिपातः संयोगो दारेण कर्तव्यः । छान्दसमेकवचनम् । बहुवचनान्तो हि दारशब्दः । शास्त्रतो नियमो व्रतं तदनुरोधेनेत्यर्थः ।

ऋतुदिनसंख्यामाह मनुः—

" ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैः सार्धमहोभिः सह गर्हितैः ॥
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् " इति ॥

अत्र रात्रिग्रहणाद्दिवसप्रतिषेधः ।

तथा च शङ्खलिखितौ—

" नाऽऽर्तवेऽपि दिवा व्रजेत् " इति ।

याज्ञवल्क्यः—" षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् ।
ब्रह्मचर्ये च पर्वाण्याद्याश्चतस्रो विवर्जयेत् " इति ॥

स्त्रीणां षोडश निशा ऋतुर्गर्भग्रहणयोग्यः कालः । तत्र सर्वासु युग्मासु गमनमावश्यकं, युग्मास्विति बहुवचननिर्देशात् । यत्र श्राद्धादौ ब्रह्मचर्यं विहितं

१ ग. °णां चामरे° ।

तत्राप्यृतौ गच्छतो न ब्रह्मचर्यस्खलनदोषः । पर्वाणीति बहुत्वेनाष्टमीचतुर्दश्योर्ग्रहणमिति विज्ञानेश्वरः ।

यस्तु हेमाद्रौ शिवरहस्ये—

" दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती ।
श्राद्धं दत्त्वा च भुक्त्वा च श्रेयोर्थी न च पर्वसु " ॥

इति श्राद्धदानभोजनदिवसे स्त्रीगमननिषेधः सोऽनृतुविषयः । दर्शादौ तु न भवत्येव । पर्वणां पर्युदस्तत्वात् ।

" ऋतुस्नाता भवेन्नारी चतुर्थे दिवसे ततः ।
ऋतुकालस्तु निर्दिष्ट आषोडशदिनावधि ॥
तत्रायुग्मदिने स्त्री स्यात्पुमान्युग्मदिने भवेत् " ॥

इति पाद्मीयशिवगीतास्थवचनव्याख्यानावसरे व्यङ्कटदीक्षितास्तु—

" यत्तु ऋतौ गच्छेदेवेति नियमस्य श्राद्धादौ ब्रह्मचर्यविधानस्य च परस्परपरिहारेण लब्धावकाशस्य सामान्यविशेषभावानापन्नस्यैकत्र प्रसक्तौ किं बाध्यमिति संशये गच्छतोऽपि न ब्रह्मचर्यस्य भङ्ग इत्याशयेन ब्रह्मचर्ये चेति मूलमिति विज्ञानेश्वरेण व्याख्यातं तच्चिन्त्यम् ।
' ऋतुकालनियुक्तोऽपि नैव गच्छेत्स्त्रियं क्वचित् ' ।
इति श्राद्धप्रकरणस्थवृद्धमनुवचनविरोधात् । तस्मान्नाऽऽर्तवेऽपि दिवा व्रजेदिति शङ्खलिखितस्मृतिं प्रति मूलतयोपन्यस्ते 'प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्यां संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ संयुज्यन्ते ' इत्याथर्वणश्रुतिवाक्य इव याज्ञवल्क्यस्मृतावपि ब्रह्मचर्योक्तिरर्थवादरूपेति माधवाचार्यप्रभृतीनां ग्रन्था एव प्रबलाः " इत्याहुः ।

षोडशदिनरूपोऽवधिः षोडशदिनावधिस्तमभिव्याप्येत्याषोडशदिनावधि । तथा च रजोदर्शनदिनमारभ्य षोडशदिनात्मक ऋतुकालो निर्दिष्टः । शास्त्रकारैरिति शेषः । एवं स्थिते नारी चतुर्थदिवस ऋतुस्नाता भवेत् । ततश्चतुर्थदिवसानन्तरं तत्रार्तवयुग्मदिने पञ्चमादौ स्त्री स्याद्युग्मदिने षष्ठादौ पुमान्भवेत् । यद्यपि रजोबाहुल्यादिकं स्त्रीत्वादौ हेतुतयोक्तं तथाऽप्ययुग्मायां रजोबाहुल्ये युग्मायां शुक्रबाहुल्ये च तावदविरोध एव । यदा त्वयुग्मायां शुक्रबाहुल्यं तदा तु पुमानेव भवति किंतु स्त्र्याकृतिः । कालरूपनिमित्तकारणापेक्षयोपादानकार-

१ ग. कृत्वा ।

णीभूतस्य रजसः प्राबल्यादिति विज्ञानेश्वरप्रभृतयः। एवं युग्मायां रजोबाहुल्येऽपि रुग्यैव पुरुषाकृतिर्भवतीत्यपि बोध्यम्। अत्र च षोडशदिनात्मकमृतुं निर्दिश्य चतुर्थदिवसानन्तरमेव पुत्राद्युत्पत्तिं वदताऽऽद्यचतुष्टयं वर्ज्यमिति सूचितम्।

तथा च याज्ञवल्क्यः—

" षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत्।
ब्रह्मचर्ये च पर्वाण्याद्याश्चतस्रो विवर्जयेत् " इति ॥

युग्मास्वपि प्रतिषिद्धेतरास्वेव गच्छेत्।

ताश्चोक्ता मनुना—

" तासामाद्याश्चतस्रस्तु निन्द्या एकादशी च या।
त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः " इति ॥

एकादशीत्रयोदश्यावृतोर्न पक्षस्येति मदनपारिजाते।

यत्तु—" चतुर्थ्यां स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामाचम्योपह्वयते "।

इति गृह्योक्तं चतुर्थ्यां रात्रौ गमनं, यच्चाऽऽपस्तम्बोक्तं—

" चतुर्थीप्रभृत्याषोडशीमुत्तरां युग्मां प्रजानिःश्रेयसमृतुगमनमित्युपदिशन्ति "।

इति, यच्च हारीतोक्तं—

" चतुर्थेऽहनि स्नातायां युग्मासु च गर्भाधानं तद्रुपेतं ब्रह्मगर्भं संदे[1]धाति "।

इति, तद्रजोनिवृत्तौ ज्ञेयम्।

" स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते।
गम्या निवृत्ते रजसि नानिवृत्ते कथंचन " इत्यापस्तम्बोक्तेः।

" रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला " इति मनूक्तेश्च।

वस्तुतस्तु स्वसूत्रे स्पष्टतयोक्तस्य चतुर्थीगमनस्य स्मृत्या संकोचोऽत्यन्तानुचितः। तथा चानिवृत्तेऽपि रजसि चतुर्थ्यां गमनं भवत्येवेत्ययमेव कल्पः साधीयान्। मनुवचने साध्वी गमनार्हेति माधवः। एवं चानन्तरोक्ते मनुवचने चतुर्थीनिषेधो रजोनिवृत्तिसद्भावपरः। अनन्तरोक्ते हारीतवचने युग्मास्वित्यनेनैव चतुर्थीग्रहणे सिद्धे पृथगुपादानं मुख्यत्वद्योतनार्थमिति ज्ञेयम्। एतदपि रजोनिवृत्तावेव।

पर्वाणि वर्जयेदिति याज्ञवल्क्येनोक्तम्।

१ ङ. संभवति। २ क. ख. च. °दधति।

तत्र तानि कानीत्यपेक्षायां ब्रह्मपुराणे—

" चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
तैलस्त्रीमांसभोगी च सर्वेष्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं नृप " इति ॥

चकारादेकादश्या ग्रहणम् । एतेषु पर्वसु ।

मनुरपि—" अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः " इति ॥

श्रुतिरपि—" नामावास्यायां च पौर्णमास्यां च स्त्रियमुपे-
याद्यदुपेयान्निरिन्द्रियः स्यात् " इति ।

याज्ञवल्क्यः—" एवं गच्छन्स्त्रियं क्षामां मघां मूलं च वर्जयेत् ।
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् " इति ॥

क्षामा कृशा । एतच्च क्षामत्वं रजस्वलाव्रतेनैव भवति । नो चेदल्पस्निग्ध-भोजनादिना कार्यं रजःक्षयार्थम् ।

तथाच बृहस्पतिः—

" स्त्रियाः शुक्रेऽधिके स्त्री स्यात्पुमान्पुंसोऽधिके भवेत् ।
तस्माच्छुक्रविवृद्ध्यर्थं स्निग्धं भक्ष्यं प्रकल्पयेत् ॥
लघ्वाहारां स्त्रियं कुर्यादेवं संजनयेत्सुतम् " इति ।

मनुः—" पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समेऽपुमान्पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः " इति ॥

अपुमान्नपुंसकः । पुंस्त्रियौ वा यदि बीजविभागः ।

तदाह यमः—" यदि संभोगकाले तु पुरुषो रागमोहितः ।
द्विधा समुत्सृजेच्छुक्रं यमकं तत्र जायते " इति ॥

क्षीणे निःसारे, अल्पे च विपर्ययो गर्भाग्रहणम् । मघां मूलं चेति चकारः शास्त्रान्तरोक्तवर्ज्यनक्षत्राणां समुच्चयार्थः । सुस्थे शुभस्थानस्थिते । इन्दौ चन्द्रे सकृदेकस्यां रात्रौ न द्विस्त्रिर्वेत्यर्थः ।

नारदः—" उपवीती युग्मतिथौ न नग्नः कामयेत्स्त्रियम् ।
पुत्रार्थी पुरुषस्त्यक्त्वा पर्वमूलाहिपैतृकम् " इति ॥

पुत्रार्थी पुरुष एतानि नक्षत्राणि त्यक्त्वा युग्मतिथौ गच्छेदित्यर्थः। अहि- राश्लेषाः। पैतृकं मघाः।

ग्राह्यतिथय उक्ताः श्रीधरेण—

" षष्ठ्यष्टमीं पञ्चदशीं चतुर्थीं चतुर्दशीमप्युभयत्र हित्वा।
शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशाङ्कार्यसितेन्दुजानाम् " इति ॥

उभयत्र पक्षद्वये। निषेको गर्भाधानम्। शशाङ्कश्चन्द्रः। आर्यो गुरुः। सितः शुक्रः। इन्दुजो बुधः।

नक्षत्राणि रत्नमालायाम्—

" विष्णुप्रजेशरविमित्रसमीरपौष्णमूलोत्तरावरुणभानि निषेककार्ये।
पूज्यानि पुष्यवसुशीतकराश्विचित्रादित्याश्च मध्यमफला विफलाः
स्युरन्ये(न्याः) " इति ॥

विष्णुः श्रवणम्। प्रजेशो रोहिणी। रविर्हस्तः। मित्रोऽनुराधाः। समीरः स्वाती। पौष्णं रेवती। मूलं प्रसिद्धम्। उत्तराशब्देनोत्तरात्रयम्। वरुणभं शततारकानक्षत्रम्[1]। निषेककार्ये गर्भाधानकार्ये, एतानि पूज्यानि। पुष्यः प्रसिद्धः। वसवश्श्रविष्ठाः। शीतकरो मृगशीर्षम्। अश्विनावश्विनीनक्षत्रम्। चित्रा प्रसिद्धा। आदित्यं(त्ये) पुनर्वसू। एतानि मध्यमफलानि। अन्या अवशिष्टास्तारा विफला इत्यर्थः। मूलस्य विहितप्रतिषिद्धत्वाद्विकल्प इति केचित्। वस्तुतस्तु मूलस्य पूज्यत्वं चिन्त्यमेव।

वृद्धवसिष्ठसंहितायाम्—

" पौष्णद्वये पैतृभयाम्यसार्पविष्णुद्वये नैव च जन्मभेषु।
उत्पातपापग्रहदूषितेषु न कार्यमाधानमनिष्टलग्ने " इति ॥

अनिष्टलग्नानि मेषवृश्चिकमकरकुम्भाख्यानि। श्रवणरेवत्योर्विहितप्रतिषिद्ध- त्वाद्विकल्पः। अत्र जन्मत्रयमपि वर्ज्यम्।

तथा च प्रयोगपारिजाते बृहस्पतिः—

" श्राद्धं पित्र्यं चिकित्सां च मैथुनाभ्यञ्जने तथा।
चौलोपनयनादीनि वर्जयेत्तु त्रिजन्मसु " इति ॥

त्रिजन्मानि जन्मनक्षत्रं दशमैकोनविंशे च। जन्मनक्षत्रे(त्रं) तत्पूर्वोत्तरे नक्षत्रे इति केचित्।

१ ग. ङ. च.

ज्योतिर्वसिष्ठः—

" उपप्लवे वैधृतिपातयोश्च विष्ट्यादिके पारिघपूर्वभागे।
संध्यासु पर्वस्वपि मातृपित्रोर्मृतेऽह्नि पत्नीगमनं विवर्ज्यम् " इति ॥

ज्यौतिषे—" दिनेषु युग्मेषु च वक्ष्यमाणैर्योगैः सुतार्थी स्वसतीमुपेयात्।
दिनेष्वयुग्मेषु च कन्यकार्थी हित्वा तु गण्डं तिथिलग्नभागान् " इति ॥

मातापित्रोश्च श्राद्धदिवसपूर्वदिवसोऽपि वर्ज्य इत्युक्तं मुहूर्तमार्तण्डे।

एतच्च गुरुशुक्रास्तादावपि कार्यम्।

" उत्सवेषु च सर्वेषु सीमन्त ऋतुजन्मनोः।
सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते " ॥

इति ज्योतिर्निबन्धे भृगूक्तेः। चकारादतिचारादीनां ग्रहणम्।

मलमासेऽप्येतद्भवति।

" अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाऽऽचरेत्।
गर्भाधानादिकर्माणि नाधिमासे विवर्जयेत् " इति गर्गोक्तेः।

स्त्रीणामनेकत्व ऋतुयौगपद्ये गमनक्रममाह देवलः—

" यौगपद्ये तु तीर्थस्य विप्रादिक्रमशो व्रजेत्।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा " इति ॥

तीर्थमृतुः। तद्यौगपद्ये, अपुत्रां प्रथमं गच्छेत्। सर्वासामपुत्रत्वे पुत्रवत्त्वे वा वर्णक्रमेण ग्रहणक्रमेण वेत्यर्थः। ग्रहणक्रमः पाणिग्रहणक्रमः।

तथा च कश्यपः—" यौगपद्ये तु तीर्थस्य विवाहक्रमशो व्रजेत् " इति।

ऋतौ गमनं श्रुतावुक्तम्—ऋतौ भार्यामुपेयादिति।

ऋतावगमने प्रायश्चित्तमाह बृहस्पतिः—

" आहिताग्निरुपस्थानं न कुर्याद्यस्तु पर्वणि।
ऋतौ न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत् " इति ॥

ऋतुरत्र स्नानदिनमारभ्य त्रयोदश दिनानि। पञ्चमदिनमारभ्य द्वादश दिनानि वा।

यत्तु संवर्तः—" ऋतौ नोपैति यो भार्यां नियतां व्रतचारिणीम्।
नियमातिक्रमात्तस्य प्राणायामशतं स्मृतम् " इति, तदकामतः ॥

---

१ ख. ङ. च. गण्डांस्तिथि°। २ क. ख. ग. ङ. °मासं वि°।

**एतच्च समानदेशविषयम् ।**

" ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः " **इति पराशरोक्तेः ॥**

**संनिधावित्युक्त्याऽसंनिहितस्य न दोष इत्युक्तं भवति ।**

**देवलः—**" यः स्वदारानृतुस्नातान्स्वस्थः सन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति प्रजा प्राप्ता विनश्यति " **इति ॥**

**स्वस्थ इति वचनादस्वस्थस्य न दोष इत्युक्तं भवति । सूतकादिषु ऋतावगच्छतो न दोषः ।**

**तथा च मनुः—**" सूतके बन्धने विप्रो हव्यकव्यादिवर्जितः ।
नैनसा लिप्यते तद्वदृतावगमनादपि " **इति ॥ एनसा पापेन ।**

**व्यासः—**" व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।
ऋतुकाले तु नारीणां भ्रूणहत्या न युज्यते " **इति ॥**

**ऋतुकाल इत्यनन्तरमगमन इति शेषः । योऽयमृतौ भार्यागमननियमः सोऽजातपुत्रं प्रत्येव ।** ' जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः ' **इतिश्रुतिमूलकत्वेनास्योपपत्तेः श्रुत्यन्तरकल्पनाया अन्याय्यत्वात् ।**

**तथा च मनुः—**" ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।
पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति " **इति ॥**

**कूर्मपुराणमपि—**" ऋतुकालाभिगामी स्याद्यावत्पुत्रोऽभिजायते " **इति ॥**

**एवं चैकपुत्रोत्पादनेन शास्त्रार्थस्य कृतत्वादानृण्ये च जाते न पुत्रान्तरोत्पादनमावश्यकम्, इति । केचित्तु ऋतोर्निमित्तत्वात्प्रतिनिमित्तं नैमित्तिक्यावृत्तिरुचिता ।**

**स्मरन्ति च—**

" एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् " **[इति] इत्याहुः ।**

**ऋतुकाले भार्याया अपि भर्तारं प्रति गमनं नियतमन्यथा दोषः ।**

**तथा च संग्रहे—**" ऋतुस्नाता तु या नारी भर्तारं नानुमन्यते ।
सा मृता तु भवेन्नारी सूकरी च पुनः पुनः " **इति ॥**

**यमोऽपि—**" ऋतुस्नाता तु या नारी भर्तारं नोपगच्छति ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीमिति वासयेत् " **इति ॥**

भ्रूणघ्नीयमिति तां स्त्रियं ग्राममध्ये विख्याप्य प्रकटीकृत्य पृथग्वासयेदित्युत्तरार्धार्थः । अत्रापि संनिधाविति ज्ञेयम् । प्रायश्चित्तं तु पूर्वोक्तमेव ज्ञेयम् । व्याधितादीनां स्त्रीणामपि भर्तारं प्रत्यृतावगमने न दोषः । अनन्तरोदाहृतव्यासवाक्ये पुंलिङ्गस्याविवक्षितत्वात् ।

अनृतावपि गमनमाह श्रुतिः—

" ता अब्रुवन्वरं वृणामहा ऋत्वियात्प्रजां विन्दामहै काममाविजनितोः संभवामेति तस्मादृत्वियात्स्त्रियः प्रजां विन्दन्ते काममाविजनितोः संभवन्ति वारे वृत३ ह्यासाम् " इति ।

ऋत्वियादृतुकालिकात्पुरुषसंबन्धात् । आविजनितोः प्रसूतिपर्यन्तम् । संभवन्ति मिथुनी भवन्ति ।

धर्मसूत्रेऽपि—" अन्तरालेऽपि दार एव ब्राह्मणवचनाद्वा संवेशनम् " इति ।

याज्ञवल्क्योऽपि—" यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः " इति ॥

वरमिन्द्रदत्तवरम् ।

बृहस्पतिरपि—" ऋतुकालाभिगमनं पुंभिः कार्यं प्रयत्नतः ।
सदैव वा पर्ववर्ज्यं स्त्रीणामभिमतं हि तत् " इति ॥

विष्णुपुराणेऽपि—" इति मत्वा स्वदारेषु ऋतुमत्सु नरो व्रजेत् ।
यथोक्तदोषहीनेषु सकामेष्वनृतावपि " इति ॥

यस्तु—" ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति ।
तुल्यमाहुस्तयोः पापमयोनौ यश्च सिञ्चति " ॥

इति बौधायनेनानृतौ गमननिषेध उक्तः स स्त्रियाः कामाभावे ज्ञेयः ।

कासांचिन्निषेधमाह व्यासः—

" नास्नातां तु स्त्रियं गच्छेन्नाऽऽतुरां न रजस्वलाम् ।
नानिष्टां न प्रकुपितां नाप्रशस्तां न गर्भिणीम् ॥
वृद्धां वन्ध्यामसद्वृत्तां मृतापत्यामपुष्पिणीम् ।
बहुपुत्रवतीं चैव गमने परिवर्जयेत् " इति ॥

छन्नवत्त्वादिदोषरहिता प्रशस्ता । न प्रशस्ताऽप्रशस्ता तां वर्जयेदित्यर्थः । वृद्धां सरजस्कामपि अशक्तां गर्भधारणे । पुष्पिणी, ऋतुमती [1] तदन्याऽपुष्पिणी । अप्राप्तार्तवा गतार्तवा च गमनेऽनेन निषिध्यते ।

---

१ ङ. अनन्त° ।

बहुपुत्रवतीमित्यत्र बहुपुत्रशब्देनैकादशप्रभृतिरेव संख्या ग्राह्या।

" दशास्यां पुत्रानाधेहि " इति लिङ्गात्।

ऋतुविशेषेण संभोगनियमः कामशास्त्रे—

" पक्षान्निदाघे हेमन्ते नित्यमन्यर्तुषु त्र्यहात्।
स्त्रियं कामयमानस्य जायते न बलक्षयः " इति ॥

यत्तु वाग्भट्टीये—" त्र्यहाद्वसन्तशरदोः पक्षाद्वर्षनिदाघयोः।
सेवेत कामतः कामं हेमन्ते शिशिरे बली " ॥

इत्युक्तं, तत्र बलीत्यभिधानेन दृष्टार्थत्वोक्तेर्यथाबलं व्यवस्था।

रतिदेशमाह पैठीनसिः—

" संवृत्ते देशे मैथुनायाऽऽह्वयीत " इति। संवृत्ते परिश्रिते।

देशविशेषनिषेधो विष्णुपुराणे—

" देवद्विजगुरूणां च व्यवायी नाऽऽश्रमे भवेत्।
चैत्यचत्वरसीरेषु न चैव च चतुष्पथे " इति ॥

देवद्विजगुरूणामाश्रमे व्यवायी न भवेदित्यन्वयः। व्यवायो मैथुनं तदस्यास्तीति व्यवायी।

रतिसमये दीपसांनिध्यमुक्तं रतिप्रकाशे—" दीपसमीपे रतिं कुर्यात् " इति।

ज्योतिर्निबन्धे—" दीपेऽप्रदीप्ते यः सङ्गं करोति मनुजो यदि।
यावज्जन्म दरिद्रत्वं लभते नात्र संशयः " इति ॥

अयं च दीपो भार्ययैव प्रज्वालनीयः।

तदुक्तं तत्रैव—" भार्यैव दीपं प्रज्वाल्य पत्युश्चित्तानुवर्तिनी।
नमस्कृत्य तु भर्तारं रमयेत्सह तेन तु " इति ॥

दीपे शलाकां प्रज्वाल्य तेन दीपप्रज्वालनं कार्यं न तु साक्षाद्दीपे।

" दीपेन दीपं प्रज्वाल्य दरिद्री(द्रो) व्याधिमान्भवेत् "।

इति लैङ्गे दोषस्योक्तेः।

दीपलोपनं पुरुषस्य निषिद्धम्।

" दीपप्रलोपनं पुंसां कूष्माण्डच्छेदनं स्त्रियाः।
अचिरेणैव कालेन वंशच्छेदो भवेद्ध्रुवम् " इति वचनात् ॥

एतच्च सार्वत्रिकं द्रष्टव्यम्।

---

१ ग. °सीतेषु।

ज्योतिर्निबन्धे। ( * आचारप्रकाशे स्मृतिसंग्रहे[1]—

" कञ्चुकोत्थेन मरुता दीपं नैव निवारयेत्।
आननोत्थेन वातेन हस्तसंजातवायुना ॥
विसृजेति समुच्चार्य लोपयेद्दीपमञ्चलात्।
तावच्च तूष्णीं स्थातव्यं यावच्छेषः प्रशाम्यति " इति ॥

विसृजेत्यत्र दीपः संबोध्यः। हे दीप विसृज ज्योतिरिति विसृजेत्यस्यार्थः। अञ्चलादञ्चलेन। शेषो दीपशेषः। )

" प्रदोषकाले या नारी पतिसङ्गं समाचरेत्।
आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् ॥
पादौ लग्नतनुश्चैव उच्छिष्टं ताडनं तथा।
कोपं(पो) रोषं च(पश्च) निर्भर्त्सं(र्त्सः) संयोगे न च दोषभाक् ॥
कञ्चुकेन समं नारी भर्तुः सङ्गं समाचरेत्।
त्रिभिर्वर्षैश्च मध्ये वा विधवा भवति ध्रुवम् ॥
ताडपत्रमिलत्कर्णा यदि मैथुनमाचरेत्।
पञ्चमे सप्तमे वर्षे वैधव्यमिह जायते ॥
कामातुरेण पतिना संयोगे यदि याचिता।
निवारयति तं नारी बालरण्डा भवेत्सदा ॥
(+ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति।
घोरायां भ्रूणहत्यायां पितृभिः सह मज्जति ॥)
कुङ्कुमं चाञ्जनं चैव ताम्बूलं सिन्दुरं तथा।
धौतवस्त्रं च कुसुमं संयोगे च शुभावहम् ॥
नमस्कृत्वा(त्य) भर्तृपादौ पश्चाच्छय्यां समाविशेत्।
नारी सुखमवाप्नोति न चेद्दुःखस्य भागिनी ॥
गलत्ताम्बूलवदनां नग्नामाक्रन्दरोदनाम्।
दुर्मुखां(खीं) च क्षुधायुक्तां संयोगे परिवर्जयेत् ॥
भर्त्रुच्छिष्टं सदा भोज्यमन्नं ताम्बूलमेव च।
उच्छिष्टं न तु भुञ्जीत गृहस्थो ह्यधरं विना ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. ख. पुस्तकयोर्नास्ति। + धनुश्चिह्नान्तर्गतो ग्रन्थः ख. ङ. च. पुस्तकेषु नास्ति।

१ ग. °शे—क°। २ च. स्मृत्यर्थसं°।

दीपेनाऽऽत्मतनुच्छायां भर्तुश्चोपरि चेत्त्यजेत् ।
तौ दंपती दरिद्रत्वमाप्नुवीतां विनिश्चितम् " इति ॥

स्नाने तदुत्तरं च विशेष उक्तः स्मृतिसंग्रहे—

" कोष्णेन वारिणा स्नायात्स्नाताऽऽदौ रविमीक्षयेत् ।
ततो भर्ता प्रेक्षितव्यः कुर्यात्तेनैव भाषणम् " इति ॥

ऋतुगमने विशेषो गृह्यसूत्रे—

" चतुर्थ्यां स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसंभाषामाचम्योपह्वयते " इति ।

स्नातां कृतस्नानाम् । प्रयतवस्त्रां शुद्धवस्त्राम् । अलंकृतां गन्धालंकारैर्भूषिताम् । ब्राह्मणसंभाषामकौटिल[1]ब्राह्मणेन सम्यग्भाषा भाषणं यस्याः सा ताम् । एतादृशीं स्त्रियमाचमनं कृत्वा समीपमाह्वयत इत्यर्थः ।

(*ज्योतिर्ग्रन्थे—" ताम्बूलमादौ चर्वित्वा भार्यासङ्गं समाचरेत् " इति ।

शौनकीये—" एकपूगं सदा श्रेष्ठं द्विपूगं निष्फलं भवेत् ।
अतिश्रेष्ठं त्रिपूगं च अधिकं नैव दृश्यते ॥
द्वात्रिंशत्पर्णकं चैव दद्यात्सर्वमहीभुजे ।
चतुर्विंशतिपर्णं च सामन्तानामुदाहृतम् ॥
दशाष्टपर्णकं ज्ञेयं जामातॄणां विशेषतः ।
द्वादशपर्णं विदुषे बन्धूनां[2] दशपर्णकम् ॥
अष्टपर्णं च सर्वेषां सामान्यं तुर्यपर्णकम् ।
त्रिपर्णं तु न दातव्यमेकपर्णं तथैव च ॥
षट्पर्णं तु प्रदातव्यं रिपूणां तु विशेषतः ।
एकद्वित्रिचतुष्पञ्चषड्भिः पूगैः फलं क्रमात् ॥
पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः ।
चूर्णपर्णं हरत्यायुः शिरा बुद्धिविनाशिनी ॥
ऊर्ध्वाग्रं विकटं धार्यं पर्णमेकं तथैव च ।
अङ्गुष्ठचूर्णलेपं च चार्चि(र्वि)तं धनदायकम् ॥
अनिधाय मुखे पर्णं पूगं खादति यो नरः ।
सदा जन्मदरिद्री(द्रः) स्यादन्ते न स्मरते हरिम् ॥

---

* धनश्चिह्नान्तर्गतो ग्रन्थः क. ग. पुस्तकयोरेव ।

---

१ ख. ङ. च. 'टिल्येनाकुटिल' । २ ग. वधूनां ।

तर्जन्या चूर्णमादाय ताम्बूलं न तु खादयेत्।
यदि वा खादयेन्मूढो रौरवं नरकं व्रजेत्॥
कनिष्ठानामिकामध्यातर्जन्यङ्गुष्ठयोगतः।
शोको हानिस्तथा मृत्युरनैश्वर्यायुषी क्रमात्॥
अङ्गुष्ठेन तु लेपेन सर्वसिद्धिप्रदायकम्।
जयस्त्रीवस्त्रलाभादि भविष्यति न संशयः॥
वामहस्तेन खादेन्न स्त्रीहस्तेम तथैव च।
यदि वा खादयेन्मूढस्तस्य लक्ष्मीर्विनश्यति॥
दिवा खदिरसारेण ताम्बूलं तु सुशोभितम्।
रात्रौ खदिरसारेण शक्रस्यापि श्रियं हरेत्॥
प्रातःकाले फलाधिक्यं चूर्णाधिक्यं तु मध्यतः।
निशि पर्णाधिकं भक्षेत्तस्य लक्ष्मीर्विवर्धते॥
क्रमुकसारं त्रिवारं द्विवारं पर्णसारकम्।
खादिरेण सहैकं च उत्क्षिपेत्सर्वदा बुधः" इति॥)

**संभोगकाले स्त्रियमकञ्चुकां कृत्वा भोगं कुर्यात्।**

"सकञ्चुकरतिं कृत्वा सचैलं स्नानमाचरेत्"

**इति रतिप्रकाशे प्रायश्चित्तश्रवणात्। मैथुनकाले तर्जन्यां रौप्यं चेत्तत्परित्याज्यं शिखा च विसर्जनीया।**

"तर्जनीं रौप्यसंयुक्तां ब्रह्मग्रन्थियुतां शिखाम्।
भोजने मैथुने मूत्रे कुर्वन्कृच्छ्रेण शुध्यति"

**इति संग्रहे प्रायश्चित्तश्रवणात्।**

**संभोगोत्तरकृत्यं धर्मसूत्रे—**"उदकोपस्पर्शनम्" **इति।**

**उदकोपस्पर्शनं स्नानम्। एतच्चर्तुकाल इति व्याख्यातमुज्ज्वलाकृता।**

**पराशरोऽपि—**"ऋतौ तु गर्भशङ्कित्वात्स्नानं मैथुनिनः स्मृतम्" **इति।**

**एतच्च स्नानमशिरस्कम्। ऋतुगमननिमित्तकस्नानं प्रकृत्य—**

"अशिरस्कमेव मज्जनं कुर्यात्" **इति बृहद्वसिष्ठोक्तेः।**

**अनृतौ तु धर्मसूत्रे—**

"लेपान्प्रक्षाल्य पादौ चाऽऽचम्य प्रोक्षणमङ्गानाम्" **इति।**

पराशरोऽपि—" अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् " इति ।

स्त्रीणां तु न स्नानपादप्रक्षालने । तासामशुचित्वाभावात् ।

तथा च वृद्धशातातपः—

" उभावप्यशुची स्यातां दंपती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् " इति ।

गर्भोत्पत्तावाहात्रिः—

" षण्मासान्कामयेन्मर्त्यो गर्भिणीं स्त्रियमेव हि ।
आदन्तजननादूर्ध्वमेवं धर्मो न हीयते " इति ॥

एवकारः षण्मासानित्यनन्तरमन्वेति । न चैवं 'काममाविजनितोः संभवन्ति' इत्यनया श्रुत्या प्रसवपर्यन्तं गमनस्याभ्यनुज्ञातत्वादनेन विरोध इति वाच्यम् । तत्र प्रसवापरपर्यायविजननशब्देन ' अत ऊर्ध्वं प्रसूतिः स्यात् ' इति पारिभाषिकस्यैव विजननस्य ग्रहणान्न विरोधः । आदन्तजननादूर्ध्वं बालके जाते तस्य दन्तजननादूर्ध्वं गच्छेन्न तु ततः पूर्वमित्यर्थः ।

मात्स्यकश्यपाभ्यां वर्षद्वादशकादूर्ध्वमृतोरप्राप्तावपि गमनमुक्तम्—

" वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्नहि ।
अन्तः पुष्पं भवत्येव पनसोदुम्बरादिवत् ॥
अतस्तत्र प्रकुर्वीत स्त्रीसङ्गं बुद्धिमान्नरः " इति ॥

वर्षद्वादशकादितिश्रवणादर्थात्पूर्वं गमनं निषिद्धमिति ज्ञेयम् । चतुर्थीकर्मसंबन्धिगमनं तु भवत्येव तस्य वैधत्वात् ।

आश्वलायनः—" दीक्षितस्तु महायज्ञे पित्रोः प्राग्वत्सराद्द्विजः ।
नेयाद्भार्यां प्रयत्नेन ऋतावप्यर्थितो बुधः " इति ॥

नेयान्न गच्छेत् । अर्थितः प्रार्थितः । भोगार्थं भार्ययेति शेषः ।

" प्राग्रजोदर्शनात्पत्नीं नेयाद्गत्वा पतत्यधः ।
व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात् " ॥

इति दक्षाश्वलायनाभ्यां निषेध उक्तः स बह्वृचादिविषयः । तैत्तिरीयैस्तु रागप्राप्तौ गमनं कार्यमेवेति सुदर्शनः ।

त्रिरात्रमध्ये रजस्वलागमने प्रायश्चित्तमाह याज्ञवल्क्यः—

" त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां विशुध्यति " इति ।

---

१ ख. ग. ङ. च. 'यज्ञैः पि' ।

त्रिरात्रान्त उपवासत्रयान्त इत्यर्थः।

" रजस्वलां तु यो गच्छेदुपवासत्रयं चरेत्।
गवां घृतं समश्नीयात्ततः पापात्स मुच्यते " इति मरीच्युक्तेः॥

स रजस्वलागामी। एतच्चाकामतः। कामतस्त्वाह संवर्तः—

" रजस्वलां तु यो गच्छेद्गर्भिणीं पतितां तथा।
तस्य पापविशुद्ध्यर्थमतिकृच्छ्रं विशोधनम् " इति॥

अयं च गर्भिणीगमननिषेधोऽनन्तरोदाहृतात्रिवाक्यानुरोधेन सप्तममासमारभ्यैव प्रवर्तते।

गर्भाधानाकरणे प्रायश्चित्तमाहाऽऽश्वलायनः—

" गर्भाधानस्याकरणात्तस्यां जातस्तु दुष्यति।
अकृत्वा गां द्विजे दत्त्वा कुर्यात्पुंसवनं पतिः " इति॥

अकृत्वेत्यनन्तरमपिशब्दोऽध्याहार्यः।

" प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै।
कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः "॥

इति वचनसंवादात्। गां द्विजाय दत्त्वाऽकृत्वाऽपि गर्भाधानं पतिः पुंसवनं कुर्यादित्युत्तरार्धार्थः। एतच्च प्रायश्चित्तं केवलस्य गर्भाधानस्य मुख्यकालानतिक्रान्तेन केवलेन पुंसवनेन सह क्रियायां, मुख्यकालातिक्रान्तेन पुंसवनेन सह क्रियायां तु पूर्वोक्तं कृच्छ्रात्मकं ज्ञेयम्। अथवोभयत्रापि समुच्चयः।

एतच्च गर्भाधानं मासादिशुभाशुभफलानि विचार्य स्वल्पे दोषे पूर्वं शान्तिं कृत्वा शुभे मुहूर्ते कर्तव्यमेव न तु शुभकालिकत्वापेक्षा। प्रभूतदोषे तु प्रथमर्तौ शान्तिमेव कृत्वाऽग्रे शुभकालिक ऋतौ प्राप्ते कार्यम्।

तथा च ज्योतिर्वसिष्ठः—

" प्रभूतदोषं यदि दृश्यते तत्पुष्पं ततः शान्तिककर्म कार्यम्।
विवर्जयेच्चैव तथैकशय्यां यावद्रजोदर्शनमुत्तमेऽह्नि " इति॥

ऋतौ प्रभूतदोषत्वं नामानेकदोषवत्त्वं महादोषवत्त्वं वेति द्रष्टव्यम्। महादोषास्तु वैधव्यप्रदत्वकुटिलत्वसंततिनाशकत्वादिरूपाः।

ज्योतिष्कश्यपोऽपि[1]—

" तिथिवासरधिष्ण्येषु पुष्पं दुष्टेषु दृश्यते।
गमनं वर्जयेत्तत्र पुनः शस्तेषु दर्शनात् " इति॥

---

१ ग. ज्योतिष्प्रकाशे कश्य°

अत्र प्रभूतदोषे शुभकालिकत्वापेक्षाया विधानादप्रभूतदोषे तस्मिन्नेवर्तौ शान्तिकर्मोत्तरं गर्भाधानानुष्ठानमभ्यनुज्ञातं भवति। तच्छान्तिकर्म शान्तिरत्नमालायां द्रष्टव्यम्।

## अथ गर्भाधानप्रयोगः।

तत्र रजोदर्शने सति त्रिरात्रं रजस्वला स्त्री, आञ्जनाभ्यञ्जननित्यस्नानदिवास्वापाग्न्यादिस्पर्शरज्जुसर्गबहिर्गमनप्रलेखनच्छेदनदन्तधावनमांसाशनग्रहवीक्षणदेवतावीक्षणाश्लीलाचरणताम्बूलभक्षणतालवृन्तादिबन्धनवस्त्रान्तरधारणपीठशय्याधिरोहणहरिद्रागन्धमाल्यादिधारणकांस्यपात्रभोजनमुखशोधनक्रीडाशिल्पक्रियागृहकर्माध्वगमनरात्रिभोजनशिरोवलेखननखनिकृन्तनपरपुरुषावेक्षणहसनबहुभाषणबहुभोजनादीनि वर्जयेत्। त्रिरात्रमशुचिस्तिष्ठेत्। दग्धे शरावे भुञ्जीयात्। पेयमञ्जलिना पिबेन्महता मृन्मयेन वा पात्रेण ताम्रेण वा। प्रथमर्तौ तु हरिद्रागन्धमाल्यादिधारणे ताम्बूलभक्षणे च न दोष इति विशेषः। अन्यत्समानम्। स्मार्तगार्ह्ययोः कर्मणोः पञ्चमेऽहनि स्नाताऽधिकारिणी भवति। श्रौते कर्मणि चतुर्थेऽहन्यपि स्नाताऽधिकारिणी।

कर्ता रजोनिवृत्तौ सत्यां चतुर्थ्यादित्रयोदश्यन्तास्वेकादशीत्रयोदशीरहितासु रात्रिषु मध्ये, अन्यथा पञ्चम्यादिषु मध्ये यस्यां कस्यांचिद्रात्रौ षष्ठ्यष्टमीचतुर्थीचतुर्दश्येकादशीपूर्णिमामावास्याव्यतिरिक्तायां यस्यांकस्यांचिद्विष्ट्यादिरहितायां क्षयाहादिश्राद्धासंबद्धायां च तिथौ रविभौमशनैश्चरव्यतिरिक्ते यस्मिन्कस्मिंश्चिद्वासरे श्रवणरोहिणीहस्तानूराधास्वातीरेवत्युत्तराशततारकाख्येषु जन्मनक्षत्रभिन्नेषु नक्षत्रेषु यस्मिन्कस्मिंश्चिन्नक्षत्र उत्पातपापग्रहैरदूषितेऽतिसंकटे पुष्यश्रविष्ठामृगशीर्षाश्विनीचित्रापुनर्वस्वन्यतमे नक्षत्रे वा शुभस्थानस्थिते चन्द्रे मेषवृश्चिकमकरकुम्भव्यतिरिक्ते लग्ने च गर्भाधानं कुर्यात्। तत्र युग्मासु पुत्रार्थी। अयुग्मासु कन्यार्थी। नात्र गुरुशुक्रास्तमलमासादिनिषेधः।

कर्ता ज्योतिर्वित्प्रोक्ते सुमुहूर्ते प्रातः कृतनित्यक्रियः सभार्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममैतद्भार्याधिकरणजनिष्यमाणसर्वगर्भसंस्कारातिशयसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणक्षेत्रसंस्कारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमस्यां गर्भाधानं करिष्य इति संकल्प्य तदङ्गं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं चोक्तरीत्या कुर्यात्। अत्र ब्रह्मा प्रीयतामिति विशेषः।

ततो रात्रावाचाररत्नमालोक्तरीत्या शय्यां परिकल्प्याहतवस्त्रां सुगन्धानुलेपनां ताम्बूलादिना सुवासितवक्त्रां पुष्पैर्माल्यैर्भूषणैश्चालंकृतां सुगन्धां त्रिरात्रव्रतेनाल्पभोजनेन वा कृशां प्रथमं शिष्टेनाकुटिलेन ब्राह्मणेन शुद्धभावेन कृतसंभाषां शय्यामारूढां स्वयमपि तथैव भूत्वाऽऽचम्य निवीती भूत्वा तर्जन्यां रौप्यं धृतं चेत्तन्निष्काश्य शिखां विस्रस्य, ' ॐ विष्णुर्योनिं कल्पयतु० धेनुगा भव ' इत्येतैः सुरतार्थं समीपमाह्वयेत्। ततस्तां दीपसमीप एव वामभागे शय्यायां शाययित्वा,

" ॐ सं नाम्नः स१ हृदयानि सं नाभिः सं त्वचः।
संत्वा कामस्य योक्त्रेण युञ्ज्याम्यविमोचनाय " इति सुरतं करोति।

" ॐ चाक्रवाक२ संवननं यन्नदीभ्य उदाहृतम्।
यद्युक्तो देवगन्धर्वस्तेन संवनिनौ स्वके " इति मुखमीप्सते।

" ॐ भूः प्रजापतिनाऽत्यृषभेण स्कन्दयामि वीरं धत्स्वासौ "।
" ॐ भुवः प्रजापतिनाऽत्यृषभेण स्कन्दयामि वीरं धत्स्वासौ "॥
" ॐ सुवः प्रजापतिनाऽत्यृषभेण स्कन्दयामि वीरं धत्स्वासौ "

इत्येतैः प्रतिमन्त्रं रेतोऽवस्कन्दयेत्। अधिकं चेत्तूष्णीमेवावस्कन्दनीयम्। एतेषु मन्त्रेष्वसावितिपदं निष्काश्य तत्र भार्यायाः संबुद्ध्या दान्तं नाम ग्राह्यम्। यथाऽमुकद इति। नानाविधसुरतप्रकारास्तु पञ्चसायकादिकामशास्त्रग्रन्थेभ्यो द्रष्टव्याः। यदि कामयेत स्त्रीरित्यङ्गुलीरितिवचनात्स्त्रीणामेव जननायोपगमनं चेत्तदा लिङ्गविरोधाद्वाक्यशेषविरोधाच्च मन्त्राभाव इत्येके।

अन्ये तु जातिनिर्देशात्पुंलिङ्गस्याविवक्षितत्वाद्दुहितृपुत्रादिपुंजननस्य विद्यमानत्वाद्वा लिङ्गार्थवादाविरोधान्न मन्त्राभाव इत्याहुः।

ततो यज्ञोपवीत्यशिरस्कं स्नानं कृत्वा निष्काशितं तर्जनीधृतं रौप्यं पुनस्तर्जन्यां धृत्वा शिखां बद्ध्वा पौराणाचमनप्राणायामौ कृत्वा विष्णुं संस्मरेत्। ऋतुव्यतिरिक्तकाले गमने तु पादप्रक्षालनाङ्गप्रोक्षणे एव न स्नानम्। लेपप्रक्षालनं त्वत्रापि। ततः पृथक्शयनौ भवतः। भार्यायास्तूभयत्राप्यशुचिता नैवास्ति। ऋतुव्यतिरिक्तकाले स्वेच्छातो न गच्छेत्। स्त्रीच्छया गच्छंस्तु नैव दुष्यति।

ततः श्वोभूते नित्यनिर्वर्तनानन्तरं ब्राह्मणेभ्यो भूयसीं दत्त्वा देवता विसृज्य ब्राह्मणान्भोजयेत्। अन्यदपि कुलाचारप्राप्तं चेत्तत्सर्वं कर्तव्यम्।

१ क. 'रत्नोक्त'। २ ग. 'ल्प्यासंह'।

नान्दीश्राद्धोत्तरं वा देवताविसर्जनम् । ब्राह्मणभोजनभूयसीदानादिकं तु द्वितीयदिन एव । प्रधानात्पूर्वमेतत्करणस्यात्यन्तविरुद्धत्वादेतेषां प्रधानोत्तराङ्गत्वस्यैव सर्वत्र दृष्टत्वात् । सर्वाण्युपगमनानि समन्त्राणि भवन्तीत्यात्रेयो मुनिर्मन्यते । प्रतिप्रधानं गुणावृत्तिरिति तदाशयः । बादरायणस्तु यद्विवाहोत्तरं चतुर्थ्यां रात्र्यामुपगमनं यच्च रजोदर्शनोत्तरं चतुर्थ्यादिषूपगमनं तदेव समन्त्रकं नान्यदिति मन्यते । प्रथमस्य स्त्रीसंस्कारार्थत्वाद्द्वितीयस्य गर्भाधानार्थत्वादित्याशयः । यदि दैवाच्चतुर्थीकर्म न कृतमृतुश्च प्राप्तस्तदा पूर्वकृच्छ्रात्मकप्रायश्चित्तपूर्वकं चतुर्थीकर्म कृत्वाऽनन्तरं गर्भाधानसंस्कारः कर्तव्यः । दुष्टमासादौ प्रथमरजोदर्शने ताम्बूलभक्षणादिमङ्गलाचारं न कुर्यात् । द्वितीयादौ शुभशान्तिपूर्वकं कुर्यादिति केचित् । प्रथमे दुष्टरजोदर्शने द्वितीयं प्रतीक्षेत्(त) । तस्मिन्नप्यशुभे विस्तारेण शान्तिं कुर्यादित्यप्यन्ये । प्रथम एव यथाशक्ति शान्तिं चरेत् । द्वितीयादावप्यशुभे विस्तारेण शान्तिं कृत्वा मङ्गलाचारं गर्भाधानं च कुर्यादित्यपरे । तृतीयेऽपि दुष्टेऽतिविस्तारेण शान्तिं कृत्वा गर्भाधानं कुर्यात् । न तु प्रथमद्वितीययोः शान्तिं कृत्वाऽपीति बहवः । तत्र युक्तं ग्राह्यम् । अत्रैकस्मिन्नप्यशुभे प्रभूते दोषे वक्ष्यमाणा शान्तिः कार्या । द्वित्राद्यशुभसंनिपाते तु तत्सूचितबह्वशुभनिरासार्थवक्ष्यमाणाहुतिसंख्याविवृद्ध्या कार्या यथाशक्तीत्यादि ज्ञेयम् । इति गर्भाधानप्रयोगः ।

---

एवं कृतेऽपि गर्भाधाने यदा गर्भो नोत्पद्यते तदा प्रतिबन्धकीभूतप्रेतनिवृत्त्यर्थं नारायणबलिनागबली[1] कार्यौ । तत्र यद्यपि बौधायनसूत्रस्यैव यजुर्वेदिनामभ्यर्हितत्वेन ग्राह्यत्वं तथाऽपि नागबलिसूत्रस्येदानीमत्रानुपलम्भाद्बाह्वृच[2][3] एव नागबलिप्रयोगः प्रदर्श्यते । बौधायनोक्तनारायणबलिविधिसत्त्वेऽपि संनियोगशिष्टत्वाद्बाह्वृच[4] एवोच्यते । (*बौधायनसूत्रोक्तरीत्या क्रियमाणे त्वर्धजरतीयन्याय आपद्येतेति । )

अथ नारायणबलिगृह्यपरिशिष्टम्[7][8]—

"अथ नारायणबलिरर्वाक्संवत्सराच्छुद्धे काले शुक्लैकादश्यां स्नातः शुचौ देशे विष्णुं वैवस्वतं यमं च यथावदभ्यर्च्य तदग्रे तिलमिश्रान्नमधुघृतप्लु-

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ख. पुस्तकेऽन्यथा ग्रन्थः स यथा—"बौधायनसूत्रोक्तस्येदानीमतीव प्रचाराभावात्" इति ।

---

१ क. °णंना° । २ क. ख. °जुषाम° । ३ क. °म्भाद्बह्वृ° । ४ ख. ङ. च. °ह्वृच्य पृ° । ५ क. °त्वाद्बह्वृ° । ६ ख. ङ. °ह्वृच्य ए° । ७ ग. °लिगृह्य° । ८ ग. °शिष्टे । अ° ।

तान्दश पिण्डान्विष्णुरूपं प्रेतं ध्यायन्काश्यपगोत्रासौ विष्णुदैवतायं ते पिण्ड इति दक्षिणाग्रेषु दर्भेषु दक्षिणामुखः प्राचीनावीती पराचीनेन पाणिना दत्त्वा पिण्डानर्घ्यादिभिरभ्यर्च्य प्रवाहणान्तं कृत्वा नद्यां क्षिपेत्, अथ रात्रावयुग्मान्ब्राह्मणान्निमन्त्र्योपोषितः श्वो मध्यंदिने विष्णुमभ्यर्च्य प्रेतमुद्दिश्य ब्राह्मणानेकोद्दिष्टविधिना भोजयित्वा तृप्तेषु ब्राह्मणसमीपे पिण्डविधिना निनयनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराय यमाय च विष्णो अयं ते पिण्ड इत्येवं चतुरः पिण्डान्भक्तशेषेण दक्षिणसंस्थं दत्त्वाऽथ पञ्चमं काश्यपगोत्र देवदत्तेति प्रेतं ध्यात्वा तद्रूपाय विष्णो अयं त इति दद्यादथाऽऽचान्तान्दाक्षिणया संतोष्यैकं तेषु गुणवन्तं विशेषतो वस्त्राभरणगोहिरण्यैः प्रेतबुद्ध्या तोषयेदथ तैः पवित्रपाणिभिः प्रेताय काश्यपगोत्राय ते तिलोदकाञ्जलिरिति तिलोदकं दापयित्वाऽनेन नारायणबलिकर्मणा भगवान्विष्णुरिमं देवदत्तं शुद्धमपापमर्हं करोत्विति वाचयित्वा विसृजेदेष नारायणबलिकल्प एवमन्यामपि स्वाभिमतदेवतां यमद्वितीयायामभ्यर्च्य विधिमिमं कुर्यात्सोऽप्येनमपापं करोति न तु पुण्यकृतोऽपि बलिमेनमकृत्वा पारलौकिकं कुर्यात्कृतं नोपतिष्ठतेऽन्तरिक्षे विनश्यति तस्माद्यथासंभवमपि कुर्यात् " इति ।

देवदत्तेति तत्तन्नाम्न उपलक्षणम् । प्रेतस्य नामाज्ञाने काश्यपगोत्र विष्णुरूप प्रेतेत्येवं ध्यानम् ।

अथ प्रयोगः ।

कर्ता शुक्लैकादश्यां नदीतीरादिशुचौ देशे स्नानादिनित्यक्रियान्त आचम्य प्राणानायम्य देशकालौ संकीर्त्य मदीयकुलाभिवृद्धिप्रतिबन्धकप्रेतस्य प्रेतत्वनिवृत्त्यर्थं नारायणबलिं करिष्य इति संकल्प्य कलशस्थापनविधिना स्थापितकलशद्वये सुवर्णनिर्मितप्रतिमयोर्विष्णुमावाहयामि वैवस्वतं यममावाहयामीति क्रमेणाऽऽवाह्य पुरुषसूक्तेन यमाय सोममिति च क्रमेण षोडशोपचारैः संपूज्य तत्पूर्वभागे रेखायां दक्षिणाग्रकुशास्तरणान्ते शुन्धतां विष्णुरूपी प्रेत इति दशसु स्थानेषु दक्षिणसंस्थमपो निनीय तत्र मधुघृतप्लुतान्दश पिडान्सतिलान्काश्यप-

१ ग. ह्मणमेको । २ क. त्रायेति ति । ३ ग. ङ. त्वा तेन । ४ ग. च. करूपप्रे । ५ ख. ग. ङ. च. मि य । ६ ग. ङ. ति क । ७ ख. ग. ङ. च. णाग्रे कु । ८ ग. ति कुशस्थाने द । ९ क. शस्थाने द । १० ख. ग. ङ. च. य म ।

गोत्रामुकप्रेत विष्णुदैवतायं ते पिण्ड इति दक्षिणामुखः प्राचीनावीती दक्षिणाग्रेषु कुशेषु पराचीनेन पाणिना सव्यं जान्वाच्य विष्णुरूपं प्रेतं ध्यायन्दद्यात्।

ततो गन्धादिभिरभ्यर्च्य प्रवाहणान्तं कृत्वा नद्यादौ क्षिपेत् । तस्यामेव रात्रौ श्वः करिष्यमाणश्राद्धे क्षणः क्रियतामित्येवं पञ्च त्रीनेकं वेत्येवमयुग्मान्ब्राह्मणाञ्श्राद्धोद्देशेन निमन्त्र्योपोषणं कुर्यात् । श्वोभूते मध्याह्ने विष्णुमभ्यर्च्य प्रेतं विष्णुरूपिणमुद्दिश्यैकोद्दिष्टविधिना पादप्रक्षालनादितृप्तिप्रश्नान्तं कृत्वा ब्राह्मणसमीपे पिण्डपितृयज्ञवदुल्लेखनाद्युदकनिनयनान्तं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराय यमाय च नाममन्त्रैश्चतुरः पिण्डान्दत्त्वा विष्णो अयं ते पिण्ड इति विष्णुरूपं प्रेतं ध्यायन्पञ्चमं पिण्डं दत्त्वाऽर्चनादिप्रवाहणान्तं तूष्णीं कृत्वाऽऽचान्तान्ब्राह्मणान्दक्षिणया संतोष्य तेष्वेकस्मै गुणवते प्रेतबुद्ध्या वस्त्राभरणगोहिरण्यादि दत्त्वा, एकपक्षे तस्मा एव दत्त्वा, भवन्तः प्रेताय तिलोदकाञ्जलिदानं कुर्वन्त्विति वदेत् । ते च पवित्रपाणयः सकुशतुलसीपत्रतोयाञ्जलिं प्रेताय काश्यपगोत्रायामुकशर्मणे विष्णुरूपिणेऽयं तिलतोयाञ्जलिरिति दद्युः ।

ततो ब्राह्मणान्वाचयेत्, अनेन नारायणबलिकर्मणा भगवान्विष्णुरिमं प्रेतं शुद्धमपापमर्हं करोत्विति । ततो विप्रास्तथाऽस्त्विति प्रत्यूचुः (प्रतिब्रूयुः)। ततः कर्ता स्नात्वा भुञ्जीतेति । इति नारायणबलिप्रयोगः ।

## अथ नागबलिः ।

तत्र शौनकः—"अथ वक्ष्यामि सर्वस्य संस्कारविधिमुत्तमम् ।
सिनीवाल्यां पौर्णमास्यां कारयेद्द्विभिवत्ततः ॥
पञ्चम्यामथवा कुर्यादाश्लेषासु दिनेऽथ वा ।
कृतसर्पवधो विप्रः पूर्वजन्मनि वा यदि ॥
स्नात्वाऽऽगत्य ततो ब्रह्मदण्डं दद्याद्द्विजातये ।
वधं प्रख्यापयेच्चापि चरेत्कृच्छ्रांश्चतुर्दश ॥
वधेऽस्मिञ्जन्मनि कृते लोहदण्डं द्विजातये ।
दद्यात्पापविशुद्ध्यर्थं श्रोत्रियाय कुटुम्बिने ॥
विप्राय दण्डमूल्यं वा ह्यभावे सति दापयेत् ।
साक्षाद्वधात्कर्मकर्तुरेतदेव प्रदापयेत् ॥
निष्कत्रयं द्विनिष्कं वा निष्कमेकं कनीयसम् ।
अनुमत्यादिकर्तॄणां निष्कमर्धं तदर्धकम् ॥

वित्तशाठ्यं न कुर्वीत दद्याद्वित्तानुसारतः।
अनुज्ञां च गुरोर्लब्ध्वा संस्कुर्यात्तदनन्तरम् ॥
प्रियंगुव्रीहिगोधूमतिलपिष्टेन वैकतः।

एकत एतदन्यतमेनैकेन पिष्टेन वेत्यर्थः।

कृत्वा सर्पाकृतिं तेन नवशूर्पे निधाय च।
अनेन वक्ष्यमाणेन मन्त्रेण प्रार्थयेदहिम् ॥
एहि पूर्वं मृतः सर्प अस्मिन्पिष्टे समाविश।
संस्कारार्थमहं भक्त्या प्रार्थयामि समाहितः ॥
वस्त्रोपवीतगन्धाद्यैरक्षतैः कुसुमादिभिः।
कर्ता पुष्पाञ्जलिं दत्त्वा प्रणिपत्य हरेद्बहिः ॥
प्रक्षालिताङ्घ्रिपाणिस्तु ह्याचम्योपविशेद्भुवि।
कुर्यात्संस्कारसंकल्पं प्राणायामपुरःसरम् ॥
यज्ञोपवीतिना कार्यं सर्पसंस्कारकर्म तु।
लौकिकाग्निं प्रतिष्ठाप्य समिदाधानमाचरेत् ॥
ततोऽग्नेरग्निदिग्भागे भूमिं संप्रोक्ष्य वारिभिः।
चितिं कृत्वाऽथ संस्तीर्य कुशैराग्नेयकाग्रकैः ॥
पर्युक्ष्याग्निं परिस्तीर्य परिषिच्य समर्चयेत्।
कृत्वेध्माधानपर्यन्तं षट्पात्रासादनादिकम् ॥
आघारौ चक्षुषी हुत्वा सर्पिषाऽथ यथाविधि।
सर्पं गृहीत्वा यत्नेन चितिमारोपयेत्सुधीः ॥
अपः स्पृष्ट्वा स्पृशेच्छ्रोत्रे गत्वा चाग्निसमीपतः।
स्रुवेण जुहुयादाज्यमग्नौ व्याहृतिभिस्त्रिभिः ॥
सर्पास्ये जुहुयादाज्यं व्याहृत्या तु समस्तया।
आज्यशेषं स्रुवेणैव सर्पदेहे निषेचयेत् ॥
समस्ताभिर्व्याहृतिभिः पाणिना चमसोदकैः।
तमभ्युक्ष्याग्ने रक्षेति चितावग्निं समर्पयेत् ॥
स्रुवं तत्र निधायाथ यज्ञपात्राणि बर्हिषा।
चितिं प्रदक्षिणं कृत्वा प्रणिपत्य क्षमापयेत्।
उपतिष्ठेद्दह्यमानं नमोऽस्तु सर्पमन्त्रतः ॥
ज्ञानतोऽज्ञानतो वाऽपि कृतः सर्पवधो मया।
पूर्वजन्मनि वा सर्प तत्सर्वं त्वं क्षमस्व मे ॥

इति संप्रार्थ्य नागेन्द्रं स्नात्वाऽऽगत्य पुनः पुनः ।
क्षीराज्येन ततश्चाग्निं प्रोक्ष्य व्याहृतिभिस्त्रिभिः ॥
हुते सर्पे जलेनाग्निमभिषिञ्चेत्ततः परम् ।
नास्थिसंचयनं कुर्यात्स्नात्वाऽऽचम्य गृहं व्रजेत् ॥
ब्रह्मचर्यादिकं कार्यं त्रिरात्राच्छुद्धिरिष्यते ।
चतुर्थेऽहनि संप्राप्ते सचैलं स्नानमाचरेत् ॥
घृतपायसभक्ष्यैश्च द्विजानष्टौ तु भोजयेत् ।
कर्ता नामपदैर्विप्रानर्चयेद्वक्ष्यमाणकैः ॥
सर्पोऽनन्तस्तथा शेषः कपिलो नाग एव च ।
कालिकः शङ्खपालश्च भूधरश्च प्रकीर्तितः ॥
पादप्रक्षालनं कुर्यादेभिर्नामपदैः पृथक् ।
गन्धपुष्पाक्षतैर्धूपदीपाद्यैरर्चयेद्द्विजान् ॥
एवं कृते विधाने वै सर्वसंस्कारकर्मणि ।
सर्पहिंसाकृतात्पापान्मुच्यते नात्र संशयः ॥
कुष्ठव्याध्यादिभिर्मुक्तः सर्वथा भेषजं त्विदम् ।
आयुरारोग्यमैश्वर्यं प्राप्य कामानवाप्नुयात् " इति ॥

अथ प्रयोगः ।

गुरुशुक्रास्तादिरहिते कालेऽयनद्वयेऽपि पौर्णमास्याममावास्यायां पञ्चम्या-माश्लेषायुक्तदिने वा कुर्यात् । तत्राधिकारार्थं चतुर्दशकृच्छ्रात्मकं प्रायश्चित्तं चरेत् । तस्य प्रयोगः—उक्तदिनात्पूर्वेद्युस्तदहरेव वा समस्तसंपदिति पर्षदं प्रदक्षिणीकृत्य नत्वा[1] निष्कत्रयं निष्कद्वयमेकं निष्कं वा पापतारतम्येन पर्षदग्रे निधाय, अनुमत्यादिकर्तृत्वे निष्कमर्धं तदर्धं वा शक्त्यनुसारेण निधायामुक-शर्मणा मयेह जन्मनि जन्मान्तरे वा ज्ञानादज्ञानाद्वा कृतेन सर्पवधेन जनि-तस्य दोषस्य परिहारार्थमनुग्रहं कृत्वा प्रायश्चित्तमुपदिशन्तु भवन्त इति प्रार्थ-येत् । ते चोपदिशाम इति प्रतिब्रूयुः ।

ततः कर्ता—" सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः ।
मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥
मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् ।

---

१ क. ख. 'त्वा तदग्रे निष्कं तदर्धं वा निधाया'।

प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥
पूज्यैः कृतः पवित्रोऽहं भवेयं द्विजसत्तमैः " ।

इति श्लोकान्पठित्वा मामनुगृह्णन्तु भवन्त इति पर्षदं प्रणमेत् ।

ततः कर्ता निबन्धपूजनं पर्षत्पूजनमनुवादकपूजनं च कुर्यात् । अनुवादकाय भृतिरूपां यथाशक्ति दक्षिणां दद्यात् ।

ततोऽनुवादकोऽमुकशर्मणा त्वयेह जन्मनि जन्मान्तरे वा ज्ञानादज्ञानाद्वा कृतेन सर्पवधेन जनितस्य[1] दोषस्य परिहारार्थं पर्षदुपदिष्ट[3]चतुर्दशकृच्छ्राचरणपू[4]र्वकयथाविधिसर्पसंस्कारं कृत्वा त्वं शुद्धो निरुपद्रवो भविष्यसीत्युपदेशवि[2]ः ।

ततः कर्ता, ओमित्यङ्गीकृत्य पर्षदं नमस्कृत्य विसर्जयेदनुवादकं च ।

तत आचम्य प्राणानायम्य देशकालौ संकीर्त्यामुकशर्मणा मयेह जन्मनि जन्मान्तरे वा ज्ञानादज्ञानाद्वा कृतेन सर्पवधेन जनितस्य[5] दोषस्य परिहारार्थं पर्षदुपदिष्ट[6]चतुर्दशकृच्छ्रात्मकं प्रायश्चित्तममुकप्रत्याम्नायद्वारा करिष्य इति संकल्प्य,

" यानि कानि च पापानि ब्रह्महत्यासमानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् " ॥

इति शिखाकक्षोपस्थवर्जं +केशश्मश्रुनखरोमाणि वापयित्वा,

" आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते " ॥

इति वनस्पतिं प्रार्थ्य तस्मात्प्रादेशमात्रं काष्ठं गृहीत्वा,—

" मुखदुर्गन्धिनाशाय दन्तानां च विशुद्धये ।
ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम् " ॥

इति तेन काष्ठेन दन्तान्संशोध्य द्वादश गण्डूषान्कृत्वा वक्ष्यमाणोत्सर्जनरीत्या भस्मगोमयमृत्तिकास्नानानि विधाय पञ्चगव्यैः कुशोदकेन च तत्तन्मन्त्रैः स्नानं कृत्वाऽऽपो हि ष्ठेति त्रिभिर्मन्त्रैः शुद्धोदकेन स्नात्वा वक्ष्यमाणस्नानविधिना स्नानं कुर्यात् ।

+ क. पुस्तकातिरिक्तपुस्तकेषु श्मश्रुशब्दो नास्ति । क. पुस्तकेऽपि स बहिर्लिखितो दृश्यते ।

• १ ग. °दकप्रभृति य° । २ ख. °स्य संततिप्रतिबन्धकीभूतस्य दो° । ३ क. °दिष्टं च° । ४ क. °र्वकं य° । ५ ख. °स्य संततिप्रतिबन्धकीभूतस्य दो° । ६ क. °दिष्टं च° ।

( * कर्ता जीवत्पित्रादिकश्चेत्तदा केशसंरक्षणार्थं पूर्वोक्तं प्रायश्चित्तं द्विगुणं कुर्यात् । तत्र क्रमः—प्रधानप्रायश्चित्तसंख्येन केशसंरक्षणार्थं प्रायश्चित्तेन सह चतुर्दशकृच्छ्रात्मकं प्रायश्चित्तमहं करिष्य इति संकल्प्य भस्मस्नानादि कुर्यादिति । )

ततो विष्णुपूजनविष्णुश्राद्धगोदानव्याहृतिहोमपञ्चगव्यहोमान्कुर्यात् । तत्र विष्णुपूजनमिदं विष्णुरितिमन्त्रेण विष्णुश्राद्धसिद्ध्यर्थं विप्रानाहूय संपूज्य तेभ्यश्चत्वार्यामान्नानि दद्यात् ।

विष्णुश्राद्धस्य मुख्यविधिस्तु श्राद्धप्रकरणे वक्ष्यते ।

जीवत्पितृकस्य तु न विष्णुश्राद्धमिति केचित् ।

ततो विप्रं गां च संपूज्य तस्मै यथाविभवकल्पितोपस्कारसहितां गां दद्यात् । गोरभावे तन्मूल्यं वा ।

ततो व्याहृतिहोमः—कर्ताऽऽचम्योल्लेखनादिसंस्कृत आयतने लौकिकमग्निं विण्नामानमग्निं प्रतिष्ठापयामीति प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा सर्पसंस्काराधिकारार्थप्रायश्चित्ताङ्गभूतहोमकर्मणि या यक्ष्यमाणा देवतास्ताः सर्वाः परिग्रहीष्यामि । प्रथमया व्याहृत्याऽग्निं सप्तभिराज्याहुतिभिः, द्वितीयया व्याहृत्या वायुं सप्तभिराज्याहुतिभिः, तृतीयया व्याहृत्या सूर्यं सप्तभिराज्याहुतिभिः, समस्तव्याहृतिभिः प्रजापतिं सप्तभिराज्याहुतिभिर्यक्ष्ये । पञ्चगव्यहोमे—अग्निमेकया पञ्चगव्याहुत्या सोममेकया पञ्चगव्याहुत्या विष्णुं तिसृभिः पञ्चगव्याहुतिभी रुद्रमेकया पञ्चगव्याहुत्या । अत्रोदकस्पर्शः । सवितारमेकया पञ्चगव्याहुत्या ब्रह्मैकया पञ्चगव्याहुत्या परमात्मानमग्निं वा प्रणवेन चतुर्थभागेन यावत्य आहुतयो भवन्ति तावतीभिराहुतिभिर्यक्ष्ये । एता देवताः सद्यो यक्ष्य इत्युक्त्वा समिधोऽग्नावाधायाग्निं परिस्तीर्योत्तरेणाग्निं दर्भान्संस्तीर्य तेषु दर्वीं सप्तपत्रात्मकान्हरितान्कुशानाज्यस्थालीं पञ्चगव्यार्थं ताम्रपात्रं प्रोक्षणीपात्रमुपवेषं संमार्गदर्भानवज्वलनदर्भान्बर्हिरेकां समिधमाज्यं पञ्च गव्यानीत्यासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य पात्राणि पञ्च गव्यानि च प्रोक्ष्य दर्वीं सप्तपत्रात्मकान्कुशांश्च संमृज्य तत्तन्मन्त्रैः पञ्च गव्यानि पवित्रान्तर्हिते ताम्रपात्र

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. ङ. च. पुस्तकेषु नास्ति ।

१. क. °रार्थ प्रा° । २ क. अग्निं प° । ३ क. सोमं प° ।

एकीकृत्य देवस्य त्वेति सप्तसंख्यैः कुशैरुदकं तस्मिन्स्रावयित्वाऽऽपो हि ष्ठेति त्रिभिर्मन्त्रैरालोडयेत्।

तत आज्यविलेपनादि। आज्यपर्यग्निकरणकाले पञ्चगव्यस्यापि पर्यग्निकरणम्। पवित्राभ्याधानान्तेऽग्नेः पश्चाद्बर्हिरास्तीर्य तत्राऽऽज्यस्थालीं पञ्चगव्यपात्रं च निधाय तदुत्तरतो दर्वीं सप्तपत्रात्मकान्कुशांश्च निधायादित इति परिषिच्य आसादितां समिधं तूष्णीमभ्याधाय दर्व्या सप्तवारमावृत्ताभिर्व्यस्ताभिः समस्ताभिश्च व्याहृतिभिराज्याहुतीर्जुहुयात्।

ततः सप्तपत्रात्मकान्कुशानादाय तैरुद्धृत्योद्धृत्य जुहोति। अग्नये स्वाहा सोमाय स्वाहेतिद्वयोर्वामदेवो विश्वे देवा वा ऋषिः। अग्निसोमौ क्रमेण देवता। यजुः। इरावतीत्यस्य सोमो विष्णुस्त्रिष्टुप्। इदं विष्णुरित्यस्य सोमो विष्णुर्गायत्री। विष्णोर्नुकमित्यस्य सोमो विष्णुस्त्रिष्टुप्। मा नस्तोक इत्यस्याग्निर्विश्वे देवा वा रुद्रस्त्रिष्टुप्। तत्सवितुरित्यस्या गायत्र्या विश्वामित्रोऽग्निर्ऋषिः सविता देवता गायत्री छन्दः। ब्रह्म जज्ञानमित्यस्याग्निर्ब्रह्म त्रिष्टुप्। प्रणवस्याग्निः परब्रह्मर्षिः परमात्माऽग्निर्वा देवता गायत्री छन्दः। सर्वेषां पञ्चगव्यहोमे विनियोगः—

'ॐ अग्नये स्वाहा' अग्नय इदं०। 'ॐ सोमाय स्वाहा' सोमायेदं०। 'ॐ इरावती० मयूखैः स्वाहा' विष्णव इदं०। 'ॐ विष्णोर्नुकं वीर्याणि० गाय स्वाहा' विष्णव इदं०। 'ॐ मा नस्तोके त० विधेम ते स्वाहा' रुद्रायेदं०। अप उपस्पृश्य। 'ॐ तत्सवितु० यात्स्वाहा' सवित्र इदं०। 'ॐ ब्रह्म जज्ञा० वः स्वाहा' ब्रह्मण इदं०। "ॐ स्वाहा" इति प्रणवेन यावतीभिराँहुतिभिश्चतुर्थभागहोमो भवति तावतीराहुतीस्तैः कुशैरेव जुहुयात्। परमात्मन इदं०। अग्नय इदमिति वा।

ततोऽवशिष्टं पञ्चगव्यं प्रणवेनाऽऽलोड्य प्रणवेनाभिमन्त्र्य व्रतग्रहणं करिष्य इति द्विजान्पृष्ट्वा कुरुष्वेति तैरनुज्ञात आसनाद्बहिरुपविश्य प्रणवेन सर्वं पिबेत्।

ततो *मुखहस्तपादान्प्रक्षाल्य द्विवारमाचम्याऽऽसन उपविश्य (+ततः स्विष्टकृदादिहोमशेषं समाप्य) पर्षदुपदिष्टचतुर्दशकृच्छ्रात्मकप्रायश्चित्तमाचरेत्।

---

* मध्यपदलोपिसमासेन साधुत्वम्। + धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तके बहिर्लिखितोऽस्ति तद्व्यतिरिक्तपुस्तकेषु तु नास्त्येव।

१ क. °भिर्व्याहृ°। २ च. °द्धृत्य। ३ क. °मित्र ऋषिः स°। ४ च. °ग्निर्ऋषिः स° ५ ग. चं. °ब्रह्मा त्रि°। ६ ग. °ह्म प°। ७ ग. °राज्याहु°। ८ ग. °राज्याहु°। ९ ग. ङ. च. °जान्स्पृष्ट्वा।

द्रव्यदानस्य प्रत्याम्नायत्वपक्षे कृच्छ्रसंख्याकगोनिष्क्रयद्रव्यमग्रे निधाय तत्संपूज्य विप्रान्संपूज्य पर्षदुपदिष्टचतुर्दशकृच्छ्रसंख्याकगोनिष्क्रयद्रव्यं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो युष्मभ्यं संप्रददे दातुमहमुत्सृज्य इति वा दद्यात् ।

ततः पूर्ववद्व्याहृतिहोमविष्णुपूजनविष्णुश्राद्धगोदानानि कुर्यात् । नात्र पञ्चगव्यहोमः ।

ततो गवे ग्रासं दत्त्वा शक्तौ सत्यां गोभूतिलहिरण्याज्यवस्त्रधान्यगुडरौप्यलवणात्मकानि दश दानानि सदक्षिणानि पूजनपूर्वकं विप्रेभ्यो दत्त्वा मया यत्कृतं प्रायश्चित्तं तदच्छिद्रमस्त्विति भवन्तो ब्रुवन्त्विति विप्रान्प्रार्थयेत् ।

ततस्तैरच्छिद्रमस्त्विति प्रयुक्ते कर्मसाद्गुण्याय विष्णुं संस्मरेत् ।

इह जन्मनि चेत्साक्षाद्वधे(धो) विप्राय लोहदण्डं दद्यात् । तस्य प्रयोगः । देशकालौ संकीर्त्य ममैतज्जन्मकृतसर्पवधजनितदोषपरिहारार्थमिमं लोहदण्डं निष्क्रयद्रव्यं वाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे न ममेति विप्रहस्ते जलसहितं दत्त्वा कृतस्य लोहदण्डदानस्य संपूर्णतासिद्ध्य इमां दक्षिणां संप्रदद इति दक्षिणां दत्त्वाऽनेन लोहदण्डदानेनानन्तः प्रीयतां न ममेति वदेत् ।

## अथ दशदानमन्त्राः ।

" गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च " इति गोः ॥
" सर्वसस्याश्रया भूमिर्वराहेण समुद्धृता ।
अनन्तसस्यफलदा मम शान्तिं प्रयच्छतु " इति भूमेः ॥
" तिलाः पापहरा नित्यं विष्णुदेहसमुद्भवाः ।
तिलदानेन सर्वं मे पापं नाशय केशव " इति तिलानाम् ॥
" हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छतु " इति हिरण्यस्य ॥
" कामधेनोः समुद्भूतं देवानामुत्तमं हविः ।
आयुर्विवर्धनकरमाज्यं पातु सदैव माम् " इत्याज्यस्य ॥
" शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् ।
सुवेषधारि वस्त्र त्वं सदा शान्तिं प्रयच्छ मे " इति वस्त्रस्य ॥

---

१ इ. च. °तृ । अस्मिञ्जन्म° ।

" धन्यं करोति दातारमिह लोके परत्र च ।
तस्मात्प्रदीयते धान्यमतः शान्तिं प्रयच्छ मे " **इति धान्यस्य ॥**
" प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥
मम तस्मात्परां शान्तिं ददस्व गुड सर्वदा " **इति गुडस्य ॥**
शिवनेत्रोद्भवं रूप्यं पितृणामतिवल्लभम् ।
मम तस्य प्रदानेन शान्तिरस्तु सदैव हि " **इति रौप्यस्य ॥**
" यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना ।
तस्मात्तस्य प्रदानेन शान्तिरस्तु सदा मम " **इति लवणस्य ॥**

**इति दानमन्त्राः ।**

" पयस्विनी सवत्सा गौर्दातव्योपस्करान्विता ।
निवर्तनोन्मिता भूमिस्तदर्धेनोन्मिताऽथवा ॥

**तदर्धेन निवर्तनार्धेन ।**

अथवा गृहपर्याप्ता प्रदातव्या सुलक्षणा ।
कृष्णा द्रोणत्रयमिता *अथवाऽऽढकसंमिताः ॥
प्रस्थद्वयमिता वाऽथ दाने देयास्तिलाः शुभाः ।
प्रदातव्यं निष्कमितं देयं निष्कार्धमेव वा ॥
तदर्धमथवा तस्याप्यर्धं देयं हिरण्यकम्[1] ।
सप्रस्थाढकमात्रं स्याद्घृतं प्रस्थमितं तु वा ॥
प्रादेशमात्रकलशद्वयमानं घृतं शुभम्[2] ।
एककुम्भमितं वाऽपि दाने देयं सुनिर्मलम्[3] ॥
वाससां त्रितयं दद्यादेकं वस्त्रमथापि वा ।
परिधानाय पर्याप्तमहतं सुदृढं मृदु[4] ॥
क्षौमं कार्पासमथवा वस्त्रं दाने प्रकीर्तितम् ।
तिलद्विगुणितं धान्यं गुडः प्रस्थत्रयोन्मितः ॥
प्रदेयं हेमवद्दाने स्वमानेनैव रौप्यकम्[5] ।
गुडवल्लवणोन्मानं द्रव्यमानं प्रकीर्तितम् " इति ॥

* अत्र " अथवा द्रोणसंमिताः " इति क. पुस्तके शोधितः पाठोऽस्ति ।

१ ग. ङ. च. धान्यं । २ ख. ङ. च. °म् । प्रा° । ३ ख. ङ. च. °म् । परि° । ४ ङ. नवम् । च. मधु । ५ क. रूप्यकम् ।

दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्तनम् । सुलक्षणोषरंवत्त्वादिदोषरहिता । "पलं च कुडवः प्रस्थः" इति वचनतो द्रोणाढकप्रस्थलक्षणं द्रष्टव्यम् । "चतुःसौवर्णिको निष्कः" इति निष्कलक्षणम् । स्वमानेन राजतमाषमानेन ।

इत्थं पूर्वं विधायोक्तदिने सर्पसंस्कारं कुर्यात् । कर्ता प्रातः कृतनित्यक्रियः संभृतसंभारः पुण्यतीर्थादिप्रशस्तदेशं गत्वा सपत्नीकः परिहितधौतवासाः प्राणानायम्य गुर्वाज्ञां लब्ध्वा मिश्रितैः प्रियंगुव्रीहिगोधूमतिलपिष्टैरेतदन्यतमपिष्टेन वा सर्पाकृतिं कृत्वा शूर्पे निधाय सर्पं प्रार्थयेत्—

"एहि पूर्वं मृतः सर्प अस्मिन्पिष्टे समाविश ।
संस्कारार्थमहं भक्त्या प्रार्थयामि समासतः" इति ॥

ततः—"ॐ भुजङ्गेशाय विद्महे सर्पराजाय धीमहि ।
तन्नो नागः प्रचोदयात्" ॥

इति भुजंगगायत्र्याऽऽवाहनादिषोडशोपचारैः पूजां कृत्वा पुष्पाञ्जलिं दत्त्वा प्रणिपत्य भोः सर्पेमं बलिं गृहाण ममाभ्युदयं कुर्विति बलिं समर्प्य हस्तौ पादौ प्रक्षाल्याऽऽचामेत् ।

ततः प्राणानायम्य संकल्पं कुर्यात्[1] । मयेह जन्मनि जन्मान्तरे वा ज्ञानादज्ञानाद्वा कृतेन सर्पवधेन जनितस्य दोषस्य परिहारार्थं सर्पसंस्कारकर्म करिष्य इति संकल्प्योल्लेखनादिना संस्कृते देशे लौकिकाग्निं प्रतिष्ठाप्य प्रज्वाल्य समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा सर्पसंस्कारहोमकर्मणि या यक्ष्यमाणा इत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा प्रधानहोमे—अग्नावग्निं वायुं सूर्यं चैकैकयाऽऽज्याहुत्या यक्ष्ये, सर्पमुखे समस्तव्याहृतिभिः प्रजापतिमेकयाऽऽज्याहुत्या यक्ष्य इत्युक्त्वा समिधोऽग्नावाधायाग्नेराग्नेय्यां दिशि भूमिं जलेन प्रोक्ष्य तत्र चितिं कृत्वाऽग्निं चितिं च तूष्णीं परिषिच्याऽऽग्नेय्यग्रकैर्दर्भैः[2] पिण्डपितृयज्ञवत्परिस्तीर्याग्नेरुत्तरतो दर्भानास्तीर्य तत्र पात्राण्यासादयेत् । दर्वीमाज्यस्थालीं[3] प्रोक्षणीपात्रमुपवेषमिध्मं बर्हिः संमार्गदर्भानवज्वलनदर्भानाज्यमित्यासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य दर्वीं संमृज्याऽऽज्यं संस्कृत्य परिधीन्परिधायादित इति परिषिच्येध्मं मन्त्रेणाभ्याधायाऽऽघाराद्यन्वाधानोत्कीर्तनानुसारेण प्रसाधनीदेवीहोमान्तं व्याहृतिहोमान्तं वा कुर्यात् ।

---

१ च. °ल्य ध्यात्वा स° । २ ङ. च. °षिच्य दक्षिणाप्रागग्रैर्दर्भैः परिस्तीर्य । ३ ग. °लीं प्रणीतानां प्रो° ।

ततः सर्पं गृहीत्वा चितावारोप्यापः स्पृष्ट्वा श्रोत्रे स्पृष्ट्वाऽप उपस्पृश्याग्निसमीपमेत्य प्रधानहोमं कुर्यात्। 'ॐ भूः स्वाहा' अग्नय इदं०। 'ॐ भुवः स्वाहा' वायव इदं न मम। 'ॐ सुवः स्वाहा' सूर्यायेदं न मम। इति दर्व्याऽग्नौ व्याहृतिभिराज्येनाऽऽहुतित्रयं जुहुयात्। 'ॐ भूर्भुवः सुवः स्वाहा' इति चतुर्थीं सर्पमुखे जुहुयात्। प्रजापतय इदं०। ऋष्यादिस्मरणं पूर्ववत्। व्यस्तानां व्याहृतीनां होमे विनियोगः, समस्तव्याहृतीनां सर्पमुख आज्यहोमे विनियोग इति विनियोगवाक्ये। न च वर्ष्यादयः। आज्यशेषं दर्व्यैव सर्पदेहे निषेचयेत्। ततः समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती। अभ्युक्षणे विनियोगः। न वर्ष्यादयः। हस्तगृहीतैश्चमसजलैः समस्तव्याहृतिभिः पाणिनाऽभ्युक्ष्याग्ने रक्षाण इत्यस्य विश्वे देवा रक्षोहाऽग्निर्गायत्री। चितावग्निप्रक्षेपे विनियोगः—'ॐ अग्ने रक्षाणो० रोदह' इत्यायतनस्थमग्निं सर्वं चितौ प्रक्षिपेत्। न वर्ष्यादयः।

ततो दर्वीं परिधीन्पात्राणि बर्हिश्चाग्नौ प्रहृत्य तमग्निं प्रदक्षिणीकृत्य सर्पं नमस्कृत्य सर्पं क्षमस्वेति क्षमाप्यो(पयित्वो)पस्थानं कुर्यात्। नमो अस्तु सर्पेभ्य इति मन्त्रत्रयस्याग्निः सर्पा गायत्री। सर्पोपस्थाने विनियोगः। नमो अस्तु सर्पेभ्यो० इति त्रिभिर्मन्त्रैरुपतिष्ठते। न वर्ष्यादयः।

"ज्ञानतोऽज्ञानतो वाऽपि कृतः सर्पवधो मया।
पूर्वजन्मनि वा सर्प तत्सर्वं त्वं क्षमस्व मे" इति प्रार्थयेत्॥

ततः पौराणमन्त्रैः प्रार्थयेत्। ते चेत्थम्—

"कर्कोटक नमस्तेऽस्तु शङ्खपाल नमोऽस्तु ते।
नागराज महादेव तव रूपाणि ते नमः॥
अफणाः फणिनो ये च सविषा निर्विषाश्च ये।
सर्वे सर्पा वैटेशयाः पुण्यमूर्ते नमोऽस्तु ते॥
त्वयेयं जगती स्वामिन्स्वफणामण्डलोपरि।
धृतैकदेशे ह्यणुवत्तस्मै तुभ्यं नमोऽस्तु ते॥
त्वया भगवते श्रीमद्वासुदेवाय निर्विषम्।
स्वभोगेनैव पर्यङ्कमायस्तं भोगिनां वर॥

---

१ ग. °होमान्तं कु°। २ ख. °क्ये विशेषः। ऋष्यादयो न वा। आ°। ङ. च. °क्ये। आ°। ३ कं. ततोऽस°। ४ ख. °गः। ऋष्यादयो न वा। ह°। ङ. च. °गः। ह°। ५ ङ. च. °त्। त°। ६ ख. °ते। ऋष्यादयो न वा। ज्ञा°। ङ. च. °ते। ज्ञा°। ७ ख. °वटश°। ८ ङ. च. पुण्यमू°।

त्राहि त्राहि महाभोगिन्सर्वोपद्रवदुःखतः ।
संततिं देहि मे पुण्यां निर्दुष्टां दीर्घदेहिनीम् ॥
प्रपन्नं पाहि मां भक्त्या कृपालो दीनवत्सल ।
ज्ञानतोऽज्ञानतो वाऽपि कृतः सर्पवधो मया ॥
जन्मान्तरेऽथवैतस्मिन्मत्पूर्वैरथवा विभो ।
तत्पापं नाशय क्षिप्रमपराधं क्षमस्व मे " । इति संप्रार्थयेत् * ।

अफणाः सर्पा ये च फणिनो ये च सविषा निर्विषाश्च वटेशयाश्च ये सर्वे सर्पा नागराज तव रूपाणि ते तुभ्यं नम इत्यर्थः ।

ततः सचैलं स्नानं कृत्वाऽग्निसमीपमागत्य समस्तव्याहृतीनां प्रजापतिः प्रजापतिर्बृहती । चित्यग्निप्रोक्षणे विनियोगः । न वष्यादयः । भूर्भुवः सुवरिति क्षीराज्येन तमग्निं प्रोक्ष्य सर्पे हुते जलेन तमुपशमयित्वा(य्य) जले प्रवाहयेत् । नास्थिसंचयनम् ।

ततः स्नात्वाऽऽचम्य गृहं व्रजेत् । त्रिरात्रमाशौचं ब्रह्मचर्यादिकं च । बौधायनमते त्वेकाहमाशौचमिति ग्रन्थकृतः । अत्र कर्तुरेवाऽऽशौचम् ।

" आशौचं पिण्डदः कुर्यान्नतु तद्बन्धुगोत्रजाः " इतिवचनात् ।

अस्मिन्कर्मणि न प्राचीनावीतम् ।

" चतुर्थेऽहनि संप्राप्ते सचैलं स्नानमाचरेत् ।
घृतपायसभक्ष्यैस्तु द्विजानष्टौ तु भोजयेत् ॥
कर्ता नामपदैर्विप्रान्पूजयेत्सुसमाहितः " इति ।

चतुर्थेऽहनीत्युपलक्षणम् । एकाहाशौचपक्षे द्वितीये भवेदित्यर्थः ।

अपरेद्युः प्रातः सचैलं स्नातः कृतनित्यक्रियः सुस्नातानष्टौ ब्राह्मणानाहूय सर्पस्थाने क्षणः क्रियताम् । ॐ तथा प्राप्नोतु भवान्प्राप्नवानीति । एवमग्रेऽपि । अनन्तस्थाने० शेषस्थाने० कपिलस्थाने० नागस्थाने० कालिकस्थाने० शङ्खपालस्थाने० भूधरस्थाने० इति क्षणं दत्त्वा चतुरश्रमण्डलोपरि गन्धाक्षतयुतजलैर्नैतैरेव नामभिः पाद्यं दद्यात् । सर्प इदं पाद्यमित्यादि ।

ततस्तेष्वाचान्तेषु स्वयमाचम्य यथाक्रमं प्राङ्मुखानुदक्संस्थानुपवेश्य

---

* संप्रार्थयेदित्यधिकम् ।

---

१ ख. ग. ङ. च. °दुःखितः । २ ङ. च. °गः । भू° ।

भूर्भुवः सुवः सर्प इदमासनमास्यतामित्यादि, सर्वत्र दर्भद्वयरूपमेवाऽऽसनं दत्त्वा दर्भद्वयान्तर्हितेष्वष्टसु पात्रेष्वप आसिच्य गायत्र्या युगपदभिमन्त्र्य तूष्णीं यवान्गन्धं पुष्पं च प्रक्षिप्य स्वाहाऽर्घ्या इति निवेद्य सर्पेदं तेऽर्घ्यमित्यर्घ्योदकं देवतीर्थेन दद्यात्। एवमनन्तेदं तेऽर्घ्यमित्यादि । सर्पैष ते गन्धोऽनन्तैष ते गन्ध इत्यादि । सर्पेमानि पुष्पाणीत्यादि। सर्पैष धूप इत्यादि। सर्पैष दीप इत्यादि। सर्पेदं वस्त्रमित्यादि।

ततः पात्रेष्वन्नादि परिविष्य परिवेष्य वा गायत्र्या प्रोक्ष्य कुशयवजलं[2] गृहीत्वा सर्पायेदमन्नं परिविष्टं परिवेक्ष्यमाणं चाऽऽतृप्तेर्दास्यमानं स्वाहा संपद्यतां न मम । एवमनन्तादिभ्यः। ब्रह्मार्पणं० येषामन्नमुदिष्टं तेषामक्षय्या तृप्तिरस्तु। अनेन ब्राह्मणभोजनेन सर्पादयः प्रीयन्तां न मम। इति सकुशयवजलमुत्सृजेत्। ततो ब्राह्मणा भुञ्जीरन्। नात्र बलिदाननिषेधः।

ततः कर्ताऽऽचान्तेषु विप्रेषु प्रागग्रान्दर्भान्संस्तीर्य तेषु दुग्धमिश्रौदनेन सर्पायेमं बलिं समर्पयामि, अनन्तायेमं बलिमित्यादि। ततो बलीन्गन्धपुष्पवस्त्रादिभिः पूजयेत्।

ततो ब्राह्मणेभ्यस्ताम्बूलसुवर्णादिदक्षिणादानम्।

ततस्तान्क्षमाप्य(पयित्वा) प्रणम्यानुव्रज्याप्रतीक्षमेत्य[3] सुवर्णनागदानं कुर्यात्।

"इति सर्पस्य संस्कारं कृत्वा नागबलिं ततः।
दत्त्वा स्वर्णमयं नागमपराधात्प्रमुच्यते" इतिवचनात्।

आचार्यं संपूज्य स्वर्णनागमावाहनादिषोडशोपचारैः संपूज्य प्रार्थयेत्।

तत्र मन्त्राः—"ब्रह्मलोके च ये सर्पाः शेषनागपुरोगमाः। नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा ॥ १ ॥ विष्णुलोके च ये सर्पा वासुकिप्रमुखाश्च ये। नमोऽस्तु तेभ्यः सु० ॥ २ ॥ रुद्रलोके च ये सर्पास्तक्षकप्रमुखास्तथा। नमोऽस्तु तेभ्यः सु० ॥ ३ ॥ खाण्डवस्य तथा दाहे स्वर्गं ये च समाश्रिताः। नमोऽस्तु तेभ्यः सु० ॥ ४ ॥ सर्पसत्रे च ये सर्पा आस्तीकेन च रक्षिताः। नमोऽस्तु तेभ्यः सु० ॥ ५ ॥ मलये चैव ये सर्पाः कर्कोटप्रमुखाश्च ये। नमोऽस्तु तेभ्यः सु० ॥ ६ ॥ धर्मलोके च ये सर्पा वैतरण्यां समाहिताः। नमोऽस्तु तेभ्यः सु० ॥ ७ ॥ समुद्रे चैव ये सर्पाः पाताले चैव संस्थिताः।

१ ख. ग. च. 'वः स'। २ ख. ङ. च. संपद्यन्तां। ३ ग. 'क्षमेत्य।

नमोऽस्तु तेभ्यः सु० ॥ ८ ॥ ये सर्पाः पर्वताग्रेषु दरीसंधिषु संस्थिताः। नमोऽस्तु तेभ्यः सु० ॥ ९ ॥ ग्रामे वा यदि वाऽरण्ये ये सर्पाः प्रचरन्ति हि। नमोऽस्तु तेभ्यः सु० ॥ १० ॥ पृथिव्यां चैव ये सर्पा ये सर्पा बलिसंस्थिताः। नमोऽस्तु तेभ्यः सु० ॥ ११ ॥ रसातले च ये सर्पा अनन्ताद्या महाविषाः। नमोऽस्तु तेभ्यः सु० ॥ १२ ॥ एवं स्तुत्वा तु नागेन्द्रमाचार्याय निवेदयेत्" । [ इति । ]

देशकालौ संकीर्त्य कृतस्य सर्पसंस्कारकर्मणः साङ्गतासिद्ध्यर्थमिमं सुवर्णमयं नागं सकलशं सवस्त्रं सदक्षिणं तुभ्यमहं संप्रददे न मम, इति दत्त्वाऽनेन सुवर्णनागदानेनानन्तादयो नागाः प्रीयन्तामिति वदेत्।

तत आचार्याय गोदानं देयम् । गामाचार्यं च संपूज्येमां सवत्सां कृष्णां गां सुवर्णशृङ्गीं रौप्यखुरीं ताम्रपृष्ठीं(ष्ठां) कांस्यदोहां सवस्त्रां सदक्षिणां वृषभयुतां तुभ्यमहं संप्रदद इत्याचार्याय दद्यात्। अनेनानन्तादयः प्रीयन्तामिति वदेत्। गोरभावे मूल्यं देयम्। तत आचार्यः शुद्धोदकेन सकुटुम्बं यजमानमभिषिञ्चेत्।

ततः कर्ता मया यत्कृतं कर्म तत्सर्वमच्छिद्रमस्त्विति भवन्तो ब्रुवन्त्विति प्रार्थ्याच्छिद्रमस्त्विति तैः प्रत्युक्ते कृतस्य कर्मणः साङ्गतासिद्धये ब्राह्मणभोजनं भूयसीदानं च विधाय, यस्य स्मृत्या० । प्रमादात्कु० इति विष्णुं संस्मृत्य, अनेन सर्पसंस्काराख्येन(ण) कर्मणा सर्पाधिनाथोऽनन्तः प्रीयतामिति वदेत्।

ततः सुहृद्युतो भोजनं कुर्यात्।

जीवत्पितृकस्य नारायणबलिनागबली न भवतः।

इति नागबलिप्रयोगः।

एवमपि फलासिद्धौ महार्णवोक्तो विधिः कार्यः।

स च वायुपुराणे—

" चतुर्विधा च या वन्ध्या भवेद्वत्सवियोजनात्।
अनपत्या भवेद्वन्ध्या मृतवत्साऽपरा स्मृता ॥
स्रवद्गर्भा तथैवान्या काकवन्ध्याऽपरा भवेत्।
वक्ष्ये तस्याः प्रतीकारं तत्स्वरूपं निबोधय ॥
हिरण्येन यथाशक्ति सवत्सां कारयेद्दृढाम्।
धेनुं पलेन वत्सं च पादेन गुरुरब्रवीत् ॥

१ क. ख. 'तू। इ'।

**हिरण्येन यथाशक्तीति।** " पलेन वा तदर्धेन तदर्धेनापि वा पुनः " ॥
**इति परिभाषोक्तप्रकारेण कुर्यादित्यर्थः । धेनुं पलेन वत्सं च पादेनेति मुख्यकल्पप्रदर्शनार्थम् ।**

धेनुं रौप्यखुरां रत्नं तस्याः पुच्छे नियोजयेत् ।
घण्टां गले निबध्नीयात्सवत्सां प्राङ्मुखः सुधीः ॥
चन्दनागरुकर्पूरगन्धमाल्यैः सुशोभनैः ।
उपचारैः षोडशभिर्नैवेद्यं पायसं भवेत् ॥
मोदकांश्च तथाऽपूपान्गुडं लवणमेव च ।
जीरकं च सुविस्तीर्णे शूर्पे वेणुमये दृढे ॥
धेनोरेकं प्रदातव्यं ब्राह्मणस्त्रीषु चैव हि ।
षडष्टौ दश वा दद्यात्तदनन्तरमेव च ॥

**उपचारैः षोडशभिरित्यत्र पूजयेदिति शेषः। मोदकादिभिः परिपूरितमेकं शूर्पं धेनोः पुरतः स्थापयित्वोक्तद्रव्यपरिपूरितानि शूर्पाणि दशाष्टौ षड्वा सभर्तृकाभ्यो ब्राह्मणीभ्यो दद्यादित्यर्थ इति महार्णवः ।**

ब्राह्मणं सर्वशास्त्रार्थकुशलं सर्ववेदिनम् ।
विद्याविनयसंपन्नं शान्तं चैव जितेन्द्रियम् ॥
अलोलुपं सर्वजनप्रियं कल्मषवर्जितम् ।
आहूय भक्त्या संपूज्य वस्त्राद्यैर्गन्धपुष्पकैः ॥
तेनैव कारयेत्पूजामादितो धेनुवत्सयोः ।
होमं च कारयेत्तत्र समिदाज्यचरूत्कटम् ॥
सोमो धेनुमिति मन्त्रं समुच्चार्य ततः पुनः ।

**पूजायामप्ययमेव मन्त्रः। अत्र संयोगपृथक्त्वन्यायेन धेनुरपि देवतेति महार्णवः । अत्र समिदादिभिः प्रत्येकमष्टोत्तरसहस्रहोमं कुर्यात्, उत्कटं कारयेदित्यभिधानादित्यपि सः ।**

प्राङ्मुखायोपविष्टाय प्रदद्यात्तामुदङ्मुखः ।
मन्त्रेण तस्य विधिवत्पुच्छं हस्ते निधाय च ॥
धेनुर्याऽङ्गिरसां सत्रे प्रविष्टा सुरभेश्च या ।
दुहिता या मया भानोरग्नेश्च वरुणस्य च ॥
या वै गावः प्रवर्तन्ते वनेषूपवनेषु च ।
प्रीणन्तु तामनुगृह्य पुत्रपौत्रप्रदाः सुखम् ॥

प्रयच्छन्तु दिवारात्रमविच्छेदं तथाऽन्वये ।
एवं दत्त्वा तु तद्दानं प्रणिपत्य विसर्जयेत् " इति ॥

इति वन्ध्यात्वहरं सुवर्णधेनुदानम् ।

उपायान्तरमपि—

" निक्षेपाहरणाच्चैवानपत्यस्तु प्रजायते " इत्युपक्रम्य—

" अरुण उवाच—वृथा गृहं धनं धान्यमपुत्रं जन्म निष्फलम् ।
ममोपरि दयां कृत्वा प्रायश्चित्तं वदस्व मे ॥

सूर्य उवाच—तीर्थयात्र प्रकर्तव्या रेवातापीसमुद्भवा ।
एकेनापि तु वस्त्रेण दंपतीस्नानमुत्तमम् ॥
श्रवणं हरिवंशस्य ब्राह्मणोद्वाहनं खग ।
अष्टोत्तरशतं विप्रान्मिष्टान्नेन तु तर्पयेत् ॥
ईशावास्येतिमन्त्रेण जपं कुर्यात्सहस्रकम् ।
दशांशहोमसहितं कुर्याच्च विधिवत्ततः ॥
पद्मैस्तु लक्षसंख्याकैः शिवं संपूज्य यत्नतः ॥

कलौ पार्थिवलिङ्गपूजनस्य महापुण्यजनकत्वात्तद्रूपस्य शिवस्य पद्मपूजनमतीव प्रशस्तम् ।

स्वर्णधेनुः प्रदातव्या सवत्सा सुरभिस्तथा ।
घृतकुम्भं वैनतेय ब्राह्मणाय निवेदयेत् ॥
एवं कृते वैनतेय अपत्यं जायते कलौ " इति ॥

## अथ हरिवंशश्रवणविधिः ।

कर्ता ज्योतिर्विदादिष्टे मुहूर्ते विनायकशान्तिं विनायकपूजां वा स्वशक्त्यनुसारेण विधायोदगयने दक्षिणायने वा वैशाखकार्तिकाद्यन्यतमे शुभे मासे ज्योतिर्विदादिष्टे[1] शुभे मुहूर्ते आरम्भात्पूर्वं यथाशक्ति गोहिरण्यदानतीर्थयात्राद्यन्यतमप्रत्याम्नायद्वारा प्रायश्चित्तं विधाय देशकालौ संकीर्त्य पूर्वजन्मोपार्जितपापजन्यानपत्यत्वदोषपरिहारपूर्वकनीरोगदीर्घायुरक्षय्यसुगुणपुत्रप्राप्तिकामावावां दंपती हरिवंशं श्रोष्याव इति संकल्पं कुर्यात् । अनया पत्न्या सह हरिवंशं श्रोष्य इत्येवं वा संकल्पः ।

यदि त्वेकस्या भार्यायाः पुत्रोऽस्ति, एकस्या नास्ति, तदा ममैतस्याः

---

१ क. 'ष्टे मु' ।

पत्न्या दीर्घायुर्नीरोगाक्षय्यसुगुणपुत्रप्राप्तयेऽनया पत्न्या सह हरिवंशं श्रोष्य इति संकल्पः कार्यः।

ततो गणेशपूजनपुण्याहादिवाचने कृत्वा हिरण्यताम्बूलपूगीफलसहितकरोऽमुकगोत्रममुकशर्माणं त्वां हरिवंशश्रावयितृत्वेन वृण इति वृत्वा वृतोऽस्मीति तेनोक्ते चरणक्षालनार्घ्यवस्त्रद्वयोपवीतद्वयमुद्रिकाकुण्डलाद्याभरणचन्दनाक्षतपुष्पादिभिस्तमभ्यर्च्य तद्दक्षिणकरमूले बृहत्सामेति रक्षाबन्धनं कुर्यात्।

ततः श्रावयित्रैवमेव दंपतीहस्तयो रक्षाबन्धनं कार्यम्। स्त्रियास्तु वामहस्ते रक्षाबन्धनम्।

ततः प्रतिदिनं त्रायन्तामित्याद्यैरापो हि ष्ठादिभिश्च वैदिकैर्मन्त्रैः सुरास्त्वेत्याद्यैः पौराणमन्त्रैश्च सुस्नातौ स्वलंकृतौ दंपती आचम्य,—

" नमस्ते भगवन्व्यास सर्वशास्त्रार्थकोविद।
ब्रह्मविष्णुमहेशानां मूर्ते सत्यवतीसुत " ॥

इति व्यासं नमस्कृत्य शुचौ देश आसनयोः प्राङ्मुखावुपविश्य परमेश्वरं ध्यायन्तौ तदेकचित्तौ ब्रह्मचर्यादिनियमपूर्वकं शृणुयाताम्। वाचकोऽपि नियमपूर्वकं प्रतिदिनं नारायणं नमस्कृत्येत्यादिमङ्गलश्लोकान्पठित्वा—नारायणाय नमः, नरोत्तमाय नमः, सरस्वत्यै देव्यै नमः, व्यासाय नमः, गणपतये नमः, ब्रह्मणे नमः, विष्णवे नमः, शिवाय नमः, गुरुभ्यो नम इति नमस्कृत्य वाचयेत्। दंपती प्रतिदिनं वाचकं पुस्तकं च पूजयेताम्। ग्रन्थसमाप्तौ वाचकाय सुवर्णं क्षौमं वस्त्रं गोदानोक्तविधिना स्वलंकृतां सोपस्करां सवस्त्रां सवत्सां पयस्विनीं गां च दद्यात्।

ततः श्रोता विष्णुगायत्र्याऽष्टोत्तरसहस्रं घृताक्ततिलहोमं कुर्यात्।

तस्य प्रयोगः।

आचम्य प्राणानायम्याग्न्यायतनोल्लेपनाद्यग्निप्रतिष्ठापनान्तं[1] कुर्यात्। अत्र बलवर्धननामाऽग्निः। ततोऽन्वाधानम्। समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा हरिवंशश्रवणाङ्गभूतहोमकर्मणि या यक्ष्यमाणा इत्यादि व्याहृत्यन्तं प्रसाधनीदेव्यन्तं चोक्त्वा, प्रधानहोमे विष्णुं नारायणाय[2] विद्महे इति विष्णुगायत्र्याऽष्टोत्तरसहस्रसंख्याभिर्घृताक्ततिलाहुतिभिर्यक्ष्य इत्युक्त्वा, अङ्गहोमे वरुणं द्वाभ्यामाज्याहुतिभ्यामित्यादि, अग्निं स्विष्टकृतं हुतशेषघृता-

१ ग. च. °ल्लेखना°। २ ङ. च. °कृतमेकया हु°।

क्ततिलाहुत्या यक्ष्य इत्यादि वा। पात्रासादन आज्येन सह तिलानामप्यासादनम्। आज्यपर्यग्निकरणकाले घृताक्ततिलानामपि पर्यग्निकरणम्।

तत आज्योद्वासनादि व्याहृतिहोमान्तं प्रसाधनीदेवीहोमान्तं वाऽन्वाधानोत्कीर्तनानुसारेण कृत्वा प्रधानहोमं कुर्यात्। नारायणायेत्यस्या विष्णुगायत्र्या याज्ञिक्यो देवता उपनिषदो विष्णुरनुष्टुप्, होमे विनियोगः, इत्यृष्यादि स्मृत्वोक्तसंख्यया घृताक्तैस्तिलैर्होमः कार्यः।

ततोऽन्वाधानोत्कीर्तनानुसारेणाङ्गहोमादि स्विष्टकृदादि वा सर्वं होमशेषं समापयेत्।

तत एकं मिथुनं श्रावयितारं च भोजयित्वा न्यूनं संपूर्णमस्त्विति श्रावयितारं वदेत्। तथाऽस्त्विति श्रावयिता। ततो दंपती रक्षाबन्धनं विस्रस्य दुग्धाक्तं कृत्वा शुद्धोदके निक्षिपेताम्। श्रावयिताऽपि रक्षाबन्धनं विस्रस्य दुग्धाक्तं कृत्वा शुद्धोदके निक्षिपेत्।

ततः श्रावयितृसुहृद्युतौ दंपती भुञ्जीयाताम्। ततः सर्वे यथार्थं गच्छेयुः।

इति हरिवंशश्रवणविधिः।

## अथ संक्षेपेण पार्थिवलिङ्गपूजनविधिः।

तत्र तिथितत्त्वे भविष्यपुराणे—

"मृद्भस्मगोशकृत्पिण्डताम्रकांस्यमयं तथा।
कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतं दिवि" इति॥

नन्दिपुराणे—"आयुष्मान्बलवाञ्श्रीमान्पुत्रवान्धनवान्सुखी।
वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समर्चयेत्॥
तस्मात्तु पार्थिवं ज्ञेयं लिङ्गं सर्वार्थसाधकम्" इति।

शिवधर्मे—"वालुकानि च लिङ्गानि कारयेत्पार्थिवानि च।
सहस्रपूजनात्सोऽपि लभते वाञ्छितं फलम्" इति॥

तत्रैव कालकौमुद्याम्—

"अक्षादल्पप्रमाणं तु न लिङ्गं कुत्रचिन्नरः।
कुर्वीताङ्गुष्ठतो ह्रस्वं न कदाचित्समाचरेत्" इति॥

अक्षोऽशीतिरक्तिकाः। "ते षोडशाक्षः" इत्यमरात्। अङ्गुष्ठशब्देनाङ्गुष्ठबृहत्पर्वग्रन्थिरुच्यते।

"अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते।
तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात्सदा" इति च्छन्दोगपरिशिष्टात्।

अङ्गुष्ठमानमङ्गुलिमानं चेत्यर्थः।

तत्रैव गौतमः—"रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि।
शिवार्चनं सदाऽप्येवं शुचिः कुर्यादुदङ्मुखः" इति॥

सदा दिवा रात्रौ चेत्यर्थः।

तत्रैव लैङ्गे—"विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया।
पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः॥
तस्मान्मृदाऽपि कर्तव्यं ललाटे वै त्रिपुण्ड्रकम्" इति॥

ॐ हुं नम इति रुद्राक्षान्प्रत्येकमभिमन्त्र्य मालां धारयेदित्यप्युक्तं तत्रैव।

तत्राधिकारार्थं तत्रैव पञ्चाक्षरमन्त्र उक्तः—

"अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।
महापातकयुक्तो वा मन्त्रस्यास्य जपे सदा॥
अधिकारी भवेत्सर्व इति देवोऽब्रवीच्छिवः" इति॥

मृद्ग्रहणविधिः शिवपुराणे—

("* शुचिदेशसमुद्भूतां मृदमाहारयेत्ततः।
+ श्रीअष्टमूर्तये नमः—इत्येतेन च मन्त्रेण मृदमादाय यत्नतः।
संशोध्य मृत्तिकां तत्र स्थापयेद्विधिवत्पुमान्।
अथवा कृष्णपक्षस्य चतुर्दश्यां समानयेत्॥
पुनश्च मासमात्रेण ह्याहरेत्तावदेव हि" इति।)

पूजाविधिर्देवीपुराणे—

"मृदाहरणसंघट्टप्रतिष्ठाह्वानमेव च।
स्नपनं पूजनं चैव विसर्जनमतः परम्॥
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक्।
पशुपतिः शिवश्चैव महादेव इति क्रमात्" इति॥

नामक्रमेणानन्तरोक्तानि कर्माणि कार्याणित्यर्थः।

* धनुश्चिह्नान्तर्गतो ग्रन्थो ङ. च. पुस्तकयोः। + संधिर्युक्तः। आर्षो वाऽसंधिः।

१ ङ. च. ति। हूं।

यद्यप्यत्र नामान्येव विनियुक्तानि तथाऽपि—

" ध्यात्वा प्रणवपूर्वं तु ततस्तस्मात्समाहितः ।
नमस्कारेण पुष्पादि विन्यसेच्च पृथक्पृथक् " ॥

इति सामान्यवाक्यान्नमोन्तता ज्ञेया ।

नन्दिपुराणे—" गोभूहिरण्यवस्त्रादिबलिपुष्पनिवेदने ।
ज्ञेयो नमः शिवायेति मन्त्रः सर्वार्थसाधकः ॥
सर्वमन्त्राधिकश्चायमोंकाराद्यः षडक्षरः " इति ।

वस्त्रादीत्यादिपदेनेतरोपचारग्रहणम् ।

विसर्जनात्पूर्वं वामावर्तेनाष्टमूर्तिपूजोक्ता भविष्ये—

" पूज्या अष्टौ हरस्यैताः पूर्वादिक्रमयोगतः ।
आग्नेय्यन्ताः प्रपूज्यास्तु वेद्यां लिङ्गे शिवं यजेत् " इति ॥

एता वेद्यां, लिङ्गे शिवं यजेदित्यर्थः ।

अत्र प्रसिद्धैव प्राची । " न प्राचीमग्रतः शंभोः " इति रुद्रयामले निषेधात् ।

(*ततो जपं कुर्यात् । स चोक्तः शिवपुराणे—

" यथाशक्ति जपं कृत्वा तर्पणं तद्दशांशकम् ।
मार्जनं च दशांशं च कुर्याच्छिवहितेच्छया " इति ॥

तर्पणमार्जनयोरसंभवे चतुर्गुणो द्विगुणो वा जप इति सामान्यतः) ।

लैङ्गे—" लिङ्गद्वयं प्रतिदिनं मल्लिकाभिः प्रपूजयेत् ।
अर्पयेद्गुडनैवेद्यमेवं संवत्सरं सुधीः ॥
लिङ्गस्य पूजनं कुर्यात्पुत्र उत्पद्यते शुभः " इति ॥

## अथैतत्पूजाप्रकारः ।

देशकालौ संकीर्त्य श्रीसाम्बसदाशिवप्रीत्यर्थं पार्थिवलिङ्गद्वयपूजनमहं करिष्य इति संकल्प्य पूजासामग्रीं स्वसमीपे निधाय विभूतिरुद्राक्षधारणं कृत्वाऽऽसनविध्यादि विधाय, नमः शिवायेति पञ्चाक्षरेण, ॐ नमः शिवायेति षडक्षरेण वा करषडङ्गन्यासान्कृत्वा,[1]

" सर्वाधारे धरे देवि त्वद्रूपां मृत्तिकामिमाम् ।
लिङ्गार्थं वै प्रगृह्णामि शोभना भव सर्वदा " ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. च. पुस्तकयोः

१ क. °न्यासौ कृत्वा

इति भूमिं प्रार्थ्य, '(*ॐ हराय नम इति शोधितां शुद्धदेशस्थां मृदं ततो गृहीत्वा) जलं निक्षिप्य, ॐ महेश्वराय नम इति घट्टयित्वा मूलेन लिङ्गं कृत्वा झटिति तन्मस्तकेऽक्षतान्निधाय, ॐ शूलपाणये नम इति प्रतिष्ठाप्य प्राणप्रतिष्ठां विधाय ध्यायेन्नित्यं महेशमिति शारदोक्तरीत्या शिवं ध्यात्वा, ॐ पिनाकधृषे नमः श्रीसाम्बसदाशिवेहाऽऽगच्छेह संनिहितो भवेत्यावाहयेत्। सर्वत्र मूलमन्त्रसमुच्चयः। मूलमन्त्रेणैवाऽऽसनं पाद्यमर्घ्यमाचमनीयं च दत्त्वा, ॐ पशुपतये नम इति स्नापनीयं दत्त्वा शिवाय नम इति वस्त्रादिगन्धान्तानुपचारान्दत्त्वा मल्लिकापुष्पाणि दत्त्वा बिल्वपत्राणि समर्प्य धूपदीपौ दत्त्वा नानोपहारादीन्गुडं च निवेद्य फलताम्बूलदक्षिणा दत्त्वा नीराज्य पुष्पाञ्जलिं दद्यात्। शर्वाय क्षितिमूर्तये नमः। भवाय जलमूर्तये नमः। रुद्राय तेजोमूर्तये नमः। उग्राय वायुमूर्तये नमः। भीमायाऽऽकाशमूर्तये नमः। पशुपतये यजमानमूर्तये नमः। महादेवाय सोममूर्तये नमः। ईशानाय सूर्यमूर्तये नमः। इत्यष्टभिर्लिङ्गवेद्यां प्रसिद्धप्रागादिदिक्ष्वप्रदक्षिणमष्टमूर्तीः पूजयित्वा यथाशक्ति मूलमन्त्रं जप्त्वा(जपित्वा) (+तद्दशांशतर्पणं मार्जनं च कुर्यात्। असंभवे तत्स्थाने चतुर्गुणो द्विगुणो वा जपः केवलं जपमात्रमेव वा।)

ततः पूर्ववत्करषडङ्गन्यासान्कृत्वा ध्यायेन्नित्यमिति पूर्ववद्ध्यात्वा,[2]

" गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु देवेश त्वत्प्रसादान्मयि स्थिरा " ॥

इति जपं निवेद्य स्तोत्रैः स्तुत्वा,

( " * तावकस्त्वद्गतप्राणस्त्वच्चित्तोऽहं सदा मृड।
कृपानिधे इति ज्ञात्वा भूतनाथ प्रसीद मे ॥
अज्ञानाद्यदि वा ज्ञानाज्जपपूजादिकं मया।
कृतं तदस्तु सफलं कृपया तव शंकर ॥

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. ग. पुस्तकयोरन्यथा पाठः स यथा—"ॐ शिवायाङ्गुष्ठाभ्यां नमः। ॐ भवाय तर्जनीभ्यां०। ॐ शर्वाय मध्यमाभ्यां०। ॐ पशुपतयेऽनामिकाभ्यां०। ॐ महादेवाय कनिष्ठिकाभ्यां०। ॐ ईशानाय करतलकरपृष्ठाभ्यां०। एव हृदयादिषु। एवं न्यासौ कुर्यात्। ततः श्रीअष्टमूर्तये नम इति मृष्टु शोभिता शुद्धदेशस्थां मृदं गृहीत्वा, ॐ हराय नम इति तामाहृत्य " इति। + धनुश्चिह्नान्तर्गत ङ. च. पुस्तकयोर्नास्ति। * धनुश्चिह्नान्तर्गतं ख. ङ. च. पुस्तकेषु नास्ति।

१ क. ग. °हेशं०। कर्पूरगौर०। कैलासपीठासनमध्यसंस्थं भक्तैर्सनन्दादिभिः सेव्यमानं भक्तार्तिदावानलमप्रमेयं देव ध्यायामीति शिव। २ ङ. च. °ति ध्यात्वा।

अहं पापी महान्नाथ पावनश्च महान्भवान् ।
इति विज्ञाय देवेश यदिच्छसि तथा कुरु " ॥

इति संप्रार्थ्य ) वक्ष्यमाणमभिलाषाष्टकं पुत्रप्राप्त्यर्थं पठित्वा प्रदक्षिणानमस्कारान्कुर्यात् ।

ततः—" यथेदानीं च देवेश कृपार्थं समुपागतः ।
तथा त्वया पुनर्देव समागन्तव्यमेव च ॥

ॐ महादेवाय नमः " इति विसृज्य कर्मेश्वरायार्पयेत् । एतच्चैकसंवत्सरपर्यन्तं ब्रह्मचर्ययुक्तः पतिस्तथाभूता पत्नी वा प्रतिदिनमविच्छेदेन पूर्वं पार्थिवगणपतिपूजनं पार्थिवस्कन्दपूजनं च विधाय कुर्यात् । पूजनान्तेऽभिलाषाष्टकपाठः संवत्सरपर्यन्तं कार्यः ।

स च पाठ इत्थम्—" विश्वानर उवाच—

एकं ब्रह्मैवाद्वितीयं समस्तं सत्यं सत्यं नेह नानाऽस्ति किंचित् ।
एको देवो न द्वितीयोऽवतस्थे तस्मादेकं त्वां प्रपद्ये महेशम् ॥ १ ॥
एकः कर्ता त्वं हि सर्वस्य शंभो नानारूपोऽप्येकरूपोऽप्यरूपः ।
यद्वत्प्रत्यम्ब्वर्क एकोऽप्यनेकस्तस्मान्नान्यं त्वां विनेशं प्रपद्ये ॥ २ ॥
रज्जौ सर्पः शुक्तिकायां च रूप्यं नैरः पूरस्तन्मृगाख्ये मरीचौ ।
यद्वत्तद्वद्विष्वगेष प्रपञ्चो यस्मिञ्ज्ञाते तं प्रपद्ये महेशम् ॥ ३ ॥
तोये शैत्यं दाहकत्वं च वह्नौ तापो भानौ शीतभानौ प्रसादः ।
पुष्पे गन्धो दुग्धमध्ये च सर्पिर्यत्तच्छंभो त्वं ततस्त्वां प्रपद्ये ॥ ४ ॥
शब्दं गृह्णास्यश्रवास्त्वं हि जिघ्रेरघ्राणस्त्वं व्यङ्घ्रिरायासि दूरात् ।
व्यक्षः पश्येस्त्वं रसज्ञोऽप्यजिह्वः कस्त्वां सम्यग्वेत्त्यतस्त्वां प्रपद्ये ॥ ५ ॥
नो वेदस्त्वामीश साक्षाद्विवेद नो वा विष्णुर्नो विधाताऽखिलस्य ।
नो योगीन्द्रा नेन्द्रमुख्याश्च देवा भक्तो वेद त्वामतस्त्वां प्रपद्ये ॥ ६ ॥
नो ते गोत्रं नापि जन्मापि नाऽऽख्या नो वा रूपं नैव शीलं न देशः ।
इत्थंभूतोऽपीश्वरस्त्वं त्रिलोक्याः सर्वान्कामान्पूरयेस्तद्भजे त्वाम् ॥ ७ ॥
त्वत्तः सर्वं त्वं हि सर्वं स्मरारे त्वं गौरीशस्त्वं च नग्नोऽतिशान्तः ।
त्वं वै वृद्धस्त्वं युवा त्वं च बालस्तत्किं यत्त्वं नास्यतस्त्वां नतोऽस्मि ॥ ८ ॥
स्तुत्वेति भूमौ निपपात विप्रः स दण्डवद्यावदतीव हृष्टः ।
तावत्स बालोऽखिलवृद्धवृद्धः प्रोवाच भूदेव वरं वृणीहि ॥ ९ ॥

१ क. च. ˚तः—ॐ ।

तत उत्थाय हृष्टात्मा मुनिर्विश्वानरः कृती।
प्रत्यब्रवीत्किमज्ञातं सर्वज्ञस्य तव प्रभो॥ १०॥
सर्वान्तरात्मा भगवान्सर्वः सर्वप्रदो भवान्।
याच्ञा प्रति नियुक्ता मां किमीशे दैन्यकारिणीम्(णी)॥ ११॥
इति श्रुत्वा वचस्तस्य देवो विश्वानरस्य ह।
शुचेः शुचिव्रतस्याथ शुचि स्मित्वाऽब्रवी[1]च्छुचिः॥ १२॥

बाल उवाच—

त्वया शुचेः(चे) शुचिष्मत्यां योऽभिलाषः कृतो हृदि।
अचिरेणैव कालेन स भविष्यत्यसंशयम्॥ १३॥
तव पुत्रत्वमेष्यामि शुचिष्मत्यां महामते।
ख्यातो गृहपतिर्नाम्ना शुचिः सर्वामरप्रियः॥ १४॥
अभिलाषाष्टकं पुण्यं स्तोत्रमेतत्त्वयेरितम्।
अब्दं त्रिकालपठनात्कामदं शिवसंनिधौ॥ १५॥
एतत्स्तोत्रस्य पठनं पुत्रपौत्रधनप्रदम्।
सर्वशान्तिकरं वाऽपि सर्वापत्परिना(णा)शनम्॥ १६॥
स्वर्गापवर्गसंपत्तिकारकं नात्र संशयः।
प्रातरुत्थाय सुस्नातो लिङ्गमभ्यर्च्य शांभवम्॥ १७॥
[3]वर्षं जपन्निदं स्तोत्रमपुत्रः पुत्रवान्भवेत्।
वैशाखे कार्तिके माघे विशेषनियमैर्युतः॥ १८॥
य पठेत्स्नानसमये लभते सकलं फलम्।
कार्तिकस्य तु मासस्य प्रसादादहमव्ययः॥ १९॥
तव पुत्रत्वमेष्या[4]मि यस्त्वन्यस्तत्पठिष्यति।
अभिलाषाष्टकमिदं न देयं यस्य कस्यचित्॥ २०॥
गोपनीयं प्रयत्नेन महावन्ध्याप्रसूतिकृत्।
स्त्रिया वा पुरुषेणापि नियमाल्लिङ्गसंनिधौ॥ २१॥
अब्दं जप्तमिदं स्तोत्रं पुत्रदं नात्र संशयः।
इत्युक्त्वाऽन्तर्दधे बालः सोऽपि विप्रो गृहं गतः"॥

इति श्रीस्कन्दपुराणे काशीखण्डे वीरेश्वरस्तोत्रं संपूर्णम्।

१ क. °वीद्वचः। बा°। २ ग. वर्षमेकमिदं। ३ क. 'र्षं पठन्नि°। ४ क. °मि त्वत्तोऽन्य°।

# अथ संतानगोपालमन्त्रविधिः ।

तत्राऽऽदौ संक्षेपेण गुरुलक्षणं नारदपञ्चरात्रे—

" ब्राह्मणः सर्वकालज्ञः कुर्यात्सर्वेष्वनुग्रहम् ।
तदभावाद्द्विजश्रेष्ठः शान्तात्मा भगवन्मयः ॥
भावितात्मा च सर्वज्ञः शास्त्रज्ञः सत्क्रियापरः ।
सिद्धित्रयसमायुक्त आचार्यत्वेऽभिषेचितः " इति ॥

तत्त्वसारे रुद्रयामले—

( "+ न पत्नीं दीक्षयेद्भर्ता न पिता दीक्षयेत्सुताम्[1] ।
न पुत्रं च तथा भ्राता भ्रातरं नैव दीक्षयेत् " इति ॥

अन्यच्च तन्त्रान्तरे— )

" बह्वाशी दीर्घसूत्री च विषयादिषु लोलुपः ।
हेतुवादरतो दुष्टो वाग्वादी गुणनिन्दकः ॥
अरोमा बहुरोमा च निन्दिताश्रमसेवकः ।
कालदन्तोऽसितोष्ठश्च दुर्गन्धिश्वासवाहकः[2] ॥
दुष्टलक्षणसंपन्नो यद्यपि स्वयमीश्वरः ।
बहुप्रतिग्रहासक्त आचार्यः श्रीक्षयावहः " इति ॥

तन्त्रराजे—" (*सुन्दरः सुमुखः स्वच्छः सुलभो बहुतन्त्रवित् ।
असंशयः संशयच्छिन्निरपेक्षो गुरुर्मतः ॥
सौन्दर्यमनवद्यत्वं रूपे सुमुखता पुनः ।
स्मेरपूर्वाभिभाषित्वं स्वच्छताऽजिह्मवृत्तिता ॥
सौलभ्यमप्यगर्वत्वं संतोषो बहुतन्त्रता ।
असंशयस्तत्त्वबोधस्तच्छित्तत्प्रतिपादनात् ॥
नैरपेक्ष्यमविच्छेत्ता गुरुत्वं हितवेदिता ।
एवंविधो गुरुर्ज्ञेयस्त्वितरः शिष्यदुःखदः " इति ॥

अजिह्मवृत्तितेति च्छेदः । बहुतन्त्रता बहुतन्त्र[3]वित्त्वेत्यर्थः ।

तथा—" चतुर्भिराद्यैः सहितः श्रद्धावान्सुस्थिराशयः ।
अलुब्धः स्थिरगात्रश्च प्रेक्ष्यकारी जितेन्द्रियः ॥

---

*. एतत्प्रारभ्याथ प्रयोग इत्येतस्मात्प्राग्विद्यमानो ग्रन्थो नास्ति च. पुस्तके । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके । * धनुश्चिह्नान्तर्गतं ङ. पुस्तके नास्ति ।

---

१ ग. °रसुतम् । २ क. °गन्धश्वा° । ३ क. °न्त्रवत्त्वे° । ग. °न्त्रवेत्तृ° ।

आस्तिकी दृढभक्तिश्च गुरौ मन्त्रे सदैवते ।
एवंविधो भवेच्छिष्य इतरो दुःखकृद्गुरोः " इति ॥

चतुर्भिराद्यैरिति सुन्दरत्वादिभिः ।

शिष्यपरीक्षाकालस्तत्रैव—

" एकद्वित्रिचतुष्पञ्चवर्षाण्यालोच्य योग्यताम् ।
भक्तियुक्तान्गुणांश्चापि क्रमाद्वर्णे ससंकरे ॥
पश्चादुक्तक्रमेणैव वदेद्विद्यामनन्यधीः " इति ।

ससंकरेऽनुलोमजातिसहिते[1] वर्णे । ब्राह्मणादिवर्णेष्वित्यर्थः । एकवर्षं ब्राह्मणस्य योग्यतापरीक्षा क्षत्रियादिषु तु द्व्यादिवत्सरपरीक्षेत्यर्थः ।

## अथ शिष्यधर्माः ।

मुख्यतया स्वप्रकाशमात्मानमनुसंदध्यात्पूज्येषु पराङ्मुखो न भवेत् । शरीरमर्थमसूंश्च गुर्वर्थे धारयेत् । *तदुक्तं कुर्यात् । तद्वचसि युक्तायुक्तं न विचारयेत् । परधने स्पृहां न कुर्यात् । आत्मस्तुतिं परनिन्दां मर्मस्पृग्वचनं परिहासं धिक्कारमाक्रोशं त्रासोत्पादनं च न विदध्यात् । गुरुपरमगुर्वोः समागमने प्रथमं परमगुरुं प्रणमेत् । तदग्रे गुर्वनुमत्या तन्नतिं ( तदनुमत्या गुरुनतिं ) कलयेत्[2] । एतानन्यांश्चान्त(ऽऽचा)राननुतिष्ठेत् । इति संक्षेपेण शिष्यधर्माः । )

ज्ञानोन्नयने—" निर्वीर्यं तु पितुर्मन्त्रं तथा मातामहस्य च ।
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥
प्रमादाद्यदि वाऽज्ञानात्पितुर्दीक्षां समाचरेत् ।
प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत् " इति ॥

पितुरित्युपलक्षणं मातामहादीनामपि । प्रायश्चित्तं त्वयुतगायत्रीजपः सर्वत्र तथा दर्शनात् । सिद्धमन्त्रग्रहणे तु नायं निषेधः ।

तथा च सिद्धयामले—

" यदि भाग्यवशेनैव सिद्धविद्यां लभेत्प्रिये ।
तदैव तां तु दीक्षेत त्यक्त्वा गुरुविचारणाम् " इति ॥

सिद्धमन्त्रे न दुष्यतीति तन्त्रान्तरवचनाच्च ।

पुण्यतीर्थे उपरागे सति पित्रादेरपीष्टमन्त्रो ग्राह्य एव ।

* एतदादिप्रतिपदि द्वितीयायामित्यतः प्राक्तनग्रन्थो नास्ति ख. पुस्तके ।

१ क. ग. °तिरवहि° । २ ग. कल्पयेत् ।

तथा च वैशम्पायनसंहितायां व्यासवचनं शौनकं प्रति—

“ प्रसन्नहृदयः स्वस्थः पिता मे करुणानिधिः ।
कुरुक्षेत्रे महातीर्थे सूर्यपर्वणि दत्तवान् ” इति ॥

प्रकरणान्मन्त्रमिति संबध्यते । कनिष्ठस्य स्वापेक्षया न्यूनवयस्कस्य कस्यापि ।
तथा शैवागमे—“ भिक्षुभ्यश्च वनस्थेभ्यो वर्णिभ्यश्च महेश्वरि ।
गृहस्थो भोगमन्त्रा(मोक्षा)र्थी मन्त्रदीक्षां न चाऽऽचरेत् ॥
त्यक्ताग्नयः क्रियाहीना यतयो ह्यपरिग्रहाः ।
वनस्थास्तादृशा एव वर्णी न्यूनाश्रमी यतः ।
अतस्तेषां नाधिकारो मन्त्रदाने महेश्वरि ” इति ॥

न्यूनाश्रमी गृहस्थापेक्षया गार्हस्थ्यस्य द्वितीयाश्रमत्वात् । एतेन गृहस्था-
द्यतिभिरपि मन्त्रग्रहणं न कार्यमित्यवगम्यते ।

अत एव सारसंग्रहे—

“ तपस्वी सत्यवादी च गृहस्थः स्वस्थमानसः ” इति गुरुलक्षणमुक्तम् ।
शिवसद्भावेऽपि—“ दीक्षायां न गुरुत्वेन यतीन्वैखानसान्प्रिये ।
वृणुयाद्भोगमोक्षार्थी गृहस्थो वर्णिनं तथा ” इति ॥

वैखानसा वानप्रस्थाः । वर्णी ब्रह्मचारी ।

अत्र स्त्रीणामप्यधिकारः ।

“ वैदिको मिश्रितो वाऽपि विप्रादीनां विधीयते ।
तान्त्रिको विप्रभक्तस्य शूद्रस्यापि प्रकीर्तितः ॥
स्वागमोक्तेन मार्गेण स्त्रीशूद्रैश्चापि पूजनम् ।
कर्तव्यं श्रद्धया विष्णोश्चिन्तयित्वा पतिं हृदि ॥
स्त्रीणामप्यधिकारोऽस्ति विष्णोराराधनादिषु ।
पतिप्रियरतानां च श्रुतिरेषा सनातनी ” ॥ इति पद्मपुराणवचनात् ।
“ न वैदिकं जपेच्छूद्रः स्त्रियश्चैव कदाचन ।
नमोन्तं(न्तः) शिवमन्त्रं(न्त्रो) वा वैष्णवं(वो) वेष्यते बुधैः ”

इति याज्ञवल्क्यवचनात् ।

“ लघुश्यामा कालरात्रिर्गोपालो जानकीपतिः ।
छिन्नमस्ता च मातङ्गी त्रिपुरा कालिका शिवः ॥
उग्रतारा भैरवश्च देया वर्णचतुष्टये ।
मृगीदृशां विशेषेण मन्त्रा एते सुसिद्धिदाः” ॥ इति मन्त्रप्रकाशादिवचनाच्च ।

---

१ ङ. ँति ब्रह्मपु ँ ।

(*अथात्र प्रसङ्गाद्बाल्ययौवनवार्धक्येषु सिद्धिप्रदा मन्त्राः क्रमेण प्रदर्श्यन्ते—

" बीजमन्त्रास्तथा मन्त्रा मालामन्त्रा इति त्रिधा ।
बीजमन्त्रा दशार्णान्तास्ततो मन्त्रा नखावधि ॥
विंशत्यधिकवर्णा ये मालामन्त्रास्तु ते स्मृताः " इति ॥

एत एवावस्थान्तरेष्वपि द्विगुणजपात्सिध्यन्ति ।

अथ प्रसङ्गान्मन्त्राणां व्यक्तिविशेषः—

" वषडन्ताः फडन्ताश्च पुमांसो मनवः स्मृताः ।
वौषट्स्वाहान्तिमा नार्यो हुंनमोन्ता नपुंसकाः " इति ॥

एतेषां विनियोगस्तु—

" वश्योच्चाटनरोधेषु पुमांसः सिद्धिदायकाः ।
क्षुद्रकर्मरुजां नाशे स्त्रीमन्त्राः शीघ्रसिद्धिदाः ॥
अभिचारे स्मृताः क्लीबा इत्येवं मन्त्रयोजना " इति ॥)

अथ गुरोरलाभे मन्त्रग्रहणप्रकारः शारदातिलकादिषु—

" गुरोरलाभे मन्त्राणां ग्रहणक्रम उच्यते ।
कृष्णपक्षे त्रयोदश्यां दक्षिणामूर्तिसंनिधौ ॥
लिखित्वा राजते पात्रे तालपत्रेऽथवा पुनः ।
मन्त्रं तं स्थण्डिले स्थाप्य पूजयित्वा महेश्वरम् ॥
पायसादि निवेद्यं च दत्त्वा तं प्रणिपत्य च ।
शतकृत्वः पठेन्मन्त्रं दक्षिणामूर्तिसंनिधौ ॥
सर्वेषां चैव मन्त्राणामेवं ग्रहणमिष्यते " इति ॥

अथवा—" नद्यास्तु सिन्धुगामिन्यास्तीरे चोत्तरतः स्थिते ।
स्थण्डिलं कारयेत्तत्र शुचौ देशे शुभे दिने ॥
तालपत्रे लिखित्वाऽथ मन्त्रं तत्र निधाय च ।
आवाह्य भास्करं तत्र यथाविधि सुपूजयेत् ॥
तत्संनिधावष्टशतं पठेद्देशिकतो यथा ।
एवं गृह्णीयान्मतिमानपूर्वोऽयं विधिः स्मृतः " इति ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थो ङ. पुस्तके नास्ति ।

## अथ कालः ।

" मन्त्रारम्भस्तु चैत्रे स्यात्समस्तपुरुषार्थदः ।
वैशाखे रत्नकामः स्याज्ज्येष्ठे च मरणं भवेत् ॥
आषाढे बन्धुनाशः स्यात्पूर्णार्थः श्रावणे भवेत् ।
प्रजानाशो भवेद्भाद्र आश्विने रत्नसंचयः ॥
कार्तिके मन्त्रसिद्धिः स्यान्मार्गशीर्षे तथा भवेत् ।
पौषे तु शत्रुपीडा स्यान्माघो मेधाविवर्धनः ॥
फाल्गुने सर्वकामाः स्युर्मलमासं विवर्जयेत् " इति ।

मलमासग्रहणं क्षयमासो(सस्याप्यु)पलक्षणम् ।

" प्रतिपदि द्वितीयां तृतीयायां च वै शुचिः ।
चतुर्थ्यां वित्तनाशः स्यात्पञ्चम्यां बुद्धिवर्धनम् ॥
षष्ठ्यां ज्ञानक्षयः सौख्यं लभते सप्तमीदिने ।
अष्टम्यां बुद्धिनाशः स्यान्नवम्यां वपुषः क्षयः ॥
दशम्यां राजसौभाग्यमेकादश्यां शुचिर्भवेत् ।
द्वादश्यां सर्वसिद्धिः स्यात्त्रयोदश्यां दरिद्रता ॥
तिर्यग्योनिश्चतुर्दश्यां हानिर्मासावसानके ।

मासावसानकममावास्या ।

पूर्णिमायां धर्मवृद्धिर्मन्त्राणां ग्रहणे स्मृताः ।

पूर्णिमाशब्देन पूर्णिमोत्तरार्धमेव ग्राह्यं न तु पूर्वार्धम् । तस्य भद्रात्वेन सामान्यतः सर्वकर्मसु निषिद्धत्वात् ।

रविवारे भवेद्वित्तं सोमे शान्तिर्भवेत्किल ।
आयुरङ्गारको हन्ति सौन्दर्यं सौम्यवासरे ॥
गुरुवारे भवेज्ज्ञानं शुक्रे सौभाग्यमीरितम् ।
शनैश्चरे यशोहानिरिति वाराः प्रकीर्तिताः ॥
अश्विन्योः सुखमाप्नोति भरणीषु मृतिर्भवेत् ।
कृत्तिकासु भवेद्दुःखी रोहिण्यां वाक्पतिर्भवेत् ॥
मृगशीर्षे सुखावाप्तिराद्रायां बन्धुनाशनम् ।
पुनर्वस्वोर्धनाढ्यः स्यात्पुष्ये शत्रुविनाशनम् ॥

---

१ क. रतिका° । २ ग. ङ. °न्माघे मे° । ३ ग. धनद्° ।

आश्लेषासु भवेन्मृत्युर्दुःखान्मुक्तिर्मघासु च।
सौन्दर्यं पूर्वफल्गुन्योः प्राप्नोति च न संशयः॥
ज्ञानमुत्तरफल्गुन्योर्हस्ते च धनवान्भवेत्।
चित्रायां ज्ञानसिद्धिः स्यात्स्वात्यां शत्रुविनाशनम्॥
विशाखयोः सुखं चानुराधास्विष्टविवर्धनम्।
ज्येष्ठायां सुतहानिः स्यान्मूले कीर्तिविवर्धनम्॥
पूर्वाषाढाः कीर्तिदाः स्युरुत्तरा अपि कीर्तिदाः।
श्रवणे च भवेद्दुःखी धनिष्ठासु दरिद्रता॥
बुद्धिः शतभिषग्भे स्यात्पूर्वा(र्वे)भाद्रपदे सुखी।
उत्तरासु भवेत्सौख्यं रेवत्यां कीर्तिवर्धनम्॥
शुभः सिद्धिस्तथाऽऽयुष्मान्ध्रुवयोगस्ततः परम्।
प्रीतिः सौभाग्ययोगश्च वृद्धियोगश्च हर्षणः॥
सुकर्मा च धृतिः सिद्धो ब्रह्मा ऐन्द्रश्च शोभनः।
वर्याणश्च शिवश्चैव मन्त्राणां ग्रहणे शुभाः॥
मन्त्राणां ग्रहणे[1] शेषा अशुभाः परिकीर्तिताः।
बवबालवतैतिला(ल) कौलवं वणिजं तथा॥
करणानि शुभान्येव सर्वतन्त्रेषु भामिनि" इति॥

वैशम्पायनसंहितायाम्—

"मन्त्राद्यारम्भणं मेषे धनधान्यप्रदं भवेत्।
कर्कटे सर्वसिद्धिः स्यात्कन्या लक्ष्मीप्रदा नृणाम्॥
तुलायां सर्वसिद्धिः स्यात्सर्वलाभश्च वृश्चिके।
मकरं पुत्रदं प्राहुः कुम्भो धनसमृद्धिदः॥
इतराणि तु लग्नानि स्युरनिष्टफलानि हि।
शुक्लपक्षे शुभा दीक्षा कृष्णेऽप्यापञ्चमीदिनात्॥
भूतिकामैः सिते पक्षे मुक्तिकामैः सितेतरे" इति।

अत्र गुरुभार्गवमौढ्यं चन्द्रतारानुकूल्यं लग्नस्य ग्रहबलादिकं च विचार्यम्।

ग्रहबलं तु—"त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः।
दीक्षायां तु शुभाः सर्वे रन्ध्रस्थाः सर्वनाशकाः" इति॥

आय एकादशस्थानम्। पापाः पापग्रहा रविभौमशनिराहुकेतुक्षीणेन्दवः

१ ख. ग. ङ. °णे योगाः शुभदाः प°।

पापयुक्ताः सौम्याश्च । शुभाः शुभग्रहाः, अक्षीणेन्दुपापयोगरहितबुधगुरुभृगवः । केन्द्राणि प्रथमचतुर्थसप्तमदशमस्थानानि । त्रिकोणे नवमपञ्चमस्थाने । सर्वे पापाः शुभाश्च ग्रहा उक्तस्थानगता दीक्षायां शुभा एव । अत एव रन्ध्रेऽष्टमस्थाने स्थिता यदि सर्वे नाशका इति योजना ।

अथोक्तकालमन्तरेणापि दीक्षार्हः कालस्तन्त्रान्तरे—

" विषुवेऽप्ययनद्वंद्वे संक्रान्त्यां दमनोत्सवे ।
दीक्षा कार्या त्वकालेऽपि पवित्रे गुरुपर्वणि " इति ॥

विषुवे तुलामेषसंक्रमयोः । अयनद्वंद्वे कर्कमकरसंक्रान्त्योः । संक्रान्त्यां तदन्यसंक्रान्तिषु । दमनोत्सवे चैत्रपौर्णिमादिषु दमनकरणकपूजादिने । पवित्रे श्रावणपूर्णिमायाम् । गुरुपर्वणि गुरोर्जन्मव्याप्तिदिनयोः ।

अन्यत्रापि—" सत्तीर्थेऽर्कविधुग्रासे पुण्यारण्यवनेषु च ।
मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत् " इति ॥

प्रकारान्तरं च—" सर्वे वारा ग्रहाः सर्वे नक्षत्राणि च राशयः ।
यस्मिन्नहनि संतुष्टो गुरुः सर्वे शुभावहाः ॥
संतुष्टे च गुरौ तस्य संतुष्टाः सर्वदेवताः ।
गुरुं संतोषयेद्भक्त्या द्वयमेव तदा भवेत् " इति ॥

द्वयं भोगमोक्षौ । एवकारोऽप्यर्थः ।

अधिकारिभेदेन कालो यथा—

" मुमुक्षूणां सदा कालः स्त्रीणां कालस्तु सर्वदा " इति ॥

अथर्णधनचक्रम्—" नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ।
गणयेन्मातृकावर्णक्रमेण गुणयेत्त्रिभिः ॥
विभक्ते सप्तभिः शिष्टो नामराशिरुदीरितः ।
एवं मन्त्रार्णमारभ्य यावन्नामादिमाक्षरम् ॥
गणयित्वा त्रिभिर्हत्वा विभजेत्सप्तभिः सुधीः ।
मन्त्रराशिः स्मृतः शिष्टः पूर्ववद्धनिता(त)र्णिता ॥
यद्वा मन्त्राक्षराणीह स्वरव्यञ्जनरूपतः ।
पृथक्कृत्य द्विगुणयेद्योजयेत्साधकाक्षरैः ॥
तादृशैरष्टभिर्भक्ते मन्त्रराशिरुदाहृतः ।
एवं नामार्णसंघोऽपि द्विगुणीकृत्य योजितः ॥
मन्त्रवर्णैरष्टभक्तो नामराशिः स्मृतो बुधैः ।

ऋणिता धनिता चात्र पूर्ववत्परिकीर्तिता ॥
उक्तान्यतरमार्गेण शोधनीयमृणं धनम् " इति ।

## ( *अथ प्रसङ्गात्सिद्धारिशोधनप्रकारः ।

" ऊर्ध्वाभिश्च तिरश्चीभी रेखाभिः पञ्चपञ्चभिः ।
कोष्ठषोडशकं कृत्वा मातृकार्णैः प्रपूरयेत् " ॥

यथा—" एक१त्रि३रुद्र११नव९दृङ्२निगमा४र्क१२पङ्क्ति१०षड्-
७नाग८भूप१६मनु१४बाण५हये७षु५तिथ्याम् १५ ।
कामे१३ क्रमादकथहप्रभृतीन्मनीषी वर्णान्समालिखतु
षोडश[केषु च]त्रीन् " इति ।

**अस्यार्थः—रुद्र एकादशं कोष्ठम् । दृग्द्वितीयम् । निगमाश्चतुर्थम् । अर्को द्वादशम् । पङ्क्तिर्दशमम् । नागोऽष्टमम् । भूपाः षोडशम् । कामस्त्रयोदशम् । एकादिकामान्तेषु प्रथमं क्रमादकारादीन्स्वरान्, ततः कादितान्तान्, ततस्था- दिसान्तान्वर्णान्विलिख्य ततः प्रथमकोष्ठे तृतीय एकादशे च हळक्षान्विलि- खेदिति ।**

" विदिग्गतेषु कोष्ठानां चतुष्केषु चतुर्ष्विह ।
यत्र साधकनामादिवर्ण[2]स्तत्सिद्धसंज्ञकम् ॥
प्रादक्षिण्यक्रमेणास्माच्चतुष्कत्रितयं परम् ।
साध्यं तथा सुसिद्धं च शत्रुश्चेत्यभिधीयते ॥
एकैकस्मिंश्चतुष्केऽपि यस्मिन्कोष्ठे यदक्षरम् ।
तदाद्युक्तक्रमेणैव सिद्धसाध्यादिकल्पना ॥
एवं साध्यचतुष्कादौ तत्तुल्यस्थानकोष्ठतः ।
साध्यसिद्धः साध्यसाध्य इत्याद्याख्याः क्रमान्मताः " ॥

**सिद्धसिद्धप्रभृत्यपर्यन्तं(?) षोडशसप्तसु यत्र यस्य मनोराद्यो वर्णः सोऽपि तदाह्वय इति स्पष्टोऽर्थः ।**

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ङ. पुस्तकेऽन्यथा ग्रन्थः स यथा—" नात्र सिद्धारिचक्रवि- चारः । तदुक्तं सिद्धान्तशेखरे—एकत्रिपञ्चसप्तार्णनवरुद्राक्षरान्विते । द्वात्रिंशदक्षरे मन्त्रं सिद्धारीश्चैव शोधयेत् । ये च बौद्धाश्च जैनाश्च गोपाला वैष्णवाश्च ये । सिद्धसाध्यसुसिद्धारिविचारपरिवर्जिता इति " इति ।

१ ख. ग. अत्र । २ क. ख. 'दिर्वर्णे' ।

## अथैतेषां फलानि ।

" सिद्धः सिध्यति कालेन साध्यः सिध्यति वा न वा ।
सुसिद्धस्तत्क्षणादेव अरिर्मूलं निकृन्तति " इति ॥

तन्त्रराजे—" सिद्धसिद्धो जपात्सिध्येद्द्विगुणात्सिद्धसाध्यकः ।
सिद्धः सुसिद्धः संप्राप्तेः सिद्धारिर्हन्ति गोत्रजान् ।
साध्यसिद्धोऽतिसंक्लेशात्साध्यसाध्योऽतिदुःखकृत् ॥
साध्यः सुसिद्धो भजनात्साध्यारिः स्वस्त्रियं हरेत् ।
सुसिद्धसिद्धोऽर्धजपात्फलं दद्याद्यथेप्सितम् ॥
सुसिद्धसाध्यो जापाद्यैः सिद्धये स्यादतोऽन्यथा ।
सुसिद्धे च सुसिद्धस्तु पूर्वजन्मकृतश्रमः ॥
तस्मात्तं सर्वसिद्धीनां साधने योजयेन्मनुम् ।
सुसिद्धारिरशेषेण स्वकुलं मारयेद्ध्रुवम् ॥
अरिसिद्धः सुतं हन्यादरिसाध्यस्तु कन्यकाम् ।
तत्सुसिद्धस्तु पत्नीं स्वामर्यरिः साधकापहः " इति ॥

संप्राप्तेः प्राप्तिमात्रात् । जापाद्यैरित्याद्यशब्देन होमतर्पणब्राह्मणभोजनानि गृह्यन्ते ।

## अथ प्रकारान्तरेण ऋणधनशोधनम् ।

" द्विगुणीकृत्य साध्यस्थं स्वरव्यञ्जनमण्डलम् ।
साधनाख्याजुषा तेन मेलयित्वाऽष्टभिर्हरेत् ॥
शेषः साध्यस्य राशिः स्याद्योजयेत्साधकोऽन्यथा ।
साधिकाधिकशेषस्तु ऋणी साध्यः शुभावहः ॥
शोधितो न्यूनशेषः स्याद्वर्णलक्षजपाच्छुभः " इति ।

साध्यो मन्त्रः । तेन स्वरव्यञ्जनसमुदायेन । अन्यथेति । साधकनामगतं स्वरव्यञ्जनसमूहं द्विगुणीकृत्य साध्यगतस्वरव्यञ्जननिकरेण संमेल्याष्टभिर्हरेत् । शेषं साधकराशिं जानीयादित्यर्थः । शोधित इत्युक्तेन सिद्धारिक्रमेण शोधितोऽनुकूलो मन्त्रो यदि साधकान्न्यूनशेषः स्यात्तदा यावत्या वर्णसंख्यया न्यूनता तावल्लक्षजपादिनर्णमपाकृत्य पुरश्चरणादिकं कुर्यादित्यर्थः । यस्य मन्त्रराशिरधिकः स ऋणी ज्ञेयः । ग्राह्य एवायम् । यस्य मन्त्रराशिर्न्यूनः स धनी त्याज्योऽयम् । प्रकारान्तराणि चान्यतोऽवगन्तव्यानि ।

अथैतदपवादः सीमसिद्धान्तरत्नाङ्कसाररुद्रयामलागस्तिसंहितासिद्धान्तशेखरादिवचनगतोऽपुनरुक्तः संगृह्यते—

"एकाक्षरे तथा कूटे त्रैपुरे स्त्रीसमर्पिते ।
स्वप्नलब्धे नृसिंहार्कवराहाणां मनुष्वपि ॥
प्रासादे प्रणवे तद्वत्सपिण्डाक्षरमन्त्रके ।
मृत्युंजये च पाशाद्ये वैष्णवे चण्डनायके[1] ॥
व्योमव्यापिनि मायायां मालामन्त्रेष्वघोरके ।
एकत्रिपञ्चषट्सप्तभाङ्करुद्राक्षरेषु च ।
नपुंसके च दन्तार्णे कालिकाश्यामलामनौ ।
सिद्धकालीचण्डिकयोर्मन्त्रे राममनुष्वपि ॥
गोपालमातृकामन्त्रे हरवल्लभया सह ।
श्रीविद्या सिद्धविद्या च मातङ्गी भुवनेश्वरी ॥
पद्मावती मधुमती दत्तात्रेयश्च पार्वती ।
मित्रेशोड्डीशषष्ठीशचर्या[2]नन्दमनुष्वपि ॥
सप्तप्रणवमन्त्राणां हरिद्रोच्छिष्टयोरपि ।
आसुरी सुमुखी चैव रेणुका[3] च सरस्वती ॥
कुम्भोद्भयाऽर्णवश्चैव मतङ्गगणिकस्य च ।
शाबराणां च मन्त्राणां वृद्धजप्तमनुष्वपि ॥
कुलागतानां मन्त्राणां सिद्धादीन्नैव शोधयेत् ।
बहुरूपाह्वये मन्त्रे जैनबौद्धमनुष्वपि ॥
सिद्धारित्वादिधनितामृणितां च न शोधयेत्" इति ।

कूटे कूटाक्षरे मन्त्रे । स्त्रीसमर्पिते स्त्रीविशेषसमर्पित इत्यर्थः ।

तथा च तन्त्रान्तरे—

"साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया ।
सर्वमन्त्रार्थतत्त्वज्ञा सुशीला पूजने रता ॥
गुरुयोग्या भवेत्सा हि विधवा परिवर्जिता ।
स्त्रियो(या) दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता" इति ॥

स्वप्नलब्धे कर्तव्यताविशेषो यथा—

"स्वप्नलब्धे तु कलशे गुरोः प्राणं निवेश्य च ।

१ ग. °नायिके । २ क °ष्ठी च शर्या° । ३ ग. वेणुका ।

कलशे गुरोः प्राणं निवेशितं भावयेत्। गुरुभावनां कलशे कुर्यादिति यावत्।

वटपत्रे कुङ्कुमेन लिखित्वा ग्रहणं शुभम्।
ततः शुद्धिमवाप्नोति अन्यथा विफलं भवेत्" इति ॥

इदं तु सद्गुरोरभावे। तत्संभवे तु तत एव गृह्णीयादिति। प्रासादे प्रासादबीजाढ्ये। पाश(शो)बीजम्। व्योमव्यापिनि हकारादौ। मायायां हृल्लेखायाम्। अङ्के नवाक्षरे। दन्तार्णे द्वात्रिंशदक्षरे। हरिद्रोच्छिष्टयोस्तद्गणपत्योः। अणु(मनु)मंत्र इति।

* केषांचिन्मन्त्राणां शापाभाव उक्तो वातुलागमे—

" पुरा शापविहीनं च वर्तते मन्त्रपञ्चकम्।
श्रीविद्यासालुवं मन्त्रं नृसिंहार्कवराहकम्" इति ॥

तन्त्रान्तरे तु—" मन्त्रादिषु सर्वेषु हृल्लेखाकामबीजकम्।
श्रीबीजं वा विनिक्षिप्य जपेन्मन्त्रस्य सिद्धये ॥
तारसंपुटितो वाऽपि दुष्टमन्त्रोऽपि सिध्यति" इति।

हिरण्यगर्भसंहितायां च—

" स्वनामादिवर्णैः स्वमित्राक्षरैर्वा मनुं संपुटीकृत्य येऽनुस्मरन्ति" इति।

स मन्त्रस्तेषां सिध्यतीति शेषः। अनुस्मरणं जपः।

मन्त्राणां संस्कारादिकं तु शारदातिलकसौभाग्यरत्नाकरादिग्रन्थेषु द्रष्टव्यम्।)

आदौ मन्त्रसिद्धये पुरश्चरणमवश्यं कर्तव्यम्। तथा च वैशम्पायनः—

" पुरश्चरणसंपन्नो मन्त्रो हि फलदायकः।
किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ॥
रहस्यानां हि मन्त्राणां यदि न स्यात्पुरस्क्रिया।
पुरस्क्रिया हि मन्त्राणां प्रधानं बीजमुच्यते ॥
वीर्यहीनो यथा देवि सर्वकर्मसु न क्षमः।
पुरश्चरणहीनस्तु तथा मन्त्रः प्रकीर्तितः" इति ॥

पुरश्चरणशब्दनिरुक्तिर्वायवीयसंहितायाम्—

" साधनं मूलमन्त्रस्य पुरश्चरणमुच्यते।
पुरतश्चरणीयत्वाद्विनियोगाख्यकर्मणाम् ॥
पुरतो विनियोगस्य चरणाद्वा तथोदितम्" इति।

---

* अत्र पूर्वापरसंगत्यभावात्किंचित्त्रुटितमिति भाति।

विनियोगलक्षणं तु मन्त्रतन्त्रप्रकाशे—

"धर्मार्थकाममोक्षाणां शास्त्रमार्गेण योजनम्।
सिद्धमन्त्रस्य संप्रोक्तो विनियोगो विचक्षणैः॥
पुरश्चरणपूर्वोऽसौ विनियोगो विनिर्मितः।
फलाय मन्त्रसेवा वा राजसेवा यथा तथा॥
चरणात्पूर्वमेवासौ पुरश्चरणमुच्यते" इति।

एतेन विनियोगाख्यकर्मसामर्थ्यजनकक्रिया, ऐहिकामुष्मिकमन्त्रात्मशुद्धिहेतुक्रिया वा पुरश्चरणमित्युक्तम्।

अथ मूलमन्त्रोद्धारो मन्त्रस्यर्ष्यादिन्यासो ध्यानं जपसंख्या पूजाविधिश्चोच्यते—

"अथ पुत्रप्रदं वच्मि कृष्णमन्त्रमनुष्टुभम्।
देवकीसुतवर्णान्ते गोविन्दपदमुच्चरेत्॥
वासुदेवपदं प्रोच्य संबुद्ध्यन्तं जगत्पतिम्।
देहि मे तनयं प्रोच्य कृष्ण त्वामहमीरयेत्॥
शरणं गत इत्यन्तो मन्त्रो द्वात्रिंशदक्षरः।
नारदो मुनिरस्योक्तोऽनुष्टुप्छन्दः समीरितम्॥
देवः सुतप्रदः कृष्णः पादैः सर्वेण चाङ्गकम्।
विजयेन युतो रथस्थितः प्रसमानीय समुद्रमध्यतः॥
अददत्तनयान्द्विजन्मने स्मरणीयो वसुदेवनन्दनः।
लक्षं जपोऽयुतं होमस्तिलैर्मधुरसप्लुतैः॥
अर्चा पूर्वोदिता चैवं मन्त्रः पुत्रप्रदो नृणाम्"। इति।

मन्त्रकौमुद्यामादौ कामबीजयोगोऽप्युक्तः। तन्त्रान्तरे त्वन्तेऽपि।

अत्र तर्पणमार्जनब्राह्मणभोजनान्यऽपि कार्याणि—

"जपो होमस्तर्पणं च मार्जनं विप्रभोजनम्।
मन्त्रविद्भिस्तु पञ्चाङ्गं पुरश्चरणमीरितम्"॥ इति मन्त्रकौमुद्याद्युक्तेः।

एतत्संख्याऽप्युक्ता तत्रैव—

"होमो जपदशांशेन तद्दशांशेन तर्पणम्।
मार्जनं तद्दशांशेन तद्दशांशेन भोजनम्" इति॥

अङ्गन्यासचक्रादिकं तु गोपालदशाक्षरमन्त्रविधानवत्।

१ ख. ग. ङ. °रसंप्लु°।

तद्यथा—“ आचक्राय हृदाख्यातं विचक्राय शिरोऽपि च ।
सुचक्राय शिखा पश्चात्रैलोक्यरक्षणं ततः ॥
चक्राय कवचं प्रोक्तमसुरान्तकशब्दतः ।
चक्रायास्त्रमिदं कुर्यादङ्गानां पञ्चकं मनोः ” इति ॥

तन्त्रान्तरे तु—“असुरान्तकचक्राय नेत्रद्वयं सुदर्शनचक्रायास्त्रम् ” ।

इत्येवमङ्गषट्कमुक्तम् ।

## अथ चक्रम् ।

“ अग्न्यादिकोणेष्वभ्यर्च्य हृदाद्यङ्गचतुष्टयम् ।
दिशास्वस्त्रं दलेष्वष्टौ महिषीः परिपूजयेत् ॥
रुक्मिणी सत्यभामा च नग्नजित्तनयार्कजा ।
मित्रविन्दा लक्ष्मणा च जाम्बवती सुशीलिका ॥
महिष्योऽष्टौ सुवर्णाभा विचित्राभरणस्रजः ।
दलाग्रे वसुदेवं च देवकीनन्दगोपतिम् ॥
यशोदां बलभद्रं च सुभद्रां गोपगोपिकाः ।
इन्द्रादीनपि वज्रादीन्पूजयेत्तदनन्तरम् ॥
मन्त्रेष्वेषु दशार्णोक्तान्प्रयोगान्विदधीत च ” इति ॥

अङ्गषट्कपक्षे संनिवेशस्तन्त्रान्तर एवोक्तः—

“ अग्न्यादिकोणेष्वभ्यर्च्य हृदाद्यङ्गचतुष्टयम् ।
दिशासु नेत्रमभ्यर्च्य सर्वदिक्ष्वस्त्रमर्चयेत् ” इति ॥

## अथ संक्षेपेण पुरश्चरणकर्तृधर्माः ।

तन्त्रसारे—“ अधःशायी हविष्याशी मौनी चैव जितेन्द्रियः ।
असूयादम्भरहितः पुरश्चरणमाचरेत् ” इति ॥

व्यासः—“ क्षीराहारी फलाशी वा शाकाहारी हविष्यभुक् ।
भिक्षाशी वा जपं कुर्याज्जपं चा(पंश्चा)न्द्रायणादिकम् ॥
लवणं क्षारमम्लं च गृञ्जनं कांस्यभोजनम् ।
ताम्बूलं च द्विभुक्तं च दुःसंवासं प्रमत्तताम् ॥
श्रुतिस्मृतिविरुद्धं च जपं रात्रौ च वर्जयेत् ” इति ।

---

१ ग. °शाशत्रं । २ ग. °भ्यर्च्य हृ° । ३ ग. °भ्यर्च्य स° । ४ ग. °ष्यभाक् । ५ क. °ज्जपचा° । ६ क. °मलबुं गृ° ।

दुःसंवासो दुष्टैः सह संवासः ।

मन्त्रतन्त्रप्रकाशे—" भूशय्या ब्रह्मचारित्वं मौनचर्या[1]ऽनसूयता ।
नित्यं त्रिपवर्णं स्नानं क्षुद्रकर्मविवर्जनम् ॥
नित्यपूजा नित्यदानं देवतास्तुतिकीर्तनम् ।
नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः ॥
जपनिष्ठा द्वादशैते धर्माः स्युर्मन्त्रसिद्धिदाः *इति ।
एवमादौ(र्दी)श्च[3] नियमान्पुरश्चरणकृच्चरेत् । [ इति । ]

ब्रह्मचर्यमष्टविधमैथुननिवृत्तिः ।

तदुक्तं दक्षेण—" स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् " इति ॥

अभिलाषा(ष)पूर्वकं स्मरणकीर्तनप्रेक्षणानि निषिद्धानि । केलिः परिहासादिबाह्यचेष्टा । गुह्यभाषणं संभोगार्थं रहोमन्त्रणम् । संकल्पो मानसं कर्म । अध्यवसायः संभोगनिश्चयः । क्रियानिर्वृत्तिः क्रियानिष्पत्तिः ।

त्रिषवणस्नानं तु शक्तपरम् ।

" स्नानं त्रिषवणं प्रोक्तमशक्तौ द्विः सकृच्चरेत् " इति वैशम्पायनवचनात् ।

क्षुद्रकर्म तु—" दम्भद्वेषौ तथोत्साद उच्चाटे भ्रममारणे ।
व्याधिश्चेति स्मृतं क्षुद्रम् " इति नारायणीयोक्तम् ।

नित्यं पूजा तत्पूर्वकमेव जपविधानात् । नैमित्तिकार्चनमयनादौ विशेषपूजा ।

सा चोक्ता मन्त्रतन्त्रप्रकाशे—

" अष्टोत्तरसहस्रं तु कृत्वाऽन्तर्यागमादरात् ।
जपेत्प्रतिदिनं यत्तु नित्य एष जपः स्मृतः ॥
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
द्वादश्यां पौर्णमास्यां तु तेषु नैमित्तिको जपः ॥
नित्यात्त्रिगुणितः सोऽथ पूजा चैव हरेस्तथा " इति ।

हरेरिति स्वेष्टदेवतोपलक्षणम् ।

---

* इतिशब्दोऽधिकः ।

---

१ ख. ग. मौनं चार्याऽ' । २ ग. 'वणस्ना' । ३ क. 'दौ च नि' ।

**आरब्धे पुरश्चरणे मध्य आशौचेऽपि न जपबाधस्तदुक्तं विष्णुना—**

" व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् " इति ॥

**प्रारम्भशब्दार्थस्तु विष्णुनोक्तः—**

" प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया " इति ॥

**मन्त्रमहोदधौ—**" आदौ देवं वशीकर्तुं पुरश्चरणमाचरेत् ।
तीर्थादौ निर्जने स्थाने भूमिग्रहणपूर्वकम् ॥
नवधा तां धरां कृत्वा पूर्वादिषु समालिखेत् ।
कोष्ठेषु सप्त वर्गांश्च ळक्षौ मध्ये तथा स्वरान् ॥
क्षेत्रनामादिमो वर्णो यत्र कोष्ठे भवेत्ततः ॥
उपविश्य जपं कुर्यान्नान्यस्मिन्दुःखदे स्थले ।
आमध्याह्नं जपं कुर्यादुपांशुं वाऽथ मानसम् ॥
हविष्यं निशि भुञ्जीत त्रिःस्नाप्य(य्य)चलनस्तथा ।
व्यग्रतालस्यनिष्ठीवक्रोधपादप्रसारणम् ॥
अन्यभाषान्त्यजेक्षे च जपकाले त्यजेत्सुधीः ।

**अन्यभाषा चान्त्यजश्चाण्डालस्तस्येक्षा चान्यभाषान्त्यजेक्षे । अन्येन सह भाषणमन्त्यजस्येक्षणं च वर्जयेदित्यर्थः ।**

स्त्रीशूद्रभाषणं निन्दां ताम्बूलं शयनं दिवा ।
प्रतिग्रहं नृत्यगीते कौटिल्यं वर्जयेत्सदा ॥
भूशय्यां ब्रह्मचर्यं च त्रिकालं देवतार्चनम् ।
नैमित्तिकार्चनं देवस्तुतिं विश्वासमाश्रयेत् ॥
प्रत्यहं प्रत्यहं तावन्नैवं न्यूनाधिकं क्वचित् " इति ।

**नवकोष्ठकं चतुरश्रं कृत्वा तस्मिन्पूर्वदिशमारभ्य कादीन्सप्त वर्गानन्ते ळं क्षं च विलिखेत् । एवं मध्यकोष्ठे नव कोष्ठान्कृत्वा पूर्वादितः स्वरयुग्मं लिखेत् । क्षेत्रनामाद्यवर्णो यस्मिन्कोष्ठे भवेत्तत्र मुखं तदधस्तात्क्रमेण हस्तपार्श्वपादपुच्छादिकं ज्ञेयम् । तत्र मुख उपविश्य जपं कुर्यात् । नान्यस्मिन्हस्तपार्श्वादिषु ।**

---

१ ख. होमार्चे । २ ग. °पे । आर° । ३ क. °वन्न तन्न्यूना° ।

तत्र—“ उदङ्मुखः सकामस्तु निष्कामः प्राङ्मुखो जपेत् ।
अभिचारादिकं याम्ये नैर्ऋत्ये(ते) मारणं स्मृतम् ”

इति वचनाद्यथाकामम् ।

## अथ प्रकारान्तरेण कूर्मचक्रम् ।

समीकृते[1] भूतले प्राक्प्रत्यगायता दक्षिणोत्तरायताश्चतस्रश्चतस्रो लेखा विलिख्य नव कोष्ठानि विधाय तत्र पूर्वादिप्रादक्षिण्येन क्रमेणाष्टसु कोणेषु कचटतपयशला(ळा ?)ख्यानष्ट वर्गा[2]नकारादिस्वरद्वयं[3] च विलिख्य मध्यकोष्ठे श्रीकारं विलिखेत् । अथवा मध्यकोष्ठे स्वराः प्रागादिक्रमेण । इदं च कूर्मचक्रं क्षेत्रग्रामगृहभेदात्त्रिविधम् । तत्र क्षेत्रग्रामयोस्तत्तन्नामाद्यक्षरयुक्तं कोष्ठं मुखं कूर्मस्य । एतदेव दीपस्थानमुच्यते । गृहे तु गृहपतिनामाद्यक्षरयुक्कोष्ठं मुखम् । तत्पार्श्वद्वयगतं कोष्ठद्वयं हस्तौ, तदधः स्थितं कुक्षी, तदधः स्थितं तु चरणौ, कुक्षिमध्यगतं कोष्ठं पृष्ठं, चरणमध्यगतं कोष्ठं पुच्छमिति विवेकः । एवमुक्तप्रकारस्य क्षेत्रादौ विभावितस्य कूर्मस्य मुखे पृष्ठे वा जपे होमे च सर्वार्थसिद्धिः । करयोः स्तनौ (?) । कोष्ठान्तराण्यनुपयुक्तानीति । कूर्मचक्रानावश्यकतोक्ता कतिपयेषु स्थलेषु ।

यथा—“ कुरुक्षेत्रे प्रयागे च गङ्गासागरसंगमे ।
महाकाले च काश्यां च दीपस्थानं न चिन्तयेत् ” इति ॥

दीपस्थानोपलक्षितत्वात्कूर्मचक्रमपि दीपस्थानमित्युक्तम् ।

इह चक्रे चोक्तेषु कोष्ठेषु रिपुस्थानं विचिन्त्य तत्त्यागपूर्वमवशिष्टमित्रस्थानमुपादेयम् ।

अरिमित्रविचारो यथा—

“ अद्वयस्य थकारेण ठकारस्यापि तेन च[4] ।
लृद्वयस्य प्र(प)कारेण पकारस्यापि तेन च ॥
औद्वयस्य षकारेण षकारस्यौयुगेन च ।
जकारस्य टकारेण ञकारस्य खकारतः ॥
उकारस्य लकारेण फकारस्य[5] धकारतः ।
भकारस्य तु रेफेण यकारस्य सकारतः ॥
अरित्वमेषां वर्णानामन्येषां मित्रभावना ” इति ।

---

१ क. °कृततले । २ क. °र्गानष्ट वर्गान° । ३ क. °यं द्वयं च । ४ ख. च । लृद्व° । ५ ख. °स्य धका° ।

पुरश्चरणारम्भात्प्राङ्मन्त्रसिद्ध्यर्थमयुतत्रयं गायत्रीजपः कार्यः ।
तदुक्तं मन्त्रकौमुद्याम्—

"सर्वमन्त्रप्रसिद्ध्यर्थं गायत्रीं त्र्ययुतं जपेत्" इति ।

आसनविधेरावश्यकत्वमुक्तं सिद्धान्तशेखरादौ—

"आसनं प्रोक्ष्य संपूज्य जपं तत्र समाचरेत्" इति ।

तत्र तस्मिन्नासने ।

आसनमाह नारदः—"कुशाजिनाम्बरैर्युक्तं चतुरङ्गुलमूर्ध्वतः ।
चतुरश्रं द्विहस्तं च सुदृढं मृदु निर्मलम् ॥
आसनं कल्पयित्वा तु जपकर्म समारभेत्" इति ।

अजिनान्याह वैशम्पायनः—

"सर्वसिद्ध्यै व्याघ्रचर्म ज्ञानसिद्ध्यै मृगाजिनम् ।
वस्त्रासनं रोगहरं वेत्रजं श्रीविवर्धनम् ॥
कौशेयं पौष्टिकं प्रोक्तं कम्बलं दुःखमोचनम्" इति ।

वस्त्रमाविकं न तु कार्पासमयम् ।

"आसने कार्पासमये जपो भवति निष्फलः" ।

इति ब्रह्मयामले [कार्पासमय]वस्त्रासने दोषश्रवणात् ।
भूतशुद्धिरप्यवश्यं कर्तव्या ।

"भूतशुद्धिविहीनेन कृता पूजाऽभिचारवत् ।
विपरीतं फलं दद्यादभक्त्या पूजने यथा" ॥

इति कुम्भसंभवेन तदकरणे दोषस्योक्तत्वात् ।
प्राणप्रतिष्ठापनमप्युक्तं सारसंग्रहे—

"भूतशुद्धिं विधायेत्थं ततो वै स्थापयेदसून्" इति ।

असून्प्राणान् ।
अन्तर्मातृकाबहिर्मातृकान्यासावपि तत्रैव—

"कृत्वाऽन्तर्मातृकान्यासं बहिर्न्यासं ततश्चरेत्" इति ।

बहिर्न्यासो बहिर्मातृकान्यासः ।
न्यासस्याऽऽवश्यकत्वमुक्तं गौतमीये—

"ध्यानं जपार्चनाहोमाः[1] सिद्धमन्त्रकृता अपि ।
अङ्गविन्यासविधुरा न दास्यन्ति फलान्यमी" इति ॥

---

१ क. °र्चनहो° ।

कपिलपञ्चरात्रे—"ऋषिच्छन्दोदेवतानां विन्यासेन विना यदा ।
जपः संसाधितोऽप्येष तत्र तुच्छफलं भवेत्" इति ॥

## अथ मुद्राः ।

तत्र बहिर्न्यासमुद्रा दक्षिणामूर्तिसंहितायाम्—

"पुष्पैरनामया वाऽपि मनसा वा न्यसेदणून्" इति ॥

अत्रैवं व्यवस्था । पुष्पैर्देवतामूर्तौ । अनामया स्वदेहे । मनसा मूलाधारादिचक्रेषु, तत्र करस्पर्शासंभवात् ।

अनामया साङ्गुष्ठया—"अङ्गुष्ठानामिकाभ्यां तु न्यासः सर्वत्र संमतः"।

इति पद्यवाहिनीवचनात् ।

अङ्गन्यासमुद्रास्तु तन्त्रराजादौ—

"प्रसारितमनङ्गुष्ठं तर्जन्यादिचतुष्टयम् ।
हृदि मूर्धनि चाङ्गुष्ठहीनो मुष्टिः शिखातले ॥

चकाराद्धृदये देवमूर्धनि ।

स्कन्धमारभ्य नाभ्यन्ताद्दशाङ्गुलयस्तु वर्मणि ।
तर्जन्यादित्रयं नेत्रत्रये नेत्रद्वये द्वयम् ॥
प्रसारिताभ्यां हस्ताभ्यां कृत्वा तालत्रयं सुधीः ।
तर्जन्यङ्गुष्ठयोरग्रे स्फालयन्बन्धयन्दिशः ॥
एषाऽस्त्रमुद्रा संप्रोक्ता विष्णोरेताः प्रकीर्तिताः" इति ।

ऋष्यादिन्यासमुद्रा अपि तत्रैव—

"ऋषिच्छन्दोदेवतानां न्यासे त्वङ्गुलयः स्मृताः ।
चतस्रोऽङ्गुष्ठरहिता इति विद्वत्प्रभाषितम्" इति ॥

अथाऽऽवाहन्यादिमुद्राः—

"हस्ताभ्यामञ्जलिं बद्ध्वाऽनामिकामूलपर्वणोः ।
अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी मता ॥
अधोमुखी त्वियं चेत्स्यात्स्थापनीति निगद्यते ।

इयमावाहनी मुद्राऽधोमुखी चेत्स्थापनी मुद्रा भवेदित्यर्थः । एतेनैव ज्ञायते आवाहनी मुद्रोत्तानहस्तेति ।

उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात्संनिधापनी ।
अन्तः प्रवेशिताङ्गुष्ठा सैव संरोधिनी मता ॥

**अङ्गुष्ठगर्भमुष्टिद्वयं संरोधिनीत्यर्थः ।**

उत्तानमुष्टियुगुला संमुखीकरणी भवेत् ।

**उत्तानौ मुष्टी संमुखीकरणी मुद्रेत्यर्थः ।**

देवताङ्गे षडङ्गानां न्यासः स्यात्सकलीकृतिः ।

**सकलीकरणी मुद्रेत्यर्थः ।**

संनिरोधेन मुद्रायास्तर्जन्यौ सरले यदा ।
अवगुण्ठनमुद्रेयमभितो भ्रामिता मता ॥
अन्योन्यग्रथिताङ्गुष्ठा प्रसारितपराङ्गुलिः ।
महामुद्रेयमुदिता परमीकरणी प्रिये ॥

**करयोरङ्गुष्ठौ संग्रथ्येतराङ्गुलीः प्रसारयेदिति महामुद्रेत्यर्थः ।**

**इयमेव परमीकरणीत्युच्यते ।**

वामाङ्गुलीनां मध्येषु दक्षिणा अङ्गुलीरथ ।
नियोज्य तर्जनीं दक्षां मध्यया वामया तथा ॥
दक्षमध्यमया वामां तर्जनीं च नियोजयेत् ।
वामयाऽनामया दक्षां कनिष्ठां विनियोजयेत् ॥
दक्षयाऽनामया वामां कनिष्ठां च नियोजयेत् ।
विहिताऽधोमुखी चैषा धेनुमुद्रा प्रकीर्तिता ॥

**इयमेवामृतीकरणीत्युच्यते ।**

कनिष्ठानामयोः पृष्ठे स्यादङ्गुष्ठस्तु तर्जनी ।
कुटिला मध्यमा त्वृज्वी मुद्राऽसावङ्कुशाभिधा ॥

**ऋज्वीं मध्यमां कृत्वा तर्जनीं मध्यम(मा)पर्वणि संयोज्याऽऽकुञ्चयेदित्यर्थः ।**

वामाङ्गुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना ।
कृत्वोत्तानं तथा मुष्टिमङ्गुष्ठं तु प्रसाद(र)येत्[1] ॥
वामाङ्गुल्यस्तथाऽऽश्लिष्टाः संयुक्ताः सुप्रसारिताः ।
दक्षिणाङ्गुष्ठके लग्ना मुद्रा शङ्खस्य भूतिदा " इति ॥

" दक्षस्यानामिकाङ्गुष्ठमध्यमाग्राणि योजयेत् ।
शिष्टे द्वे उत्थिते कुर्यान्मृगमुद्रेयमीरिता " इति ॥

---

१ ङ. प्रसाचरेत् ।

मुद्राशब्दार्थस्तन्त्रसारे—

" मुदं स्वरूपलाभाय देहद्वारेण चाऽऽत्मनः।
या ह्यर्पयन्त्ययत्नेन मुद्रास्ताः शक्तयो मताः॥
मोचयन्ति ग्रहादिभ्यः पापौघं द्रावयन्ति च।
मोचनं द्रावणं यस्मान्मुद्रा शास्त्रेषु वर्णिता " इति॥

जपदेशो वायवीयसंहितायाम्—

" सूर्यस्याग्नेर्गुरोरिन्दोर्दीपस्य ज्वलितस्य वा।
विप्राणां वा गवां वाऽपि संनिधौ शस्यते जपः॥
अथवा निवसेत्तत्र यत्र चित्तं प्रसीदति।
गृहे जपः समः प्रोक्तो गोष्ठे दशगुणस्तु सः॥
आरामे च तथाऽरण्ये सहस्रगुण उच्यते॥
अयुतं पर्वते पुण्ये नद्यां लक्षगुणस्तु सः।
कोटिं देवालये प्राहुरनन्तं शिवसंनिधौ " इति॥

शिवग्रहणं स्वेष्टदेवोपलक्षणम्।

योगयाज्ञवल्क्योऽपि—" अग्न्यगारे जलान्ते वा जपेद्देवालयेऽपि वा।
पुण्यतीर्थे गवां गोष्ठे द्विजक्षेत्रेऽथवा गृहे " इति॥

शङ्खोऽपि—" गृहे त्वेकगुणं जप्यं नद्यादौ द्विगुणं स्मृतम्।
गवां गोष्ठे दशगुणमग्न्यगारे शताधिकम्॥
सिद्धतीर्थेषु क्षेत्रेषु देवतायाश्च संनिधौ।
सहस्रशतकोटीनामनन्तं विष्णुसंनिधौ " इति॥

विष्णुरिति स्वेष्टदेवोपलक्षणम्।

कूर्मपुराणेऽपि—" गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं यतः।
एकान्ते तु शुभे देशे तस्माज्जप्यं सदा चरेत् " इति॥

## अथ जपमाला।

सा त्रिविधा। मातृकाक्षरमयी, रुद्राक्षादिमणिमयी, दक्षिणकरपर्वमयी चेति।

तत्र प्रथमामाह सारसंग्रहकारः—

" अकारादिक्षकारान्तैर्बिन्दुवन्मातृकाक्षरैः।
अनुलोमविलोमस्थैः क्लृप्तया वर्णमालया॥

---

१ ख. ग. °वग्रह[ः] स्वे°।

प्रत्येकं वर्णयुङ्मन्त्रा जप्ताः स्युः क्षिप्रसिद्धिदाः ।
वैरिमन्त्रा अपि नृणां सुसिद्धाद्यास्तु किं पुनः " इति ॥

तत्प्रकारस्तन्त्रप्रकाशे—" ब्रह्मनाडीगतानादिक्षान्तवर्णान्विभाव्य च ।
अर्णं बिन्दुयुतं कृत्वा स्वेष्टमन्त्रं जपेत्सुधीः ॥
अकारादिषु संयोज्य तथा कादिषु च क्रमात् ।
क्षार्णं मेरुमथो तत्र कल्पयेज्जगदीश्वरि ॥
तदा लिपिर्भवेदक्षमालार्धशतसंख्यया ।
अनया सर्वमन्त्राणां जपः सर्वार्थसाधकः ॥
क्षकारं मेरुसंधाने लकारादिविलोमतः ।
एकैकान्तरितं मन्त्रैर्जपेदेवं फलप्रदम् " इति ॥

यदा मात्या(त्य)हिकोऽष्टोत्तरसहस्रमष्टोत्तरशतं वा जपः कार्यस्तदा—

" वर्गाष्टकविभेदेन भवेदष्टोत्तरं शतम् " ।

इति प्रकारो ज्ञेयः । अक्षमालाशब्दस्त्वत्रैव मुख्यः ।

उक्तं च शारदातिलके—

" आदिक्षान्तार्णयोगित्वादक्षमालेति कीर्तिता " इति ।

ज्ञानार्णवेऽपि—" अकारः प्रथमो देवि क्षकारोऽन्त्यस्ततः परम् ।
अक्षमालेति विख्याता मातृकावर्णरूपिणी " इति ॥

वर्गाष्टकजपस्तूद्दिष्टशतादिसंख्यावसाने कार्यः ।

तदुक्तं मातृकार्णवे—" आरभ्याकारमादौ मनसि परिजपेन्मातृकां सावसानां
धृत्वा तच्चावसानं पुनरपि च पठेद्दान्तमेवावरोहे ।
ळान्तानष्टौ च वर्गांस्तदनु परिजपेद्भूय एवावसाने
ह्यान्तं संहारमुक्तं पशुपतिगदिता यामले मालिकेयम्" इति॥

धृत्वा मेरुस्थाने । अवसानं क्षकारः । ळान्तान्कचटतपयशळाख्यान् । तदनूद्दिष्टसंख्यासमाप्त्यनन्तरम् । अवसाने, उद्दिष्टशतादिसंख्यावसाने । एवोऽवधारणे ।

१ क. वर्णापु° । २ ग. नृणां । ३ ङ. मन्त्रं जपे° । ४ ङ. °दाऽष्टो° । ५ क. °ष्टकाजप उद्दि° । ६ क. ख. ग. °पे मातृ° । ७ ख. ग. °हे । लान्ता° । ८ क. ख. ग. °रः । लान्ता° । ९ क. ख. ग. °शलाख्या° ।

द्वितीया तु सारसंग्रहे—

" अथ वक्ष्येऽक्षमालाया विधानं मन्त्रिकाम्यया।
पञ्चविंशतिभिः प्रोक्ता मणिभिर्मुक्तिदायिनी॥
त्रिंशद्भिर्धनदा सप्तविंशत्यक्षैस्तु सर्वदा।
अभिचारकरी पञ्चदशभिः कल्पिता तु सा॥
चतुष्पञ्चाशदक्षैः सा काम्यकर्मसु सिद्धिदा।
अष्टोत्तरशतैः क्लृप्ता सर्वाभीष्टप्रदा मता॥
मणयः शङ्खसंभूताः प्रोक्ता लक्ष्मीप्रदायकाः।
भुक्तिप्रदाः स्फटिकजा पद्माक्षाः पुष्टिवर्धनाः॥
भुक्तिमुक्तिप्रदाः प्रोक्ता रुद्राक्षाः सर्वसिद्धिदाः।
पुत्रजीवभवाः पुत्रपशुधान्यसमृद्धिदाः॥
विद्रुमोत्थास्तु मणयो धनसौभाग्यवश्यदाः।
मौक्तिका मुक्तिदाः प्रोक्ताः सर्वसंपत्समृद्धिदाः॥
पापापहाः कुशमयाः कामदाः स्वर्णरूप्यजाः " इति।

हारीतः[1]—" शङ्खरूप्यमयी माला काञ्चनी वनजोत्पलैः।
पद्माक्षकैश्च रुद्राक्षैर्विद्रुमैर्मणिमौक्तिकैः॥
राजतेन्द्राक्षकैर्माला तथैवाङ्गुलिपर्वभिः।
पुत्रजीवमयी माला शस्ता वै जपकर्मणि " इति॥

गौतमोऽपि—" अङ्गुल्या जपसंख्यानमेकमेकमुदाहृतम्।
रेखयाऽष्टगुणं पुत्रजीवैर्दशगुणाधिकम्॥
शतं स्याच्छङ्खमणिभिः प्रवालैश्च सहस्रकम्।
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते॥
पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते।
कुशग्रन्थ्या च रुद्राक्षैरनन्तफलमुच्यते " इति॥

गोपालस्य तु पद्माक्षमालाऽतीव प्रशस्ता।

" मौनी शान्तः शुचिर्दान्तः पद्मबीजाक्षमालया।
जपेत्समाहितमना गोपालस्य मनुं सदा " इति गौतमोक्तेः।

---

१ ड. हारितः।

**मिश्रणे निषेध उत्तरतन्त्रे**—" इन्द्राक्षैर्यदि जप्येत रुद्राक्षैः स्फाटिकैस्तथा ।
नान्यन्मध्ये प्रयोक्तव्यं पुत्रजीवादिकं च यत् ॥
यद्यन्यत्तु प्रयुञ्जीत मालायां जपकर्मणि ।
तस्य कामं च मोक्षं च न ददाति प्रियंकरि ॥
जन्मान्तरे जायतेऽसौ वेदवेदाङ्गपारगः ।
मिश्रीभावं ततो याति चण्डालैः पापकर्मभिः " इति ॥

**मणिसंख्यामाह प्रजापतिः**—"अष्टोत्तरशतं कुर्याच्चतुष्पञ्चाशिका[1] तथा ।
सप्तविंशतिका[2] कार्या ततो नैवाधिका हिता ॥
अष्टोत्तरशता माला उत्तमा सा प्रकीर्तिता ।
चतुष्पञ्चाशिका वत्स मध्यमा सा प्रकीर्तिता ॥
अधमा प्रोच्यते नित्यं सप्तविंशतिसंख्यया " इति ।

**अयुतादिसंख्यजपे तु**—" न खण्डां कारयेन्मालां जपकर्मणि मानवः " ।

**इति मालाखण्डननिषेधादेतासां मालानां जपसाधनत्वासंभवेन शतसंख्यमणिघटितमालाया विधानाभावेऽप्यनायत्या(पत्त्या) शतसंख्यमणिघटितैव मालाऽत्र कल्पनीया ।**

" अयुतादिजपे प्रोक्ता मालाऽक्षैः शतसंख्यकैः " इति **वचनादिति केचित् ।**

**अन्ये तु—अयुतादिसंख्यजपे शतसंख्यवर्णमालैव द्रष्टव्या न तु मणिमयी । एतस्या मालाया अखण्डाया अत्रासंभवात् । शतसंख्यमणिमालाप्रतिपादकवचनस्य निर्मूलत्वाच्चेत्याहुः । अष्टोत्तरसहस्रजपे तु वर्णमयी करमयी वा मालेति । सा चाग्रे वक्ष्यते ।**

**गौतमः**—" अङ्गुष्ठं मोक्षदं विद्यात्तर्जनी शत्रुनाशनी ।
मध्यमा धनकामायानामिका पौष्टिकी तथा ॥
कनिष्ठा रमणी प्रोक्ता जपकर्मणि शोभना ।
अङ्गुष्ठेन जपञ्ज(पेज्ज)प्यमन्यैरङ्गुलिभिः सह ॥
अङ्गुष्ठेन विना जप्यं कृतं तदफलं भवेत् " इति ।

**शैवागमे**—" तर्जन्या न स्पृशेत्सूत्रं कम्पयेन्न च घर्षयेत् ।
न स्पृशेद्वामहस्तेन करभ्रष्टां न कारयेत् ॥
अक्षाणां चालनेऽङ्गुष्ठेनान्यमक्षं न संस्पृशेत् ।

---

१ ङ. °शिकां त° । २ ङ. °तिकां का° ।

जपकाले सदा विद्वान्मेरुं[1] नैव विलङ्घयेत् ॥
परिवर्तनकाले च संघट्टं नैव कारयेत्।
कलिः खटखटाशब्दे दोलमाने चलन्मतिः ॥
चलिते चैव विद्वेषः स्फुटिते व्याधिसंभवः।
हस्तच्युते महाविघ्नः सूत्रच्छेदे विनश्यति" इति ॥

**चलिते मध्यमातोऽङ्गुल्यन्तरगते। स्फुटिते मणौ। सूत्रच्छेदे गुणच्छेदेऽपीत्यर्थः।**

**तथा**—"कांसे क्षुते च जृम्भायामेकमावर्तनं त्यजेत्।
प्रमादात्तर्जनीस्पर्शो भवेदावर्तनं त्यजेत्[2] ॥

**आवर्तनं मन्त्रस्य।**

जपे निषिद्धसंस्पर्शे क्षालयित्वा पुनर्जपेत्" **इति।**

**अन्यच्च**—"उल्लङ्घिते तथा मेरौ पतिते वाऽक्षसूत्रके।
प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुध्यति" **इति ॥**

(***अन्यच्च**—"गलिता चेत्करान्माला छिन्ना स्पृष्टाऽथवा भवेत्।
प्रक्षाल्य तां पञ्चगव्यैरभिमृश्य ततस्तु ताम् ॥
अष्टोत्तरशतं मूलमन्त्रस्य जपमाचरेत्" **इति।**)

## अथैतस्या मालायाः संस्कारकालः।

**स च योगिनीतन्त्रे**—"द्वादश्यां वैष्णवी माला कर्तव्या साधकोत्तमैः।
मन्त्रज्ञैर्विष्णुभक्तैस्तु दिव्यभागे प्रयत्नतः" **इति ॥**

**दिव्यभागः पूर्वाह्णः।**

**सूत्रमपि तत्रैव**—"कार्पासैर्वैष्णवी माला पट्टसूत्रैरथापि वा" **इति ॥**

**कार्पाससूत्रे विशेषस्तत्रैव**—"ततो द्विजेन्द्रपुण्यस्त्रीनिर्मितं ग्रन्थिवर्जितम्।
त्रिगुणं त्रिगुणीकृत्य सूत्रं प्रक्षाल्य यत्नतः" **इति।**

(**+तन्त्रान्तरे**—"ब्राह्मण्या च सुवासिन्या तदभावेऽन्यवर्णया।
कार्पासनिर्मितं सूत्रं त्रिगुणं त्रिगुणीकृतम् ॥
प्रक्षाल्य तत्र मालायां मणीन्युक्त्या नियोजयेत्" **इति ॥**

**अन्यच्च**—"सूत्रान्तरेषु तु स्थौल्यमानयोर्नियमो[3] न हि" **इति।**

**कार्पासव्यतिरिक्तेषु सूत्रेषु[4]।**

* धनुश्चिह्नान्तर्गतो ग्रन्थो ङ. पुस्तके नास्ति। + धनुश्चिह्नान्तर्गतो ग्रन्थो ङ. पुस्तके नास्ति।

१ क. ख. ग. विद्यान्मे°। २ ख. °त्। ज°। ३ क. °यमा न। ४ ख. °षु। मालार°।

## अथैतस्या मालायाः संस्कारः ।)

**मालारचनाप्रकारः पाद्मे**—" गोपुच्छावयवाकारामक्षमालां विधाय च ।
मेर्वाख्यं योजयेदक्षमेकमूलाग्रसूत्रके ॥
ग्रन्थिं कुर्यात्तदग्रेण कीर्तिता चाक्षमालिका " **इति** ॥

**वाराहसंहितायाम्**—" अक्षान्यथोक्तान्संहृत्य विविधान्दोषवर्जितान् ।
क्षालितान्पञ्चगव्येन पञ्चवेदान्तविद्यया ॥

**सद्योजाताद्यैः पञ्चब्रह्ममन्त्रैरित्यर्थः** ।

आरोपयेद्धेमसूत्रे द्विगुणत्रिगुणीकृते ।
सूत्रे वा राजते क्षौमे शणकेशादिवर्जिते ॥
कार्पासे वा यथालाभं क्षालिते परिशोधिते ।
पृष्ठेन पृष्ठभागं च मुखेन मुखमेव च ॥
परस्परं तु संनद्धा मणयः सदृशाः शुभाः ।
सूत्रेण वा सुवर्णस्य मध्ये मध्ये च सान्तराः" **इति** ॥

**तन्त्रचिन्तामणौ**—" कुशोदकैः पञ्चगव्यैर्मालां प्रक्षालयेत्सुधीः ।
अश्वत्थपत्रनवके मालां संस्थापयेत्ततः ॥
मातृकास्तत्र विन्यस्य सद्योजातादिपञ्चभिः ।
अभिमन्त्र्य ततो मालां पञ्चगव्येन वारिभिः ॥
प्रथमेन तु मन्त्रेण तां मालां क्षालयेत्पुनः ।
उद्वर्तयेद्द्वितीयेन चन्दनेन सुगन्धिना ॥
गुग्गुल्वगरुभिर्मालां तृतीयेन सुधूपयेत् ।
कस्तूरीचन्दनाद्यैस्तु चतुर्थेनानुलेपयेत् ॥
सर्वान्मणीन्पञ्चमेन मन्त्रेण त्वभिमन्त्रयेत् ।
तृतीयेन ततो मेरुं शतवारं हि मन्त्रयेत् ॥
ततस्तैः पञ्चभिर्मन्त्रैर्मालां सम्यक्प्रपूजयेत् " **इति** ।

**अन्यत्रापि**—" मणिमेकैकमादाय सूत्रे तत्र नियोजयेत् ।
मुखे मुखं तु संयोज्य पृष्ठे पृष्ठं तु योजयेत् ॥
प्रोक्तसंख्यान्यमेकाक्षं मेरुत्वेनाग्रतो न्यसेत् ।
एकैकमणिमध्ये तु ग्रन्थिबन्धं प्रकल्पयेत् ॥
मातृकास्तत्र विन्यस्य पञ्चगव्यैः समाहितः ।

गायत्र्या मूलमन्त्रेण सद्योजातादिभिस्तथा ॥
प्रक्षाल्य तैरेव मन्त्रैरभिमन्त्र्य सुधूपयेत्" इति ॥

(*ग्रन्थान्तरे तु विशेषान्तरमुक्तं मालासंस्कारे—

"प्राणानां स्थापनं कुर्यात्तत्राऽऽवाह्येष्टदेवताम्।

इष्टदेवतां यदीयमन्त्रजपस्ताम्।

मूलेनाभ्यर्च्याभिमन्त्र्य मातृकार्णैश्च मूलतः।

मातृकावर्णैर्मूलेन च मालामभिमन्त्रयेत्यर्थः।

आज्याहुतीरष्टशतं मूलेन जुहुयात्ततः।
संपाताज्यं तु मालायां प्रत्याहुति विनिक्षिपेत् ॥
होमाशक्तौ तु मूलेन मालाया अभिमन्त्रणम्।
होमसंख्याद्विगुणितसंख्यया साधकश्चरेत्" इति ॥)

तन्त्रान्तरे—"जपकाले प्रयोक्तव्या नियमेन सुमेधसा।
परदृष्टिगता माला निष्फला जपकर्मणि ॥
जपकालेऽक्षमालां तु गुरवेऽपि न दर्शयेत्।
मध्यमानामिकाङ्गुष्ठैर्गृहीत्वा जपमाचरेत्" इति ॥

उत्तरतन्त्रे—"जपादौ पूजयेन्मालां तोयैरभ्युक्ष्य यत्नतः।
निधाय मण्डलस्यान्तः सव्यहस्तगतां च वा।
इष्टमन्त्रेण मालायाः प्रोक्षणं परिकीर्तितम् ॥
ॐ मां माले महामाये सर्वशक्तिस्वरूपिणि।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥
पूजयित्वा ततो मालां गृह्णीयाद्दक्षिणे करे।
बीजं गाणपतं पूर्वमुच्चार्य तदनन्तरम् ॥
अविघ्नं कुरु माले त्वमिति तां प्रार्थयेद्द्विजः।
मालां स्वहृदयासन्ने धृत्वा दक्षिणपाणिना ॥
देवीं विचिन्तयञ्जाप्यं कुर्याद्वामेन न स्पृशेत्।
जपान्ते तां नमस्कृत्य निदध्यान्मस्तके ततः ॥
त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम।
शिवं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा ॥

* धनुश्चिह्नान्तर्गतो ग्रन्थस्त्रुटितो ड. पुस्तके।

१ ख. ड. 'क्षाल्यैतं'। २ ख. 'णितं सं'। ग. 'णितः सं'।

पुष्करं शिखिबीजस्थं सूक्ष्मसूक्ष्मान्वितं भवेत्[1]।
आकाशशशिसंयुक्तं सिद्ध्यै हृदयसंयुतम् ॥
एष पञ्चाक्षरो मन्त्रो मालायाः परिकीर्तितः ।
ग्रहणे स्थापने चैव पूजने विनियोजयेत् " इति ॥

पुष्करं हकारः । शिखी रेफः । सूक्ष्मसूक्ष्मा "ईकारः" । आकाशशशिभ्यां बिन्द्वर्धचन्द्राभ्यां युतम् । सिद्ध्यै स्वरूपम् । हृदयं नम इति । ( * जपान्ते तां मालां न धारयेत् ।

तदुक्तं तत्रैव—" न धारयेत्करे मूर्ध्नि कण्ठे वा जपमालिकाम् ।
जपकाले जपं कृत्वा सदा शुद्धस्थले क्षिपेत् " इति ॥

अन्यच्च(श्च)विशेषस्तन्त्रान्तरे—

" यन्मन्त्रस्य जपार्थं सा(स्या)द्या माला संस्कृता तया ।
तन्मन्त्रस्यैव कुर्वीत जपं नान्यस्य कस्यचित् " इति ।

अन्योऽपि तन्त्रान्तरे विशेषः—

" शिवमन्त्रेण संग्रथ्य शक्तिमन्त्रं जपेदपि ।
शक्तिमन्त्रेण संग्रथ्य शिवमन्त्रं जपेच्छिवे ॥
ध्रुवेण मातृकाभिर्वा ग्रथ्यन्ते मणयो यदि ।
तदा सर्वेऽभिजप्तव्या मनवो मालया तया " इति । ध्रुवः प्रणवः।

" प्रमादाद्गलिता हस्तान्माला छिन्नाऽथवा भवेत् ।
स्पृष्टा वा स्यान्निषिद्धेन मूलमष्टशतं जपेत् " इति ॥ )

## अथ तृतीया करमाला ।

" मध्यमाया मध्यमूलपर्वणी त्रिदशेश्वरि ।
मेरुं कृत्वा जपं कुर्यात्तर्जनीमूलकावधि ॥
अनामामध्यपर्वादि प्रादक्षिण्यक्रमेण वै " इति ।

( + अष्टोत्तरशताष्टोत्तरसहस्रादिसंख्योपयुक्ता करमाला भैरवीतन्त्रे—

" अनामामध्यमारभ्य कनिष्ठानुक्रमेण तु ।
मध्यमामूलपर्यन्ता करमाला प्रकीर्तिता " इति ॥

गौतमोऽप्याह—" कनिष्ठानामिकाङ्गुष्ठमध्यमाभिर्जपेत्सदा " इति ।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो ङ. पुस्तके । + धनुश्चिह्नान्तर्गतो ग्रन्थो ङ. पुस्तके नास्ति ।

---

१ ङ. °क्ष्माश्रितं । २ ङ. सिद्धौ ।

अनामामध्यमूलकनिष्ठामूलमध्याग्रानामाग्रमध्यमाग्रमध्यमूलपर्यन्तमिति नवसु पर्वसु गणनायां कृतायां नववारं मन्त्रजपो भवति । एवं द्वादशवारं पुनः पुनरावर्तनेनाष्टोत्तरशतजपो भवति । द्वादशोत्तरशतावृत्त्याऽष्टोत्तरसहस्रजपो भवति । इत्थमयुतादिष्वप्यूहनीयम् । )

## अथ जपविधिः ।

कपिलपञ्चरात्रे—"एकचित्तः प्रशान्तात्माऽप्यक्षसूत्रकरः शुचिः ।
भुग्नग्रीवोन्नतः शान्तः कण्डून्मीलनवर्जितः ॥
सविसर्गं समात्रं च सबिन्दुं साक्षरं स्फुटम् ।
न द्रुतं नापि विश्रान्तं क्रमान्मन्त्रं जपेत्सुधीः" इति ॥

व्यासः—"न च क्रामन्न च हसन्न पार्श्वमवलोकयन् ।
नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदा पादमाक्रम्य न चैव हि तथा करौ ।
न चासमाहितमना न च संश्रावयञ्जपेत्" इति ॥

बौधायनोऽपि—"नाभेरधस्तु संस्पर्शं कर्मयुक्तो हि वर्जयेत्" इति ।

व्यासोऽपि—"जपकाले न भाषेत व्रतहोमादिकेषु च ।
एतेष्वेवावसक्तस्तु यथा गच्छन्द्विजोत्तमः ॥
अभिवाद्य ततो विप्रं योगं क्षेमं च कीर्तयेत्" इति ।

गौतमोऽपि—"क्रोधं मोहं क्षुतं निद्रां निष्ठीवनविजृम्भणे ।
दर्शनं च श्वनीचानां वर्जयेज्जपकर्मणि" इति ॥

नृसिंहपुराणे—"त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत ।
वाचिकश्च उपांशुश्च मानसस्त्रिविधः स्मृतः ॥
त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तरः" इति ।

वाचिकोपांशुत्वयोर्लक्षणं पुराणेऽभिहितम्—

"यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः ।
मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः ॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् ।
अपरैरश्रुतः किंचित्स उपांशुजपः स्मृतः" इति ॥

---

१ क. 'यनस्तु—ना' । २ ड. 'वशक्त' ।

विश्वामित्रेण मानसस्य लक्षणमुक्तम्—

" धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ।
शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः " इति ॥

त्रयाणां तारतम्यं च तेनैवोक्तम्—

" उत्तमं मानसं जप्यमुपांशु मध्यमं स्मृतम् ।
अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजः(जाः) ॥
वाचिकस्यैकमेकं स्यादुपांशु शतमुच्यते ।
सहस्रं मानसः प्रोक्तो मन्वत्रिभृगुनारदैः " इति ॥

जपलक्षणमाह कुम्भसंभवः—

" गुरोर्लब्धस्य मन्त्रस्य शश्वदावर्तनं हि यत् ।
अन्तरङ्गाक्षराणां च न्यासपूर्वो जपः स्मृतः " इति ॥

अङ्गेति सुतीक्ष्णसंबोधनम् । अक्षराणामन्तरावर्तनं जप इति संबन्धः ।

वायवीयसंहितायाम्—" एवमुक्तविधानेन विलम्बत्वरितं विना ।
उक्तसंख्यं जपं कुर्यात्पुरश्चरणसिद्धये ॥
देवतागुरुमन्त्राणामैक्यं संभावयन्धिया ।
जपेदेकमनाः प्रातःकालान्मध्यंदिनावधि ॥
यत्संख्यया समारब्धं तत्कर्तव्यं दिने दिने ।
यदि न्यूनाधिकं कुर्याद्व्रतभ्रष्टो भवेन्नरः " इति ॥

अयं च जपो दिवैव कार्यः ।

" दिवा चैव जपं कुर्यात्पौरश्चरणिको विधिः " ।

इति फेत्कारिणीतन्त्रे दिवापदाभिधानात् । ' जपं रात्रौ विवर्जयेत् ' इति कुम्भसंभवेन रात्रिजपनिषेधाच्च ।

देशकालाद्युपद्रवसंभावनायां नायं नियमः ।

" यत्संख्यया समारब्धं प्रत्यहं तावदेव हि ।
जपकर्म प्रकुर्वीतोपप्लवे नियमो नहि " इति तन्त्रान्तरवचनात् ॥

तत्रापि चतुर्थभागपर्यन्तमेव जप्त(पित)व्यं न पञ्चमभागे ।

" राक्षसी नाम वेला सा गर्हिता सर्वकर्मसु " ॥

१ ख. ग. °म्—' धिया य° । ड. °म्—'विधाय° । २ ख. ग. ङ. °सव्यम् । प° । ३ ख. ग. ङ. °भागस्य " रा° ।

इति मत्स्यपुराणे निन्दितत्वात्।

वैशम्पायनः—"नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलङ्घयेत्।
दिवसातिक्रमात्पुंसो मन्त्रसिद्धिर्भवेन्न हि॥
यावत्संख्यं जपेदह्नि पूर्वस्मिंस्तावदेव तु।
दिनान्तरेऽपि प्रजपेदन्यथा सिद्धिरोधकृत्" इति॥

फेत्कारिणीतन्त्रे—"जपकाले यदा पश्येदशुचिं मन्त्रवित्तमः।
प्राणायामं ततः कृत्वा जपशेषं समापयेत्॥
यदा चैवं भवेन्मन्त्री स्वयमप्यशुचिः पुनः।
स्नात्वाऽऽचम्य यथापूर्वं न्यासं कृत्वा पुनर्जपेत्" इति॥

न्यासोऽधिकारसंपादकः। एतेन मूत्रोत्सर्गादावशुचित्वसंभवश्चेत्स्नानम-न्यथा प्राणायामकरषडङ्गन्यासान्कृत्वा शेषं समापयेदिति प्रतीयते।

कपिलपञ्चरात्रे—"विक्षेपादथवाऽऽलस्याज्जपहोमार्चनान्तरा।
उत्तिष्ठति तदा न्यासं षडङ्गं विन्यसेत्पुनः" इति॥

गौतमः—"ध्यानार्चनजपानां च प्राणायामास्त्रयस्त्रयः।
आद्यन्तयोर्विधीयन्ते नासिकापुटचारिणः" इति॥

योगयाज्ञवल्क्यः—"यदि वाग्यमलोपः स्याज्जपादिषु कदाचन।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्" इति॥

वैष्णव मन्त्र इदं विष्णुरिति।

संवर्तोऽपि—"लोकवार्तादिकं श्रुत्वा श्रुत्वा च पु(प)रुषं वचः।
संख्यां विना च यज्जप्तं तत्सर्वं निष्फलं भवेत्" इति॥

(+गौतमोऽपि—"गच्छतस्तिष्ठतो वाऽपि स्वेच्छया कर्म कुर्वतः।
अशुचेर्वा विना संख्यां तत्सर्वं निष्फलं भवेत्" इति॥)

नारदः—"संख्यापूर्तौ निजैर्द्रव्यैर्जपसंख्यादशांशतः।
यथोक्तकुण्डे जुहुयाद्यथाविधि समाहितः॥
अथवा प्रत्यहं जप्त्वा जुहुयात्तु दशांशतः" इति।

(*लक्षान्ते लक्षान्ते होमादि, इत्यपि तन्त्रान्तरे। होमाशक्तौ ब्राह्मणानां पुरश्चरणजपसंख्याद्विगुणो जप इति मुख्यः पक्षः। होमसंख्याद्विगुणो जप इति

---

+ एतच्चिह्नान्तर्गतो ग्रन्थो ङ. पुस्तकातिरिक्तपुस्तकेषु नास्ति। * धनुश्चिह्नान्तर्गतो ग्रन्थो ङ. पुस्तके नास्ति।

१ क. ग. न्यासष°। २ क. ग. °क्षान्तलक्षान्तहो°।

गौणः। क्षत्रियादीनां त्रिगुणादिजपः। एवं तर्पणेऽपि। द्विजभक्तस्य शूद्रस्य द्विजस्त्रीणां च होमप्रतिनिधिर्जप एव। तेषां होमे तु नाधिकारः। ब्राह्मणभोजनस्य तु न क्वापि प्रतिनिधिरिति कल्पसूत्रे द्रष्टव्यम्।) होमानन्तरं तर्पणादि कार्यम्।

तदुक्तं मन्त्रतन्त्रप्रकाशे—

" एवं होमं समाप्याथ तर्पयेद्देवतां जले।
आवाह्य तद्दशांशेन तर्पणादभिषेचनम्॥
तर्पयामि नमश्चेति द्वितीयान्तेष्टपूर्वकम्

द्वितीयान्तमिष्टं प्रकृतकर्मण इष्टदेवताया नाम गृहीत्वा तर्पयामि नम इति तर्पयेदित्यर्थः।

मूलान्ते तु पदं देयं सिञ्चामीत्यभिषेचने।
ततो नानाविधैरन्नैस्तर्पयेद्विजसत्तमान्॥
इष्टरूपान्समाराध्य तेभ्यो दद्याच्च दक्षिणाम्।
न्यूनं संपूर्णतामेति ब्राह्मणाराधनान्नृणाम्॥
देवताश्च प्रसीदन्ति संपद्यन्ते मनोरथाः " इति।

( *सर्वेऽपि मन्त्रा गुरुमुखादवगम्यैव जप्तव्या नान्यथा।

" पुस्तके लिखितान्मन्त्रानवलोक्य जपेत्तु यः।
स जीवन्नेव चाण्डालो मृतः श्वा वै भविष्यति "

इति सांख्यायनतन्त्रे गुरुमुखावगमं विना जपस्य निषेधात्।)

## अथ[2] प्रयोगः।

कर्ता सपत्नीकः सुस्नातः कृतनित्यक्रिय आदौ शरीरशुद्ध्यर्थमेनसो +गुरुलाघवानुसारेण सर्वप्रायश्चित्तं विधाय निर्विघ्नतासिद्ध्यर्थं विनायकशान्तिं ग्रहानुकूल्यार्थं ग्रहयज्ञं मन्त्रसिद्ध्यर्थमयुतत्रयं गायत्रीजपं च कृत्वा शुभे दिने शुचीन्मन्त्रवतो विप्रानाहूय तैरनुज्ञातो देशकालौ संकीर्त्य श्रीसंतानप्रदगोपालकृष्ण[3]प्रीतिपूर्वकमन्त्रसिद्ध्यर्थं पुरश्चरणमहं करि[4]ष्य इत्येवं श्रीसंतानप्रदगोपालकृष्णदेवतामन्त्रसिद्धिद्वारा संतानप्रदगोपालकृष्णदेवताप्रीत्यर्थं पुरश्चरणमहं

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति ङ. पुस्तके। + गौरवलाघवेत्यादि तु युक्तं पठितुम्।

---

१ ङ. 'न्त्रप्र'। २ ङ. च 'थ संतानप्रदगोपालमन्त्रप्र'। ३ ङ. च. 'ष्णदेवताम'। ४ ङ. 'रिष्ये। तत्राऽऽदौ निर्वि'।

करिष्य इत्येवं वा संकल्प्य निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं पुण्याहवाचनं[1] मातृकापूजनं नान्दीश्राद्धं[2] चोक्तरीत्या कुर्यात् ।

तत आचम्य प्राणानायम्य शुचौ देशे 'नवधा तां धरां कृत्वा' इत्यादि-विधिना कल्पिते स्थल आसनार्थं कुशा अजिनं चैलमिति क्रमादुपर्युपर्यास्तीर्य गायत्र्या मूलमन्त्रेण चाभ्युक्ष्य पृथ्वीतिमन्त्रस्य मेरुपृष्ठ ऋषिः कूर्मपृष्ठो[3] देवता सुतलं छन्दः । आसनोपवेशने विनियोगः । ॐ पृथ्वि त्वया धृता लोका० चाऽऽ-सनम् । अनन्तासनाय नमः । विमलासनाय नमः । पद्मासनाय नमः । कूर्मा-सनाय नमः । योगासनाय नमः । आधारशक्तिकमलासनाय नमः । मध्ये परमसुखासनाय नमः । इत्यासने प्राङ्मुख उपविश्य स्वस्तिकपद्मान्यतरासनं बध्नीयात् ।

तल्लक्षणे गौतमीतन्त्रे—

"जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायो वसेद्योगी स्वस्तिकं तत्प्रचक्षते ॥
ऊर्वोरुपरि विन्यस्य तथा पादतले उभे ।
पद्मासनमिति प्रोक्तं योगिनां हृदयंगमम्" इति ॥

ततः—"ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने ।
तिष्ठ देवि शिखाबन्धे[4] चामुण्डे ह्यपराजिते" ॥

इति चामुण्डां संप्रार्थ्य । स्वशिरसि–गुं गुरुभ्यो नमः । दक्षिणांसे–गं गणपतये नमः । वामे(वामांसे)[5]–दुं दुर्गायै नमः । दक्षिणजानुनि–क्षं क्षेत्रपालाय नमः । वामजानुनि–सं सरस्वत्यै नमः, इति नमस्कृत्य[6] । अम्, आत्मने नमः । सं सत्त्वात्मने नमः । रं रजआत्मने नमः । तं तमआत्मने नमः ।

"नमोऽस्त्वनन्ताय नमोऽस्तु वेधसे नमो वसिष्ठाय नमोऽस्तु शक्तये ।
पराशरायाथ नमोऽस्तु शाश्वते नमोऽस्तु ते सत्यवतीसुताय ।
नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः ।
आचार्यसिद्धेश्वरपादुकाभ्यो नमोऽस्तु लक्ष्मीपतिपादुकाभ्यः ।
नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।
यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमावृक्षि देवाः" इति नमस्कुर्यात् ।

१ ग. 'नं ना' । २ ङ. 'द्धं च करिष्य इति संकल्पोक्त' । ३ क. कर्मा । ४ ग. ङ. 'बद्धे चा' । ५ ख. ग. ङ. च. वामे । ६ ङ. 'मस्कुर्यात् । अं' ।

"अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥
अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ।
सर्वेषामविरोधेन ब्रह्मकर्म समारभे "

इत्यनेन वामपादपार्ष्णिघातत्रयेण पार्थिवान्विघ्नांस्तालत्रयेणाऽऽन्तरिक्षान्दिव्यदृष्ट्यवलोकनेन दिव्यान्विघ्नांश्चोत्सार्य "सर्वभूतनिवारणाय सशराय सशार्ङ्गाय सुदर्शनायास्त्रराजाय हुं फुट्" इति दिग्बन्धं विधाय परितोऽग्निप्राकारं विचिन्त्य भूतशुद्धिं कुर्यात् ।

सा यथा—मूलाधारस्थितां बिसतन्तुनिभां विद्युत्प्रभां प्रसुप्तभुजगाकारां सार्धत्रिवलयां स्वयंभूलिङ्गवेष्टिनीं कुण्डलिनीं ध्यात्वा मूलाधारात्प्रणवेन भुजंगीमिव तामुत्थाप्य प्रणवेनोर्ध्वमुखं विकसितं हृत्पद्मं कृत्वा तत्रत्यं जीवात्मानं षट्चक्रभेदक्रमेण ब्रह्मरन्ध्रं नीत्वा सहस्रदलगतबिन्दुरूपे परमात्मनि संयोज्य हंसः सोऽहमितिमन्त्रेण परमात्मनैक्यभावमापादयेत् ।

पादादिजानुपर्यन्तं पृथिवीमण्डलं चतुरश्रं स्वर्णवर्णं वज्रलाञ्छितं निवृत्तिकलं ब्रह्मदैवत्यं लंबीजयुक्तं ध्यायेत् ।

स्योनेत्यस्य मन्त्रस्य याज्ञिक्यो देवता उपनिषदो भूमिर्गायत्री । भूमिनमस्कारे विनियोगः । "ॐ स्योना पृथिवि भवा नृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः" । लं भूम्यै नम इति नमस्कुर्यात् । *ऋग्वेदिनां तु स्योना मेधातिथिर्भूमिर्गायत्री । भूमिनमस्कारे विनियोगः । "ॐ स्योना पृथिवि भवा नृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः" । लं भूम्यै नमः ।

जान्वादिनाभिपर्यन्तमम्बुमण्डलमर्धचन्द्राकारं शुभ्रवर्णं पद्मद्वयलाञ्छितं प्रतिष्ठाकलं विष्णुदैवत्यं वंबीजयुक्तं ध्यायेत् । अप्सु म इत्यस्य विश्वे देवा आपोऽनुष्टुप् । अम्बुनमस्कारे विनियोगः । "ॐ अप्सु मे सोमो० भेषजी" । वम्, अम्बुने नमः । ऋग्वेदिनां तु—अप्सु[1] मेधातिथिरापोऽनुष्टुप् । अम्बुनमस्कारे विनियोगः । "ॐ अप्सु मे सोमो० भेषजीः" । वम्, अम्बुने नम इति ।

नाभ्यादि हृदयपर्यन्तं तेजोमण्डलं त्रिकोणं रक्तवर्णं स्वस्तिकलाञ्छितं विद्याकलं शिवदैवत्यं रंबीजयुक्तं ध्यायेत् । अग्निं दूतमित्यस्य प्रजापतिरग्नि-

* ऋग्वेदिविषयकविशेषदर्शको ग्रन्थो नास्ति ङ. पुस्तके । एवमग्रेऽपि ।

---

१ ख. 'प्सु मे मे' ।

गायत्री। तेजोनमस्कारे विनियोगः। "ॐ अग्निं दूतं वृणी० यज्ञस्य सुक्रतुम्"। रं तेजसे नमः। ऋग्वेदिनां तु—अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्री। तेजोनमस्कारे विनियोगः। "ॐ अग्निं दूतं वृणीमहे० सुक्रतुम्"। रं तेजसे नम इति।

हृदयादि भ्रूमध्यपर्यन्तं वायुमण्डलं वृत्तं धूम्रवर्णं षड्बिन्दुलाञ्छितं शान्तिकलमीशानदैवत्यं यंबीजयुक्तं ध्यायेत्। वायो शतमित्यस्य विश्वे देवा वायुरनुष्टुप्। वायुनमस्कारे विनियोगः। "ॐ वायो शत२० पाजसा"। यं वायवे नमः। ऋग्वेदिनां तु—तव वायो व्यश्व आङ्गिरसो वायुर्गायत्री। वायुनमस्कारे विनियोगः। "ॐ तव वायवृ० वृणीमहे"। यं वायवे नम इति।

भ्रूमध्यादाब्रह्मरन्ध्रमाकाशमण्डलं वृत्तं शुक्लवर्णं विधुलाञ्छितं शान्त्यतीतकलं सदाशिवदैवत्यं हंबीजयुक्तं ध्यायेत्। घृतं घृतपावान इत्यस्य सोम आकाशो यजुः। आकाशनमस्कारे विनियोगः। "ॐ घृतं घृतपावा० त्वाऽन्तरिक्षाय"। हम्, आकाशाय नमः। ऋग्वेदिनां तु, आदिद्वत्स आकाशो गायत्री। आकाशनमस्कारे विनियोगः। "ॐ आदित्प्रत्नस्य० ते दिवा"। हम्, आकाशाय नम इति।

पद्धस्तपायूपस्थवाचः क्रमात्पृथिव्यादिषु न्यसामि। गमनादानरेचनानन्दवचनानि क्रमा०। घ्राणरसनचक्षुःस्पर्शनश्रोत्राणि क्रमा०। गन्धरसरूपस्पर्शशब्दान्क्रमा०। समानोदानव्यानापानप्राणान्क्रमा०। एवं विन्यस्य पञ्चगुणां [पृथिवीं] षडुद्घातप्रयोगेण लं ६ अम्बुनि प्रविलापयामि। अम्बु चतुर्गुणं पञ्चोद्घातप्रयोगेण वं ५ अग्नौ प्रविलापयामि। अग्निं त्रिगुणं चतुरुद्घातप्रयोगेण रं ४ वायौ प्रविलापयामि। वायुं द्विगुणं त्रिरुद्घातप्रयोगेण यं ३ आकाशे प्रविलापयामि। आकाशमेकगुणं द्विरुद्घातप्रयोगेण हं २ अहंकारे प्रविलापयामि। तमहंकारं महत्तत्त्वे प्रविलापयामि। तन्महत्तत्त्वं प्रकृतौ प्रविलापयामि। तां प्रकृतिं परब्रह्मणि प्रविलापयामि। इति प्रविलापयेत्।

ततः—"ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम्।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम्॥
तत्संसर्गिपदद्वंद्वमङ्गप्रत्यङ्गपातकम्।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम्॥

१ ग. 'ध्यादिब्र'। २ ग. 'न्ध्रपर्यन्तमा'। ३ ख. ग. च. 'म्बु द्विगुणं त्रिरुद्घा'।

अधोमुखं कृष्णवर्णमङ्गुष्ठपरिमाणकम् ।
खड्गचर्मधरं क्रुद्धं वामकुक्षौ विचिन्तयेत् " इति ॥

ततो यमितिवायुबीजेन षोडशवारमावृत्तेन पापपुरुषं संशोष्य रमित्यग्निबीजेन चतुःषष्टिवारमावृत्तेन संदह्य यमितिवायुबीजेन द्वात्रिंशद्वारमावृत्तेन तद्भस्म दक्षिणनासापुटेन बहिर्निःसार्य वमित्यमृतबीजेन षोडशवारमावृत्तेन तद्भस्मामृतेन संप्लाव्य लमितिभूमिबीजेन षोडशवारमावृत्तेन घनीभूतं देहं विभाव्य हमित्याकाशबीजेन षोडशवारमावृत्तेन देवताराधनयोग्यतां विभाव्य ब्रह्मणः सकाशात्प्रकृतिः प्रकृतेर्महत्तत्त्वं महत्तत्त्वादहंकारोऽहंकारादाकाश आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी पृथिव्या ओषधय ओषधीभ्योऽन्नमन्नाद्रेतो रेतसः पुरुषः स वा एष पुरुषोऽन्नरसमय इति सृष्टिक्रमं विभाव्य प्रणवेन हृत्पद्ममूर्ध्वमुखं विभाव्य हंसः सोऽहमिति मन्त्रेण जीवात्मानं हृत्पद्मे समागतं विभाव्य कुण्डलिनीं स्वस्थानगतां विभावयेत् ।

## अथ प्राणप्रतिष्ठा ।

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुशिवा ऋषयः । ऋग्यजुःसामानि च्छन्दांसि । चैतन्यरूपा[1] प्राणशक्तिर्देवता । आं बीजम् । ह्रीं शक्तिः । क्रौं[2] कीलकम्[3] । प्राणप्रतिष्ठापने विनियोगः । ब्रह्मविष्णुशिवेभ्य ऋषिभ्यो नमः शिरसि । ऋग्यजुःसामभ्यश्छन्दोभ्यो नमो मुखे । चैतन्यरूपायै[4] प्राणशक्तिदेवतायै नमो हृदये । आं बीजाय नमो गुह्ये । ह्रीं शक्तये नमः पादयोः । क्रौं[5] कीलकाय[6] नमो नाभौ । प्राणप्रतिष्ठापने विनियोगाय नमः सर्वाङ्गे । ॐ आं ह्रीं क्रौं[7] अं कं खं गं घं ङं[8] । आकाशवाय्वग्निसलिलपृथिव्यात्मन आं हृदयाय नमः । ॐ आं ह्रीं क्रौं[9] इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं शिरसे स्वाहा । ॐ आं ह्रीं क्रौं[10] उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मन ऊं शिखायै वषट् । ॐ आं ह्रीं क्रौं[11] एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मन[12] ऐं कवचाय हुं । ॐ आं ह्रीं क्रौं[13] ओं पं फं बं भं मं वचनादानविसर्गगमना*नन्दात्मन औं नेत्रत्रयाय वौषट् । ॐ आं ह्रीं क्रौं[14] अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहंकारचित्तानन्दात्मने, अः अस्त्रायफट् । इति षडङ्गेषु तत्तन्मु-

* गमनविसर्गेत्यादिव्यत्यासेन पाठो युक्तः

१ ड. 'पा परा प्रा' । २ ग क्रौ । ३ क. ड. किलकम् । ४ ड. 'यै परायै प्रा' । ५ ग. क्रौं । ६ ख. ङ. किलकाय । ७ ग. क्रों । ८ क. ग. ङं क्रौ ह्रीं आं ओं । आं । ९ ग. क्रौं । १० ग. क्रौं । ११ ग. क्रौं । १२ क. ड. 'णिपायू' । १३ ग. क्रौ । १४ ग. क्रौं ।

द्राभिर्विन्यस्य नाभ्यादिपादद्वयाग्रान्तम्, आं नमः। कण्ठादिनाभ्यन्तं ह्रीं नमः। मूर्धादिकण्ठान्तं क्रौं नमः।

ततो हृद्येव यं, त्वगात्मने नमः। रं, असृगात्मने नमः। लं मांसात्मने नमः। वं मेदआत्मने नमः। शं, अस्थ्यात्मने नमः। षं मज्जात्मने नमः। सं शुक्रात्मने नमः। हं, ओजआत्मने नमः। ळं जीवात्मने नमः। क्षं परमात्मने नमः।

ततो हृदयकमले यं नमः। आग्नेये रं नमः। (* पूर्वे लं नमः। पश्चिमे वं नमः। ईशाने शं नमः। नैर्ऋते षं नमः। उत्तरे सं नमः। दक्षिणे हं नमः।) कर्णिकायां क्षं नमः। इति विन्यसेत्।

ततः समस्तमातृकाभिर्मूर्धादिचरणावधिव्यापकन्यासं विधाय,

"रक्ताब्धिपोतारुणपद्मसंस्थां पाशाङ्कुशाविक्षुशरासबाणान्।
शूलं कपालं दधतीं कराग्रे रक्तां त्रिनेत्रां प्रणमामि देवीम्" इति ध्यायेत्।

वामाद्यूर्ध्वयोराद्ये तदाद्यधःस्थयोरन्ये तदाद्यधःस्थयोरपरे इत्यायुधस्थितिः। शरासो धनुः।

ततो हृदि दक्षहस्ततलं निधाय, ॐ आं ह्रीं क्रौं यं रं लं वं शं षं ओं क्षं सं हं ळं क्षं सः, ह्रीं ओं हंसः, मम प्राणा इह प्राणाः, पुनरोमित्याद्यजपान्तमुक्त्वा—मम जीव इह स्थितः, पुनस्तथैवोक्त्वा—मम सर्वेन्द्रियाणि, पुनस्तथैवोक्त्वा—मम वाङ्मनश्चक्षुःश्रोत्रत्वग्घ्राणप्राणा इहाऽऽगत्य सुखं चिरं तिष्ठन्तु स्वाहेति प्राणप्रतिष्ठां कुर्यात्।

मम सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रत्वग्घ्राणप्राणा इत्येकमेव वा।

ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हों हंसः सोऽहमित्येवं वा प्राणप्रतिष्ठापनमन्त्रः।

"ॐ असुनीते पुनरस्मासु च० मृळया नः स्वस्ति" इति पठेत्।

ज्ञानार्णवे तु—आं सोऽहमित्येतावत्तैव प्राणप्रतिष्ठोक्ता। गर्भाधानादिपञ्चदशसंस्कारसिद्ध्यर्थं पञ्चदशवारं प्रणवं जपेत्। इति प्राणप्रतिष्ठा।

## अथान्तर्मातृकान्यासः।

तत्र मातृकाभिः प्राणायामत्रयं कृत्वा मातृकान्यासं कुर्यात्। तत्र स्वरैः

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने क. पुस्तके शोधितो ग्रन्थोऽन्यथा वर्तते, स यथा—"वायव्ये लं नमः। पूर्वे वं नमः। पश्चिमे शं नमः। ईशाने षं नमः। नैर्ऋते सं नमः। उत्तरे हं नमः। दक्षिणे ळं नमः" इति। तत्र युक्ततरो ग्राह्यः सुधीभिः।

---

१ ग. क्रौं। २ ङ. हृदये यं। ३ ङ. च. प्राण।

पूरकः कादिभिः कुम्भको यादिभी रेचक इति प्राणायामक्रमः। इत्थं प्राणायामत्रयं कृत्वा, अस्य श्रीमातृकामन्त्रस्य* ब्रह्मण ऋषये नमः शिरसि। गायत्र्यै छन्दसे नमो मुखे। मातृकासरस्वत्यै देवतायै नमो हृदये। हल्भ्यो बीजेभ्यो नमो गुह्ये। स्वरेभ्यः शक्तिभ्यो नमः पादयोः। व्यक्तये कि(की)लकाय नमो नाभौ। मातृकान्यासे विनियोगाय नमः सर्वाङ्गे। ॐ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः। ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः। ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट्। ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां हुम्। ॐ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां वौषट्। ॐ अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठेभ्यः फट्। ॐ अं कं खं गं घं ङं आं हृदयाय नमः। ॐ इं चं छं जं झं ञं ईं शिरसे स्वाहा। ॐ उं टं ठं डं ढं णं ऊं शिखायै वषट्। ॐ एं तं थं दं धं नं ऐं कवचाय हुं। ॐ ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट्। ॐ अं यं रं लं वं शं षं सं हं ळं क्षं अः अस्त्राय फट्। सर्वाभिर्मातृकाभिस्त्रिर्व्यापकम्।

अथ ध्यानम्—

"पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम्।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्था-
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि"।

दक्षिणोर्ध्वकरमारभ्य दक्षाधःकरपर्यन्तमायुधस्थितिः। चिन्तालिखितं पुस्तकम्। एवं ध्यात्वाऽन्तर्मातृकान्यासं कुर्यात्। तत्राऽऽदौ कण्ठस्थे विशुद्ध(द्धि)-चक्रे षोडशदले पूर्वादिप्रादक्षिण्येन। ॐ अं नमः। ॐ आं नमः।ॐ अः नमः। इति विन्यस्य हृदयस्थेऽनाहतचक्रे द्वादशदले पूर्वादिप्रादक्षिण्येन। ॐ कं नमः। ॐ खं नमः। ॐ गं नमः। ॐ घं नमः। ॐ ङं नमः। ॐ चं नमः। ॐ छं नमः। ॐ जं नमः। ॐ झं नमः। ॐ ञं नमः। ॐ टं नमः। ॐ ठं नमः। इति विन्यस्य, नाभिमण्डलस्थे मणिपूरचक्रे दशदले पूर्वादिप्रादक्षिण्येन। ॐ डं नमः। ॐ ढं नमः। ॐ णं नमः। ॐ तं नमः। ॐ थं नमः। ॐ दं नमः। ॐ धं नमः। ॐ नं नमः। ॐ पं नमः। ॐ फं नमः। इति विन्यस्य लिङ्गमूलस्थे स्वाधिष्ठानचक्रे षड्दले पूर्वादिप्रादक्षिण्येन। ॐ बं

* एतस्मात्परं विनियोगवाक्यं त्रुटितमित्यनुमीयते।

१ क. नमः। २ क. नमः। क. ड. हुम्। ३ क. नमः। ४ क. नमः। ५ क. 'दिक्रमेण। ॐ।

नमः। ॐ भं नमः। ॐ मं नमः। ॐ यं नमः। ॐ रं नमः। ॐ लं नमः। इति विन्यस्य मूलाधारस्थे मूलाधारचक्रे चतुर्दले पूर्वादिप्रादक्षिण्येन। ॐ वं नमः। ॐ शं नमः। ॐ षं नमः। ॐ सं नमः। इति विन्यस्य भ्रूमध्यस्थ आज्ञाचक्रे द्विदले दक्षिणवामक्रमेण। ॐ हं नमः। ॐ क्षं नमः। इति विन्यस्य बहिर्मातृकान्यासं कुर्यात्।

"पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षस्थलां
भास्वन्मौलिनिवद्धचन्द्रशकलामापीनतुङ्गस्तनीम्।
मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये।

इति ध्यात्वा, ॐ नमः, शिरसि। सर्वत्राऽऽदौ तारः। आं नमः, मुखवृत्ते। इं नमः, दक्षिणनेत्रे। ईं नमः, वामनेत्रे। उं नमः, दक्षिणश्रोत्रे। ऊं नमः, वामश्रोत्रे। ऋं नमः, दक्षिणनासापुटे। ॠं नमः, वामनासापुटे। ऌं नमः, दक्षिणगण्डे। ॡं नमः, वामगण्डे। एं नमः, ऊर्ध्वोष्ठे। ऐं नमः, अधरोष्ठे। ओं नमः, ऊर्ध्वदन्तपङ्क्तौ। औं नमः, अधरदन्तपङ्क्तौ। अं नमः, शिरसि। अः नमः, ग्रीवायाम्। कं नमः, दक्षिणबाहुमूले। खं नमः, दक्षिणकूर्परे। गं नमः, दक्षिणमणिबन्धे। घं नमः, दक्षिणकराङ्गुलिमूलेषु। ङं नमः, दक्षिणकराङ्गुल्यग्रेषु। चं नमः, वामबाहुमूले। छं नमः, वामकूर्परे। जं नमः, वाममणिबन्धे। झं नमः, वामकराङ्गुलिमूलेषु। ञं नमः, वामकराङ्गुल्यग्रेषु। टं नमः, दक्षिणपादमूले। ठं नमः, दक्षिणजानुनि। डं नमः, दक्षिणगुल्फे। ढं नमः, दक्षिणपादाङ्गुलिमूलेषु। णं नमः, दक्षिणपादाङ्गुल्यग्रेषु। तं नमः, वामपादमूले। थं नमः, वामजानुनि। दं नमः, वामगुल्फे। धं नमः, वामपादाङ्गुलिमूलेषु। नं नमः, वामपादाङ्गुल्यग्रेषु। पं नमः, दक्षिणपार्श्वे। फं नमः, वामपार्श्वे। बं नमः, पृष्ठे। भं नमः, नाभौ। मं नमः, जठरे। यं नमः, हृदि। रं नमः, दक्षिणांसे। लं नमः, ककुदि। वं नमः, वामांसे। शं नमः, हृदादिदक्षिणकराग्रान्तम्। षं नमः, हृदादिवामकराग्रान्तम्। सं नमः, हृदादिदक्षिणपादाग्रान्तम्। हं नमः, हृदादिवामपादाग्रान्तम्। ळं नमः, हृदादिगुह्यान्तम्। क्षं नमः, हृदादिमूर्धान्तम्। अङ्गुष्ठानामिकाभ्यामयं न्यासः। आचक्राय हृदयाय नमः। विचक्राय शिरसे स्वाहा। सुचक्राय शिखायै वषट्। त्रैलोक्यरक्षणचक्राय कवचाय हुम्। आसुरान्तकचक्रायास्त्राय

---

१ च. मूलाधारे। २ क. ख. च. °न्तच°।

फट् । अङ्गषट्कपक्षेऽसुरान्तकचक्राय नेत्रत्रयाय वौषट् । सुदर्शनचक्रायास्त्राय फट् । इति प्रयोगः ।

## अथ मूलमन्त्रन्यासः ।

" ॐ क्लीं देवकीसुत गोविन्द वासुदेव जगत्पते ।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः "

इत्येतेन मूलमन्त्रेण प्राणायामं कृत्वा, अस्य श्रीसुतप्रदगोपालकृष्णमन्त्रस्य नारद ऋषिः । अनुष्टुप्छन्दः । सुतप्रदो गोपालकृष्णो देवता । पूजाजपादौ विनियोगः । ॐक्लीं देवकीसुत गोविन्दाङ्गुष्ठाभ्यां नमः । ॐ वासुदेव जगत्पते तर्जनीभ्यां नमः । ॐ देहि मे तनयं कृष्ण मध्यमाभ्यां नमः । ॐ त्वामहं शरणं गतोऽनामिकाभ्यां नमः । ॐ क्लीं देवकीसुत गोविन्द वासुदेव जगत्पते । देहि मे तनयं कृष्ण त्वामहं शरणं गतः कनिष्ठिकाभ्यां नमः । ॐ क्लीं देवकीसुत गोविन्द हृदयाय नमः । ॐ वासुदेव जगत्पते शिरसे स्वाहा । ॐ देहि मे तनयं कृष्ण शिखायै वषट् । ॐ त्वामहं शरणं गतः कवचाय हुं । ॐ क्लीं देवकीसुत गोविन्द वासुदेव जगत्पते । देहि मे तनयं कृष्ण त्वामहं शरणं गतः, अस्त्राय फट् ।

अस्य श्रीसुतप्रदगोपालकृष्णमन्त्रस्य नारदाय ऋषये नमः शिरसि । अनुष्टुप्छन्दसे नमो मुखे । सुतप्रदाय गोपालकृष्णाय देवतायै नमो हृदये । पूजाजपादौ विनियोगाय नमः सर्वाङ्गे । इति तत्तन्मुद्राभिर्विन्यस्य मूलेन त्रिर्व्यापकं कृत्वा,

" विजयेन युतो रथस्थितः प्रसमानीय समुद्रमध्यतः ।
अदद(दा)त्तनयान्द्विजन्मने स्मरणीयो वसुदेवनन्दनः " इति ध्यायेत् ॥

तन्त्रान्तरे तु प्रकारान्तरेण ध्यानमुक्तम्—

" स्तनं धयन्तं जननीमुखाब्जं विलोक्य मन्दस्मितमुज्ज्वलाङ्गम् ।
स्पृशन्तमन्यं स्तनमङ्गुलीभ्यां वन्दे यशोदाङ्कगतं मुकुन्दम् " इति ।

" शङ्खचक्रगदापद्मधरं श्यामं चतुर्भुजम् ।
देवकीतनयं कृष्णं पीतवाससमच्युतम् ॥
समर्पयन्तं विप्राय नष्टानानीय बालकान् ।
मयूरबर्हिशिरसं ध्याये सौदामिनीनिभम् " इत्यप्यन्यत्र ॥

---

१ क. च. 'न्तच' । २ ख. ड. च. ॐ दे' । ३ च 'ष्टुभे छं' ।

एतेषामन्यतमेन यथाकामं ध्यात्वा मानसोपचारैः संपूज्य कलशाराधनं कुर्यात् । शुद्धजलपूरितं कलशं स्ववामभागे संस्थाप्य कलशस्य मुखे विष्णुरित्यादिना तस्मिन्कुम्भेऽङ्कुशमुद्रया तीर्थान्यावाहयेत् । कलशं गन्धपुष्पाक्षतैः संपूज्य तद्दक्षिणतः प्रक्षालितं शङ्खमाधारपात्रे संस्थाप्य कलशोदकेन शङ्खं पूरयित्वा शङ्खमुद्रां प्रदर्श्य,

" ॐ पाञ्चजन्याय विद्महे पावमानाय धीमहि ।
तन्नः शङ्खः प्रचोदयात् "

इति शङ्खगायत्र्या तं गन्धपुष्पाक्षतैः संपूज्य तदुदकं किंचित्कलशे प्रक्षिप्य शङ्खात्किंचिदुदकं पात्रान्तरे गृहीत्वा तेन जलेन पूजाद्रव्याणि भूमिमात्मानं च प्रोक्ष्य जगद्ध्वनिमन्त्रमातः स्वाहेति घण्टां संपूज्य,

" आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
कुरु घण्टे शुभं नादं देवताह्वानलाञ्छनम् " इति वादयेत् ॥

ततो मही द्यौरित्यादिविधिना कलशं संस्थाप्य शुद्धजलेन पूरणादिपूर्णपात्रनिधानान्तं कृत्वा तत्र वरुणमावाह्य संपूजयेत् ।

ततस्तदुपरि पीतं वस्त्रमास्तीर्य, (* उशीरवालकचन्दनकेशरकुष्ठागुरुमुस्ताजटामांस्यात्मकेनाष्टगन्धेन ) कस्तूरीचन्दनकेशरागरुमांसीमुक्ताकर्पूरकुष्ठात्मकेनाष्टगन्धेन वा सकर्णिकमष्टदलं विलिख्य देवता आवाहयेत् । तत्राऽऽवाहनप्रकारो यथा—पद्माधः । (+पूर्वादिदिक्षु ।) आधाररूपिण्यै शक्तये नमः । कूर्माय नमः । शेषाय नमः । वराहाय नमः । मण्डूकाय नमः । कालाग्निरुद्राय नमः । धरण्यै नमः । वृन्दावनाय नमः । इति पद्माधः ।

अथ मञ्चके—आग्नेयादिचतुर्दिक्षु । धर्माय नमः । ज्ञानाय नमः । वैराग्याय नमः । ऐश्वर्याय नमः । ततः पूर्वादिचतुर्दिक्षु । अधर्माय नमः । अज्ञानाय नमः । अवैराग्याय नमः । अनैश्वर्याय नमः ।

तदुपरि पद्मदेवताः—कन्दाय नमः । नालाय नमः । कर्णिकायै नमः । पत्रेभ्यो नमः ।

ततः कर्णिकायाम्—सूर्याय नमः । सोमाय नमः । द्वयोर्मध्येऽग्नये नमः ।

---

* धनुश्चिह्नान्तर्गतं क. पुस्तके नास्ति । + धनुश्चिह्नान्तर्गतं शोधितं नूतनमेव क. पुस्तक एवास्ति ।

---

१ ख. ङ. च. °वाह्य क° । २ क. °ध्य तं पू° । ३ क. °पर्यहतं । ४ ग. ङ. च. °न स° ।

पत्रेषु पूर्वादिक्रमेण। विमलायै नमः। उत्कर्षिण्यै नमः। ज्ञानायै नमः। क्रियायै नमः। योगायै नमः। प्रह्व्यै नमः। सत्यायै नमः। ईशानायै नमः।

देवस्य पुरतः—अनुग्रहायै नमः। इति पीठदेवता आवाह्य मध्ये वह्नि-मण्डले श्रीगोपालकृष्णमावाहयेत्। तद्यथा—ध्यानोक्तलक्षणोपेतां यथाशक्ति-सुवर्णादिधातुनिर्मितां गोपालकृष्णप्रतिमां विधाय मूर्तेः संततदुग्धोदकधाराभ्यां यथाशाखमग्न्युत्तारणं कृत्वा पूर्वोक्तरीत्या प्राणप्रतिष्ठां विधाय प्रतिमाया दक्षिणपार्श्वे स्थित्वा देवस्य पुरतो नानोपहारबलिं संस्थाप्य तैजसे पात्रे गव्यं घृतं निक्षिप्य सुवर्णशलाकाभ्यां तच्चक्षुर्देव हितमित्यनेन चित्रं देवाना-मित्यनेन वा देवस्य नेत्रे उन्मील्य "ॐ अञ्जन्ति त्वामध्वरे० उपस्थे" इत्यनेन द्वाभ्यां मध्यमाङ्गुलिभ्यामुभे सहैव मधुनाऽभ्यज्य पञ्चामृतैः शुद्धोदकेन च स्नापयित्वा स्वाभिमुखीं प्रतिमां वह्निमण्डले संस्थाप्याधोमुखं हृत्पद्मं वायु-बीजेनोन्मुखं ज्ञानार्केण विकसितं च भावयित्वा हंसः सोऽहमिति हृत्पद्मस्थं श्रीकृष्णमात्मानं वहन्नासारन्ध्रमार्गेण स्वाञ्जलिस्थपुष्पे समागतं विभाव्य मूलमन्त्रमुच्चार्य तत्पुष्पं प्रतिमायां विनिक्षिप्य, आवाहनी स्थापनी संनिधा-पनी संनिरोधिनी संमुखीकरणी संकलीकरण्यवगुण्ठनी परमीकरण्यमृतीकर-णीति नव मुद्राः प्रदर्शयेत्। ततो नयं प्रजामिति प्रतिष्ठाप्य नमस्कुर्यात्।

अथाऽऽवरणदेवताः—आग्नेयादिकोणेषु प्रादक्षिण्येन—आचक्राय नम आचक्रमावाहयामि। विचक्राय नमो विचक्रमावाहयामि। सुचक्राय नमः सुच-क्रमावाहयामि। त्रैलोक्यरक्षणचक्राय नमः, त्रैलोक्यरक्षणचक्रमावाहयामि।

ततः पूर्वादिचतुर्दिक्षु प्रादक्षिण्येन—असुरान्तकचक्राय नमोऽसुरान्तकच-क्रमावाहयामि। पटपक्षे—असुरान्तकचक्रानन्तरं सुदर्शनचक्राय नमः सुद-र्शनचक्रमिति सर्वदिक्ष्विति विशेषः।

ततः पत्रेषु पूर्वादिप्रादक्षिण्येन—रुक्मिण्यै नमो रुक्मिणीमावाहयामि। सत्यभामायै नमः सत्यभामामावाहयामि। नाग्नजित्यै नमो नाग्नजितीमावाह-यामि। अर्कजायै नमोऽर्कजामावाहयामि। मित्रविन्दायै नमो मित्रविन्दामा-वाहयामि। लक्ष्मणायै नमो लक्ष्मणामावाहयामि। जाम्बवत्यै नमो जाम्ब-वतीमावाहयामि। सुशीलायै नमः सुशीलामावाहयामि।

ततो दलाग्रेषु पूर्वादिक्रमेण प्रदक्षिणम्—वसुदेवाय नमो वसुदेवमावाह-यामि। देवक्यै नमो देवकीमावाहयामि। नन्दगोपतये नमो नन्दगोपतिमा-वाहयामि। यशोदायै नमो यशोदामावाहयामि। बलभद्राय नमो बलभद्र-

मावाहयामि । सुभद्रायै नमः सुभद्रामावाहयामि । गोपेभ्यो नमो गोपानावाहयामि । गोपिकाभ्यो नमो गोपिका आवाहयामि ।

ततः प्रागादिक्रमेण स्वस्वदिक्षु—इन्द्राय नम इन्द्रमावाहयामि । अग्नये नमोऽग्निमावाहयामि । यमाय नमो यममावाहयामि । निर्ऋतये नमो निर्ऋतिमावाहयामि । वरुणाय नमो वरुणमावाहयामि । वायवे नमो वायुमावाहयामि । कुबेराय नमः कुबेरमावाहयामि । ईशानाय नम ईशानमितीन्द्राद्यष्टौ लोकपालानावाहयेत् ।

ततस्तत्तत्संनिधौ वज्राय नमो वज्रमावाहयामि । शक्तये नमः शक्तिमावाहयामि । दण्डाय नमो दण्डमावाहयामि । खड्गाय नमः खड्गमावाहयामि । पाशाय नमः पाशमावाहयामि । अङ्कुशाय नमोऽङ्कुशमावाहयामि । गदायै नमो गदामावाहयामि । त्रिशूलाय नमस्त्रिशूलमावाहयामि । इति वज्रादीन्यायुधानि ।

इत्यावरणदेवता आवाह्य नयं प्रजामिति प्रतिष्ठाप्य मूलमन्त्रेण पीठावरणदेवतासहितं देवं षोडशोपचारैर्भक्त्या पूजयित्वा मालासंस्कारं कुर्यात् ।

स यथा—कुशोदकेन पञ्चगव्यैश्च गायत्र्या सद्योजाताद्यैः पञ्चभिर्मन्त्रैर्मूलेन च मालां प्रक्षाल्य पद्माकारवत्संस्थापितेऽश्वत्थपत्रनवके मालां निधाय, अं आं इं ईं इत्यादिमातृका विन्यस्य पुनर्गायत्र्या सद्योजाताद्यैः पञ्चभिर्मन्त्रैर्मूलेन पञ्चगव्यैः प्रक्षाल्यैतैरेवाभिमन्त्र्य सद्योजातमितिमन्त्रेण पञ्चगव्यैः शुद्धोदकेन च मन्त्रावृत्त्या पुनः प्रक्षाल्य वामदेवायेति सुगन्धिचन्दनेन विघृष्य, अघोरेभ्य इति कृष्णागुरुगुग्गुलवाद्यैर्धूपयित्वा तत्पुरुषायेति कस्तूरीकुङ्कुमाद्यैरनुलिप्य, ईशान इति सर्वान्मणीनभिमन्त्रयेत् । प्रतिमणि मन्त्रावृत्तिः । ततोऽघोरेभ्य इत्यनेन मेरुं शतवारमभिमन्त्र्य, ॐ आं ह्रीं क्रों यमित्यादि सोऽहमित्यन्तमुक्त्वा मालायाः प्राणा इत्याद्यूहेन प्राणप्रतिष्ठां कृत्वा मन्त्रदेवतां गोपालं तत्राऽऽवाह्य मूलेनैव संपूज्य मूलेन मातृकाभिश्चाभिमन्त्रयेत् ।

## अथ[1] मालासंस्कारहोमविधिः ।

आचम्य प्राणानायम्य स्थण्डिलकरणादि कृत्वा बलवर्धननामानं लौकिकाग्निं स्थण्डिले प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादि प्राणायामान्तं कृत्वा मालासंस्कारहोमकर्मणि या यक्ष्यमाणा देवता तां परिग्रहीष्यामि । मूलमन्त्रेण मन्त्रदेवतामष्टोत्तरशतसंख्याकाभिराज्याहुतिभि-

१ क. ख. ग. च. °थ हो° ।

यक्ष्ये । अग्निं स्विष्टकृतं हुतशेषाज्याहुत्या यक्ष्य इत्युक्त्वाऽन्वाधानसमिद्भ्याधानाद्यापूर्वकतन्त्रेण प्रधानहोमात्पूर्वतनं कर्म कुर्यात् ।

ततः—" ॐ क्लीं देवकीसुत गोविन्द वासुदेव जगत्पते ।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः स्वाहा " ॥

इति मूलमन्त्रेणाष्टोत्तरशतमाज्याहुतीर्जुहुयात् । प्रत्याहुति संपाताज्यं मालायां निक्षिपेत् । अग्नये स्विष्टकृते स्वाहेत्येकां हुतशेषाज्याहुतिं हुत्वोत्तरपरिषेकाद्यापूर्वकतन्त्रेणोत्तराङ्गानि(णि) कुर्यात् । होमाशक्तौ होमसंख्याद्विगुणसंख्यया मूलेन मालाभिमन्त्रणम् । ततः—ह्रीं सिद्ध्यै नम इति मन्त्रेण मालां देवताभावनया संपूजयेत् । इति मालासंस्कारः ।

ततः—" ॐ मां माले महामाये सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव, ह्रीं सिद्ध्यै नमः " ॥

इति मालां नमस्कृत्य ह्रीं सिद्ध्यै नम इति दक्षिणकरे गृहीत्वा *गणपतिबीजमुच्चार्य, अविघ्नं कुरु माले त्वमिति संप्रार्थ्य वस्त्रादिनाऽऽच्छादितां मालां स्वहृदयसमीपे धृत्वाऽङ्गुष्ठमध्यमाभ्यां मणीनावर्तयन्यथोक्तब्रह्मचर्यादिनियमवाननुन्नतगात्रो मनसोपांशु वा मध्याह्नपर्यन्तं यथाशक्ति जपं कुर्यात् । आरम्भदिवसे यावत्संख्यं जपः कृतस्तावत्संख्य एव प्रत्यहं कार्यः । उपद्रवसंभावनायां दिवसचतुर्थभागपर्यन्तमपि जपः कर्तव्यः । न तत्र संख्यातिक्रमदोषः । जपसमाप्तौ तां मालां ह्रीं सिद्ध्यै नम इति नमस्कृत्य,

" त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम ।
शिवं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा, ह्रीं सिद्ध्यै नमः "

इति मालां शिरसि निधाय सुगुप्तस्थले निदध्यात् ।

ततो मूलेन प्राणानायम्य पूर्ववत्करन्यासाङ्गन्यासान्कृत्वा पूर्ववद्ध्यात्वा देवं पञ्चोपचारैः संपूज्य,

" गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु देवेश त्वत्प्रसादान्मयि स्थिरा " ॥

इति जलधारया देवस्य दक्षिणहस्ते जपं निवेदयेत् ।

यद्यन्यदीयं जपं करोति तदा मयीत्यत्र यजमान इत्यूहः । एवं पुरश्चरण-

---

* अत्र क. पुस्तकटिप्पण्याम् " ॐ गं गणपतये नमः " इत्यस्ति ।

१ ख. ग. ङ. च. °तु । ॐ ।

समाप्तिपर्यन्तं प्रत्यहं देवं संपूज्याऽऽसनविध्यादि मूर्तिसंस्कारावाहनमाला-संस्कारवर्जं जपनिवेदनान्तं कर्म कुर्यात्। समाप्ते पुरश्चरणे होमं कुर्यात्।

स यथा—आचम्य प्राणानायम्य गणेशं संपूज्य ब्रह्मादीन्वृत्वा पूजयेत्। अत्र पुण्याहवाचनमपि केचित्कुर्वन्ति।

ततो देवस्य पूजां विधाय कुण्डकरणोल्लेपनाद्यग्निस्थापनान्तं कुर्यात्। अत्र बलवर्धननामाऽग्निः।

ततोऽन्वाधानम्। समिध्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा सुतप्रदगोपालकृष्णमन्त्रजपदशांशहोमकर्मणि या इत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा प्रधानहोमे—सुतप्रदगोपालकृष्णं मूलमन्त्रेण जपदशांशसंख्याभिराज्यक्षीरमध्वक्ततिलाहुतिभिर्यक्ष्ये। पीठदेवता आवरणदेवताश्चैकैकयाऽऽज्यक्षीरमध्वक्ततिलाहुत्याऽऽज्याहुत्या वा यक्ष्ये। अग्निं[1] स्विष्टकृतं हुतशेषद्रव्याहुत्या यक्ष्य इत्यादि। अङ्गहोमे वरुणं द्वाभ्यामित्यादि वा। पात्रासादन आज्येन सह[2] क्षीरमधुतिलानासादयेत्। ततो ब्रह्मोपवेशनादि। आज्यपर्यग्निकरणकाले तिलानाज्यक्षीरमधुभिरभ्यक्तान्कृत्वा तेषामप्याज्येन सह पर्यग्निकरणं कुर्यात्।

ततः परिधिपरिधानाद्यन्वाधानोत्कीर्तनानुसारेण प्रसाधनीहोमान्तं व्याहृतिहोमान्तं वा कृत्वा प्रधानहोममृत्विग्भिः कारयेत्।

ऋत्विजो द्विराचम्य कृतन्यग्जानुकाः कृतप्राणायामासनविधिभूतशुद्ध्याद्यष्ट्यादिन्यासाः प्राङ्मुखा उदङ्मुखा वा मृगीमुद्रया सावधानमनसो होमं कुर्युः। तिलाश्चुलकमिताः शतसंख्या वा। आज्यं कर्षप्रमाणम्। कर्षस्तु दशगुञ्जामितमाषषोडशकप्रमाणः। अन्नं ग्रासमितम्। अनेकदिनसाध्ये होमे तु प्रतिदिवसं[3] कयाचित्संख्यया[4] वह्निरक्षणपूर्वकं शुभदिने समाप्तिं कुर्यात्। प्रतिदिनं होमाद्यन्तयोः प्रधानदेवताङ्गदेवताः पूजयेत्। आरम्भे समाप्तिदिनेऽग्निं मूलमन्त्रेण स्वाहास्वधासहितं पूजयेत्। समाप्ते प्रधानहोमे स्वयमेव पीठदेवताभ्य आवरणदेवताभ्यश्चैकैकमाज्यक्षीरमध्वक्ततिलाहुतिमाज्याहुतिं वाऽन्वाधानोत्कीर्तितपक्षानुसारेण हुत्वा हुतशेषेण स्विष्टकृदाद्यङ्गहोमादि वाऽन्वाधानोत्कीर्तनानुसारेण कुर्यात्। प्रायश्चित्तहोमाकरणपक्षे स्विष्टकृदन्ते तत्करणपक्षे तदन्ते वा पूर्णाहुतिं हुत्वा होमशेषं समाप्य देवस्योत्तरपूजां कुर्यात्।

---

१ क. °दि। पा°। २ ख. ग. च. °ह म°। ३ ग. °स केषांचि°। ४ क. कतिचि°। ५ क. ग. ङ. च. °श्चा संस्थाप्य व°।

तत ऋत्विजः सपत्नीकं यजमानं कलशोदकेनाऽऽपो हि ष्ठाद्यैर्मन्त्रैरभिषिञ्चेयुः ।

ततो यजमान ऋत्विग्भ्यो हिरण्यं तन्निष्क्रयं वा यथाविभवं दक्षिणां दत्त्वा गुरवे पीठसहितां प्रतिमां दत्त्वा होमकर्मेश्वरायार्पयेत् ।

ततो मूलमन्त्रमुक्त्वा सुतप्रदं गोपालकृष्णं तर्पयामि नम इति ¹होमदशांशेन दुग्धेन जलेन वा तर्पणं कृत्वा मूलमन्त्रान्ते सुतप्रदं गोपालकृष्णमभिषिञ्चामि नम इति तर्पणदशांशेन मार्जनं विधाय मार्जनदशांशेन ब्राह्मणान्भोजयेत् । स्वस्य पुरश्चरणकरणाशक्तावेतत्प्रयोगाभिज्ञेनाऽऽचार्येण कारयेत् । तस्मा एव प्रतिमां दद्यात् । यत्र होम एव प्रयोगविशेषे फलप्रदत्वात्प्रधानं न पुनर्जपाङ्गं तत्र ब्राह्मणभोजनसंख्या तन्त्रे विशेषानुक्ता स्मृत्युक्ता ग्राह्या । तत्र लक्षहोमे षष्ट्यधिका नवशती मुख्यः पक्षः । विंशत्यधिका पञ्चशती मध्यमः । दशाधिका त्रिशत्यधमः । यत्र प्रधानदेवताङ्गत्वेन स्मृतितन्त्रोक्तयोरविरोधे समुच्चयपक्षमाश्रित्य ग्रहा अपि पूज्यन्ते तत्र तेदङ्गब्राह्मणभोजनमपि कार्यम् । तत्रोत्तमे पक्षे विंशत्यधिका सप्तशती ब्राह्मणानां भोजनीया । मध्यमपक्षे चत्वारिंशदुत्तरं शतत्रयम् । अधमपक्षे दशाधिकं शतमिति । कलौ चतुर्गुणं प्रोक्तमितिवचनाच्चतुर्लक्षात्मकं पुरश्चरणं कृत्वा काम्यप्रयोगं कुर्यात् । तत्र ममापत्योत्पत्तिप्रतिबन्धकीभूतसकलदोषनिवृत्तिसंततिक्षेमसुपुत्रप्राप्तिद्वारा सुतप्रदगोपालकृष्णप्रीत्यर्थं चतुर्लक्षं सुतप्रदगोपालकृष्णमन्त्रजपमहं करिष्य इति संकल्पवाक्ये विशेषः । आचार्यपक्ष आचार्यद्वारा करिष्य इति संकल्प ऊहेत् । स्त्रीकर्तृकजपपक्षे होमादिकमाचार्यादिद्वारैव । अत्राष्टोत्तरशतसंख्याकान्विप्रान्भोजयेत् । अन्यत्समानं पुरश्चरणवत् । तान्त्रिकहोमविधिस्तु मत्कृते सामान्यहोमविधौ द्रष्टव्यः ।

(+ अथ पुरश्चरणकाले विहितानि—मनःस्थैर्यशौचमौनमन्त्रार्थचिन्तनानिर्वेदश्रद्धोत्साहसंतोषेन्द्रियनिग्रहब्रह्मचर्यगुरुप्रणतित्रिकालदेवतार्चनपर्वविशेषनिमित्तकविशेषार्चनदेवस्तुतिदेवविश्वासगुरुविश्वासमध्यपत्रवर्जपलाशपत्रावलीभोजनमितैकवारहविष्यभोजनैरात्रिभोजनप्रक्षालितदर्भास्तीर्णधौतवस्त्रशयनत्रिषवणस्नानादीनि । अशक्तौ तु प्रातःस्नानमात्रम् ।

+ धनुश्चिह्नान्तर्गतं ख. पुस्तके त्रुटितम् ।

१ ख. ग. ङ. च. जपदशांशेन । २ क. तन्त्रेण ब्रा° । ३ क. ग. °कालवि° । ४ ग. °नप्र° ।

अथ निषिद्धानि—अप्रियानृतभाषणदम्भोन्मादचलनव्यग्रतालस्यनिष्ठीवनक्रोधपादप्रसारणताम्बूलवपनदिवास्वापकरञ्जविभीतकार्कस्नुहि(ही)च्छायाक्रमणकौटिल्यनृत्यगीतप्रतिग्रहादीक्षितस्त्रीशूद्रपतितनास्तिकादिसंभाषणचण्डालादीक्षणबह्वेकमलिनवस्त्रधारणकाम्यकर्माविहितकर्मकांस्यपात्रभोजनासत्सङ्गोष्णजलस्नानकञ्चुकोष्णीषधारणप्राणिहिंसापादुकायानशय्यारोहणनप्रत्वकुशरहितकरत्वातिभोजनादीनि । विभीतको बेहडा इति । स्नुहि(ही) निग(व)डुङ्ग इति । कांस्यपात्रभोजननिषेधात्सौवर्णादीनामन्येनानुपभुक्तानामभ्यनुज्ञा गम्यते । भोज्यभक्ष्याणि तु शुक्लैकविधान्नहैमन्तनीवारकङ्गुषष्टिका यवाः शूद्रानवहृता गुडवर्जितमैक्षवं कृष्णतिलमुद्गकलायकन्दविशेषनालिकेरकदलीलवलीपनसाम्रामलकार्द्रकसामुद्रलवणानुद्धृतसारगव्यपिप्पलीजीरकनारङ्गादीनि ।

निषिद्धानि तु—गुडकृत्रिमलवणपर्युषितनिःस्नेहकीटादिदूषितकाञ्जिकगृञ्जनवृन्ताकशिग्रुबिल्वकरञ्जलशुनपलाण्डुमूलकादीनि । तैलपक्वमाषमसूरचणकगोधूमदेवधान्यादीनि च । )

इति संस्काररत्नमालायामनपत्यत्वहरविधानहरिवंशश्रवणविधिपार्थिवपूजनविधिसंतानगोपालकृष्णमन्त्रविधयः ।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां पञ्चदशं प्रकरणम् ॥ १५ ॥

अथ षोडशं प्रकरणम् ।

व्यासेनौषधिरूपा अप्युपाया उक्ताः—

" अङ्कोलमूलकल्कं तु चूर्णयेद्गुडसंयुतम् ।
काकाण्डमितमश्नीयात्पुत्रिणी सहसा भवेत् ॥
क्षीरवृक्षाङ्कुरं गृह्य पेषयित्वा पयः पिबेत् ।
देवोदरकृतो दोषो विनश्यति शुभं लभेत् ॥

१ क. ग. °ल्चर्वणदि° । २ ङ. च. निगडग । ३ ग. शुष्कैक° । ४ क. °धानाम्र° । ५ ग. शूद्रन° ।

उत्तमं कर्णिकामूलं पेषयित्वा पयः पिबेत् ।
सा पायसान्नं नाश्नीयात्पुत्रिणी सहसा भवेत्" इति ॥

क्षीरवृक्षाङ्कुरो वटाङ्कुरः । कर्णिका गोकर्णी ।

"नागकेशरसंयुक्तं जीरकं गोघृतेन च ।
त्रिदिनं या पिबेन्नारी सा गर्भं लभते ध्रुवम्" इति ॥

तीर्थरूपमुपायमाह पराशरः—

"महातीर्थे महायोगे महानद्यां तु संगमे ।
पलाशस्य दलैः स्नानं कुर्यात्पुत्रसुखार्थिनी" इति ॥

देवरातश्च—"पलाशदलसाहस्रो[1]त्सावित्रेण दलं प्रति ।
स्नपयेत्सपवित्रेण एकादश्यां प्रजार्थिनी" इति ॥

(* बौधायनगृह्येऽपि—

"अथ प्रजार्थहोमः पूर्वपक्षे पुण्ये नक्षत्रेऽमावास्यायां विषुवेऽयने वा नदीतीरेऽश्वत्थस्य च्छायायां वा गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वा ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा प्राच्यां दिशि [3]ब्रह्माणं प्रतिष्ठाप्य पार्श्वयोर्धातारं दक्षिणतो विधातारमुत्तरतस्तत-स्तानर्चयेत्पूर्वं ब्रह्माणमावाहयामि प्रजापतिमावाहयामि परमेष्ठिनमावा-हयामि हिरण्यगर्भमावाहयामीत्यावाह्य सावित्र्या पाद्यं ददाति सावित्र्या निवेदयेत्तैरेव नामधेयैः शुक्लमन्नं ब्रह्मणे मुद्गान्नं धातुः पीतान्नं विधातु-स्ततः सावित्र्याऽप [4]आचमय्य प्रणवेनाष्टशतं हुत्वा [5]ब्रह्माणमुपतिष्ठते नमो वाचे नमो वाचस्पतय इत्यग्निमुपतिष्ठते नमो ब्रह्मणे सप्तवित्सप्तजि-ह्वश्च सप्तधाऽग्निः प्रतिष्ठितः सँ[6]सैवं विश्वभूतानि को ह्यग्निः प्रतितिष्ठति तत्त्वमसि विश्वमसि योनिरसीत्यथ स्त्रियमाहूय सावित्र्या पलाश[7]पर्णैर-ष्टसहस्रैः स्नापयित्वा पुरुषसूक्तेन जुहुयात्तत्संपातेन मूर्ध्नि जुहुयात्प्रणवेन नमस्कुर्यादध्वर्युं च वस्त्रकुण्डलाभ्यामलं करोति ततः सा गर्भिणी भवती-त्याह भगवान्बौधायनः" इति ।

पार्श्वयोर्ब्रह्मणः । तान्ब्रह्मधातृविधातॄन् । धातारमावाहयामीत्येवं धातृवि-

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख. पुस्तकयोः ।

---

१ ङ. च. °स्रा सावि° । २ ङ. °वित्र्यै यद° । च. °वित्र्ययद° । ३ ङ. च. ब्राह्मणं । ४ ङ. आचम्य । ५ ग. ङ. °त्वा ब्राह्मण° । ६ ग. ङ. °व द्विश्व° । ७ ग. ङ. °शभ्यर्णै° ।

धात्रोरावाहनादि । निवेदनं नैवेद्यस्य । अष्टसहस्रैरष्टाधिकसहस्रैः । अन्यत्स्पष्टार्थम् । )

नीचमेहनस्य वाजीकरणमुक्तं वडवाचार्येण—

" वाजीवातिबलो येन यात्यप्रतिहतो यतः ।
तद्वाजीकरणं नाम देहस्यौजस्करं परम् " इति ॥

तत्प्रयोगश्च तेनैवोक्तः—

" भल्लातकबृहतीफलदाडिमकल्कप्रसाधितं कुरुते ।
लिङ्गोन्मर्दनं वि(नवि)धिना कटुतैलं वाजिलिङ्गाभम् " इति ॥

वैद्यकग्रन्थे—" सिताश्वगन्धासिन्धूत्थच्छागक्षीरैर्घृतं पचेत् ।
तल्लेपान्मर्दनाल्लिङ्गवृद्धिः संजायते परा " इति ॥

सिता शर्करा । अश्वगन्धाऽऽस्कन्दः । सिन्धूत्थं सैन्धवम् । एवमन्येऽप्युपाया वैद्यकग्रन्थपञ्चसायकादौ द्रष्टव्याः । एवमपि फलाप्राप्तौ दत्तकपुत्रस्वीकारं कुर्यात् ।

## अथ दत्तपुत्रविधानम् ।

तद्विधिर्बौधायनसूत्रे—

" पुत्रप्रतिग्रहविधिं व्याख्यास्यामः[1] शुक्रशोणितसंभवो मातृ(ता)पितृनिमित्तकस्तस्य प्रदानपरित्यागविक्रयेषु मातापितरौ प्रभवतो न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि संतानाय पूर्वेषां न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्तुः प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकं चाऽऽचार्यं च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्ममित्यथ बन्धूनाहूय मध्ये राजनि चाऽऽवेद्य परिषदि[2] चागारमध्ये ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वाऽथ देवयजनोल्लेखनप्रभृत्या प्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा पुत्रं मे देहीति भिक्षेत ददामीतीतर आह तं परिगृह्णाति धर्माय त्वा गृह्णामि संतत्यै त्वा गृह्णामीत्यथैनं वस्त्राभ्यां कुण्डलाभ्यामङ्गुलीयकेन चालंकृत्य परिधानप्रभृत्याऽग्निमुखात्कृत्वा पक्वाज्जु(ज्जु(?))होति यस्त्वा हृदा कीरिणा मन्यमान इति पुरोनुवाक्यामनूच्य यस्मै त्वं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमा धेनु-

१ क. 'स्याम एकः शु' । ग. 'स्याम एव शु' । च. 'स्यामः शोणितशुक्रसं' । २ च. 'दि वाऽग्नी' ।

वरप्रदानाद्दक्षिणां ददात्येते च वाससी एते कुण्डले एतच्चाङ्गुलीयकं यद्येवं कृत्वौरसः पुत्र उत्पद्यते तुरीयभागे प्रभवतीत्याह भगवान्बौधायनः " इति ।

मातापितृनिमित्तकः शुक्रशोणितसंभव इत्यन्वयः । मातापितृनिमित्तक इत्यनेन क्षेत्रजादिव्यावृत्तिः । इदं च संभवविशेषणम् । शुक्रशोणितसंभव इत्यनन्तरं यस्येति शेषः । एतेनौरसस्यैव प्रदानपरित्यागविक्रया नान्येषां दत्तकादीनामिति सूच्यते । मातापितरौ प्रभवत इति । मातापित्रोरेव दानाधिकार इत्याशयः । स हि संतानाय पूर्वेषाम् । हि यस्मात्स एकः पुत्रः पूर्वेषां संतानाय भवत्यत एकं पुत्रं नैव दद्यादित्यर्थः । अङ्गुलीयकं चेत्यत्र चकारश्छत्रादिसमुच्चयार्थः । कुशमयं बर्हिरिति प्रतिनिधिर्नैवात्र भवतीति ज्ञापनार्थम् । एवं पर्णमयमिध्ममित्यत्रापि । मध्य इति । बन्धुसमक्षं राजन्यावेदनं कार्यमित्याशयः । अङ्गुलीयकमित्यनन्तरमनुषक्तेन ददातीत्यनेन पुत्रसंबन्धिवस्त्रद्वयकुण्डलाङ्गुलीयकदानं विधीयते । स्त्रिया तु भर्त्रनुज्ञया ग्राह्यः । सा च सधवाया एव दृष्टार्थत्वात् । विधवायास्तु तां विनाऽपि पितुस्तदभावे ज्ञातीनामाज्ञया भवति ।

अत एव—" रक्षेत्कन्यां पिता विन्नां पतिपुत्रास्तु वार्धके ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः " ॥

इति याज्ञवल्क्येनावस्थाविशेष एव भर्तुः पारतन्त्र्यमुक्तम् । तदभावे वार्धकादिना तस्याक्षमतायां वा पुत्रादीनामपि ।

कात्यायनेनापि—" नारी खल्वननुज्ञाता पित्रा भर्त्रा सुतेन वा ।
विफलं तद्भवेत्तस्माद्यत्करोत्यौर्ध्वदेहिकम् " ॥

इत्यवस्थाविशेष एव पितृभर्त्राद्यनुज्ञोक्ता । और्ध्वदेहिकं पारलौकिकम् । धस्गमवस्थायां भर्तुरनुज्ञां प्राप्ता सैवात्रानूद्यते न त्वपूर्वा विधीयतेऽतो विधवा या भर्तुरनुज्ञां विनाऽप्यधिकार इति नवीनाः । परिणीत उत्पन्नपुत्रोऽपि च दत्तको भवतीति द्वैतनिर्णये । यत्तु दत्तकमीमांसादौ वृद्धगौतमीयं,

" दत्तपुत्रे यथाजाते कदाचित्त्वौरसो भवेत् ।
पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ " ॥

इति वचनं तद्दत्तकस्य गुणवत्त्व औरसस्य च निर्गुणत्वे वेदितव्यम्, यथा-

१ क. °ज्ञा प्रमाणैवा° । २ च. °वत्त्वे वे° ।

जात इति विशेषणात् । यथा गुणानां जातं समूहो यस्मिन्निति यथाजातो गुणसमूहवानित्यर्थः । यथाशब्दस्य गुणयोगे सादृश्ये शक्तत्वात् ।
अत एव मनुः—" उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्तिमः ।
स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः "

इत्यौरसाभावे सर्वरिक्थग्रहणमुक्तवान् । तद्युक्तमेवौरसे सत्यर्धांशहरत्वम् । परिग्रहविध्यभावे विशेषमाह स एव—

" अविधाय विधानं यः परिगृह्णाति पुत्रकम् ।
विवाहविधिभाजं तं कुर्यान्न धनभाजनम् " इति ॥

परिग्रहविधिं विना परिगृहीतस्य विवाहमात्रं कार्यं न धनदानमित्यर्थः । किंतु तत्र पत्न्यादय एव धनभाजः । विधिं विना तस्य पुत्रत्वानुत्पादात् ।
अत एव वृद्धगौतमः—" स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते " इति ॥

विधिनैव गोत्रतां यान्तीति नियमः । दानादिविधीनां दत्तकादिलक्षणान्तर्गतत्वेन स्वरूपनिर्वाहकत्वात् ।

यथोक्तम्—"यमद्भिः पुत्रमापदि" इति । आपद्ग्रहणं सकलदानविधेरुपलक्षणं, तेन च प्रतिग्रहविधिरप्याक्षिप्तो भवति । संप्राप्तोऽप्यन्यगोत्रत इति मानवात् । सम्यग्विधिना प्राप्तमि(प्त इ)त्यर्थः । एतदभिप्रेत्यैव[1] च वसिष्ठेनापि तस्य दानविक्रयपरित्यागेषु मातापितरौ प्रभवत इत्युपक्रम्य परिग्रहविधिरभिहितः । मनुवाक्ये क्रीतादय इत्यादिशब्देन कृत्रिमापविद्धस्वयंदत्तानां ग्रहणम् । तस्मादेषां पञ्चानां पुत्राणां बौधायनाद्युक्तविधिपरिग्रहेणैव पुत्रत्वं नान्यथेति । विस्तरस्त्वन्यत्रानुसंधेयः ।

तत्र पञ्चवार्षिकस्ततो न्यूनः पितृगोत्रेणाकृतचूडश्च प्रतिग्राह्यः । नाधिकवयस्कः कृतचूडश्च । तत्र पुत्रो भ्रातुर्ग्राह्यः । तदभावे सगोत्रः सपिण्डोऽपि यः कश्चित् । तदभावे त्वसगोत्रः सपिण्डः । तदभावे त्वसपिण्डः सगोत्रः ।[2] तदभावे त्वसपिण्डोऽसगोत्रोऽपि । तत्रापि भागिनेयदौहित्रमातृष्वस्रीयपितृष्वस्रीयवर्जं पुत्रत्वबुद्ध्यनर्हभ्रातृपितृव्यमातुलवर्जं च । त्रयाणां वर्णानां स्वसमानवर्ण एव । तत्रापि देशभेदप्रयुक्तगुर्जरत्वादि[3]जात्या समानजातीय एव । सर्वोऽपि सभ्रातृक एव ज्येष्ठभिन्नश्चेति । अत्र प्रमाणं प्राचीननवीनग्रन्थेषु द्रष्टव्यम्, विस्तरभीत्या न प्रदर्श्यते ।

१ क. ग. °व व° । २ क. ख. °त्रव° । ३ क. °रत्वजा° ।

( * अत्र नक्षत्रादिकमुक्तं व्यवहारसारे—

" हस्तादिपञ्चकभिषग्वसुपुष्यभेषु सूर्यक्ष्माजगुरुभार्गववासरेषु ।
रिक्ताविवर्जिततिथिष्वलिकुम्भसिंहवृषेषु वै भवति दत्तपरिग्रहोऽयम्" इति॥

हस्तादिपञ्चकं हस्तचित्रास्वातीविशाखानूराधाः । भिषगश्विनी नक्षत्रम् । वसुः श्रविष्ठाः । क्ष्माजो भौमः । अन्यत्स्पष्टम् । )

## अथ प्रयोगः ।

पूर्वेद्युः कृतोपवासो वाससी कुण्डले अङ्गुलीयकं छत्रमुष्णीषमाचार्यं धर्मसंयुक्तं वेदपारगं कुशमयं बर्हिः पालाशमिध्ममन्यां होमसामग्रीं च संपाद्य शिष्टानिष्टाञ्ज्ञातीन्बन्धूंश्चाऽऽहूय तान्संपूज्य तत्समक्षं राज्ञि सभासत्सु च निवेद्य तैरनुज्ञातः पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य ममाप्रजत्वप्रयुक्तपैतृकर्णापाकरणसिद्धिपुंनामनरकत्राणसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुत्रप्रतिग्रहं करिष्य इति संकल्प्य तदङ्गत्वेन गणपतिं संपूज्य बन्धुवर्गेभ्यो ब्राह्मणेभ्यश्चान्नदानं कृत्वा पुण्याहवाचनमातृकापूजननान्दीश्राद्धाचार्यवरणमधुपर्कार्हणानि कुर्यात् । ( + स्त्रीकर्तृकप्रतिग्रहे तु मद्भर्तुर्मम चेति संकल्पवाक्ये विशेषः । गणपतिपूजनाद्याचार्यवरणान्तं ब्राह्मणद्वारा कारयेत् । ) पुत्रप्रतिग्रहाङ्गभूतहोमार्थमाचार्यं त्वामहं वृण इत्याचार्यवरणवाक्ये विशेषः ।

तत आचार्य आचम्य प्राणानायम्योल्लेखनादि[२]स्थण्डिलसंस्कारं विधाय तत्र बलवर्धननामानं लौकिकमग्निं प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा पुत्रप्रतिग्रहाङ्गभूतहोमकर्मणि या यक्ष्यमाणा इत्यादि प्रसाधनीदेव्यन्तं व्याहृत्यन्तं वोक्त्वा वैशेषिकप्रधानहोमे—अग्निं चर्वाहुत्या यक्ष्ये । अग्निं वायुं सूर्यं प्रजापतिं चैकैकयाऽऽज्याहुत्या यक्ष्ये । अग्निं स्विष्टकृतं चरुशेषाहुत्या यक्ष्य इत्यादि । अङ्गहोमे वरुणं द्वाभ्यामित्यादि वा । पात्रासादने स्रुवं दर्वीमाज्यस्थालीं प्रणीताप्रणयनं प्रोक्षणीपात्रं चरुस्थालीं मेक्षणं शूर्पं कृष्णाजिनमुलूखलं मुसलमुपवेषं वासोद्वयं कुण्डले अङ्गुलीयकं छत्रमुष्णीषं संमार्गदर्भानवज्वलनदर्भान्पर्णमयमेवेध्मं कुशमयमेव बर्हिराज्यं च स[३]हैवाऽऽसादयेत् ।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख. पुस्तकयोः । + धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख. पुस्तकयोः ।

---

१ क. ख. °य ज्ञाती°। २ ख. ग. ङ. च. °दिसं° । ३ ग. ङ. च. °हैव सा° ।

ततः पवित्रकरणादिप्रणीताप्रणयनान्तं कृत्वा विरमति। ततः प्रतिग्रहीता ब्राह्मणैर्बन्धुवर्गैश्च सह दातुः समक्षं गत्वा तत्समीपे तिष्ठन्पुत्रं मे देहीति भिक्षेत्(त)।

ततो दाता ददामीत्युक्त्वाऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं पुत्रदानमहं करिष्य इति संकल्प्य गणपतिं संपूज्य यथाविभवं वस्त्रगन्धादिभिः प्रतिग्रहीतारं संपूज्येमं पुत्रं तव पैतृकर्णापाकरणपुंनामनरकत्राणसिद्धिद्वाराऽऽत्मनश्च श्रीपरमेश्वरप्रीत्यर्थं तुभ्यमहं संप्रददे न मम प्रतिगृह्णातु पुत्रं भवानित्यन्ते प्रतिग्रहीतृहस्ते साक्षतं सतुलसीपत्रं जलं क्षिपेत्। त्रिरिति केचित्। (*स्त्रियै दाने त्विमं पुत्रं त्वद्भर्तुस्तव चेति दानवाक्ये दात्रोहः कार्यः।) ततः प्रतिग्रहीता ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां धर्माय त्वा गृह्णामि संतत्यै त्वा गृह्णामीति हस्तद्वयेन प्रतिगृह्य स्वाङ्क उपवेश्य मूर्ध्न्याजिघ्रेत्।

ततो युवं वस्त्राणीत्यस्य विश्वे देवा वसवस्त्रिष्टुप्। वस्त्रपरिधाने विनियोगः। "ॐ युवं वस्त्राणि पीवसा वसाथे० सचेथे" इत्यासादितयोर्वाससोर्मध्य एकं परिधाप्यैतेनैव मन्त्रेण द्वितीयमुत्तरीयं कारयित्वा तूष्णीमुष्णीषं बद्ध्वा कुङ्कुमादिना तिलकं कृत्वा कुण्डलाभ्यामङ्गुलीयकेन चालंकृत्य सति विभवेऽन्यैरपि भूषयित्वा छत्रेणाऽऽच्छादितं बालं नृत्यगीतवाद्यैः स्वस्ति न इन्द्रो वृद्धश्रवा अष्टौ देवा वसवः सोम्यास इति द्वाभ्यां स्वगृहमानीय + हस्तपादान्प्रक्षाल्याऽऽचम्याग्नेः पश्चान्मातुरुत्सङ्ग उपवेशयेत्।

तत आचार्यः शूर्पे चतुरो मुष्टीन्निरू(रु)प्येत्यादिचरुकल्पेन चरुं श्रपयित्वाऽभिघार्योद्वास्य परिषेकाद्यन्वाधानोत्कीर्तनानुसारेण प्रसाधनीदेवीहोमान्तं व्याहृतिहोमान्तं वा कृत्वा प्रधानहोमं कुर्यात्। दर्व्यां स्रुवेणोपस्तीर्य चरुमवदानविधिना मेक्षणेनैव द्विरवदायावत्तमभिघार्य शिष्टं हविः प्रत्यज्य यस्त्वा हृदेतिद्वयोर्विश्वे देवा अग्निस्त्रिष्टुप्। पुत्रप्रतिग्रहवैशेषिकप्रधानचरुहोमे विनियोगः। "ॐ यस्त्वा हृदा कीरिणा० मन्यमान्" इति पुरोनुवाक्यामनूच्य "ॐ यस्मै त्वᳪं सुकृते जातवे० ते स्वस्ति स्वाहा" इति याज्यया जुहोति। अग्नय इदं०। अथवाऽग्निद्वयसंसर्गोक्तेन पुरोनुवाक्यायाज्याधर्मेण होमः।

तत आज्येन व्यस्तसमस्तव्याहृतिभिश्चतस्र आज्याहुतीर्जुहुयात्।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थो नास्ति क. ख. पुस्तकयोः। + हस्तपादमिति तूचितम्।

१ क. 'मीपं ति'। २ ख. ङ. च. 'सिद्ध्यर्थमात्म'।

एतासामृष्यादिकं तु प्रागुक्तमेव। पुत्रप्रतिग्रहवैशेषिकप्रधानाज्यहोमे विनियोग इति विनियोगवाक्ये विशेषः।

ततः स्विष्टकृदादि, अङ्गहोमादि वा होमशेषं समाप्याऽऽचार्याय धेनुं दद्यात्। ते एव वाससी कुण्डले अङ्गुलीयकं च। धेनुदानं न वा।

ततो दश त्रीन्वा[3] ब्राह्मणान्भोजयेत्।

ततोऽग्निं संपूज्य कर्मणः संपूर्णतां वाचयित्वा कर्मसाद्गुण्याय विष्णुं स्मरेत्।

एवं दत्तकपुत्र्या अपि स्वीकार उक्तविधिना कार्यः। दानप्रतिग्रहविधिपूद्देश्यगतपुंस्त्वाविवक्षणात्। इतिहासपुराणेषु कुन्त्या दत्तकत्वोक्तेश्च।

एवं भर्त्रनुज्ञया स्त्रियाऽपि रथकारवत्समन्त्रकमेव ग्रहणं कार्यमिति केचित्। अन्यत्रानुज्ञानाद्भर्तुरितिप्रतिप्रसवेन प्रधानाधिकारसिद्धावधिकृताधिकारेण[4] होममन्त्रादिप्राप्तौ स्त्रीशूद्राणाममन्त्रकमिति मन्त्रपर्युदाससिद्धेरमन्त्रकप्रतिग्रहसिद्धिर्वस्त्वन्तरप्रतिग्रहवदित्यन्ये। यद्यपि मेधातिथिना भार्यात्ववददृष्टरूपं दत्तकत्वं होमसाध्यमुक्तं स्त्रियाश्च होमासंभवस्तथाऽपि व्रतादिवद्विप्रद्वारा होमादि कारयेदिति हरिनाथादयः। जीवतो भर्तुरनुज्ञां गृहीत्वा तदभिप्रायं वा ज्ञात्वा विधवयाऽपि ग्राह्य इति कौस्तुभे। दत्तकमीमांसोदाहृते "अथोढक्षेत्रजकृत्रिमपुत्रिकापुत्रस्त्रीद्वारजासुराद्यूढजदक्षिणाजानां पित्रोश्च" इति सत्याषाढसूत्रे स्त्रीद्वारजस्य गोत्रद्वयसंबन्धोऽभिहितः "मातुरुत्तरं पितुः प्रथमम्" इति सूत्रेणेति। पितृगोत्रसंबन्धश्च पुत्रत्वेन। पुत्रत्वं च पित्रनुज्ञानेनैव न परिग्रहेण, व्रतस्य तत्र स्त्रीकर्तृकत्वात्। ऊढः सहोढः। स्त्रीद्वारजः स्त्रिया याचितः स्त्रीसत्ताकः। यज्ञे दक्षिणात्वेन प्राप्तायां कन्यायां जातो दक्षिणाजः। अन्ये प्रसिद्धाः, इति शबरस्वामिनः।

ननु सूत्रकृता "न स्वामित्वस्य भार्यायाः पुत्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्मणः शब्दस्य च प्रतिनिधिर्विद्यते" इति पुत्रप्रतिनिधिनिराकरणाद्दत्तकपुत्रस्वीकरणमनुपपन्नमिति चेन्न। तस्य "तन्तवे ज्योतिष्मतीं तामाशिषमाशासे" इत्यादौ पितापुत्रीयसुब्रह्मण्याह्वानादौ च पुत्रप्रतिनिधिं कृत्वाऽऽशीराशंसनप्रवचननिवृत्त्यर्थत्वात्। अन्यथा "पुत्रप्रतिनिधीनाहुः" इत्यादिबहुस्मृतिविप्लवापत्तेः। "तामाशिषमाशासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः

१ क. ख. 'त्। कु'। २ क. ख. ग. च। त'। ३ ग. च. त्रीन्ब्राह्म'। ४ च. 'धिका'। ५ क. ग. 'व्.प'।

स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते " इति श्रुतिरप्याशीराशंसनं पुत्रप्रतिनिधिं कृत्वा न कर्तव्यमित्यत्र साधिकेति द्रष्टव्यम्।

इति पुत्रप्रतिग्रहविधिः।

## अथ पुनःसंधानम्।

तत्र गृह्यसूत्रम्—" द्वादशाहं विच्छिन्नः पुनराधेयः प्रतिसंख्याय वा सर्वान्होमाञ्जुहुयात् " इति।

द्वादशाहं विच्छिन्न इत्यत्र होमश्चेदिति शेषः। तथा च द्वादशाहं होमविच्छेदे पुनरग्निराधेय इत्यर्थः। अथवा तावत्संख्यान्सायंप्रातर्होमान्प्रतिसंख्याय गणयित्वा समस्यविधिना जुहुयादित्यर्थः। नात्र पुनरग्निराधेयः। अयं च पक्षः संकटे।

अन्यान्यपि निमित्तानि गृह्य उक्तानि—

" यदि पार्वणो विच्छिद्येत तस्मिंन्पाथिकृतेन यजेद्यदि द्वौ वैश्वानरेपाथिकृतौ यदि बहून्पुनराधेयो यदि नाशो विनाशो वाऽन्यैरग्निभिरग्नौ संसृष्टे वा पुनराधेयः " इति।

पार्वणः पर्वसु भवः स्थालीपाकः। तस्मिन्निति निमित्तसप्तमी, तन्निमित्तमित्यर्थः। नाश इत्यत्राग्नेरिति शेषः।

" भार्यायां प्रोषितायां चेदुदेत्यर्कोऽस्तमेति वा।
तस्य स्यात्पुनराधेयम् "

इत्यादिवचनप्रोक्तनिमित्तानि विशब्देन ग्राह्याणीति सूच्यते। योऽग्निसत्वेपि तस्य नाशः स विनाशशब्देनोच्यते। वस्तुतस्तु—अधिकमेवेदं प्रयोगवैजयन्त्यामधृतत्वात्।

शतद्वय्याम्—

" विहारकाले यदि कार्यदोषात्पत्नी तु सीमानमतीत्य गच्छेत्।
निःसंशयोऽग्निः खलु नाशमेति गृहस्य सीमाऽत्र विवक्षिता स्यात् " इति॥

मण्डनः—" अग्निहोत्रेण रहितः पन्थानं शतयोजनम्।
आहिताग्निः प्रयायाच्चेदग्निहोत्रं विनश्यति " इति॥

अग्निहोत्रेण सहित इत्यपि केषुचित्पुस्तकेषु पाठो दृश्यते।

१ ख. ग. 'स्मिन्पथि'। २ ग. 'रपथि'। ३ ख. ग. संस्पृष्टे।

तथा—" अब्दं स्वयमजुह्वन्यो(द्यो) हावयेदृत्विगादिना ।
तस्य स्यात्पुनराधेयं पवित्रेष्टिरथापि वा " इति ॥

तथा—" मन्त्रं विना समारूढोऽरण्योरात्मनि वा यदि ।
तत्र ज्वलनशान्तिः स्यादसमारूढशान्तिवत् ॥
आरूढोऽपि यथाशास्त्रमवरूढो न शास्त्रतः ।
तृतीये होमकाले तु संप्राप्ते पुनराहितिः " इति ॥

अरण्यात्मग्रहणं गृह्यविहितसमारोहणाधिकरणीभूतायाः समिध उपलक्षणम् । ज्वलनोऽग्निः ।

तथा—" भार्यायां प्रोषितायां चेदुदेत्यर्कोऽस्तमेति वा ।
तस्य स्यात्पुनराधेयमन्ये त्वाहुरिहान्यथा ॥
ज्येष्ठा चेदग्निसंयुक्ता गच्छन्त्यन्या यथारुचि ।
यजमानेन सहिता यद्वा ता एव केवलाः ॥
प्रोषितः स्यादधःशायी त्वरूग्युपायी त्वमैथुनः ।
वदन्बौधायनस्त्वित्थमेका चेदग्निसंनिधौ ॥
इतरासां यथाकामं प्रवासमनुमन्यते ।
इत्युक्तं भवभोग्येऽपि प्रेतश्लोकेष्वपीरितम् ॥
एकस्यामप्यतिष्ठन्त्यामग्निहोत्रसमीपतः ।
पतिस्तिष्ठति चेदग्निनाशो नेत्यपरे जगुः ॥
संध्यावदन्यदाऽप्यग्नीन्हित्वा चेद्दंपती गतौ ।
ग्रामान्तं वाऽथ सीमान्तं तत्रैकेऽग्नीन्गतान्विदुः ॥
अन्ये ग्रामान्तरं गत्वा न त्वतिक्रममात्रतः ।
सीम्नि त्वतिक्रमादेव केवलान्नाशमब्रुवन् ॥
यदोभावप्यतिक्रम्य सीमां प्रत्यागतौ पुनः ।
उदयास्तमयात्पूर्वं न नाशोऽत्रेति केचन ॥
छन्दोगपरिशिष्टोक्तहोमकालात्ययेऽनलः ।
सीमातिक्रान्तयोर्नश्येन्नोदयास्तमयादिति ॥
विनाऽग्निभिर्यदा पत्नी नदीमम्बुधिगामिनीम् ।
अतिक्रामेत्तदाऽग्नीनां विनाशः स्यादिति श्रुतिः " इति ॥

छन्दोगपरिशिष्टं कर्मप्रदीपस्तदुक्तो यो नवनाडिकात्मको होमकालस्तदत्यये सत्यनलोऽग्निर्नश्येत् । उदयास्तमयहेतुना नेति । इदमपि पक्षान्तरम् ।

---

१ ग. घ. 'च्छत्यन्या । २ क. 'भाष्ये च प्रे'।

तथा—" पत्न्यन्तरेऽथवा पत्यौ हुताशनसमीपगे ।
तदा पत्नी यथाकाममतिक्रामेन्नदीमपि " इति ॥

असमुद्रगामिनीमिति केचित्¹ । इदं च होमकालेऽनागमने ।

प्रयाणप्रकरणे त्रिकाण्डमण्डनः—

" ज्येष्ठा चेद्बहुभार्यस्य ह्यतिचारेण गच्छति ।
पुनराधानमत्रैक इच्छन्ति नयकोविदः " इति ॥

अतिचारेण भर्त्रारण्यसहायेन ।

पुनराधानप्रकरणे स एव—

" पत्नी सीमामतिक्रामेद्विना भर्त्राऽग्निभिः सह ।
तत्र नाशं परे त्वाहुर्भयाद्याने न दुष्यति ॥
विहायाग्नीन्सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति ।
होमकालात्यये तस्य पुनराधेयमिष्यते ॥
जलेन हेतुना वह्निरुपशान्तो यदा भवेत् ।
कर्तव्यं पुनराधेयमग्नावनुगते सति ॥
असमाधाय चेत्स्वामी सीमामुल्लङ्घ्य गच्छति ।

असमाधानमनुगतप्रायश्चित्तविधिनाऽनुत्पादनम् ।

सूकररासभकाकशृगालैः *कुक्कुरकुक्कुटमर्कटशूद्रैः।
अन्त्यजपातकिभिः कुणपैर्वा सूतकयाऽपि रजस्वलया वा ॥
रेतोमूत्रपुरीषैर्वा पूयाश्रुश्लेष्मशोणितैः ।
विष्ठास्थिमांसमज्जाभिरन्यैर्वाऽपि जुगुप्सितैः ॥
आरोपितारणीस्पर्शे कृतेऽग्नेः स्पर्शनेऽपि वा ।
आत्मारूढेषु मज्जेद्वा वदेद्वा पतितादिभिः ॥
अथवा योषितं गच्छेदनृतौ काममोहितः ।
वदन्त्येषु निमित्तेषु केचिदग्निविनाशनम् ॥
तत्रारणीगते वह्नौ दुष्टे स्यात्पुनराहितिः ।
इतरेषु निमित्तेषु त्वग्न्याधेयं प्रचक्षते ॥
यद्वा सर्वोपघातेषु पुनस्त्वेति समिन्धनम् " इति ॥

* अत्र क. पुस्तके कुकुभेति पाठः । तदुपरि " कुकुभो लावा इति प्रसिद्धः " इति टिप्पणी च ।

---

१ ख. ग. ङ. च. °त् । प्र° । २ क. °द्वा बोदक्याप° ।

गार्ह्ये कर्मणि पुनराधेयाभावात्पुनःसंधानमेव ।

रजस्वलास्पर्शविषये गोभिलोऽपि—

" अग्निं रजस्वला चेत्स्त्री संस्पृशेदग्निहोत्रकम् ।
इष्टिरष्टाकपालेन कार्या तन्तुमतेऽग्नये ॥
चण्डालपतितोदक्यासूतिकाकुणपादिभिः ।
संसर्गेऽपि विनाशः स्यादादधीतेति केचन " इति ॥

सर्वाग्निस्पर्श एव पुनराधानमिति व्यङ्कटेशः । ज्ञानाज्ञानकृता व्यवस्थेत्यन्ये । उक्तं च महाभारते—" रजस्वला चेच्छ्रौताग्निमज्ञानात्स्पृशते यदि ।
इष्टिरष्टाकपालेन कर्तव्या शुचयेऽग्नये " इति ॥

अत्र श्रौतमित्यग्निविशेषणादज्ञानतः स्मार्ते स्पर्शेऽपि पुनःसंधानमेव । साक्षात्परम्पराकृता व्यवस्थैव युक्तेति बहवः । चण्डालस्पर्शे पतितस्पर्शे चाऽऽधानमेवेति केशववरदराजादयः । सूतक्युपस्पर्शे शवस्पर्शे चैवमिति केचित् । मानुषास्थिस्पर्शे पुनराधानमेव । इतरास्थिस्पर्शे तु शुचीष्टिमात्रमिति केचिदिति प्रायश्चित्तसारकारादयः ।

मण्डनः—" रजोदोषे समुत्पन्ने सूतके मृतके तथा ।
प्रवसन्नग्निमान्विप्रः पुनराधानमर्हति ॥
बह्वीनामपि चैकस्यामुदक्यायां न तु व्रजेत् ।
शिक्येनोद्वाहयेदग्नीन्पुनराधानमर्हति " इति ॥

" एकाकिनी यदा पत्नी वह्निमादाय गच्छति ।
अग्निनाशं परे त्वाहुर्भयाद्याने न दुष्यति ॥
न रुच्यैकाकिनी पत्नी प्रयायादग्निभिः सह ।
राष्ट्रभ्रंशादिसंप्राप्तावुदितं यानमीदृशम् ॥
न काप्यारम्भणं केचिल्लौगाक्ष्याद्यनिबन्धनात् ।
उदक्या चेद्भवेत्पत्नी प्रसूता *प्रसवन्त्यपि ॥
अन्वारम्भविकल्पत्वात्पुनराधिर्न तन्मतात् ।
ज्येष्ठाऽन्वारभते पत्नी बहुभार्यस्य नेतराः ॥
आपद्यग्निषु दीप्यत्सु मासार्धं चेन्न हूयते ।
सर्वहोमानतिक्रान्तान्पक्षान्ते पक्षहोमवत् ॥

* क. पुस्तके " प्रवसत्यपि " इति शोधितः पाठः ।

१ क. ख. गोपालोऽ° । २ क. °म् । नात्वान्वा° ।

समस्य जुहुयात्पश्चादिष्टिस्तन्तुमती भवेत् ।
न तत्र पुनराधेयमिति कौषीतकी श्रुतिः ॥
वत्सरं वत्सरार्धं वा होमलोपे मतान्तरम् ।
आपत्काले न नश्यन्ति दीप्यन्ते चेद्धुताशनाः " इति ॥

प्रायश्चित्तकुतूहले—" खरोष्ट्रवृषभं नारी समारुह्याथवा पुमान् ।
योजने योजने कृच्छ्रमग्निश्चापि विनश्यति " इति ॥

यज्ञपार्श्वे—" गजोष्ट्रवृषभं नारी समारुह्याथवा पुमान् ।
योजने योजने कृच्छ्रमग्निश्चापि विनश्यति " इति ॥

अयं च गजारोहणनिषेधो राजव्यतिरिक्तपरः । राज्ञो गजारोहणस्य बहुषु पुराणेषु दर्शनात् ।

" यस्यच्छत्रं हयश्चैव कुञ्जरारोहमृद्धिमत् ।
ऐन्द्रस्थानमुपासीत तस्मात्तं न विचारयेत् "

इति मार्कण्डेयपुराणाच्च । चकारात्तप्तकृच्छ्रपुनःसंस्कारादिकस्य समुच्चयः । खरोष्ट्रवृषभारोहणनिषेधो निरग्नेरपि ।

" यदि चेद्वै द्विजो गच्छेदारुह्योष्ट्रं खरं वृषम् ।
पुनस्तस्य क्रियाः कार्याः शिखाया वापनेन च ॥
आदौ तु विधिना ऽब्दं प्रायश्चित्तं समाचरेत् "

इति स्वतन्त्रनिषेधस्य सत्त्वात् । गजारोहणनिषेधस्तु तथानिषेधाभावात्तस्य न भवति । एवं च समावर्तनोत्तरमौपासनाग्न्युत्पत्तेः प्राग्गजारोहणे विप्रस्यापि निषेधो नास्तीति सिद्धं भवति । गजारोहणे तप्तकृच्छ्रपुनःसंस्कारादिकस्य समुच्चयो न भवति । यदि चेद्वै द्विजो गच्छेदित्यनन्तरोदाहृतवचने खरोष्ट्रवृषभारोहण एव तप्तकृच्छ्रपुनःसंस्कारादिकस्य विहितत्वात् ।

यज्ञपार्श्वे—" नाग्निकार्यस्य वेलायां प्रवसेन्न च पर्वणि ।
न विना च निमित्तेन क्रीडाद्यर्थं तु न व्रजेत् ॥
आहिताग्निस्तु यो लोभात्प्रवासं पर्वसंधिषु ।
करोति पुनराधानं प्रायश्चित्तमृतावृतौ[1] " इति ॥

तथा—" आहिताग्निस्तु यो मोहादनुगच्छेच्छवं यदि ।
तदाऽग्नीनां विनाशः स्यादिति प्राहुर्मनीषिणः " इति ॥

१ क. प्रायश्चित्तदीपि(धि)तौ ।

इदमन्यगोत्रविषयम् ।

" आहिताग्निः(ग्नेः) प्रमादाद्वा प्रेतानुगमनं यदि ।
अग्निनाशं विजानीयात्सपिण्डे तु न दोषकृत् " ॥

इति प्रायश्चित्तकेशवीकारोक्तेः ।

" आहिताग्नेः प्रमादाच्चेच्छवानुगमनं तदा ।
अग्निनाशं विजानीयात्सगोत्रेषु न दोषकृत् " ॥

इति प्रयोगदर्पणे स्मृतिवचनाच्च ।

वाहिनीपतावपि—" असपिण्डशवानुगमने शवस्पर्शे च पुनराधानम् " इति ।

आहिताग्निग्रहणं साग्निकोपलक्षणमिति केचित् । एवमन्यान्यपि निमित्तानि तत्रैव द्रष्टव्यानि ।

नदीशब्दप्रवृत्तिनिमित्तमपि तत्रैवोक्तम्—

" कूलद्वयान्तरालं तु नदीशब्देन[1] नोच्यते[2] ।
किंतु तद्देशवर्त्येव जलसंघो नदी भवेत् ॥
अष्टौ धनुःसहस्राणि न संस्रवति यज्जलम् ।
नदीशब्दाभिधेयत्वं तस्येच्छन्ति न सूरयः ॥
एकेन नामधेयेन शतयोजनगामि यत् ।
उदकं तन्नदीशब्दवाच्यमित्यपरे जगुः " इति ॥

इति संक्षेपेण पुनराधाननिमित्तानि ।

## अथाग्नित्यागप्रायश्चित्तानि ।

तत्र स्मृतिः—" नास्तिक्याद्वा प्रमादाद्वा आलस्याद्वा कथंचन ।
विच्छेदेऽग्नेः प्रकर्तव्यं प्रायश्चित्तं तु तद्यथा " इति ॥

मनुः—" अग्निहोत्र्यपविध्याग्निं ब्राह्मणः कामकारतः ।
चान्द्रायणं चरेन्मासं वीरहत्यासमं हि तत् " इति ॥

अपविध्य त्यक्त्वा । मासमपविध्येत्यन्वयः ।

यत्तु हारीतः—" संवत्सरोत्सन्नेऽग्निहोत्रे चान्द्रायणं कृत्वा पुनरादध्याद्द्वि-
वर्षोत्सन्ने सोमायनचान्द्रायणे कुर्यात्त्रिवर्षोत्सन्ने संवत्सरं
कृच्छ्रमभ्यस्य पुनरादध्यात् " इति, तदकामतो ज्ञेयम् ।

शङ्खस्तु—" अग्न्युत्सादी संवत्सरं प्राजापत्यं चरेद्गां च दद्यात् " ।

१ च. 'शब्दे प्र' । २ क. 'न चोच्य' ।

इति त्रिवर्षोत्सादे गोदानमप्यधिकमाह। विष्णुरपि—

" वेदाग्न्युत्सादी त्रिषवणस्नाय्यधःशायी संवत्सरं भैक्षेण वर्तयेत् " इति।

व्याघ्रः—" मासद्वयं तयोर्वह्निं त्यजेदेवं समाचरेत्।
नास्तिक्यात्कृच्छ्रमेकं तु होमद्रव्यं ददाति च " इति॥

तयोः प्रमादालस्ययोः। होमद्रव्यं यावत्कालं होमो न कृतस्तावद्धोमपर्याप्तम्। तथा च भरद्वाजगृह्ये—

" यावत्कालमहोमी स्यात्तावद्द्रव्यमशेषतः।
तद्दानं चैव विप्रेभ्यो यथा होमस्तथैव तत् " इति॥

जातूकर्ण्योऽपि—" अतीतकालं जुहुयादग्नौ विप्राय वा स्वयम्।
दद्याद्वेदविदे सम्यक्कृत्वाऽऽधानं पुनर्द्विजः " इति॥

अत्र होम इति स्थालीपाकोपलक्षणम्। यद्यप्यग्निविच्छेदे सति होमादावधिकाराभावेन दोषाभावाद्धोमलोपप्रायश्चित्तार्थस्य[1] होमद्रव्यदानस्याप्राप्तिस्तथाऽपि व्याघ्रवचने नास्तिक्यादितिश्रवणान्नास्तिक्यतोऽग्निविच्छेद एव होमलोपप्रायश्चित्तार्थं[2]होमद्रव्यदानं कार्यं नेतरयोरिति ज्ञेयम्। एतच्च[3] होमद्रव्यदानं श्रौताग्नित्यागे न भवतीति माधवः। उभयत्यागेऽपि युक्तमिति नवीनाः।

मासचतुष्टयत्यागे तु व्याघ्र एवाऽऽह—

" चतुष्टये तु संपूर्णे मासानां तु हुताशनम्।
त्यक्त्वाऽतिकृच्छ्रं कुर्वीत ततः पापात्प्रमुच्यते " इति॥

स्मृत्यन्तरेऽपि—" योऽग्निं त्यजति नास्तिक्यात्प्राजापत्यं चरेद्द्विजः।
मासद्वये तथा कुर्यादतिकृच्छ्रं चतुष्टये " इति॥

मासचतुष्टयेऽतिकृच्छ्रमित्यर्थः। षण्मासत्यागे पराकः। अत ऊर्ध्वमब्दपर्यन्तं पयोव्रतम्।

तथाऽऽहोशना—" षण्मासांस्त्यजते यो वै पराकं तु समाचरेत्।
ऊर्ध्वं पयोव्रतं कुर्यान्मासमेकं समाहित.॥
वर्षपर्यन्तमेवाऽऽहुर्मुनयः शंसितव्रताः " इति॥

मासषट्कादूर्ध्वं यावत्संवत्सरं याज्ञवल्क्योक्तान्युपपातकसामान्यप्रायश्चित्तानि जातिशक्तिगुणाद्यपेक्षया योजनीयानि।

---

१ क. °स्य होमद्र° । ख. ङ. च. °स्य होम° । २ क. ख. च. °र्थहोमद्र° । ङ. °र्थहोम° ।
३ क. ख. च. °च्च होमद्र° । ङ. °च्च होम° ।

संवत्सरादूर्ध्वं तु मनुः—" ऊर्ध्वं संवत्सरादग्निं यस्त्यजेत्स पयोव्रतम् ।
द्वैमासिकं ततः कुर्यात्त्रैमासिकमथापि वा " इति ॥

अत्र द्वैमासिकत्रैमासिकयोः कालाल्पत्वमहत्त्वापेक्षया विकल्पः । एतानि च सर्वाणि प्रायश्चित्तानि नास्तिक्यादग्निपरित्यागे । यदा तु प्रमादात्त्यजति तदा भरद्वाजगृह्ये विशेषः—

" प्राणायामशतमा त्रिरात्रादुपवासः स्यादा विंशतिरात्रादत ऊर्ध्वमा षष्टिरात्रात्तिस्रो रात्रीरुपवसेदत ऊर्ध्वमा संवत्सरात्प्राजापत्यं चरेदत ऊर्ध्वं कालबहुत्वे दोषबहुत्वम् " इति ।

इदमेवाकामतो गृह्याग्नित्याग इत्यपरार्के ।

अत्रैव विषये स्कान्दे—" हुताशनं तु यो विप्रः प्रमादात्त्यजति प्रभो ।
प्राणायामशतं कुर्यादुपवासमथापि वा " इति ॥

कूर्मपुराणे—" षाष्टिरात्रिं त्यजेदग्निं प्रमादाच्छृणु मे प्रभो ।
उपवासं ततः कुर्यात्प्राजापत्यं ततः परम् " इति ॥

तत इत्यनेन त्रिरात्रमुच्यते । मासद्वयमग्नित्यागे त्रिरात्रमुपवासः संवत्सरमग्नित्यागे प्राजापत्यमिति । स्कान्दे तु द्वादशाहातिक्रमे त्र्यहमुपवासः । मासातिक्रमे द्वादशाहमुपवासः । संवत्सरातिक्रमे मासमुपवासः पयोभक्षणं वा कूश्माण्डीभिर्होमः क्रमेणोभयं वेत्युक्तम् । इदं च कामतः । उपवासाशक्तौ मासं पयोभक्षणम् । संवत्सरानन्तरमधिककालातिक्रम उभयमिति मदनपारिजाते ।

आलस्यादग्निपरित्यागे स्मृत्यन्तरम्—

" आलस्येन यदा वह्निं द्वादशाहात्परं तदा ।
उपवासत्रयं कुर्यात्पश्चान्मासात्तथैव च ॥
उपवासो द्वादशाहं षण्मासातिक्रमे तथा ।
मासं पयोव्रतं कुर्याद्वत्सरातिक्रमे तथा ॥
मासोपवासः कर्तव्यः पयो वा भक्षयेत्तथा ।
कूश्माण्डहोमः कर्तव्यः क्रमेणोभयमेव वा ॥
द्विमासं वा त्रिमासं वा कालाल्पत्वमहत्त्वतः ।
पयोव्रतं चात ऊर्ध्वं बहुकालात्यये सति ॥
प्रायश्चित्तबहुत्वं स्यादेवमा वत्सरत्रयात् ।

१ क. °जातः । आलस्ये° ।

त्रिवर्षे वर्षमेकं तु प्राजापत्यं चरेद्व्रतम् ॥
एवमेवाधिकेऽपि स्यात्काले चैव ततोऽधिकम् " इति ।

## अथ प्रसङ्गात्संक्षेपेण कृच्छ्रादीनां लक्षणानि ।

तत्र कृच्छ्रलक्षणं धर्मसूत्रे—

" त्र्यहमनक्ताश्यदिवाशी ततस्त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किंचन " इति ।

कृच्छ्रद्वादशरात्रस्य विधिरयम् ।

मनुनाऽप्युक्तम्—" त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात्प्राजापत्यं चरन्द्विजः " इति ॥

याज्ञवल्क्येनाप्युक्तम्—" एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन लघुकृच्छ्र उदाहृतः ॥
यथाकथंचित्त्रिगुणाः(णः) प्राजापत्यः स उच्यते " इति ।

लघुकृच्छ्र उदाहृत इत्यत्र पादकृच्छ्रः प्रकीर्तित इति पाठान्तरम् । लघुकृच्छ्रस्यैव शिशुकृच्छ्र इति संज्ञान्तरम् । यथाकथंचिदित्यनेनानुलोमः प्रतिलोमो दण्डकलितवदावृत्तः स्वस्थानविवृद्धो वेति स्मृत्यन्तरसिद्धं पक्षचतुष्टयं संगृह्यते ।

ग्राससंख्यापरिमाणे आहाऽऽपस्तम्बः—

" सायं द्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः ।
चतुर्विंशतिरायाच्याः परे निरशनास्त्रयः ॥
कुक्कुटाण्डप्रमाणाः स्युर्यथा वाऽऽस्यं विशेत्सुखम् " इति ।

अनयोः पक्षयोः शक्ताशक्तपरत्वेन व्यवस्था । पाराशरे तु—

" सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः " इति पूर्वार्धं पठितम् ।

चतुर्विंशतिमते तु—" प्रातस्तु द्वादश ग्रासाः सायं पञ्चदशैव तु ।
अयाचिते तु द्वावष्टौ परं वै मारुताशनः " इति ॥

आसां च संख्यानां शक्ताशक्तपरत्वेन व्यवस्था ।

कृच्छ्रसंवत्सरलक्षणमुक्तं धर्मसूत्रे—

" एवमेवाभ्यस्येत्संवत्सरं स कृच्छ्रसंवत्सरः " इति ।

पूर्वसूत्रे कृच्छ्रद्वादशरात्रविधेरुक्तत्वात्तस्यैवंशब्देन ग्रहणम् । अभोज्यभोजनाभ्यासेऽयम् ।

अतिकृच्छ्रलक्षणमाह याज्ञवल्क्यः—

" एष एवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः " इति ।

---

१ क. °नुनोक्तः । त्र्य° । २ ङ. च. °म्—ए° ।

अत्र येषु नवदिनेषु भोजनं प्राप्तं तत्र पाणिपूरान्नं नियम्यते[1]। पाणिपूरमेकग्रासपरिमितमन्नम्।

"एकैकं ग्रासमश्नीयात्र्यहाणि(दहानि) त्रीणि पूर्ववत्।
त्र्यहं चोपवसेदन्त्यमतिकृच्छ्रं चरन्द्विजः" इति मनूक्तेः।

कृच्छ्रलक्षणमपि तेनैवोक्तम्—

"कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिः(म्)" इति।

पत्रपुटकादिना ग्रासपरिमाणं कृत्वैकग्रासपर्याप्तं दुग्धमेकविंशतिदिनेष्वश्नीयात्।

प्राजापत्योक्तद्वाविंशत्यादिसंख्यया वा यावता प्राणधारणं भवति तावद्वेति मदनपारिजातः। पयोऽत्र जलम्।

"चरेत्कृच्छ्रातिकृच्छ्रं तु पिबेत्तोयं तु शीतलम्" इति ब्रह्माण्डपुराणात्।

अभक्षः कृच्छ्रातिकृच्छ्र इति गौतमोक्तेश्चेति भवदेवः।

पराकलक्षणमाह याज्ञवल्क्यः—

"द्वादशाहोपवासेन पराकः परिकीर्तितः" इति।

मासोपवासकृच्छ्रमाह जाबालिः—

"अनश्नन्मासमेकं तु महापातकनाशनम्" इति।

यावककृच्छ्रमाह शङ्खः—"गोपुरीषाद्यवानश्नन्मासमेकं समाहितः।
व्रतं तु यावकं कुर्यात्सर्वपापापनुत्तये" इति॥

तप्तकृच्छ्रमाह मनुः—"तप्तकृच्छ्रं चरन्विप्रो जलक्षीरघृतानिलान्।
प्रतित्र्यहं पिबेदुष्णान्सकृत्स्नायी समाहितः" इति॥

स्मृत्यन्तरे तु—"तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत्।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः" इत्युक्तम्॥

क्षीरादीनां परिमाणमुक्तं पराशरेण—

"षट्पलं तु पिबेदम्भस्त्रिपलं तु पयः पिबेत्।
पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रो विधीयते" इति॥

तप्तकृच्छ्रमुक्त्वा शङ्खलिखितौ—"एष एव शीतैः शीतकृच्छ्रः" इति।

सांतपनमाह शङ्खः—"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
एकरात्रोपवासश्च कृच्छ्रं सांतपनं स्मृतम्" इति॥

---

[1] क. ख. ग. नियम्य।

यतिसांतपनमाह स एव—

"एतदेव त्र्यहाभ्यस्तं यतिसांतपनं स्मृतम्" इति ।

यतिसांतपनमिति संज्ञामात्रम् । तेन न यतिमात्रस्यैवाधिकारः किं तु सर्वेषाम् ।

महासांतपनमाह याज्ञवल्क्यः—

"पृथक्सांतपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासांतपनः स्मृतः" इति ॥

यमः—"एतान्येव च पेयानि एकैकं च त्र्यहं त्र्यहम् ।
अतिसांतपनं नाम श्वपाकमपि शोधयेत्" इति । द्वादशाहोऽयम् ।

"त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिस्ततः शुचिः" [इति] ॥

(*पञ्चदशाहोऽयम् ।

जाबालः—"+षण्णामेकैकमेतेषां त्रिरात्रमुपयोजयेत् ।
त्र्यहं चोपवसेदन्त्यं महासांतपनं विदुः") इति ॥

एकविंशत्यहोऽयम् ।

तुलापुरुषकृच्छ्रमाह शङ्खः—"पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।
उपवासान्तराभ्यासात्तुलापुरुष उच्यते" इति ॥

आचाम ओदननिस्रावो मण्ड इति यावत् ।

वज्रकृच्छ्रमाहाङ्गिराः—"गोमूत्रेण समायुक्तं यावकं[2] वोपयोजयेत् ।
एकाहेन तु कृच्छ्रोऽयमुक्तस्त्वङ्गिरसा स्वयम् ॥
सर्वपापहरो दिव्यो नाम्ना वज्र इति स्मृतः" इति ।

पूर्वप्रक्रान्तदधितक्रापेक्षया विकल्पः ।

चान्द्रायणमाह यमः—"वर्धयेत्पिण्डमेकैकं शुक्ले कृष्णे च ह्रासयेत् ।
एतच्चान्द्रायणं नाम यवमध्यं प्रकीर्तितम् ॥
एकैकं ह्रासयेत्पिडं शुक्ले कृष्णे च वर्धयेत् ।
एतत्पिपीलिकामध्यं चान्द्रायणमुदाहृतम् ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः क. पुस्तकातिरिक्तपुस्तकेषु नास्ति । + अत्र क. पुस्तके "षट्त्वं कुशोदकसाहित्येनेति प्रायश्चित्तेन्दुशेखर उक्तम्" इति टिप्पणी ।

---

१ ख. ग. ङ. च. तप्ताहेन । २ ग. ङ. °कं चोप° ।

त्रींस्त्रीन्पिण्डान्समश्नीयान्नियतात्मा दृढव्रतः ।
हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम् ॥
चतुरः प्रातरश्नीयाच्चतुरः सायमेव च ।
पिण्डानेतद्धि बालानां शिशुचान्द्रायणं स्मृतम् ॥
पिण्डानष्टौ समश्नीयान्मासं मध्यंदिने रवौ ।
यतिचान्द्रायणं ह्येतत्सर्वकल्मषनाशनम् " इति ॥

शिशुचान्द्रायणमिति संज्ञामात्रम् । एवं यतिचान्द्रायणमित्यपि । यवपिपीलिकामध्ययोस्तिथिवृद्धौ ह्रासे वा ग्रासानामपि ह्रासवृद्धी ।

तथा च विष्णुः—" ग्रासानास्याविकारमश्नीयात्तांश्चन्द्रकलाभिवृद्धौ क्रमेण वर्धयेद्धानौ च ह्रासयेदमावास्यायां च नाश्नीयात् " इति ।

सामान्यचान्द्रायणमाह विष्णुः—

" यथाकथंचित्पिण्डानां तिस्रोऽशीतीरश्नीयात्सामान्यचान्द्रायणे " इति ।

प्रतिदिनं संख्यानियमादरेण मासेन चत्वारिंशदुत्तरशतद्वयं ग्रासानश्नीयादित्यर्थः । पिपीलिकामध्ययवमध्यभिन्नचान्द्रायणेषु दिनान्तरेऽप्यारम्भो न प्रतिषिध्येत ।

ग्रासपरिमाणमाह याज्ञवल्क्यः—

" तिथिवृद्ध्या चरेत्पिण्डाञ्छुक्ले शिख्यण्डसंमितान् " इति । शिखी मयूरः ।

चान्द्रायणं प्रकृत्य पराशरस्तु—"कुक्कुटाण्डप्रमाणं तु ग्रासं वै परिकल्पयेत्" इति ।

शङ्खस्तु—" आर्द्रामलकमात्रास्तु ग्रासा इन्दुव्रते स्मृताः " इति ।

इन्दुव्रतं चान्द्रायणम् । एतेषां च परिमाणानां शक्ताशक्तपरत्वेन व्यवस्था । एकादश्यादौ नित्यप्राप्त उपवासश्चान्द्रायणविधिना बाध्यते । एतस्य " धर्मार्थं च चरेदेतच्चन्द्रस्येति सलोकताम् " इति काम्यत्वात् । लशुनभक्षणादिनिमित्ते विहितत्वेन नैमित्तिकत्वाच्च । काम्यस्त्वेकादश्याद्युपवासोऽन्यद्वारा कारणीयः । प्रतिनिधिना कृतेऽपि फलप्राप्तेः कात्यायनादिभिरुक्तत्वात् । अयं चैकादश्याद्युपवासबाधो न सामान्यचान्द्रायणे, तत्र प्रतिदिनं ग्रासग्रहणनियमाभावात् ।

## अथ संक्षेपेण प्रत्याम्नायाः ।

चतुर्विंशतिमते—" कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम् ।
तिलहोमसहस्रं तु वेदपारायणं तथा ॥
विप्रा द्वादश वा भोज्याः पावकेष्टिस्तथैव च ।
अन्या वा पावमानेष्टिः समान्याहुर्मनीषिणः " इति ॥

पराशरः—" कृच्छ्रो देव्ययुतं चैव प्राणायामशतद्वयम्।
पुण्यतीर्थेऽनार्द्रशिरःस्नानं द्वादशसंख्यया " इति।

अनार्द्रशिरःस्नानमिति पदच्छेदः।

अपरार्के स्मृत्यन्तरे—" समिद्घृतं हविर्धान्यं तिलान्वा मारुताशनः।
हुत्वा द्वादशसाहस्रं गायत्र्या कृच्छ्रमाप्नुयात्॥
द्वादशैव सहस्राणि जपेद्देवीमुपोषितः।
जलान्ते विधिवन्मौनी प्राजापत्योऽयमुच्यते " इति॥

द्वादशसाहस्रं द्वादशसंख्यसाहस्रं द्वादशाधिकसाहस्रमिति केचित्। जलान्ते जलसमीपे।

याज्ञवल्क्योऽपि—" यत्र यत्र च संकीर्णमात्मानं मन्यते जनः।
तत्र तत्र तिलैर्होमो गायत्र्या वाचनं तथा " इति॥

संकीर्णं पापयुक्तम्।

अपरार्के—" उपोष्य श्रद्धया युक्तस्तिलपात्राणि धर्मतः।
द्वादशब्रह्मवादिभ्यः प्राजापत्येन तत्समम्॥
स्वयमाहृत्य यो मूर्ध्ना तृणभारानुपोषितः।
दद्याद्गोमण्डले कृच्छ्रे द्वादशैव न संशयः॥
अन्नदानहिरण्येन द्वादश ब्राह्मणाञ्शुचीन्।
तर्पयेन्मारुताशी च श्रोत्रियान्कृच्छ्र उच्यते॥
प्राणायामशतं कृत्वा द्वात्रिंशोत्तरमार्तिषु।
अहोरात्रोषितस्तिष्ठेत्प्राङ्मुखः कृच्छ्र उच्यते॥
नमस्कारसहस्राणि द्वादशैव दृढव्रतः।
गोविप्रपितृदेवेषु कुर्यात्कृच्छ्रत्रयं भवेत् " इति॥

तिलपात्राण्युक्तानि कौर्मे—" तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमम्।
ताम्रपात्रं दशपलं जघन्यं परिकीर्तितम्॥
द्विगुणं मध्यमं प्रोक्तं त्रिगुणं तूत्तमं स्मृतम् "इति।

भारो द्विसहस्रपलपरिमितः।

वसिष्ठः—" गोमूत्रेण समायुक्तं यावकं चोपयोजयेत्।
कृच्छ्रमैकाहिकं प्रोक्तं दृष्टमङ्गिरसा स्वयम्।
निश्यासीनो दिवा तिष्ठेत्त्रिरात्रं मारुताशनः।
प्राजापत्यं विजानीयात्कूश्माण्डैर्जुहुयाद्घृतम् " इति॥

माधवीये स्मृत्यन्तरे—" प्राजापत्यं चरन्विप्रो यद्यशक्तः कथंचन ।
अहानि पञ्च विप्राग्र्यान्भोजयेत्सम्यगीप्सितान् " इति ॥

अत्र कपिञ्जलाधिकरणन्यायेन पञ्चस्वप्यहःसु त्रयस्त्रयो विप्रा भोज्या इति केचित् । पञ्चसंख्याया देहलीदीपन्यायेनोभयत्रान्वयः । तेन पञ्च विप्रा भोजनीया इत्यन्ये ।

स्मृत्यर्थसारे—" रुद्रैकादशिनी कृच्छ्रो द्वादशांशो निवर्तनात् ।
योजनं सिन्धुगातीरे घृतहोमशतद्वयम् " इति ॥

निवर्तनलक्षणं तु—" दशहस्तेन दण्डेन त्रिंशद्दण्डा निवर्तनम् " इति ।

निवर्तनद्वादशांशभूमिदानेन कृच्छ्र इत्यर्थः ।

माधवीये—" प्राजापत्यक्रियाशक्तौ धेनुं दद्यात्पयस्विनीम् ।
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः " इति ॥

मदनरत्ने ब्राह्मे—" गवामभावे निष्कः स्यात्तदर्धं पादमेव वा " इति ।

चतुर्विंशतिमते—" प्राजापत्ये तु गामेकामतिकृच्छ्रे तथा द्वयम् ।
पराके तप्तातिकृच्छ्रे तिस्रस्तिस्रस्तु ताः स्मृताः ॥
अष्टौ चान्द्रायणे ज्ञेयास्तिस्रो वा शक्त्यपेक्षया " इति ॥

स्मृत्यर्थसारे तु—"षडुपवासाः प्राजापत्यप्रत्याम्नायः । एकविप्रभोजनमुपवासस्येति च" इति । पक्षिवधे नक्तं रूप्यमाषकं वा दद्यादिति हारीतोक्ते रूप्यमाषकदानं नक्तस्येति शूलपाणिः ।

शूलपाणिरेव—" चान्द्रायणं तु कुर्वाणाः कुर्युः कृच्छ्रचतुष्टयम् " इति ।

तथा—" चान्द्रायणपराकाभ्यां निष्कृतिं यो न शक्नुयात् ।
स करोत्यात्मशुद्ध्यर्थं प्राजापत्यस्य पञ्चकम् " इति ॥

कृच्छ्रातिकृच्छ्रे धेनुचतुष्टयमिति भवदेवः । अत्र गुरुलघुपक्षाणां शक्ताशक्तपरत्वेन व्यवस्था । इति प्रत्याम्नायाः ।

## अथ पुनःसंधानम् ।

तत्र नक्षत्राणि—" कृत्तिका रोहिणी मृगशीर्षं पुनर्वसू फल्गुन्यौ हस्तश्चित्रा विशाखे अनूराधाः श्रोणा प्रोष्ठपदाश्चोत्तरेऽग्न्याधेयनक्षत्राणि " इति ।

कृत्तिकाबहुवचनान्तेनैकमेव नक्षत्रम् । अनूराधाः, प्रोष्ठपदाः, पुनर्वसू, पुंलिङ्गाः । फल्गुन्यौ विशाखे स्त्रीलिङ्गे । स्पष्टान्यन्यानि । " अमावास्यायां

१ ख. कृच्छ्रे द्वा° । २ क. °न्धुमाती° । ३ क. °व्यं मूल्यं तुल्यं न । ४ क. °व च " इ° । ५ क. °णे देया° ।

पौर्णमास्यामापूर्यमाणपक्षे वा पुण्ये नक्षत्रे" इति। आपूर्यमाणः पक्षः पूर्वः पक्षः। आपूर्यमाणपक्ष इत्यनेन पूर्णमासग्रहणे पुनरुपादानमतिशयार्थं तत्प्रतिपद्ग्रहणार्थं च। आपूर्यमाणपक्ष इत्यनेन पुण्ये नक्षत्र इति समुच्चीयते। वाशब्दस्यात्रानन्वयात्। आषाढे मासि पुनःसंधानं न कर्तव्यम्।

"आदधीतानलान्विप्रो नाऽऽषाढे मासि कर्हिचित्।
भाद्रे मासि न राजन्यो नाऽऽश्विनेऽप्यूरुजः क्वचित्" इति कात्यायनोक्तेः।

ऊरुजो वैश्यः। विस्तरस्तु श्रौतोज्ज्ञेयः। विच्छिन्नसंधानस्य नैमित्तिकत्वान्निमित्तानन्तरमधिमासेऽपि करणमुचितं नातिपन्नस्य जातेष्टिवत्।

अमुनैवाऽऽशयेन दीपिकायामुक्तम्—

"यन्नैमित्तिकमग्निनक्ष्यनुगताग्न्याधानमर्चासु वा
संस्कारादिविलोपने सति पुनः प्रोक्तं प्रतिष्ठादिकम्।
दाहेष्ट्यादि च यत्स्वकालविगमे गौणं विधानात्परं
लुप्येताधिकमासि तद्वितनुयात्" इति॥

अथवा विवाहोक्तान्येव नक्षत्रादीनि ग्राह्याणि। अस्मिन्पक्षे विवाहहोमीयप्रधानाज्याहुतिषट्कं लाजाहुतित्रयं चायाश्चेत्याहुत्योपवासेन वा समुच्चितं द्रष्टव्यम्। न्यायतोऽप्येवम्। यदि तु सर्वथा पुत्राद्यभावस्तदा मन्त्रलिङ्गविरोधादाज्याहुतिषट्काभाव एव। लाजाहुतित्रयमात्रं कर्तव्यम्। पूर्ववदाहुत्या उपवासस्य वा समुच्चयोऽत्राप्यस्त्येव। वस्तुतस्तु शुभकर्मानुकूलानि सामान्यनक्षत्रादीन्यत्र ज्ञेयानि। अस्मिन्कल्पे विवाहहोमीयाहुतिषट्कं लाजाहुतित्रयं च न। असंकरात्सर्वत्रेदमेव युक्तम्। सर्वपक्षेषु निमित्तानन्तरकरणपक्षे न नक्षत्राद्यपेक्षेति द्रष्टव्यम्।

## अथ पुनःसंधानप्रयोगः।

कर्ताऽऽदौ होमसामग्रीं स्थालीपाकार्थं चरुस्थाल्यादिकमग्न्यायतनस्य समन्तात्परिश्रयणार्थानि च्छदींषि, उदुम्बरशाखाः प्लक्षशाखा वा सिकतोषाखूत्करवल्मीकवपासूदवराहविहतशर्कराहिरण्यशकलरजतशकलपुष्करपर्णाश्वत्थोदुम्बरपलाशशमीविकङ्कतपल्लवानशनिहतवृक्षकाष्ठं चोपकल्पयेत्। सिकताः प्रसिद्धाः। ऊषाः(षः) क्षारमृत्। आखूत्करं वन्याऽऽखूत्कीर्णा मृत्। अभाव उत्कीर्णा ग्राम्या। वल्मीकशब्देन वैरोलम्। तस्य वपा वपाकारा मृदुच्यते। सूदो ह्रदमृत्। तदभावे कुलीरमृत्। वराहविहत आरण्यवराहोत्कीर्णा मृत्।

---

१ क. °ताग्निनाशे। वि°। २ क. °मन्याग्न्याय°। ३ ग. ङ. च. °र्थादीनि। ४ फ. वारोलम्।

शर्कराः क्षुद्रपाषाणाः । भाषया काङ्कर इति प्रसिद्धाः । शकलस्वरूपं तु स्मृतौ—"यवार्धं त्रुटिरित्युक्ता द्वे त्रुटी शकलं स्मृतम्" इति ॥

पुष्करपर्णं कमलिनीपर्णम् । अश्वत्थादयश्चत्वारः प्रसिद्धाः । विकङ्कतः सकण्टकवृक्षः । भाषया सुतवी इति प्रसिद्धः । अशनिहतो विद्युद्धतः । अभावे वातहतः । एवं सामग्रीं संभारांश्च परिकल्प्य समिन्नाशादिनिमित्तानन्तरं रात्रौ चेत्समिन्नाशादिनिमित्तं तदा द्वितीयदिने प्रातस्तस्यातिक्रमे शुभे दिने कृत्तिकारोहिणीमृगशीर्षपुनर्वसू(सु)पूर्वा(र्वे)फल्गुन्युत्तरा(र)फल्गुनीहस्तचित्राविशाखानूराधाश्रवणोत्तरा(र)प्रोष्ठपदान्यतम आधानोक्तनक्षत्रे शुभकर्मानुकूलसामान्यनक्षत्रान्यतमनक्षत्रे वा पत्न्या सह प्राणानायम्य देशकालौ संकीर्त्य मम नास्तिक्यादेतावत्कालपर्यन्तं गृह्याग्निविच्छेदजनितप्रत्यवायपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमेतावत्प्रायश्चित्तमहमाचरिष्य इति संकल्पं कुर्यात् । प्रमादेन विच्छेदे तु मम प्रमादादेतावत्कालपर्यन्तमिति । ममाऽऽलस्यादेतावत्पर्यन्तमित्यालस्येन विच्छेदे । एवं संकल्प्याग्निविच्छेदकालगणनया प्रायश्चित्तं दंपती सह कुरुतः । अशक्तौ प्रत्याम्नायद्वारा ।

तत्र नास्तिक्याद्द्वादशाहपर्यन्तं पराकः । ततोऽब्दपर्यन्तं मासं पयोव्रतम् । अब्दे पूर्णे द्वैमासिकं त्रैमासिकं वा व्रतम् । ततः प्रतिवर्षमेतस्यैवाऽऽवृत्तिरिति ।

प्रमादात्त्रिरात्रमग्निविच्छेदे प्राणायामशतम् । द्वाविंशतिरात्रपर्यन्तमेकादिनमुपवासः । मासद्वयपर्यन्तं त्रिरात्रमुपवासः । अब्दे प्राजापत्य इति ।

आलस्याद्द्वादशाहं विच्छेदे तु त्र्यहमुपवासः । मासातिक्रमे द्वादशाहमुपवासः । षण्मासातिक्रमे मासं पयोव्रतम् । संवत्सरातिक्रमे मासमुपवासः पयोभक्षणं कूश्माण्डहोमो वा, समुच्चयो वैतेषाम् ।

प्रयोगपारिजाते त्वत्राधिकमुक्तम्[1]—द्वादशाहपर्यन्तं त्र्यहमुपवासः । मासपर्यन्तं द्वादशाहमुपवासः । अब्दपर्यन्तं[2] मासं पयोव्रतम्[3] । द्विवर्षपर्यन्तं मासं पयोव्रतं चान्द्रायणं च । अब्दपर्यन्तं चान्द्रायणं *सोमायनं च । तदूर्ध्वमब्दकृच्छ्रं धनिनो गोदानं चेति ।

नास्तिक्यादग्निविच्छेदवशेन लुप्तानां सायंप्रातर्होमानां दर्शपूर्णमासस्था-

---

* अत्र क. पुस्तके टिप्पण्याम् "गोक्षीरं सप्तरात्रं तु पिबेत्स्तनचतुष्टयात् । स्तनत्रयात्सप्तरात्रं सप्तरात्रं स्तनद्वयात् । स्तनात्तथैव षड्रात्रं त्रिरात्रं वायुभुग्भवेत् । एतत्सोमायनं नाम व्रतं कल्मषनाशनमिति प्रायश्चित्तेन्दुशेखर उक्तम्" इति ।

---

१ च. °तौ—यावा° । २ ग. °न्तं चान्द्रायणं सो° । ३ क. °व्रतं चा° ।

लीपाकानां च पर्याप्तमिदं व्रीह्याद्यन्यतमं होमद्रव्यमाज्यं च तन्निष्क्रयद्रव्यं वाऽमुकेभ्यो ब्राह्मणेभ्यः संप्रदद इति संकल्प्याग्निविच्छेदकालगणनया दद्यात्। आग्रयणकरणपक्षे दर्शपूर्णमासस्थालीपाकानामित्यनन्तरमाग्रयणस्थालीपाकस्य चेत्यूहः। एतच्च प्रायश्चित्तं विच्छेदोत्तरं कालविलम्बे यद्येकृताग्निद्वयसंसर्गो यजमानस्तदाऽग्निद्वयविच्छेदस्यापि तत्तत्कालगणनया प्रायश्चित्तं कार्यम्। नास्तिक्याद्विच्छेदश्चेद्धोमद्रव्यदानं स्थालीपाकद्रव्यदानं च। अनारब्धस्थालीपाकस्य यजमानस्य विभ्रष्टस्थालीपाकमात्रं न लुप्तस्थालीपाकद्रव्यदानम्। अनारब्धत्वात्तेषाम्। संकल्पवाक्ये दर्शपूर्णमासाग्रयणस्थालीपाकोल्लेखोऽपि न।

ततः सपत्नीकः पुनराचमनप्राणायामदेशकालसंकीर्तनानि कृत्वाऽमुकनिमित्तेन विच्छिन्नस्य गृह्याग्नेः पुनःसंधानं करिष्य इति संकल्प्य गणेशं संपूज्य कृतभस्मोत्सर्गोपलेपनमग्न्यायतनं परिश्रित्य फलाद्यन्यतमेन ताम्रशकलयुक्तेन पूर्ववदुल्लिख्यावोक्षणोत्सेचनोदकनिधानानि कृत्वाऽभ्र्यादिनोद्धृत्यावोक्ष्य सिकता न्युप्योदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छाद्य सिकतोषाखूत्करवल्मीकवपासूदवराहविहतशर्करा इति भौमान्, हिरण्यरजतशकलपुष्करपर्णाश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहता इति वानस्पत्यान्संभारांस्तूष्णीमग्न्यायतने प्रक्षिपेत्। सर्वेषां भौमानामलाभे सिकताग्रहणं, वानस्पत्यानामलाभे त्वश्वत्थग्रहणम्। एवं संभारांस्तूष्णीं प्रक्षिप्य स्वयोनित उत्पन्नमग्निमाहृत्य भूर्भुवः सुवरोमित्यग्न्यायतने प्रतिष्ठाप्य प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा विच्छिन्नगृह्याग्निपुनःसंधानहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वा वैशेषिकप्रधानहोमे—मिन्दवन्तमग्निमाज्याहुत्या यक्ष्ये। अग्निमिन्द्रं बृहस्पतिमश्विनौ चाऽऽज्याहुत्या यक्ष्ये। तन्तुमन्तमग्निं तिसृभिराज्याहुतिभिर्यक्ष्ये। अग्निमभ्यावर्तिनमा०। अग्निमाङ्गिरसमा०। अग्निं द्वाभ्यामा०। अग्निमा०। वायुमा०। सूर्यमा०। प्रजापतिमा०। अयासमग्निमा०। मनस्वन्तमग्निमा०। प्रजापतिमा०। सप्तवन्तमग्निमा०। वाचस्पतिं ब्रह्माणमाज्याहुत्या यक्ष्ये। अङ्गहोमे वरुणं द्वाभ्यामित्यादिव्याहृतिहोमान्तं कृत्वा वैशेषिकप्रधानहोमं कुर्यात्।

यन्म आत्मनः पुनरग्निरिति द्वयोर्मन्त्रयोः सोम ऋषिः। प्रथमस्य मिन्दवान-

---

१ ग. ड. च. °कादीनां। २ क. °कान°। ३ ड. च. °द्यग्निकृ°। ४ क. ख. °सर्गको य°। ५ क. ख. °श्चेद्धौम्यद्र°। ६ ग. ड. च. °प्रकलशयु°।

ग्निर्देवता। द्वितीयस्याग्निरिन्द्रो बृहस्पतिरश्विनौ च देवताः। प्रथमस्य गायत्री छन्दः। द्वितीयस्यानुष्टुप्छन्दः। विच्छिन्नगृह्याग्निपुनःसंधानवैशेषिकप्रधानाज्यहोमे विनियोगः। "ॐ यन्म आत्मनो मिन्दा० विचर्षणिः स्वाहा" मिन्दवतेऽग्नय इदं०। "ॐ पुनरग्निश्चक्षु० मक्ष्योः स्वाहा" अग्नय इन्द्राय बृहस्पतयेऽश्विभ्यां चेदं०।

तन्तुं तन्वन्नुद्बुध्यस्वाग्ने त्रयस्त्रिंशत्तन्तव इति मन्त्रत्रयस्याग्निर्ऋषिः। तन्तुमानग्निर्देवता। प्रथमस्य जगती छन्दः। द्वितीयस्य त्रिष्टुप्छन्दः। तृतीयस्य जगती छन्दः। विच्छिन्नगृह्याग्निपुनःसंधानवैशेषिकप्रधानाज्यहोमे विनियोगः। "ॐ तन्तुं तन्वन्रजसो० जनᳬ स्वाहा" तन्तुमतेऽग्नय इदं०। "ॐ उद्बुध्यस्वाग्ने० मेतᳬ स्वाहा" तन्तुमतेऽग्नय इदं०। "ॐ त्रयस्त्रिंशत्तन्त० स्वाहा" तन्तुमतेऽग्नय इदं०।

अग्नेऽभ्यावर्तिन्नित्यादीनां चतुर्णां मन्त्राणामग्निर्ऋषिः। प्रथमस्याग्निरभ्यावर्ती देवता। द्वितीयस्याग्निरङ्गिराः। तृतीयचतुर्थयोरग्निः। प्रथमस्य[1] पञ्चपदोष्णिक्। द्वितीयस्य[2] पञ्चपदा महाबृहती। तृतीयचतुर्थयोर्गायत्री। विच्छिन्नगृह्याग्निवैशेषिकप्रधानाज्यहोमे विनियोगः—"ॐ अग्नेऽभ्यावर्ति० धनेन स्वाहा" अग्नयेऽभ्यावर्तिन इदं०। "ॐ अग्ने अङ्गिरः० मा कृधि स्वाहा" अग्नयेऽङ्गिरस इदं०। "ॐ पुनरूर्जा० विश्वतः स्वाहा" अग्नय इदं०। "ॐ सह रय्या नि० स्पारि स्वाहा" अग्नय इदं०।

व्यस्तसमस्तव्याहृतीनां पूर्ववदृष्यादि, विच्छिन्नेत्यादि विनियोगवाक्यम्। "ॐ भूः स्वाहा" अग्नय इदं०। "ॐ भुवः स्वाहा" वायव इदं०। "ॐ सुवः स्वाहा" सूर्यायेदं०। "ॐ भूर्भुवः सुवः स्वाहा" प्रजापतय इदं०। अयाश्चाग्न इत्यस्य वामदेवोऽया अग्निः पङ्क्तिः। विच्छिन्नगृह्याग्निवैशेषिकप्रधानाज्यहोमे विनियोगः। "ॐ अयाश्चाग्ने० भेषजᳬ स्वाहा" अयसेऽग्नय इदं०।

मनोज्योतिर्जुषतामित्यस्याग्निर्मनस्वानग्निस्त्रिष्टुप्। विच्छिन्नगृह्याग्निवैशेषिकप्रधानाज्यहोमे विनियोगः। "ॐ मनोज्योति० घृतेन स्वाहा" मनस्वतेऽग्नय इदं०।

प्रजापत इत्यस्य विश्वे देवाः प्रजापतिस्त्रिष्टुप्। विच्छिन्नगृह्याग्निवैशेषिकप्रधानाज्यहोमे विनियोगः। 'ॐ प्रजापते न त्वदे० रयीणाᳬ स्वाहा' प्रजापतय इदं०।

१ ख. °स्य निचृदनुष्टुप्। द्वि°। २ ख. °स्य पङ्क्तिः। तृ°।

सप्त ते अग्न इत्यस्याग्निः सप्तवानग्निर्जगती। विच्छिन्नगृह्याग्निवैशेषिकप्रधानाज्यहोमे विनियोगः। 'ॐ सप्त ते अग्ने० घृतेन स्वाहा' सप्तवतेऽग्नय इदं०।

चित्तिः स्रुगिति दशहोतृसंज्ञकस्य वाचस्पते विधे नामन्नित्यादिग्रहसंज्ञकभागसहितस्य प्रजापतिर्वाचस्पतिर्ब्रह्मा यजुः। विच्छिन्नगृह्याग्निवैशेषिकप्रधानाज्यहोमे विनियोगः। 'ॐ चित्तिः स्रुक्० नृम्णं धात्स्वाहा' वाचस्पतये ब्रह्मण इदं०। इत्यष्टादशाऽऽहुतीर्हुत्वा, इमं मे वरुणेत्यादिसंस्थाजपान्तं कृत्वोक्तरीत्या त्रिवृदन्नहोमं कृत्वा पुण्याहस्वस्त्ययनर्द्धिवाचनं विधायाग्निः प्रीयतामिति वदेत्।

ततः पार्वणस्थालीपाकवदाग्नेयस्थालीपाकं सद्य एव कृत्वा वाससी धेनुमनड्वाहं तन्निष्क्रयद्रव्यं वा ब्राह्मणाय दक्षिणां दद्यात्।

ततो यथाविभवं ब्राह्मणान्संभोज्य भूयसीं दत्त्वा कर्मसाद्गुण्याय विष्णुं संस्मरेत्।

" प्रातर्होमोऽङ्गभूतत्वादकालेऽपि विधीयते।
इति केचिद्गृह्यविदो नाङ्गत्वमिति केचन " ॥

इति प्रातरौपासनहोमस्य पुनःसंधानाङ्गभूतत्वेन विहितकालासत्त्वेऽपि क्रियेति केचिद्गृह्यकारा आहुः।

अन्ये तु प्रातरौपासनहोमस्य पुनःसंधानाङ्गभूतत्वे प्रमाणाभावान्नाविहितकाले क्रियेति। येषां मतेऽङ्गत्वं तन्मत आग्नेयस्थालीपाकात्पूर्वमेव कर्तव्यः। येषां मतेऽङ्गत्वं नास्ति तन्मतेऽन्तःपाती प्रथमो होमो नास्त्येव। नित्यस्य कालप्राप्तस्य प्रातर्होमस्यानुष्ठाने विकल्पः।

तत्र कारिकाद्वयम्—" आधाने पुनराधाने सायंकाल उपक्रमः।
स्थालीपाकं पौर्णमास्यामारभेत विचक्षणः " इति ॥
" पुनराधानदिवसे हूयेते प्रातराहुती।
ततस्तु सायमारभ्य होमान्काले समाचरेत् " इति ॥

इदानीं प्रचुराचारः सायमुपक्रमविषय एव। यदि संसर्गविधेः प्राग्द्वावप्यग्नी विच्छिन्नौ तदा प्राणानायम्य मम विच्छिन्नस्य प्रथमगृह्याग्नेः पुनःसंधानं करिष्य इति संकल्प्य तदीयविच्छेदप्रायश्चित्तपूर्वकं ज्येष्ठपत्न्या सह तदीयमग्निं संधायैवमेव कनिष्ठया तदीयमग्निं संदध्यात्। तत्र प्रथमगृह्याग्नेरित्यत्र द्वितीयगृह्याग्नेरिति विशेषः। वस्तुतस्तूपवासाहुत्यात्मकमेव प्रायश्चित्तं युक्तं,

१ क. °र्होमानु°।

सूत्रोक्तत्वात् । पाणिग्रहणादिरित्येतत्खण्डं तु क्षेपकमव्याख्यानात् । अनुगते भार्यायाः पत्युर्वेत्येतत्सूत्रस्थभाष्यलिङ्गात् । तस्यौपासनेनाऽऽहिताग्नित्वं पार्वणेन चरुणा दर्शपूर्णमासयाजित्वं चेति कश्चिद्वक्ष्यत्याचार्य इत्याधानप्रकरणे कश्चिदिति वैजयन्तीकारोक्तेश्च । स चोपवासो दिवाकर्मत्वादासायं द्रष्टव्यः । आहुतिस्त्वयाश्वाग्न इति ।

इति संस्काररत्नमालायां पुनःसंधानम् ।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षिताविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां षोडशं प्रकरणम् ॥ १६ ॥

अथ सप्तदशं प्रकरणम् ।

## अथ प्रयाणविधिः ।

**तत्रेदं गृह्यम्**—" यदि प्रयायाद्व्याख्यातमात्मन्नरण्योर्वा समारोपणꣳ समिधि वा समारोपयेदरणीकल्पेन खादिरी पालाशयौदुम्बर्योश्वत्थी वा यत्रावस्येत्तस्मिञ्श्रोत्रियागारादग्निमाहृत्याऽऽजुह्वान उद्बुध्यस्वेति द्वाभ्यां यस्याꣳ समारूढस्तामादधाति व्याख्यातो होमकल्पः " इति ।

**अस्यार्थः**—यदि प्रयायात्प्रयाणं कुर्यात्तदा व्याख्यातम् " ऋते गृहस्य प्रवासं व्याख्यास्यामः " इतिखण्डस्थेनायं ते योनिरित्यारभ्य लौकिकमग्निमाहृत्य तस्मिन्नुपावरोहयत इत्यन्तेन सूत्रेणोक्तम् । आत्मन्नरण्योर्वा समारोपणं कुर्यादित्यर्थः । यदि प्रयायात्तस्य व्याख्यातो विधिरित्येतावदुच्यमाने वास्तोष्पतिहोमावसितहोमावपि प्राप्नुतस्तन्निवृत्त्यर्थमेवं सूत्रकरणम् । अग्निना भार्यया च सह गमनं प्रयाणं ताभ्यां विनाऽन्यत्र ग्रामान्तर एकरात्रावमो वासः प्रवासः । आत्मन्नात्मनीत्यर्थः । सुपां सुलुगिति सप्तम्या लुक् । " अथो खल्वाहुर्यदरण्योः समारूढो नश्येत् " इत्यादिना श्रुतावात्मसमारोपस्यैव संस्तवादात्मसमारोप उक्तः । अरण्योर्यथा समारोपकल्पस्तेन कल्पेनेत्यर्थः ।

१ क. °त्वं तथा पा° । २ क. °व्यः । अशक्तस्त्व° । ३ च. °तेन गृ° ।

कल्पः प्रकारः । समिधि वा समारोपयेदित्युक्तं[1] तत्र समिन्नियममाह—खादिरीति । खदिराद्यन्यतमवृक्षस्येत्यर्थः । यत्र यस्मिन्देशेऽवस्येद्वासं कुर्यात्तस्मिन्देशे श्रोत्रियागाराच्छ्रोत्रियगृहादग्निमाहृत्याऽऽजुह्वान उद्बुध्यस्वेतिद्वाभ्यां मन्त्राभ्यां यस्यां समिधि समारूढोऽग्निस्तां समिधं तस्मिन्नग्नावादधाति । व्याख्यात उक्तः । "नित्यमत ऊर्ध्वꣳ सायंप्रातरित्यारभ्य सौरीं पूर्वां प्रातरेके समामनन्ति" इति सूत्रेणेति शेषः । अथवा व्याख्यातः श्रुतौ होमकल्पो वास्तोष्पतिहोमकल्प इत्यर्थः । अस्मिन्पक्षेऽवसितहोमनिवृत्त्यर्थं पूर्वत्र गुरुसूत्रं द्रष्टव्यम् । एतस्य क्षेपकत्वे समित्समारोपो नास्त्येव । आत्मसमारोपारणिसमारोपावाकाङ्क्षितत्वेन श्रौतसूत्रात्प्राप्तुतः । इयं प्राप्तिस्तु श्रौतमध्ये स्मार्ताम्नानात्सिद्धा ।

कृतात्मसमारोपणस्य धर्मा उक्ता बौधायनेन—

" आत्मनि समारूढेषु न खादेन्न पिबेन्नोपरि शयीत नाप्सु निमज्ज्यान्न मैथुनं व्रजेदिति कामं खादेत्कामं पिबेत्कामं त्वेवोपरि शयीत न त्वेवाप्सु निमज्ज्यान्न मैथुनं व्रजेत् " इति ।

उपरि खट्वादौ । नाप्सु निमज्ज्यादिति निमज्जनस्यैव निषेधो न तु स्नानस्य । द्विविधं हि स्नानम् । निमज्जनरूपमाप्लवनरूपं च । तत्र निमज्जनमप्स्वन्तर्धानरूपम् । आप्लवनं तु शीतोष्णाभिरद्भिः स्नात्वाऽऽचम्याऽऽप्लवन्त इत्यादिना विहितं शरीरप्रक्षालनरूपम् ।

अत एवावभृथेष्टौ—

" पत्नीयजमानौ स्नातावमज्जन्तावन्योन्यं पृष्ठे प्रधावतः "

इति सूत्रे मज्जनव्यतिरिक्तप्रकारकस्नानोक्तिः संगच्छते । मज्जने कृते तु पुनराधानम् ।

तथा च मण्डनः—" आत्मारूढेषु मज्जेद्वा वदेद्वा पतितादिभिः ।
अथवा योषितं गच्छेदनृतौ काममोहितः ॥
वदन्त्येषु निमित्तेषु केचिदग्निविनाशनम् ।
यद्वा सर्वोपघातेषु पुनस्त्वेति समिन्धनम् " इति ॥

आत्मारूढेष्विति सर्वत्रानुवर्तते । अस्मिन्वाक्ये निमज्जनपतितादिसंभाषणानृतुकालिकयोषिद्गमनैरग्निविनाशस्य पाक्षिकत्वोक्तेरितरेषु नैवाग्निविनाश इत्यर्थादवगम्यते । मैथुनमज्जने विहायान्यनियमातिक्रमे मनस्वतीमन्त्रजपः

[1] क. 'क्तं स'।

प्रायश्चित्तमिति प्रदीपाच्च । अत्र मैथुनमज्जनग्रहणं पतितादिसंभाषणोपलक्षणं मण्डनेनैकवाक्यत्वाय । आत्मसमारोपणकौमुद्यामापस्तम्बः—

"यद्यग्न्यारूढा समिदप्सु निमज्जयेद्यद्यात्मरूढाग्निरप्सु निमज्जेच्छिरो दक्षिणं पाणिं वा निमज्जयेत्पुनराधानकारणं भवतीत्येके" इति ।

मुखे समारोपणपक्षे शिरसो निमज्जननिषेधः । हस्ते समारोपणपक्षे हस्तनिमज्जनस्य निषेध इति व्यवस्था द्रष्टव्या ।

प्रायश्चित्तसार आत्मसमारोपं प्रकृत्य—

"जले निमज्ज्य न स्नायान्नोपेयाच्च स्त्रियं तथा ।
कृत्वा मूत्रपुरीषे तु चिरं नाऽऽसीत चाशुचिः" इति ॥

बौधायनः—"अथ यद्यात्मसमारूढेष्वव्रत्यं चरेदरणिनाशोक्तदोषो वा भवेदग्न्याधेयमरणिविनाशेन विनाश उक्तः" इति ।

अस्यायमभिप्रायः—अरण्योरुपघाते तयोरुत्सर्ग एवोक्तस्तद्द्वाराऽग्नीनां नाशस्तत्र समारूढत्वात् । तथा पाण्योरप्यरणीसाम्यदृष्ट्याऽरणीनाशोक्तदोषो वा भवेदग्न्याधेयमित्युक्तम् । न त्वन्तरात्मनि दोषसंभवः । तत्र तु यदि बुद्धिपूर्वमभक्ष्यभक्षणादिरूपमव्रत्याचरणं कुर्यात्तदाऽऽत्मनो दोषः पुनरुपनयनादिकारणरूपः स्यात् । तत्र समारूढत्वादग्नीनामपि विनाशस्तदैव पुनराधानमिति । शरीरस्य त्वायतनस्थानापन्नत्वाच्छूद्रादिस्पर्शेऽपि स्नानादिनैव शुद्धिः । अन्यथा गायत्र्यादिमन्त्राणामपि नाशः स्यात् । आत्मनः सर्वव्यापित्वे सत्यपि स्थानविशेष एव समारोपितेऽग्नौ सप्तभिः पञ्चभिस्त्रिभिर्वा वेष्टनैररणी समिधं वा संवेष्ट्य गच्छेत् ।

उक्तं चैतद्यज्ञपार्श्वे—"सप्तभिः पञ्चभिर्वाऽपि त्रिभिर्वा वेष्टनैर्युते ।
अरणी न प्रदुष्येते पतितादिसमागमे" इति ॥

अरणीवत्समिधोऽपि ज्ञेयम् । वेष्टनद्रव्याणि तु शौनकेनोक्तानि—

"अजिनं कम्बलं दर्भा गोकेशाः शाणमेव च ।
भूर्जपत्रं तालपत्रं सप्तधा वेष्टनं स्मृतम्" इति ॥

पञ्चपक्षे भूर्जपत्रतालपत्रयोर्निवृत्तिः । त्रित्वपक्षे गोकेशशाणभूर्जपत्रतालपत्राणां निवृत्तिरिति ज्ञेयम् ।

---

१ च. °नाशो न । २ क. °रर° । ३ क. स्थानोपविष्ट । ग. स्नानविशेष । ४ ख. क. °मिध्येव ज्ञे° । ग. °मिधेऽपि । ५ क. ख. °ति । अथ ।

## अथ प्रयोगः ।

प्रयास्यन्पूर्वं स्वीकृते अरणी गृहीत्वाऽयं त इत्यस्याग्निर्जातवेदा अग्निस्त्रिष्टुप्[1] । समारोपणे विनियोगः । 'ॐ अयं ते योनि० रयिम्' इति पत्न्यन्वारब्धस्तयोरग्निं समारोपयति । ततो निवासस्थले शुद्धदेशेऽरणी निधायाग्न्यायतनं संपाद्य, उपावरोहेत्यस्य विश्वे देवा जातवेदा अग्निस्त्रिष्टुप्[2] । उपावरोहणे विनियोगः । 'ॐ उपावरोह जातवे० दुरोणे' इति पत्न्यन्वारब्धः प्रागस्तमयान्मन्थनेनोपावरोह्य पुष्टं कृत्वाऽऽयतनसंस्कारं कृत्वा तमग्निं स्थापयेत् । मन्थनकालेऽन्येन मन्थने क्रियमाणे यावदग्नेर्जन्म तावदरणी संस्पृशन्नास्ते । यद्युत्पादनप्रयत्नो निष्फलस्तदा पुनर्मन्त्रमुक्त्वा यत्नः कार्यः । मन्त्रो यजमानस्यैव ।

आत्मसमारोपे तु—या ते अग्ने यज्ञियेत्यस्य विश्वे देवा अग्निस्त्रिष्टुप् । आत्मसमारोपे विनियोगः । 'ॐ या ते अग्ने यज्ञिया तनू० क्षय एहि' इत्यात्मनि समारोपयति ।

ततो निवासस्थले प्रागस्तमयाच्छुद्धे देशेऽरणी संस्थाप्य तयोरुपावरोह जातवेद इत्युपावरोहति । आत्मसमारोपो नाम दक्षिणहस्तस्याग्नौ प्रतपनमिति केचित् । हस्तद्वयप्रतापनमित्यन्ये । तूष्णीमेव प्रताप्य मन्त्रेण तमूष्माणं मुखे गृह्णीयात् । मन्त्रेण प्रताप्य तूष्णीं मुखे गृह्णीयाद्वेत्यपरे । आत्मसमारोप उपावरोहणं नाम नासिकया श्वासमोचनम् । एतच्चोष्मणो मुखे ग्रहणमिति पक्षे । हस्तप्रतपनमात्रपक्षे तु मन्त्रेण संस्पर्शनमिति ज्ञेयम् । अरण्योर्यदि न स्वीकारस्तदा श्रोत्रियगृहाल्लौकिकमग्निमाहृत्य संस्कृतायतने संस्थाप्याऽऽत्मारूढाग्नेस्तेनैव मन्त्रेण तत्रोपावरोहणं कुर्यात् ।

समित्समारोपे तु खादिरपलाशोदुम्बराश्वत्थान्यतमवृक्षस्य समिधं गृहीत्वाऽयं त इति तस्यां समारोप्य यत्र निवसेत्तत्र शुद्धे देशे श्रोत्रियागारादाहृतं लौकिकाग्निं संस्कृतायतने संस्थाप्य प्रज्वाल्य, आ जुह्वान उद्बुध्यस्वेति द्वाभ्यां समारूढाग्निकां समिधं तस्मिन्नाधाय नित्यहोमं कुर्यात् ।

व्याधिते प्रोषिते वा यजमाने समारोपार्थमृत्विजं वृत्वा तेन कारणीयः । तदलाभे भार्ययाऽपि । यजमानस्य स्वसंस्कारव्यतिरिक्तकर्मसु भवेदेव प्रतिनिधिरिति स्थापितत्वात् । तस्यामप्ययोग्यायां पुत्रादिना कार्यः । आत्मस-

---

* अत्राग्निपदस्थाने वामदेवपदमपेक्षितम् ।

---

१ ख. 'ग्निरनुष्टु' । ग. ङ. च. 'ग्निस्त्रि' । २ ख. ग. ङ. च. 'वेदास्त्रि' ।

मारोपो यजमानेन पत्न्या वा कार्यः, न तु ऋत्विक्पुत्रादिभिः। आपदि प्रयाणप्राप्त्यसंनिहिते च यजमान ऋत्विजाऽरणीसमारोपः कार्यः। भार्ययाऽऽत्मसमारोपो वेत्यादि ज्ञेयम्। अरणीसमित्समारोपे—अयं ते योनिरित्ययं मन्त्रो भ्रमान्न पठितोऽन्यथा पठितो वा तदा न समारोपसिद्धिः। समारोपभ्रमेणोपेक्षितस्याग्नेरनुगमनेऽनुगतप्रायश्चित्तविधिनैवाग्निरुत्पाद्यो नावरोपविधिना। अन्यथोत्पादने पुनःसंधानमेव। अग्न्यनुगमननिमित्तकमग्निसंधानं प्रोषिते यजमाने पत्न्यर्त्विजा कारणीयं द्वादशाहात्प्राक्। ऊर्ध्वं तु यजमानागमनोत्तरं पुनःसंधानमेव। तत्र संकल्पत्यागौ पत्न्यैव कार्यौ। समिन्नाशादिनिमित्तकमग्निसंधानमपि यजमानागमनोत्तरमेव। यजमाने प्रोषिते पत्न्यामृतुमत्यामप्यनुगतेऽग्नावनुगतप्रायश्चित्तार्थमग्निस्थापनादिप्रायश्चित्तमृत्विजा कार्यमेव। आशौचे समारोपावरोपौ न भवतोऽशुचित्वात्। न चर्त्विजा कारणीयावेताविति वाच्यं, मन्त्रलिङ्गात्। स्वपरसूत्रतद्व्याख्यानेभ्यश्च स्वस्यैव कर्तृतायाः क्लृप्तत्वात्।

यदि तु समारूढाग्नेः पर्वण्याशौचं प्राप्नोति तदा पुनःसंधानमेव। यदि भ्रान्त्या तस्याग्नेः पुनःसंधानमकृत्वैव तत्र संस्काराङ्गहोमादि करोति तदा स्मरणोत्तरं सर्वप्रायश्चित्तं जुहुयान्न पुनः प्रधानक्रिया। ग्रामसीमातिक्रमसमये नद्यतिक्रमसमये च दंपती अरण्यन्वारम्भं कुरुतः। अकरणेऽग्निर्लौकिकः। नानासीमास्वपि प्रथमान्त्ययोरिति केचित्।

आपदि यजमानासंनिधौ भार्यैवान्वारभते। अनेकासु भार्यासु सतीषु ज्येष्ठाया एवान्वारम्भ आवश्यकः,

"ज्येष्ठाऽन्वारभते वह्निं बहुभार्यस्य नेतराः" इति संग्रहोक्तेः।

नान्वारम्भः पत्न्या आत्मसमारोपे। अप्रोषितेऽपि यजमाने होमकाले पत्न्या ग्रामान्तरगमने नद्यतिक्रमे च लौकिकत्वमेवाग्नेरिति ज्ञेयम्।

इति प्रयाणविधिः।

## अथ प्रवासविधिः।

तत्रेदं सूत्रम्—ऋते गृहस्य प्रवासं व्याख्यास्यामोऽग्नीन्समाधेहीत्यादि भार्यां समीक्षत इत्यन्तम्। अत्र यावदुपयुक्तं सूत्रं तावत एव व्याख्या प्रदर्श्यते। मा प्रगामेति मन्त्रद्वयमुक्त्वा विहारदेशमागच्छति। अग्नीनां सकाशे समीपे वाचं यच्छति। असकाशे यस्मिन्प्रदेशेऽग्नीनां छदींष्यदृश्यानि भवन्ति तत्र गत्वा वाचं विसृजते। व्रतकाले व्रताचरणं कर्तव्यमित्याह—व्रतकालेषु

१ क. कर्तव्यतायाः। २ ग. °शे यस्मि°।

व्रतं चरतीति। प्रादुष्करणप्रभृति नाश्नीयादा होमादित्यादि व्रतम्। एतच्च-र्तावृतौ कार्यमित्याह—ऋतुं प्रत्युपतिष्ठत इति। प्रवासविलम्बे प्रत्यृतु प्रवासो-पस्थानं कुर्यान्मासद्वये मासद्वय इत्यर्थः। यद्यनुपस्थिताग्निं प्रति प्रवास आप-द्येत प्राप्नुयात्तदेहैव सन्नित्यनेन विहाराभिमुखस्तत्रैवोपस्थाय गच्छेत्। प्रोष्य प्रवासं कृत्वाऽऽगतोऽग्नीनामसकाशे यस्मात्प्रदेशादग्रिमे प्रदेशेऽग्नीनां छर्दींषि दृश्यान्ति भवन्ति तत्र स्थितो वाचं नियम्याग्निसमीपं गत्वा वाचं विसृजेत्। कः पुरुषः श्रेयांसं महान्तं पूज्यं पुरुषं विषुप्तं विशेषेण स्वपन्तं बोधयतीति लोकप्रसिद्धिः; अतोऽग्नेस्तु सुतरां को बोधयिता। अप्रादुष्कृतस्यैव भस्मच्छन्न-स्यैवाग्नेरुपस्थानमित्येकेषामाचार्याणां मतं तच्चाभयंकराभ्यामेव। अप्रादुष्कृ-तोपस्थानं प्रकृत्यैवोक्तत्वात्। अल्पोपस्थानविधिरेवात्रोपयुज्यते न पूर्वः। तस्य बह्वग्निविषयत्वात्। अप्रादुष्कृतानामिति बहुवचनं श्रौत उपयुज्यते, तत्राग्नीनां बहुत्वात्प्रवासं करिष्यन्नभयंकराभयं मे कुरु स्वस्ति मेऽस्तु प्रव-त्स्यामीत्युपस्थानं कुर्यात्। प्रोष्य तु—अभयंकराभयं मे कार्षीः स्वस्ति मेऽस्तु प्रावात्स्यमिति। ततो गृहा मा बिभीतेत्यादि भार्यां समीक्षत इत्यन्तं कुर्यात्।

मौनविषये पक्षद्वयमुक्तं मण्डनन—

“ अग्न्यन्तिकं समारभ्य तावन्मौनी प्रतिष्ठते।
यावच्छर्दींषि दृश्यन्ते हव्यवाहनसद्मनि॥
चक्षुर्गोचरताऽग्नीनां जायते यावदन्तरा।
तावत्येव भवेन्मौनमिति सांख्यायनाशयः ” इति॥

अरण्यारोपितेऽग्नौ प्रवासप्राप्तौ स एव—

“ अरण्यारोपितोऽप्यग्निरभयंकरमन्त्रतः।
उपस्थेयोऽप्रणेयत्वाद्भस्मसंछन्नवह्निवत् ” इति॥

अस्मिन्विषये पक्षान्तरमप्युक्तं तेनैव—

“ यद्वाऽरणिगते वह्नौ प्रवसेदाव्रजेत वा।
उभयत्राप्युपस्थानं नास्ति कौषीतकिश्रुतेः ” इति॥

उपस्थाय प्रवासं न करोति चेत्तदाऽप्यागतोपास्थितिः कार्यैव।

तथा च स एव—“ प्रवत्स्यामीत्युपस्थाय वह्निं न प्रवसेद्यदि।
आगतोपस्थितिं चात्राप्याह कौषीतकी श्रुतिः ” इति॥

---

१ च. अन्त्योप°। २ क. °तकी श्रुतिः ” इ°।

प्रवासनिमित्तेन प्रवत्स्यामीति संकल्प्य प्रवासं यदि न करोति तदाऽप्युपस्थानं कार्यमेव।

तदाह स एव—" उपस्थानं हि संकल्प्य प्राक्प्रवासान्निवर्तते।
उपस्थातव्यमेवेति प्रक्रमन्यायिनो विदुः॥
आगतोपस्थितिस्तत्रापीष्टा कौषीतकिश्रुतेः " इति।

यदि राजादिपुरुषा उपस्थानायावसरं न दद्युस्तदेहैवेत्युपस्थानं कृत्वा गन्तव्यम्।

तथा च स एव—" बलाद्राजादिपुरुषा यजमानं नयन्ति चेत्।
न प्रयच्छन्त्युपस्थानावसरं क्रूरचेष्टिताः॥
तदा कुर्यादुपस्थानं तद्देशगत एव सन्।
इहैवेत्यादिमन्त्रेण सर्वाग्नीनां च तन्त्रतः " इति॥

गृह्ये तु— इहैव सन्तत्र सन्तं त्वेत्ययमेव मन्त्रो ग्राह्यः। न त्विहैव सन्तत्र सतो वो अग्नय इति। अग्नेरेकत्वात्।

यदि तु यत्र कुत्रापि स्थितस्य प्रवास आपद्येत तदाऽप्येष एव विधिः।

तथा च मण्डनः—" आगमिष्यामि चाद्यैवेत्यनुपस्थाय निर्गतः।
दैवात्तत्र स्थितः कुर्यादिदमेवेति केचन " इति।

यदि तु यत्र कुत्रापि स्थितस्य प्रवासप्राप्तौ विस्मृत्य विधिर्न कृतस्तत्राप्येष एव कार्यो विधिः।

तथा च मण्डनः—" विस्मृतेऽपि यदा यातस्तत्राप्येष विधिर्भवेत् " इति।

बुद्धिपूर्वं दर्पादनुपस्थाय निर्गमे स एवाऽऽह—
" बुद्धिपूर्वं यदा दर्पादनुपस्थाय निर्गतः।
अनाज्ञातजपं कृत्वा तत्राप्येष विधिर्भवेत् " इति॥

एषोऽनन्तरोक्तः, इहैवेत्युपस्थानरूपः।

अत्र मनस्वतीहोमोऽपि भरद्वाजसूत्रव्याख्यातृभिरुक्तः—
" यद्युपस्थानमकृत्वा प्रवासं करोति तदा मनस्वतीं जुहोति " इति।

आगतोपस्थितेरकरणेऽपीदमेव प्रायश्चित्तं द्रष्टव्यम्। इहेत्युपस्थानपक्षे मा प्रगामेत्यस्य लोपः।

वाग्यमस्य विकल्पश्चोक्तो मण्डनेन—
" इहेत्युपस्थानपक्षे मा प्रगामेति लुप्यते।
वाग्यमस्य न लोपोऽत्र भाष्यकारेण दर्शितः॥

अन्ये स्वाहुर्मन्त्रलोपो मौनलोपोपलक्षणम् ।
इहेतिपक्षे नास्त्यन्यदिति नारायणोऽब्रवीत् " इति ॥

इहैवेत्युपस्थाय गत ऋतुनिमित्तकमुपस्थानमभयंकरेणैव कार्यमिति केचित् । इहैवेत्यनेनैवेत्यन्ये । आगतोपस्थितिर्नेहैवेत्यनेन । तथा च मण्डनः—

" इहैवेति गतस्यापि नाऽऽगतस्य तदिष्यते " इति ।

अत्र प्रत्येत्योपस्थानं त्वभयंकरेणैव ।

दशरात्राधिकप्रवासे मनस्वतीहोम उक्तः सूत्रे—

" मनोज्योतिर्जुषतामित्यध्वर्युराहुतिं जुहोति यदि दशमीमतिप्रवसति " इति ।

मण्डनोऽपि—" प्रोष्य भूयो दशरात्राज्जुहोतीत्याश्वलायनः " इति ।

गृहाभिगमनादिकं मनस्वतीहोमोत्तरमेव कार्यम् ।

तथा च मण्डनः—" हुते मनस्वतीहोमे गृहाभिगमनादिकम् " इति ।

अयं मनस्वतीहोमः प्रादुष्कृतोपस्थानान्तर्गते(त इ )ति नाभयंकरोपस्थाने नापीहेत्युपस्थान इति भाष्यकृत् । अन्ये तु होमार्थमुद्धृते मनस्वतीमिच्छन्ति । सूत्रक्रमोऽप्येतादृश एव । संवत्सरातिप्रवासे तु पवित्रेष्टिः ।

तथा च मण्डनः—" संवत्सरमतिप्रोष्य पवित्रेष्ट्या यजेदिति ।
बौधायनादयः प्राहुर्नेच्छन्तीष्टिमथापरे ॥
इष्टिपक्षं यत्र कुर्यात्तत्र हुत्वा मनस्वतीम् ।
पुनर्विहृत्य कृत्वेष्टिं गृहाभिगमनादिकम् ॥
इष्टिपर्याप्तकालश्चेत्तस्मिन्नह्नि न लभ्यते ।
तदैव सर्वं कर्तव्यमिष्टिमात्रं परेऽहनि " इति ॥

गृह्ये त्विष्टिस्थाने चरुः, (*" य आहिताग्नेः पुरोडाशास्तेऽनाहिताग्नेश्चरवः " इति शास्त्रात् । ) ऋत्वतिप्रवासे व्रातभृती कैश्चिदुक्ता । अत्रापि मनस्वत्याः समुच्चयः । ऋत्वतिप्रवासे व्रातभृती । संवत्सरातिप्रवासे पवित्रेष्टिः । तदुक्तं सूत्रान्तरे—

" यद्यृतुमतिप्रवसेद्व्रातभृत्या यजेत यदि संवत्सरमतिप्रवसेत्पवित्रेष्ट्या " इति ।

सूत्रान्तरे तु—" यदि संवत्सरमतिप्रवसेत्पवित्रेष्ट्या वैश्वानर्या वा यजेत " इति ।

पक्षे वैश्वानर्यप्युक्ता । सर्वत्र मनोज्योतिरिति समुच्चीयत इति व्याख्यातारः ।

---

* धनुश्चिह्नान्तर्गतग्रन्थस्थाने ग. च. पुस्तकयोरन्यथा पाठः स यथा—" येऽमुत्र चरवो यथादेवतं याज्यापुरोनुवाक्यवयोऽमुत्र वषट्कारः स इह स्वाहाकारपुरोडाशास्तराहित इति बौधायनगृह्यात् । अमुत्र श्रौतकर्मणि । इह गृह्ये " इति ।

चन्द्रिकायां पैठीनसिः—“ प्रस्खलीकृतधर्मस्य पीड्यमानस्य शक्तिभिः ।
मासद्वयं प्रवासोऽस्ति परतो नाऽऽहिताग्निवत् ” इति ॥

मासद्वयस्योपर्यनाहिताग्नेराहिताग्निवत्प्रवासो नास्तीत्यर्थः ।

अत्र होमार्थं द्विजं प्रकल्प्य प्रवसेदित्युक्तं कूर्मपुराणे—

“ निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवसेत्कार्यवान्विप्रो वृथैव न चिरं वसेत् ” इति ॥

अत्र कार्यवानिति धनार्थी न तु तीर्थाद्यर्थी ।

तथा च मण्डनः—“ धनमर्जयितुं युक्तः प्रवासो ह्यग्निहोत्रिणः ।
धनैर्हि संभवेदिज्या तीर्थाद्यर्थं तु न व्रजेत् ” इति ॥

तीर्थाद्यकरणे कारणमाह स एव—

“ ब्रह्मा विष्णुः शिवः सूर्यो गौर्विप्राः पितृदेवताः ।
अग्निहोत्रिगृहे सन्ति तीर्थानि च तपांसि च ” इति ॥

मध्ये तीर्थप्राप्तौ स्नानं कर्तव्यमेव, *

“ धनाद्यर्थं व्रजन्मार्गे यदि तीर्थमवाप्नुयात् ।
शालीनो लभते स्नातुं न तदर्थं पृथग्व्रजेत् ” इति[1] ॥

प्रयाणे मध्ये नौकाधिरोहणप्राप्तौ मृत्पूर्णं शूर्पं निधाय तत्रारणी संनिधं वा संस्थाप्य तपतीं वाऽन्वारेभ्यैश्वपारं (?) गच्छेतामिति विशेषः ।

## अथ प्रयोगः ।

प्रवासं करिष्यन्नाचम्य प्रवासं कर्तुमुपस्थानं करिष्य इति संकल्प्य, अभयंकराभयं मे कुरु स्वस्ति मेऽस्तु प्रवत्स्यामीति भस्मच्छन्नमेवाग्निमुपस्थाय ‘ मा प्रगाम पथो वयं मा यज्ञादिन्द्र सोमिनः । मां तस्थुर्नो अरातयः । उदस्मा२ उत्तरां नयाग्ने घृतेनाऽऽहुत । रायस्पोषेण सꣳसृज प्रजया च बहून्कृधि ’ [इति] तस्माद्देशाद्गच्छति । इत आरभ्य वाचं यच्छति यावच्छर्दींष्यदृश्यानि भवन्ति, अग्निर्वा भवत्यदृश्यस्तावत्पर्यन्तमनन्तरं वाचं विसृजते ।

मध्ये वाग्यमलोपे—इदं विष्णुरिति वैष्णव्यृग्ज( वर्ज )पं समस्तव्याहृतिजपं च कृत्वा पुनर्वाचं यच्छति । गृहं प्रत्यागमने यदा छर्दींषि दृश्यानि भवन्ति, अग्निर्वा भवेद्दृश्यस्तावत्पर्यन्तं वाचं यच्छति ।

ततो गृहगतो हस्तपादप्रक्षालनं कृत्वाऽऽचम्य वाचं विसृज्य, “ अभयंकरा-

* एतदग्रे किंचित्त्रुटितम् ।

१ क. ख. °ति । अथ । २ ङ. °रभ्येश्व° ।

भयं मे कार्षीः स्वस्ति मेऽस्तु प्रावात्स्यम्" इति भस्मच्छन्नमेवाग्निमुपतिष्ठते। एतच्च प्रवासस्थेनर्तावृत्तौ कर्तव्यम्। अत्र तस्माद्देशाद्गमनाभावेऽपि केवलमुपस्थानमात्रं कर्तव्यं व्रतकाले व्रताचरणं च। यदि तु यत्र कुत्रापि स्थितस्य प्रवास आपद्येत तदा तत्रैव तिष्ठन्स्वाग्न्यभिमुख इहैव सन्तत्र सन्तं त्वेत्यस्य विश्वे देवा अग्निस्त्रिष्टुप्। उपस्थाने विनियोगः। "ॐ इहैव सन्तत्र सन्तं त्वाऽग्ने प्रा० नेरेणोपतिष्ठे" इत्युपस्थाय गच्छेत्। यदि राजादिपुरुषा बलान्नयन्ति, उपस्थानावसरं न प्रयच्छन्ति तदा तद्देशगत एवोपस्थानं कुर्यात्। प्रवासादागतं उपस्थानानन्तरं गृहा मा बिभीतेत्यादि कुर्यात्। तच्च वास्तुशमननिरूपणानन्तरं वक्ष्यते। उपस्थाय निर्गतस्य पुनस्तदहरेव प्रत्यागमने भवेदेवोपस्थानम्।

प्रवासादागतस्य गृहप्रवेशोत्तरं यद्याशौचज्ञानं तदाऽप्यागतोपस्थितिर्भवत्येव।

यथाऽऽह श्रौतग्रन्थे मण्डनः—

"रजोदोषे समुत्पन्ने सूतके मृतकेऽपि च।<br>नित्यं नैमित्तिकं कुर्यात्काम्यं कर्म न किंचन" इति॥

अनेनैवागातिकप्रवासगमनेऽपि[2] न दोषः।

यत्तु—"रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा।<br>प्रवसन्नग्निमान्विप्रः पुनराधानमर्हति"॥

इति तदग्नियुक्तस्य[3] गमननिषेधकम्। अन्यथाऽग्निमत्पदवैयर्थ्यापत्तेः। यानि तु सूतकादौ प्रवासनिषेधकानि तानि स्मार्तविषयाणीति प्रायश्चित्तकुतूहले। केचित्तु—आत्मसमारूढाग्निकस्य गमननिषेधकमित्याहुः। वस्तुतस्तु रजोदोषे समुत्पन्न इत्येतद्वचनेऽग्निमानित्यनन्तरमपिशब्दस्यान्वयः कार्यः। तथा च यथाऽग्नियुक्तस्याऽऽत्मसमारूढाग्निकस्य च गमननिषेधकं तथाऽग्निविरहितस्यापीति। एवं च शिष्टाचारोऽप्यनुगृहीतो भवति।

आशौच आगतोपस्थानं गृह्याग्नेर्न भवतीति केचित्। एतस्यापि श्रौतत्वाद्भवत्येवेत्यन्ये।

अरणिपक्षेऽरण्यारूढस्याप्यग्नेर्भस्मच्छन्नवह्निवदभयंकरमन्त्रेणोपस्थानं भवति। एवं समिदारूढस्याग्नेर्बुद्ध्योपस्थानमकृत्वैव निर्गमने प्रत्यागमनानन्तरं मनस्वतीहोमः सर्वप्रायश्चित्तं च। अमत्या गमनेऽनाज्ञातत्रयजपः सर्वप्रायश्चित्तं च।

---

१ च. °त्। एत°। २ क. ग. °तिकाप्र°। ३ क. °मिसंयु°।

प्रत्यागमनोपस्थानाकरणेऽपीदमेव प्रायश्चित्तम् । दशरात्राधिकप्रवासे मनस्वती होतव्या । ऋत्वधिकप्रवासेऽग्नये व्रतभृते चरुः । संवत्सरातिप्रवासे पवित्रेष्टि-देवताभ्यो जुहुयात् । तत्राग्नये पवमानाय चरुः सरस्वत्यै प्रियाया आज्यम् । अग्नये पावकाय चरुः । सवित्रे सत्यप्रसवायाऽऽज्यम् । अग्नये शुचये चरुः । वायवे नियुत्वत आज्यम् । अग्नये व्रतपतये चरुः । विष्णवे शिपिविष्टायाऽऽ-ज्यम् । अग्नये वैश्वानराय चरुः । दधिक्राव्ण आज्यम् । स्थालीपाकोक्तरी-त्याऽऽघारवत्तन्त्रेणैव यथाक्रमं होमः । अथवा वैश्वानरस्थालीपाक एव कार्यः। उभयत्रापि मनस्वत्याः समुच्चयः । यस्यां दिश्यग्निर्भवति तदभिमुखः स्थित्वा होमसंबन्ध्युपस्थानं कुर्यात् । पत्यौ प्रोषिते पत्न्यौपासनहोमपार्वणस्थालीपाक-पिण्डपितृयज्ञनैमित्तिकप्रायश्चित्तान्यृत्विग्द्वारा कारणीयानि । उद्देशत्यागमात्रं स्वकर्तृकम् । स्वयं यदि *रजोवती प्रसूता वा तदा त्याग ऋत्विजैव कारणीयः। आग्रयणं तु—अग्निहोत्रीं वै नानाऽऽदयित्वा तस्याः क्षीरेण जुहुयादित्यनुकल्पे-नैव । पुनःसंधानगृहदाहादिनिमित्तकस्थालीपाकास्तु पत्यागमनपर्यन्तं न कार्यः (र्याः) । प्रायश्चित्तार्थस्थालीपाकप्राप्तौ पूर्णाहुतिः । प्रवासस्य निमित्तं तु धनं विद्या च, न तु तीर्थादिकम् । पत्युर्धनार्जनार्थं प्रवासं कर्तुमशक्तौ पत्न्याऽपि प्रवासोपस्थानमकृत्वैव तदर्थं प्रवासः कर्तव्य एव । होमसंबन्ध्युपस्थानं तु तया न कार्यम्[1] । व्रताचरणं तु भवत्येव । सर्वोऽपि प्रवासविधिर्गार्ह्ये कृता-कृतः । तत्र करणे त्वभ्युदयः । अकरणे प्रत्यवायाभाव इति ज्ञेयम् । करणपक्षे सर्वथा कर्तव्य एव । इति प्रवासविधिः ।

## अथान्तरितस्थालीपाकप्रयोगः ।

कर्ता पाथिकृतेन स्थालीपाकेन सहामुकस्थालीपाकेन यक्ष्य इति संक-ल्प्याग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा पथिकृत्सहितान्तरितामुकस्थालीपाककर्मणि या यक्ष्यमाणा देवतास्ताः सर्वाः परिग्रहीष्यामि, अग्निं पथिकृतं चर्वाहुत्या यक्ष्ये, अग्निं चर्वाहुत्या यक्ष्ये, अग्निं स्विष्टकृतं[2] हुतशेषचर्वाहुत्या यक्ष्ये, एता देवताः सद्यो यक्ष्य इत्युक्त्वाऽन्वा-धानसमिधो[3]ऽग्नावभ्याधायाग्निं परिस्तीर्य, अग्नेरुत्तरतो दर्भान्संस्तीर्य तेषु दर्वी-माज्यस्थालीं प्रोक्षणीपात्रमुपवेषं चरुस्थालीद्वयं मेक्षणद्वयं शूर्पं कृष्णाजिनमुलू-खलं मुसलं संमार्गदर्भानवज्वलनदर्भानाज्यं समिधं चाऽऽसादयेत् ।

---

* रजस्वलेति तु युक्ततरम् ।

---

१ क. कर्तव्यम् । २ ख. ग. ङ. च. °तं च° । ३ ख. ग. ङ. च. °धानं कृत्वाऽग्निं प° ।

असंभवेन समोप्यैतं व्युद्धारं जुहुयादित्याश्वलायनोक्तपक्षान्तराङ्गीकारे त्वेकैव चरुस्थाली, एकमेव मेक्षणमुद्धरणपात्रद्वयमेकं चेति विशेषः।

ततः पवित्रकरणादि चरूद्वासनान्तं समानम्। व्युद्धृत्य जुहुयादित्येतस्मिन्पक्षे—अयमग्नये पथिकृतेऽयमग्नय इति निर्देशः।

ततोऽग्निं परिषिच्याऽऽसादितां समिधं तूष्णीमभ्याधायाऽऽसादितेन प्रथमचरुमेक्षणेन प्रथमचरोरुपहत्य, 'ॐ अग्नये पथिकृते स्वाहा' इति जुहोति। अग्नये पथिकृत इदं०।

ततो द्वितीयचरुमेक्षणेन द्वितीयचरोरुपहत्य, 'ॐ अग्नये स्वाहा' इति जुहोति। अग्नय इदं०।

ततो द्वयोश्चर्वोरुत्तरार्धात्सकृत्सकृत्तत्तन्मेक्षणेन दर्व्यां गृहीत्वा, 'ॐ अग्नये स्विष्टकृते स्वाहा' इतीशान्यां पूर्वाहुतिभ्यामसंसक्तां जुहोति। अग्नये स्विष्टकृत इदं०।

एकत्र श्रपणपक्ष एकमेक्षणस्यैव सत्त्वात्तेनैव द्वयोश्चर्वोः कौशल्येनोपहत्य होमः कार्यः। बहुदैवते कर्मण्यसंभवाद्दर्व्यां मेक्षणेन गृहीत्वा तया होमः कार्यः।

ततो मेक्षणप्रहरणं कृत्वाऽकृत्वा वा परिस्तरणविसर्गव्याहृतिहोमोत्तरपरिषेकाग्निपूजनसंस्थाजपोपस्थानब्राह्मणभोजनभूयसीदानविष्णुस्मरणेश्वरार्पणानि कुर्यात्। अथवा केवलं पाथिकृत एव कर्तव्यः। न त्वतिक्रान्तकालः प्राकृतोऽपि।

यद्ययं स्थालीपाक उत्तरपर्वण्यपि न कृतस्तदा प्रतिपदादिषु पादकृच्छ्रात्मकप्रायश्चित्तपूर्वकं वैश्वानरस्थालीपाकं केवलं वा प्राकृतेन स्थालीपाकेन समानतन्त्रं वा कृत्वाऽनन्तरमेव पाथिकृतः स्थालीपाकोऽन्तरितद्वितीयस्थालीपाकेन समानतन्त्रः केवलो वा कर्तव्यः। अथवा वैश्वानरपाथिकृतावेवासमानतन्त्रौ कर्तव्यौ।

यदि द्वितीयोऽप्युत्तरपर्वणि न कृतस्तदा प्रतिपदादिष्वर्धकृच्छ्रं चरित्वा वैश्वानरपाथिकृतौ प्राकृताभ्यां स्थालीपाकाभ्यां समानतन्त्रौ केवलौ वा कृत्वैतावेव स्थालीपाकौ तृतीयेन स्थालीपाकेन समानतन्त्रौ केवलौ वा कुर्यात्।

यदि तृतीयोऽप्युत्तरपर्वणि न कृतस्तदा पुनःसंधानमेव।

उत्तरस्थालीपाकपर्यन्तं पूर्वस्य गौणकालः। एतदतिक्रम एव पाथिकृतादि प्रायश्चित्तं न मुख्यकालातिक्रमे। इत्येकः पक्षः।

---

१ क. °क्षाङ्गी°। २ क. °णस°।

मुख्यकालातिक्रमेऽपीदं प्रायश्चित्तमिति द्वितीयः पक्षः।

आशौचादिमत्त्वेन [1]भार्याया रजस्वलात्वेन वाऽप्यन्तरितस्थालीपाको द्वितीयाचतुर्थीपञ्चम्यष्टमीनवमीचतुर्दशीषु न कर्तव्यः।

उक्तं चैतत्प्रयोगपारिजात आश्वलायनेन—

"नातीतेष्टिश्चतुर्दश्यां चतुर्थ्यां मध्यपञ्चके।
नवम्यां च द्वितीयायां कार्या आहुतयस्तथा" इति॥

मध्यपञ्चके, मध्ये पक्षमध्येऽष्टम्यामित्यर्थः। पञ्चके पञ्चमदिवसे पञ्चम्यामित्यर्थः। न च मध्यं च तत्पञ्चकं च मध्यपञ्चकं तत्र, तथा च षष्ठ्यादिदशम्यन्तानां निषेध इति वाच्यम्। तथा सति नवम्युपादानवैयर्थ्यापत्तेरिति केचित्।

नवम्युपादानस्य दोषातिशयप्रतिपादनार्थत्वेन सार्थक्यसंभवान्न+ षष्ठीसप्तम्यष्टमीदशम्यन्यतमतिथिष्वप्यसंभवे क्रियायां न दोषः। नवम्यां तु सर्वथैवा[1]क्रियेत्यन्ये। आहुतयः स्थालीपाकाहुतय इत्यर्थः।

सायणीये प्रजापतिः—"दर्शश्च पूर्णमासश्च लुप्तोऽथ द्वयमेव वा।
एकस्य पादकृच्छ्रं स्याद्द्वयोरर्धं प्रकीर्तितम्" इति॥

इत्यन्तरितस्थालीपाकप्रयोगः।

## अथ गृहस्थस्य गृहकरणमर्थप्राप्तं तदुच्यते।

तत्रेदं गृह्यसूत्रम्—

"शालां कारयिष्यन्नुदगयन आपूर्यमाणपक्षे रोहिण्यां त्रिषु चोत्तरेषु" इत्यादि।

अत्र मासनियमो नारदेनोक्तः—

"सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः।
मासाः [2]स्युर्गृहनिर्माणे पुत्रारोग्यधनप्रदाः" इति। सौम्यो मार्गशीर्षः।

वारादिकमप्युक्तं तत्रैव—

"आदित्यभौमवर्जं तु वाराः सर्वे शुभावहाः।
चन्द्रादित्यबलं लब्ध्वा लग्ने शुभनिरीक्षिते॥
स्तम्भोच्छ्रायादि कर्तव्यमन्यत्तु परिवर्जयेत्" इति।

---

+ अयं न दोष इत्यत्रत्यो वा नशब्दोऽधिकः। अयं नशब्दो नाऽऽसीत्कपुस्तके स न्व शोद्धा पश्चात्केनचिल्लिखितोऽस्ति।

१ क. °थैव न क्रि°। २ क. स्युर्गेह°।

नक्षत्राणि गर्गेणोक्तानि—

" त्र्युत्तरामृगरोहिण्यः पुष्यमैत्रकरत्रयम्।
धनिष्ठाद्वितयं पौष्णं गृहारम्भे प्रशस्यते " इति ॥

करत्रयं हस्तचित्रास्वातयः। धनिष्ठाद्वितयं धनिष्ठाशततारकानक्षत्रे। पौष्णं रेवती। विस्तरस्तु शान्तिरत्नमालायां द्रष्टव्यः।

## अथ प्रयोगः।

कर्तोदगयने शुक्लपक्षे रोहिण्युत्तरा(र)फल्गुन्युत्तराषाढोत्तरा(र)प्रोष्ठपदान्यतमे नक्षत्रेऽसंभवेऽन्यस्मिन्नपि ज्योतिःशास्त्रविहिते नक्षत्रे ज्योतिर्विदादिष्टे मुहूर्ते कृतनित्यक्रिय आचम्य प्राणानायम्य देशकालौ संकीर्त्य शालां कारयिष्यन्होमं करिष्य इति संकल्प्य गणेशपूजनादिनान्दीश्राद्धान्तं कुर्यात्।

अत्र शालाकरणकर्मणः पुण्याहं भवन्तो ब्रुवन्त्वित्यादिवाक्येषु वास्तोष्पतिः प्रीयतामिति पुण्याहदेवतोल्लेखवाक्ये च विशेषः।

तत औपासनाग्निं प्रज्वाल्य ध्यात्वा समित्त्रयमादाय श्रद्ध एहीत्यादिप्राणायामान्तं कृत्वा शालाकरणाङ्गभूतहोमकर्मणि या यक्ष्यमाणा इत्यादिव्याहृत्यन्तमुक्त्वाऽङ्गहोमे वरुणं द्वाभ्यामित्यादि व्याहृतिहोमान्तं कृत्वाऽङ्गहोमजयाद्युपहोमादिसंस्थाजपान्तं कृत्वा त्रिवृदन्नहोमपुण्याहादिवाचने कुर्यात्।

तत्र शालाकरणहोमकर्मणीत्यन्वाधानवाक्ये विशेषः। अत्रापि वास्तोष्पतिः प्रीयतामित्येव। नास्त्यत्र वैशेषिकहोमः। जयादयस्ते च(स्त्वत्र?) वैकल्पिकाः।

ततोऽहतं वासः परिधाय द्विराचम्य देवस्य त्वेत्यस्य सोमोऽग्निर्वा विश्वे देवा वा सविताऽभ्रिर्यजुः। अभ्र्यादाने विनियोगः। 'ॐ देवस्य त्वा सवि० माददेऽभ्रिरसि नारिरसि' इत्यभ्रिमादाय, परिलिखितमित्यस्य सोमोऽवटो यजुः। परिलेखने विनियोगः। 'ॐ परिलिखित९ र० अपि कृन्तामि' [इति] त्रिः प्रदक्षिणमवटं परिलिखति सकृन्मन्त्रेण द्विस्तूष्णीम्। एवं प्रत्यवटं यावद्भिरवटैः प्रयोजनं तावतः खात्वा वटसंबन्धिपांसूञ्शालाया अभ्यन्तरं प्रकिरति। उच्छ्रयणक्रमोऽवटानां क्रमः। 'ॐ इहैव ध्रुवां निमिनोमि शालां क्षेमे तिष्ठति घृतमुक्षमाणा। तां त्वा शाले सुवीराः सर्ववीरा अरिष्टवीरा अनुसंचरेम[3]।' इति द्वारस्थूणयोर्दक्षिणां[4] स्थूणामुच्छ्रयति। उच्छ्रि[तां कृ]त्वाऽवटे स्थापयतीत्यर्थः।

---

१ क. °क्येषु च। २ ग. °षः। तत्रा°। ३ क. ख. ङ. °म। द्वा°। ४ क. ख. ङ. °क्षिणा स्थू°।

कृत्वाऽग्रतो द्विजवरानथ पूर्णकुम्भं दध्यक्षताम्रदलपुष्पफलोपशोभम् ।
दत्त्वा हिरण्यवसनानि तथा द्विजेभ्यो माङ्गल्यशान्तिनिलयं स्वगृहं विशेच्च" इति ॥

तथा—"वास्तुपूजामकृत्वा यः प्रविशेन्नवमन्दिरम् ।
रोगान्नानाविधान्क्लेशानश्नुते सर्वसंकटान्" इति ॥

## अथ प्रयोगः ।

"गृहा मा बिभीत मा वेपीद्ध्वमूर्जं बिभ्रत एमसि ।
ऊर्जं बिभ्रद्वसुवनिः सुमेधा गृहानेमि मनसा मोदमानः ॥
येषामध्येति प्रवसन्नेति सौमनसो बभुः ।
गृहानुपह्वयामहे ते नो जानन्तु जानतः ॥
उपहूता इह गाव उपहूता अजावयः ।
अथो अन्नस्य कीलाल उपहूतो गृहेषु नः ॥
उपहूता भूरिसखाः सखायः स्वादुसंमुदः ।
अरिष्टाः सर्वपूरुषा गृहा नः सन्तु सर्वदा ॥
ऊर्जस्वन्तः पयस्वन्त इरावन्तो ह सामुदः ।
अनश्या अतृष्या[1] गृहा माऽस्मद्बिभीतन" ॥

इति धृतपूर्णकुम्भसुवासिनीपुरःसरः सेष्टदेवतः[2] सकुटुम्बो गृहसमीपं गच्छति

"ॐ क्षेमाय वः शान्त्यै प्रपद्ये शिव१ँ शग्म१ँ शंयोः शंयोः" ।

इति ज्योतिर्विदादिष्टे मुहूर्ते[3] गृहं प्रविशति । प्रवेशानन्तरमस्मिन्दिने कलहं नैव करोति ।

"ॐ गृहानह१ँ सुमनसः प्रपद्येऽवीरघ्नो वीरवतः[4] सुशेवान् ।
इरां वहन्तः सुमनस्यमानास्तेष्वह१ँ सुमनाः संविशामि" ॥

इति गृहमध्य उपविशति ।

"ॐ विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः" [इति] भार्या समीक्षते । भार्याद्वित्वे त्वयेत्यत्र युवाभ्यामित्यूहः । भार्याबहुत्वे युष्माभिरिति । नैतदहरागत इत्यत्राऽऽगत इति[5] वचनं ग्रामान्तरादागतस्यानाहिताग्नेरप्येतत्प्रवेशनविधानमितिख्यापनार्थम् । तस्मान्नूतनगृहप्रवेशने ग्रामान्तरादा[6]गमने चेदं विधानम् । केचिन्नूतनगृहप्रवेश एवेच्छन्ति । तन्न । गृहानीक्षेताप्यनाहिताग्निरित्याश्वलायनसूत्रेऽनाहिताग्नेरपि ग्रामान्तरादागतस्य प्रवेशनदर्श-

---

१ ख. ग. अतृष्पा । २ ग. श्रेष्ठदेवतः । ङ. च. स्वेष्टदेवतः । ३ क. सुमुहूर्ते । ४ क. ङ. वीरतमः । ५ च. °तिन्याह्या° । ६ क. °शद° ।

नात्। अन्ये तु ग्रामान्तरादागमन एवेच्छन्ति। तदपि न। उक्तं गृहप्रपदन-विद्याश्वलायनसूत्रविरोधात्, तस्मादुभयार्थतैव युक्तेति ज्ञेयम्। सज्जीकृतगृह-प्रवेशेऽपीदं विधानम्। एकस्याः शालाया द्वयोर्वा सज्जीकरणे तु—उक्तविधा-नेन तत्र देशं शमयित्वा प्रवेशः कर्तव्यः।

ततो गणपतिपूजनं पुण्याहवाचनं च कार्यम्। अन्यदपि कुलाचारप्राप्तं चेत्तदपि कर्तव्यम्।

इति संस्काररत्नमालायां वास्तुकरणवास्तुशमनवास्तुप्रवेशप्रयोगः।

इत्योकोपाह्वश्रीमत्साग्निचिद्वाजपेयपौण्डरीकयाजिसर्वतोमुखयाजिगणेशदीक्षिततनूजभट्टगोपीनाथदीक्षितविरचितायां सत्याषाढहिरण्यकेशिस्मार्तसंस्काररत्नमालायां सप्तदशं प्रकरणम् ॥१७॥

समाप्तोऽयं गृह्यसूत्रप्रथमप्रश्नः ॥ १ ॥

समाप्तिमगमदिदमत्र संस्काररत्नमालायाः पूर्वार्धम्।

